# SARASVATI BHAVANA GRANTHAMALA

VOL. 87

*Part III*


**GENERAL EDITOR :—**

Kshetresachandra Chattopadhyaya

Director, Research Institute,

Varanaseya Sanskrit Vishvavidyalaya,

Varanasi.




# BRHAT-SABDENDUŚEKHARA

*by*

NĀGEŚA BHAṬṬA

*Volume III*


VARANASI

1960

सरस्वतीभवन-ग्रन्थमाला

(८७)

नागेशभट्टविरचितः

# बृहच्छब्देन्दुशेखरः

## ( तृतीयो भागः )

सम्पादकः

डॉ० श्रीसीतारामशास्त्री, एम०ए०, पीएच्०-डी०,

व्याकरणाचार्यः, साहित्याचार्यः, राजशास्त्रशास्त्री, साहित्यरत्नम्,

वाराणसेयश्रीराजस्थानसंस्कृतमहाविद्यालयाध्यक्षः ।

वाराणस्याम्

१८८२ तमे शकाब्दे

॥ श्रीः ॥

# बृहच्छब्देन्दुशेखरस्य तृतीयभागप्रकरणसूची
## उत्तरार्द्धे

श्रीगणेशाय नमः ।

# बृहच्छब्देन्दुशेखरः ।

*तस्येदम् उत्तरार्द्धम् ।*

## अथ तिङन्ते भ्वादिप्रकरणम् ।

'मङ्गलाऽऽदीनि, मङ्गलमध्यानि, मङ्गलाऽन्तानि च शास्त्राणि प्रथन्ते' इति भाष्याद्युक्तेर्मध्ये कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—श्रौत्रेति। श्रोत्रियस्य भावः—'श्रौत्रम्'। अर्हतो भावः—'आर्हन्ती'। ताभ्यां वित्तैरि'-त्यर्थः। 'तेन वित्त' इति चणप्। वेदाऽध्ययनकर्त्तृत्वेन, तदुक्ताऽनुष्ठान-कर्त्तृत्वेन च प्रसिद्धैरिति फलितम्। गुण्यैः=प्रशस्तगुणवद्भिः। अहर्दिवम्। अहन्यहनीत्यर्थः। तोष्टूय्यमान इति। 'एष आत्मा-ऽपहतपाप्मे'त्यादिश्रुतिसिद्धाऽपहतपाप्मत्वादिगुणैः स्तूयमान' इत्यर्थः।

अगुण इति। श्रुतिसिद्धानामपि एषामनन्तकल्याणगुणानां वियदा-दिवव्यावहारिकत्वात्, आपाततः 'अपि'शब्दद्योतित-विरोधपरिहारः। एवञ्च विरोधाऽऽभासोऽत्राऽलङ्कारः।

विजयतेतरामिति। 'वि'इति भिन्नं पदम्। कतिपयतिङन्तोत्तरपदस्य समासस्य[1] च्छन्दस्येव स्वीकारात्। 'तिङश्चे'ति तरपि, आम्।

न च 'जयते' इत्यस्य 'वी'त्येतत्साकाङ्क्षत्वेनाऽसामर्थ्यात्कथं तरप्?। उपसर्गाणां द्योतकत्वात्। तरबर्थं प्रति तिङन्ताऽर्थस्य प्रधानत्वेन, सापेक्षत्वेऽपि दोषाऽभावाच्चेति दिक्।

---

१ लघुशब्देन्दुशेखरात् अत्र 'समासस्ये'तिपदं पूरितमस्माभिः।

पूर्वाऽर्द्धेनाऽस्य सङ्गतिमाह–पूर्वार्द्धे इति । कथिता इति । 'प्राधान्येन कथिता' इत्यर्थः । एवं 'कथ्यन्ते' इत्यस्याऽपि । एतेन तत्र किन्नादि-व्युत्पादनं, कृत्सु 'णचः स्त्रियामञि'त्यादेर्व्युत्पादनं प्रासङ्गिकं बोध्यम् ।

तृतीयाध्यायेति । उणादीनामपि 'उणादयो बहुलमि'ति सूत्रविहित-त्वात् तत्त्वम् । उणादिपाठस्तु बाहुलकलभ्यप्रत्ययप्रकृतिविशेषज्ञानाऽर्थः । एतदर्थमेव 'गोचर'पदोपादानम् । दशेति । अनुबन्धभेदादित्यर्थः । तदाह—लडित्यादि । पञ्चम इति । 'लट्''लि'डित्याद्युक्तक्रमाऽपेक्षयेदम् । छन्दोमात्रेति । तेन 'तद्रूपाणामिहाऽप्रदर्शनान्न्यूनते'ति परास्तम् ।

वर्त्तमाने लट् । वर्त्तमानत्वम्-प्रारब्धाऽऽपरिसमाप्तत्वम्, भूतभविष्य-द्भिन्नत्वं वा । तच्च प्रकृत्यर्थविशेषणम् । प्रतिधातु अनन्तलडादेशानां शक्तिकल्पनाऽपेक्षया, एकधातोरेव शक्तिकल्पने लाघवात् । तदाह—वर्त्तमानेत्यादि । धातोरिति । यद्यपि 'धातोरि'त्यधिकारसूत्रमिहैव 'वक्तुं युक्तं, तथाऽपि यङ्विधिस्थधातुग्रहणाऽनुवृत्त्यैव सिद्धे, तत्सूत्रं मन्द-प्रयोजनमिति ध्वनयितुं नेहोपन्यासः । वर्त्तमानकालेन धातोराक्षेपोच्च ।

अटावितावििति । 'लटः शतृशानचावि'त्यादौ विशेषणाऽर्थतया चरिताऽर्थस्य, विनेत्संज्ञां निवृत्त्युपायाऽभावात् । टित्त्वं टेरेत्त्वाऽर्थम् ।

वर्त्तमानकालादेर्द्योत्यताया उक्ततया, लकाराणां वाच्यं दर्शयति—लः कर्मणि चेति । 'ल' इति उच्चारणाऽर्थोऽकारेण 'लस्ये'तिवत्प्रथमैक-वचनाऽन्तमि'ति केचित् । अन्ये तु हल्मात्रस्य ङसन्तम् । पक्षद्वयमपीद-माकरे स्पष्टम् । भाष्यन्तु ङसन्तपक्षपात्येव । 'जसन्तमि'त्यन्ये । चात् 'कर्त्तरी'त्यनुकृष्यते । सकर्मकविषयं चेदम् । अकर्मकेषु 'कर्मणी'त्यंशस्य बाधात्, उत्तरवाक्येन तत्र विशेषविधानाच्च । तदाह—सकर्मकेभ्य इति ।

'भावे चे'ति—चेनाऽपि कर्त्तैवाऽनुकृष्यते, न कर्म, असम्भवात् ।

---

इतोऽग्रे—'यत्तु यङ्विधौ 'धातोरि'ति योगं विभज्य, 'तृतीयाऽध्यायाऽन्तं वक्ष्यमाणाः प्रत्यया धातोर्बोध्या' इत्यर्थकरणं, तत्सर्वं निर्बीजम्' इति ख. कु. पाठः । क. कुण्डलितः ।

तदाह[1]—भावे कर्त्तरि चेति । यद्यपि[2] एतत्सूत्राऽभावेऽपि 'भावकर्मणो-रि'त्यादिभिः 'गुणः कृताऽऽत्मसंस्कार' इति न्यायेन तदर्थकलकाराऽनुवादेनाऽऽत्मनेपदादिविधायकैरेषां लकाराऽर्थत्वमनुमातुं शक्यम्। 'तयोरेवे'-त्यस्य स्थाने 'कर्मणि कृत्यक्तखलर्थाः, भावेऽकर्मकेभ्य' इत्यपि न्यासः शक्यते कर्त्तुम् । 'अनुदात्तङित' इति च 'कर्त्तरि कर्मव्यतिहारे' इत्युत्तरमेव पठितुं शक्यम्। तथापि सकर्मकेभ्योऽपि भावे घञादिवल्लकाराःस्युः । तथा च 'घटं क्रियमाणं देवदत्तेन' 'घटं क्रियते देवदत्तेने'ति स्यात्, तन्निवृत्त्यर्थमिदं सूत्रम् । न च 'भावकर्मणोरि'त्यत्रैव 'भावेऽकर्मकेभ्य' इति वक्तव्यम्, तच्च 'भावेऽकर्मकेभ्य एवे'ति नियमाऽर्थमिति न दोष इति वाच्यम् । लाघवाऽभावात् । न च 'लो भावे चाऽकर्मकेभ्य' इत्येवाऽस्तु प्रकृतस्थले इति वाच्यम् । भावे इव, कर्त्तर्यपि 'अकर्मकेभ्य एवे'ति नियमाऽऽपत्तौ, सकर्मकेभ्यः कर्त्तरि लकाराऽनापत्तेः। न च 'कर्त्तरि कृत्', 'लश्च', 'भावे चाऽकर्मकेभ्य' इति न्यासोऽस्त्विति वाच्यम् । 'तयोरेवे'ति सूत्रे तच्छब्देन परामर्शाऽर्थं 'कर्मणी'त्यस्याऽऽवश्यकत्वात् । न च तत्र 'कर्मणि च कृत्ये'[3]त्याद्यस्तु । चेन पूर्वसूत्राऽनुकर्ष[4] इति वाच्यम् । लाघवाऽभावादित्याद्यूह्यम् ।

तत्र आख्यातस्य कर्त्तृ-कर्मणी वाच्ये । 'पाचको देवदत्त' इत्यादाविव, 'देवदत्तः पचती'त्यादावपि 'युष्मद्युपपदे समानाधिकरणे' इति सूत्राऽनुवादबोधित-ऋष्यनुभवसिद्ध-सामानाधिकरण्याऽनुभवाऽनुरोधात् ।

---

१　तदाह—भावे कर्त्तरि चेति । कर्त्तृकर्मणी वाच्ये इति 'गत्यर्थलोटा लुण्न चेदि'ति सूत्रे भाष्ये स्पष्टम्, इति मञ्जूषायां विस्तरः' इति क. ग. पाठः ।

२　'यद्यपि' इत्यारभ्य 'तस्मात्सिद्धम्' (१५८२ पृष्ठे) इत्यन्तः ख. ङ. पाठः । क. कुण्डलितः । मनोरमा-लघुशब्दरत्नस्थत्वात् ।

३　'कर्मणि च कृत्यक्तखलर्थाः' इत्येव सूत्रमस्तु इत्यर्थः ।

४　पूर्वसूत्रेति । भावे चाऽकर्मकेभ्यः' इति सूत्रेत्यर्थः ।

एतेन 'कर्त्तृत्व-कर्मत्वे तदर्थे' इत्यपास्तम्। 'पचती'त्येतावन्मात्रे उक्ते कर्त्तुरनुपस्थित्या, सङ्ख्याया अनन्वितत्वेन, कर्त्तुरेकत्वसंशयाऽऽपत्तेश्च। अत एव तावन्मात्रोक्तौ, 'कः' 'कीदृश' इतिप्रश्नो, 'देवदत्तो' 'घनश्याम' इत्युत्तरं च सङ्गच्छते। किञ्च तद्वत् 'कती'ति न प्रश्नो, नाऽपि 'एक' इत्युत्तरम्। लक्षणया संशयाऽभावाद्युपपादने तु प्रस्थितं विशिष्टशक्त्या। कृत्यपि एवमेवाऽऽपत्तेश्च।

एतेन 'कृतिमतः कर्त्तृत्वेनाऽनन्तकृतीनां शक्यताऽवच्छेदकत्वे गौरवम्। प्रथमाऽन्तपदेनैव तल्लाभात्। तत्र शक्तेर्वक्तुमशक्यत्वं च। अनन्यलभ्यस्य शब्दाऽर्थत्वात्। तस्मात्कृतावेव शक्तिः। एवं च 'देवदत्तः पचती'त्यत्र देवदत्तो विशेष्यः, तिङर्थयत्नो विशेषणम्। आश्रयत्वन्तु संसर्ग' इत्यपास्तम्। लक्ष्यताऽवच्छेदकत्ववत्, शक्यताऽवच्छेदकत्वादेरपि गुरुणि स्वीकारे बाधकाऽभावात्। अनुगमप्रकारस्तु वक्ष्यते। किञ्च 'पचन्तं देवदत्तं पश्ये'त्यादौ शत्रादीनामपि लादेशत्वेन तेभ्योऽपि कृतिमात्रबोधाऽऽपत्तेः। न चेष्टाऽऽपत्तिः। नामाऽर्थयोरभेदसंसर्गेणाऽन्वये एव व्युत्पत्तेः।

ननु अत एव गौरवस्य प्रामाणिकतया, शत्रादिस्थानिनो लस्य, शत्रादेर्वा, कर्त्तरि शक्तिः, तिङ्स्थानिनो लस्य, तिङां वा, कृतावेव। न च द्वितीयपक्षे 'घटेन' 'वः' 'नः' 'हरेऽवे'त्यादावादेशे कृते, पूर्वरूपादिस्थले परलोपादीनां विधानाद्व्याकरणानां कलहे, पदसंमोहात्, तदर्थस्याऽपि संमोहाच्च बोधाऽनापत्तौ, समुदाये एव शक्तिकल्पनाऽऽपत्त्या, पदस्फोटवाक्यस्फोटयोरापत्तिरिति वाच्यम्। प्रत्येकं पदानामवधृतशक्तिकानां समुदायेन यथाव्युत्पत्ति स्मृतानां तत्तदर्थोपस्थापनद्वारा वाक्याऽर्थबोधकत्वसम्भवान्न दोष इति चेन्न। आद्ये लत्वं शक्तताऽवच्छेदकं वाच्यम्। तच्च न। तदजानतोऽपि बोधात्। किञ्च लस्य नानाऽर्थताऽऽपत्तिः। किञ्च स्थानिनामनियतत्वात्, अव्यवहृतत्वाच्च तेषु शक्तिर्दुरुपपादा। न द्वितीयः। 'कर्त्तरि कृदि'तिसूत्रस्थकर्त्तृग्रहणस्यैव 'लः कर्म'णो'त्यत्र

चेनाऽनुकर्षणात्तिङां, कृतां च शक्तौ वैलक्षण्याऽनापत्तेः । एवं च लाघवात्कृतामपि कृतिर्वाच्या स्यात् । न च केवलकृतौ प्रयोगाऽभावः । आख्यातेऽपि समत्वात् । 'पक्ता जात' इत्यादेः सत्त्वाच्च । न च नामाऽर्थयोरभेदान्वयाऽनुरोधाद्वैषम्यम् । 'पचतिकल्पमि'त्यादौ कल्पाऽन्तस्याऽपि अकान्तस्येव नामतया, तदनुरोधेन तिङ्ष्वपि कर्त्तृवाच्यतौचित्यात् । अत एव 'अनभिहिते कर्त्तरि तृतीये'त्यादि सङ्गच्छते । 'अनभिहितसङ्ख्याके' इत्यर्थवर्णनन्तु न युक्तम् । कृदादिषु सङ्ख्याऽभिधानस्याऽप्रसिद्धेः ।

किञ्च कृतेर्व्यापारविशेषतया, धातुत एव तल्लाभे, तत्र शक्तिकल्पना नोचिता । मम तु व्यापारसामान्यस्य धातुलभ्यतया, आश्रयमात्रं तदर्थः । आश्रयत्वम् अखण्डोपाधिरूपमेकं, समवायवत् । आश्रतात्वं वा एकम्, अखण्डं शक्यताऽवच्छेदकताऽवच्छेदकमिति नाऽननुगमः ।

किञ्च 'रथो गच्छती'त्यादौ कृतेर्बाधाद् बोधाऽनापत्तिः । तत्राऽऽश्रयत्वे लक्षणायान्तु, तत्रैव शक्तिरस्तु, किमनेन प्रयासेन ।

किञ्च कर्मलकारे तव कः प्रत्ययाऽर्थः ? । न फलम् । तस्य धातुत एव लाभात् । न कृतिः । तस्या अभिहितत्वेन 'पच्यते चैत्रेणे'त्यादौ तृतीयाऽनापत्तेः । न च आश्रयत्वम् । सर्वत्र तस्यैव शक्यत्वौचित्यात् ।

यदपि 'आश्रयः प्रथमाऽन्तपदलभ्य' इति । तदपि न । आश्रयत्वेन ततोऽलाभात् । यत्तु 'शत्राद्यंशे 'कर्त्तरि कृदि'ति व्याकरणं शक्तिग्राहकमि'ति । तन्न । कृद्वाक्यशेषस्याऽस्याऽनिर्दिष्टाऽर्थण्वुलादिष्वेवोपस्थितिः[1], न तु शत्रादिविधिषु । स्थान्यर्थेनैव निराकाङ्क्षत्वात् । 'आकाङ्क्षितविधानं ज्याय' इति न्यायात् । अन्यथा 'शय्यमाने गत' इत्यादौ भावे, 'क्रियमाण' इत्यादौ कर्मणि च शानजनापत्तिरिति दिक् ।

एतेन कर्त्रधिकरणे[2]—'आख्याताऽर्थो, न कर्त्ता । प्राधान्याऽऽपत्तः ।

१ 'पाचक' इत्यादेर्ण्वुल्स्थानिकाऽकादेशान्तस्येवेत्यर्थः ।

२ तदाख्ये मीमांसाशास्त्रस्थाऽधिकरणविशेषे इत्यर्थः ।

किन्तु फलाऽवच्छिन्नव्यापाराऽनुकूलो व्यापारः, कृत्यादिरूपः। स च व्यापारत्वेनैव। अतो 'जानाति' 'रथो गच्छती'त्यादौ न लक्षणा। कालाऽन्वयस्तु धात्वर्थव्यापारे, आख्यातार्थेऽपि वा। आश्रयबोधस्तु लक्षणया। लक्षितं तमादायैव च सामानाधिकरण्योपपत्तिः। 'लः कर्मणी'त्यादिकन्तु लाक्षणिकाऽनुशासनमित्युक्त्वा, जङ्घभ्यमानाऽधिकरणे कर्त्तुः शानजर्थत्वं स्वीकुर्वन्तो मीमांसका अपि प्रत्युक्ताः।

यत्तु 'कर्त्तरि यदेकत्वं, तत्र तिबि'त्यादिक्रमेण 'लः कर्मणि' 'तिप्तस्झि' 'द्व्येकयोरि'त्यादेरेकवाक्यतया व्याख्यानान्न कर्त्तुर्वाच्यता सूत्रादायाति। न च 'लस्ये'त्यस्य 'लुनाती'त्यादावतिप्रसङ्गनिवारणाय 'लः कर्मणी'त्यत्र निर्दिष्टकर्त्राद्यर्थान् अनुवर्त्त्य, 'कर्त्राद्यर्थे विहितस्य लस्ये'त्यर्थो वाच्यः। स च त्वदीयव्याख्याने न सिद्ध्यति। कर्त्राद्यर्थविहितलकाराऽप्रसिद्धेः। 'लस्ये'ति सूत्रमनोरमोक्ताऽन्योन्याश्रयाऽऽपत्तिस्तु चिन्त्यैवेति वाच्यम्। 'धातोरि'त्यधिकारात् 'धातुविहितलस्ये'त्यर्थेनैव तद्वारणा'दिति। तन्न। द्विवचनाऽऽदिसंज्ञानामादेशनिष्ठत्वेन, तद्विधिना 'द्व्येकयोरि'त्यादेरेकवाक्यत्वेऽपि, तत्र 'कर्त्तरी'त्यादेरसत्त्वेन, तस्यैकत्वाऽऽदिविशेषणत्वाऽसम्भवात्। सत्त्वेऽपि 'गुणानां च पराऽर्थत्वादि'ति न्यायेनाऽन्वयाऽसम्भव एव। एतेन 'लविधि-तिबादिविध्योरप्येकवाक्यताऽस्ती'ति परास्तम्।

किञ्च वाक्यैकवाक्यता सा, न तु पदैकवाक्यता। लविधिलभ्यलकाराऽनुवादेनाऽऽदेशविधेः प्रवृत्तेः। एवं च लविधौ श्रूयमाणं 'कर्त्त'ग्रहणं कथं सङ्ख्यां विशिनष्टु। तत्र सङ्ख्योपस्थापकाऽभावात्। लस्य द्विवचनादिसंज्ञाऽभावात्। न चाऽवाऽन्तरवाक्याऽर्थेऽन्वितस्य तदेकवाक्यतावेलायामावृत्त्या एकत्वादिविशेषणत्वमपीति वाच्यम्। आवृत्तौ मानाऽभावात्। निराकाङ्क्षत्वाच्च।

ननु 'लः कर्मणी'त्यत्र 'ल' इति ङसन्तम्। आदेशाऽपेक्षया षष्ठी।

'लस्य य आदेशः, स कर्मणी'त्यादिक्रमेणाऽर्थः । लकारश्च 'वर्त्तमाने लडि'त्यादिभिर्विहित इति न दोषः । एवं च 'कर्त्तरि यदेकत्वमि'ति योजना निर्बाधैवेति चेन्न । एवं हि तिबाद्यादेशानामेवाऽर्थनिर्देशः स्यात्, न तु द्विवचनादिसंज्ञाविनिर्मुक्त-शत्रादीनामिति, भावकर्मणोः शानजनापत्तिः । न च शानज्विधिना आत्मनेपदपरस्मैपदविधायकानामेकवाक्यत्वात् 'भावकर्मणोरि'त्यनेनेष्टसिद्धिः, 'लः कर्मणी'त्यनेनापि एकवाक्यत्वान्न सकर्मकेभ्यो भावे शानजिति वाच्यम् । एवमपि 'आम्'विषयस्य लुका लुप्तत्वात्, द्विवचनाऽऽदिसंज्ञारहितत्वात्, अभावस्य वृत्त्याऽर्थबोधकत्वाऽभावाच्च तदर्थो न निर्दिष्टः स्यात् । एवं च स कर्त्तर्येव स्यात् । एवं चाऽनुप्रयुज्यमानोऽपि, तदनुरोधेन कर्त्तर्येव स्यात्, भावकर्मणोर्न स्यात् । इष्यते तु तयोरपि । न च 'आम' इत्यनेन 'लःकर्मणी'त्यस्यैकवाक्यत्वात्, लुक्शब्देन तत्सहचरिताऽऽमन्तलक्षणाच्च न दोष इति वाच्यम् । एवमपि प्रथमान्तत्वे श्रुतेनैव सम्बन्धः, षष्ठ्यन्तत्वे तु 'आदेश' इत्यध्याहार्यं स्यादिति दोषः ।

अपि चोक्तरीत्या 'लः कर्मणी'त्यत्र आदेशा अप्यनुवाद्याः । ते च 'लस्ये'त्यधिकृत्य 'तिप्तसझी'ति विहिताः । तथा च परिपूर्णवाक्यस्यैव अनुवाद्यसमर्पकत्वात्, महावाक्याऽर्थबोधं प्रति कारणत्वाच्च, तदेकवाक्यतयैव पदविशेष–पुरुषविशेष-व्यवस्थापकानामिव, वचनविशेषव्यवस्थापकस्याऽपि प्रवृत्तिध्रौव्ये, पुनरिदानीं महावाक्याऽर्थबोधकाले प्रवृत्तिर्निर्मूला । किञ्च व्यर्थोऽपि सा । 'तिप्तसझि' 'द्व्येकयोरि'त्याद्येकवाक्यतयैव एकत्वादौ वाच्यतायाः सिद्धत्वात् ।

न च कर्त्रादौ शक्त्यबोधनेन मीमांसकमतसिद्धिरेव फलम् । 'मतसिद्धौ पुनरन्वयः, पुनरन्वये च मतसिद्धिरि'त्यन्योन्याऽऽश्रयात् ।

अपि च पुनः प्रवृत्तिरनिष्टाऽऽवहा । गौरवस्य सत्त्वात् । अपि च सङ्ख्यायाः परिच्छेदकत्वेन विशेषणतैवोचिता—'एकस्मिन्कर्त्तरी'ति । एवं च धर्मिणि शक्तिर्दुर्वारा ।

यत्तु 'प्राधान्याऽनुरोधात्कृतेर्वाच्यते'ति । तन्न । 'प्रत्ययाऽर्थः प्रधान-मि'त्यस्य 'अजे'त्यादौ व्यभिचारात् । 'आश्रये लक्षणे'त्यप्ययुक्तम् । नियतलक्षणाऽङ्गीकारे तत्रैव शक्तेरुचितत्वादिति मञ्जूषायां विस्तरः । तस्मात्सिद्धम्—'कर्त्तृकर्मणी वाच्ये' इति । स्पष्टं चेदं 'गत्यर्थलोटा लृण्न चेदि'ति सूत्रे भाष्ये ।

ते च आधेयतासम्बन्धेन फल-व्यापारयोर्विशेषणे । 'भावप्रधान-माख्यातमि'ति निरुक्तात् । भावः—धात्वर्थः । आख्यातम्—तिङन्तम् । 'भावकालकारकसङ्ख्याश्चत्वारोऽर्था आख्यातस्य, तत्र भावः प्रधानमि'ति तद्भाष्यस्वरसात् । अत एव 'अपचत् देवदत्तं पश्ये'त्यादि न साधु । 'लटः शतृशानचौ' 'प्रशंसायां रूपबि'तिसूत्रस्थभाष्यस्वरसाच्च ।

तत्र कर्त्राख्याते व्यापारः प्रधानम् । कर्माऽऽख्याते फलम् । फल-व्यापारयोर्जन्यजनकभावः संसर्गः ।

यत्तु 'कर्माऽऽख्यातेऽपि व्यापार एव विशेष्य' इति । तन्न । 'इष्यते पुत्र' इत्यर्थे 'पुत्रीयती'ति न, भिन्नाऽर्थत्वादि'ति 'सुप आत्मन' इति सूत्रस्थभाष्यविरोधादिति, निरूपितं कारके । 'पक्वस्तण्डुल' इत्यादौ फल-व्यापारयोर्व्यत्यासस्याऽऽवश्यकत्वाच्च । कालाऽन्वयस्तु कर्माऽऽख्यातेऽपि व्यापारे एव । तथैवाऽऽकाङ्क्षितत्वात् ।

तत्र 'अभिमतफलनिष्पादकसकलव्यापाराऽपगमे भूतत्वम् । तादृशस्य सकलस्य भावित्वे भविष्यत्त्वम् । यावच्चाऽभिमतफलप्रयोजकसकलक्रियायाः समाप्तिर्न भवति तावद्वर्त्तमानत्वमि'ति स्पष्टमाकरे ।

भावलकारे तु व्यापार एव विशेष्य इति प्राक् निरूपितम्[1] ।

---

१ 'भावलकारे तु व्यापार एव विशेष्यः । क्त्वान्तादौ सामानाधिकरण्येन व्यापारयोरेव परस्परमन्वयदर्शनेन, औत्सर्गिकव्यापारनिष्ठफलविशेष्यत्वस्य त्यागे मानाऽभावात् । एतेन 'प्रथमान्तविशेष्यको बोध' इत्यपास्तम् । प्रागुक्तनिरुक्तविरोधात् । 'पचति-भ्रजती'त्यस्याऽऽपत्तेश्च । 'पश्य मृगो धावति'

तत्र सकर्मकधातूनां फलव्यधिकरणव्यापारोऽर्थः । जानात्यादेश्च ज्ञानाऽनुकूलमनःसंयोगादिरेवाऽर्थः । कालाऽन्वयस्त्वत्र विशिष्टे । व्युत्पत्तिवैचित्र्यात् । विषयताऽऽपत्त्यनुकूलज्ञानादिकमेव वा तदर्थः । कृञ्श्चोत्पत्त्यनुकूलव्यापारः । अकर्मकाणां फलसामानाधिकरणः । सकर्मकत्वं च एतच्छास्त्रविहितकर्मसंज्ञाकाऽर्थान्वय्यर्थकत्वम् । तदनन्वय्यर्थकत्वं च अकर्मकत्वमिति । अधिकमस्मत्कृतवैयाकरणसिद्धान्तमञ्जूषायां द्रष्टव्यम् ।

अत्र सूत्रे 'कर्म'पदेन कालादिबहिरङ्गकर्मणोऽपि ग्रहणम् । तेन 'आस्यते मास' इत्यादि । अकर्मकत्वाद्भावेऽपि । 'अकर्मक'पदे 'कर्म'पदेन गत्यादिसूत्रे 'अकर्मक'ग्रहणसामर्थ्यात् बहिरङ्गकालादेरग्रहणस्य भाष्यादौ स्पष्टत्वात् । ध्वनितं चेदं 'गतिबुद्धी'ति सूत्रे भाष्ये । निरूपितं च तत्रैव कारके । तेन 'आस्यते मासमि'त्यपि ।

अत्र सूत्रे 'अकर्मक'शब्देन अविवक्षितकर्माणोऽपि गृह्यन्ते । 'कृतपूर्वी कटमि'त्यस्य 'कर्तृकर्मणोः कृती'ति सूत्रे, 'मातुः स्मर्यते' इत्यादौ कर्मणोऽविवक्षया[3] भावे लस्य 'अधीगर्थे'ति[4] सूत्रे च भाष्ये उदाहृतत्वात्[1] ।[2]

---

'देवदत्तः पक्ष्यति करोषी'त्यादेरनापत्तेश्च । क्रियाया यथाऽसत्त्वरूपत्वं तथा प्राक् निरूपितम्' इति ख. ङ. पाठः ।

१ इतोऽग्रे—'न च 'कृतपूर्वी कटमि'तिवत्पूर्वम् अविवक्षितकर्मतया भावे प्रत्यये, 'घटं क्रियमाणं देवदत्तेने'त्यादिप्रयोगो दुर्वारः । एतत्सूत्राऽऽरम्भसामर्थ्येन लकारविषये पश्चात्कर्मविवक्षाया अनाश्रयणात् । विवक्षायाः प्रयोगाऽधीनत्वाच्च । ईदृशविवक्षायास्तादृशवृत्तिविशेषमात्रविषयतायाः 'कर्तृकर्मणोरि'ति सूत्रे भाष्ये ध्वनितत्वाच्च' इति ख. ङ. पाठः । क. कुण्डलितः ।

२ इतोऽग्रे—'न चाऽत्र परत्वाद्भावे चेत्यस्य प्रवृत्तौ, भाव एव स्यादिति वाच्यम् । एतदेकवाक्यताऽऽपन्नकालादिकर्मसंज्ञासामर्थ्येन तत्र कर्मण्यपि प्रवृत्तेरिति दिक्' इति ख. ङ. पाठः ।

३ 'कर्मणोऽविवक्षायाम्' इति ख. ङ. पाठः ।

४ इतोऽग्रे—'पीता गाव' इति, 'विभक्ता ब्राह्मणा' इति च 'कर्तरि कृदि'ति

क्रियाविशेषणे कर्मण्यपि—लकारो भवत्येव । 'किं पुनर्विधीयते ? । विभक्तिविधानमि'ति समर्थसूत्रे भाष्यात् । तत्र 'विभक्त्यवच्छिन्नत्वात् विशिष्टं विधानं कर्म विधानक्रियाया भवती'ति कैयटेन क्रियाविशेषणत्वेनैव कर्मत्वस्योक्तत्वादिति बोध्यम् ।

लस्य । 'धातोरि'त्यधिकाराद्धातुविहितलस्य ग्रहणात् 'लुनाती'त्यादौ न दोषः । लस्य इत्संज्ञा तु न । 'लस्य''लः परस्मैपदमि'त्याद्यनुवादसामर्थ्यात् ।

---

सूत्रस्थभाष्यप्रयोगे 'पीतमुदकं येषामि'ति, 'विभक्तं धनमेषामि'ति चाऽशौ आद्यचा कैयटेन कर्मक्तान्तमादायैव समाहितम् । भाष्यस्वरसोऽप्येवमेव । 'गत्यर्थाऽकर्मके'ति सूत्रे तु न गृह्यन्ते इति, 'आशितः कर्त्ते'ति सूत्रे भाष्यकैयटयोः स्पष्टमि'ति प्राञ्चः ।

'वस्तुतस्तु 'आशिते कर्त्तरि क्तो निपातनादि'ति हि तत्र भाष्यम् । तत्राऽविवक्षितकर्मकत्वेन अकर्मकतायां सूत्रेणैव सिद्धे, निपातनपर्यन्तं भाष्यं व्यर्थमिति भवदाशयः । स न युक्तः । 'आशित ओदनं देवदत्त'इत्याद्युदात्तप्रयोगस्य इष्टत्वेन, तदर्थं निपातनाऽऽश्रयणमि'त्यपि भाष्याऽऽशयस्य वक्तुं शक्यत्वात् । लक्ष्यैकचक्षुष्कतयैवाऽत्र निपातनाश्रयणम् । अत एव 'आशितः कर्त्ते'ति निर्देशोऽयुक्त इत्यादि न विचारितं भगवता । 'दत्तवानि'त्याद्यर्थे 'दत्त'इत्यादि तु नाऽऽपाद्यम् । विवक्षायाः प्रयोगाऽधीनत्वादि'त्यन्ये ।

ननु प्रकृतसूत्रेऽविवक्षितकर्मणामपि ग्रहणे 'णेरध्ययने वृत्तमि'तिसूत्रे 'वृत्तं पारायणस्ये'त्यत्र भावे क्तोऽकर्मकत्वान्न तु ण्यन्तात्, सकर्मकत्वा'दितिभाष्यम्, 'नपुंसके भावे क्तोऽप्यकर्मकेभ्य एव । 'तयोरेवे'त्यत्र क्तमात्रस्य ग्रहणात्, तत्र च 'भावे चाऽकर्मकेभ्य' इत्यनुवर्त्तनात्, अन्यथा 'ग्रामं गतमि'त्यपि प्रसज्येते'ति कैयटः, तद्विरुध्येत । ण्यन्तादप्यविवक्षितकर्मकाद्भावे क्तप्रत्ययसम्भवादिति चेन्न । अविवक्षितकर्मतया भावे क्तस्य 'कृतपूर्वी'त्यादिवृत्तिमात्रविषयत्वात्' इति ख. ङ. पाठः । क. कुण्डलितः । मनोरमादिस्थत्वात् ।

१ इतोऽग्रे—'फलाऽभावाच्च । न चाऽत्रवणं फलम् । आदेशविधिनैव तल्लाभात् । न च लित्स्वरः फलम् । णलादेर्लित्वेन तदभावज्ञापनात् । न च 'असञ्जात-

तिप्तस्झि । द्वन्द्वः, पृथक्पदानि वा । सौत्रत्वात् 'थासाथामि'त्यत्र रुत्वं न । तिबादीनां पित्त्वं गुणाऽर्थं, स्वराऽर्थं च । इटष्टकार 'इटोऽदि'-त्यत्र विशेषणाऽर्थः । 'एधेमही'त्येतद्व्यावृत्तिश्च फलम् । तत्र 'लिङ' इत्यनुवृत्तावपि टकाराऽभावे 'इवर्णाऽन्तस्य लिङोऽत्स्यादि'त्यर्थः स्यात् । प्रत्ययग्रहणपरिभाषायाश्च वर्णग्रहणेऽप्रवृत्तिरिति स्पष्टम् 'अङ्गस्ये'ति सूत्रे भाष्यकैयटयोः । आदेशसाहचर्यान्न आगमत्वमस्य ।

अत्र सूत्रे महिङो ङकारस्तिङादिप्रत्याहाराऽर्थः, समुदायाऽनुबन्धो, नाऽवयवस्य स्वस्य । व्याख्यानात् । अन्यत्र तु समुदायाऽनुबन्धस्याऽप्यर्थवदवयवाऽनुबन्धत्वं भवत्येव ।

अत एव अयचश्चकारस्य प्रत्याहाराऽर्थत्वमुक्तम् । इष्यते च अयचि चित्कार्यमपीति बोध्यम् । तेन 'वव्रश्चिमहे' इत्यत्र सम्प्रसारणं नेति दिक् ।

एषां स्थानिवद्भावेन प्रत्ययत्वसिद्धेः, देशांऽशे निराकाङ्क्षत्वेन च, 'प्रत्ययः' 'परश्चे'त्यस्याऽनुपस्थितावपि, 'आद्युदात्तश्चे'ति सम्बध्यते एव ।

---

विरोध'न्यायेन तदेव श्रवणाऽर्थमस्तु । 'बभूथाततन्थे'ति निर्देशेन थलो कस्येत्संज्ञाऽऽवश्यकत्वात्' इति ख. ङ. पाठः । क. कुण्डलितः ।

१ 'व्याख्यानात् । एतेन 'थसस्थकारात् आ मिपः पकारं 'थप्'प्रत्याहारं कृत्वा, 'तस्थपां तान्तन्ताम' इत्येव सूत्रयितुमुचितमि'त्यपास्तम् । तथा सति मिपः पित्वाऽभावाऽऽपत्तेः । इदमेव ज्ञापयति—'इह सूत्रे सम्भावितसमुदायाऽनुबन्धत्वानां नाऽवयवानुबन्धत्वमि'ति । एतेन 'प्रत्याहारार्थोऽनुबन्धस्याऽवयवाऽननुबन्धत्वे 'स्थानिव'दादिसूत्रस्थभाष्यविरोधः । तत्र हि अयचश्चकारस्य प्रत्याहाराऽर्थत्वमुक्तम् । इष्यते च अयचि चित्कार्यमपी'ति परास्तम् । प्रकृते ज्ञापकबलेन तथाऽङ्गीकारेऽपि, अन्यत्र तथाऽङ्गीकारे मानाऽभावात्'-इति ख. ङ. पाठः । क. कुण्डलितः ।

२ 'सम्प्रसारणं न । तथा इषेः कर्मणि आशीर्लिङि 'एषिषीमही'त्यत्र 'क्ङिति चे'ति गुणनिषेधो नेति दिक्' इति ख. ङ. पाठः । क. कुण्डलितः ।

यद्वा तयोरपि अविरोधात् सम्बन्धे न क्षतिः। अत एव एतत्सूत्रविधेयताऽऽदिविषये 'प्रत्ययसंज्ञासंनियुक्तमाद्युदात्तत्वमि'ति 'आद्युदात्तश्चे'ति सूत्रे भाष्ये उक्तम्। आद्ये तु 'प्रत्ययसंज्ञावत्संनियुक्तमि'ति तदर्थः।

'ल' इति आदेशाऽपेक्षया षष्ठीत्याह—लादेशा इति। सिजादीनां लादेशत्वेऽपि नेयं संज्ञा। 'तङानावि'त्येतत्साहचर्येण तिङ्-कृतामेव लादेशानामत्र ग्रहणात्। अस्य आकडारत्वेऽपि शत्रादौ सावकाशां परस्मैपदसंज्ञां पुरुषसंज्ञा न बाधते। 'सिचि वृद्धिः परस्मैपदेषु' 'एत ऐ' इत्यादिलिङ्गात्। एकसंज्ञाऽधिकारादेव च आत्मनेपद-परस्मैपदसंज्ञयोः परस्परं बाध्य-बाधकभावः।

तङ्साहचर्यात्,'ल' इति षष्ठ्यन्ताऽनुवृत्तेश्च लादेशाऽऽनस्यैव ग्रहणमित्याशयेनाऽऽह—शानच्कानचौ चेति। तेन चानशो व्यावृत्तिः। तेन स परस्मैपदिभ्योऽपि—'निघ्नान'[1] इति।

'शेष'पदाऽर्थज्ञानाय प्रथममात्मनेपदविधायकान्याह—अनुदात्तङितः। द्वन्द्वाऽन्ते श्रूयमाणेच्छब्दस्य प्रत्येकं सम्बन्धः। तत्राऽनुदात्तांऽशे तदन्तविधेः फलाऽभावादंशाऽन्तरे एव स इत्याह—उपदेशे इत्यादि। तदन्ताच्चेति। तेन यङन्तादात्मनेपद[2]सिद्धिः। अन्यथा यङाद्यन्तसमुदायस्य तिङ्निरूपिताऽङ्गत्वाऽनापत्तौ, अडाद्यव्यवस्थाऽऽपत्तेः।

'उपदेशेऽजि'त्यतोऽनुवृत्तस्य 'उपदेशे' इत्यस्य ङिद्विशेषणत्वम्। अन्यत्राऽव्यभिचारात्। द्वन्द्वसाधुत्वायाऽनुदात्तांऽशे शाब्दाऽन्वयसत्त्वेऽपि, नैष्फल्यमिति बोधयितुम् 'उपदेशे' इत्यनुदात्तेदंशेन सम्बन्धितम्। तेन 'चिनुतः' 'चिकुटिषती'त्यादौ नाऽऽत्मनेपदम्। 'गाङ्कुटादिभ्यः'

---

१ 'निघ्नाना इति' इति ख. ङ. पाठः। स च हरिताललेपेन क. शोधितः।

२ इतोऽग्रे—'न च यङादेर्ङित्त्वमाश्रित्यैव तत्सिद्धिः। यङाद्यन्तसमुदायस्य तिङ्निरूपिताऽङ्गत्वाऽनापत्तौ' इति ख. ङ. पाठः। क. कुण्डलितः।

'सार्वधातुकमपिदि'त्यातिदेशिक-ङित्त्वस्याऽत्र सत्त्वात् । 'शेते' इत्यादौ तु व्यपदेशिवद्भावेन सिद्धम् ।

न च तदन्तविधिर्दुर्लभः, विशेष्याऽभावादिति वाच्यम् । 'धातोरि'-त्यस्य सत्त्वात् । तथा हि—इदं प्रकरणं तिबादिविधिना सहैकवाक्यतया 'अनुदात्तङितो धातोर्लस्य स्थाने, एकत्वे गम्ये, आत्मनेपदैकवचनं, त' इत्यादिक्रमेण व्याख्यानाद्विधायकम् । एवं च विशेष्यलाभः स्पष्ट एव ।

'आत्मनेपद'शब्दादौ च भाविसंज्ञाऽऽश्रयणीया । एतदभावे प्राप्ता-ऽतिप्रसङ्गपरिहारकत्वेन परम् एतेषां नियमत्वव्यवहारः । तत्र सर्वेषां 'खलेकपोत'न्यायेन एकवाक्यता । तत्र 'धातोरि'ति पञ्चम्या विहित-विशेषणतया, तत्समानाधिकरणा'ऽनुदात्तङित' इत्यादीनामपि विहित-विशेषणत्वमेव । तेन चङ्क्ङोरपि न दोषः । तदन्तस्य धातुत्वाऽभावात् । ततो विहितत्वाऽभावाच्च ।

न च पूर्वमादेशप्रवृत्तौ 'वृद्भ्यः स्यसनोरि'ति सूत्रे 'स्य'ग्रहणं व्यर्थं स्यात् , पूर्वमेवाऽऽत्मनेपदनियमेन आत्मनेपदे जाते, तस्याऽनेन विकल्पा-ऽयोगादिति वाच्यम् । 'स्यविषये' इति व्याख्यानेनाऽदोषात् । न च 'वा क्यष' इत्यादिविषये पक्षे आत्मनेपदं न स्यात्, तद्विषयशास्त्रैक-वाक्यताऽऽपन्नेन 'तिप्तसि'त्यनेन तस्य प्राप्त्यभावात्, पक्षे लस्यैव श्रवणं स्यादिति वाच्यम् । उपस्थिताऽऽत्मनेपदाऽपेक्षयैव विकल्पविधानेन, उभयोरपि तात्पर्यविषयत्वान्न दोषः । ये तु 'भिन्नवाक्यता, सामान्यशास्त्र-विहितानामनेन नियमः, एतदभावे पर्यायेण प्रसक्तस्य सर्वस्याऽनेन निवृत्तिः

१ इतोऽग्रे—'एतेन परत्वात्, लसामान्याऽपेक्षत्वेनाऽन्तरङ्गत्वाच्च पूर्वं लाऽऽदेश-प्रवृत्तावपि, स्यादिविषये व्यवधानस्य भाविनयाऽकृतव्यूहपरिभाषया पूर्वं नाऽऽदेशा' इत्यपास्तम् । विहितविशेषणाऽऽश्रयणेनाऽदोषात्' इति खै. ङ. पाठः । क. कुण्डलितः ।

क्रियते' इति न 'भुक्तवन्तमि'त्यादिन्यायविरोधः, लुगादिनेव नियमेनाऽपि जातस्य निवृत्त्यङ्गीकाराद्वा न तद्विरोध' इति वदन्ति, तेषां 'वृद्भ्य' इत्यत्र 'स्य'ग्रहणं व्यर्थं स्यात्। अन्तरङ्गत्वात्सामान्येन तिबादिषु, सङ्ख्यादि-प्रकृतिविशेषाद्यपेक्षनियमाऽपेक्षयाऽन्तरङ्गत्वाद्विकरणेषु, 'अनुदात्ते'त्यादे-र्विहितविशेषणत्वे मानाऽभावे, तेन व्यवधानात् ( पूर्वमप्येकृतव्यूह-परिभाषया वा ) नियमानामप्रवृत्तौ, सामान्यविधिना सर्वेषां सिद्धेः।

न च विकरणेभ्यो नियमबलवत्ताया, विकरणव्यवधानेऽपि नियम-प्रवृत्तेर्वा ज्ञापनान्न दोषः। नच 'विकरणव्यवधानेऽपि प्रवृत्तिरि'ति पक्षे चङ्ङोर्दोषः-'अदुद्रुवत्' । अत्र शेषत्वाऽभावात्परस्मैपदाऽनापत्तिः। 'भूवादि'सूत्रान्मण्डूकप्लुत्या पञ्चम्या विपरिणत-'धातु'पदाऽनुवृत्त्या, 'इको झलि'त्यत्र सनेव आत्मनेपदाऽऽक्षिप्तलकारेण धात्वाक्षेपेण वा, 'धातो-रि'त्येतत्सम्बन्धेन वारणात्। अनुदात्तसाहचर्येण अविकरणङित एव ग्रहणाच्चेति वाच्यम्। तदपेक्षया प्रागुक्तैकवाक्यतापक्षस्यैव ज्ञापयितु-मुचितत्वात्। विषयसप्तम्याश्रयणन्तु विकरणेभ्यो नियमबलवत्ताज्ञापने तवाऽप्यावश्यकमेव। वाक्यभेदेन नियमपक्षे 'वा क्यष' इत्यादौ तु न दोषः। सामान्यसूत्रेण लस्य निवर्त्तनात्, वावचनेन आत्मनेपदस्याऽपि विधानात्। 'अनुदात्तङित' इत्यत्र स्वरितपाठेनौपदेशकधातोरेव ग्रहणाच्च।

इदं च सूत्रं 'नेर्विश'इत्यादिसाहचर्यान्नामधातुषु न प्रवर्त्तते। तेन 'त्राहि मां पुण्डरीकाक्षे'ति सिद्धम्। ध्वनितं चेदं 'लोहितादि'सूत्रे क्यषः ककारषकारप्रत्याख्यानपरभाष्येण। अन्यथा 'वा क्यष' इत्यस्य स्थाने 'वा यादि'ति सूत्रिते आचारक्विबन्त–'सभ्य'शब्दादौ दोषस्य स्पष्टत्वेन भाष्या-ऽसङ्गत्यापत्तिः। 'अवगल्भते' इत्यादौ तु अनुदात्तत्वाऽनुनासिकत्वप्रतिज्ञा-सामर्थ्यात्प्रवृत्तिः। 'चित्रीयते' इत्यादाववयवेऽचरितार्थेन ङकारेण

१ अयं ख ङ. पाठः। क. ग. नास्ति।

क्यजन्तविशेषणतया व्यपदेशिवद्भावेन ङिदन्तता बोध्या। न चाऽस्य नामधातुत्वम्। क्यजन्तस्य नामत्वाऽभावादित्याहुः।

स्वरितञितः। कर्त्रभिप्राये इति। 'कर्त्तारमभिप्रैति तत्कर्त्रभिप्रायम्'। 'कर्मण्यण्'। अभिप्रैतिर्गत्यर्थः। तदाह—कर्त्तृगामिनीति। कर्त्तृगामित्व-द्योतकञ्च आत्मनेपदमेव। क्रियाफलं च श्रुत्या, लोकतो वा यदुद्देशेन क्रियाप्रवृत्तिरवगता, तदेव, न दक्षिणाऽऽदिरूपम्। तदुक्तं हरिणा—

'यस्याऽर्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचाऽऽदयः।
तत्प्रधानं फलं तेषां, न लाभादि प्रयोजनम्'॥ इति।

'पचा' = पाकः, आदिर्येषां ते-'पचाऽऽदयः'। तत्र-पच्यादौ भोजनादि लोकतोऽवगतम्, यज्यादौ स्वर्गादि श्रुत्याऽवगतम्। 'यस्याऽर्थस्य प्रसिद्ध्यर्थं पचाऽऽदय एव आरभ्यन्ते' इत्यन्वयः। तेन 'यजन्ति ऋत्विजः' इत्यादौ परस्मैपदमेव। इदं च विवक्षामात्रनिबन्धनम्। तेन 'कमलवनोद्घाटनं कुर्वते' इत्यादि सिद्धम्। इदं च 'एषा क्रिया किमर्थे'ति विचारे, पश्चात्तनमानसबोधविषय' इति निरूपितं भाष्यप्रदीपोद्द्योते।

'स्वामि-दासौ पचतः' इति,-दासधर्मस्य स्वामिन्यारोपात्, एवं 'स्वामि-दासौ पचेते'इत्यादौ स्वामिधर्मस्य दासे आरोपात्, साधु। मानसबोधे च आत्मनेपदादिसमभिव्याहारात् आरोपिताऽनारोपितसाधारणम् एतद्-विषयः। तादृशमेव च विवक्षया तङादिनिमित्तमित्यन्यत्र विस्तरः।

केचित्तु-'अभिप्रायः-प्रेरणा। कर्त्तृपदेन च हेतुकर्त्ता। कर्त्तृप्रेरणा-

---

'नामत्वाऽभावात्। यद्वाऽऽक्षेपेण, प्रागुक्तयुक्त्या वा धातुलाभे सिद्धे, पुनः 'धातोरि'त्यनुवृत्तिसामर्थ्येन,'धातुरेव योधातुर्न नामत्वमन्वभूत् यो धातुरि'ति व्याख्यानान्न दोषः। न चाऽनुवृत्तौ मानाऽभावः। 'सनाद्यन्ता धातवः' 'भूवादय' इत्येव सिद्धे, प्रथमे भूवादिसूत्रपाठस्यैव मानत्वात्। ध्वनितं चेदं 'बहुव्रीहेरूधसो ङीषि'त्यत्र भाष्ये इति, 'उगवादिभ्यो यदि'त्यत्र निरूपितमित्याहुः' इति ख. क. पाठः। ? कुण्डलितः।

विषयत्वे क्रियारूपफलगते द्योत्ये इदम् । 'पचते' इत्यस्य च 'पाचयती'-त्यर्थः । 'पाचयते' इत्यत्र प्रयोजकव्यापारद्वयमर्थः, णिजन्तात् णिचि यथेत्याहुः । तदुक्तं हरिणा—

'क्रियाप्रवृत्तावाख्याता कैश्चित्स्वाऽर्थपराऽर्थता ।
असती वा, सती वाऽपि, विवक्षितनिबन्धना ॥
केषाञ्चित्कर्त्रभिप्राये णिचा सह विकल्पते ।
आत्मनेपदमन्येषां तदर्थां प्रकृतिर्यथा ॥

'क्रीणीष्व''पचते''धत्ते''चिनोति''चिनुते'ऽपि च ।
आप्तप्रयोगा दृश्यन्ते येषु ण्यर्थोऽभिधीयते' ॥ ( इति ) ।

'असती'त्यादिना 'कमलवनोद्घाटनमि'त्यादिसिद्धिर्दर्शिता । तत्र अन्त्यं न युक्तम्, भाष्याऽसंमतत्वादिति निरूपितं भाष्यप्रदीपोद्द्योते ।

किञ्चाऽन्तर्भावितण्यर्थतयैव तदुपपत्तौ, प्रयोजकव्यापारे आत्मनेपदविधाने मानाऽभावः । परस्मैपदेऽपि तत्प्रतीतये धातोरन्तर्भावितण्यर्थताया आवश्यकत्वात् । न च 'हेतुमति चे'त्यत्र 'वा'ग्रहणाऽननुवृत्तेः, 'नित्यं कौटिल्ये' इति 'नित्य'ग्रहणेन विच्छेदाच्च, कथम् अन्तर्भावितण्यर्थत्वेन केवलधातूनां साधुत्वम् । 'पञ्चभिर्हलैः कर्षती'ति भाष्यप्रयोगेण प्रकाराऽन्तरेण द्योतिते तस्मिन् तदनुत्पत्त्या सम्भवात् । एवं च गमकसत्त्वे एव केवलधातोरन्तर्भावितण्यर्थता, नाऽन्यथेत्यन्यत् ।

उभयोः पदयोरिति । षष्ठ्या विपरिणतपरस्मैपदाऽऽत्मनेपदग्रहणाऽनुवृत्त्येति भावः । अत एव यथासङ्ख्यसिद्धिः । अन्यथा तिङः षट् त्रिकाः, संज्ञास्तु तिस्र इति, तन्न स्यात् । परस्मैपदाऽऽत्मनेपदग्रहणाऽनुवृत्तेरेव शत्रादौ सावकाशपरस्मैपदसंज्ञायाः प्रथमाऽऽदिसंज्ञया बाधो न । आत्मनेपदसंज्ञया पुरुषसंज्ञाया बाधश्च न । स्पष्टं चेदम् 'आकडार'सूत्रे भाष्ये । अत एव 'सिचि वृद्धिः'[1] 'णलुत्तमो वे'त्यादि सङ्गच्छते ।

1 'आकडारात्सूत्रे' इति ख. ङ. पाठः ।

'तानी'त्यस्याऽर्थमाह—लब्धेति । अत एव पुरुषसंज्ञैकवचनादि-संज्ञानां समावेशः । अन्यथा आकडारत्वात्स न स्यात् । अत एव 'अदानी'त्यादौ 'आडुत्तमस्ये'ति आट्सिद्धिः ।

युष्मद्यु । सामानाधिकरण्यम् एकाऽर्थबोधकत्वम् । तच्च प्रत्यासत्त्या तिङैवेत्याशयेनाऽऽह–तिङ्वाच्येति । एतेन 'तिङां कृतिर्वाच्ये'त्यपास्तम् । उप—उच्चारितम्, उप—अनुसंहितं वा पदम्-'उपपदम्', न तु कृत्रिमम, तस्येहाऽनुपयोगात्, अप्राप्तेश्च ।

'स्थानिन्यपी'त्यस्याऽर्थमाह--अप्रयुज्यमाने इत्यादि । 'स्थानम् = प्रसङ्गः, तद्वति युष्मदी'त्यर्थात् । स चाऽप्रयोगे एव तदर्थाऽवगतौ सत्यामिति भावः । समानाधिकरणे किम् ? । 'त्वया क्रियते' । 'त्वां पश्यन्ति' । 'त्वद्भवती'त्यादौ तु नाऽस्य प्रवृत्तिः, प्रकृतेरेव कर्त्रीत्वात्, गौणत्वाच्च । एवम् 'अत्वं त्वं संपद्यते' इति विग्रहेऽपि न । 'अत्वम्'शब्दसमभिव्याहारेण 'त्वम्'शब्दस्य गौणत्वात् । स्पष्टं चेदमत्रैव भाष्ये ।

'त्वत्कल्प' इत्यादौ कालाऽन्तरदृष्टगुणस्यैव ईषदसमाप्तौ प्रत्यय इति, 'त्वत्कल्पो भवसी'त्येव । 'त्वमेवेदानीं किञ्चिन्न्यूनगुणो भवसी'त्यर्थः । सलिङ्गस्य सम्बोध्याऽसम्बोध्यसाधारणस्य भवदर्थत्वात्, युष्मदश्चाऽलिङ्ग-सम्बोधनैकविषयत्वात्, भवच्छब्दयोगे न मध्यमः । एतेन 'भवच्छब्दप्रयोगे युष्मदोऽप्रयोगसत्त्वात्, तदर्थप्रतीतेश्च, मध्यमः स्यादि'त्यपास्तम् ।

यदा तु अस्मात्सम्बोधनविभक्तिस्तदा युष्मदर्थयोगात् 'हे भवन् भवसी'त्यादौ, 'हे देव ! भवसी'त्यादाविव मध्यम' इति माधवः ।

'अतित्वं भवती'त्यादौ तु अतिक्रमितुः प्राधान्यान्न मध्यमोत्तमौ ।

**प्रहासे च** । पूर्वोत्तरसूत्रयोरपवादः । 'मन्योपपदे' इति बहुव्रीहिः । 'प्रकृतिभूते'इति शेषः । प्रकृतिभूतधातुश्च मन्यतिकर्तृकर्तृक एव, प्रत्यासत्तेः, 'समानाधिकरणे' इत्यनुवृत्तेश्च । मध्यमोत्तमयोर्व्यत्यासेन प्रयोगे प्राप्ते इदम् । अत्राऽऽद्ये वाक्ये 'अस्मद्युपपदे' इति, द्वितीये 'युष्मद्युपपदे'

इति च सम्बध्यते । उत्तमाऽर्थस्यैकत्वविधानात्तदभिधायियुष्मच्छब्द एकवचनाऽन्त एव । एकवच्चेति–अन्वाचये । तेन एकत्वस्यैव विवक्षितत्वे, फलाऽभावादेकवत्त्वाऽतिदेशाऽभावेऽपि, मध्यमोत्तमौ स्त एवेति बोध्यम् ।

अस्मदि । युष्मत्पदरहितं पूर्वसूत्रमनुवर्त्तते । तदाह—तथाभूते इति । युष्मदस्मद्भ्यां सामानाधिकरण्ये तु परत्वादुत्तम एव, 'अहं च, त्वं च वृत्रहन् संयुज्यावे'ति यथा । 'देवदत्तश्च त्वं चे'त्येकशेषे 'युवां भवथ' इति मध्यम एव । युष्मदर्थसामानाधिकरण्यात् । 'युष्मदस्मदी यत्र समानाधिकरणे न स्तः, स शेष' इत्युक्तेः । एवं च तत्र वाक्येऽपि 'भवथ' इत्येव । उक्तयुक्तेः ।

यदा तु 'देवदत्तः पचति, त्वं चे'ति समुच्चयो विवक्षितः, तदा आद्याऽनुरोधात्पुरुषः । द्वितीयस्य तु पुरुषविपरिणामेनाऽऽवृत्त्याऽन्वयः । भवच्छब्देन युष्मदस्मदोः सह विवक्षायां, पूर्वशेषे तु-मध्यमोत्तमावेव । 'परशेषेण भवतः शेषेऽपि तावेवे'ति कश्चित् । 'ईदृशे विषये पूर्वशेष एव, न परशेष इति, न तथा प्रयोग' इति कैयटादयः । अत्रोत्तमपुरुषे प्रत्यक्त्वं भासते, मध्यमे पराक्त्वमिति बोध्यम् । स्पष्टं चेदं सर्वं भाष्ये ।

**भू सत्तायाम्** । सत्तेह आत्मधारणम् । 'अस्तीति उत्पन्नस्यात्माऽवधारणमाचष्टे' इति निरुक्तात् । यथाऽत्र न सुबुत्पत्तिस्तथा ऋकारान्तशब्दव्याख्याने निरूपितम् । पूर्वं 'भू'कथनं तु महाव्याहृतिस्मारकतया माङ्गलिकत्वात् । सत्ताऽर्थनिर्देशोऽप्येवम्, सत्ताऽऽख्यपरब्रह्मणः स्मरणात् । 'भू सत्तायामि'त्यादेः 'वर्त्तते' इति शेषः ।

कर्मणः कर्त्रधीनत्वेन पूर्वं कर्त्तृप्रत्यया उच्यन्ते । तदाह—कर्त्रिति । 'धातोरि'ति पञ्चम्यन्तपृथक्सूत्रस्याऽधिकारत्वसामर्थ्यादाह—धात्वधिकारेति । तत्प्रत्याख्याने तु 'शमिधातोरि'ति सूत्रात् द्वितीयधातुग्रहणाऽनुवृत्तिसामर्थ्यात्तल्लाभः । तदभावे हि 'हरीनि'त्यत्र शसः 'सार्वधातुकमपिदि'ति ङित्त्वे, 'घेर्ङिती'ति गुणः स्यात् । यद्यपि 'इत्संज्ञकङकारादा-

वि'त्यर्थे स वारयितुं शक्यः । किञ्च 'विभाषोर्णोरि'त्यादिपूर्वोत्तरसाहचर्येण धातोः परस्याऽपितः सार्वधातुकस्यैव ङित्त्वाऽङ्गीकारान्न दोषः, तथाऽपि 'लिहः' 'श्रिय' इत्यादौ 'सार्वधातुके यगि'ति यगापत्तिर्बोध्या ।

कर्त्रर्थे इति । एवं च विकरणा द्योतका इति भावः । 'अत्ती'त्यादौ विकरणं विनाऽपि कर्त्राद्यर्थाऽवगमेन, 'लः कर्मणी'ति सूत्राऽनुरोधेन च, तेषां तत्र शक्तेरावश्यकत्वे, पुनः शबादीनां तत्र शक्तिकल्पने मानाऽभावात्, द्योतकत्वमेव युक्तम् । द्योतकत्वं चैषां तिङ्षु कर्त्राद्यर्थमात्रनियामकत्वेन बोध्यम् । इदं च 'सार्वधातुके यगि'त्यत्र भाष्ये स्पष्टम् ।

'भवे'त्यादौ तु 'शिष्यमाणं लुप्यमानाऽर्थाऽभिधायी'ति न्यायेन कर्त्रादिप्रतीतिरिति न दोषः ।

ननु 'कर्त्तरी'ति किमर्थम् । न च भावकर्मण्याव्यावृत्त्यर्थम् । यका बाधात् । तद्विधौ हि 'भावकर्मणोरि'त्यनुवर्त्तते । अत एव शपि परतो न यगिति चेन्न । 'दिवादिभ्य' इत्यादावनुवृत्त्यर्थत्वात् । अन्यथा अपवादविप्रतिषेधेन दिवादिभ्यो भावे, कर्मणि च यकं बाधित्वा, परत्वात् श्यन्स्यात् । 'पुरस्तादपवादा' इति न्यायेन यकः शप्बाधकताया एवोचितत्वादित्याहुः । 'कर्मवत्कर्मणे'त्यत्राऽपि फलं स्फुटी भविष्यति ।

सार्वधातुकार्द्ध । 'अत्र 'सङि धातोरि'ति सूत्रयितुमुचितम् । तत्र पूर्वोत्तरसाहचर्याद्धातोरेव गुणे सिद्धे, 'धातोरि'ति शब्दव्यापाराऽर्थम् । तेन काम्यजादौ न दोषः । 'सनः सकारमारभ्य आ महिङो ङकारात् 'सङि'ति प्रत्याहार' इति केचित् ।

---

इतोऽग्रे—'वारिणी' इत्यत्र 'सार्वधातुके'ति गुणस्तु न शङ्क्यः । 'वृद्धयौत्त्वे'ति पूर्वविप्रतिषेधेन नुमा बाधात् । न चाऽयं गुणोऽन्तरङ्ग इति भ्रमितव्यम् । तद्बीजाऽभावात् । सार्वधातुकसंज्ञासाऽपेक्षत्वेन गुणस्याऽपि बहिरङ्गत्वात् । लघूपधगुणस्तु नुमि सति सन्निपातपरिभाषया नेति स्पष्टमेव' इति ख. ङ. पाठः । क. कुण्डलितः ।

झोऽन्तः । 'आयनेयी'ति सूत्रात् 'प्रत्यय'ग्रहणमनुवर्त्तते, न 'आदि'-ग्रहणम् । तथा सति 'शयान्तै' इत्यत्र शीङो लेटि, झे, 'लेटोऽडाटावि'ति लाऽवस्थायामेवाऽऽटि, झस्याऽनादित्वादन्तो न स्यात् । लाऽवस्थाया-माडागमेऽपि निर्दिश्यमानपरिभाषया 'झी'त्याद्यादेशा लस्यैवेत्याशये-नाऽऽह–प्रत्ययावयवस्येति । तेन 'उज्झिते'त्यादौ न दोषः । न चाऽङ्गस्ये-त्यधिकारात् 'अङ्गनिमित्ताऽवयवस्य झस्ये'त्यर्थेनाऽदोषः । उपायस्य उपायाऽन्तराऽदूषकत्वात् । तादृशाऽर्थस्य दुर्लभत्वाच्च ।

यत्तु 'आगमे कृते तद्रहितस्याऽपि प्रत्ययत्वम्, अर्थवत्त्वं चेति'आदि'-ग्रहणाऽनुवृत्तावपि न दोष' इति । तन्न । 'उस्यपदान्तादि'ति सूत्रस्थभाष्य-विरोधात् । तत्र हि 'भिन्द्युरि'त्युसोऽनर्थकत्वमुक्तम् । 'लूयास्तामि'त्यादौ तामादेरिडागमाऽऽपत्तेश्च । न च 'आर्द्धधातुकस्येडि'त्यादौ आर्द्धधातुकेन धातोराक्षेपात् 'धातोः परस्याऽऽर्द्धधातुकस्ये'त्यर्थान्न दोष इति वाच्यम् । आर्द्धधातुकसंज्ञायां धातुविहितत्वस्यैव निमित्तत्वेन, तेन विहितपञ्चम्य-न्तस्यैवाऽऽक्षेपाऽऽपत्तौ दोषतादवस्थ्यात् ।

न च 'अङ्गस्ये'त्यधिकारात् अङ्गात्परस्य इट्, यासुडन्तं च नाऽङ्गमि'ति वाच्यम् । 'अङ्गनिमित्तस्याऽऽर्द्धधातुकस्ये'त्यर्थात् । 'भविष्यामी'त्यादौ विकरणाऽन्तस्येव, तदादिग्रहणेन यासुडन्तस्याऽपि अङ्गताया दुर्वारत्वाच्च । एतेन 'आगमे कृते, तद्रहितस्याऽप्यर्थवत्त्वमि'ति 'येन विधिरि'तिसूत्रस्थ-कैयटोक्तमपास्तम् । 'अनिनस्मिन्ग्रहणानी'तिवार्त्तिके 'सुस्रोता' इत्यनर्थ-केने'ति तत्सूत्रस्थभाष्यविरोधाच्च । 'प्रणिदापयती'त्यादौ पुकः पूर्वमेव घुत्वे, ततः पुकि, विशिष्टस्य 'घु'ग्रहणेन ग्रहणान्न दोषः । ध्वनितं चेदं प्रकृतसूत्रे भाष्ये । 'स्यसिच्'सूत्रे कैयटे च स्पष्टमिति दिक् ।

भवन्तीति । अत्र शबकाराऽन्त्यकारयोः पररूपकृते 'अचः परस्मिन्नि'ति

---

१ इतोऽग्रे—'यत्तु' इत्यारभ्य 'घुग्रहणेन ग्रहणान्न दोषः' इत्यन्तः पाठो मनोरमास्थत्वात् क. कुण्डलितः ।

स्थानिवत्त्वात् गुण' इति माधवीये स्पष्टम् । 'वार्णादाङ्गं बलीय' इति समानस्थानिकत्वे एवे'ति तदाशयः ।

अतो दीर्घो । यञि किम् ? । 'भवतः' । सार्वधातुके किम् ? । 'अङ्गभ्य' । अत्र यद्वक्तव्यं तत् युष्मदस्मत्प्रकरणे एवोक्तम् ।

एहि मन्ये इति । 'ओदनं भोक्ष्ये' इति त्वं मन्यसे' इत्यर्थः । एवमग्रेऽपि बोध्यम् । सत्यप्योदने परिहासशील-शालकादेर्वाक्यमेतत् ।

अत्र मननाऽपेक्षया भोजनस्य भविष्यत्कालतैव । मननन्तु वर्त्तमानमेव । परिहासपोषाय 'एही'त्याकारणम् । श्यना निर्देशादिह न—'एहि, मनुषे, रथेन यास्यामी'ति ।

परोक्षे लिट् । परोक्षत्वं च 'साक्षात्कृतमि'त्येतादृशविषयताशालिज्ञानाऽविषयत्वम् । अत एव 'क्षिप्रवचने' इति सूत्रे भाष्ये उक्तं 'समासाद्य, अतिक्रम्य, उषित्वा, विस्मृत्य, कूपो बभूवेती'ति । 'भूते' इति, 'अनद्यतने लङि'त्यत 'अनद्यतने' इति चाऽनुवर्त्तते । तेषां साक्षाद्धातुविशेषणत्वाऽसम्भवाद्धात्वर्थविशेषणतेत्याह—भूतानद्यतनेत्यादि । भूतत्वं-वर्त्तमानध्वंसप्रतियोगित्वम् । अतीतरात्रेः पश्चाऽर्द्धेन, आगामिन्याः पूर्वाऽर्द्धेन च सहितः[1] कालः-'अद्यतनः' । तद्भिन्नः-'अनद्यतनः' ।

ननु साध्यत्वेनाऽभिधीयमानो, गुणभूताऽवयवः, क्रमिकव्यापाराणाम् एकफलजनकत्वरूपया एकबुद्धया विषयीकृतः, समूहः-'क्रिया' । तत्राऽवयवानां मेलनाऽभावेन, समुदायः सर्वोऽपि परोक्ष एव । अवयवा अपि क्षणरूपा, क्षणद्वयरूपा वा । उभयथापि अप्रत्यक्षा एव । 'पश्य मृगो धावती'त्यादौ 'पश्ये'त्यस्य ज्ञानसामान्ये लक्षणा । क्रियायाः फलाऽनुमेयत्वात् । तदुक्तं भाष्ये—'क्रिया नामेयमत्यन्ताऽपरिदृष्टा, पूर्वाऽपरीभूताऽवयवा, पिण्डीभूता निदर्शयितुमशक्ये'ति । 'साऽसौ अनुमानगम्ये'ति च । 'अत्यन्ताऽपरिदृष्टा' इत्यस्याऽवयवशः, समूहशश्चाऽप्रत्यक्षेत्यर्थः । लकारो-

---

१ 'सहितकालोऽद्यतनम्' इति सर्वत्र पाठः ।

पात्तकालाऽन्वयश्च समूहे एव । अत एव पाकवर्त्तमानतादशायां 'पपाच' 'पक्ष्यती'ति न प्रयोगः । परोक्षत्वस्याऽपि लकारोपात्तत्वेन, तत्रैवाऽन्वय उचितः । वर्त्तमानत्वस्याऽपि प्रारब्धाऽपरिसमाप्तत्वस्य समुदाये एवाऽन्वयः । 'पञ्चकृत्वः पचती'त्यादावपि अतिशयतृप्त्यादिफलेन एकीकृताऽऽवृत्तिगणितपाकसमुदाये वर्त्तमानत्वादीनामन्वयः । क्वचित्तु 'प्रकृतः कटं देवदत्त' इत्यादौ अवयवे समुदायरूपाऽऽरोपेण, अवयवगताऽतीतत्वस्यैव वा समुदाये आरोपेण, भूतकालप्रयोगः । स्पष्टं चेदं 'निष्ठे'ति सूत्रे भाष्ये ।

क्वचित्तु 'तिष्ठन्ति पर्वताः, स्थास्यन्ति, तस्थुरि'त्यादौ तत्तत्कालिकराज्ञां या क्रियास्तासां वर्त्तमानत्वाऽतीतत्वादि पर्वताऽवस्थाने आरोप्यते इति, कालत्रयोपपत्तिः । स्पष्टं चेदं 'वर्त्तमाने लडि'त्यादौ भाष्ये, तत्कथं 'परोक्षे' इति विशेषणम्, अव्यावर्त्तकत्वादिति चेन्न । व्यापाराऽऽविष्टसाधनपारोक्ष्येण, फलपारोक्ष्येण वा क्रियायाः 'परोक्षत्व'व्यवहारात् । एवं च क्रियाऽनाविष्टसाधनप्रत्यक्षे लिट् भवत्येव, 'अयं पपाच' 'त्वं पेचिथे'-ति । एवं स्वव्यापारस्याऽपि वर्त्तमानतादशायां, व्यासङ्गादिना स्वयम् अप्रतिसन्धाने, ततः कार्येणाऽनुमितौ, भवत्येव,–'बहु जगद पुरस्तात्तस्य मत्ता किलाऽहमि'तिवत् । व्यासादीनामपि ध्यानरहिते काले पारोक्ष्यसत्त्वेन, लिट्प्रयोगे न दोष इत्यन्यत्र विस्तरः ।

० लिट् च । षष्ठ्याः सौत्रो लुक् । तदाह–लिडादेश इति । एकसंज्ञाऽधिकारादन्यत्र सत्त्वेन संज्ञासमावेशः स्यादत आह–एवेति । 'लङः शाकटायनस्यैवे'त्यतोऽनुवृत्तेरिति भावः । ध्वनितं चेदम् 'आकडार'सूत्रे भाष्ये ।

परस्मैपदानाम् । णलः सर्वाऽऽदेशत्वम्, ततः प्राक् णकारस्येत्त्वाऽभावेनाऽनेकाल्त्वात् । लित्त्वं स्वराऽर्थम् । ननु थस्याऽकारो विधीयमानः सर्वाऽऽदेशो[1] न प्राप्नोति, अन्त्यस्यैव तु स्यात्, विधानन्तु यथासङ्ख्याऽर्थं

1 'यथासङ्ख्याऽर्थं स्यात् । न च 'धातोरि'त्यधिकारात् 'आदेः परस्ये'ति

स्यादिति चेन्न । 'अ-अ' इत्यकारप्रश्लेषेणाऽनेकाल्त्वात्सर्वादेश इत्यस्य भाष्ये एव समाहितत्वात् ।

भुवो वुक् । 'अचि श्नु' इत्यतोऽचीत्यनुवर्त्तते । अचीति किम् ? । 'अभूत्' । 'अभूः' । वुको बह्वपेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वेन, वलिलोपाऽप्राप्तेः । वलिलोपे 'व'ग्रहणप्रत्याख्यानाद्वलिलोपाऽप्राप्तेश्चेति दिक् ।

नित्यत्वादिति । कृताऽकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यत्वाऽभ्युपगमादिति भावः । अत एव 'बभूवे'त्यत्र 'अचो ञ्णिती'ति वृद्धिर्न । 'ओः सुपी'त्यत 'ओरि'ति नाऽनुवर्त्तते इति बोध्यम् । इदं च 'इन्धिभवतीभ्यां चे'ति सूत्रप्रत्याख्यानभाष्ये स्पष्टम् ।

एकाचो द्वे । नाऽयं विधिः, 'लिटि धातोरि'त्यादौ विधेयाऽनिर्देशेन अनन्वयप्रसङ्गात् । न च 'शेषे'इतिवदुभयरूपता । 'लिटि धातोरि'त्यादीनां नियामकत्वकल्पनाऽपेक्षया, अस्याऽधिकारत्वं स्वीकृत्य, विधित्वस्यैव औचित्यात् । तदाह—अधिकृत्येति ।

'एकाऽजि'ति न कर्मधारयः, तथा सति धातुना सामानाधिकरण्ये

---

थकारस्य अत्वे, द्वयोरकारयोः पररूपेण सिद्धमिति वाच्यम् । 'धातोरि'ति सूत्रभाष्ये तस्य 'तिङ्सञ्ज्ञी'त्यादौ विहितविशेषणताया उक्तत्वेनाऽर्थाधिकारादिहापि तथैवाऽऽपत्तौ, 'आदे'रित्यस्याऽप्रवृत्तेरिति चेन्न । 'अ-अ' इत्यकारप्रश्लेषेण' इति ख. ङ. पाठः । क. कुण्डलितः । मनोरमास्थत्वात् ।

'नन्वचीति व्यर्थम् । न च 'अभूदि'त्यादिव्यावृत्त्यर्थम् । तत्र हि वुकि सति, 'लोपो व्योरि'ति बाधित्वा, परत्वात् हल्ङ्यादिलोपः स्यात् । न च सन्निपातपरिभाषया तदप्राप्तिः । 'अबिभरि'त्याद्यसिद्धया तद्विषये तदप्रवृत्तेरिति वाच्यम् । वर्णमात्राऽऽश्रयत्वेन वलिलोपस्य प्रत्ययविशेषाऽपेक्षहल्ङ्यादिलोपाऽपेक्षयाऽन्तरङ्गत्वात्, विधेयस्य प्रथमोपादानेन वलिलोपस्य प्राबल्यबोधनाच्चेति चेन्न । वुको बह्वपेक्षत्वेन बहिरङ्गतया' इति ख. ङ. पाठः क. कुण्डलितः ।

२ 'वलि लोपप्राप्तेरेवाऽभावात्' इति ख. ङ. पाठः ।

'इयाये'त्यत्रैव स्यात् । 'प्रथम'ग्रहणसामर्थ्याद्वैयधिकरण्याऽऽश्रयणे तु पचादिष्वप्यच्मात्रस्यैव द्वित्वं स्यात् । ततश्च 'हलादिः शेषः' इत्यादीनां वैयर्थ्यं स्यात् । ( 'एक'[2]ग्रहणं चाऽनर्थकं स्यात्, 'अच' इत्येकत्वविवक्षयैव सिद्धेः ) । तस्मात् तद्गुणसंविज्ञानो बहुव्रीहिः ।

नन्वेवमपि धातोरेव विशेषणमस्त्विति चेन्न । जागर्त्यादौ द्वित्वाऽनापत्तेः । 'प्रथम'ग्रहणवैयर्थ्याऽऽपत्तेश्च । तस्मात् समानाधिकरणं प्रथमविशेषणम् । तदाह—धात्ववयवस्येत्यादि । पचादौ प्रथमत्वैकाच्त्वधात्ववयवत्वानि व्यपदेशिवद्भावेन बोध्यानि । एकस्मिन्नेव पुत्रे यथा ज्येष्ठादिधर्मारोपेण ज्येष्ठत्व-मध्यमत्व-कनीयस्त्वव्यवहारः, तथा 'इयाये'त्यादावेकस्मिन्नेव इकारे आरोपिताऽनेकाऽवस्थाऽऽरोपेण, समुदायरूपत्वस्य आरोपेण, अवयवत्वस्य चाऽऽरोपेण एकाच्त्वस्य, अपूर्वत्वेन च प्राथम्यस्य सिद्धिः । एवमनुत्तरत्वेनाऽन्तत्वाऽऽरोप[3] एकस्मिन्नपीति, व्यपदेशिवद्भावो लोकन्यायसिद्ध इत्याद्यन्तवत्सूत्रे भाष्ये स्पष्टम् ।

'अजादेरि'ति कर्मधारयात् पञ्चमी । राजदन्तादित्वात्, सौत्रत्वाद्वा विशेषणस्याऽप्यादिशब्दस्य परनिपातः । भिन्ने पदे वा । तत्राऽऽद्यं सौत्रत्वाल्लुप्तपञ्चम्यन्तम्, न तु बहुव्रीहेः षष्ठी । अत एव 'इन्दिद्रीयिषती'त्यादौ दकारस्य 'न न्द्राः' इति द्वित्वनिषेधो न । स्पष्टं चेदं 'संयोग'संज्ञासूत्रे भाष्ये । एवं च 'द्वितीयस्ये'ति न कार्यमिति, स्पष्टमत्रैव भाष्ये । तदाह—आदिभूतादिति । अत्र च 'एकाच'इत्यादेः कारकषष्ठीत्वाय 'द्विःप्रयोग'पक्ष एव । 'सर्वस्य द्वे' इत्यत्रेव स्थाने–द्विर्वचने तात्पर्यग्राहकाऽभावात् ।

अत एव 'आटिटदि'त्यादौ णिलोपसिद्धिरिति 'एत्येत्येधती'त्यत्र निरूपितम् । एवं चाऽर्थवत्त्वं समुदाये एव, न प्रत्येकम्, बोधाऽऽवृत्तिप्रसङ्गात्, 'अनभ्यासविकारे' इत्यस्य वैयर्थ्याऽऽपत्तेश्चे'ति नव्याः ।

---

१ अयं ख. ङ. पाठः क. कुण्डलितः ।

२ 'एकग्रहणं वाऽनर्थकं स्यात्' इति क. पाठः ।

३ 'अतत्वाऽऽरोपेण' इति क. पाठः ।

'सुट् कात्पूर्वः' 'दयतेर्दिगी'तिसूत्रस्थभाष्ये तु 'उत्तरस्याऽर्थवत्त्वमि'ति दृश्यते । अत्राऽपि अभ्यासोऽनर्थक एव । तत्तु तनादिगणे उपपादयिष्यते । अभ्यासस्याऽऽनर्थक्याच्च 'सुविनिर्दुर्भ्यः' इति सूत्रस्थभाष्याऽसङ्गतिर्न ।

अजादेर्धातोर्द्वितीयस्यैकाऽचः सत्त्वे, तद्द्वित्वेन[1] प्रथमैकाचो द्वित्वं तक्रकौण्डिन्यन्यायेन बाध्यते । नो चेत् प्रथमस्य द्वित्वं भवत्येव । यथा 'आटतुरि'त्यादौ । तच्च[2] 'प्रथमस्ये'ति सूत्रेणैव । 'आदिभूतादचः परस्य द्वितीयस्यैकाच' इति तदर्थात् । 'अनभ्यासस्ये'ति तत्पुरुषेण एकाऽच एव विशेषणमिति, 'अजादेरि'ति सूत्रे भाष्ये स्पष्टम् ।

अनभ्यासस्येति किम् ? । जुगुप्सतेर्णिचि, चङि, 'अजुगुप्सत' इत्यादौ पुनर्द्वित्वाऽभावायोत्तराऽर्थम् । प्रकृतसूत्रे प्रयोजनाऽभावमभिप्रेत्य भगवता 'न कर्त्तव्यमि'त्युक्तम् । अत एव 'स्तौतिण्योरि'ति सूत्रे भाष्ये स्वपेर्यङन्तात्सनि 'सोसुपिषते' इति प्रयुक्तम् । वस्तुतस्तु 'अभ्यास-प्रतिषेधाऽऽनर्थक्यम् , छन्दसि वा वचनादि'ति भाष्यवार्त्तिकस्वारस्या-ल्लोके एषां प्रयोगाणाम् असाधुत्वं युक्तम्, अनभिधानादित्याहुः ।

भूविति । अत्र एकाचां बहुत्वेऽपि, समुदायस्यैव द्वित्वम् । अवयव-द्वित्वे समुदायस्य, अवयवाऽन्तरस्य चाऽननुग्रहात् । समुदायस्य द्वित्वे च

---

१ 'तद्द्वित्वेन' इति ङ. नास्ति ।

२ 'तच्च 'प्रथमस्ये'ति सूत्रेण, न तु द्वितीयेन' इत्येके । 'व्यपदेशिवद्भावेन द्वितीयत्वस्य सत्त्वात् 'द्वितीयस्ये'त्यनेने'त्यन्ये' इति ख. ङ. पाठः ।

'अजादेर्धातोर्द्वितीयाऽभावे प्रथमवाक्येनैव प्रथमस्य द्वित्वमि'ति भाष्ये स्पष्टम् । व्यपदेशिवद्भावेन तु न द्वितीयत्वम् । 'प्रथमस्ये'त्युक्त्या उभयसत्तायामेव 'अजादेरि'त्यस्य प्रवृत्तेः' इति तु लघुशब्देन्दुशेखरे पाठः ।

'व्यपदेशिवद्भावेन द्वितीयत्वात् 'अजादेरि'त्येवाऽत्र द्वित्वमिति तु न वाच्यम् । 'द्वितीयस्ये'त्युपादानात् प्रथमद्वितीययोः सत्तायामेव 'अजादेरि'-त्यस्य प्रवृत्तेः' इति तु भाष्यप्रदीपोद्योते नागेशभट्टाः ।

सकलाऽवयवानाम् अनुग्रहात्। वृक्षचलने सर्वाऽवयवचलनवत्। युगपत्तु सर्वेषामवयवानां द्वित्वमशक्यम्, वाचः क्रमवृत्तित्वात्। यद्यपि पुनः प्रवृत्त्याऽपि सर्वाऽनुग्रहः कर्त्तुं शक्यते, तथाऽपि समुदाये सकृत्प्रवृत्त्याऽपि तस्य सम्पादयितुं शक्यत्वेन, 'अनभ्यासस्ये'ति निषेधाच्च, न पुनःपुनः प्रवृत्तिः। अच एकवारं द्वित्वे कृते, 'लक्ष्ये लक्षणस्ये'ति न्यायेन तस्य पुनर्द्वित्वाऽप्रवृत्तौ, एकाच्त्वाऽभावात्पुनःपुनरप्रवृत्तेश्चेत्यन्यत्र विस्तरः।

अत्रेति। प्रत्यासत्त्या 'षाष्ठद्वित्वप्रकरणे' इत्यर्थः। 'पूर्वोऽभ्यास' इत्यस्याऽप्यधिकारसूत्रत्वादेतदर्थलाभः। 'बभ्रुः 'जह्नुरि'त्यादौ 'उणादयो बहुलमि'ति बाहुलकादभ्यासकार्यम्। तेन 'घटं-घटमि'त्यादौ नाऽतिप्रसङ्गः।

'द्वे' इत्यनुवृत्तं षष्ठ्या विपरिणम्यते इत्याशयेनाऽऽह—तयोरिति। महासंज्ञाकरणं प्राचामनुरोधात्।

हलादिः। 'अत्र लोपोऽभ्यासस्ये'त्यतोऽभ्यासस्येत्यनुवर्त्तते। जातिपरश्च निर्देशः। तेनाऽभ्यासत्वाऽऽक्रान्ते क्वचिदादेर्हलः सत्तामाश्रित्य, सर्वत्राऽनादेर्हलो लोपो विधीयते। व्यक्तिपक्षेऽपि 'अभ्यासस्याऽऽदिर्हल् शिष्यते' इति वाक्ये आदिहल्वत एव ग्रहणात्प्रत्यासत्त्या शेषग्रहणसामर्थ्यलभ्ये 'अभ्यासस्याऽन्ये हलो लुप्यन्ते' इति वाक्ये, तादृशस्यैवाऽभ्यासस्य ग्रहणप्राप्तावपि, लक्ष्याऽनुसाराद्व्याप्तिन्यायाऽऽश्रयेणाऽभ्यासमात्रग्रहणम्। इदं चाऽजादेरिति सूत्रे भाष्ये स्पष्टम्। अत एव 'तस्मान्नुड् द्विहल' इति चरिताऽर्थम्। तेन 'आटे'त्यादिसिद्धिः। आदेर्हलः शेषोक्तेः प्रत्यासत्त्या अन्यस्य हल एव लोपः। इतरनिवृत्तिपूर्वकाऽवस्थाने च 'शेष'शब्दस्य वृत्तिरित्याशयेनाऽऽह—अन्ये हल इति।

ह्रस्वः। यद्यपि 'भवतेर' इत्येव सिद्धेरस्य प्रकृते नोपयोगः, तथाऽपि पर्जन्यवच्छास्त्रप्रवृत्तिमभ्युपगम्येदमुक्तम्।

भवतेरः। प्रयोगे दृष्टानां भुवामनुकरणात् श्तिप्। अत एव अस्तेर्भूभावेऽपि 'बभूवे'त्येव। 'प्रकृतिवदनुकरणमि'त्यस्याऽनित्यत्वेन अत्र

अदादित्वाऽनतिदेशान्न शपो लुक् । 'लुग्विकरणाऽलुग्विकरणयोरि'त्यस्य तु न प्रवृत्तिः । 'भू'आदेशस्याऽऽर्द्धधातुके एव विधानेन, लुग्विकरणत्वाऽभावात् । श्तिपः कर्त्तृवाचकत्वाऽभावेऽपि, 'उपसर्गात्सुनोती'त्यादिनिर्देशोऽेव विकरणः । अत एव कर्मण्यपि 'बिभराम्बभूवे' इत्यादावकारो भवत्येव । एतेन 'भवतेरि'तिकर्त्तृनिर्देशाद्भावकर्मणोर्नाऽत्वमि'तिपरास्तम् । 'उपसर्गात्सुनोती'त्यादीनामपि तत्राऽनापत्तेः । यत्तु 'श्तिपः शित्त्वसामर्थ्यादेव विकरण' इति प्राञ्चः । तन्न । पिबाद्यादेशाऽर्थम्, 'आदेच' इत्यात्त्वप्रतिषेधाऽर्थं, 'रुदादिभ्य' इतीडाद्यर्थं च शित्त्वस्य चारितार्थ्यात् ।

'व्यथो लिटी'त्यतो 'लिटी'त्यनुवर्त्तते । तदाह—**लिटीति** । अत एव 'बोभोती'त्यादौ यङ्लुगन्ते न एतत्प्रवृत्तिः ।

असिद्धवदत्रा । अभिविधावाङ् । अर्थवतो 'भ'शब्दस्य ग्रहणात् । 'भाऽधिकारमभिव्याप्ये'त्यर्थः । अत्र च 'सूर्यतिष्याऽगस्त्ये'त्यत्रत्यम 'उपधा'ग्रहणं ज्ञापकमिति तत्रैव निरूपितम् ।

नन्वस्य विधित्वे 'आभात्'ग्रहणम् असिद्धवद्भवतो निर्देशाऽर्थं स्यात्, सङ्कोचे मानाऽभावात्, यं प्रति असिद्धत्वं तन्निर्देशाऽर्थं च स्यात् । एवं च 'आभीयम् आभीयेऽसिद्धमि'त्यर्थलाभेऽपि, समानाऽऽश्रयत्वं न लभ्येत, 'अत्र'ग्रहणं चाऽनर्थकं स्यात्, अत्र सूत्रे निमित्ताऽनुल्लेखादिति चेन्न । अधिकारत्वात् 'अत्र'पदेन यत्राऽनुवृत्तिस्तत्सूत्रस्थसप्तम्यन्ताऽसप्तम्यन्तोल्लिखितो निमित्तसमुदायः परामृश्यते । सप्तमी च वैषयिकी । इदमेवाऽभिप्रेत्य 'निमित्तत्वं यथाकथञ्चित्, न तु कार्यिभिन्नत्वेनैव, सप्तम्यन्तोल्लिखितत्वेनैवेत्याग्रह' इति प्राञ्चः । अत एव लुको 'हि'स्थानिकत्वेऽपि, 'जही'त्यादावसिद्धत्वसिद्धिः । तेन समानाऽऽश्रयत्वं लब्धम् ।

---

१ 'निर्देशाज्ज्ञापकादेव विकरणः । अनेन हि ज्ञापकेन 'कर्त्तरी'त्यस्य भावकर्मोऽभावोपलक्षकता ज्ञाप्यते' इति ख. ग. पाठः । क. कुण्डलितः ।

२ निमित्तसप्तमीयमिति तु केचित् ।

'आभात्'ग्रहणं विषयनिर्देशाऽर्थम्। अवधिलाभस्तु 'अङ्गस्ये'त्यादाविव व्याख्यानत एव भविष्यति। एवं च 'अनुदात्तोपदेशे'त्यत्र अस्योपस्थाने-ऽयमर्थः–'एषामनुनासिकलोपो झलि क्ङिति, स चाऽसिद्धो भवति, एतन्निमित्तनिमित्तकाऽऽभीये कर्त्तव्ये' इति।

अयं च अर्थाऽधिकारः। यतोऽधिकारे सजातीयशब्दाऽन्तरकल्पना, सादृश्यात्तत्त्वाऽध्यवसाय इत्याकरे स्पष्टम्, एवं च शब्दाऽधिकारे शब्दाऽर्थयोरुभयोः कल्पना, अर्थाऽधिकारे तु शब्दमात्रस्येति लाघवात्। एवं च 'श्नान्नलोप' इत्यत्र यावत्सु असिद्धत्वं निर्णीतम्, अग्रिमसूत्राणा-मपि तावत्सु सर्वेष्वसिद्धत्वं प्रतिपाद्यते। एतेन 'यत्राऽस्योपस्थानं, तत एवाऽऽरभ्य यदाभीयं, तस्मिन्नेवाऽसिद्धत्वं स्यात्, न पूर्वस्मिन्, एवं च 'ध्वसोरि'त्येत्त्वं पूर्वस्मिन् धित्वे कर्त्तव्ये नाऽसिद्धं स्यादि'त्यपास्तम्। तदेतत् हृदि निधायाऽऽह—इत ऊर्ध्वमिति।

अत्राऽपि शास्त्राऽसिद्धत्वमेव। तेन 'शाधि' 'एधी'त्यादौ धित्वं सिद्ध्यति। कार्याऽसिद्धत्वे तु 'देवदत्तहन्तृहत'न्यायेन धित्वं न स्यादिति बोध्यम्। न च 'जनसने'तिसूत्रभाष्योक्तरीत्या परत्वाद्धिभावो भविष्यतीति वाच्यम्[1]। धिभावविषयपरिहारेण शाभावस्य विषयाऽभावेन, परत्वादप्रवृत्तेः[3]।

'समानाश्रये' इति किम्?। 'पपुषः'। इह वसोः संप्रसारणम् आलोपे नाऽसिद्धम्। 'वसोरि'ति सूत्रे असिद्धवत्सूत्राऽनुवृत्त्या सम्प्रसारणस्या-ऽसिद्धत्वं वाच्यम्। तच्च 'अत्रे'त्यनेनोपस्थितसम्प्रसारणसूत्रगृहीता-ऽऽश्रयाऽऽश्रितं प्रत्येव। तादृशं च न आलोपादिकम्। सम्प्रसारणे विभक्तेर्निमित्तत्वेन, तस्याश्च आलोपादावनिमित्तत्वात्। न च 'असिद्ध'-

१ 'अनुदात्तोपदेशेत्यत्र' इति ख. क. पाठः।

२ 'इति वाच्यम्। अकृतव्यूहपरिभाषाया दुर्वारत्वात्' इति ख. क. पाठः।

३ 'परत्वाऽप्रवृत्तेः' इति क. पाठः।

परिभाषाप्रवृत्तिः । तस्या ऊठ्सूत्रे निष्पन्नत्वेन आभीयत्वात्तदपेक्षया अन्तरङ्गबहिरङ्गयोरुभयोरप्यसिद्धत्वेन तदप्राप्तेः । अनित्यत्वाच्च ।

समानाऽऽश्रयत्वं च तत्प्रयोगप्राप्ताऽसिद्धत्वाऽऽश्रयशास्त्रीयनिमित्त-समुदायोऽपेक्षयाऽन्यूनाऽनतिरिक्ताऽऽश्रयकत्वम् । आश्रयणं च स्थानित्वेनै-वेत्यादिर्नोऽऽग्रह इत्युक्तम् । विकारकृतम् अतिरिक्तत्वन्तु न । 'जही'-त्यादेरसिद्धयापत्तेः ।

तत्र 'पपुष' इत्यादौ न्यूनः । 'चाखायिते'त्यादावधिकः । तत्र हि यङ्-निमित्तं 'ये विभाषे'त्यात्वं तृज्निमित्ते 'यस्य हल' इति लोपे नाऽसिद्धम् । अतिरिक्तमपि पूर्वविध्युपात्तताऽवच्छेदकरूपेण आश्रितं चेत्, तदपि समानाऽऽश्रयमेव । 'समान'शब्दस्वारस्यात् । अत एव चिणो लुकि चिणो लुगसिद्धः । अत एव 'स्त्री-इयती'त्यत्र 'यस्ये'ति लोपाऽपेक्षया 'स्त्रिया' इति इयङि अधिकस्य 'स्त्री'शब्दस्याऽपेक्षणाद्व्याश्रयत्वमित्यङ्ग-संज्ञासूत्रे भाष्ये ध्वनितम् । न च 'पपुष' इत्यादौ 'उस्यपदान्तादि'त्यस्या-ऽनाभीयतया, तत्र सम्प्रसारणस्याऽसिद्धत्वाऽभावात् पररूपेण सिद्धम्, एवं 'चिच्युष' इत्यपि 'इको यणची'ति यणा सिद्धमिति वाच्यम् । उसः प्रतिपदोक्तस्यैव ग्रहणात् । 'लुलुवुष' इत्यत्राऽसिद्धत्वे उवङनापत्ति-दोषस्य सत्त्वाच्च ।

इदं सूत्रमनित्यम् । 'श्नसोरल्लोप' इति सूत्रस्थात्तपरकरणाज्ज्ञापकात् । तथाहि—'अस् आतामि'ति स्थिते 'जनसने'ति सूत्रभाष्योक्तरीत्या विप्रतिषेधे आभीयाऽसिद्धत्वाऽभावेन, परत्वादल्लोपे, तस्याऽऽभीयत्वेन असिद्धत्वात्पुनःप्रसङ्गविज्ञानेन आटि कृते, लक्ष्यभेदात् 'लक्ष्ये लक्षणस्ये'-ति न्यायाऽप्राप्तौ, प्राप्तस्य आटो लोपस्य वारणाऽर्थं तत्र तपरकरणम् । तद्धि आटोऽसिद्धत्वे व्यर्थं सत्, तदनित्यत्वे ज्ञापकमिति दिक् ।

नन्विदं सूत्रं व्यर्थम्, 'जही'त्यादौ 'अतो हेरि'त्यत्र 'प्रत्ययादि'-त्यपकर्षेण हेरलुकः सिद्धेः । न च काद्यस्य आचारक्विबन्तेभ्यो यङ्लुकि

दोषः। तस्य काचित्कत्वेन ईदृशे विषयेऽनभिधानात्। एतेन 'हय'-धातोर्यङ्लुकि, यलोपे, हिलोपाऽनापत्तिरि'ति परास्तम्। 'शाधी'त्यत्राऽपि 'न हौ' इति, 'आ हौ' इति—इत्त्वनिषेधेन, तदपवादाऽऽकारविधानेन वा, 'शास् हौ' इति पदच्छेदेन शासादेशविधानसामर्थ्यादित्त्वाऽभावे वा रूपसिद्धेः। न च मन्थधातोर्लिटि, कसौ, नलोपे, एत्त्वाऽभावाऽर्थं तत्। कसोश्छान्दसत्वात्।

न च स्रंसेर्ण्यन्तात्क्विपि णिलोपाऽसिद्धत्वेन 'अनिदिताम्' इति सूत्राऽप्रवृत्त्यर्थं तदिति वाच्यम्। स्थानिवत्त्वेनैव निर्वाहात्। 'क्वौ लुप्तम्' इति तु असार्वत्रिकम्। 'क्वौ विधिम्' इत्यत्र प्रतिपदोक्तपरिभाषया 'क्वि'शब्दमुच्चार्य विहितविधेरेव ग्रहणाच्च। न च 'गत' इत्यादावतो लोपवारणाय तत्। 'अतो लोप' इत्यत्र उपदेशपदाऽनुवृत्त्या सिद्धेः। सा च पयतेः 'पत्'-इति रूपाऽर्थमावश्यकीत्यादि स्पष्टं भाष्ये इति चेन्न। स्पष्टाऽर्थत्वात्। ध्वनितं चेदम् 'आरभ्यमाणेऽप्येतस्मिन्नि'त्यादिना भाष्येण।

वुकः = वुक्शास्त्रस्य।

उवङीति। णल्यपि वृद्ध्यपेक्षया नित्यत्वाद्वुकि, वृद्धेराभीयत्वाऽभावेन तत्राऽसिद्धत्वाऽभावात्तदप्राप्तावुवङः प्राप्तिः। वुग्युटाविति। युट उदाहरणम्—'दिदीये'। अनित्यत्वफलितोऽयमर्थः। न च येननाप्राप्तिन्यायेन उवङो वुगपवाद इति, तद्विषये उवङोऽप्राप्तिः। परस्परं प्रति परस्परस्याऽसिद्धत्वेन, बाध्यस्याऽसिद्धतया, तन्निरूपिताऽपवादत्वस्य वक्तुमशक्यत्वादित्याशयः। बभूवेति। कृताऽकृतप्रसङ्गित्वमात्रेण नित्यताऽभ्युपगमात् वृद्धिं बाधित्वा नित्यत्वाद्वुकि, पुनर्वृद्धेः प्राप्त्यभावः। अभ्यासविकारेषु बाध्यबाधकभावाऽभावात् हलादिशेषाऽत्वयोः समावेशः।

---

१ इतोऽग्रे—'यत्तु 'इन्धिभवतिभ्यां चे'ति, तत्तु 'भुवो वुको नित्यत्वात्, इन्धेश्छन्दोविषयत्वाच्च लिटः किद्वचनाऽऽनर्थक्यमि'त्यादिना भाष्ये प्रत्याख्यातम्। किञ्च सत्यपि कित्त्वे 'बभूवे'त्यत्र 'अचो ञ्णिती'ति वृद्धिर्दुर्वारा।

आर्द्धधातुकस्येट् । 'नेड्वशी'ति प्रकृते, पुनरिड्ग्रहणं 'ने'त्यस्य निवृत्त्यर्थम् । आर्द्धधातुकस्येति किम् ? । 'जुगुप्सति' ।

बभूविवेति । 'श्र्युकः किती'ति निषेधे प्राप्ते, क्रादिनियमादिट् । भविष्यतीति । तत्त्वं च वर्त्तमानप्रागभावप्रतियोगिसमयोत्पत्तिमत्त्वम् ।

स्यतासी । यद्यपि 'ल'शब्देन लृङ्लृटोर्ग्रहणम्, तथाऽपीह यथासङ्ख्यम्, वाचकशब्दसाम्यात् ।

शबाद्यपवाद इति। न च स्यतास्योर्लोऽवस्थायामेव प्राप्तेः, शपश्च सार्वधातुकसापेक्षत्वात् तत्कालेऽप्राप्तेः, कथमस्याऽपवादत्वम् । 'यदीदं न स्यात्तदा तिबादौ शप्स्यात्, कृते तु प्राप्तिरेव ने'त्येतावतैवाऽपवादत्वव्यवहारात् । परत्वात् आदेशोत्तरमेव स्याऽऽदिविकरणप्राप्तेश्च । न च आदेशा अनित्याः, विकरणे कृते व्यवधानादप्राप्तेरिति वाच्यम् । 'धातोर्विहितस्य लस्ये'ति विहितविशेषणाऽऽश्रयणात् । अत एव तासेः परस्य लसार्वधातुकस्य अनुदात्तत्ववचनं, 'सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधते' इत्यर्थस्य ज्ञापकमि'ति 'अनुदात्तं पदमि'तिसूत्रस्थषाष्ठभाष्यसिद्धान्तः सङ्गच्छते । तासेर्लावस्थायामुत्पत्तौ तु सार्वधातुकस्वरस्यैव सतिशिष्टत्वेन तदप्राप्तविध्यर्थमेव स्यात् ।

न चैवं 'देविष्यती'त्यादौ शबपवादयोः श्यन्स्ययोः परत्वात्

---

'क्ङिति चे'ति तु इग्लक्षणाया एव निषेध इति वक्ष्यते । किस्वन्तु 'बभूथे'त्यादौ गुणनिषेधेन चरिताऽर्थम् । एतेन 'ङिदित्यप्यनुवर्त्याऽतिदेशद्वयसामर्थ्यादनिग्लक्षणाया अपि निषेध' इत्यपास्तम् । भुवो वुको नित्यत्वेनैव सिद्धेः । भाष्यविरोधाच्च । न च 'द्विर्वचनेऽची'त्यस्य प्रवृत्त्या द्वित्वात्पूर्वं गुणवृद्ध्योरभावे, वुको निर्विघ्नत्वात्, 'नित्यत्वादि'ति हेतुरयुक्त इति वाच्यम् । तत्र 'द्वित्वे कर्त्तव्ये' इति वाक्यशेषेण, वुकि कर्त्तव्ये तत्प्रवृत्तौ मानाऽभावेन, परत्वात्तयोः प्राप्तौ, तस्य सत्वादित्याहुः' इति ख. ङ. पाठः । क. कुण्डलितः ।

श्यनेव स्यादिति वाच्यम् । कर्त्रर्थत्व-सार्वधातुकत्वाद्यनपेक्षणेन स्यादीनामन्तरङ्गत्वात्। इदं च 'विहितानां नियम' इति पक्षे।

अत्र सूत्रे भाष्ये तु 'एकवाक्यतया नियम' इति पक्षमालम्ब्य सङ्ख्याविधायकैः, आत्मनेपदादिप्रकरणेन च लादेशविधीनामेकवाक्यतया आदेशा बहिरङ्गा इति, लावस्थायामेव स्यादयः। यद्वा 'स्यतासी' इत्यत्र 'आर्द्धधातुके' इत्यनुवर्त्त्य, 'लाऽवस्थायां स्यादय' इत्युक्तम्, तदा 'अन्यत्र विकरणेभ्य' इत्यंशो वाचनिक एवेति बोध्यम्। ध्वनितं चेदं 'कुषिरजोः'-'धातोरि'त्यादौ भाष्यकैयटयोः।

तासेरिकार उच्चारणाऽर्थः। नचैवं 'मन्ता' इत्यत्र* कर्मणि लुटि, टिलोपे, नस्योपधात्वात् 'अनिदितामि'ति लोपः प्राप्नोतीति वाच्यम्। टिलोपस्य आभीयत्वेनाऽसिद्धत्वादिति दिक्।

लुटः प्र। 'एकाऽर्थस्य एकाऽर्थ' इत्याद्यान्तरतम्यान्निर्वाहो बोध्यः। डित्त्वेति। न च डकारः सर्वाऽऽदेशत्वाय चरिताऽर्थ इति वाच्यम्। प्रश्लेषेण आकारद्वयात्मकाऽऽदेशेनैव तत्सिद्धेः।

पुगन्त। बहुव्रीहिगर्भो द्वन्द्वः। सार्वधातुकादिकं च इक एव विशेषणम्, नाऽङ्गस्य। 'अङ्गाऽवयवस्येक' इत्यर्थः। अत एव 'भिनत्ती'-त्यादौ न गुणः। नन्वेवं 'भेत्ते'त्यादावपि न स्यादत आह—येननेति। 'सूत्राऽऽरम्भसामर्थ्यादेकवर्णव्यवधानमाश्रीयते' इत्यर्थः। अत्र क्नोः कित्त्वसामर्थ्याद्भूतपूर्वलघूपधत्वाऽऽश्रयो गुणः।

दीधीवे। इदं सूत्रं प्रत्याख्यातम्। दीधीवेव्योश्छान्दसत्वात्, छन्दसि गुणदर्शनाच्च। इटग्रहणमपि व्यर्थम्, 'नेड्वशी'त्यत 'इडि'ति वर्त्तमाने, पुनरिट्ग्रहणम् 'इट् इडेव यथा स्यादि'ति नियमाऽर्थम्। तेन प्रकरणात् आङ्गविकाराऽन्तरम् अस्य निषिध्यते इत्याहुः।

इट् अत्र आगम एव, न तु गत्यर्थकधातुः, व्याख्यानात्।

---

* 'न चैवं मन्तारावित्यत्र टिलोपे' इति ख. ङ. पाठः।

तासस्त्योः । उत्तरस्य तास्प्रत्ययस्य 'सः स्यार्धधातुके' इत्यतोऽनुवृत्त-'सी'त्यनेन विशेषणात्, 'यस्मिन्विधिरि'ति न्यायाच्चाऽऽह—सादाविति। एवं 'रि चे'त्यत्राऽपि ।

प्राग्वदिति । रादौ प्रत्यये अस्तेरभावात् 'तासेर्लोप' इत्यर्थः ।

लृट् शेषे च । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायामि'त्युक्तत्वेन, तद्भिन्नः शेषः । तत्र चात् क्रियार्थक्रियोपपदेऽपि । तदाह— असत्यां सत्यां चेति । ननु अस्वरितत्वात् 'क्रियायामि'त्यादि निवर्त्स्यताम्, किं 'शेषे चे'-त्यनेनेति चेन्न । 'शयिष्यत इति स्थीयते' इत्यत्र लृटं बाधित्वा तुमुन् स्यात्। तुमुन्विधावपि 'भविष्यती'त्यनुवर्त्तनात् । अत्र च भावे भविष्यति लः । एवं 'हरिष्यामीति व्रजती'त्यादौ ण्वुलापत्तिः । 'शेषे चे'ति सत्त्वे हि चकारात् लृडपि तत्र विशेषविहित इति न दोषः । न च तद्-भावेऽपि वाऽसरूपविधिना निस्तारः । क्तल्युट्तुमुन्खलर्थेषु तदभावात् । तत्र हि तुमुन्नुपलक्षणम्, ण्वुलपि बोध्यः । इदं 'शेषे चे'ति ग्रहणमप्युक्ताऽर्थे ज्ञापकं बोध्यम् । यत्तु 'भविष्यतीति व्रजती'ति प्रत्युदाहरणमि'ति । 'यद्यपि अत्र भावे, समानकर्त्तृके च विधानान्न तुमुन् प्राप्नोति, तथापि ण्वुल् प्राप्नोत्येवे'ति व्याख्यातारः । तन्न । ण्वुलोऽपि शब्दशक्तिस्वाभाव्येन समानकर्त्तृकत्वे एव विधानात् । स चाऽर्थो बाहुलकादिना साध्य इत्यन्यदेतत् ।

लोट् च । विध्यादिष्विति । विध्यादयश्च 'विधिनिमन्त्रणे'ति सूत्रोक्ताः ।

आशिषि । आशीरिष्टप्राप्तीच्छा । ननु विध्यादिसूत्रे एव आशी-

---

१ 'ननु' इत्यारभ्य 'इत्यन्यदेतत्' इत्यन्तः ख. ङ. पाठः, क. कुण्डलितः, मनोरमादिस्थत्वात् ।

२ 'ननु' इत्यारभ्य 'इति दिक्' इत्यन्तः ख. ङ. पाठः क. कुण्डलितः, मनोरमाशब्दरत्नस्थत्वात्

ग्रहणं क्रियतां, किमनेनेति चेन्न। 'स्मे लोडि'त्यनेन स्वविषये परत्वाल्लोटा लिङो बाधाऽऽपत्तेः। सिद्धान्ते तु परत्वादेष विधिः 'स्मे लोडि'त्यादेर्बाधकः। न च 'स्मे लोडि'त्यत्र प्रैषादीनामनुवृत्तेराशिषि कथं तत्प्राप्तिः ?। तदनुवृत्तौ मानाऽभावात्। तद्वद्विध्यादीनामप्यनुवृत्त्यापत्तेश्च। यदि तु 'अधीष्टे चे'ति सूत्राऽऽरम्भसामर्थ्याद्विध्यादयो नाऽनुवर्त्तन्ते, प्रैषादयोऽनुवर्त्तन्ते' इत्युच्यते, तदा प्रैषाऽर्था-ऽऽशीरर्थयोर्युगपद्विवक्षायां परत्वात् अनेन बाधाऽऽपत्तिरिति बोध्यम्। न हि'अत्र न युगपद्विवक्षे'त्यत्र मानमस्ति। प्रैषा-ऽऽशिषोर्युगपद्विवक्षायां लिङ्लोड्भ्यां परत्वात्कृत्यबाधाऽर्थमपि अस्याऽऽवश्यकत्वाच्चेति दिक्।

तुह्योः। यद्यपि 'तिह्योरि'त्युक्तेऽपि 'हि'साहचर्यात् लोटस्तेरेव ग्रहणं भविष्यति, तथाऽपि स्पष्टप्रतिपत्त्यर्थं 'तुह्योरि'त्युक्तम्। **अनन्यार्थेति**। तद्बलकल्प्यमानाऽर्थानुवाद एव 'ङिच्चे'त्येतत्, अर्थाऽन्तरकल्पनानिवृत्त्यर्थमिति भावः। परिभाषाणां च प्रायः पक्षप्राप्तार्थाऽनुवादेनाऽर्थान्तरनिवृत्त्यर्थत्वं, 'व्रीहीनवहन्ती'त्यादिवदिति स्पष्टमेव। **सम्प्रसारणादीति**। आदिना ध्रुव इडभावः। **सम्भवत्प्रयोजनेति**। इदं प्रयोजनं सर्वाऽऽदेशत्वे एव, नाऽन्त्याऽऽदेशत्वे। अप्रत्ययत्वात्। तत्पक्षेऽवयवे चारितार्थ्याऽभावाच्च। [1]**मन्थरमिति**। सम्भवत्प्रयोजनतया स्वविषयाऽभावसम्भा-

---

१ 'मन्थरमिति। अन्त्यादेशत्वेऽल्पफकत्वात्, 'एरुरि'त्यनन्तरं 'तिह्योस्तादाशिषी'त्येव सिद्धे, ङित्वस्य वैयर्थ्याऽऽपत्तेश्च, तस्य मन्दं प्रवृत्तिः। अनेकाल्त्वन्तु निश्चितम्। ननु 'एरुरि'त्यनन्तरं तादादेशविधाने, 'कुरुतादि'त्यादौ परत्वात् 'उतश्चे'त्यादिलुगापत्तिः, यथान्यासे तु परत्वात्तातङि, सकृद्गतिन्यायेन तेषामप्रवृत्तिरिति चेन्न। अन्तरङ्गत्वात्पूर्वमेव तादादेशप्रवृत्तेः। आङ् तु बहिरङ्गम्। तातङि कृते तु न लुक्। 'हुझल्भ्य' इत्यतः 'अतो हेरि'त्यत्र 'हेरि'त्यनुवर्त्त्य, हिरेव यो हिस्तस्य लुग्विधानात्' इति ख. ङ. पाठः, लघुशेखराहृतः। क. तु कुण्डलितः। मनोरमादिस्थत्वात्।

वनया, ङित्त्वदर्शनेन स्वविषयसंभावनायां च तस्य मन्दं प्रवृत्तिः।

वस्तुतो ङित्त्वसामर्थ्यसिद्धस्याऽन्त्यादेशत्वस्याऽत्राऽप्रवृत्तिरेवेति निर्विघ्नं सर्वाऽऽदेशत्वमिति बोध्यम्।

(समबलत्वादिति। मन्दप्रवृत्त्यैव तत्त्वमिति भावः)। अत एव 'हलः श्न' इति सूत्रे 'श्नः शित्त्वेनैव सिद्धे, शानचः शित्त्वमनुबन्धकार्ये स्थानित्वाऽभावस्य ज्ञापकम्, एवं च तातङि ङकारो न कार्य' इति भाष्ये उक्तम्।

अन्ये[1] तु 'ङिच्चे'ति नाऽपूर्वविधायकम्, किन्तु तत्र तत्र ङित्करणसामर्थ्यसिद्धाऽनेकाल्शित्त्वेतद्बाधाऽनुवादकम्। अनुवादफलन्तु ङित्त्वसामर्थ्यादर्थाऽन्तरकल्पनानिवृत्तिः। एवञ्च प्रकृते नाऽस्य प्रवृत्तिः। प्रवृत्तौ हि शास्त्रस्याऽपूर्वविधायकत्वाऽऽपत्त्या गौरवाऽऽपत्तिः। एतेन 'एतस्मात् ङित्त्वात् 'ङिच्चे'त्यस्याऽपवादत्वमेवाऽस्तु। गुणनिषेधादिकन्तु सति सर्वादेशत्वे एव फलम्। अन्त्याऽऽदेशत्वे तु अन्त्यादेशत्वसम्पादनेन चरितार्थस्य ङित्त्वस्य समुदायविशेषकत्वे मानाऽभावान्न तत्फलमि'ति परास्तम्। एवञ्च नैतद्विषयता 'ङिच्चे'त्यस्य। एतदेव ध्वनयितुं भाष्ये 'तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेश' इत्युक्तम्। तत्र 'विप्रतिषेधादि'त्यस्य 'परिभाषाप्रकरणविरोधादि'त्यर्थः[2]। यदि सावकाशङित्त्वेऽपि प्रवृत्तिः स्यात् तदाऽनुवादत्वाऽसम्भवेन परिभाषाप्रकरणविरोध इति भावः। यथा च परिभाषाणामनुवादत्वं तथाऽनुपदमेव स्फुटं भविष्यति। 'विप्रतिषेधे परमि'ति शास्त्रपरत्वे तु ङित्त्वस्य सावकाशत्वोक्तिरसङ्गता स्यात्। सूत्रसावकाशत्वमेव हि विप्रतिषेधे बीजम्। न ह्यस्य सूत्रस्य सर्वादेशाऽप्राप्तिविषये कचिच्चारितार्थ्यम्। अनवकाशत्वमेव हि बाधकत्वे बीजं दृष्टं, न त्वीदृशम्।

किञ्च विप्रतिषेधसूत्रपरवार्त्तिकव्याख्यानपरभाष्ये शास्त्रद्वयाऽवकाश-

---

१ 'अन्ये तु' इत्यारभ्य 'बाधापत्तिरिति परास्तम्' इत्यन्तः क. कुण्डलितः पाठः।

२ 'परिभाषात्वविरोधः' इति तु लघुशेखरे पाठः।

प्रदर्शनशैली भाष्यकारस्य दृश्यते । न चाऽत्र तथोक्तं भगवता । तस्मान्नेदं तच्छास्त्रपरम् । यद्यप्यन्यत्राऽनुवादत्वं शास्त्रस्य दोष उक्तस्तथाप्यस्य परिभाषात्वेन, तासां च मीमांसकोक्तनियमरूपत्वेनाऽत्र तत्त्वं गुण एव । यथा 'तस्मिन्नि'त्यादौ पक्षप्राप्तपूर्वत्वाद्यनुवादेन परादिनिवृत्तिरर्थात् । यथा च 'व्रीहीनवहन्ती'त्यादौ पक्षप्राप्ताऽवघाताऽनुवादेन नखविदलनादिनिवृत्तिः । यत्र तु 'अनेकाल्शि'त्यादौ नाऽनुवादत्वसम्भवः, तत्राऽगत्या विधित्वमेव मूलोक्तरीत्याऽस्तु ।

एतेन 'ठप्-यप्-अबादिष्वनन्यार्थपित्त्वेषु चरितार्थस्य 'अनुदात्तौ सुप्पिताव'त्यस्य 'जित्वरी'त्यादौ तुक्सम्पादनेन चरितार्थपित्त्वे करपि अन्तङ्गेण प्रत्ययाऽऽद्युदात्तत्वेनाऽनुदात्तत्वबाधाऽऽपत्तिरिति' परास्तम् ।

'तु'स्थानिकोऽयम् आन्तरतम्यात् अनुदात्त एव । 'हि'स्थानिकस्तु उदात्त एव ।

लोटो लङ्वत् । षष्ठ्यन्ताद्वतिः । 'लोट' इति उपमेये षष्ठीदर्शनात् । तदाह—तेनेति । अडाटौ तु नाऽतिदिश्येते । न हि तौ लङः क्रियेते, किन्तु लङि अङ्गस्येति भावः । तामादय इति । 'जुह्वतु' इत्यत्र 'सिजभ्यस्ते'ति, 'यान्तु' इत्यादौ 'लङः शाकटायनस्ये'ति जुस् तु न । 'लङः शाकटायनस्ये' त्यत्र 'नित्यं ङित' इत्यतो 'ङित' इत्यनुवृत्त्यैव सिद्धे, 'लङ्'ग्रहणं योगविभागेन नियमाऽर्थम्, 'लङेव यो लङ्, तस्य, न त्वाऽतिदेशिकस्ये'ति, न दोषः । योगविभागसामर्थ्याच्च जुस्मात्रनियमः । स्पष्टं चेदम् 'आत' इति सूत्रे भाष्ये । नन्वत्र लङ्ग्रहणाऽभावे 'अधुरि'त्यादौ लुङ्यपि परत्वाद्विकल्पाऽऽपत्तिः । न च 'आत' इति सूत्रेण नित्यतया जुस्विधानान्निस्तारः । एवं हि 'आत' इत्यस्य विध्यर्थत्वे'अभूवन्नि'त्यादौ जुस्भावाऽऽपत्तेरिति चेन्न । भाष्यप्रामाण्येन पूर्वविप्रतिषेधकल्पनादिति दिक् ।

---

'तामादय इति' इत्यारभ्य 'इति दिक्' इत्यन्तः ख. ङ. पाठः क. कुण्डलितः । मनोरमादिस्थत्वात् ।

'अड् गार्ग्यगालवयोरि'ति, 'अट: सर्वेषामि'ति च लङ एव विधीयमानावपि अडाटौ नाऽतिदिश्येते । अपृक्तसार्वधातुकाऽभावात् ।

[1]सकारान्तस्येति । 'ङिदुत्तमस्य सस्ये'त्यर्थस्तु न युक्तः । वैयधिकरण्याऽऽपत्तेः । 'भूयासमि'त्यादावतिव्याप्तेश्च । 'ङिदुत्तमस्ये'ति षष्ठीतत्पुरुषः ।

[2]एतल्लेखो 'भवानी'त्युत्तरमुचितः ।

सोऽपिच्चेति । 'अपित्'ग्रहणसामर्थ्यात् पित्त्वेनाऽनुदात्तसिपः स्थाने जायमानस्य हेः आन्तरतम्यात्प्राप्तमपि अनुदात्तत्वं न भवति । एतेन 'सेर्ह्यङ् चे'त्येवाऽस्त्वि'ति परास्तम् । भवतादिति । लुगपेक्षया परत्वात् हेस्तातङ् । 'अन्तरङ्गानपी'ति न्यायस्तु अनित्यत्वात् ।

मेर्निः । अमोऽपवादोऽयम् । स पिच्चेति । 'यस्य आडागमः स' इत्यर्थः । सामर्थ्यादिति । अन्यथा प्रक्रियालाघवाय नुग् एव विदध्यात् । स्पष्टं चेदं भाष्ये । भवानीति । ङित्त्वद्भावात्प्राप्तमपि 'इतश्चे'ति न । 'मो न' इति वक्तव्ये 'मेर्निरि'ति सूत्रणात् । एवं हेरपि बोध्यमित्याहुः ।

अनद्यतने । अयं बहुव्रीहिः । तेन अद्य, ह्यश्च अभुञ्ज्महो'त्यत्र व्यामिश्रे लुङेव । स्पष्टं चेदं भाष्ये ।

अडुदात्त इति । अन्तरङ्गत्वात्तिबादिषु कृतेषु, नित्यत्वाद्विकरणे कृते, विकरणाऽन्ताऽङ्गस्याऽडागमः ।' लकारप्रश्लेषेण 'लाऽवस्थायामडि'ति तु षष्ठे भाष्ये । नन्वत्र पक्षे 'अकरोदि'त्यादौ सतिशिष्टत्वात् 'उप्रत्यया‌ऽऽद्युदात्तत्वनिबन्धनाऽनुदात्तत्वाऽऽपत्तिः । उदात्तविधानं तु 'अभवदि'त्यादौ चरिताऽर्थमिति चेन्न । 'यमरमे'तिसूत्रे 'मा हि यासीदि'-त्यादौ अट्स्वरनिवृत्तये 'मा'शब्दं प्रयुञ्जानेन भगवता 'उदात्त' इति योगविभागेन 'असतिशिष्टोऽपि अट्स्वरो विकरणस्वरं, विकरणनिमित्तस्वरं च

१ 'सकारान्तस्येति' इत्यारभ्य 'षष्ठीतत्पुरुष' इत्यन्तः ख. ङ., पाठः । क. कण्डकितो, मनोरमास्थत्वात । २ इयं पङ्क्तिः क. नास्ति ।

बाधते' इति ज्ञापनान्न दोषः। एतेन 'नेर्विश' इति सूत्रस्थभाष्यादौ शब्दान्तरादपि प्राप्नुवतो विधेरनित्यत्वाऽऽश्रयणात् अट्विकरणयोर्द्वयोः अनित्ययोः परत्वादटि, ततो विकरणे, सतिशिष्टत्वात्स एव स्वरः प्राप्नोति। यदा च 'लस्ये'त्यादीनामेकवाक्यतया विधिपक्षः, तदा कर्त्राद्यर्थाऽपेक्षत्वेन आदेशानां बहिरङ्गत्वात्स एव दोष' इति परास्तम्।

इतश्च। 'परस्मैपदेषु' इत्यनुवृत्तस्य षष्ठ्येकवचनाऽन्ततया विपरिणामादाह—परस्मैपदमित्यादि। तच्च इकारेण विशेष्यते इति भावः।

यत्तु[1] प्राचा[2] 'परस्मैपदेष्विकारस्य लोप' इत्युक्तं, तत्र किं परस्मैपदे परे इत्यर्थः, उत 'तेषु विद्यमानस्ये'ति ?। नाऽऽद्यः, 'अभवदि'त्यादावव्याप्तेः। नाऽन्त्यः। 'भवेदि'त्यादौ इय इकारस्य[3] अन्तरङ्गत्वाद्गुणं बाधित्वा लोपाऽऽपत्तेः। 'अन्तस्ये'ति पदस्याऽपि अध्याहारे तु तदपेक्षया षष्ठ्या विपरिणाम एव न्याय्यः।

एतेन 'अतो य' इत्येव सूत्रं कार्यम्। 'लिङः सलोप' इत्यतो 'लोप' इत्यनुवृत्त्या आकारलोपेन सिद्धे, इकारोच्चारणसामर्थ्याल्लोपाऽभावः। 'आतो ङित' इति सूत्रे एव इय् कार्य' इति परास्तम्।

न च ईय् दीर्घादिरस्तु, एवं च नोक्तदोषः, तपरकरणादिति वाच्यम्। तदपेक्षया विभक्तिविपरिणामस्यैव न्याय्यत्वात्। 'परस्मैपदेषु' इत्यस्य तत्सूत्रेऽपि षष्ठ्यर्थत्वाच्च। 'अरुदितामि'त्यादौ दोषध्रौव्याच्च। 'इडि'ति वर्त्तमाने पुनरिड्ग्रहणादिट् इडेवेति नियमेन स्वसजातीयभावरूपस्यैव निवर्त्तनम्। अत एव 'यद्रूपाऽन्तरम् इटस्तदेव निवार्यते' इति कैयटः। निरूपितं चेदं सकलं भाष्यप्रदीपोद्द्योते।

---

१ 'यत्तु' इत्यारभ्य 'इत्याहुः' (१६१३ पृष्ठे, पं. १०) इत्यन्तः ख. ङ. पाठो मनोरमाशब्दरत्नधृतत्वात् क. कुण्डलितः।

२ अत्र 'प्राचा' इति मनोरमातः पूरितम्।

३ 'इय इकारेऽन्तरङ्गत्वात्' इति क. पाठः।

अत एव 'तस्थुष' इत्यादौ आङ्गसम्प्रसारणप्रयुक्ता इटो निवृत्तिः सिद्ध्यति । अन्यथा साऽपि नियमेन बाध्येत । किञ्च आङ्गमेव वार्यते इति स्पष्टं 'दीधीवेवीटामि'त्यत्र भाष्यकैयटयोः । अन्यथा 'अलावीदि'-त्यत्र दीर्घोऽनापत्तेः । 'सिज्लोप एकादेशे सिद्ध'इति वार्त्तिकेन प्रत्यासत्ति-न्यायाऽऽश्रयणमेव ज्ञाप्यते इत्युचितम् । 'अथवा असिद्धं दीर्घत्वमि'ति तु 'पिपठीः'शब्दमात्रविषयं समाधानाऽन्तरं भाष्ये । न त्वेतावता 'अनाङ्गस्याऽपि निवृत्तिरि'ति भ्रमः कार्यः । 'इट् इडेवे'ति नियमस्य'आर्द्धधातुकस्ये'तीट्मात्रविषयकत्वमि'त्यन्ये ।

परे तु 'अङ्गाऽपेक्षतया, प्रकृतिप्रत्ययविशेषाऽपेक्षतया च बहिरङ्गस्य इटोऽसिद्धत्वान्न लोपप्राप्तिररुदितामित्यादावि'त्याहुः ।

अभवदिति । न चाऽत्र 'आदेः परस्ये'त्यादेर्लोपाऽऽपत्तिः । अनुवृत्त'धातोरि'त्यस्य विहितविशेषणतया 'पर'शब्देन परस्य विधानाऽभावात्, इत्यादि निरूपितं परिभाषाप्रकरणे ।

विधिनिमन्त्र । द्योत्येषु वाच्येषु वेति । पक्षद्वयमपीदं भाष्ये स्पष्टम् । तत्र आद्ये उपपत्तिः—तेषां प्रत्ययाऽर्थत्वे, कर्त्रादीनां कालोदासीनेषु माङ्लुङादिषु चरितार्थानां, विध्यादयोऽर्था बाधकाः स्युः । एवं च लिङा कर्त्रादीनामनभिधानात् 'चैत्रेण पचेदि'त्यापत्तिः । द्विवचनं, शबादयश्च न स्युः । पुरुषव्यवस्था च न स्यात् । द्योत्यत्वे तु एषां विषयभावेन उपादानात्, कर्त्रादीनां च लादेशवाच्यत्वान्न बाधप्रसक्तिः ।

द्वितीये तु एषा उपपत्तिः—'लः कर्मणी'त्यस्य सर्वाऽन्ते करणेन सर्वलकारोद्देशेन तदर्थबोधनात्, न एतैस्तेषां बाधः, न च सामान्याऽपेक्ष-

१ इतोग्रे—'वर्त्तमाने लडादिषु तु न सावकाशता । तुल्यन्यायेन वर्त्तमानादीनामपि तत्र वाच्यतया तैस्तत्र बाधात्' इति ख. ङ. पाठः । क. पुस्तके तु अयं पाठो मसीलेपेन निःसारितः ।

प्रत्ययनियमपक्षे द्विवचनाद्यनुपपत्तिरेव ।' सजातीयाऽपेक्षप्रत्ययनियम-स्वीकारादिति ।

यत्तु 'विरोधाऽभावात्, लडादावपि वर्त्तमानत्वादीनां सत्त्वात्, निरवकाशत्वाच्च न कर्त्रादीनाम् एतैर्बाध' इति । तन्न । 'सत्यपि सम्भवे बाधनं भवती'ति भाष्यविरोधात् । 'माङि लुङि'त्यादिषु कालोदासीनेषु सावकाशत्वाच्च । न च धात्वर्थभावनायाः कालाऽऽकाङ्क्षासत्त्वेन तत्राऽपि कालस्य वाच्यत्वमस्ति, अत एव तेषां सर्वलकाराऽपवादत्वोक्तिरिति वाच्यम् । तथाऽपि शास्त्रेण तेषां तद्वाचकत्वाऽबोधनेन, तत्राऽस्य शास्त्रस्य चारितार्थ्यसम्भवात् । वर्त्तमानत्वादेः प्रत्ययवाच्यत्वेऽपि न विशेष्यत्वम् । कर्त्रादिवत्, प्रत्ययाऽर्थप्राधान्यस्यौत्सर्गिकस्याऽऽख्याते त्यागात् ।

तत्र आद्य एव ज्यायान् । 'पचे'त्यादौ प्रत्ययं विनाऽपि प्रवर्त्तना-प्रतीतेः । 'पञ्चभिर्हलैः कृषती'त्यादौ प्रवर्त्तनाया अपि धात्वर्थत्वस्य दृष्टत्वाच्च । न च अन्त्ये 'निमन्त्रयेय भवन्तमि'ति न स्यात्, निमन्त्रणाया उक्तत्वादिति वाच्यम् । प्रयोजकनिष्ठयोर्निमन्त्रणाऽऽमन्त्रणयोरन्ययोरेव अवश्यकर्त्तव्यत्वादिलक्षणयोः प्रत्ययाऽर्थत्वस्वीकारात् । अवश्यकर्त्तव्यत्वं च अर्हतैवेति, 'अर्हे कृत्यतृचश्चे'त्यनेन ईदृशे विषये लिङ्लोटौ बोध्यौ ।

सम्प्रश्नः = सम्प्रधारणम्, विचारः, 'तद्वा, इदं वा कर्त्तव्यमि'त्या-दिरूपः । **प्रार्थनम्** = याचनम्, इच्छाविशेषः ।

प्रवर्त्तनायामिति । प्रवर्त्तनात्वस्य विध्यादिचतुष्टयेऽनुस्यूतत्वादिति भावः । तदतिरिक्तांऽशस्य प्रकरणादिरूपप्रमाणाऽन्तरलभ्यत्वान्न शक्यत्वम् । न च प्रैषादिग्रहणं व्यर्थम् । निमन्त्रणादौ कृत्याऽभावाऽर्थं तस्याऽऽवश्यकत्वात् । लोट्विधानन्तु प्राप्तकालाऽर्थम् ।

१ 'यत्तु' इत्यारभ्य 'आख्याते त्यागात्' इत्यन्तः ख. ङ. पाठः क. कुण्डलितः । मनोरमादिस्थत्वात् ।

प्रवर्त्तना च प्रवृत्त्यनुकूलो व्यापारः । स च लोके लिङादिघटित-शब्दप्रयोगरूपः, वेदे लिङ्समभिव्याहारादिरूपः शब्दनिष्ठः । अयमेव 'शाब्दी भावने'त्युच्यते । शब्दरूपत्वात् । प्रेरणात्वेन च तस्य लोडादि-वाच्यता । तेन रूपेण तस्य शब्दवृत्तित्वात् 'शब्दनिष्ठ' इति चोच्यते । लिङ्सङ्ख्याद्यनन्वयित्वात् 'व्यापार'पदवाच्यश्च सः । प्रेरणात्वेन सविषयश्च । प्रवर्त्तकत्वं च (स्वातन्त्र्ये सति) तेन रूपेण तदर्थबोधकलिङाद्युच्चारयितृत्वादिकमेव । राजप्रेरितपदातेस्तादृशलिङाद्युच्चारयितृत्वेऽपि, प्रवर्त्तकत्ववारणाय 'स्वातन्त्र्ये सती'ति देयम् । पिशुनप्रेरिते राज्ञ्यपि स्वातन्त्र्यमस्त्येव ।

यत्तु इष्टसाधनत्वमेव स व्यापारः, तज्ज्ञानस्य प्रवृत्तिहेतुत्वात् । इष्टं च कचित्साक्षात्कर्त्तुरेव, कचित्परम्परया गुर्वादीनाम् । बालादेरनध्ययने गुर्वादितो लप्स्यमानताडनादिभयनिवृत्तिरेवेष्टमि'ति । तन्न । लिङादिशब्द-प्रयोगरूपस्य कर्त्तृप्रयोजकव्यापारस्य सत्त्वात् । 'पृच्छतु मां भवानि'त्यर्थे णिच् कस्मान्न भवती'ति 'हेतुमति चे'ति सूत्रस्थभाष्यशङ्कायां, 'द्रव्य-मात्रविषयप्रेरणायां लोट्, सक्रियप्रेरणायां णिजि'ति तत्समाधानभाष्यस्य चाऽसङ्गत्यापत्तेः । न हि 'णिचा इष्टसाधनत्वं बोध्यते' इति कस्याऽपि संमतम् । नचैवं लोडर्थप्रैषविषयस्य लोडन्तप्रयोगकाले कर्त्तत्वेनाऽवधारणा-ऽभावे कथं कर्त्तृप्रत्ययेन लोटाऽभिधानमिति वाच्यम् । 'पचे'त्यादेः 'पाक-कर्त्ता भवे'त्यर्थेन कर्त्तृत्वस्य विधीयमानतया, सम्भावितकर्त्तृतया विवक्षा-मात्रेण वा तदुपपत्तेः । हेतुसञ्ज्ञा तु 'तत्प्रयोजक' इति सूत्रस्वरसेन दृष्टसामर्थ्यतया निश्चितव्यापारवत्प्रयोज्यप्रयोजकस्यैव । अत एव भूतभविष्यत्प्रत्ययाः सङ्गच्छन्ते । तदुक्तं हरिणा—

'द्रव्यमात्रस्य तु प्रैषे पृच्छ्यादेर्लोट् विधीयते ।
सक्रियस्य प्रयोगस्तु यदा, स विषयो णिचः ॥' इति ।

---

१ 'तन्न । णिचो द्योतकत्वपक्षे लिङादिशब्दप्रयोगरूपस्य' इति ख. ङ. पाठः ।

किञ्च 'लोटा उक्तत्वात्प्रेषणस्य णिज् न भविष्यती'ति तदुत्तरभाष्यस्य तच्छङ्कायामेव समाधानाऽन्तरपरस्याऽसङ्गतिः। इष्टसाधनत्वस्य, तज्ज्ञानस्य वा प्रयोजकव्यापारत्वाऽभावेन णिजर्थत्वाऽभावात्।

यत्तु कैयटेन 'णिच्लोटोः पर्यायप्रसङ्ग' इति प्रश्नाऽऽशय उक्तः, स चिन्त्यः। पर्यायस्य 'लोटोक्तत्वादि'त्यनेन वारणाऽसम्भवात्। नाऽपि पर्यायः प्राप्नोति। लोट्प्रयोगरूपाया एव प्रेरणाया लोडर्थत्वेन, तदप्रयोगे तदभावात्। अत एव 'वक्तृधर्मः प्रेरणा लोडर्थः, अनियतकर्त्तृका णिजर्थ' इत्यभियुक्ताः। न च इष्टसाधनत्वाऽप्रतीतौ प्रवृत्त्यनुपपत्तिः। भ्रमादिदोषरहिताऽऽप्तोक्तया, प्रतिबन्धकाऽभावविशिष्टया च तया इष्टसाधनत्वाऽऽक्षेपसम्भवात्।

'न कलञ्जमि'त्यादितः 'कलञ्जभक्षणाऽभावः प्रेरणाविषय' इति बोधः। तेन च प्रतियोगिनि अनिष्टसाधनत्वाऽऽक्षेपः। उक्तविशिष्टाया अभावविषयप्रेरणायाः प्रतियोगिनि तदाक्षेपकत्वात्। अत एव सूत्रकारोऽपि 'विधि'पदार्थं तद्विशेषनिमन्त्रणादिभिर्विवृतवान्।

तत्र निमन्त्रणम्—श्राद्धादिभोजनाऽनुकूलो व्यापारः प्रयोजकनिष्ठः। 'निमन्त्रयते' इत्यादितस्तथा प्रतीतेः। न च इष्टसाधनत्वं, तज्ज्ञानत्वं वा प्रयोजकनिष्ठम्। तज्ज्ञापनं यद्यपि तन्निष्ठं, तथापि तन्न तव वाच्यम्। नाऽपि तज्ज्ञापनाऽनुकूलो व्यापारो मदुक्ताऽतिरिक्तः कश्चिदस्ति। तदुक्तं हरिणा—

'अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि।
तत्रैव लिङ् विधातव्यः, किं भेदस्य विवक्षया॥
न्यायव्युत्पादनार्थं वा, प्रपञ्चाऽर्थमथापि वा।
विध्यादीनामुपादानं चतुर्णामादितः कृतम्'॥ इति।

'न्याये'त्यस्य 'प्रागुक्तन्याये'त्यर्थ इति मञ्जूषायां विस्तरः। द्योतकतापक्षे प्रयोजकव्यापारोऽपि धात्वर्थः। तस्याऽपि पाकाऽनुकूलत्वात्।

तत्र फलाऽनुकूलत्वेन उपस्थितव्यापाराणां मध्ये प्रयोजकव्यापारस्य विषयितया विशेषणत्वेनाऽन्वयः। इतरेषान्तु विषयतया विशेष्यत्वेन। एवं द्विप्रकारकाऽन्वये लिङादयस्तात्पर्यग्राहकाः। तथा च 'एकाऽऽश्रयिका, प्रवर्त्तनाविषयीभूता, पाकाऽनुकूला क्रिये'त्यादिक्रमेण 'पचेदि'त्यादौ बोधः। अत एव भूवादिसूत्रे भाष्ये 'भवेदपि भवेदि'ति प्रयोगे 'प्रार्थनाविषयभवत्यर्थस्य सम्भाव्यमानभवत्यर्थकर्त्तृत्वमि'त्युक्तम्। एवं च आख्याते औत्सर्गिकं धात्वर्थप्राधान्यम् अनुगृहीतं भवति। अत एव प्रयोजकव्यापाराऽऽश्रयस्य न कर्त्तृत्वम्।

णिच्सनादौ तु प्रयोजकव्यापारस्य, प्रत्ययाऽर्थेच्छाया एव च प्राधान्यम्। औत्सर्गिकप्रत्ययाऽर्थप्राधान्यत्यागे मानाऽभावात्। 'पाचयिता' इत्यादौ णिजर्थादीनां प्राधान्यस्याऽऽवश्यकत्वाच्च। तत्र कारकविशिष्टे धात्वर्थे प्रवर्त्तनाविषयत्वबोधः। तदन्वयं विना धात्वर्थस्य निरूपयितुमशक्यत्वात्। विशिष्टक्रियाया एव प्रवर्तनाविषयत्वात्। प्रवर्त्तनाऽऽक्षिप्तम् अज्ञातज्ञाप्यत्वं, श्रेयःसाधनत्वं च विशिष्टे एव। धात्वर्थस्य प्राप्तत्वे तु तात्पर्यतो गुणांऽशे पर्यवस्यति। यथा—'दध्ना जुहोती'ति।

लिङादौ प्रवर्त्तना च वस्तुतो वर्त्तमानकालैव भासते। शब्दशक्तिस्वभावात्। धात्वर्थस्तु भविष्यत्काल एव। शब्दशक्तिस्वभावादेव। णिजन्ते प्रयोज्यप्र-योजकव्यापारौ सर्वकालयुक्तौ, द्वयोः समकालता चेति बोध्यम्। विधिलिङि उत्तमपुरुषस्तु न। स्वप्रवृत्तौ स्ववक्तृकप्रेरणा-

१ 'धात्वर्थप्राधान्यं तस्याऽवाच्यत्वपक्षेऽनुगृहीतं भवति' इति ख. ङ. पाठः।

२ 'निरूपयितुमशक्यत्वाच्च' इति ख. ङ. पाठः।

३ इतोऽग्रे—'न च द्योतकतापक्षे प्रवर्त्तनाऽऽश्रयस्याऽपि धात्वर्थव्यापाराऽऽश्रयत्वेन कर्त्तृत्वात्, तस्मिन् कर्त्तरि लकारः स्यादिति वाच्यम्। लिङाद्युत्पत्तेः प्राक् प्रवर्त्तनाया अप्रतिपादनात्, तदाश्रयस्य कर्त्तृत्वाऽभावेन, तमादाय 'लः कर्मणी'त्यस्याऽप्रवृत्तेः। लिङ् तु सूत्रद्वयाभ्यामेकवाक्यताऽऽपन्नाभ्यां विधीयते इत्यदोषः' इति ख. ङ. पाठः। क. कुण्डलितः।

ऽनुपयोगात् । इदमेवाऽभिप्रेत्य 'उत्तमपुरुषो विधिशक्तिप्रतिबन्धक' इति मीमांसकाः ।

यासुट् पर । सीयुटोऽपवादः । प्रत्ययसंनियोगशिष्टतयाऽन्तरङ्गत्वात् परस्मैपदानां तसादीनाम् आद्युदात्तत्वे कृते, पश्चात् यासुट् अस्वरकः, अनुदात्तो वा स्यादिति उदात्तवचनम् । न च कृते यासुटि 'तस्'गतं प्रत्ययादित्वं यासुट्यागतमिति आद्युदात्तत्वमपि तत्राऽऽयास्यतीति वाच्यम् । अन्तरङ्गत्वात्पूर्वं जातस्याऽन्यत्राऽऽनयनाऽयोगात् ।

न च 'आद्युदात्तश्चे'तिसूत्रोक्तभाष्यादिरीत्या परस्मैपदेषु लाऽवस्थायामेव यासुट् क्रियते । कृतेऽपि यासुटि 'धातोरि'त्यस्य विहितविशेषणत्वात् निर्दिश्यमानलस्यैवाऽऽदेश इति नोक्तं फलम् । अत एवाऽस्योदात्तग्रहणस्य आगमाऽनुदात्तत्वज्ञापकता भाष्योक्ता सङ्गच्छते इति वाच्यम् । लाऽवस्थायां यासुट्यपि, 'लस्य स्थाने आद्युदात्तः तस् भवती'त्येवमर्थात् उत्पद्यमानस्यैव आद्युदात्तत्वेन, तत्र 'यदागमा' इत्यस्या अनुवादविषयाया अप्रवृत्तेस्तेन यासुडुदात्तत्वस्य दुर्लभत्वात् ।

उदात्तग्रहणस्य आगमाऽनुदात्तत्वज्ञापकतापरभाष्यन्तु प्रौढ्येति निरूपितं भाष्यप्रदीपोद्द्योते । 'तस्मिन्नि'ति सूत्रसत्त्वेन, विषयसप्तम्या अयुक्तत्वेन, ज्ञापकाऽसम्भवात् । किञ्च ज्ञाप्याऽर्थस्य फलमपि न, प्रत्ययाऽऽद्युदात्तत्वादावन्तरङ्गत्वाज्जाते, पश्चादागमे जातेऽपि, विशेषस्वरविधायकाऽभावे, शेषनिघातेन आगमाऽनुदात्तत्वसिद्धेः ।

---

१ इतोऽग्रे—'एवं णिचोऽपि द्योतकत्वं बोध्यम् । 'अभिषावयती'त्यादौ अभेर्ण्यर्थं प्रति विशेषणत्वे न षत्वम्, किन्तु प्रकृत्यर्थविशेषणत्वे एवे'त्यादिव्यवहारस्तु द्योत्याऽर्थमादायैव । 'उपसर्गात्सुनोती'त्यादौ प्रत्यासत्त्या, अन्तरङ्गत्वेन चेतराऽनपेक्षसुनोत्यर्थोपसर्गस्यैव ग्रहणादित्याहुः' इति ख. ङ. पाठः । क. कुण्डलितः ।

न च 'अनुदात्तं पदमि'त्यस्य परिभाषात्वेन, तदेकवाक्यतया, तत्प्रवृत्तिकाले संनिहितानामेव तेन निघात इति, पश्चात्प्रवृत्तानां निघाते मानाऽभाव इति वाच्यम्। तत्सूत्रस्थ'पद'ग्रहणस्य परिमाणार्थऽत्वेन, 'यावतः पदत्वं भावि तस्य, यावच्च पदत्वं भावि तावत्[1] संनिहितानां सर्वेषां शेषनिघात' इत्यर्थात्[2]। अत एव 'चिनुत' इत्यादौ श्नोरनुदात्तत्वसिद्धिः। 'चिनु' इत्यादौ त्वकृतव्यूहपरिभाषया तदप्रवृत्तिरिति दिक्। स्पष्टं चेदम् 'आद्युदात्तश्चे'त्यादौ भाष्ये।

यत्तु 'अनुदात्तादेश्चे'त्यन्विधायकसूत्रे भाष्ये 'यदैव द्वितीयस्वर-प्रादुर्भावस्तदैव प्राग्व्यवस्थितस्य निघात' इत्यर्थकं भाष्यं, तत्तु 'व्यवस्थितस्य तत्समकालमेव निघातो, न तु विलम्ब' इत्यभिप्रायकम्। 'अलावीदि'त्यादौ तु सिचः चित्त्वेन उदात्तत्वान्न निघात इति दिक्।

यद्यपि यासुटो ङित्त्वमनेनोक्तम्, तथापि 'अवयवेऽचरितार्थं लिङ्गं समुदाये विशेषणमि'ति न्यायेन समुदाये ङित्त्वं बोध्यम्।

ङित्त्वोक्तेरिति। अत्र यद्वक्तव्यं तत् 'टिड्ढे'ति सूत्रे निरूपितम्।

सुट्तिथोः। तकारात् इकार उच्चारणाऽर्थः।

लिङः स। 'से'ति लुप्तषष्ठीकम्। 'रुदादिभ्य' इत्यतः 'सार्वधातुके' इत्यनुवर्त्तते। इति सकारद्वयेति[3]। लक्ष्यभेदेन पुनः प्रवृत्त्या। अवयवा-ऽवयस्य समुदायाऽवयवत्वेन सुटोऽपि लिङ्भक्तत्वादिति भावः।

आशीर्लिङीति। 'भूयास्तामि'त्यादौ।

नन्वत्र द्वित्वेन सिद्धम्। व्यञ्जनपरस्य एकस्य, अनेकस्य वा उच्चारणे विशेषाऽभावाच्च। सुटि कृते, झल्परसंयोगाऽऽदित्वेन यासुटः सस्य लोपाच्च। अत आह—स्फुटतरन्विति। 'एधिषीष्टे'त्यादाविति भावः।

---

१ तावच्च संनिहितानाम्' इति ख. ङ. पाठः।

२ 'सर्वेषां विशेषस्वररहितानां शेषनिघातः' इति ख. ङ. पाठः।

३ इतोऽग्रे—'युगपत्प्रवृत्त्यैवेति बोध्यम्' इति ख. ङ. पाठः।

यलोप इति। असिद्धपरिभाषाया अनित्यत्वादिति भावः। सार्वधातुकेति किम्?। 'चिकीर्ष्यात्'। तदभावे हि मध्येऽपवादन्यायेन अतो लोप एव बाध्येत इति, अत्रैव स्यात्। 'भवेदि'त्यादौ तु परत्वाद्दीर्घः स्यात्।

इति प्राप्ते इति। 'या'शब्दाऽऽकारेणेति भावः। न च आगमे आगमविशिष्टस्यैवाऽर्थवत्त्व-प्रत्ययत्वयोः स्वीकारात्कथमत्र पररूपम्, अर्थवत्परिभाषया, 'प्रत्ययाऽप्रत्यययोरि'ति परिभाषया च उसः अर्थवतः प्रत्ययस्यैव ग्रहणादिति वाच्यम्। 'का उस्रा कोस्रा' इत्येतद्व्यावृत्त्यर्थं क्रियमाणाऽपदान्तादित्यनेन उस्विषये परिच्छेदकन्यायानाम् अप्रवृत्तिज्ञापनात्। अन्यथा लाक्षणिकत्वात् अत्र प्राप्तिरेव न। वसेर्हि 'उस्रा' इति रूपम्।

नित्यत्वाच्चेति। एकाऽऽदेशस्य पूर्वोऽन्तत्वेन ग्रहणादिति भावः। प्राप्तिमात्रेणैव नित्यत्वम्, न तु रूपसिद्धिरिति भ्रमितव्यम्। अन्तरङ्गत्वादिति। प्रत्ययमात्राऽपेक्षत्वादिति भावः। इयादेशस्य तु आङ्गत्वेन प्रकृति-प्रत्ययोभयसम्बन्ध्यपेक्षत्वेन बहिरङ्गत्वम्।

व्याख्येयमिति। इदं च 'विप्रतिषेध'सूत्रे भाष्ये स्पष्टम्। वर्णादाङ्गपरिभाषयाऽप्येतत्सिद्ध्यतीत्याहुः।

सन्धिरार्ष इति। 'आने मुक्'सूत्रे भाष्ये-'अतो या इय' इति व्यस्तपाठ एव दृश्यते। अधिकम् 'एत्येधती'त्यत्रोक्तम्।

आर्द्धधातुकेति। 'लङः शाकटायनस्यैवे'ति सूत्रात् एवकाराऽनुवृत्तिरत्र बोध्या। एतेन 'अनेन आर्द्धधातुकत्वेऽपि, एकसंज्ञाऽधिकारादन्यत्र संज्ञानां समावेशसत्त्वात्, सार्वधातुकसंज्ञाऽपि स्यादि'त्यपास्तम्।

क्टिदाशिषि। ङित्त्वेनैव सिद्धे कित्त्वम् 'इज्यादि'त्यादौ सम्प्रसारणाऽर्थम्, 'जागर्यादि'त्यादौ गुणाऽर्थं च। स हि ङिति प्रतिषिध्यते। ङित्त्वं चेह विशेषविहितेन कित्त्वेन बाध्यते। अत एव 'क्यासुट्' इति नाऽसूत्रि। तथा हि सति आतिदेशिकेनाऽनेन कित्त्वेन औपदेशिकङित्त्वस्य

बाधाऽनापत्तिः । सलोप[1] इति । 'भूयादि'त्यत्र पदान्तसंयोगाऽऽदित्वेन उभयोर्लोप इत्यर्थः । पदान्तसंयोगादिलोपस्याऽपवादत्वान्न संयोगाऽन्तलोपः । 'झलो झली'त्यस्य तु नाऽत्र प्राप्तिः, 'उदः स्थे'[2]ति ज्ञापकात् सिच एव तेन लोपात् । 'भूयास्तामि'त्यादौ झल्परसंयोगादित्वेन यासुटः सस्य लोप इति बोध्यम् ।

क्ङिति च । इह चर्त्वनिर्दिष्टो गकारोऽपि बोध्यः । तेन 'जिष्णुरि'ति सिद्धम् । 'ग्लाजी'ति ग्स्नुः । न चाऽयं किदेवेति वाच्यम् । 'स्थास्नुरि'त्यत्र इत्वाऽऽपत्तेः । न चैवं 'ग्लाजिस्थश्चे'ति चकारेण 'भू'धातोः प्रत्यये, 'भूष्णुरि'ति इण्निषेधो न स्यात् । 'श्र्युकः किती'त्यत्राऽपि चर्त्वेन गकारप्रश्लेषादित्याशयेनाऽऽह—गित्किन्ङिदिति । निमित्ते इति । निमित्तत्वलाभप्रकारश्च 'तस्मिन्निति निर्दिष्टे' इति सूत्रे निरूपितः । अत एव 'छिन्नमि'त्यादौ निषेधसिद्धिः । अत एव क्नोः कित्करणं चरिताऽर्थम् ।

इग्लक्षणे इति । 'इक' इत्येवं विहिते इत्यर्थः । पदोपस्थितिपक्षे अनुवृत्तस्य शब्दपरत्वात् एतदर्थलाभः । यद्वा निपातानामनेकाऽर्थत्वेन 'च'शब्दस्य इत्यर्थकत्वात् एतल्लाभः । तत्फलन्तु 'लैगवायनः' । ओर्गुणस्य निषेधो न ।

भूयादिति । इह 'स्कोरि'ति लोपस्याऽसिद्धत्वात् तकारस्य संयोगान्तलोपः प्राप्तः, पदान्तसंयोगाऽऽदिलोपेनाऽनवकाशेन बाध्यते । संयोगादिलोपस्याऽसिद्धत्वात् हल्ङ्यादिलोपो नाऽऽशङ्क्यः । सुट्लोप[3]-

1 'सलोप इति । 'भूयास्तामि'त्यत्र झल्परसंयोगादित्वेन सुट्सकारस्य । 'भूयादि'त्यत्र पदान्तसंयोगादित्वेन' इति ख. ङ. पाठः । क. ग. तु अयं पाठोऽनुपदमेव अग्रे दृश्यते ।

२ 'उदस्थादिति ज्ञापकात्' इति सर्वत्र पाठः । स च शोधितोऽस्माभिः । सूत्रे तथा पाठाऽभावात् ।

३ अयं क. पाठः । ख. ङ. तु पूर्वमेवाऽयं पाठः । 'सुट' इति च तत्र विशेषः ।

स्याऽपि असिद्धत्वेन, आगमविशिष्टस्याऽपृक्तत्वविरहात्। आगमे कृते तद्रहितस्य प्रत्ययत्वाऽभावेन, 'त्'मात्रस्याऽपृक्तत्वाऽभावाच्च। 'हल्ङ्याप्'-सूत्रे 'प्रत्ययेनाऽङ्गाऽऽक्षेप' इति पक्षे हलन्तादङ्गात्परत्वाऽभावाच्चेति दिक्।

भूयास्तामिति। अन्तरङ्गत्वात्तामादिषु यासुट्। अन्यथा समुदायस्याऽनिर्दिश्यमानत्वात्, निर्दिश्यमानस्य च तेन व्यवहितत्वान्न ते स्युः। ध्वनितं चेदं 'पादः पदि'ति सूत्रे भाष्ये। 'धातोर्विहिततसादीनामि'त्यर्थे तु पूर्वं यासुट्यपि, न क्षतिः।

माङि लुङ्। 'माऽस्तु' इत्यादौ तु निषेधाऽर्थो 'मा'शब्दो, न माङिति न दोषः।

च्लि लुङि। इकार उच्चारणाऽर्थः। यत्तु 'इदित्करणं 'मन्त्रे घसे'ति-सूत्रे लिङ्-लिट्-च्लीनां सामान्यग्रहणाऽविघाताऽर्थम्। अन्यथा एकाऽनुबन्धकपरिभाषया अस्यैव ग्रहणं स्यात्, न लिङ्लिटोरि'ति। तन्न। 'च्लि'-प्रत्याख्यानपरभाष्यविरोधात्। 'मन्त्रे घसे'ति सूत्रे चङ्क्सिचां ग्रहणं विधाय, च्लिप्रत्ययो न कार्यः। यथान्यासेऽपि 'च्लि लुङि'-'च्लेः सिच्'-'मन्त्रे घसे'तिसूत्रेषु ग्रहणत्रयस्य सत्त्वेन साम्यादि'त्युक्तम्। एतत्प्रामाण्येन हि मन्त्रे लिङ्लिटोर्लुगुदाहरणाऽभावस्य कल्पनेन, लिङ्लिटोस्तत्र ग्रहणे फलाऽभावात्।

न चैवम् 'आम'इत्यत्र 'लि'पदाऽननुवृत्तौ 'लिटो लुगि'त्यर्थो न लभ्येतेति वाच्यम्। तदनुवृत्तौ मानाऽभावात्, फलाऽभावाच्च। 'विदाङ्कुरु' इत्यादौ लोडादीनां लोपाऽर्थम् उपायाऽन्तरकल्पने गौरवाच्च। न च तत्र 'लि'ग्रहणाऽननुवृत्तौ परत्वात्, अन्तरङ्गत्वाच्च आदेशेषु कृतेषु लुक् स्यात्। ततश्च 'कारयामि'त्यस्य प्रत्ययलक्षणेन तिङन्तत्वात् 'देवदत्तः कारयाञ्चकारे'त्यत्र 'तिङ्ङतिङ' इति निघातः स्यादिति वाच्यम्। 'येन नाऽप्राप्ति'-न्यायेन लुक आदेशाऽपवादत्वात्। अन्तरङ्गानपी'ति न्यायाच्च। स्पष्टं चेदं

'कृन्मेजन्त'सूत्रे भाष्ये ।

नन्वेवं तर्हि च्लिविधानं सूत्रकृतः किमर्थमिति चेत् । 'शल इगुपधादि'ति सूत्रे 'अनिट' इत्यनेन च्लिं विशेषयितुं तद्विधानम् । अन्यथा हि 'अनिट' इति धातोरेव विशेषणं स्यात् । ततश्च 'अघुक्षदि'ति न सिद्ध्येत् । न च ऊदित्त्वात् इड्विकल्पे अनिडेवाऽयम् । तर्हि नित्यमेव क्से 'अगूहीदि'ति न सिद्ध्येत् । च्लेर्विशेषणे तु 'यदा च्लिरनिट्, तदा क्सः, यदा सेट्, तदा सिजि'ति सिद्धमिष्टमिति सूत्रहृदयम् । च्लेरित्यपि सिच् इड्रहितस्यैव । 'धातोरि'त्यस्याऽसम्बन्धेन, विहितविशेषणत्वेन वा निर्दिश्यमानस्यैव तत्प्रवृत्तेः । चित्त्वमस्य स्वराऽर्थं वक्ष्यते ।

शबाद्यपवाद इति । आदिना श्यनादयः । 'अपवाद'शब्दोऽत्र 'बाधक'मात्रपरः । तत्र शप्बाधनम्-अपवादत्वेन, श्यनादीनां तु अन्तरङ्गत्वादिनेति बोध्यम् । इचाविताविति । तत्र इदित्त्वे प्रयोजनम् 'अमंस्ते' त्यत्र'अनिदितामि'त्युपधालोपाऽभावः । नचैवं नुमापत्तिः । 'गोः पादान्ते' इत्यतो'ऽन्ते' इत्यनुवर्त्त्य अन्तेदित इति व्याख्यानात् । इदं च प्रथमतृतीयभाष्ययोः स्पष्टम् । 'इदितो नुमि'ति सूत्रे तु सच्-तासावनिदितौ वक्तुं शक्यौ । अतो न नुम् । 'हनः सिजि'ति कित्त्वविधानाच्च न 'अमंस्ते'-त्यादौ लोप' इत्युक्तम् । चित्त्वं तु 'मा हि लावीदि'त्यत्र इटः प्राप्तमागमाऽनुदात्तत्वं बाधितुम् । ननु च्लेश्चित्त्वसामर्थ्यादेव तद्बाधः सिद्धः । न च तत् 'मन्त्रे घसे'तिसूत्रे सामान्यग्रहणाऽविघाताऽर्थम् । पूर्वोक्तभाष्य-विरोधादिति चेत् । सत्यम् । अन्यतरस्याऽकर्त्तुं शक्यत्वात् ।

गातिस्था । व्यवहितोऽपि लुगेव अत्र सम्बध्यते, व्याख्यानात् ।

---

१ 'कृन्मेजन्त' इति सूत्रे भाष्ये' इति ख. ङ. पाठः ।

२ इतोऽग्रे—'इदितो नुमि'ति सूत्रे तु अस्याऽनिदित्त्वमुक्तम् । 'हनः सिजि'ति कित्त्वेन 'सिजन्ताऽङ्गस्य उपधालोपो ने'ति ज्ञापनादिष्टसिद्धेरिदमसाधारणं न प्रयोजनमिति, सच अपि वक्तुं शक्य इति तदाशयः' इति ख. ङ. पाठः ।

गापाविति । व्याख्यानादिति भावः । किञ्च 'गाती'ति श्तिपा विकरण-शून्यस्य निर्देशात् इणादेशो गृह्यते । यद्यपीदं गाऽऽदेशस्याऽनुकरणं, तथापि 'प्रकृतिवदनुकरणमि'ति स्थानिवद्भावाऽतिदेशात् श्तिप्, शप्लुक् च । न च 'गै शब्दे' इत्यस्य आर्द्धधातुके कृताऽऽत्वस्या-ऽप्यनुकरणसम्भवात्, ततः श्तिपि निर्देशः सन्दिग्ध इति वाच्यम् । 'स्था'साहचर्येण स्वाभाविकाऽऽकारान्तस्यैव ग्रहणात् । 'गा-मा-दा-ग्रहणेषु अविशेष' इति तु नेह प्रवर्त्तते, लक्ष्याऽनुसारेण अनित्यत्वाऽऽश्रयणात् । तस्याः केवल'गा'ग्रहणविषयत्वाच्च । 'लुकाऽयं निर्देश'इत्यत्राऽपि व्याख्या-नमेव शरणम् । पिबती इति । 'लुग्विकरणाऽलुग्विकरण'परिभाषयेति भावः । 'पै शोषणे' इत्यस्याऽपि न ग्रहणम्, लाक्षणिकत्वादिति बोध्यम् ।

भूसुवोः । यद्यपि अलुग्विकरणत्वात्सुवति-सूयत्योर्ग्रहणमुचितम्, तथाऽपि तयोः तिङो विकरणेन व्यवधानान्न ग्रहणम् । एतेन 'निरनुबन्ध-कत्वात्सुवतेरेव ग्रहणं स्यादि'त्यपास्तम् । न च यङ्लुकि व्यवधानाऽभाव इति वाच्यम् । तस्य च्छान्दसत्वात् । अतः षूङोऽदादेर्ग्रहणम् । 'सु'इति आदादिको ह्रस्वान्तस्तु न गृह्यते । पूर्वनिपातवैपरीत्याऽऽपत्तेः । 'भू'साहचर्याच्च ।

इदं च भुवो यङ्लुकि न । 'बोभूतुतेतिक्ते' इत्यत्र 'यङ्लुगन्तस्य चेत् गुणनिषेधो 'बोभूत्वि'त्यत्रैवे'ति नियमात् । सूतेस्तु भवत्येव । 'बोभवीती'त्यर्थं नियम' इति भाष्यात् । अन्यथा हि 'योगाऽपेक्षं ज्ञापकमि'त्येव वदेत्-यदि सूतेर्यङ्लुगस्ति ।

अत्र 'पिती'त्यनुवृत्तौ, अननुवृत्तौ वा फलदोषयोरभावेन तदनुक्तिः ।

अस्तिसिचो । न च लुप्तासिचः, कृत'भू'भावादस्तेश्च परस्य इडा-गमाऽऽपत्तिः । 'अस्तिसिचोऽपृक्ते' इति द्विसकारको निर्देश' इति भाष्येण समाहितत्वात् । स च सकारप्रश्लेषो न 'अस्ती'त्यत्र । 'असस्' इति समुदायस्याऽधातुतया, तिप्प्रत्ययाऽनापत्तेः । भाष्ये 'सिचोऽपृक्ते' इत्यं-शस्य वैयर्थ्याऽऽपत्तेश्च । किन्तु 'सिचस्' इत्यनन्तरं सकारः प्रश्लिष्यते ।

स च लुप्तपञ्चम्यन्तः। 'अस्ती'त्यस्य पृथक्पदत्वान्न न टच् । नाऽपि पूर्वनिपाते दोषः। (समासान्तविधेः, पूर्वनिपातप्रकरणस्य चाऽनित्यत्वाद्वा न दोषः। इतरेतरयोगे सौत्रमेकवचनं वा द्विवचनस्थाने)।

तस्य च अस्ताविव, सिच्यपि सम्बन्धः, अविशेषात्। एवं च 'सान्तात् सिच' इत्यर्थस्याऽपि प्राप्तेर्लुप्तात्सिचोऽपि तदभावः। ननु तच्छ्रवणाऽऽपत्तिः, संयोगाऽन्तस्य पदत्वाऽभावेन, संयोगाऽन्तलोपस्य दुर्लभत्वात्, अत एव न संयोगादिलोपोऽपीति[2] चेन्न। सौत्रलोपस्य सर्वेनाऽदोषात्। 'द्विसकारको निर्देश' इति तु पदपर्यालोचनकालाऽपेक्षया। इदं चोक्तव्याख्यानेऽप्यावश्यकम्। संहितायां 'स'द्वयस्य तत्पक्षेऽप्यभावात्।

एवं भाष्याऽऽरूढेऽर्थे सत्यपि, प्रकाराऽन्तरमपि संभवतीत्याह—

१ अयं ख. ङ. पाठः। क. ग. तु नास्ति।

२ 'इति चेन्न। द्वयोः सकारयो रुत्वे कृते 'अतो रोरि'त्यनेन विधेयविशेषणस्य विवक्षितत्वात्, द्वयोरपि एक उकारो भविष्यति, [1]व्याकृतिनिर्देशवत् 'रोरि'ति जातिपरनिर्देशेन अतः परत्वस्य, पूर्वत्वस्य च सम्भवात्। न च 'द्वयोः सकारयोरेक एव रुरि'ति वक्तुं युक्तम्। 'स्' इत्यस्य भिन्नपदत्वेन, सत्वजात्यन्तस्य पदत्वाऽभावेन रुत्वाऽप्राप्तेः। जातिपरनिर्देशे तदाश्रयादेव तज्जात्याश्रयस्य सर्वस्य सिद्धत्वं सुलभम्। एतेन 'जातिनिर्देशेऽपि व्यक्तिद्वारा स्थानित्वं वाच्यम्, तत्र एकव्यक्तिमात्रस्य सिद्धत्वज्ञापनेन, 'शिवोऽर्च्य' इत्यादौ चारितार्थ्येन, व्यक्त्यन्तरे तज्ज्ञापने न मानमि'ति परास्तम्। 'परत्वात् 'हशि चे'ति आद्यस्यैव उत्वं स्यादि'ति तु न शङ्क्यम्। आश्रयात्, 'पूर्वत्राऽसिद्धमि'तिसूत्रस्थ'पूर्व'ग्रहणेन 'रोरि'ति पदाऽग्रहणेऽपि, हशपदं प्रति असिद्धत्वस्य दुर्वारत्वात्। यद्वा सस्य सौत्रो लोपः' इति ख. ङ. पाठः। क. तु कुण्डलितः, मनोरमादिस्थत्वात्।

1 'व्याकृतिनिर्देशवत्' इति क. नास्ति।

सिच्च अस् चेति। भत्वमिति। तेन कुत्वजश्त्वे न।

विद्यमानादिति। विद्यमानत्वं च सर्वाऽऽदेशेन अनपहृतत्वम्। अत एव 'आसीदि'त्यादौ न दोषः। परे तु 'अस्ति-सिच' इति समाहारद्वन्द्वे टजन्तं लुप्तविभक्ति। ततः 'स्' इत्यपि तथैव। तेन 'सान्तास्सिचोऽस्तेश्चे'त्यर्थान्न दोष' इति वदन्ति। इति प्राप्ते इति। प्रत्ययलक्षणेन प्राप्तिः।

आतः। सिज्ग्रहणम् अनुवर्त्तते। 'सिच, आकारान्तधातोश्च परस्य झेर्जुसि'ति वाच्याऽर्थः। तत्र प्रत्ययलक्षणेन सिचः परत्वम्। आकारान्तात्तु श्रुत्या। इदं च सिज्लुक्येव सम्भवतीत्याह—सिज्लुकीति। पूर्वसूत्रेण सिद्धे नियमोऽयमित्याह—आदन्तादेवेति। विपरीतनियमस्तु न। व्याख्यानात्। 'धातोरि'तिसूत्रस्थम् अत्र सिच्पदाऽननुवृत्तिपरं भाष्यन्तु प्रौढिवादः। 'च्लि लुङि' 'आत' इत्यादिसूत्रस्थभाष्यविरोधात्।

न माङ्योगे। 'लुङादिषु यत्प्रागुक्तमि'ति समुदायाऽपेक्षणात् उभयोरपि निषेध इत्याह—अडाटाविति।

लिङ्निमित्ते। 'आदिना 'आशंसावचने लिङि'त्यपि गृह्यते' इति केचित्। अतिपत्तिः = अनभिनिर्वृत्तिः। उदाहरणे सुवृष्टिभवन-सुभिक्षभवनयोर्हेतु-हेतुमतोर्भविष्यत्कालयोरनभिनिर्वृत्तिः इतो वाक्याद्गम्यते। प्रमाणाऽन्तराच्च तयोरतिपत्तिं वक्ता अवगत्य वाक्यं प्रयुङ्क्ते। धातोः प्रागेवेति। न परतो, नाऽपि व्यवहिता इति भावः। अत एव 'छन्दसि परेऽपि' 'व्यवहिताश्चे'ति सार्थकम्। इदं च 'अनुकरणं चाऽनितौ'तिसूत्रे निरूपितम्।

[3]आनि लोट्। 'नी'त्येव सिद्धे 'आनी'ति कथनमागमशास्त्राऽनित्यत्व-

१ इतोऽग्रे—'कर्मधारय इति। अत एव श्तिपा निर्देशश्चरिताऽर्थः' इति ख. ङ. पाठः। क. कुण्डलितः।

२ इतोऽग्रे—'हलः किम्?। ऐधिषीति। एतेन 'अपृक्तस्य सार्वधातुकस्ये'ति व्याख्यानं परास्तम्। सार्वधातुकग्रहणव्यावर्त्याऽभावाच्च' इति ख. ङ. पाठः।

३ 'आनि लोट्' इत्यारभ्य 'ध्वनितं चेदमत्रैव भाष्ये' (११२७ पृष्ठे १८ पङ्क्तौ) इत्यन्तः ख. ङ. पाठः। क. कुण्डलितः। मनोरमादिस्थत्वात्।

बोधनाऽर्थम् । तेन 'तर्त्तुमि'त्यादि सिद्धम् । न च 'नि लोडि'ति न्यासे 'प्रभवाणी'त्यत्र णत्वाऽनापत्तिः। 'यदागमा' इति न्यायात्, आगमविशिष्टस्याऽर्थवत्त्वाच्च तत्र णत्वसिद्धेः। न चाऽत्र न्यासे उपसर्गसंज्ञक'नि'शब्दस्य ग्रहणाऽऽपत्तिः। लोट्त्वाऽभावात् । लोड्ग्रहणप्रत्याख्यानेऽपि 'नेर्गदे'त्युत्तरसूत्रे पुनर्नेर्ग्रहणाच्च । न च लोड्ग्रहणप्रत्याख्याने, आकाराऽभावे, 'पू'धातोः क्तिनि, निष्ठावद्भावेन नत्वे, 'प्रपूनिरि'त्यत्राऽपि स्यात्, अर्थवत्त्वात्, तदन्तं प्रत्युपसर्गत्वात्, प्रत्ययत्वाच्चेति वाच्यम्। लाक्षणिकत्वात्।

केचित्तु 'आगमशास्त्राऽनित्यत्वे ज्ञापितेऽपि कथमस्य चारितार्थ्यम्, आगमशून्यप्रयोगाऽप्रसिद्धेरि'त्याहुः ।

प्रभवाणीति । न च 'आनि'शब्दस्य क्रियावाचकत्वाऽभावेन कथं प्रशब्दस्य तं प्रत्युपसर्गत्वम् । तदन्तसमुदायं प्रति उपसर्गत्वेनाऽक्षतेः ।

'लोडि'त्येव तु न सूत्रितम् । प्रत्ययग्रहणपरिभाषया 'लोडन्तस्ये'त्यर्थे, 'प्रनक्तु' इत्यादावतिव्याप्तेः । लोट्ग्रहणं तु व्यर्थम् । 'प्रवपानी'त्यादौ 'वपा'शब्दस्य क्रियावाचकत्वाऽभावेन, तदन्तं प्रत्यपि उपसर्गत्वाऽभावात्, अर्थवत्त्वाऽभावाच्च, 'प्रत्ययाऽप्रत्ययोरि'ति परिभाषया वारणाच्च ।

एतेन 'निः = आ समन्तात् नयति तत्कुलम् 'निरानि' इत्यादौ णत्वव्यावृत्त्यर्थं लोट्ग्रहणम्, उपसर्गत्वात्, अर्थवत्त्वाच्चे'ति परास्तम्। ध्वनितं चेदं सर्वमत्रैव भाष्ये ।

दुर इति । सान्तस्याऽप्ययं निषेधः । निरूपितं चैतत्संज्ञाप्रकरणे एव । यद्यप्यत्र वार्त्तिके 'सु'शब्दोऽपि पठितः, नुम्विधिश्च, तथाऽपि तयोः फलाऽभावादनुपन्यासः । स्पष्टं चेदं 'न सुदुर्भ्यामि'ति सूत्रे कैयटे, 'गतिश्चे'ति सूत्रे भाष्येऽपि । यद्यपि भाष्ये षत्वविषये सोरेवोदाहरणं दत्तम्, 'सुस्तुतम्' 'सुसिक्तमि'ति । 'सुः पूजायामि'ति कर्मप्रवचनीयत्वेन

---

१ 'पुनर्नेर्ग्रहणात्तद्ग्रहणम्' इति ख. ङ. पाठः ।

२ 'आडागमशून्यप्रयोगाऽप्रसिद्धेरित्याहुः' इति ख. ङ.पाठः ।

उपसर्गत्वबाधात् नैतत्प्रयोजनमि'ति चोक्तम्। तथाऽपि तदुदाहरणोपलक्षणंबोध्यम् । सोरतिशयाऽऽदिरूपेऽर्थोऽन्तरे उपसर्गत्वमिष्यते एव, उक्तभाष्यात्, 'सुषिक्तं किं तवाऽत्रे'ति-स्पष्टं कैयटादौ।

अन्तरिति। 'अन्तरपरिग्रहे' इति सूत्रे वार्त्तिकमिदम्। एवं च 'अन्तर्हण्यादि'त्यत्र 'हन्तेरत्पूर्वस्ये'त्येव सिद्धौ, 'अन्तरदेशे' इति न वक्तव्यमिति केचित्। 'देशप्रतिषेधाऽर्थं तदावश्यकमि'त्यन्ये। 'अयनं चे'त्युत्तरसूत्रमप्येवम्। 'कृत्यच' इति सिद्धेः। 'देशे क्षुभ्नादित्वाण्णत्वाऽभाव' इति तु तत्राऽपि पाठस्य एवमेव कर्त्तव्यत्वाद्यत्किञ्चित्। यत्तु 'श्रच्छब्दस्याऽङि' इति पठ्यते, तत्तु 'प्रज्ञाश्रद्धे'ति निपातनात्तताऽर्थम्।

शेषे विभाषा। 'नेर्गदनदे'ति सूत्रोक्तेभ्योऽन्यः—शेषः। 'अकखादावि'ति च्छेदः। 'उपदेश'ग्रहणात्'प्रनिचकार' 'प्रनिचखाद' 'प्रनियोक्ष्यती'त्यादावपि निषेधसिद्धिः। 'प्रनिचकशे' इत्यत्र च। अयं हि आदेशोपदेशे खादिः, स्थान्युपदेशे षान्तश्चेति बोध्यम्।

ननु संहिताऽधिकारात्तद्विवक्षाऽविवक्षाभ्यां रूपद्वयसिद्धेः 'विभाषा'ग्रहणं व्यर्थमित्यत आह—इहेति। संहितैकेति। अत्र यद्वक्तव्यं तत् 'सुद्ध्युपास्य'प्रकरणे उक्तम्। सत्तादीति। ([1]'कुर्द खुर्द क्रीडायामेवे'त्येवकारोऽत्र ज्ञापकः। 'अर्थसहितधातुपाठः पाणिनीय' इति पक्षस्य इत्संज्ञाप्रकरणस्थभाष्यसंमतत्वात्। न चोपलक्षणत्वेऽर्थसहितपाठो व्यर्थः। क्रियावाचित्वमात्रबोधाऽर्थं तथा पाठात्। 'अर्थरहित एव धातुपाठः पाणिनीय' इति पक्षाऽन्तरं 'धातु'संज्ञासूत्रे भाष्ये। भाष्यद्वयप्रामाण्यात् द्वावपि धातुपाठौ पाणिनीयाविति बोध्यम्)। 'षिध गत्यामि'त्येतन्मात्रविषयके 'सेधतेर्गतौ' इति सूत्रे 'गतौ' इत्येतत् ([2]अपि) अत्र ज्ञापकं बोध्यम्।

---

१ 'कुर्द' इत्यारभ्य 'इति बोध्यम्' इत्यन्तः ख. ग. पाठः। क. कुण्डलितः। मनोरमाशब्दरत्नस्थत्वात्।

२ अपिः क. नास्ति। 'कुर्द खुर्द' इत्यादेः 'बोध्यम्' इत्यन्तस्य पाठस्य तत्र कुण्डलितत्वात्।

यागादिति । 'भूवादि'सूत्रे, 'धान्यानां भवने' इतिसूत्रे चाऽऽकरे स्पष्टमिदम् । द्योतका इति । अत एव अनुभवत्यादेः सकर्मकत्वमिति प्रागेव निरूपितम् ।

एध वृद्धौ । अकर्मकः ।

वृद्धि-क्षय-भय-जीवित-मरणं,
लज्जा-सत्ता-स्थिति-जागरणम् ।
शयन-क्रीडा-रुचि-दीप्त्यर्थं,
धातुगणं तमकर्मकमाहुः ॥'

–इत्यभियुक्तोक्तेः ।

टितः । आत्मनेपदानामिति । प्रकृतैस्तादिभिरस्य विशेषणात् 'तङा-मि'त्यर्थः । तेन 'पचमान'इत्यत्र न । 'टितस्तङां टेरे' इत्येव वक्तुमुचितम् ।

सार्वधातुकमपित् । 'अपिदि'ति पर्युदासः । न च 'च्यवे' इत्यत्र परादिवद्भावेन शबिटोरेकादेशस्य अपित्त्वात् ङित्त्वे गुणाऽनापत्तिः । एकादेशस्य पूर्वविधौ स्थानिवत्त्वेनाऽदोषादिति भाष्यकैयटयोः स्पष्टम् ।

यत्तु 'पिदार्द्धधातुकयोरि'त्येव सूत्रणीयम् । एवं चेदं न कार्य'मिति । तन्न । 'मृष्ट' इत्यत्र मृजेर्वृद्धेः 'क्ङिति चे'ति निषेधाऽनापत्तेः । क्नुनिबादौ निषेधाऽर्थं हि तत्र ङिद्ग्रहणमावश्यकम् ।

थासः से । 'तङादेशानां टेरेत्त्वं ने'ति ज्ञापनादेकारोच्चारणम् ।

इजादे । 'धातोरेकाच' इत्यतो 'धातोरि'ति, 'कास्प्रत्ययादि'त्यत 'आम्' 'लिटी'ति चाऽनुवर्त्तते । 'इयेषे'त्यादौ तु नाऽऽम् । सन्निपात-परिभाषाविरोधात् । लिट्निमित्ता हि तस्य गुरुमत्ता । 'इजादेर्गुरुमतो विहिते लिटी'ति वाऽर्थान्न दोषः । 'इचो गुरोरि'त्येव 'अनृच्छ' इति पर्युदासात् , अर्थाऽन्तरस्याऽसम्भवाच्च 'इजादेर्गुरुमत' इत्यर्थलाभे, 'मतु'ग्रहणम्, आदिग्रहणं च स्पष्टाऽर्थम् । [1]

---

१ 'मतुब्ग्रहणम्' इति ख. क. पाठः ।

यत्तु 'मुख्याऽजादेः, मुख्यगुरुमतो यथा स्यात्, न व्यपदेशिद्भावेन गुरुमत, इजादेश्चे'त्यर्थलाभाऽर्थं तत्। यत्तु 'मतुग्रहणात् औपदेशिक-गुरुमतो ग्रहणं, तेन 'आनृञ्जे' इत्यादौ ने'ति। तन्न। 'अनृच्छ' इत्यस्याऽसङ्गतेः। तुकि कृते हि तत्र गुरुमत्ता। तेन 'वी कटी'त्यादौ प्रश्लिष्टस्य दीर्घस्य 'ई'धातोः, 'ईङ् गतावि'ति दिवादेश्च न आम्। एवं च 'ऊ'शब्दा-दिभ्य आचारक्विबन्तेभ्योऽनेन आमि'ति माधवोक्तं चिन्त्यमि'ति। तन्न। तथाऽप्यादिग्रहण-मतुपोरन्यतरवैयर्थ्यस्य तदवस्थत्वात्। माधवादिविरुद्ध-कल्पनाऽपेक्षया 'ह्रस्वात्तादावि'त्यादाविव स्पष्टार्थताया औचित्याच्च। ऊर्णोतेस्तु नुवद्भावात् 'आम्'मात्रस्याऽभावाऽतिदेशात् अस्य, 'अनेकाच' इत्यस्य च आमोऽभावो बोध्यः। 'अनृच्छो-दयायासश्चे'त्यत्र उकाराऽन्तर-प्रश्लेषेण वारणमि'ति भाष्यमतेऽपि बाध्यसामान्यचिन्तया 'आम्'मात्रस्य बाध' इति बोध्यम्। उकाराऽन्तस्य च 'ऋच्छि'साहचर्यात् औपदेशि-कस्यैव ग्रहणात् 'वल्गु'प्रभृतिभ्य आचारक्विपि, 'अनेकाच' इति आम् भवत्येव, यद्यभिधानमस्तीति बोध्यम्।

न च ऋच्छेर्लिटि गुणविधानसामर्थ्यादेव तत आमभावे सिद्धे, 'अनृच्छ' इति व्यर्थम्। आम्बाधाऽपेक्षया 'तस्मिन्निति'परिभाषाबाधेन व्यवधानेऽपि गुणप्रवृत्त्या, तस्य सार्थक्यादिति सूत्रतात्पर्यम्।

ज्ञापकादिति। ननु मित्त्वादन्त्यादचः परत्वसामर्थ्यादसञ्जातविरो-धित्वन्यायेन सवर्णदीर्घबाधोऽस्त्विति चेन्न। प्रधानसवर्णदीर्घबाधाऽपेक्षया, अङ्गभूतेत्संज्ञाबाधस्यैवौचित्यात्।

आमः। 'अम गत्यादिषु', 'आमे'त्यत्र न। सन्निपातपरिभाषा-

१ 'मतुब्ग्रहणात्' इति ख. ङ. पाठः।

२ इतोऽग्रे—'भाष्ये 'इयेषे'त्यादिसिद्धये नित्ययोगे मतुपो व्याख्यानेन अर्था-ऽन्तरकल्पने मानाऽभावाच्च। सन्निपातपरिभाषाऽनित्यत्वज्ञापकताया एवौ-चित्याच्च' इति ख. ङ. पाठः। क. कुण्डलितः।

प्रतिपदोक्तपरिभाषा-प्रत्ययग्रहणपरिभाषाविरोधात्। 'लेरि'ति नाऽनुवर्त्तते' इति प्रागेव निरूपितम्। तेन 'विदाङ्कुर्वन्त्वि'ति लोटोऽपि लुक्। तिबाद्यपवादत्वात्, 'अन्तरङ्गानपी'ति न्यायाच्च लाऽवस्थायामेव लुक्। तेन आमन्तस्य तिङन्तत्वप्रयुक्तं कार्यं न।

'आम' इत्यत्र लुक्स्थानिभूतप्रत्ययेन अङ्गाऽऽक्षेपेन 'आमन्तादङ्गात्परस्ये'त्यर्थान्नेह—'पचतितराम्—इयानि'ति। लिटो लुकि, तस्य कृत्त्वात्प्रत्ययलक्षणेन तदन्तत्वात्प्रातिपदिकत्वे, ततः परस्य सोरव्ययत्वात्, 'आम' इत्येव वा लुक्। तेन तस्य पदत्वात् 'कारयाञ्चकारे'त्यादौ पदात्परत्वनिबन्धनः 'चकारे'त्यस्य निघातः सिद्ध इत्याहुः।

कृञ् चानु। 'कासि'ति सूत्रादनुवृत्तम् 'आम्' इति पञ्चम्या विपरिणम्यते। एतदनुकर्षणाऽर्थश्चकारः। 'लिटि परत आमन्तात्कृञोऽनुप्रयोग' इत्येव सूत्राऽर्थः। 'ढकि लोप' इतिवत् अत एव ज्ञापकाल्लिट्। तत्फलितमाह—लिट्परा इति। सूत्रे 'लिडि'ति प्रथमान्तं तु नोक्तम्, 'लिङादि'त्यर्थाऽऽपत्तेः। न च आमन्तस्याऽव्यक्तपदाऽर्थकत्वेन, कालसाधनसङ्ख्यापुरुषविशेषाऽभिव्यक्तयेऽनुप्रयोगस्याऽऽवश्यकत्वेन इदं व्यर्थम्। न चेतराऽनुप्रयोगव्यावृत्त्यर्थम्। सामान्याऽर्थकत्वेन एषामेवाऽनुप्रयोगादिति वाच्यम्। विपरीतव्यवहितप्रयोगवारणाऽर्थं तदावश्यकत्वात्।

'लिटी'ति तु व्यर्थम्। 'एकस्या आकृतेरि'ति न्यायेनाऽतिप्रसङ्गवारणादिति स्पष्टं भाष्ये। अत एव पश्चादर्थकाऽनुशब्दप्रयोगः सङ्गच्छते।

अव्यवधानांऽशस्तु 'आमन्तादि'ति पञ्चम्याः सत्त्वेन निर्दिष्टपरिभाषया लब्धः। एवं च 'तं पातयां प्रथममास पपात पश्चादि'त्यादिप्रयोगाः प्रामादिका एवेति बोध्यम्।

तेनेति। अत एव 'कृञ् हिंसायामि'ति स्वादेर्न ग्रहणम्। भ्वस्तिसाहचर्येण तत्र क्रियासामान्यवाचकस्यैव ग्रहणात्। सम्पद्यकर्तृत्वाऽसम्भवाच्च।

तेषां क्रियेति। एध-भूत्वादयः फलाऽनुकूलव्यापारवाचकाः, 'कृञ्' उत्पत्त्यनुकूलव्यापारवाची, भवस्ती चाऽनुप्रयुज्यमानौ सत्ताऽनुकूलव्यापार-वाचिनौ। तत्र आम्प्रकृतिसमभिव्याहारे उत्पत्त्यादिकं फलाऽधिकरण-निष्ठमेव, सिद्धस्याऽपि तस्य विशिष्टरूपेणोत्पद्यमानत्वात्। एवं च 'एधां चक्रे' इत्यस्य 'एककर्तृकवृद्ध्यनुकूलव्यापाराऽभिन्न, उत्पत्त्यनुकूलो व्यापार' इति बोधः।

इतोऽपि 'अकर्मकाणां नाऽशङ्कयाऽभिधायकत्वमि'ति मतमयुक्तम्। वृद्धियुक्ते 'ऐधिष्टे'त्याद्यनापत्तेश्च। एवं च आम्प्रकृत्यर्थगतकालकारक-सङ्ख्यादिविशेषाऽभिव्यक्तिरनुप्रयोगस्य फलं बोध्यम्। तत्र कृञोऽपि फलसमानाधिकरणव्यापारवाचकत्वात् अकर्मकत्वम्। 'ईक्षाम्बभूवे'त्यादौ भवत्यादेरपि फलव्यधिकरणव्यापारवाचित्वात् सकर्मकत्वम्। अत एव सकर्मकधातुसमभिव्याहारे ताभ्यां कर्मण्यपि लिट्। 'तस्याऽऽतपत्रं बिभरां-बभूवे' इति यथा। न चैवं 'बिभरां बभूवे' इत्यादौ कर्मप्रत्ययसमभिव्या-हारे फलव्यापारयोर्व्यत्यासात्, द्वयोरपि फलयोर्विशेष्यताऽऽपत्तौ, कथ-मभेदेन एकवाक्यतानिर्वाह इति वाच्यम्। 'आम्'समभिव्याहारे तयो-र्व्यत्यासाऽकल्पनात्। इदमेव ध्वनयितुम् 'अनुप्रे'ति 'प्र'शब्दः प्रकर्षेण युज्यते इत्यर्थकः। प्रकर्षश्च अनुपदोक्त एवाऽभेदाऽन्वयरूपः।

संपदिस्त्विति। 'अभिविधौ संपदा चे'ति सूत्रपठित इत्यर्थः। करोतिकर्मव्यापाराऽर्थको ह्ययम्। अनन्वितार्थत्वादिति। तस्य पूर्व-वस्तुनो योग्यरूपाऽन्तराऽऽपत्तिरूपाऽर्थकत्वादिति भावः। 'द्रव्यं सम्पा-दयती'त्यादौ तु धातूनामनेकार्थत्वान्न दोषः। केवलपदैरनुप्रयोगोऽपि

१ 'फलव्यापारोभयवाचकाः, । तयोश्च जन्यत्वं सम्बन्धः' इति ख. क. पाठः।

२ 'सत्ताद्यनुकूल' इति ख. क. पाठः।

३ 'कर्मप्रत्ययसमभिव्याहारे ताभ्यां फलव्यापारयोः' इति ख. क. पाठः।

४ 'अनुपदोक्त एव भेदाऽन्वयरूपः' इति क. पाठः।

नाऽऽपाद्यः । उत्तरदेशसंयोगाऽनुकूलव्यापारवाचित्वेन तस्याऽपि विशेषवाचित्वात् । एतेन 'कृ'सजातीयानां धातूनामेव प्रत्याहारे ग्रहणात्, सम्पदेर्विशिष्टस्याऽधातुत्वाच्चिन्त्यमिदमि'त्यपास्तम् ।

अतद्गुणेति । आमन्तस्याऽऽत्मनेपदाऽनर्हत्वात्, प्रत्ययग्रहणाच्चेतिभावः । तृतीयाऽन्ताद्वतिः । 'अनुप्रयोगस्ये'ति कर्मणि घञ् । अत्र 'कृञ' इति न प्रत्याहारग्रहणम् । 'अनुप्रयोगस्ये'त्येव सिद्धे, कृञ्ग्रहणात् ।

नन्वनेन 'एधां चक्रे' इत्यादौ परगामिनि क्रियाफलेऽप्राप्तस्य विधानेऽपि 'इन्दां चकारे'त्यादौ कर्त्तृगामिनि क्रियाफले प्राप्तस्य निवारणाऽयोगादाह—वाक्यभेदेनेति । अत्र च मानम् 'आम्प्रत्ययवदि'त्येव । अन्यथा 'पूर्ववदि'त्यनुवृत्त्यैव 'एधां चकारे'त्येतद्व्यावृत्तिसिद्धौ, तद्वैयर्थ्यं स्पष्टमेव ।

'पूर्ववदि'ति तृतीयान्ताद्वतिः । 'पूर्व'शब्देन पूर्वाऽऽपादनकाऽऽत्मनेपदभवनं लक्ष्यते । तदाह—पूर्ववदेवेति । ननु 'कृञोऽनुप्रयोगस्य' । 'अनुप्रयुज्यमानात्कृञ आत्मनेपदमि'त्यर्थः । परगामिफले तदर्थमिदम् । ततः 'आम्प्रत्ययवदि'ति । नियमाऽर्थम् । 'आम्प्रकृतिवदेव तत्, न विपरीतमि'ति नियमः । एवं सिद्धे 'पूर्ववदि'त्यनुवृत्तिर्व्यर्था । योगविभागसामर्थ्याच्च सर्वनियम इति चेत् । चिन्त्यमेतत् ।

न तङिति । इदमुपलक्षणम् । तेन शानच्-कानचावपि न ।

तेन डारौरसां नेति । ननु परत्वादेत्वे, पुनःप्रसङ्गविज्ञानेन डादिषु कृतेषु, 'लक्ष्ये लक्षणस्ये'ति न्यायेन एत्वाऽप्रवृत्तौ, किमर्थमिदम् । स्पष्टं चेदं 'लुटः प्रथमस्ये'त्यत्र भाष्ये इति चेन्न । उपायस्योपायाऽन्तराऽदूषकत्वात् । ध्वनितं चेदं 'टित आत्मनेपदाना'मिति सूत्रे भाष्ये । कित्स्यादिति । 'किद्वत्स्यादि'त्यर्थः ।

द्विर्वचनेऽचि । अधिकरणे ल्युट् । तदाह—द्वित्वनिमित्त इति । स्थान्यचः पूर्वत्वेन दृष्टस्यैव 'चक्रे' इत्यादौ कार्याऽभावात् 'अचः परस्मिन्नि'त्यनेनाऽसिद्धिरितीदमारब्धम् । 'द्विर्वचने' इत्येतत् 'अची'त्यस्य

विशेषणम्[1]। तत्र 'द्वित्वनिमित्तेऽचि, स्थानिवदि'[2]त्यर्थे प्रत्यासत्त्या बहुधा तन्निमित्तकस्यैव स्थानिवत्त्वम्। 'ओः पुयणि'ति ज्ञापकात् णिव्यवधाने प्रवृत्तौ, णिनिमित्तकस्याऽपि स्थानिवत्त्वम्। स्पष्टं चेदम् 'आत औ णल' इत्यत्र भाष्यकैयटयोः।

आदेशो नेति। यद्यपि 'स्थानिवदि'त्यनुवर्त्य रूपाऽतिदेशः स्वीकृत आकरे, फलं च तुल्यम्, तथाऽपि निषेधपक्षस्याऽपि भाष्याऽऽरूढत्वात्, 'प्रक्षालनाद्धी'ति न्यायेन लघुत्वाच्च, 'स्थानिवदि'त्यस्य शब्दाऽधिकार-प्रयुक्तक्लेशाऽभावाच्च स एवाऽत्राऽऽदृतः। 'न पदान्ते'ति निषेधाऽनन्तर-पाठोऽपि एवं सत्यनुगृहीतः[3]। तेन ज्ञापकेनान्तरङ्गाणामप्यनेन बाधज्ञापनात्।

तन्त्राऽऽदिना कालाऽवधारणमपि क्रियते इत्याह—द्वित्वे कर्त्तव्ये इति। कृते तु द्वित्वे यथायथमादेशः स्यादेवेत्यर्थः। न च रूपाऽतिदेशे द्वित्वात् पूर्वमियङः प्रवृत्त्या, द्वित्वे कर्त्तव्ये स्थानिरूपाऽतिदेशेऽपि, यणि तत्त्वे मानाऽभावेन, 'निन्यतुरि'त्यसिद्धिः। आभीयत्वेन इयङोऽसिद्धया यणप्रवृत्तेः[4]।

द्वित्वनिमित्ते किम्?। 'दुद्यूषति'। न हि ऊठ् द्वित्वनिमित्तम्। ननु

---

१ 'विशेषणं, विशेष्यं वा' इति ख. ङ. पाठः।

२ 'द्वित्वनिमित्तेऽचि, अजादौ द्वित्वनिमित्ते वा' इति ख. ङ. पाठः।

३ इतोऽग्रे—'न च निषेधपक्षे 'चुक्षावयिषती'त्यादौ सनुत्पत्तेः पूर्वम् अन्तरङ्गत्वात् वृद्ध्यावादेशयोः कृतयोः, पश्चात्सनि, 'भुक्तवन्तमि'ति न्यायान्निषेधः कर्त्तुमशक्यः। 'ओः पुयणि'ति ज्ञापकेन तु अस्यैव णिव्यवधानेऽपि प्रवृत्तिर्बोध्यते, न त्वपूर्वो निषेधो, गौरवादिति वाच्यम्। निषेधरूपाऽपवादविषयस्य भावित्वेन, अकृतव्यूहपरिभाषया पूर्वं वृद्ध्याद्यप्राप्तेः। अत एव ज्ञापकसिद्धाऽर्थस्य चारितार्थ्यमिति बोध्यम्' इति ख. ङ. पाठः।

४ इतोऽग्रे—'द्वित्वोत्तरमपवादविषयस्य जायमानत्वेन, पूर्वमपि तदप्रवृत्तेश्च' इति ख. ङ. पाठः।

'चक्रतुरि'त्यत्र नेदं प्रवर्त्तेत, अतुसो द्वित्वनिमित्तत्वेऽपि अचोऽतथात्वात्, सूत्रं तु 'चक्रे' इत्यत्र सावकाशमिति चेन्न । लक्ष्याऽनुरोधेन साक्षात्, समुदायघटकतया वा द्वित्वप्रयोजकस्य सर्वस्याऽपि 'निमित्त'शब्देन ग्रहणात् । द्वित्वे अजादिप्रत्ययस्य निमित्तत्वे, अचोऽपि तत्त्वं स्पष्टमेव, अचो निमित्तत्वे, तदादिप्रत्ययस्याऽपीति बोध्यम् । एवं च तद्भावभाविता-मात्रेण निमित्तत्वमत्र गृह्यते । 'यद्यत्र स्थानिवत्त्वं न स्यात्, स्यादेव तस्य द्वित्वमि'ति काल्पनिकं च गृह्यते इति 'सन्यङोरि'त्यत्र भाष्ये स्पष्टम् ।

अतएव 'सन्नन्तस्य द्वित्वमि'तिपक्षे 'सनीवन्ते'तीटि, 'विभाषोर्णोरि'ति ङित्त्वविरहे 'ऊर्णुनविषती'ति सिद्धम् । सन्नन्तस्य द्वित्वविधानेऽपि सनो द्वित्वप्रयोजकत्वेन, तस्मिन्प्राप्तयोर्गुणाऽवयोर्द्वित्वे कर्त्तव्ये निषेधादिति बोध्यम् । न च ऋधातोः सनि, 'स्मिपूङ्रञ्ज्व'ति इटि, 'इस'शब्दनिमित्तक-गुणस्य निषेधे, 'अजादेर्द्वितीयस्ये'तीसो द्वित्वे, 'अरिरिषती'त्याद्यसिद्धिः, अतो 'रिस्'शब्दस्य द्वित्वमिष्यते इति, तत्सिद्ध्यर्थं 'स्थण्डिलाच्छयितरी'ति-ज्ञापकसिद्धं 'न हि कार्यी निमित्तत्वेनाऽऽश्रीयते' इत्यवश्यं स्वीकार्यम् । अन्यथा शीङो ङित्त्वेन 'क्ङिति चे'ति गुणनिषेधाऽऽपत्तिः । एवं च 'ऊर्णुनविषती'ति कथं सिद्ध्यतीति वाच्यम् । मत्वर्थीयेन इनिना, ज्ञापकस्य सजातीयाऽपेक्षत्वाच्च कार्यमनुभवत एव कार्यिणस्तत्त्वाऽनाश्रयणाददोषः । ऊर्णोतेर्हि 'नु'शब्द एव द्वित्वरूपं कार्यमनुभवति, न तु सन् । 'अरिरिषती'-त्यत्र तु रिस्शब्दस्तत्कार्यभागिति वैषम्यादिति बोध्यम् ।

'न हि कार्यी'त्यत्राऽपि कार्यित्व-निमित्तत्वे यथाकथंचित् । अन्यथा 'अरिरिषती'त्यसिद्धेः । तत्र गुणनिमित्तस्याऽऽर्द्धधातुकत्वविशिष्टस्य 'इस'शब्दस्य द्वित्वं प्रति कार्यित्वाऽभावात् ।

---

१ इतोग्रे 'अचि किम् । जेघ्रीयते । इह 'ई घ्राध्मोरि'ति ईकारोऽपि निषिध्येत । न च 'घ्रीय्' इति द्वितीयाऽजवधिकस्य एकाचो द्वित्वं प्रति कार्यितया, यङो द्वित्वनिमित्तत्वाऽभाव इति वाच्यम् । यङि परत ईत्वविधानेन, तन्निमित्तस्य

अचि किम् ? । 'अधिजगे' । 'गाङ् लिटी'त्यत्र द्विलकारकनिर्देशात् लाऽवस्थायां गाङादेशस्य[2] तत्र सत्त्वात् । न[3] च 'आर्द्धधातुकीयाः सामान्येन भवन्ती'ति भाष्यसिद्धान्तात् तस्याऽनैमित्तकत्वाऽभ्युपगमान्न[4] दोषः, एवं च 'अची'ति व्यर्थमेवेति वाच्यम् । 'लिटि' 'आर्द्धधातुके' इत्यादीनां[5] विषयसप्तमीत्वेऽपि तद्भावभावित्वेनेव, तद्बुद्धिभावभाविता मात्रेणाऽपि

यङो विशिष्टस्य द्वित्वं प्रति कार्यित्वाऽभावेन, द्वित्वनिमित्तत्वाऽव्याघातात् । अवयवस्य कार्यित्वेऽपि न तस्य द्वित्वनिमित्तत्वमिति न दोषः । न हि 'कार्यी निमित्तत्वेनाऽऽश्रीयते' इत्यत्राऽपि यथाकथञ्चिन्निमित्तत्वं, कार्यित्वं च गृह्यते' इत्यत्र मानमस्ति । 'जेघ्रीयते' इत्यादेः प्रत्युदाहरणत्वपरभाष्यप्रामाण्यात्तत्र निमित्तकार्यिपदयोर्मुख्याऽर्थत्वस्यैत्राऽङ्गीकाराच्चेत्याहुः । तन्न । 'अरिरिषती'त्यस्याऽप्यसिद्धेः । न हि तत्र गुणनिमित्तस्य आर्द्धधातुकसंज्ञकस्य 'इस'शब्दस्य अकारविशिष्टस्य द्वित्वं प्रति कार्यित्वम् । 'शयितरी'त्यत्राऽपि इकारस्यैव कार्यित्वेन, ज्ञापकस्य शिथिलत्वाऽऽपत्तेश्च । यदि तत्र 'इगन्ताऽङ्गस्ये'त्यर्थात्सर्वस्य कार्यित्वं, तर्ह्यत्रापि 'यङन्तस्य द्वित्वमि' त्यर्थात्तुल्यम् । तस्मात् 'नहि कार्यी'त्यत्राऽपि यथाकथञ्चिन्निमित्तत्वादि गृह्यते इत्येव युक्तम् । न च भाष्यप्रत्युदाहरणबलात् 'घ्रो'त्यस्यैव द्वित्वम् । षाष्ठभाष्यविरोधात् । तत्र हि 'नटभार्याबन्धजनानी'ति द्वितीयाऽजवधिकस्य द्वित्वमि'त्युक्तम्' इति ख. ङ. पाठः । क. कुण्डलितः, मनोरमाशब्दरत्नस्थत्वात् ।

१ 'न च गाङ् लिटीत्यत्र' इति ख. ङ. पाठः ।

२ 'गाङादेशस्य सत्त्वेन 'अधिजगे' इत्येतद्यावश्यमिति वाच्यम्' इति ख. ङ. पाठः ।

३ 'न चे'ति ख. ङ. नास्ति ।

४ 'अनैमित्तिकत्वाऽभ्युपगमात् । एवञ्च अचीति' इति ख. ङ. पाठः ।

५ 'अचीति व्यर्थमेवेत्याहुः । अत्र वदन्ति—लिटि' इति ख. ङ. पाठः ।

निमित्तत्वस्य वक्तुं शक्यत्वात्[1] । अत्र सूत्रोपात्तलिट्बुद्धिभाव एव निमित्तमिति, अज्निमित्तत्वाऽभावः । सर्वत्रैव चाऽत्र शास्त्रे बुद्धिकृतमेव निमित्तत्वादि । स्पष्टं चेदं 'द्विगोर्लुगनपत्ये' इत्यत्र मनोरमायाम् ।

अत एवाऽङ्गाऽधिकारे 'आर्द्धधातुके' इत्यादीनां विषयसप्तमीत्वेऽपि, परदेशस्थविषयकबुद्धिभावेन जायमानतया परनिमित्ततया, तद्विषये 'अचः परस्मिन्नि'ति स्थानिवद्भावप्रवृत्तिः । इदमेव 'अची'ति ईदृशनिमित्तत्वाऽऽश्रयणे लिङ्गम् । ध्वनितं चेदं प्रकृतसूत्रे, 'अचो यदि'ति सूत्रे च भाष्ये इत्याहुः ।

'अची'त्येव चाऽस्य स्थानिवद्भावविधायकत्वपक्षे रूपाऽतिदेशे ज्ञापकम् । कार्याऽतिदेशे 'गा' इत्यस्यैव द्वित्वे, तत्सिद्धेः, वैयर्थ्यं स्पष्टम् ।

अचः[2] किम् ? । 'ईजाथे' । अत्र[3] हि कित्त्वनिमित्तत्वात्सम्प्रसारणस्य आदेशेषु कृतेषु प्रवृत्त्या अज्निमित्तत्वात् । न च लाऽवस्थायां कित्त्वप्रवृत्तिः । परैस्तिबादिभिर्बाधात् । पूर्वसाहचर्येण आदेशेष्वेव प्रवृत्तेश्च । अत एव 'असंयोगादि'ति सूत्रे 'अपिदि'त्यनुवृत्तिश्चरिताऽर्थेति दिक् ।

तत्राऽतिदेशपक्षे 'द्वित्वनिमित्तेऽची'ति आदेशविशेषणम् । तत्र निर्दिष्टपरिभाषया, 'परस्मिन्नि'त्यनुवृत्त्या वा 'अचि परत' इत्यर्थः ।

---

१ 'शक्यतया, एतद्व्यावृत्त्यर्थमचीत्यावश्यकमेव' इति ख. ङ. पाठः ।

२ 'अचः किम् ? । असूषुपत् । अत्र 'स्वापेश्चङि' 'द्युतिस्वाप्योरि'ति सम्प्रसारणस्याऽनेन निषेधे, अभ्यासे उवर्णो न श्रूयेत । न च द्वित्वे कृते पुनः सम्प्रसारणम् । परस्य सम्प्रसारणे, पूर्वस्य 'न सम्प्रसारणे' इति निषेधात् । यथा चाऽस्य व्यवहितेऽपि प्रवृत्तिस्तथा 'न सम्प्रसारणे'इत्यत्रैव निरूपितम् ।

न च सम्प्रसारणग्रहणसामर्थ्यादेकवर्णव्यवधाने 'यून' इत्यादावस्तु प्रवृत्तिः, प्रकृते प्रवृत्तौ न किञ्चिन्मानमिति वाच्यम् । 'ईजाथे'इत्यादेरेव व्यावर्त्यत्वात्' इति ख. ङ. पाठः ।

३ 'तत्र हि' इति ख. ङ. पाठः ।

निषेधपक्षेऽपि अचस्तद्विशेषणम्। अजादेशश्च प्रत्यासत्त्या द्वित्वनिमित्ताऽज्निमित्तक एव गृह्यते इति बोध्यम्।

उरत्। 'ऋवर्णान्ताऽभ्यासस्ये'ति वृत्त्याद्युक्तव्याख्यानेऽपि 'ननृते' इत्यादौ सति हलादिः शेषे, अत्त्वप्रवृत्तौ, लक्ष्यभेदेन पुनर्हलादिःशेषप्रवृत्त्या सिद्धावपि, निर्दिश्यमानाऽलोन्त्यपरिभाषालब्धफलिताऽर्थमाह— अभ्यासऋवर्णस्येति। न च 'चेच्छिद्यते' इत्यादौ पश्चाज्जाततुकोऽपि निवृत्त्यापत्तिः। 'नुगत' इत्यादिसामर्थ्येनाऽभ्याससंज्ञाप्रवृत्तिकाले स्थानिद्वारा, साक्षाद्वा सन्निहितहलामेव तेन निवृत्तेरदोषात्।

वस्तुतस्तु 'चच्छृदतुरि'त्यादौ अभ्यासविकारे बाध्यबाधकभावाऽभावेन पूर्वं हलादिःशेषेऽपि, ततोऽन्तरङ्गत्वात्तुकि, उरदत्त्वसिद्धये वैयधिकरण्याऽन्वय एवाऽऽवश्यक इति बोध्यम्।

प्रत्यये किमिति। अङ्गेन प्रत्ययाऽऽक्षेपः किमर्थं इति प्रश्नः। वव्रश्चेति। अन्यथा उरदत्त्वस्य अपरनिमित्तकत्वात्स्थानिवत्त्वाऽभावे 'न सम्प्रसारणे' इति निषेधाऽनापत्तिः। अत एव 'प्रागभ्यासविकारेभ्योऽङ्गाधिकार' इति पक्षं परित्यज्य, 'आ सप्तमसमाप्तेरङ्गाऽधिकार' इति सिद्धान्तो भगवता कृतः। न च तत्राऽपि पक्षेऽभ्यासेन प्रत्ययाऽऽक्षेपो भविष्यतीति वाच्यम्। अभ्याससंज्ञैकवाक्यतया 'लिटि परे ये द्वे, तयोः पूर्वस्य अदि'त्यर्थलाभेऽपि, अत्त्वस्य परनिमित्तत्वाऽनुपपादनात्। अङ्गसंज्ञैकवाक्यतया तु 'यस्मात् प्रत्ययो विहितस्तदवयवाऽभ्यासस्याऽत्, प्रत्यये परे' इति 'प्रत्यये' इत्यस्य आवृत्त्याऽर्थान्न दोषः।

किञ्च 'सन्यङोरि'त्यस्य षष्ठीत्वेन, तद्विषये 'सन्नन्तस्य ये द्वे, तयोः पूर्वस्य अदि'त्यर्थे, तत्र अतः परनिमित्तत्वस्य दुरुपपादतया, 'वरीवृश्च्यते' इत्यसिद्धिर्दुर्वारैवेति दिक्।

न च 'न लुमते'ति निषेधात् 'चर्करीती'त्यादौ यङ्लुगन्ते एतदप्रवृत्त्यापत्तिः। 'अंजर्घा' इत्यादिभाष्यप्रयोगात् 'न लुमते'ति निषेधाऽनित्यत्वेनाऽश्रुतेः।

एकाच उपदेशे । उभयाऽन्वयीति । मध्ये पाठात् पूर्वोत्तराभ्यां सम्बध्यते इत्यर्थः । पूर्वाऽन्वयफलम्—'बिभित्सति' । अन्यथा द्वित्वे कृते, अनेकाऽच्त्वान्निषेधो न स्यात् । न च 'उपदेशेऽनुदात्तादेकाचो विहित-स्ये'त्यर्थे पूर्वाऽन्वये फलं दुर्वचम् । न च 'लाऽवस्थायामडागम' इति पक्षे 'अकार्षीदि'त्यादौ दोषः । 'च्लि लुङी'त्यस्याऽपि स्य-तासिवत् लावस्थायामेव प्रवृत्त्या, अन्तरङ्गत्वाद्विकरणप्रवृत्त्युत्तरमेव अडादिप्रवृत्तेः, ध्वनितं चेदम् 'एकाचो द्वे' इति सूत्रे भाष्ये इति वाच्यम् । उपायस्योपाया-ऽन्तराऽदूषकत्वात् ।

उत्तराऽन्वयफलं,—'कर्त्तुम्' 'गन्तुमि'ति । अयं हि नित्स्वरेण सम्प्रत्युदात्तः । न च विहितविशेषणान्निस्तारः । धातुस्वरस्य दुर्वारत्वेन, असम्भवाऽऽपत्तेः ।

ननूपदेशेऽनुदात्तस्य एकाच्त्वाऽव्यभिचारात्किं तेनेति पृच्छति—एकाचः किमिति । न च 'वधि'व्यावृत्त्यर्थम् , तत्सामर्थ्येन उपदेशमात्रे एकाचो ग्रहणादिति वाच्यम् । आद्युदात्तनिपातनेन सिद्धेरित्यभिमानः ।

ननु 'पिपक्षती'त्यादिसनादिवद्यङ्लुक्यपि स्यादेव । तत्राऽऽह—श्तिपा शपेति । अनुबन्धनिर्देशो द्विधा । स्वरूपेण, 'ङित' इत्यादिपदेन च । 'हन्तियातिवाति,' 'सनीवन्ते'ति सूत्रे 'भरे'ति, 'दीङो युडचि', 'अनु-दात्तङितः', 'दिवादिभ्यः श्यन्' 'एकाच उपदेशे' इत्युदाहरणानि । नचैवं यङ्लुगन्ते भूवादिसूत्रेण, 'सनाद्यन्ता' इति वा धातुसंज्ञा न स्यात्, गणनिर्दिष्टत्वादिति वाच्यम् । 'यङो वा' 'गुणो यङ्लुकोरि'त्यादिभि-र्निषेधाऽनित्यत्वकल्पनात् । अत एव यङ्लुकि द्वित्वभष्भावादि भवति । अत एव 'श्वीदित' इति सूत्रे 'यत्रैकाज्ग्रहणं किञ्चिदि'ति पाठः ।

एकाज्ग्रहणेनेति । तदर्थका'ऽच' इति पदेनेत्यर्थः । अन्यथा उपदेशे अनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेव । 'श्वीदित' इति सूत्रे कैयटे स्फुटमेतत् । न चेदं भाष्याऽनुक्तत्वादप्रमाणम्, यङ्लुकि च 'बिभित्सती'-

त्यादिवत् इण्निषेध एवाऽस्त्विति वाच्यम्। यङ्लोपे 'बेभिदिते'त्यादाविट्प्रवृत्त्यर्थम् 'उपदेशेऽनुदात्तादेकाचः श्रूयमाणादि'त्यर्थे, 'सनीट्प्रतिषेधो वक्तव्यः', बिभित्सती'ति दोषोपन्यासवत्, 'यङ्लुकि इट्प्रतिषेधो वक्तव्य' इति दोषाऽनुपन्यासेन, यङ्लुकि इट्प्रवृत्तेरिष्टत्वाऽनुमानात्। 'यङ्लोपे' इत्यादिभाष्यन्तु उपक्रमोपसंहारबलेन न यङ्लुक्विषयमिति स्पष्टमेव। तस्य तद्विषयत्वे तु यङ्लोपे स्थानिवद्भावस्येव, यङ्लुकि उपायाऽप्रदर्शनेन न्यूनताऽऽपत्तिः। तस्मात् एकाज्ग्रहणस्य यङ्लुग्व्यावृत्त्यर्थता भाष्यसंमतैव। अत एव 'अजर्घाः' 'बेभिदीती'त्यादिप्रयोगेषु भाष्ये श्यन्श्नमादयो न कृताः।

'श्तिपे'ति परिभाषा तु एकदेशाऽनुमतिद्वारा इहैव एकाज्ग्रहणेन ज्ञापिता, अनन्याऽर्थैः श्तिबादिनिर्देशैश्च।

ननु वधावाद्युदात्तनिपातनेऽपि न सिद्ध्यति, हन्त्युपदेशे तस्याऽनुदात्तत्वाऽक्षतेः। न च तत्सामर्थ्यम्। गौरवात्। अत आह—**एकत्वविवक्षयेति**। निःसङ्ख्यस्य परिच्छेदकत्वाऽसम्भवेन एकत्वविवक्षेति भावः। **तद्वत इति**। मत्वर्थलक्षणयेति भावः। अत्र मानन्तु पचत्यादीनामनुदात्तपाठः। न चाऽनुदात्तत्वम् अन्तोदात्तत्वबाधनाऽर्थम्। मत्वर्थलक्षणयैवोपपत्तौ, शास्त्रबाधे मानाऽभावात्। न चैवमेकत्वस्य तद्वत्येवाऽन्वयः स्यात्, न तु अचि, तस्य पदार्थैकदेशत्वादिति वाच्यम्। 'अच' इत्यनेन 'एकाच' इत्यर्थस्य[1] शक्त्या बोधनोत्तरं, तत्सम्बन्धिनि लक्षणाऽभ्युपगमान्न दोषः। स्पष्टा चेयं रीतिः 'उतश्च प्रत्ययादि'त्यादिविषये इत्यभिमानः।

**सिद्धे इति**। शब्दविशेषमनादृत्य अर्थविशेषपुरस्कारेणैव प्रागुक्तपरिभाषा प्रवृत्तेः सूपपादत्वादिति भावः। अत एवोत्तरार्द्धे 'निर्दिष्ट'पदं विहाय, 'ग्रहण'पदमुपात्तम्।

---

१ 'एकाजित्यर्थस्य' इति क. पाठः।

सामर्थ्यादिति । 'उपदेशमात्रे य एकाजेवे'ति परिकल्पनयेत्यर्थः । वस्तुतस्तु मत्वर्थलक्षणाया अयुक्तत्वेन, एकत्वाऽन्वयस्य एकदेशेऽचि दुर्लभत्वेन च एकग्रहणस्य बहुव्रीहिणा तथाऽर्थलाभाय आवश्यकत्वेऽपि, अवच्छेदकाऽवच्छेदेनाऽन्वयस्य औत्सर्गिकत्वेन, लक्ष्याऽनुरोधाच्च अत्र तथैवाऽन्वयेन 'वधि'व्यावृत्तिः । यद्वा यस्य साक्षादुपदेशः सम्भवति, तस्य मुख्यत्वात्स एव गृह्यते, न तु स्थान्युपदेश इति न दोषः । ध्वनितं चेदम् 'ऋतो भारद्वाजस्ये'त्यत्र, 'उपदेशेऽत्वत' इत्यत्र च भाष्यकैयटयोः ।

अनेकाच्त्वादिति । वधाऽऽदेशो न हलन्तः, 'अवधीदि'त्यत्र 'अतो हलादेरि'ति वृद्ध्यापत्तेः । मम तु अल्लोपस्य स्थानिवत्त्वान्न दोषः । एवं सति आद्युदात्तनिपातनं निष्फलमित्यन्यत् । ध्वनितं चेदम् 'इहाऽर्थमेव तर्हि विध्यर्थम् एकाज्ग्रहणं कर्त्तव्यमि'त्युपक्रमस्थभाष्येण । 'अयमदन्त' इति 'हनो वधे'ति भाष्ये स्पष्टम् ।

वस्तुत एकाज्ग्रहणव्यावर्त्त्यो वधिरेव । उत्तरार्थं च तदावश्यकम् । अत एव 'जागरितवानि'त्यादावुपदेशे उगन्तत्वमादाय 'श्र्युक' इतीण्निषेधो न ।

---

१ इतोऽग्रे—'एवं च एकाज्ग्रहणव्यावर्त्त्यो वधिरेव । 'क्ङिति चे'ति परिभाषाज्ञापकस्तु अन्यथासिद्धक्ङित्त्वादिनिर्देश एव एकादेशाऽनुमितिद्वारेति तत्त्वम्' इति ख. ङ. पाठः ।

२ 'भाष्ये स्पष्टम् । यत्तु अनिट्कारिकासु अदन्तपर्युदासादेतद्व्यावृत्तिरिति । तन्न । भाष्यकारादिभिस्तस्याऽनुक्तत्वात् । एतेन 'वधादेशे आद्युदात्तत्वनिपातनमूलकः सः । ऊदाद्यन्तानामिव, अदन्तानामपि अनुदात्तोपदेशत्वाऽभावबोधनात् । तच्च कथादिषु स्वतो, वधादेशे उदात्तनिपातनसामर्थ्यादि'त्यपास्तम् । यत्तु 'हनो वधे'त्यत्र अस्य व्यञ्जनाऽन्तत्वे इड्विधिर्वाच्यः । अदन्तत्वे तु न दोषः' इति भाष्ये उक्तम् । तत्तु उपदेशेऽनेकाच्त्वात्प्रतिषेधाऽभावादिट्सिद्धिरित्येवंपरतया कैयटेन व्याख्यातमिति दिक्' इति ख. ङ. पाठः । क. कुण्डलितः ।

तत्रोपदेशाऽनुवृत्तिश्च 'स्तीर्णमि'त्यादाविण्निषेधाय आवश्यकीति 'श्वीदित' इत्यत्र कैयटे स्पष्टम् । 'श्तिपा शपे'ति परिभाषा तु नाऽस्त्येव । भाष्याऽनुक्तत्वात् । सनीट्प्रतिषेधवत्, यङ्लुकीट्प्रतिषेधाऽनुक्तिस्तु इड्विषये यङ्लुको लोकेऽनभिधानात् । छन्दसि दृष्टस्यैवाऽनुविधानात् । तत्र सर्वविधीनां वैकल्पिकत्वेन दोषाऽभावाच्च । अन्यथा 'एकाज्ग्रहणं किमर्थमि'ति प्रश्नस्य, 'उत्तरत्र जागर्त्यर्थम्', इह वध्यर्थमि'त्युत्तरस्य च निरालम्बनताऽऽपत्तेः । 'अजघां' 'बेभिदीती'त्यादौ श्यन्-श्नमादयस्तु 'चर्करीतं चे'त्यस्य अदादौ पाठेन यङ्लुगन्ते गणाऽन्तरप्रयुक्तस्याऽप्राप्तेः । छान्दसत्वादेव कार्याऽन्तराणामपि च्छन्दसि दृष्टप्रयोगेषु अदृष्टानाम् अभावो बोध्यः । भाषायान्तु तादृशानामनभिधानमेवेत्याहुः ।

इणः षीध्वम् । 'इण्कोरि'त्यनुवर्त्तमाने इण्ग्रहणात् 'पक्षीध्वम्' 'शक्षीध्वमि'त्यादौ न । परेषामिति । न च 'विहितानामि'त्यर्थोऽस्तु, एवं च अङ्गादिति न कर्त्तव्यमिति वाच्यम् । दाव्नः 'अदिढ्वमि'त्यादावव्याप्तिः स्यात् । लिहदुहोर्ढत्वघत्वयोः 'लिक्षीध्वं' 'धुक्षीध्वमि'त्यत्राऽतिव्याप्तिश्च स्यात् । 'नत्सीध्वमि'त्यत्राऽतिव्याप्तिस्तु चिन्त्यैव । षीध्वमोऽभावादित्याहुः । 'षीध्वमि'ति षकारोच्चारणन्तु 'भ्रुवीध्वमि'त्यादावेकदेशविकृतन्यायेन सीध्वमः सत्त्वेन ढत्ववारणायेति बोध्यम् ।

अङ्गात्किम् ?। 'वेविषीध्वम्'। षान्तम् इहाऽङ्गं, न इणन्तम् । अर्थवत्परिभाषाया अनित्यत्वस्याऽनेनैव ज्ञापनादिति बोध्यम् ।

ऋस्य्चेति । यद्यपि 'कृञि'त्युक्तौ लाघवमस्ति, तथापि एकस्यैव लाभाऽर्थं प्रत्याहाराऽऽश्रयणे क्लेशो, दुर्ज्ञेयता चेति भावः ।

पररूपापवाद इति । 'पररूप'ग्रहणम् एकादेशोपलक्षणम् । एतेन 'आनृजे' इत्यादौ पररूपाऽप्राप्त्या कथं तदपवादत्वमि'त्यपास्तम् । यद्यपि 'आसे'त्यादौ परत्वात् हलादिःशेषात्पूर्वं दीर्घप्राप्तिः, न च तदा एकादेशप्राप्तिः, तथापि 'यदीदं न स्यात्तदा हलादिःशेषे कृते, पररूपं स्यात्, कृते

तु तत्प्राप्तिरेव ने'त्येतावताऽपवादत्वव्यवहारात्। अत्र 'लिटी'ति वर्त्तते। 'आदि'ग्रहणं तदन्तविधिनिरासार्थम्[1]। एधामासेति। अस्माद्भावकर्मणो-स्तङि, एशि, इटि च, सत्यभिधाने 'एधामासे' इत्येव रूपम्। 'ह एती'-त्यस्य 'तासि'साहचर्यात्सार्वधातुके एव एति हत्वप्रवृत्तेरित्याहुः।

धि च। 'धादौ प्रत्यये' इति क्वचित्कोऽपपाठः। प्रत्ययाऽऽक्षेपे मानाऽभावात्। न च 'धि चेति लोपे सिचो ग्रहणं कर्त्तव्यमि'ति वार्त्तिकात् सिचा प्रत्ययाऽऽक्षेपो भविष्यतीति वाच्यम्। 'चकाधीत्येवेष्यते' इति-भाष्यग्रन्थेन तस्य प्रत्याख्यातत्वात्। 'पयो धावती'त्यादौ तु न दोषः। 'पदस्ये'त्यधिकारेण (एकत्वविवक्षया)[2], प्रत्यासत्तिन्यायात्, व्याख्यानाच्च अखण्डैकपदस्थयोरेव निमित्त-निमित्तिनोर्ग्रहणात्। अत एव 'पयोधावन-मि'त्यादौ समासेऽपि न दोषः। इदं च 'परश्चे'ति सूत्रे[3] कैयटे।

भाष्ये तु एतदर्थं 'सङी'ति वचनमारब्धम्। सनः सकाराच्च महिङो ङकारेण प्रत्याहारः। 'सिचो लोप' इति वार्त्तिकमते तदर्थमित्युक्तं भाष्ये इत्यन्यत्। एवञ्च स्वमते तस्य कर्त्तव्यतैवोक्ता। तत्र 'प्रत्यये' इत्येव कार्यम्, अन्यस्य धादेः प्रत्ययस्याऽसम्भवादित्याशयेन 'धादौ प्रत्यये' इत्युक्तिरिति तत्त्वम्। कैयटोक्तं तु अतिक्लिष्टम्।

ह एति। 'तासस्त्योर्लोप' इत्यतः 'तासस्त्योरि'ति वर्त्तते। 'सस्या-ऽऽर्द्धधातुके' इत्यतः 'स' इति च। लोट इति। 'लोडादेशस्ये'त्यर्थः।

आङजादीनाम्। भाष्ये तु 'अजादीनामटा सिद्धमि'त्युक्तम्। तस्याऽयं भावः—'आटश्चे'[4]त्यस्य स्थाने 'अटश्चे'त्येव सूत्रं कर्त्तव्यम्। 'उपसर्गादृती'-

---

१ इतोऽग्रे—'तपरत्वं किम्?। 'आञ्छ' 'आञ्छतुः'। अत्राऽभ्यासह्रस्वे, ततो दीर्घे कृते, 'तस्मादि'ति नुट् न स्यात्' इति ख. ङ. पाठः। क. कुण्डलितः।

२ अयं ख. ङ. पाठः। क. ग. तु नास्ति।

३ 'परश्चेति सूत्रे भाष्ये ध्वनितम्। पदाऽधिकारप्रत्यासत्तिन्यायफलिताऽर्थ-कथनं 'प्रत्यये इती'ति वा व्याख्येयम्' इति ख. ङ. पाठः।

४ अयं च विषयस्तत्त्वबोधिन्यां स्पष्टं निरूपितः।

त्यतो 'धातावि'त्यपकृष्य 'अजादौ धातावि'ति व्याख्यानात् 'अस्वपो हरे त्वमि'त्यत्र 'अड्गार्ग्ये'त्यटि न वृद्धिः। चकारस्य पुनर्वृद्धिविधानाऽर्थत्वाच्च 'आतदि'त्यादौ न 'अतो गुणे' इति पररूपम्। नच 'अस्वपोऽस्ती'त्यादाव-न्तवद्भावेन ओकारस्य अट्त्वात्, अजादिधातुपरत्वाच्च दोषः। 'आदि'त्य-नुवर्त्य 'अकाररूपाऽट' इति व्याख्यानात्। अन्तरङ्गत्वात्प्रागेवाऽटि वृद्धौ 'भसोरल्लोप' इत्यस्याऽप्रसक्तेः 'आस्तामि'त्यादौ न दोषः। 'वार्णादाङ्गमि'ति त्वनित्यत्वान्न। छन्दसि वसेः 'आव' इत्यादौ तु आङ्प्रश्लेषेणाऽपि निर्वाहः। सिद्धान्ते हि तत्र 'छन्दस्यपि दृश्यते' इति आडिति दिक्।

सलोप इति। 'लिङः सलोप' इत्यनेन। षत्वमिति। लक्ष्यभेदात् पुनः प्रवृत्तिरिति भावः। एधिषीध्वमिति। 'षीध्वम्' भक्तस्य इडागमस्य तद्ग्रहणेन ग्रहणात् इणन्तात्परत्वाऽभावेन न ढत्वम्[2]। स्वावयवेन पौर्वा-पर्याऽभावात्। ह्रस्वेति। अकार उच्चारणाऽर्थः।

इड्भिन्न इति। 'विभाषेट' इत्युत्तरसूत्रे इड्ग्रहणेन गोबलीवर्दन्या-यादिति भावः। एतन्मतं भाष्ये नोपलभ्यते। सूत्राऽन्तरस्थेन गोबलीवर्द-न्यायग्रहणे च न दृढतरं मानम्। ढधयोरिति। 'मतभेदेने'ति शेषः।

ऊदृदन्तैरिति। यद्यपि भाष्ये 'उवर्णान्ता अनुदात्ता' इति सामान्येन उक्तं, तथापि युप्रभृतिपर्युदासाद्ध्रस्वोवर्णान्तपरं तदिति बोध्यम्। अत एव 'बभूथाततन्थे'ति सङ्गच्छते। 'ऋदन्ता' इति तपरकरणाद्दीर्घॠकारान्ताना-मुदात्तत्वं स्पष्टमेवोक्तं भाष्ये। यौतिरु[3] इति। 'यु मिश्रणे' 'रु शब्दे'। व्याख्यानात्।

१ 'आडभावे 'छन्दसी'ति सूत्रेऽप्यटोऽनुवृत्त्या 'आनट्' 'आवरि'ति न सिध्येत्। 'अनट्' 'अवः' इति तत्र प्राप्नोतीत्यर्थः।

२ 'इणन्तादङ्गात्परत्वाऽभावेन' इति ख. ङ. पाठः।

३ 'यौतिरु इति। अत्र निरनुबन्धकपरिभाषया, साहचर्याच्च 'यु मिश्रणे' 'रु शब्दे' इति लुग्विकरणयोरेव ग्रहणम्, न तु 'रुङ् गतौ, रेषणे च'त्यस्य,

एकाच इति । तेन ऊर्णु-जागृ-दीधी-वेवी-दरिद्राणां व्यावृत्तिः । न च ऊर्णोतेर्नुवद्भावेन एकाऽच्त्वमस्त्येव । अत एव 'ऊर्णुनावे'त्यत्र अनेकाच्त्वप्रयुक्त आम् न, 'ऊर्णोनूयते' इत्यत्र यङ् च सिद्ध्यती'ति वाच्यम् । तेनैव 'नु'प्रयुक्तपर्युदासस्याऽपि सिद्धेः ।

शक्लिति । भाष्ये त्वनुबन्धरहितपाठो दृश्यते ।

पचिति । प्रसिद्धत्वात् 'डुपचष् पाके' इत्यस्यैव ग्रहणम्, न[1] तु 'पच व्यक्तीकरणे' इत्यस्य । दुर्गवर्द्धमानाद्यतिरिक्तमते 'पचि'इति तस्य इदित्वेन, भाष्यादिषु 'पच्' इति अनिदित्पाठेन, तस्य ग्रहाऽसम्भवाच्च । तत्पूर्वोत्तरत्र धातुपाठे सेटामेव दर्शनाच्च । अ[2]त एव 'पचि विस्तारवचने' इत्यस्य चुरादेर्न ग्रहणम् । 'द्वावपी'ति मनोरमा तु दुर्गरीत्या बोध्या ।

युजिति । रौधादिकदैवादिकयो'र्युजिर् योगे' 'युज समाधौ' इत्येतयोर्ग्रहणं[3] बोध्यम् । विनिगमनाविरहात् । 'भाष्यादौ 'युजि' इति धात्वेक-

'युज् बन्धने' इत्यस्य च ग्रहणम् । एतेन 'लुग्विकरणपरिभाषया 'रुङ् गतावि'त्यस्यैव ग्रहणमि'त्यपास्तम् । परिभाषाद्वयविरोधेन तस्यास्त्यागात् । (किञ्च) धातुपाठे तयोः पूर्वत्राऽनुदात्तदर्शनेन, तयोरनुदात्ततैवोचिता । अत एव 'संनत्स्याम्यथ योद्धुं किं, न शेष्ये सत्त्वहीनवदि'ति भट्टिप्रयोगः सङ्गच्छते । ध्वनितं चेदं 'रुङ् गतौ, रेषणे चे'त्यपि केचिदि'त्युक्त्याऽरुचिबीजेन मनोरमायाम्' इति ख. ङ. पाठः । क. कुण्डलितः । मनोरमादिस्थत्वात् ।

१ 'न तु' इत्यारभ्य 'दुर्गरीत्या बोध्या' इत्यन्तः ख. ङ. पाठः । क. कुण्डलितः, मनोरमाशब्दरत्नस्थत्वात् ।

२ अत एव = भाष्येऽनिदित्पाठादेव । चुरादेरिदित्वात्, णिजभावेऽपितस्य न ग्रहणमित्यर्थः ।

३ 'ग्रहणं बोध्यम् । पूर्वोत्तरत्राऽनुदात्तस्यैव दर्शनेन, मध्यस्थयोरपि तथात्वस्यैव युक्तत्वात्' इति ख. ङ. पाठः । क. कुण्डलितः ।

देशेकारविशिष्टस्यैवाऽनुकरणं, न तु इका निर्देश' इति त्वयुक्तम् । इका निर्देशस्यैव प्रक्रमादित्याहुः ।

भुजिः-तौदादिको, रौधादिकश्च । सृजिः-दिवादिः, तुदादिश्च ।

खिदिति । खिद्यतेः, खिनत्तेः, खिन्दतेश्च ग्रहणम् ।

बुद्ध्यतीति । यद्यपि भाष्ये श्यना निर्देशो नाऽस्ति, तथापि बोधतेर्न ग्रहणम्, माधवादिव्याख्यानात् । एवं तृपदृपोरपि श्यना निर्देशो बोध्यः । अत एव 'शे मुचादीनामि'तिसूत्रभाष्ये तौदादिकयोः 'तृपितः' 'दृपित' इत्युदाहृतम् ।

'तप सन्तापे' भ्वादिः, 'तप ऐश्वर्ये' दिवादिश्च, 'तप दाहे' इति णिजभावे चुरादिश्च । 'लुप्' तौदादिक एव, न दैवादिकः । व्याख्यानात् ।

शपिति । 'शप उपलम्भे', 'शप आक्रोशे' इति भ्वादेर्दिवादेश्च ग्रहणम् । 'क्रुश आक्रोशे' । 'क्रुश आह्वाने, रोदने चे'ति पाठान्तरम् ।

श्लिष्यतीति । यद्यप्यत्र श्यना निर्देशो भाष्ये नाऽस्ति, तथाऽपि 'श्लिष आलिङ्गने' इति सूत्रस्थभाष्यप्रामाण्यात्कृतः ।

षान्तेषु मृषिरपि क्वचिद्भाष्यपुस्तके दृश्यते, तथाऽपि सोऽपपाठः । 'मृषस्तितिक्षायामि'ति सेट्निष्ठाया अकित्त्वविधानादित्याहुः ।

'कृष विलेखने' तौदादिको, भौवादिकश्च । 'कृषि-कर्षती तथे'ति व्याघ्रभूत्युक्तेः ।

---

१ 'ग्रहणमि'ति केचित् । तन्न । खिन्दतेः पूर्वोत्तरत्र सेटो दर्शनेन तद्ग्रहणं चिन्त्यम् । खिनत्तेस्तु 'विनद्'साहचर्यादनिट्त्वमुचितम्' इति ख. ङ. पाठः क. कुण्डलितः ।

२ 'तथापि भौवादिकस्य पूर्वोत्तरत्र सेट्दर्शनेन, तथा निर्देशः कृतः' इति ख. ङ. पाठः । क. कुण्डलितः ।

३ 'न दैवादिकः । तस्य पूर्वोत्तरत्र सेट्दर्शनात्' इति ख. ङ. पाठः ।

४ 'उपालम्भे' इति ख. ङ. पाठः ।

५ 'भौवादिकश्च । तौदादिकस्यापि पूर्वत्र अनुवाकदर्शनात् । 'कृषिकर्षती तथे'ति

विषि-शिषी जौहोत्यादि-रुधादिकावेव । 'विष विप्रयोगे' इति क्र्यादिरपि गृह्यते' इति [1]न्यासकृतः। 'जिष्विष्मिष्खष्शिषे'ति [2]दण्डकस्थौ भ्वादी अपि गृह्येते' इति माधवः ।

[3]वसतीति—भौवादिकस्यैव । 'वसिः प्रसारणी'ति भाष्योक्तेः ।

दुहि । 'दुह प्रपूरणे' इत्यस्यैव ग्रहणम्[4] । व्याख्यानात् ।

एवं च कान्त एकः १। चान्ताः षट् ६। छान्त एकः १। जान्ताः पञ्चदश १५। दान्ताः पञ्चदश १५। धान्ता एकादश ११। नान्तौ द्वौ २। पान्तास्त्रयोदश १३। भान्तास्त्रयः ३। मान्ताश्चत्वारः ४। शान्ता दश १०। षान्ता एकादश ११। सान्तौ द्वौ २। हान्ता अष्टौ ८।

श्यना निर्देश इति। 'शे मुचादीनामि'ति सूत्रस्थं भाष्यं, व्याघ्रभूतिकारिका चाऽत्र मानम्। श्लिषः श्यनेति। विषतेरप्युपलक्षणम्। तत्र 'स्विद्य-सिद्ध्य-मन्य-विद्ये'ति श्यना निर्देशो भाष्ये स्पष्टः। श्लिष्यतेर्बुध्यते-

---

व्याघ्रभूत्युक्तेश्च' इति ख. ङ. पाठः।

१ 'इति न्यासकृतः। तन्न। तस्य पूर्वोत्तरत्र सेट्दर्शनात्' इति ख. ङ. पाठः। क. कुण्डलितः।

२ 'दण्डकस्थौ भ्वादी तु न गृह्येते। तयोः पूर्वोत्तरत्र सेट्दर्शनात्' इति ख. ङ. पाठः।

३ 'वसतीति भौवादिकस्यैव। पूर्वत्राऽनुदात्तदर्शनात्। आदादिकस्य, केचिन्मते पठ्यमानदैवादिकस्य च पूर्वोत्तरत्र सेट एव दृश्यन्ते इति, न तयोर्ग्रहणम्। अत एव 'वसिः प्रसारणीति' भाष्योक्तं सङ्गच्छते' इति ख. ङ. पाठः। क. कुण्डलितः।

४ 'ग्रहणम्। दुहिरिति भ्वादेस्तु पूर्वोत्तरत्र सेट्दर्शनेन न ग्रहणम्' इति ख. ङ. पाठः।

५ सङ्कलनया च १०२ धातवो हलन्तेषु अनुदात्ता इत्यर्थः।

बीजं तु प्रागुक्तम्। 'पुंष्ये'ति श्यना निर्देशः, माधवादिव्याख्यानात्।[1]

वसिः शपेत्यादि। एतद्बीजं प्रागुक्तम्।

णिजिर् विजिर्-शक्लृ इति। व्यावर्त्योस्तु 'णिजि शुद्धौ, 'ओविजी', 'शक मर्षणे' इति दिवादिः। अत एव 'ओविजी'त्यस्य ईदित्त्वं चरितार्थम्। (धातुपाठे[2] सेट्मध्यपाठश्च सङ्गच्छते। एवं 'णिजि शुद्धावि'त्यदादेरपि बोध्यम्)। 'शक्लृ' इति तु चन्द्रगोमिमतेन। वस्तुतस्तु भाष्ये, व्याघ्रभूतिकारिकायां च लृदित्पाठाऽभावेन, दिवादेरपि[3] अनिट्त्वमेवोचितम्।

'विद्यति[4]विनदि'ति विकरणनिर्देशस्य व्यावर्त्यं व्यावर्त्योऽन्तरखण्डनव्याजेन दर्शयति–विन्दतिरिति। इष्टः। अनिट्त्वेनेत्यर्थः।

भाष्येपीति। अत एव क्वचिद्भाष्यपुस्तके[5] 'खिद्यति-विन्दति-विनत्ति-विद्यति' इति पाठो दृश्यते। साम्प्रतमुपलभ्यमाने '[6]विन्दि-विद्यनी'ति-पाठेऽपि विन्दिग्रहणेनोभयोरपि ग्रहणम्। विनिगमनाविरहात्। तथा हि–इका निर्देशप्रस्तावात् 'विन्दी'त्यपि तथैव निर्देशः। तत्र नुम्श्नमोरुभयोरपि अप्राप्त्या निर्देशाऽनुपपत्तेर्भाष्यप्रामाण्यादेव विकरणो, नुम् वा कल्प्यः। कृतविकरणस्याऽपि 'तन्मध्यपतित'न्यायेन धातुत्वात्तदनुकरणाद्वा प्रत्यय इति इतरव्यावृत्तये कल्प्यम्। एवं च विनिगमनाविरहेण उभयोर्ग्रहणमिति बोध्यम्। किञ्च विन्दतेः सेट्त्वे' विभाषा गमहनविदविशामि'ति इड्विकल्पस्य विदिविषयेऽभावे तात्पर्यम्, अन्यविषये तु भावे' इति

१ 'पोषतिपुष्णात्योः पूर्वोत्तरत्र सेट्दर्शनात् 'पुष्ये'ति श्यना निर्देशः' इति ख. ङ. पाठः।

२ अयं ख. ग. ङ. पाठः। क. नास्ति।

३ 'दिवादेरपि पूर्वोत्तरत्राऽनिट्दर्शनेन च तस्याऽप्यनिट्त्वमेवोचितम्' इति ख. ङ. पाठः।

४ 'विद्यतिर्विनदिति' इति रेफसहितः ख. ग. ङ. पाठः।

५ 'भाष्ये क्वचित्पुस्तके' इति ख. ङ. पाठः।

६ 'विन्दति विद्यतीति' इति ख. ङ. पाठः।

वैरूप्यप्रसङ्गो, गौरवं च स्यात्। तत्र हि विशिना साहचर्यात्, लुग्विकरण-परिभाषया च तौदादिकस्यैव ग्रहणम्। एवं च अश्रूयमाणविकरणोऽदादिः सेट्क इति ध्वनितम्[1]।

एतेन 'तौदादिकस्याऽनिट्त्वे 'यस्य विभाषाऽविदेरिति वक्तव्यम्'। 'इह मा भूत्–'विदितः'। तत्तर्हि वक्तव्यम्? । न वक्तव्यम्। यदुपाधेर्विभाषा, तदुपाधेः प्रतिषेधः। शविकरणस्य विभाषा, लुग्विकरणश्चाऽयमि'ति 'यस्य विभाषे'तिसूत्रस्थभाष्यमुपादाय–'वेत्तिरत्र विवक्षितः। 'विद्लृ लाभे' इत्यस्य तु प्रतिषेधो भवत्येव–'विन्न' इति। विद्यति–विनत्त्योस्त्वनुदात्तत्वादिट्प्रतिषेध' इति कैयटोक्तं विरुध्येते'ति परास्तम्। शविकरणे विकल्पस्य सत्त्वेन, लुग्विकरणे 'यस्य विभाषे'ति न निषेध' इत्येतन्मात्राऽर्थे नञ्घटिततत्प्रत्याख्यानभाष्यतात्पर्यस्याऽऽवश्यकत्वेन 'श' विकरणस्याऽनेनैव इडभाव इत्यत्राऽप्यर्थे कैयटोक्ते तात्पर्यकल्पने मानाऽभावेन, तस्याऽसङ्गतत्वात्।

किञ्च तौदादिकस्य सेट्त्वे 'अविदेरि'ति वार्त्तिके तस्याऽपि ग्रहणं दुर्वारम्। एवं च तदर्थं वार्त्तिकस्य 'यदुपाधेरि'त्याश्रयणेऽपि आवश्यकत्वेन, प्रत्याख्यानभाष्याऽसङ्गतिरेव। मम तु त्रयाणामप्यनुदात्तत्वेन, वार्त्तिके लुग्विकरणस्यैव ग्रहणमिति, न कश्चिद्दोषः। अत एव 'ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानि'त्यर्थे 'परिवेत्ते'ति तृजन्तप्रयोगः सङ्गच्छते। अत एव 'विदेरलुक' इति चान्द्रसूत्रं सङ्गच्छते।

नवेति। 'तेन रक्तं रागात्', 'तदस्मिन्नन्नं प्राये', 'क्तोऽकृतमितप्रतिपन्नाः', 'शुष्कधृष्टौ' 'क्तेन नञ्विशिष्टेने'त्यादिनिर्देशात्, 'नुन्नः' 'मग्नः' 'पुष्टः' 'मङ्क्ता' 'मङ्क्तव्यमि'त्यादिभाष्यव्यवहाराच्च, 'वसतिक्षुधोरिट्' 'नुदविदोन्दत्रा' 'मस्जिनशोर्झली'त्यादिगमकाच्चेति भावः। 'तुद्-

1 इतोऽग्रे—'अत एव तौदादिकस्य अनुदात्तमध्यपाठो धातुपाठे सङ्गच्छते' इति ख. ङ. पाठः।

भाष्याऽनुक्त' इति पक्षे 'ततवद्वा, तुम्नवद्वे'ति भाष्यप्रयोगो गमको बोध्यः ।

अकर्मक इति । 'देवदत्तो यज्ञदत्तं स्पर्द्धते' इत्यत्र स्पर्द्धापूर्वकशब्दनाऽऽदौ स्पर्द्धधातुर्बोध्यः । एवं 'चाणूरमाह्वयते' इत्यत्राऽपि बोध्यम् । स्पष्टं चेदं 'स्पर्द्धायामाङ' इत्यत्राऽऽकरे । केचित्तु 'अभिभवेच्छैव धात्वर्थः । क्वचिदकर्मकप्रयोगस्तु कर्मणोऽविवक्षया बोध्य' इत्याहुः ।

शर्पूर्वाः खय इति । 'शर्पूर्वा' इति अतद्गुणसंविज्ञानो बहुव्रीहिः । तेन शरो न शेषः । अत्र 'आदिरि'त्यनुवर्त्तते । तत्र 'शर्पूर्वा' इत्युक्तेः खय आदित्वं गौणं बोध्यम् । तेन 'वव्रश्चे'त्यत्र चकारस्य न शेषः ।

खयः किम् ? । 'सस्रम्भ' । शर्पूर्वाः किम् ? । 'तुत्रौके' इत्यत्राऽन्त्यककारस्य मा भूत् । नच आदिग्रहणाऽनुवृत्त्या निस्तारः । सूत्रवैयर्थ्याऽऽपत्तेः । सामर्थ्यात् गौणाऽऽदिग्रहणे तु फक्कत्यादौ दोषः ।

गाधृ प्रतिष्ठा । आस्पदम्—स्थापना, अवस्थानं वा । ग्रन्थः= सन्दर्भः । नाधृ । उपतापो-रोगः । 'उपघात' इत्यन्ये । अनुदात्तेत्त्वादेव सिद्धे नियमाऽर्थमित्याह—आशिष्येवेति । 'आशीःप्रतिपादक नाथ एवे'ति वाच्योऽर्थः । अत एवाऽर्थाऽन्तरे शेषत्वेन 'शेषादि'ति परस्मैपदमेव ।

अत एक । 'एक'शब्दोऽसहायवचनः । द्विवचनान्तेन समासः । द्वयोरेव मध्यसम्भवादित्याशयेनाऽऽह-असंयुक्तेत्यादि । 'लिटी'ति च आदेशविशेषणम् । एकदेशाऽन्वयेऽपि सौत्रत्वाद् वृत्तिः । ( अत एव 'लिटी'ति चरितार्थम् )। तदाह-लिण्निमित्तेति । 'तन्निमित्ताऽऽदेशादिभिन्नमि'त्यर्थः।

---

१ इतोऽग्रे-अत्र'स्प-स्प' इति द्वित्वम् । रेफस्य 'न न्द्राः' इति द्वित्वनिषेधादित्याहुः । इति ख.ङ.पाठः । तत्त्वबोधिन्यान्तु-इह 'स्पर्द्ध' इत्यत्र रेफस्याऽपि द्वित्वम् । द्वितीयस्यैकाचः सम्बन्धिरेफस्यैव 'न न्द्रा'इति निषेधात्'इत्युक्तम् । 'आदिभूतादचः पराः संयोगादयो नदरा द्विर्न भवन्तीत्यर्थ' इति तु लघुशेखरे । तद्विरुद्धत्वाच्चाऽयं पाठः क. कुण्डलितः ।

२ अयं ख. ङ. पाठः । क. ग. नास्ति ।

अङ्गाऽधिकारेण, 'गमहने'त्यतो' 'बबादे'त्यादिवारणेन सप्रयोजनतयाऽनुवृत्त'किती'त्यस्याऽर्थोऽधिकारेण प्रत्ययपरतया च, 'प्रत्यये परे' इत्यर्थो लब्धः। स च प्रत्ययः प्रत्यासत्तिन्यायात्, आदेशविशेषणत्वेनोपस्थितो लिडेव गृह्यते इत्याशयेनाऽऽह—क्किति लिटीति। 'लिटी'त्यस्याऽऽवृत्त्या एतदर्थलाभ' इत्यन्ये[1]। अभ्यासलोप इति। विशिष्टविधिरत्र। प्राप्ताऽप्राप्तविवेकेन लोपमात्रे विधेयता पर्यवस्यतीत्यन्यदेतत्। 'सूत्रे लुप्तषष्ठीकं पृथक्पदमि'त्यन्ये। लिटीति किम्। पापच्यते। न च परत्वाद्दीर्घत्वं बाधकम्। अभ्यासविकारे बाध्यबाधकभावाऽयोगात्। नच 'इदं यत्रैकतरत्र कृते सर्वेषां प्रवृत्तिस्तद्विषयमि'ति कैयटोक्तं युक्तम्। दीर्घे कृते ह्रस्वस्याऽप्राप्त्या, 'अचीकरदि'ति 'गुणो यङ्लुको'रि'तिसूत्रोक्तदुदाहरणपरभाष्यविरोधाऽऽपत्तेः। एत्त्व-लोपयोर्नित्यत्वाच्चेत्याहुः।

थलि च सेटि। 'सेटी'तिसूत्रसामर्थ्यादेव अकिल्लिड्विषये लब्धे थल्ग्रहणं स्पष्टाऽर्थमित्याहुः। न चेदं 'सेट्येवे'ति नियमाऽर्थं स्यात्। योगविभागवैयर्थ्याऽऽपत्तेः। विधित्वस्य न्याय्यत्वाच्च। ननु 'अनादेशादेरि'त्यत्र 'आदि'ग्रहणं व्यर्थम्। विधिसामर्थ्येन, शसिदद्योः प्रतिषेधवचनेन च वैरूप्यसंपादकस्य हलादिःशेषाऽतिरिक्तस्याऽऽदेशस्य ग्रहणेनैवेष्टसिद्धेरिति चेन्न। 'देभतुरि'त्यादौ मध्यलोपे, एत्त्वाऽभ्यासलोपाऽनापत्तेः। न चाऽस्य न कित्त्वं, दम्भेः संयोगाऽन्तत्वादिति वाच्यम्। 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वे'ति व्याकरणाऽन्तरस्थस्य इहाऽप्याश्रयणेन कित्त्वस्य सुलभत्वात्। अत्र च 'आदि'ग्रहणमेव मानम्। अत एव 'तमिन्दुः परिषस्वजे' इति प्रयोगः,'सदेः परस्य लिटी'तिसूत्रस्थ'परिषस्वजे' इति भाष्यप्रयोगो, 'देभतुरि'तिप्रकृतसूत्रस्थभाष्यप्रयोगश्च सङ्गच्छते।

नच नलोपस्य आभीयाऽसिद्धत्वादसंयुक्तहल्मध्यस्थत्वं दुर्लभमिति वाच्यम्। 'आदि'ग्रहणसामर्थ्येन श्रौताऽसंयुक्तहल्मध्यस्थस्यैव ग्रहात्।

1. 'एतेन 'लिटी'त्यस्याऽऽवृत्त्या एतदर्थलाभ इत्यपास्तम्' इति ख. ङ. पाठः

ग्रन्थ्यादेस्तु कित्त्वपक्षे नलोपेऽपि न। रेफमाश्रित्य संयुक्तहल्मध्यस्थत्वात्। एवं च 'दम्भेश्चे'ति प्रकृतसूत्रस्थाऽऽदिग्रहणसिद्धार्थोऽनुवादकमेवेत्याहुः।

तेष्विति। वक्ष्यमाणेषु 'देभे' इत्यादिषु दकारपकारादिषु सत्स्वपी-त्यर्थः। एकेत्यादि किमिति। 'आटतुरि'त्यादौ तु 'मध्ये' इत्येतावताऽपि वारणसम्भवादिति प्रश्नः। चकणतुरिति। नचैवं 'बभणतुरि'त्यत्र 'अभ्यासे चर्चे'त्यस्याऽसिद्धत्वादेत्त्वं स्यादिति वाच्यम्। 'फलि-भजि'-ग्रहणेन एत्त्वाऽभ्यासलोपयोरभ्यासाऽऽदेशस्याऽसिद्धत्वाऽभावज्ञापनात्।

उत्प्लवनमिति। 'उत्प्लुत्य गमनमि'त्यन्ये

इदितो। 'इदित' इति कर्मधारयः। धातोर्विशेषणम्। तेनेदिदन्तस्य धातोर्नुम्विधानात् चक्षिङादौ न दोषः। अत एव इरादौ प्रत्येकम् इत्संज्ञामाश्रित्य 'इर इत्संज्ञा वक्तव्ये'ति वार्त्तिकप्रत्याख्यानेऽपि न दोषः। 'धातोरि'ति तु धातूपदेशाऽवस्थायां नुम् यथा स्यादि'त्यर्थम्। तेन 'हुण्डे'-त्यादौ 'गुरोश्च हल' इति अकारप्रत्ययसिद्धिः। तासौ, सिचि च न दोषः। अन्तेदित्त्वाऽभावात्। सच्-तासोरेव वक्तुं शक्यत्वाच्चेति स्पष्टं भाष्ये।

श्विन्दते इति। 'श्वेतो भवती'त्यर्थः। अभिवादनं-नतिः। 'तत्पूर्वक-माशिषो वाचनं तदि'त्यन्ये। वन्दत इति। 'हठगृहीतमहिलायां 'वन्दी'ति अस्यैव। बशाद्युच्चारणं त्वत्राऽपभ्रंश' इति माधवः।

भदि। कल्याणं-मङ्गलम्। सुखम्-आत्मगुणः। मदि स्तुति। 'मोदो हर्षः। मदो गर्वः। स्वप्न-आलस्यमि'ति माधवः। 'निद्रागता-ऽवस्थाविशेष' इत्यन्ये। स्पदि। चलनम्—कम्पनम्।

न शस। 'शसु हिंसायाम्'। दन्त्याऽन्तः। तालव्याऽन्तपाठस्तु सूत्रे आकरविरुद्धः। अवरुवंत्वंषष्ठ्यर्थः। 'गुण'शब्दो न अदेङ्मात्रपरः। रासि-ददि-ग्रहणवैयर्थ्याऽऽपत्तेः। व्यपदेशिवद्भावेन गुणाऽवयवत्वात्। न च तद्ग्रहणादत्र व्यपदेशिवद्भावाऽनाश्रयणम्, अत एव विधिनिषेधयो-

र्व्यवस्थाऽप्युपपन्नेति वाच्यम् । अतिदेशबाधाऽपेक्षया व्याख्यानेन लक्षणया 'गुणशब्देन भावित'परत्वस्यौचित्यात् ।

भावितत्वं च-प्रयोज्यत्वं, साक्षात्परम्परासाधारणम्। तत्र 'शशरिथे'-त्यादौ गुणशब्देन कृताऽरोऽवयवोऽकारः । 'लुलुविथे'त्यादौ तु 'गुण'-शब्देन ओकारः। तस्याऽव्। तदवयवोऽकारः। तदाह—गुणशब्देन भावितस्य चेति। 'ऋकाराऽन्ताऽङ्गाऽन्त्यस्य ऋकारस्याऽर् गुणो भवती'ति उरण्रपरैकवाक्यतया विधानात्, अरो गुणशब्देन भावितत्वं बोध्यम्। अत एव 'तृफले'ति सूत्रे तृग्रहणं चरितार्थम् । ध्वनितं चेदं 'रदाभ्यामि'-ति सूत्रे भाष्ये। तत्र 'न शसददवादि-ऋृणामि'त्येव सिद्धे 'गुण'ग्रहण-सामर्थ्यात् रं, गुणशब्देन भावितस्थानिकाऽवमादाय 'लुलविथे'त्यादावपि प्रवृत्तिः। ध्वनितं चेदं 'थलि च सेटी'ति सूत्रे भाष्ये।

ष्वद स्वर्द । आस्वादनम्—अनुभवः । यथा 'स्वदस्व हव्यानि' । 'अनुभवे'त्यर्थः । रुचाविति । धातूनामनेकाऽर्थत्वादिति भावः । यथा 'अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा' इत्यत्र न स्वदते = न रोचते इत्यर्थः ।

धात्वादेः । 'धातु'ग्रहणं 'षडि'त्यर्थम् । सुप्धातुव्यावृत्तये 'उपदेशे' इत्यनुवर्त्त्यम् । एवं च 'धातु'ग्रहणं व्यर्थम् । 'षडि'त्यादेरपि तेनैव वार-णात् । तदुक्तं भाष्ये—'उद्देशश्च प्रातिपदिकानाम्, नोपदेश' इति । 'आदेरि'ति लषत्यर्थम् । षोपदेशफलन्तु-'असिष्वददि'ति । धातूनामेव दन्त्यादीनां पाठे तु 'सिषेधे'त्यादौ षत्वं न स्यात् । येषां तु षत्वं नेष्टं, ते दन्त्यादय एव पठ्यन्ते, 'सृ गतावि'ति यथा । उर्द माने । इह 'मानम्—सुखमि'ति 'संमता'कृत् । चात् आस्वादने ।

उपधायां च । 'सिपि धातोरि'त्यतो 'धातोरि'ति, 'र्वोरुपधाया'इत्यतो 'र्वोरिक' इति, 'हलि चे'त्यतो 'हली'ति चाऽनुवर्त्तते । तदाह—धातोरि-त्यादि । धातोः किम् ? । 'कुरूः' । 'कुर्वौ'[1] । अत्र दीर्घो मा भूत् । न च-

1 'कुर्वौ' इति ख. क. पाठः ।

यणादेशस्य स्थानिवत्त्वम् । दीर्घविधौ तन्निषेधात् । यथोद्देशेऽसिद्ध-परिभाषाया अप्यप्रवृत्तेश्च । किञ्च 'धातोरि'त्यस्याऽभावे पदाऽधिकारस्य सत्त्वेन 'पदोपधाभूतयोरि'त्यर्थे 'कूर्दते' इत्यसिद्धिः स्यादि'त्याहुः ।

'स्फूर्जादेर्दीर्घोच्चारणादयं दीर्घोऽनित्यः । तेन 'हुर्छती'त्याद्यपी'ति केचिदि'ति माधवः । वस्तुतः स दीर्घपाठो लेखकप्रमादात् ।

कुर्द खुर्द । गुर्दक्रीडे'त्यर्थनिर्देश' इत्येके । 'गुर्दे'ति पृथग्धातुरि' त्यन्ये । तन्मतेनाऽऽह—गोर्दत इति ।

साधादिषु दन्त्याऽऽदिपाठस्यैव दृश्यमानत्वेन, पाठस्य सङ्कीर्णत्वा-लक्षणेन षोपदेशान् बोधयति—सेगित्यादि । भाष्ये कचिद्ध्रस्वाऽन्तस्य, कचित् 'स्तृ' इति दीर्घान्तस्य पाठदर्शनादुभयोपादानम् । 'दन्त्याऽचौ अन्तौ = अव्यवहितपरौ यस्य स सकार आदिर्येषां ते एकाचः षोपदेशा' इत्यर्थः । पर्युदासस्य सदृशपरत्वात् अव्यवहितत्वांऽशलाभः । एवं च 'ष्ठा गतिनिवृत्तौ' 'षिध गत्यामि'त्यादौ पठ्यमानः षकारः शुद्ध एव । साधादौ तु साम्प्रतम् अपठ्यमानोऽपि प्राक् स्थित इत्यनुमेयमिति भावः ।

'दन्त्ये'त्यादि किम् ? । 'चुस्कुन्दे' । एकाचः किम् ? । 'सोसूच्यते' । सूचि-सूत्री-अदन्तौ । अतिव्याप्तिवारणाय 'सेगि'त्याद्युक्तम् ।

यद्यपि 'एकाच' इति षाष्ठभाष्ये न दृश्यते, तथाऽपि यङ्विधायके 'सूचिसूत्री'ति वार्त्तिके 'सोसूच्यते' इति भाष्योदाहरणात्पूरितम् । 'सेक्सृवर्जमि'तिपर्युदासाद्वा तल्लाभः । 'स्त्यै'पर्युदासे 'स्त्यै ष्ट्यै' इति द्विःपाठोऽपि मूलम् । एवं 'सेवृ''षेवृ'इति धातुद्वयं पठतां सेवति-रषोपदेशोऽपि बोध्यः । 'परन्तु स पाठोऽनार्ष' इति प्रामाणिकाः ।

उक्तलक्षणेनाऽसङ्गृहीतान् षट् धातून् शृङ्गग्राहिकया सङ्गृह्णाति—ष्वष्केति । यद्यप्यसौ भाष्ये न पठितः, तथापि सत्वप्रतिषेधवार्त्तिकबला-

१. अयं पाठः क. ग. नास्ति ।

२ 'गुर्देति पृथक् धातुः । तन्मतेनाऽऽह' इति क. पाठः ।

दनुमीयते । अत्र ष्ठिवुरपि बोध्यः । प्रतिषेधवार्त्तिकबलात् । टवर्ग-द्वितीयत्वपक्षे[1] लक्षणेनाऽसङ्ग्रहात् । तस्याऽषोपदेशत्वे 'मधुलिट् ष्ठीवती'-त्यत्र धुडापत्तेः । न चेष्टाऽऽपत्तिः । 'श्वलिट् ष्ठीवती'त्यत्र धुट् प्रसज्येते'ति भाष्यविरोधात् । न चेदं भाष्यं द्वितीयथकारकधातुमादाय प्रवृत्तमिति (न[2] दोष) इति वाच्यम् । अस्य धुटि तस्य वैकल्पिकत्वेन, रूपद्वयस्य इष्टत्वेन, आपत्त्यसङ्गत्यापत्तेः । यादित्वं च धात्वोराश्रित्य निषेधवार्त्तिकं प्रत्याख्यातमिति दिक् ।

(ह्लादी[3] । अस्य ईदित्त्वं 'श्वीदित' इति निष्ठायामिडभावाऽर्थम् । 'आह्लन्नः' । 'ह्लादो निष्ठायामि'त्युपधाह्रस्वः ) । स्वाद । अषोपदेशत्वात् 'असिस्वदत्' । भ्रथि कौटिल्ये । कौटिल्यम्–शाठ्यं, वक्रता वा ।

श्लाघायामिति । अविद्यमानगुणसम्बन्धज्ञापनं श्लाघा ।

अथाष्टात्रिंशदिति । 'अष्ट त्रिंशदि'ति पाठे भिन्ने पदे । 'अष्ट च त्रिंशच्च तवर्गीयान्ता यस्मिन्नि'ति बहुव्रीहिः, उद्भूताऽवयवभेदः समुदायोऽन्यपदार्थ' इति केचित् ।

इट ईटि । 'संयोगान्तस्ये'त्यतो 'लोप' इति, 'रात्सस्ये'त्यतः 'सस्ये'ति चाऽनुवर्त्तते ।

वदव्रज । हलन्तत्वादेव सिद्धे 'नेटी'ति निषेधबाधनाऽर्थं वदिव्रज्योर्ग्रहणम् । हल्ग्रहणे जातिग्रहणम् । तेन 'अराङ्क्षीदि'त्यादिसिद्धिः । तदन्तविधिनैव सिद्धे, 'अन्त'ग्रहणं स्पष्टाऽर्थम् । ननु 'अच्'ग्रहणसामर्थ्यात्, 'नेटी'ति निषेधाच्च अनन्त्याऽचो ग्रहणे सिद्धे, 'हलन्त'ग्रहणं व्यर्थम् । 'अराङ्क्षीदि'त्यादावपि सिचाऽङ्गस्य विशेषणेन सिद्धेरिति चेन्न । 'इत आरभ्य वृद्धिभाज एव सिच्परत्वेन विशेष्यन्ते' इत्यर्थज्ञापनाऽर्थं तत्स-

१ इतोऽग्रे—'न च तत्पक्षे नाऽयं षोपदेशः, किन्तु सोपदेश एव, ष्टुत्वनिष्पन्नश्च ष इति वाच्यम् । 'श्वलिट् ष्ठीवतीत्यत्र' इति ख. ग. पाठः ।

२ अयं ख. क. पाठः ।

३ अयं ख. क पाठः । क. ग. तु नास्ति, मनोरमास्थत्वात् ।

स्वात्। एवं च 'अराक्षीदि'त्येतत्सिद्धये जातिग्रहणाय तदावश्यकम्। अत एव 'लावस्थायामडागम' इति पक्षेऽपि 'अपाक्षीदि'त्यादौ अटो न वृद्धिरित्याहुः।

अते: 'इणभीकापाशल्यतिमर्चिभ्यः कन्नि'ति कनि 'अत्क'शब्द आसन्नवाची। 'अत्के चेन्मधु विन्देते'ति प्रयोगः।

इर इति। इदं सुत्यजम्। प्रत्येकम् इकार-रेफयोरित्संज्ञयैव सिद्धेः। न च नुमापत्तिः। चक्षिङ इव अन्त्येदित्त्वाऽभावादित्याहुः।

यकाररहितोऽपीति। 'मधुश्चुतं घृतमिव सुपूतमि'ति प्रयोगादिति भावः। मन्थ। विलोडनं—क्षोभणम्।

षिध। 'अयमनुदिदि'ति वृत्तिमाधवादिसंमतम्। अत एवाऽनिट्कारिकासु 'सिद्ध्यती'ति श्यना निर्देशात् 'सिधितमि'ति वृत्तावुदाहृतम्। उदित्त्वे तु क्त्वायामिड्विकल्पात् 'यस्य विभाषे'ति निषेधः स्यात्।

निषेधे प्राप्त इति। इदमुपलक्षणम्—'अवष्टभ्नाति, 'अवष्वणती'-त्यादौ अप्राप्तस्यैव विधानात्।

उपसर्गात्सुनोति। 'सुनोत्यादीनां पञ्चानां[1] श्तिपा निर्देशो यङ्लुङ्-निवृत्त्यर्थ' इति प्राञ्चः। तन्न[2]। स्तौति-स्तोभत्योः 'शर्पूर्वा' इति खयः शेषेण, तयोः फलाऽभावेन, 'पञ्चानामि'त्यस्याऽसङ्गतत्वात्। 'स्थादिष्वेवाऽभ्यासस्य षत्वं, न सुनोत्यादिष्वि'ति नियमेनैव वारणसम्भवे, इतरेष्वपि फलाऽभावाच्च। न च गणनिर्देशात् 'स्थादिष्वि'त्यस्य यङ्लुकि अप्राप्तिः। [3]प्रसिद्धगणपठितनिर्देशस्यैव तत्र ग्रहणात्। न ह्यत्र तथा। 'उपसर्गात्

१ 'सुनोत्यादीनां पञ्चानाम्' इति ख. ङ. पाठः। 'पञ्चानामि'ति च क. ग. नास्ति।

२ 'तन्न' इत्यारभ्य 'स्थादीनामेव तत्र ग्रहणात्' इत्यन्तः ख. ङ. पाठः। क. कुण्डलितः। शब्दरत्नस्थत्वात्।

३ 'गणपाठत्वेन प्रसिद्धगणपठितनिर्देशस्यैव' इति ख. ङ. पाठः। 'गणपाठ-प्रसिद्धगणनिर्देशस्यैव' इति च शब्दरत्नपाठः।

सुनोती'त्यादिसूत्रस्थ-स्थादीनामेव तत्र ग्रहणात् । एतत्[१] उपसर्गपूर्वाणा-मेतद्यङ्लुगन्तप्रयोगाणां प्रामाणिकत्वे, 'श्तिपा शपे'त्यस्य च प्रामाणिकत्वे बोध्यम् ।

'सेनये'ति णिजन्तो नामधातुरेव गृह्यते । शीघ्रोपस्थितिकत्वात् । शपा निर्देशस्तु स्तौत्यादिश्तिपानिर्देशवत् । न च यङ्लुङ्निवृत्त्यर्थः । अनेकाच्त्वेन यङसम्भवात् ।

'सेधे'ति शपा निर्देशो दैवादिकनिवृत्त्यर्थः । यङ्लुङ्निवृत्त्यर्थश्चे'[२]ति हरदत्तः । यत्तु 'अस्य यङ्लुकि अप्रवृत्तौ 'सेधतेर्गताावि'ति सूत्रे श्तिपा निर्देशो व्यर्थः स्यात् । स हि यङ्लुकि षत्वपरित्राणेनाऽर्थवानि'ति माधवः । तन्न । ततो[३] यङ्लुकः प्रामाणिकत्वे, गत्यर्थे षत्वप्रवृत्त्या तस्य चारितार्थ्येन, गतिभिन्नाऽर्थे 'श्तिपा शपे'ति निषेधबाधे मानाऽभावात् ।

अत्राऽनित्यत्वान्निरनुबन्धकपरिभाषा न प्रवर्त्तते । तेन 'षिधू शास्त्रे' इत्यस्याऽपि ग्रहणम् । अत एव 'विप्रतिषिद्धमि'त्यादि-निर्देशाः सङ्गच्छन्ते इत्याहुः ।

कवर्गस्याऽसम्भवात् 'इण' इत्यनुवृत्तम्–'उपसर्गादि'त्यस्य विशेष्यम् । तात्स्थ्यात्ताच्छब्द्यमित्याह—उपसर्गस्थादिति । 'इणन्तादुपसर्गादि'ति-व्याख्याने तु 'निःषेधती'त्यादि न सिद्ध्येत् । सिद्धान्ते तु 'नुम्विसर्जनीय-शर्व्यवायेऽपी'त्यधिकारात्षत्वं भवत्येव । तव[४] तु विरोधात्तत्सम्बन्ध एव न स्यादिति बोध्यम् । 'यत्क्रियायुक्ता' इति न्यायेन निर्गतः सावको-

---

१ एतत्सर्वम् उपसर्गपूर्वाणाम्' इति ख. ङ. पाठः ।

२ 'यङ्लुङ्निवृत्त्यर्थश्च' इत्यारभ्य 'मानाऽभावात्' इत्यन्तः ख. ङ. पाठः । क. कुण्डलितः । मनोरमाशब्दरत्नगतत्वात् ।

३ 'ततो यङ्लुकः प्रामाणिकत्वे' इति ख. ङ. पाठः । ग. तु नास्ति । क. तु कुण्डलितः । शब्दरत्नगतत्वात् ।

४ 'तव तु विरोधात्सम्बन्ध एव' इति ख. ङ. पाठः ।

यस्मात् 'निःस्रावक' इत्यादौ न। ण्यन्ते तु अभीत्यादीनां प्रकृतिवाच्याऽर्थ-विशेषणत्वे 'अभिषावयति'। णिवाच्यं प्रति विशेषणत्वे सुनोत्युपसर्गत्वाऽभावान्न षत्वम्। धात्ववयवत्वाऽधिकरणाऽसमभिव्याहृतसुनोत्यादि-प्रतिपाद्यस्यैव तदर्थत्वादिति स्पष्टं भाष्ये।

'स्थादिष्वि'त्यादौ सौत्रक्रमस्योपजीव्यत्वेन, तत्क्रमेण षत्वप्रकरणं व्याचष्टे—सदिरप्रतेः। षष्ठ्यर्थे प्रथमा।

स्तन्भेः। भात्पूर्वोऽत्र नकारः। सौत्रस्येति। 'स्तंम्भु''स्तुम्भु' इति-निर्दिष्टस्यैव प्रतिपदोक्तत्वाद्ग्रहणम्। 'ष्टभि' इत्यस्य तु 'स्तन्भे'ति रूपं लाक्षणिकमिति भावः। 'उदः स्थे'त्यत्र तु भात्पूर्वो मकारः। तेन तत्र उभयोरपि ग्रहणम्, लाक्षणिकत्वाऽविशेषात्। उत्तरार्थ इति। 'अवाच्चे'-त्यत्र सदेरसम्बन्धायेत्यर्थः। ननु सदेरालम्बनाऽऽविदूर्ययोर्वृत्त्यभावादेव असम्बन्धः सिद्धोऽत आह—किञ्चेति। 'स्तम्भेरि'त्यत्रेति भावः।

अवाच्चा। चकारश्चिन्त्यप्रयोजनः। आलम्बनम्—आश्रयणम्। 'न नञ्पूर्वादि'ति निषेधेऽपि आविदूर्ये निपातनादेव प्रत्ययः। आविदूर्यम्—सामीप्यम्। 'अर्थाऽभावेऽव्ययीभावस्य नञ्तत्पुरुषेण सह विकल्पात्, अव्ययीभावात्ष्यञ् सुलभ' इति कश्चित्। तन्न। धर्मिपराऽविदूरशब्देन अव्ययीभावेऽर्थाऽसङ्गतेः। धर्मपरेण तस्मिंस्तु ष्यञो वैयर्थ्याऽऽपत्तेरित्याहुः। तच्च प्रयोगोपाधिः। 'अवष्टब्धा गौः'। 'निरुद्धा सती समीपे आस्ते' इत्यर्थः।

वेश्च स्वनो। 'विष्वणति मांसम्'। 'सशब्दं भुङ्क्ते' इत्यर्थः। भोजने किम्?। 'विस्वनति वीणा'।

१ 'णिवाच्यं, द्योत्यं वा प्रति' इति ख. ङ. पाठः।

२ 'स्तंभु' 'स्तुंभु' इति अनुस्वारघटितः क. ग. पाठः।

३ 'अर्थाऽभावे' इत्यारभ्य 'प्रयोगोपाधिः' इत्यन्तः ख. ङ. पाठः। क. कुण्डलितः शब्दरत्नगतत्वात्।

४ 'धर्मपरे तस्मिंस्तु' इति लघुशब्दरत्नपाठः।

परिनिविभ्यः सेव । 'सेवे'त्यत्र अकार उच्चारणाऽर्थः । 'षेवृ सेवने' । 'सुट्'-आगमः । स्तु-स्वञ्ज्योः पर्यादिपूर्वत्वे 'सिवादीनां वाऽड्व्यवाये' इति विकल्पाऽर्थं पुनर्वचनम् । 'सित:'—'षिञ् बन्धने', क्ताऽन्तः । न तु 'षोऽन्तकर्मणि' । विधित्वस्य न्याय्यत्वात्, 'सय'साहचर्य्याच्च । तत्र हि अजन्तः षिञ् धातुः । प्रत्ययविशिष्टग्रहणान्नेह—'विसिनोती'त्यादौ ।

प्राक्सितादिति । एतत्सम्बन्धाऽर्थमेव 'प्राक्सितादि'त्युत्तरं 'स्थादिषु' इति पठितम् । इदं च 'सुविनिर्दुर्भ्यः' इति सूत्रे भाष्ये स्पष्टम् ।

इह द्वे वाक्ये । (१) 'स्थादिष्वभ्यासेने'ति एकम् । अत्र क्रियाऽपेक्षायां 'व्यवायेऽपी'त्यनुवर्त्तते । तदाह—व्यवायेऽपीति । अपिना अव्यवायेऽपि । तेन 'अभिषिषेणयिषति' 'अभिषिषिक्षती'त्यादिसिद्धिः[1] । एतेन 'आदेश-प्रत्यययोरि'त्यनेनैव सिद्धे, इदं व्यर्थमि'त्यपास्तम् । आद्ये 'सेना'शब्द-स्याऽव्युत्पन्नत्वेन आदेशसकाराऽभावात् । द्वितीये[2] 'स्तौतिण्योरि'ति नियमेनाऽप्राप्तेः ।

(२) 'चाऽभ्यासस्ये'ति द्वितीयं व्याचष्टे—एषामेव चेति । 'प्राक्-सितात् चेदेषामेवे'त्यर्थः । तेन 'अभिसुसूषति' 'अभिसिषासती'त्यादौ अभ्यासस्य षत्वाऽभावः । अत्र आद्ये उक्तनियमात् अभ्यासस्य न । 'स्तौतिण्योरि'ति नियमात् द्वितीयस्य न । द्वितीये षणोऽभावात् अभ्यासा-त्परस्य षत्वम् । पूर्वस्य तु न, उक्तनियमादिति बोध्यम् ।

गङ्गां विसेधतीति । 'सिषेधे'त्यादौ 'आदेशप्रत्यययोरि'ति षत्वं

---

१ 'अभितष्ठौ' 'अभिषिषिक्षती'त्यादिसिद्धिः' इति ख. ङ. पाठः ।

२ 'द्वितीये ( = 'अभितष्ठौ' इत्यत्र ) इणः परत्वाऽभावात् । तृतीये 'स्तौतिण्यो-रि'ति नियमेनाऽप्राप्तेः । न च पूर्वत्राऽसिद्धत्वस्य द्वित्वे निषेधात्, 'पूर्वं धातुरुपसर्गेणे'ति पक्षे अन्तरङ्गत्वात्पूर्वं षत्वे, कृतषत्वानामेव द्वित्वे 'अभितष्ठौ' इत्यस्य सिद्धिर्विनाऽप्येतद्वचनमिति वाच्यम् । 'पूर्वं धातुः साधनेने'ति पक्ष-सत्त्वादित्याहुः' इति ख. ङ. पाठः । क. कुण्डलितः ।

भवत्येव, 'अनन्तरस्ये'ति न्यायात् 'सेधतेरि'त्यनेन 'आदेशप्रत्यययो-रि'त्यस्याऽनिषिद्धत्वादित्याहुः ।

'सिचो यङी'त्यादिसाहचर्यात्सर्वषत्वनिषेधः। तेन 'गङ्गां सिसेधे'-त्येव। 'उपसर्गादि'त्यस्य तु नाऽत्र सम्बन्धः। विच्छिन्नत्वादि'त्यपरे।

षिधू शास्त्रे। माङ्गल्यम्—मङ्गलक्रिया। स्वार्थे ष्यञ्। शासनमिति। अन्ये तु 'शास्त्रविषयकं ज्ञानमि'त्याहुः।

स्वरतिसूतीति। श्तिपानिर्देशे गुणाऽभावो ह्रस्वाऽन्तभ्रमव्यावृत्त्यर्थः सौत्रो बोध्यः। 'सूङ' इति वक्तव्ये सूति-सूयत्योः पृथङ्निर्देशो 'लुग्वि-करणाऽलुग्विकरणयोरि'ति परिभाषाज्ञापनाऽर्थ' इति प्राञ्चः। न च साह-चर्यादलुग्विकरणस्यैव ग्रहणं भविष्यति 'सूङ' इत्युक्तेऽपीति वाच्यम्। तस्य बहुशो व्यभिचारात्। लुग्विकरणपरिभाषायां 'लुग्विकरणस्यैवे'ति नोक्तम्। लक्ष्याऽनुरोधेन, व्याकरणाऽन्तरपठिततया च तथैव ज्ञापनादि-त्याहुः। ध्वनिता चेयं परिभाषा 'यस्य विभाषे'त्यत्र भाष्ये। तत्र 'विदित' इतिप्रयोगे निषेधमाशङ्क्य, 'यदुपाधेर्विभाषा, तदुपाधेर्निषेधः, 'विभाषा गमहनविदविशामि'ति सूत्रे शविकरणस्य ग्रहणम्, लुग्विकरणश्चाऽय-मि'त्युक्तम्। तत्र चो हेतौ। यतोऽयं लुग्विकरणः अतो 'विशि'साहचर्यात् 'श'विकरणस्यैव ग्रहणं, न तु 'हनि'साहचर्यादस्याऽपि। एतत्परिभाषा-ऽनुग्रहायेति तदाशयः। 'धूञः[1] सानुबन्धकनिर्देशो 'धू विधूनने' इत्येत-द्व्यावृत्त्यर्थः। 'इट् सनि वे'त्यतो 'वे'त्यनुवर्त्तमाने 'वा'ग्रहणं 'लिङ्सिचोरा-त्मनेपदेषु'इत्यस्य निवृत्त्यर्थम्। न च 'स्वरति'ग्रहणसामर्थ्यादेव तन्निवृत्तिः सिद्धा, 'ऋतश्चे'तीड्विकल्पस्य सिद्धत्वादिति वाच्यम्। 'स्वरति'ग्रहणं नित्याऽर्थं स्यादि'ति तस्याऽज्ञापकत्वादि'ति कैयटः। 'परस्मैपदार्थं स्या[2]दि'त्यन्ये।

१—'धूञ्। सानुबन्धकनिर्देशो' इति ख. क. पाठः।

२ इतोऽग्रे—'वस्तुत एकसूत्रे वैरूप्यस्याऽन्याय्यत्वेन, 'स्वरति'ग्रहणादेव

झलो झलि । 'उदः स्थे'तिज्ञापकात् अनेन झलादौ प्रत्यये लोपः । तेन 'सोमसुत् स्थानमि'त्यत्र न ।

ऋकार इदिति । तत्फलन्तु 'नाऽग्लोपी'ति ह्रस्वनिषेधः ।

अतो हलादे । अत्राऽङ्गाऽन्त्येऽकाराऽसम्भवात्'हलादेरि'ति सामर्थ्याच्च 'अङ्गस्याऽकार' इति व्यधिकरणसम्बन्ध एवाऽऽश्रयणीयः । 'लघोरि'ति साहचर्यात् 'हलादेरि'त्यपि अत एव विशेषणम् । 'आदि'शब्दश्च पूर्ववृत्तिवाची, नाऽवयववाची । 'हल' इत्येव सिद्धे 'आदि'ग्रहणं चिन्त्यप्रयोजनम् । 'हलादेरि'ति बहुव्रीहेः षष्ठी । नामधातौ तु नेदं प्रवर्त्तते । सिचा धातोराक्षेपे सिद्धे, 'ऋत' इत्यतो धातुग्रहणाऽनुवृत्त्या 'धातुरेव यो धातुर्न तु नामधातुरि'ति व्याख्यानात् । हलन्तेभ्य आचारक्विबभावाच्च । ध्वनितं चेदं 'वदव्रजे'ति सूत्रे भाष्ये । 'अचकासीदि'त्यादौ तु चकाराऽकारे नाऽतिप्रसङ्गः । सिच्परत्वेनाऽकारविशेषणात् ।

नन्वेवं 'लघोरि'ति व्यर्थम्, 'अतक्षीदि'त्यत्राऽपि 'येन नाऽव्यवधान'-न्यायेनैव वारणसम्भवादिति चेन्न । स्पष्टाऽर्थत्वात् ।

'अत' इति तु 'अकुटीदि'त्यादौ वृद्धिवारणाय । नचाऽत्र प्राप्तवृद्धेः[2] पराऽन्तरङ्गगुणेन बाधे प्रसक्ते,तस्य'क्ङिति चे'तिनिषेधे, भ्रष्टाऽवसरन्यायेन न वृद्धिः । शास्त्रे तन्न्यायाऽनाश्रयणज्ञापनाऽर्थत्वात् । तेन 'तौ' इत्यादि

---

तन्निवृत्तिसिद्धौ 'वा'ग्रहणं पूर्वसूत्रस्य व्यवस्थितविभाषात्वज्ञापनार्थमिति तनादौ निरूपयिष्यामः' इति ख. ङ. पाठः । क. कुण्डलितः ।

१ अत्र 'पदस्ये'ति वर्त्तते । तत्र 'पदस्ये'त्येकत्वस्य विवक्षणात्, प्रत्यासत्त्या च 'झलि' 'झलः' 'सस्ये'ति निर्दिष्टानां त्रयाणाम् अखण्डैकपदत्वे विधिरयम् । तेन 'सोमसुत्स्थानमि'त्यादौ न । अत एव 'उदः स्थास्तम्भोरि'ति सार्थकमिति केचित् । कैयटस्तु—'परेश्चे'ति सूत्रे आह—'उदः स्थे'ति ज्ञापकादनेन सिच एव लोप' इति ख, ङ. पाठः । क. कुण्डलितः ।

२ 'नचाऽत्र प्राप्ते, वृद्धेः पराऽन्तरङ्गगणेन बाधे प्रसक्ते' इति क. ग. पाठः ।

सिद्धम्। यत्तु 'इको गुणे'तिसूत्रे 'न्यकुटीदि'त्यत्र उक्तरीत्या वृद्ध्यप्रसङ्गं मत्वा, 'अकोषीदि'त्यादावन्तरङ्गत्वाद्गुणे, लघुत्वाऽभावादेव वृद्ध्यप्राप्ते-र्व्यर्थम् 'अत' इति 'न सिच्यन्तरङ्गमि'त्यर्थे ज्ञापकमित्युक्तम्, तत्तु एकदेश्युक्तिरिति, तत्रैव भाष्यप्रदीपोद्द्योते निरूपितम्।

सिचि वृद्धेरन्तरङ्गाऽपवादत्वेन, तज्ज्ञापने फलाऽभावाच्चेति दिक्।

नेर्गदनद। अत्र 'अड्व्यवाये' इति वर्त्तते। तेन गदादीनां, नेश्च 'प्रण्यगदत्', 'प्रण्यागददि'त्यादौ अट्-आड्व्यवधानेऽपि णत्वं भवत्येव। स्पष्टं चेदं भाष्ये। कुप्वादयस्तु नाऽनुवर्त्तन्ते, व्याख्यानादित्याहुः।

अत्र 'घुप्रकृति-माङि'ति पठित्वा 'प्रणिदयते' 'प्रणिमयते' इति सिध्यती'ति घुसञ्ज्ञासूत्रे भाष्ये स्पष्टम्। अत एव 'मा'शब्देन मेङ्माङो-रेव ग्रहणमित्याहुः।

'धात्वादेरि'त्यनुवर्त्तनादाह—धातोरादेरिति। अत्र 'उपदेशे' इत्यप्यनुवर्त्तते। तेन णादि-क्यजाद्यन्तधातौ नाऽस्य प्रवृत्तिरिति भाष्ये ध्वनितम्। अत एव 'धात्वादेरि'तिसूत्रस्थ'धातु'ग्रहणप्रत्याख्यानं भाष्यो-क्तम् अनुपदमुपपादयिष्यमाणं सङ्गच्छते। अन्यथाऽत्र प्रातिपदिकव्यावृत्तये तदावश्यकत्वे, तदसङ्गतिः स्यात्। प्रकृतसूत्रे च भाष्ये 'अथ किमर्थं णकारमुपदिश्य तस्य नकारः क्रियते, न नकार एवोपदिश्येते'त्युक्तम्।

णोपदेशास्त्विति। 'नाटी'ति। 'नट अवस्यन्दने' इति चुरादि-[1]रेव। व्याख्यानात्। तदाह—घटादिरिति। भ्वादिरित्यर्थः।

आहुरिति। भाष्यविरोधोऽत्राऽरुचिः।

उपसर्गाद। 'पूर्वपदात्सञ्ज्ञायामि'त्यतः 'पूर्वपदादि'त्यनुवृत्तौ, तदाक्षिप्तसमासे एव स्यादतस्तन्निवृत्तये-असमासेऽपीति।

---

१ इतोऽग्रे-'नट नृत्तावि'ति घटादेर्भ्वाद्यनुवादस्य तु न ग्रहणम्। दीर्घनिर्देशात्। न च घटादौ चुरादेरेवाऽनुवाद इति वाच्यम्। 'नाऽन्ये मितोऽहेताववि'ति-ज्ञपादिव्यतिरिक्तस्य स्वार्थणिजन्तस्य मित्त्वनिषेधात्' इति ख. ङ. पाठः।

तस्मान्नुट्। तच्छब्देन'अत आदेरि'तिकृतदीर्घः परामृश्यते, उपस्थितत्वात् । तदाह—दीर्घीभूतादिति। अत्रापि 'लिटी'ति वर्त्तते । दन्दशूकस्याऽक्रियात्वेन धातुत्वं न स्यादत आह–दन्दशूकक्रियायामिति । 'बिलेशयकर्त्तृकक्रियायामि'त्यर्थः । वदनैकदेश इति । 'तक्रियायामि'त्यर्थः ।

आदिर्ञि । 'उपदेशे' इत्यनुवृत्तेः 'ञिकारीयती' त्यादौ न । ञिदि परिदेवने । अस्य अनुदात्तेत्सु पठितस्येह पाठः परस्मैपदाऽर्थः । स्वरितेत्सु पाठो न कृतः । क्रियाफलस्य कर्त्तृगत्वेऽपि परस्मैपदं यथा स्यात् ।

प्रथमं महाव्याहृतिस्मरणरूपमङ्गलाऽर्थं, वृद्धिप्रतिपादनेनाऽधिकमङ्गलार्थं च भ्वेधौ पठितौ । तदनुरोधेन तवर्गीयान्तान् पठित्वा, मातृकापाठक्रमेणाऽऽह–अथेति । द्विचत्वारिंशदिति । 'विभाषा चत्वारिंशत्प्रभृतावि'ति विकल्पनात् आत्त्वाऽभावः । अषोपदेशत्वादिति । सेकः पर्युदासात् , अन्ययोर्दन्त्याऽजन्तसाऽऽदित्वाऽभावादित्यर्थः ।

ऋदुपधेभ्य इति । यद्यपि 'बिभिदतुरि'त्यत्र किंत्त्वं नित्यं, तथापि ऋदुपधे तदनित्यम् । गुणे संयोगात्परत्वात् । तत्र परत्वाद्गुणे प्राप्ते इदम् । कित्त्वाऽवकाशः 'ईजतुरि'त्यादि । गुणाऽवकाशः 'चेतती'त्यादि ।

वस्तुतस्तु ऋदुपधविषयैतल्लक्षणोपप्लवकृतकित्त्वस्याऽनवकाशत्वमेव । न च परत्वाद्गुणशास्त्रस्य तद्विषयैतल्लक्षणोपप्लव एव नेति वाच्यम् । अस्य निषेधाऽतिदेशकत्वेन बलवत्त्वात् , एतद्विषये परत्वाऽप्रवृत्तेः । यत्तु कैयटेन 'सम्प्रसारणविधावस्य कृतार्थत्वाद्दुर्बलेनाऽनेनाऽतिदेशेन प्राप्यमाणो गुणनिषेधो दुर्बल इति विधिरनेन स्पर्द्धते इति परत्वप्रवृत्तिरस्त्येव' इत्युक्तम् । तन्न । एवं हि 'विचती'त्यत्र, 'गृह्णाती'त्यत्र चाऽतिदेशप्राप्तङित्त्वं सम्प्रसारणेन कृताऽर्थमिति, तदनन्तरं प्राप्तगुणेन त्वदुक्तरीत्या गुणनिषेधबाधाऽऽपत्तेः । एतदेवाऽभिप्रेत्य'अपवादो गुणस्ये'त्युक्तं भाष्ये।

---

१ 'वृद्धिसत्ताप्रतिपादनेन' इति ख. ङ. पाठः ।

२ 'वस्तुतस्तु' इत्यारभ्य 'ध्वनितम्' इत्यन्तः क. ग. पाठः । ख. ङ. नास्ति ।

यत्तु तदुत्तरभाष्ये उक्तरीत्याऽवकाशदानेन विप्रतिषेधस्थापनं, सा त्वेकदेश्युक्तिरिति निरूपितं भाष्यप्रदीपोद्द्योते। अत एव विप्रतिषेधसूत्रे पूर्वविप्रतिषेधसङ्ग्रहाऽर्थम् 'अङ्गाऽधिकारे पूर्वमिति वक्तव्यमि'त्युक्तं वार्त्तिककृता। तत्र 'अङ्गाऽधिकारे' इति वदता अन्यत्र स्वोक्तपूर्वविप्रतिषेधाऽनावश्यकत्वं ध्वनितम्।

सुब्धात्विति। एतदुदाहरणं 'षण्डीयती'त्यादि। षकारादि–षाण्मातुरादिभ्य[1] आचारक्विप् नाऽस्त्येवेति भावः। भाष्ये तु 'धात्वादेरि'त्यत्र मण्डूकप्लुत्या 'उपदेशे' इत्यनुवर्त्त्य, अत्रत्यसुब्धातुग्रहणं, सूत्रस्थधातुग्रहणं च प्रत्याख्यातम्। आयाम[2] इति। आयामो दैर्घ्यम्। 'कदर्थनमि'ति स्वामी।

प्रणिकखतीति। 'शेषे विभाषे'त्यत्र 'अकखादावि'ति पर्युदासात् नेर्णत्वं नेति भावः।

उवोखेति। 'द्विर्वचनेऽची'ति निषेधात् पूर्वं द्वित्वे, पश्चात् उकारस्य वार्णादाङ्गस्य बलीयस्त्वात्सवर्णदीर्घं बाधित्वा गुणे कृते, उवङ्। एतेन 'गुणस्य स्थानिवत्त्वेनाऽन्तरङ्गत्वात्सवर्णदीर्घः स्यादि'त्यपास्तम्। पूर्वस्यैव विधौ स्थानिवत्त्वाच्च। उवङि तु न स्थानिवत्त्वम्। 'असवर्ण'-ग्रहणसामर्थ्यादित्याहुः।

संनिपातेति। आमि सति धातोर्णलपरत्वव्याघातः स्यादिति भावः।

पर्जन्यवदिति[3]। एतेन 'अभ्यासमात्राऽऽश्रयत्वेनाऽन्तरङ्गे ह्रस्वे कर्त्तव्ये, पूर्वपराऽऽश्रितत्वेन बहिरङ्गसवर्णदीर्घस्याऽसिद्धत्वाद्ध्रस्वो ने'ति माधवोक्तमपास्तम्। द्विमात्रबुद्ध्यभावेऽपि 'पर्जन्यवदि'तिन्यायेन ह्रस्वस्य दुर्वारत्वात्। ह्रस्वस्याऽऽङ्गत्वेन बहिरङ्गत्वाच्च। पूर्वं प्रवृत्तिस्तु 'वार्णादाङ्ग'-

१ 'षाण्मात्रादिभ्यः' इति क. ग. पाठः।

२ 'आयाम' इत्यादिः 'स्वामी' इत्यन्तोऽयं ख. ङ. पाठः। क. ग. नास्ति।

३ 'पर्जन्यवदिति' इत्यारभ्य 'तदाह' इत्यन्तः पाठः क. कुण्डलितः। मनोरमादिस्थत्वात्।

न्यायेन । यत्तु 'नाऽजानन्तर्ये' इति निषेधाद्बहिरङ्गपरिभाषाया अप्रवृत्तिरि'ति । तन्न । उत्तरकालप्रवृत्तिके ह्रस्वे, अजानन्तर्याऽभावादिति दिक्[1] । तदाह—वार्णादाङ्गमिति । अत्र च ज्ञापकम् इदमेव 'असवर्ण'ग्रहणमिति परिभाषाप्रकरणेषु । 'इयादिव्याश्रयेऽपि प्रवृत्तिरि'ति तत्रैवोक्तम् । नन्वनेनाऽन्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यते इति मतेनाऽऽह—परत्वाच्चेति । यद्वा—'परत्वादिति । परकालप्राप्तिकत्वादित्यर्थः । एवञ्च अभ्यासविकारे बाध्यबाधकभावाऽभावेन ह्रस्वे, ततो हलादिःशेषे, युगपदेव चोभयोः प्रवृत्तौ, ततः परकालो दीर्घ इति, अन्तरङ्गत्वाद्दीर्घत्वं स्यादिति शङ्का न कार्ये'त्यर्थः । 'त्वगि कम्पने' इति क्वचित्पठ्यते[2] । गतौ दण्डके पठितः । सेवने चेति । 'यं पूरवो वृत्रहणं सचन्ते' इत्यादौ भट्टभास्करादिभिस्तथैव व्याख्यातत्वात् ।

पचि व्यक्तीकरणे । 'अयम् अनिदिदि'ति दुर्गादयः । 'अनिदित्, परस्मैपदी चे'ति न्यासकृत् ।

ऋज गति । अर्जनम्-प्राधान्येन । उपार्जनम्-प्रासङ्गिकम् । 'ऊर्जनेष्वि'ति पाठ' इति स्वामी ।

नुङ्धिधाविति । तत्र द्विहल्ग्रहणं[3] गौणेद्दशद्विहल्परिग्रहाऽर्थमपि । व्याख्यानादिति भावः । न च[4] द्विहल्ग्रहणाऽभावे 'आट''आटतुरि'त्यत्राऽतिप्रसङ्गः । 'अश्नोतेश्चे'त्यनेन 'अद्विहलो यदि भवति, तर्हि अश्नोतेरेव[5]' इति नियमात् । अश्नातिनिवृत्तिमात्राऽर्थत्वे हि 'नाऽश्न' इत्येव ब्रूयात् ।

---

१ 'उत्तरकालप्रवृत्तिके अजानन्तर्ये एव च 'नाजानन्तर्ये' इत्यस्य प्रवृत्तिरि'ति सिद्धान्त इति ध्येयम् ।

२ 'क्वचित्पठ्यते' इति ख. ङ. नास्ति ।

३ 'तत्र द्विहल्ग्रहणस्य गौणेद्दशद्विहल्ग्रहाऽर्थत्वादिति भावः' इति ख. ङ. पाठः ।

४ 'न च' इत्यारभ्य 'तच्चिन्त्यम्' इत्यन्तः ख. ङ. पाठः क. कुण्डलितः । मनोरमास्थत्वात् । ५ 'अश्नोतेरेवकिटि'इति ख. ङ. पाठः ।

यद्वा व्रिहल्ग्रहणं न कार्यम् । 'अवर्णोपधस्य चेत् अश्नोतेरेवे'ति नियमेन सर्वेष्टसिद्धेरिति भाष्यादौ स्पष्टम् ।

ऋ ज्ञाग्नके इति । यत्तु 'आनृज्ञे' इति । तच्चिन्त्यम् ।

एजृ भ्राजृ । ऋदित्वम् आत्मनेपदमात्रफलकम् । 'भ्राजभासे'त्यादिना चङ्परे णौ ह्रस्वस्य विकल्पितत्वात् । वस्तुतः फणादिष्वपि 'भ्राजृ' इति पठ्यते । एवञ्चाऽस्याऽनुबन्धाऽन्तरमेवाऽस्तु । एवञ्च 'भ्राजभासे'ति सूत्रे 'भ्राजि'ग्रहणं न कार्यम् , धातुभेदेन रूपद्वयस्य सिद्धत्वादित्याहुः । न च फणादिपाठेनैव सिद्धे इह पाठो व्यर्थः। 'व्रश्चे'ति षत्वाऽभावायेह पाठात् । तत्र हि 'राजि'साहचर्यात्फणादेरेव ग्रहणम् ।

अनिदितामिति । इदं च 'कुंच्' धातुविषयम् । क्रुञ्चौ तु 'अनिदिता-मि'ति न प्रवर्त्तते, व्रोपधत्वादिति हलन्तशेषे निरूपितम् । तद्ध्वनयन्नाह— क्रुञ्च्यादिति । व्रकाररहितपाठस्त्वपपाठः ।

जृस्तम्भु । ग्लुचु-ग्लुञ्चोरन्यतरोपादानमकर्त्तुं शक्यम् । अर्थभेदो-ऽप्यकिञ्चित्करः । धातूनामनेकार्थत्वादिति स्पष्टं भाष्ये । आत्मनेपद्य-पीति । 'हेतुमति चे'तिसूत्रे 'यदभिप्रायेषु सज्जते' इति भाष्यप्रयोगादिति भावः । 'गुजिः' अनिदिदपि । युछ प्रमादे । अन्तरङ्गत्वात्तुकि, अल-घूपधत्वान्न गुणः । युगपत्प्राप्त्यभावेन 'वार्णादाङ्गमि'ति न प्रवर्त्तते ।

याद्व इति । 'बदराण्युञ्छति बादरिक' इति वृत्तिस्वरसात् उच्चयन-मात्रमर्थ' इत्यन्ये । ध्रज ध्रजि । षडप्येते तवर्गचतुर्थादयः ।

अजेर्वी । दीर्घान्तं आदेशः, 'संवीत' इत्यादौ श्रवणाय ।

---

१ 'एओङ्सूत्रे भाष्यकैयटयोः स्पष्टम्' इति तु लघुशब्दरत्ने पाठः ।

२ इतोग्रे 'मते स्वि'ति तुनाऽरुचिर्बोधिता । तद्बीजं स्पष्टमेव' इति ख. ङ. पाठः ।

३ 'दीर्घान्त आदेशः, 'संवीतिरि'ति असंज्ञायां क्तिजन्ते श्रवणाय । संज्ञायां 'समजे'ति क्यपा भाव्यं, स्त्रीलिङ्गे भावादाविति बोध्यम् । एवं 'संवीत' इत्यत्र, कर्तृक्तिजन्ते 'संवीतिरि'त्यत्र च' । इति ख. ङ पाठः ।

अत्र 'वा लिटी'त्यतो 'वे'त्यनुवर्त्तते । सा च व्यवस्थितविभाषा । तेन घञ्-अप्-क्यप्सु न, ल्युटि वा, वलादावार्द्धधातुके वा, अन्यत्र नित्यम् । एवञ्च विकल्पविधानसामर्थ्यात् 'वी'धातोः अज्यर्थे सार्वधातुके एव प्रयोग इति बोध्यम् ।

अत एव 'प्रतिषेधे क्यप उपसङ्ख्यानं न वक्तव्यम् । अपोऽकारात् आ क्यपः पकारात् 'अप्'इतिप्रत्याहारेण सिद्धम् । यदि प्रत्याहारः, संवीतिर्न सिध्यती'ति भाष्यं सङ्गच्छते । न च रथिसूतसंवादभाष्येण 'प्राजिते'ति तृचि विकल्पलाभेऽपि, सर्वत्र वलादौ विकल्पे मानाऽभाव इति वाच्यम् ? भाष्यस्योपलक्षणत्वात् । 'पादस्य पदाज्याती'तिनिर्देशादिभिः 'इह च न भविष्यति–'समाजः' 'उदज' इति तत्पूर्वभाष्यस्य उपलक्षणतया व्याख्यानस्याऽऽवश्यकत्वाच्च । स्पष्टं चेदं वृत्तिकैयटादौ ।

यद्यपि 'समजनम्', 'उदजनमि'ति भाष्यात् ल्युटि आदेशाऽभाव एव प्रतीयते, तथापि 'न तर्हीदानीमिदं 'वा यावि'ति वक्तव्यमि'त्युपसंहारभाष्येण विकल्प एव प्रतीयते । अन्यथा 'वा यावि'त्यसङ्गतमि'ति वदेत् ।

विषये इति । तेन प्रत्ययोत्पत्तेः प्रागेव वीभावे, हलादित्वाद्यङि 'वेवीयते' इत्यादि सिध्यति । परसप्तम्यान्तु हलादित्वाऽभावात् यङेव न स्यात् । धात्वन्तरस्य त्वेतत्समानार्थस्य आर्द्धधातुके प्रयोग एव नास्तीत्याहुः । इदं च 'आर्द्धधातुके' इति सूत्रे भाष्ये स्पष्टम् । यङ्लुक् तु अस्मान्न भवति, लुका यङो ज्ञानविषयत्वस्यैवाऽपहारात्[1], आर्द्धधातुकाऽनभिव्यक्तेः[2] । प्रत्ययलक्षणन्तु न । 'न लुमते'ति निषेधात् । यङन्तादच्प्रत्ययविवक्षायामपि

१ 'यङो विषयत्वस्यैवाऽपहारात्' इति ख. ङ पाठः ।

२ इतोग्रे–'न च तदर्थस्य प्रतीयमानत्वेन कथं विषयाऽपहारः । भाविसत्ताया एवाऽत्र 'विषय'शब्देन विवक्षणात् । लुकाऽनुत्पत्तेरेवाऽन्वाख्यानेन, उत्पन्नमात्रस्यैव वा लुको जातत्वेनोच्चारणसाध्यसत्ताया अभावात्' इति ख. ङ पाठः । क. कुण्डलितः ।

नाऽऽदेशः । 'अज्'धातुप्रकृतिकाऽऽर्द्धधातुकविषयाऽभावादित्याहुः । (स्पष्टं चेदं 'न लुमते'त्यत्र कैयटे इति दिक् ) ।

स्थानिवद्भावेनेति । यणादेशस्य बहिरङ्गत्वेनाऽप्येतत्सुसमाधानम् । स्वरदीर्घेति । 'पूर्वत्राऽसिद्धीये' इति निषेधस्याऽप्ययं नियम इति भावः ।

कृसृभृ । 'डुकृञ्' 'कृञ् हिंसायामि'ति द्वयोरपि ग्रहणम् । 'कृ'ग्रहणे उभयग्रहणादेव 'नित्यं करोतेरि'त्यादौ विकरणनिर्देशश्चरितार्थः । एतेन 'प्रसिद्धत्वात्करोतेरेव ग्रहणं युक्तमि'त्यपास्तम् । 'भृ' इति भरति-बिभर्त्योः । 'वृ' इति वृङ्-वृञोः । क्रादीनां चतुर्णामिति । कृत्वादिना चतुष्कम् ।

नियमार्थमिति । त्रयाणाम् 'एकाच' इति प्रकृत्याश्रयस्य प्राप्तेः, चतुर्थस्य 'श्र्युक' इति प्रत्ययाऽऽश्रयस्य प्राप्तेरित्यर्थः । न च अष्टानामपि नियमाऽर्थं स्यात्, एकसूत्रोपात्तानाम् एकजातीयाऽर्थस्यैव युक्तत्वादिति वाच्यम् । 'तुष्टोथे'त्यादौ भारद्वाजनियमेन इडापत्तेः । स च नेष्ट इति 'नेड्वशी'त्यत्र भाष्ये स्पष्टम् । नियमाद्विधेर्बलवत्त्वाच्च ।

'कृसृभृवृ' इति च लुप्तषष्ठीकं पृथक्पदम् । नचैवं 'सृ''भृ'ग्रहणमपि विध्यर्थं स्यादिति वाच्यम् । मध्ये वृञः पाठेन तावत्पर्यन्तं नियमाऽर्थत्व-बोधनात् । कृसृभृषु विनिगमनाविरहेण सर्वेषामेव नियमाऽर्थत्वाच्च ।

'वृ'ग्रहणं तु न विध्यर्थम् । नियमस्य सजातीयाऽपेक्षत्वेन प्रकृत्या-श्रयस्यैव नियमेन, 'वृ'धातौ प्रत्ययाऽऽश्रयप्रतिषेधेनैवं सिद्धेः । न[2] च थलि निषेध[1]विध्यर्थं 'वृ'ग्रहणम् । न ह्यत्र प्रकृत्याश्रयः प्राप्नोति । वृञ उदात्तत्वात् । नाऽपि प्रत्ययाऽऽश्रयः । थलोऽकित्त्वात् । एवञ्च 'बभूविवे'त्यादौ 'श्र्युकः किती'ति दुर्वारमिति वाच्यम् । 'बभूथाततन्थे'ति निगमे 'ववर्थे'ति-

१ अयं ख. ङ. पाठः । क. ग. नास्ति ।

२ 'न च' इत्यारभ्य 'थल्विषयत्वाऽयोगात्' इत्यन्तः ख. ङ. पाठो मनोरमा-स्थत्वात् क. कुण्डलितः ।

निपातनवैयर्थ्याऽऽपत्तेर्भाषायां वृञस्थल इटः स्वीकर्त्तव्यतया, 'वृ'ग्रहणस्य थल्विषयत्वाऽयोगात् ।

प्रकृत्याश्रयः-'एकाच उपदेशे' इति। प्रत्ययाऽऽश्रयः-'श्र्युकः किती'ति। प्रत्ययाऽऽश्रयो वेति । अत्र च 'वृ'ग्रहणमेव मानम् ।

इण्निषेध इति । 'नेड्वशी'ति प्रक्रमात्, क्रादिषु नञ्प्रापिताऽभावस्यैव प्राप्तत्वेन च तस्यैवाऽयं नियमो, न तु विभाषाबललभ्यस्याऽपि । तेन 'सिषेधिथ' 'सिषेद्धे'त्यादि सिद्धमि'ति कश्चित्। 'उभयोरपि नियमः । तेन 'सिषेधिथे'त्येकमेव रूपम । युक्तं चैतत् । 'उपदेशेऽत्वत' इति सूत्रे 'नित्याऽनिट' इत्यस्य अन्वर्थ्यावर्त्यत्वेन भाष्ये प्रदर्शनात् । अन्यथा तद्ग्रहणाऽभावे 'ऋतो भारद्वाजस्ये'त्यनेन विकल्पः स्यात्। तत्सत्त्वेऽपि ऊदित्त्वप्रयुक्तविकल्पस्यैव सत्त्वेन तदसङ्गतिः स्पष्टैव । मम तु क्रादिनियमेन तत्सत्त्वे नित्य इडिति विशेषोऽस्त्येवे'त्यपरे । विपरीतनियमस्तु न—'क्रादिभ्यश्चेदिट् न, तर्हि लिट्येवे'ति । 'कृत' 'परिवृते'त्यादिलक्ष्याऽनुसारिव्याख्यानात् ।

भारद्वाजेति । एतद्बोजन्तु प्रागेवोक्तम् ।

अचस्तास्वत् । उपदेशेऽजन्त इति । एतच्च उत्तरसूत्रादिहाऽपकृष्यते

१ 'अभावत्वेन सादृश्यग्रहणात् उभयोरपि नियमः' इति ख. ङ. पाठः ।

२ एतत्पाठस्थाने 'नन्वष्टानामपि विपरीतनियम एवाऽस्तु-'क्रादिभ्यश्चेदिण्न, तर्हि लिट्येवे'ति । न च 'ऋतो भारद्वाजस्ये'ति नियमप्रापितेट्निषेधाय स्त्वादिग्रहणं विध्यर्थमिति वाच्यम् । तथाहि सति 'स्तु-द्रु-स्रु-श्रु ऋतो भारद्वाजस्ये'त्येव पठेदिति चेन्न । 'कृते ग्रन्थे' 'परिवृतो रथः' 'तमभीष्टो भृतः' 'स्तुतस्तोमयोरि'त्यादिनिर्देशैस्तद्वारणात् । कृञादीनामनुदात्तपाठवैयर्थ्याऽऽपत्तेश्च । किञ्चैवंविधविपरीतनियमे 'अचस्तास्वदि'त्यादेर्नियमाऽर्थताऽऽपत्तौ गौरवमिति दिक्' इति ख. ङ. पाठः । शब्दरत्नगतत्वाच्च अयं पाठः क. कुण्डलितः ।

इति 'ऋतो भारद्वाजस्ये'ति सूत्रे भाष्ये स्पष्टम्। तदपकर्षे च धेडादेः 'दधिथे'त्यादिसिद्धये अज्ग्रहणस्याऽप्यावश्यकत्वम् ।

एतेन 'उपदेशे एजन्तानामात्त्वविधानेन एजन्तात्परत्र तास्-थलोरसम्भवेन 'अक्'ग्रहणमेव युक्तमि'त्यपास्तम् ।

'नित्य'ग्रहणम् अनिटो विशेषणम् । अजन्तस्य धातोः प्रयोगमात्राऽवच्छेदेन इडभावाऽप्रसिद्धेः, 'क्वाऽनिडि'त्यपेक्षायां, संनिधानात्तासावेवेत्याह—तासौ नित्याऽनिट इति । 'तास्वदि'ति सप्तम्यन्तात् वतिः । 'यथा तासौ न भवति, तथा थल्यपी'त्यर्थः । तेन तासौ दृष्टस्य इडभावस्य थल्यतिदेशः । तेन अदेर्घस्लादेशे 'जघसिथे'त्यत्र, 'ववयिथे'त्यत्र च नित्यमेवेट् । नचा[2]ऽनयोस्तासेरभावेन, विशेषणाऽभावप्रयुक्तविशिष्टाऽभावोऽस्त्येव । 'तासि चे'त्यतः 'तासी'त्यस्य, 'न वृद्भ्य' इत्यतो नञश्चाऽनुवृत्त्यैव ('[3]तासि नित्याऽनिटस्थलीण्ने'त्यर्थेनैव) सिद्धे, 'तास्वदि'त्यनेन यस्य तासाविडभावो दृष्टस्तस्यैव थल्यतिदेशान्न दोषः । स्थानिवद्भावेन तु न तासौ नित्याऽनिट्त्वाऽतिदेशः । अशास्त्रीयत्वात् । स्वतन्त्रस्य घसेस्तु थलीड्विकल्प एव । 'उपदेशेऽत्वत' इतिसूत्रस्थभाष्यमपि अदादेश'घस्'-परमेव । ध्वनितं चेदं कैयटे ।

---

१ इतोऽग्रे—'अज्ग्रहणं चाऽपकर्षे मानम् । अन्यथा उपदेशे एजन्तानामात्त्वविधानेन, एजन्तात्परत्र तास्-थलोरसम्भवेन 'अक्'ग्रहणमेव कुर्यात् । एवञ्च योगविभागो वैचित्र्याऽर्थं एवेति बोध्यम् । नन्वक्ग्रहणमेव कार्यम् । तत्राऽकारमात्रग्रहणे कर्त्तव्ये, प्रत्याहारग्रहणसामर्थ्यादिकाराद्यंशे भूतपूर्वगतिराश्रयिष्यते । एवञ्च सूत्रस्थाऽत्पदम्, 'उपदेशे' इत्यपकर्षश्च वृथेति चेन्न । प्रत्याहारग्रहणेन 'उपदेश'पदाऽऽकर्षणस्याऽपि वक्तुं शक्यत्वेन, भूतपूर्वगत्याश्रयणे दृढतरमानाऽभावात् । तदपकर्षे च धेडादेर्दधिथेत्यादिसिद्धये अज्ग्रहणस्याऽप्यावश्यकत्वात्' इति ख. ङ. पाठः ।

'न चाऽनयोः' इत्यारभ्य 'न दोषः' इत्यन्तः ख. ङ. पाठः । क. तु कुण्डलितः । लघुशब्दरत्नधृतत्वात् । ३ अयं ख. ग. ङ. पाठः ।

नित्याऽनिटः किम् ? । 'दुधविथ' । अयं 'स्वरती'तिसूत्रेण तासौ विकल्पितेट् । अतोऽस्य थलि नित्यमिट् । 'नित्य'ग्रहणाऽभावे भारद्वाजनियमेन विकल्पः स्यादि'ति वृत्तिः । एवञ्च वृत्तिविरोधादपि निषेधनिबन्धनस्यैव क्रादिनियम इति चिन्त्यम् ।

उपदेशेऽत्व । उपदेशे किम् ? । 'कर्ष्टा' 'चकर्षिथ' । अत्वतः किम् ? । 'भेत्ता'-'बिभेदिथ' । तपरः किम् ? । 'राद्धा'–'रराधिथ' । तासौ किम् ? । 'जिघृक्षति'–'जग्रहिथ' । 'नित्याऽनिटः किम् ? । अङ्क्ता-अञ्जिता—'आनञ्जिथे'ति भाष्यम् । 'चक्रमिथे'त्यपि प्रत्युदाहरणम् । 'स्नुक्रमोरि'तिनियमेन आत्मनेपदपर-तासाविडभावेऽपि, परस्मैपदे तत्सत्त्वात् ।

ऋतो भा । दीर्घाऽन्तेषु नाऽस्य प्रवृत्तिः । तपरकरणात् । 'अचस्तास्वदि'त्येव सिद्धे नियमोऽयमित्याह—ऋदन्तादेवेति । न च ऋदन्ते विकल्पेन निषेधाऽर्थमिदमस्त्विति वाच्यम् । 'अचस्तास्वदि'तिसामान्यसूत्रप्रणयनेन भारद्वाजाऽतिरिक्तैरपि ऋदन्ते निषेधस्यैवाऽङ्गीकारेण, स्मृत्यन्तराऽनुसन्धानद्वारा विकल्पस्य वक्तुमशक्यत्वात् । ह्वञादिषु परत्वात्, नित्यत्वाच्च गुणे, रपरत्वे, ऋदन्तत्वाऽभावेऽपि, 'उपदेश'ग्रहणाऽपकर्षणात् प्राप्तिः । छन्दसि 'ववर्थे'ति निपातनेन भाषायामिटोऽवश्यंभावात्, वृञस्थलि विध्यर्थमेतदिति न शङ्क्यम् ।

नियमफलिताऽर्थमाह--तेनाऽन्यस्येति । अत्राऽपि 'भारद्वाजस्ये'ति सम्बध्यते । 'अन्यस्ये'त्यस्य—'ऋकाराऽन्तभिन्नस्य तासौ नित्याऽनिट' इत्यर्थः । यद्वा 'तद्भिन्नस्य तादृशस्य = उपदेशेऽजन्तस्य, अत्वतश्चे'त्यर्थः ।

एतेन 'पपिथे'त्यादावजन्तसंनिपातेन जात इट् सन्निपातपरिभाषया आलोपे निमित्तं न स्यादि'त्यपास्तम् । तदाह—अजन्त इत्यादि । अस्य 'उपदेशे' इत्यादिः । ईदृक् = तासौ नित्याऽनिट् ।

ननु स्तुद्रुस्नुश्रुवां थलि भारद्वाजनियमादिट् स्यात्, क्रादिसूत्रस्थस्वादि-

१ 'अङ्क्ता अञ्जिता' इति पाठो मनोरमातः पूरितोऽस्माभिः ।

ग्रहणेन तु 'येननाप्राप्ति'न्यायेन[1] वमादौ क्रादिनियमप्रापितस्यैव बाधौचित्यादित्याशयेनाऽऽह—न चेति। समाधत्ते—योगद्वयेति। अयं भावः—'तास्वत्थल्यनिटो नित्यमि'त्यनुवर्त्तते। एवञ्च 'एतत्पदसम्बन्धवान् य इट्निषेधः, स भारद्वाजमते ऋकारान्तस्यैवे'ति नियमः। तेन क्रादिनियमस्य नाऽयं निषेध इति। ध्वनितं चेदमत्रैव सूत्रे भाष्ये। किञ्च पुरस्तात्प्रतिषेधकाण्डाऽऽरम्भसामर्थ्यादपि स्त्वादिनिषेधेनाऽनन्तरस्यापि भारद्वाजनियमस्य बाध इति 'नेड्वशी'त्यत्र, 'वस्वेकाजा'दित्यत्र च भाष्ये स्पष्टम्। एतेन[2] भारद्वाजनियमो 'येन नाप्राप्ति'न्यायेन आद्यस्यैव बाधकः स्यात्। 'उपदेशेऽत्वत' इत्यस्य ऋदन्तेषु प्राप्त्यभावादि'त्यपास्तम्। उक्तरीत्या व्याख्यानेन द्वयोरपि बाधादिति दिक्।

सिचि वृद्धिः। वृद्धिश्रुत्या उपस्थितम् 'इक' इति, अङ्गस्य समानाधिकरणं विशेषणमित्याह—इगन्ताङ्गस्येति। तत्फलं तु 'अकोषीदि'त्यादौ व्यञ्जनस्य वृद्ध्यभावः। न च 'नेटी'ति निषेधः। तत्र 'हलन्तस्ये'त्यनुवृत्त्या, तद्विषये परत्वाद्धलन्तलक्षणयाऽस्या वृद्धेर्बाधेनाऽनया येन नाप्राप्तिन्यायाऽभावेन, अस्यास्तेन निषेधेनाऽबाधात्। न च तर्हि भ्रष्टाऽवसरन्यायेन नाऽस्यास्तत्र प्राप्तिः। 'प्रकृत्याऽन्तःपादमि'ति पाठे तन्न्यायस्याऽत्र शास्त्रे आश्रयणे फलाऽभावात्। 'नान्तःपादमि'ति पाठेऽपि 'एङोऽती'त्यनुवर्त्त्य 'एङोऽति यद्यत्प्राप्नोति, तस्य निषेध' इत्यर्थस्य 'नान्तः' इति सूत्रे भाष्ये एवोक्तत्वेन फलाऽभावः। न च 'वदव्रजे'त्यतोऽच इत्यपकर्षणान्न दोषः। तदपकर्षाऽपेक्षयाऽन्याऽर्थं कृतस्य 'इक' इत्यस्य

१ 'येन नाऽप्राप्तिन्यायेन, अनन्तरस्येति न्यायेन च' इति ख. ङ. पाठः।

२ 'न च भारद्वाजनियमोऽनन्तरत्वात् 'उपदेशेऽत्वत' इत्यस्यैव बाधकः स्यादिति वाच्यम्। ऋदन्तेषु तस्य प्राप्त्यभावात्। न चैवं येन नाऽप्राप्तिन्यायेन आद्यस्यैव बाधकः स्यात्। उक्तरीत्या व्याख्यानेन द्वयोरपि बाधादिति दिक्' इति ख. ङ. पाठः। क. कुण्डलितः।

उपस्थितेरेव न्याय्यत्वादिति दिक्। कूजिनेति। अर्थैक्यादिति भावः।

(गज[1] गजि गज मदने च। 'गञ्जा तु मदिरागृहम्'। मदनं चित्त-विकारविशेषः)।

वज व्रज। ववजतुः। दोपध इति। एवञ्च ष्टुत्वस्याऽसिद्धतया, दस्य 'न न्द्राः' इति द्वित्वनिषेधे, 'टि'शब्दस्य द्वित्वे, दस्य ष्टुत्वे, चर्त्वे च 'आट्टिटदि'त्यादि सिध्यति। 'पूर्वत्राऽसिद्धीयमद्वित्वे' इत्यस्य तु न विषयः। द्वित्वे कार्ये तन्निषेधेऽपि, द्वित्वनिषेधके 'न न्द्राः' इति कर्त्तव्ये तदभावात्।

तोपध इति। एतन्मते 'पूर्वत्राऽसिद्धीयमद्वित्वे' इति ष्टुत्वस्याऽसिद्ध-त्वाऽभावे, टद्वयसहितस्य द्वित्वे 'अटिट्टिषती'त्यादि भवतीति बोध्यम्। एकचर्या—असहायगमनम्। वण्ठते इति। 'सहायं विना चरती'त्यर्थः। तथा च '[2]परिमाणाख्यायामि'ति सूत्रे भाष्यं—'ननु चाऽयमिङ् एक एव वण्ठरण्डाकल्प' इति। विबाधा—शाठ्यम्। हुडि वरणे। स्वीकार इत्यर्थः। अत्र '[3]स्फुडि विकसने' इत्येके पठन्ति। [4]युक्तं चैतत्। हुण्डेर्द्विःपाठस्य वैयर्थ्यात्। 'वरणसङ्घातयोरि'ति पाठस्यौचित्यात्। शडिः—तालव्यो-ष्मादिः। 'शण्डोऽसुरपुरोहितः'। पडि। धातूनामनेकार्थत्वात्—'पण्डा' बुद्धिः। बशादिरिति। 'बश्'प्रत्याहारो 'जबे'ति पवर्गीयबकारेणैव, न तु 'हयवे'त्यनेन। तथा सति व्यावर्त्त्याऽप्रसिद्धिः स्यात्।

शाडृ। डलयोरैक्यात् 'शालते' इत्यपि। यौटृ। यणादिः।

ह्मयन्तक्षण। 'जाग्रोऽविची'ति गुणविधानस्य गुणविषये सामान्यतो वृद्ध्यभावज्ञापकत्वं स्वीकृत्याऽत्र 'जागृ'ग्रहणं त्यक्तुं शक्यम्। यद्यपि

---

१ अयं पाठो मनोरमास्थ इति क. ग. नास्ति।

२ 'परिमाणाख्यायामि'ति सूत्रे 'इकश्चे'ति सूत्रमुपादाय भाष्यम्' इति ख. क. पाठः।

३ 'स्फडि' इति ख. पाठः।

४ 'युक्तं चैतत्' इत्यारभ्य 'पाठस्यौचित्यात्' इत्यन्तः पाठो मनोरमास्थ इति क. कुण्डलितः।

'अस्मादेव ज्ञापकात् तत् उपधावृद्ध्यभावस्यैव ज्ञापकमि'त्याकरे उक्तं, तथापि विशेषाऽपेक्षत्वे फलाऽभाव इत्याहुः। इडादौ किम्। 'अधाक्षीत्'।

किट खिट। त्रासो–भयोत्पादनम्।

इयायेति। अत्र यद्वक्तव्यं तत् 'इको गुणवृद्धी' इत्यत्र 'वार्णादाङ्गमि'ति परिभाषाव्याख्याऽवसरे निरूपितम्। इयतुरिति। इकारोऽत्र ह्रस्वः। द्वित्वे कृते 'एरनेकाच' इति यण्सवर्णदीर्घयोः प्राप्तयोः'वार्णादाङ्गमि'ति परिभाषया दीर्घं बाधित्वा यण्। व्याश्रयेऽपि तस्याः प्रवृत्त्यङ्गीकारात्। अत एव इणोऽभ्यासस्य दीर्घ आरभ्यते इति दिक्। [1]केचित्तु (द्वित्वे कृते)[2] अन्तरङ्गत्वाद्यणं बाधित्वा सवर्णदीर्घः। ततः 'अचि श्नु' इतीयङ्। न तु 'अभ्यासस्ये'ति। तस्य प्रत्यासत्त्या उत्तरखण्डाऽवयवाऽच्परत्वे एव प्रवृत्ते-रित्याहुः। उदाहरन्तीति। एवञ्च 'तस्य जैमिनिमतत्वमुदीये' इति श्रीहर्ष-प्रयोगश्चिन्त्यः। 'ईङ् गतौ' इत्यतोऽपि आमो दुर्वारत्वात्। तदभावेऽपि न्यायेन दीर्घस्य दुर्लभत्वाच्चेति बोध्यम्। कुडि। वैकल्यम्—अविवेकः। ([3]टवर्गतृतीयान्तोऽयम्। 'प्रथमाऽन्त' इत्येके॥ 'सुठ'। 'डान्त' इत्येके। 'पकारादिर्डान्त' इत्यन्ये। 'द्वावपीदितावि'त्यन्ये। चुडि। 'चुड'इत्यन्ये)। तेनेति। मध्यमस्य 'अडिडिषती'त्यादिसिद्धिरपि दोपधत्वे फलं बोध्यम्।

तुड्। तोडनं—दारणं, हिंसनं च। ळळयोश्चेति। अत्रैको ळः स्पृष्टः। स च शिक्षायां, बह्वृचानां च प्रसिद्धः।

गडि। पूर्वमस्य पाठस्तु-अन्तत्यादिपञ्चकाऽन्तर्गतत्वेनाऽतिङ्विषयत्व-बोधनाऽर्थं इत्याहुः। तिपृ तेपृ। 'दिपृ देपृ'—इत्यन्ये।

लिङ्सिचा। 'इको झल्' 'हलन्ताच्चे'ति, 'असंयोगादि'त्यतः किदिति चाऽनुवर्त्तते। 'आत्मनेपदेषु' इति सिच एव विशेषणं, न लिङः, असम्भ-

---

१ 'केचित्तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. ङ. पाठः। क. कुण्डलितो मनोरमाशब्दरत्नस्थत्वात्।

२ अत्र 'द्वित्वे कृते' इति मनोरमातः पूरितम्।

३ अयं ख. ङ. पाठः क. ग. नास्ति। मनोरमायां तु दृश्यते।

वात् । तदाह—इकसमीपाद्धित्यादि । उपरञ्जकतया विषयसप्तमीम् आश्रित्य द्वन्द्वसाधुत्वमुपेयम् । आत्मनेपदेष्विति किम् ? । 'अद्राक्षीत्' । अत्र हि कित्त्वे अम् न स्यात् । गतौ चेति । पृथग्धातु[3]पाठसामर्थ्यात्पूर्वोत्तराऽर्थौ चेनाऽनुकृष्येते इत्यर्थः । अर्थभेदादिति । दैन्य-कम्पनाद्यर्थयोर्भेदादित्यर्थः । ( मेपृ-रेपृ[2] । 'हेपृ-धेपृ' इत्यपि केचित् ) ।

तृफल । गुणशब्देन भाविताऽकारवत्त्वात्, विरूपाऽऽदेशाऽऽदित्वात्, एकहल्मध्यस्थत्वाऽभावाच्च यथायथमप्राप्ते विधिरयम् । ( अँबि[3] रबि । अम्बः = शब्दः । '[4]त्रयः = अकारोकारमकाराः प्रतिपादका यस्येति त्र्यम्बक' इति भट्टभास्करः । अन्ये तु 'त्रीण्यम्बकानि नेत्राणि यस्ये'ति वदन्ति ) । तद्बीजन्त्विति । पूर्वसवर्णप्रवृत्ति-षत्वाऽप्रवृत्त्योर्बीजन्त्वित्यर्थः ।

गुपूधूप । 'धातोरेकाच' इत्यतो 'धातोरि'त्यधिकारात् अस्याऽऽर्द्धधातुकत्वं बोध्यम् । अर्थविशेषाऽनिर्देशादाह—स्वार्थे इति । 'आय'-प्रत्ययोऽकारान्तः । तत्फलन्तु 'गोपायतमि'त्यादौ 'गोपाये'त्यस्य धातुस्वरेणाऽन्तोदात्तत्वे, शबकारेण एकादेशस्याऽप्युदात्तत्वे, 'तमि'त्यस्य अदुपदेशात्परलसार्वधातुकत्वेनाऽनुदात्तस्य 'उदात्तादनुदात्तस्ये'ति स्वरितत्वमित्याहुः ।

सनाद्यन्ताः । 'भूवादय' इत्यस्याऽनन्तरं तु न कृतम् । सनादीनामियत्ताया अलाभाऽऽपत्तेः । 'सनाद्यन्ता' इत्यस्याऽनन्तरं तु 'भूवादयश्चे'ति न कृतम् । 'धातोः कर्मणः' 'धातोरेकाच' इतिसूत्रयोर्धातुपदार्थाऽज्ञानाऽनिवृत्त्यापत्तेरि'ति केचित् ।

'सन्-क्यच्-काम्यच्-क्यङ्-क्यषोऽथाचारक्विप्-णिज्यङौ तथा ।
यगाय ईयङ् णिङ् चेति द्वादशाऽमी सनादयः' ॥

---

१ 'सूत्रविभागादिति । तत्सामर्थ्यात्पूर्वोत्तरार्थौ' इति ख. ङ. पाठः ।

२ अयं मनोरमानुसारी ख. ङ. पाठः ।

३ अयं ख. ङ. पाठः । क. कुण्डलितः । मनोरमास्थत्वात् ।

४ त्रयः—अम्बाः = शब्दा अकारोकारमकाराः' इति मनोरमायां पाठः ।

संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणनिषेधादन्तग्रहणं कृतम् । 'यस्मात्स विहितस्तदादेरि'त्यंशस्तु प्रवर्त्तत एव । तेन 'देवदत्तश्चिकीर्षती'त्यादौ देवदत्तादेः समुदायस्य नेति बोध्यम् । एतत्साध्यधातुसंज्ञ(क)घटकानां सूत्रादीनामपि क्रियावाचकत्वं तु स्वभावाद्बोध्यम् । 'धातुरि'ति सदृशसञ्ज्ञया अस्या अपि क्रियावाचके एव प्रवृत्तेर्वा ।

आयादय आ । विवक्षायामिति । विषयसप्तमीति भावः । परसप्तमीत्वे हि 'आर्द्धधातुकोपदेशे यदकारान्तमि'ति 'गोपायिते'त्यत्र लोपो न स्यात् । 'गोपाया'-इति च न सिध्येत् । पूर्वं क्तिन एवाऽऽपत्तेरित्याहुः ।

कास्प्रत्यया । प्रत्ययान्तेभ्यश्चेति । 'धातुभ्य' इति शेषः । 'अच्छन्दसी'ति नोक्तम् । 'पुत्रमामन्त्रयामास' इत्यादौ ब्राह्मणे आम इष्टत्वात् । 'कास्यनेकाच्' इति वार्त्तिकेऽपि 'अमन्त्रे' इति सम्बध्यते ।

प्रत्ययहणमपनीयेति । [2]परे तु 'अत्र मानाऽभावः । भाष्ये 'तन्न कर्त्तव्यमि'त्यनुक्तेः । अत एव वार्त्तिककृता 'अनेकाच इति वक्तव्यम्, चुलुम्पाद्यर्थमि'त्येवोक्तम्, न तु 'एकाज्व्यावृत्त्यर्थमि'त्युक्तम् । अत एव 'आचारेऽवगल्भे'ति वार्त्तिके धातुभिरेव रूपसिद्धिमाशङ्क्य 'अवगल्भां चक्रे' इत्यादौ 'कास्प्रत्ययादाममन्त्रे' इत्याम्प्रत्ययो यथा स्यादि'त्युक्तं सङ्गच्छते ।

न च 'अवजिगल्भिषते' इत्यादावाचारक्विबन्तादनुदात्तेतः सनि, 'यश्चेष्टं नामधातुष्वि'त्यस्य प्रवृत्त्यर्थम् 'अवगल्भ-क्लीबे'ति वार्त्तिकम् आवश्यकम् । भाष्यप्रामाण्येन ततः सन एवाऽनुत्पत्तेः । तत्राऽकारस्य अनुबन्धत्वेनाऽनेकाच्त्वाऽभावात् 'कास्यनेकाच' इत्यनेन न सिद्धिः ।

न च भौतपूर्विकाऽनेकाऽच्त्वं गृहीत्वा तत्र आमिति भाष्यतात्पर्यम् ।

---

१ 'प्रत्ययग्रहणे यस्मात्स विहितः' इति क. ख. ग. ङ. पाठः ।

२ 'स्यादेतत्—अत्र मानाऽभावः' इति ख. ङ. पाठः ।

तथा सति 'कास्यनेकाच इत्याम् यथा स्यादि'ति वदेत् । किञ्च पूर्वम् 'आमर्थं वार्त्तिकमि'त्युक्त्वा—'अपर आह सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' । 'एवं तर्हि अवगल्भाद्यनुक्रमणं न कार्यम् । कार्यं च, अनुबन्धान् आसङ्क्ष्यामीति, अवगल्भ क्लीब होडे'ति भाष्ये उक्तम् । तत्र अनुबन्धाऽऽसञ्जनस्य पूर्वमतेऽप्यावश्यकत्वेन, 'भौतपूर्विकाऽनेकाच आमि'त्यर्थे मानाऽभावः ।

न च गल्भादिधातूनाम् अनेकाऽर्थत्वात्, अनुदात्तेत्त्वाच्च आचाररूपेऽर्थे 'अवगल्भते' इत्यादेः सिद्धत्वेन, 'अवगल्भे'ति वार्त्तिकाऽऽरम्भसामर्थ्याद्भौतपूर्विकाऽनेकाज्ग्रहणमिति वाच्यम् । आचारेऽर्थे 'सर्वे'त्यनेन क्विपि 'अवगल्भती'त्यादिवारणाय वचनस्याऽऽवश्यकत्वेन, भौतपूर्विकाऽनेकाज्ग्रहणे मानाऽभावः ।

न च 'सर्वप्रातिपदिकेभ्य' इत्यनेन क्विपि तथा प्रयोगे इष्टाऽऽपत्तिः । 'येन नाप्राप्ति'न्यायेनाऽस्य तद्बाधकत्वात् । सर्वग्रहणन्तु 'अवगल्भे'तिवार्त्तिकाऽपेक्षया बहुविषयत्वबोधनायेति, न तदनुपपत्तिः । कर्तृक्विबन्ताऽवगल्भादिभ्यो हलन्तेभ्य आचारक्विप्तु नाऽस्त्येव । 'ह्रस्वनद्याप' इति सूत्रस्थभाष्यप्रामाण्यात्[2] ।

न च 'कास्यनेकाच इति वक्तव्यमि'ति वार्त्तिकाऽक्षरस्वारस्यात्

---

१ इतोऽग्रे—'धातूनामनेकार्थत्वेऽपि स्वार्थकर्तृकर्तृकाऽऽचारसदृशाऽऽचारे कस्यापि धातोर्वृत्तेरदर्शनात् । किञ्च आचारेऽर्थे' इति ख. ङ. पाठः ।

२ इतोऽग्रे—'अपि च 'इजादेश्चे'ति सूत्रे 'इयेषे'त्यादौ गुणे कृते, आम्स्यादि'त्याशङ्क्य 'उपदेशवचनात्सिद्धमि'त्युक्तम् । एवञ्च 'एत्' 'ओत्'शब्देभ्य आचारक्विपि, 'इजादेश्चे'त्यस्याऽप्रसक्तौ, तत्प्रत्याख्याने च प्रसक्तौ, फलभेदाऽऽपत्तेः । मम तु न दोषः । तत्र 'कास्प्रत्ययादि'त्येव सिद्धेः । अत एव उपदेशवचनपक्षे 'उच्छेराम् वक्तव्य' इत्येव दोष उक्तो भगवता, न तु 'नामधातुभ्योऽपि वक्तव्यं' इति' इति ख. ङ. पाठः । क. कुण्डलितः ।

तल्लाभः। अन्यथा 'अनेकाच' इत्येव ब्रूयात्, न तु प्रत्ययशब्दाऽवरुद्ध-कास्युत्तरभागे तं निवेशयेदिति वाच्यम्। न हि 'कास्यनेकाच' इति द्वन्द्वः। समाहारद्वन्द्वे टजापत्तेः। अन्यत्र द्विवचनाद्यापत्तेः। तस्मात् 'कासी'ति सप्तम्यन्तम्। 'तद्धटितसूत्रे' इत्यर्थः। 'कासूग्रहणे चकास उपसङ्ख्यानमि'त्युपक्रमस्वारस्यात्। किञ्चैवं सूत्रकारस्याऽधिकलक्ष्या-ऽदर्शनरूपाऽज्ञानवत्, एकाच्प्रत्ययाऽन्तलक्ष्यविषये आमुसत्ताज्ञानेऽपि भ्रमत्वकल्पनेन, मुनेरज्ञानद्वयकल्पनाऽऽपत्तिरित्याहुः।

---

'इति चेदत्राहुः—यथास्थितसूत्रेऽपि प्रत्ययग्रहणमनेकाच्प्रत्ययाऽन्तपरमेव। तद्ग्रहणसामर्थ्यात्। अन्यथा 'आममन्त्रे' इति सामान्यसूत्रं विधाय, 'कास्' इत्यंशस्य 'औपदेशिकधातोश्चेत्कास एवे'ति नियमेनैव सिद्धे, प्रत्ययग्रह-णस्य वैयर्थ्याऽऽपत्तेः।

न च एकाच्प्रत्ययाऽन्तस्यैव ग्रहणाऽर्थमस्त्विति वाच्यम्। 'गोपाया-ञ्चकारे'ति 'आयादय'इतिसूत्रस्थभाष्यप्रयोगविरोधाऽऽपत्तेः। 'अनेकाच इति वक्तव्यमि'तिभाष्यस्य त्वयमर्थः—'आमिति सामान्यविधिः। कासूग्र-हणं च 'एकाचो धातोश्चेत्कास' इतिसामान्यनियमपरतयैव व्याख्येयमि'ति। एवञ्च प्रत्ययग्रहणाऽपनयः स्पष्ट इव। फलाभाऽभावात्। एवञ्च 'स्वामासे'त्यादिरूपाणि सूत्रस्वरसविरुद्धानि-यद्येकाच्प्रातिपदिकेभ्य आचार-क्विपोऽभिधानमस्ति।

'इजादेश्चे'तिसूत्रस्थोपदेशवचनप्रत्याख्यानपक्षेऽपि 'अनृच्छ' इति पर्यु-दासात् औपदेशिकधातावेव तत्प्रवृत्तिरि'ति न तद्विरोधः। (किञ्चाऽऽत्मनेपद-मात्रफलकत्वेऽवगल्भादिप्रकृतिकक्विप इकारस्यैवाऽनुदात्तत्वप्रतिज्ञया सिद्धे, प्रत्येकम् अकाराणामनुबन्धत्वम् 'अनुबन्धानासंक्ष्यामी'तिभाष्योक्तं भौतपूर्विकाऽनेकाच्त्वद्वारा आमर्थं सत्प्रत्ययग्रहणाऽपनयं बोधयति)।

यदि तु 'अनुबन्धाऽऽसञ्जनाऽर्थमि'त्यस्य 'अतिरिक्तोऽकारः पररूपेण श्लिष्टो-ऽनुनासिकः सम्बध्यते'इत्यर्थः क्रियते, तदाऽनेकाच्त्वादेवाऽऽम् सिद्ध इति,

आर्द्धधातुकोपदेश इति । 'अनुदात्तोपदेशे'ति सूत्रादेकदेशे स्वरितत्वप्रतिज्ञया–'उपदेशे' इत्यनुवर्त्तते इति भावः । एतच्च 'इको गुणवृद्धी' इत्यादौ भाष्यादौ स्पष्टम् । तत्र 'कस्योपदेशे' इत्याकाङ्क्षायामुपस्थितत्वात् 'आर्द्धधातुके' इत्येव विभक्तिविपरिणामेन सम्बध्यते । तत्फलन्तु पयादिभ्यः क्विपि, 'लोपो व्योरि'ति लोपे अल्लोपाऽभावः'–पत्' । 'वध्यात्'-इत्यादावतो लोपस्तु 'आर्द्धधातुके' इतिवत् 'लिङि' 'लुङी'त्यादीनामपि विषयसप्तमीत्वाऽङ्गीकारात्सिद्ध इति स्पष्टं भाष्यादौ । आर्द्धधातुकेति किम् ? । 'वृक्षस्य'[1] । व्युत्पत्तिपक्षे 'स'प्रत्यय उपदेशेऽकारान्तः ।

अङ्गेन प्रत्ययपरत्वमाक्षिप्यते । स च उपस्थितत्वादार्द्धधातुकमेव । तदाह–आर्द्धधातुके परे इति । तत्फलन्तु 'गणयती'त्यादौ परनिमित्तकत्वेन लोपस्य स्थानिवत्त्वाद्वृद्ध्यभावः । 'आर्द्धधातुके' इति विषयसप्तमीत्येवं पर-'लोपो व्योरि'तिसूत्रस्थभाष्यरीत्या विषयसप्तमीत्वेऽपि, परनिमित्तत्वाऽक्षतिरित्याहुः ।

घुण घूर्ण । न च घूर्णेः 'उपधायां चे'त्येव दीर्घे सिद्धे, दीर्घपाठो व्यर्थः । अस्माद्विचि, सौ, भ्यामादौ च नलोपे, तस्य परिगणितेष्वेवाऽसिद्धत्वेन, दीर्घस्याऽसिद्धत्वेन लघूपधगुणाऽऽपत्तेः । नलोपस्य बहिरङ्गाऽसिद्धत्वन्तु न । 'कृतितुक्'ग्रहणात् । अयमपि दीर्घपाठस्तत्परिभाषाऽनित्यत्वज्ञापक इत्याहुः । 'प्रक्रियालाघवाऽर्थ एवे'त्यन्ये ।

अन्ये तु ह्रस्वमेव पठन्ति ।

---

भूतपूर्वादप्यनेकाच इत्यर्थकल्पनस्य न कश्चिदुपयोगः । अत एव भाष्ये 'आत्मनेपदाऽर्थोऽनुबन्धार्थमि'त्येव नोक्तं, किन्तु 'तदासञ्जनार्थमि'त्येतावत्पर्यन्तमुक्तम् । ध्वनितं चेदं 'ह्रस्वनद्याप' इति सूत्रे भाष्ये—'कास्प्रत्यया'दित्याम् यथा स्यादि'त्युपक्रमम् ... अनन्यथासिद्धोपसंहारात् दुर्लभमिति' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

1 'वृक्षः' इति ख. ङ. पाठः ।

स्नुतावित्येवेति। यद्यपि 'पृथङ्निर्देशो यथासङ्ख्यनिवृत्त्यर्थ'इत्यपि वक्तुं शक्यं, तथापि सम्प्रदायाऽनुरोधादेवमुक्तम्। स्नुतावेवायेति। वृत्तिसंमतमेतत्। भट्टिकाव्ये तु 'न चोपलेभे वणिजां पणायामि'ति व्यवहारेऽपि दृश्यते। तत्र 'आय'प्रत्ययाऽन्तात् 'अ प्रत्ययादि'ति 'अ'प्रत्यये, टापि, व्यवहारमित्यर्थ इति दिक्। स्नुतावनुबन्धस्येति। आर्द्धधातुकविषये आयादीनां वैकल्पिकत्वेन, तदभावे चारितार्थ्यमिति भावः। स्पष्टं चेदं 'पूर्ववत्सन' इति सूत्रे भाष्यकैयटयोः।

चक्षंसे इति। 'अनुनासिकस्ये'ति दीर्घस्तु न। (सञ्ज्ञापूर्वकविधेरनित्यत्वात्)। यद्वा क्विप्साहचर्यात् झलादिकृत एव ग्रहणात्। क्विप्शब्देनाऽऽचारक्विपस्तु न ग्रहणम्। हलन्तेभ्यस्तदभावात्। तत्र ककाराद्युच्चारणन्तु तस्य शास्त्रे प्रसिद्धत्वमात्रेण। 'च्छ्वोरि'ति सूत्रे तु शब्दाऽधिकारः, साहचर्याऽनाश्रयणं च। 'क्विप्साहचर्यात्तिङ्भिन्नो झलादिक्कृद्गृह्यते' इति माधवाद्यनुसारिणः। कामयते इति। अनिग्लक्षणत्वान्नोपधावृद्धिनिषेधः।

अयामन्ता। 'ने'ति णिलोपनिषेधेनैव सिद्धे अयवचनं'ल्यपि लघुपूर्वादि'त्यर्थम्। 'प्रस्तनय्य'। न ह्यत्र गुणाऽयौ प्राप्नुतः। आलुः--'स्पृहिगृहिपते'ति विहितः। अन्येऽन्तादय उणादयः। इष्णुः—'णेश्छन्दसी'ति विहितः,-'पारयिष्णव' इति। 'णेरि'ति णिङ्-णिचोः सामान्यग्रहणम्। णिलोपाऽपवादोऽयम्।

णिश्रि। अत्र 'ङ'प्रत्यय एवाऽस्तु। 'चङी'त्यस्य स्थाने 'ङे' इत्येव कार्यम्। एवञ्च चकारो व्यर्थ इति चिन्त्यम्।

परत्वादियङादिषु सत्सु, सकृद्गतिपक्षे स्थानिवद्भावेन णित्वेऽपि, लोपो न स्यादत आह—ण्यल्लोपाविति। क्तिजन्तमिति। क्तिन् तु दुर्लभः। 'अ प्रत्ययादि'त्यनेन बाधात्। 'तितुत्रेती'ट्निषेधः। इदमुपलक्षणम्—

१ अयं ख. ङ. पाठः।

२ 'झलादिरपि कृदेवेति तिङि न दीर्घः' इति ख. ङ. पाठः।

'ज्ञीप्सती'त्यप्यवकाशः । इडभावे 'इको झलि'ति कित्त्वात् । यदि तु पुनः-प्रसङ्ग आश्रीयते, तदा णिलोपांऽशे वार्त्तिकमनावश्यकम् । अत एव सप्तम-शेषे 'ण्यन्तात् णौ परत्वाद्वृद्धिः । वृद्धौ कृतायां लोपः । तत् न अग्लोप्यङ्ग-मि'ति भाष्ये उक्तम् । वचनसामर्थ्यादिति । इडादावपि गुणेन परत्वात् णिलोपबाधसम्भव इति भावः[1] । आर्द्धधातुकमात्रमिति । 'मात्र'शब्दः कार्त्स्न्ये । परे तु 'एवमपि अनन्तरयणियङोर्बाधेन चरितार्थतया, व्यव-हितवृद्ध्यादिबाधो न स्यादिति 'अनिटी'ति वचनस्य पूर्वविप्रतिषेधमानतैव उचिते'त्याहुः ।

णौ चङि । णिचाऽङ्गेनाऽव्यवहितपरत्वम् । चङा तु सामर्थ्याद्व्यवहित-परत्वम् । तत्फलितमाह–[2]चङ्परे णाविति ।

ननु 'चङी'त्येतावतैव (प्रत्ययस्याऽङ्गांशे उत्थिताकाङ्क्षत्वेन, तदन्वयस्यौ-चित्याच्च) चङ्परणेर्लाभे, णाविति व्यर्थम्, श्रिद्रुप्रभृतीनां च चङि उपधाया अण्रूपाया ह्रस्वभाविन्या अभावादिति चेन्न । 'चङ्परोपधाया' इत्येवाऽर्थः स्यात् । न च फलाऽभावः । 'लू-इ-अ' इत्यादावन्तरङ्गमपि वृद्ध्याव् गुणादिकं बाधित्वा, वचनसामर्थ्यात् ह्रस्वे, 'अलूलुअदि'त्यस्यैव फल-त्वात् । तथा च 'अपीपचदि'त्यादौ ह्रस्वसाधनाऽर्थं तत् । यदि तु 'वचन-सामर्थ्यात् वृद्ध्यादिबाधाऽपेक्षया अङ्गभूतनिर्दिष्टपरिभाषाया एव बाध

---

१　इतोऽग्रे—'पाक्षिः''ज्ञीप्सती'त्याद्यर्थं 'णेः स्ती'त्येव वदेत् । 'तादौ, सादौ चाऽऽर्द्धधातुके' इत्यर्थः स्यादिति भावः' । इति ख. ङ. पाठः । क. कुण्डलितः ।

२　इतोऽग्रे—'ननु ह्रस्वश्रुत्योपस्थिताऽच इत्यस्य 'अङ्गाऽवयवाऽच' इत्यङ्ग-विशेषणकस्य चङ्परणिपरत्वं विवक्ष्यताम् । तत्र येननाऽव्यवधानन्यायेनैक-वर्णव्यवधानमेवाऽऽश्रयिष्यते, अतः 'अचकाङ्क्षदि'त्यादौ नाऽतिप्रसङ्ग इति, किमुपधाग्रहणेनेति चेन्न । 'लोपः पिबतेरि'त्याद्युत्तराऽर्थमावश्यकस्य स्पष्ट-प्रतिपत्त्यर्थमिहैव करणात्'(चङ्परः') इति ख. ङ. पाठः । क. कुण्डलितः ।

उचित: । किञ्च णिलोपे कृते चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधान्न 'अपीपचदि'त्यादौ दोष: । वृद्ध्यादौ कृते च तत एव 'अलीलवदि'त्यादिसिद्धि: । अत एव शास्त्रदितां ह्रस्वनिषेध: सार्थक' इत्युच्यते, तदा 'णि'ग्रहणं स्पष्टाऽर्थम् । बहुव्रीहिरिति । 'पर'ग्रहणसामर्थ्यादिति भाव: । तद्विशेष्यं च णिरेव, न लघ्विति । 'अङ्गस्ये'त्यावर्त्त्य 'अङ्गसंज्ञानिमित्तमि'ति व्याख्यानात् । अवध्यवधिमतो: साजात्याच्च । अत एव श्रि-द्रुप्रभृतीनां न सन्वद्भाव: । ध्वनितं चेदमत्रैव भाष्ये ।

तत्परं यल्लघ्विति । संनिधानात् 'चङ्परे' इति लघोरेव विशेषणमिति भाव: । अत एव 'इह कस्मान्न भवति–'अजजागरत्' । 'लघुनि चङ्परे' इत्युच्यते । 'व्यवहितं चाऽत्र लघु चङ्परे' इति भाष्यं सङ्गच्छते । 'चङ्परे णौ यल्लघु, तत् अभ्यासस्य व्यवहितमि'ति तदर्थ: । एवं च 'अचचकासदि'त्यादौ सन्वद्भावो न भवत्येव । 'औन्दिददि'त्यादौ च 'दीर्घो लघोरि'ति न दीर्घ: । न च 'अचचकासदि'त्यत्र चङ्परणिपरत्वं लघोरस्त्येव, अनुवादे परिभाषाऽनुपस्थितेरव्यवधानलाभाऽभावादिति वाच्यम् । तस्याऽनित्यत्वात्, तदभावाच्चेति निरूपितम् 'अल्लोपोऽन' इत्यत्र । 'अचिक्ष्मपत्' 'अचिक्ष्णर्दि'त्यत्र 'अत्स्मृदृत्वरे'त्यनेन इत्त्वबाधनाऽर्थेन संयोगव्यवधाने प्रवृत्तिज्ञापनान्न दोष: । अत एव 'अत्स्मृदृत्वरे'तिज्ञापकाद्भवत्येवंजातीयकानामित्त्वमि'ति भाष्ये उक्तम् ।

न चाऽत्र पक्षे 'अनग्लोपे' इति व्यर्थम् । 'अचकथदि'त्यादावल्लोपादे:[1] स्थानिवत्त्वेन, लघो: ककाराऽकारस्य ( चङ्परस्य[2] ) चङ्परणिच्परत्वाऽभावात् । लुप्ताऽकारलघुपरश्च नाऽभ्यास: । न चाऽभ्यासस्य नाऽनादिष्टादच: पूर्वत्वम् । षाष्ठद्वित्वस्य द्वि:प्रयोगतया, उच्चारणक्रियामात्रभेदेन अनादिष्टादच: पूर्वत्वाऽक्षतेरिति वाच्यम् । 'अभ्यासस्य कार्ये तदुत्तर-

---

१ अयं ख. ङ. पाठ: ।

२ 'चङ्परस्य' इति ग. पाठ: । क. ख. ङ. नास्ति ।

खण्डीयधात्ववयवाऽऽदेशस्य तत्प्रतिबन्धकस्थानिवत्त्वं ने'त्यर्थस्य 'अभ्यासस्याऽसवर्णे' इत्यसवर्णग्रहणेन ज्ञापिततयाऽक्षतेः।

अङ्गस्येति । 'तदवयव' इत्यर्थः । अत एव 'अजजागरदि'त्यत्र सन्वद्भावाऽऽपादनं भाष्ये कृतम् । यत्तु 'कार्यकालपक्षे 'पूर्वोऽभ्यास' इत्यत्र कार्यविधायकसूत्रस्थाऽभ्यासपदोत्तरं या विभक्तिः, सा पूर्वशब्दोत्तरं कल्प्या । 'पूर्वोऽभ्यास' इत्यत्र प्रथमा तु साधुत्वाऽर्था । ( उपस्थितपदानां यथायोग्यमन्वयः) । 'एकाचो धातोरि'ति चाऽङ्गेन समानाधिकरणम् । 'द्वे' इत्यस्य च विशेष्यम् 'उच्चारणे' इत्येव । 'अङ्गस्ये'ति षष्ठी च कर्मणि । कारकविभक्तेरेव न्याय्यत्वात् । अङ्गाऽधिकारस्थकार्यसमीपे गमनेऽत्राऽप्यङ्गसंनिधानात् । एवञ्च 'अङ्गसंज्ञकैकाऽचूधातुकर्मके ये द्वे उच्चारणे, तयोः पूर्वस्य सन्वदि'ति सूत्राऽर्थः। एवञ्च 'एकाक्ष्वेव प्रवृत्तिरिति' माधवः। तन्न । भाष्यविरोधात् । किञ्चैवं ह्रस्व-हलादिःशेष-चुत्वादीन्यपि अनेकाक्षु न स्युः। तस्मादत्र यथोद्देशपक्षाऽऽश्रयणमेवोचितम् । कार्यकालपक्षेऽपि वा 'अङ्गस्ये'ति शेषषष्ठ्येवेति बोध्यम् । एवञ्च भाष्यरीत्या 'अचचकासदि'त्यादौ नैव सन्वत्त्वम् । 'और्णूनवदि'त्यत्र भवत्येवेति तत्त्वम् ।

अथवाऽङ्गस्येति नेति। 'चङ्परे' इत्यस्याऽङ्गविशेषणत्वे, अङ्गसञ्ज्ञायाः प्रत्ययनिमित्तत्वेनैव णिरूपविशेष्यलाभः । तस्य प्रत्ययांऽशे उत्थिताऽऽकाङ्क्षत्वादिति भावः । अयं च पक्षो भाष्यविरुद्धः, 'औन्दिददि'त्यादौ दीर्घाऽऽपत्तिश्चाऽत्र पक्षे । चङ्परे णौ यदङ्गम्—'औन्दिद्' इति, तदीयोऽभ्यासश्चङमादाय, णिलोपस्य स्थानिवत्त्वेन णिमादाय वा, लघुपरश्चेति प्राप्तिः ।

---

१ 'यत्तु कार्यकालपक्षे 'पूर्वोऽभ्यास' इत्यादेरयमर्थः—'यत्राऽभ्यासपदं तत्र 'एकाचो धातोर्ये द्वे उच्चारणे तयोः पूर्वं' इत्युपस्थितं भवती'ति । तत्र अभ्यासपदोत्तरं या विभक्तिः' इति ख. ङ. पाठः ।

२ अयं ख. ङ. पाठः । क. ग. नास्ति ।

यत्तु 'मीमादीनां तु लोपः प्राप्नोति'—'अमीमपत्' । 'सिद्धन्तु सनि यादृशमभ्यासरूपं दृष्टं तादृशस्यैवाऽत्रातिदेशो, न तु कार्यस्य । न च मीमादीनां सनि अभ्यासरूपमस्ति । लोपश्चाऽभावो, न रूपमि'त्युक्त्वा 'अङ्गाऽन्यत्वाद्वा सिद्धमि'ति भाष्यप्रतीकमुपादाय, 'मीमादीनामङ्गानामभ्यासलोपो विहितः । अयन्त्वभ्यासो ण्यन्तानामि'त्येकं व्याख्यानं कृत्वा, 'अन्ये तु 'चङ्परे णौ यदङ्गं, तदभ्यासस्य सन्वद्भावो विधीयते । णौ मीमादीन्येवाऽङ्गानि । तस्मात् 'अङ्गाऽन्यत्वादि'त्यस्याऽयमर्थः—'येषामङ्गानामच इसादिर्विधीयते, तस्याऽत्र ग्रहणाल्लोपः, न त्विसादिरहितानाम्—'अमीमपदि'त्यादौ । धातोः सन्वद्भावाऽभावात् । अभ्यासस्यैव हि अनेन सन्वत्त्वमि'ति कैयटे उक्तम् । तस्य तु नाऽत्र तात्पर्यम् । 'अङ्गस्याऽभ्यास' इत्यत्र अङ्गं किंनिरूपितं ग्राह्यम ? । चङ्निरूपितं, णिनिरूपितं वा ? । तत्र उपस्थितत्वात् , प्राधान्याच्च णिनिरूपितमेव गृह्यते, इत्येवंपरतया पूर्वभाष्याऽविरोधेन योजयितुं शक्यत्वादिति बोध्यम् ।

सन्यतः । अतः किम ? । 'जुघुक्षति' ।

दीर्घो लघोः । लघोरिति । 'अभ्यासाऽवयवस्य लघोरि'त्यर्थः । न तु सामानाधिकरण्येन । असम्भवात् । न हि अज्झल्समुदायस्य लघुसञ्ज्ञाऽस्ति । 'ह्रस्वं लघ्वि'ति सूत्रितत्वात् । एवञ्च निर्दिष्टस्थानिकत्वात् 'अचश्चे'ति, लिङ्गाऽभावात् 'अलोऽन्त्यस्ये'ति च न प्रवर्त्तते ।

वस्तुतो 'लघ्वन्ताऽभ्यासस्ये'ति सामानाधिकरण्येनाऽप्यन्वयः सुवचः । 'अचश्चे'त्युपस्थिता'ऽच' इत्यनेनाऽपि तथैव । 'अलोऽन्त्यस्ये'त्यस्य प्रवृत्त्या चेष्टसिद्धिः ।

'लघुनी'त्याद्यनुवर्त्तते । तदाह—सन्वद्भावविषये इति । अत्र 'हलादेर्लघोरभ्यासस्ये'ति व्याख्यानं केषाञ्चित् । तन्निर्मूलं, निष्फलं च ।

---

१ 'अतः किम् ? । पापच्यतेः सन्-'पापचिषते' । न च 'सन्निमित्ताऽभ्यास' इति व्याख्यानाच्च दोषः । 'सनी'त्यस्य साक्षादनुवाद्ये श्रुतेऽन्वये सम्भवति,

'औन्दिदत्' 'आट्टिटदि'त्यादौ चङ्पर-णि-पर-लघुपरत्वाऽभावेन प्राप्ते-रभावात् । लघोः किम् ? । 'अचिक्षणत्' ।

सञ्ज्ञायाः कार्यकालत्वादिति । अस्याऽऽशयः पूर्वमेवोक्तः । ननु 'पूर्वोऽभ्यास' इत्यधिकारात् 'एकाचो धातोर्ये द्वे उच्चारणे, तयोः पूर्वोऽभ्यास-पदशक्य'इत्यर्थात् , प्रकृतेऽप्यभ्यासपदेनेदृशाऽर्थस्यैवोपस्थितेर्यथोद्देशेऽपि प्रागुक्ताऽर्थलाभः सुलभ एवेति चेन्न । 'अभ्यास'पदेन उच्चारणरूपाऽर्थो-पस्थितावपि,'उच्चारण'पदाऽभावात् कृद्योगाऽभावेनाऽङ्गस्येत्यस्य कर्मषष्ठ्य-

---

अनुवाद्यविशेषणेनाऽश्रुतेनाऽन्वयाऽयोगात् । 'गुणानां च परार्थत्वादि'ति-न्यायात् । 'न हि कार्यी'ति न्यायेन 'प्रतीषिषती'त्यादावव्याप्तेश्च ।

परे तु 'सनी'त्यभ्यासविशेषणम् , सत्सप्तमी'ति च 'स्तौतिण्योरि'ति सूत्रे कैयटे स्पष्टम् । 'न हि कार्यी'ति न्यायस्य तु अत्र न प्रवृत्तिः । 'स्तौतिण्यो-रि'ति सूत्रे 'अधीषिषती'ति भाष्योदाहरणात् । किञ्च भवदुक्ताऽर्थे अभ्यासा-ऽकारस्य सन्परत्वाऽभावेन 'पिपक्षती'त्यादावित्वं न स्यात् । सूत्रन्तु 'प्रती-षिषती'त्यादौ चरितार्थम् । तपरकरणन्तु स्पष्टाऽर्थमेव । 'अस्ये'त्युक्तौ च 'सन्पराऽभ्यासाऽकारस्ये'ति व्याख्यानेऽपि यङोऽल्लोपस्य स्थानिवत्वात् क्वौ लाघवाऽभावात् । दधानादिभ्य आचारक्विबन्तेभ्यः सनोऽनभिधानमेव । अप्रयुक्ते लक्षणाऽभावयोग्यताया एव 'यथालक्षणमप्रयुक्ते' इति भाष्येण बोधनात् । गुणानामपि 'गुणः कृतात्मसंस्कार' इति न्यायेन क्वचित् परा-ऽन्वयस्वीकारात् , यङन्तात् सनि इत्वस्याऽप्राप्तिरेव । न च सना धातुमाक्षिप्य 'सनि सति यो धातुः सन्नन्तस्तदीयाऽभ्यासस्ये'ति व्याख्यानात् प्राप्तिः । एवं व्याख्याने फलाऽभावात् । किञ्च भवदुक्तव्याख्यानेऽपि प्रत्यासत्तिन्यायेन सन्निमित्ताऽभ्यासस्यैव ग्रहणं स्यात् । तेऽपि प्रत्यासत्तीबे-तवाऽभिज्ञाज्ञापकाऽऽश्रयणमावश्यकमित्याहुः ?' इति ख. ङ. पाठः । क. कुण्डलितः । प्रायो मनोरमायामपि अयं ग्रन्थो दृश्यते ।

१ 'आट्टिटत्' इति क. ग. पाठः ।

न्तत्वाऽसम्भवेन प्रागुक्ताऽर्थाऽलाभात्। 'धातोरि'त्यवयवषष्ठ्यन्ताऽनुवर्त्तनाच्च। अभ्यासपदस्य तु सञ्ज्ञाशब्दत्वात्, कृत्प्रकृत्यर्थक्रियाकर्त्तृकर्मणोरेव षष्ठीविधानाच्च न तन्निरूपितकारकषष्ठीत्वमङ्गस्येत्यादेरिति दिक्।

वस्तुत इति। आद्यपक्षस्य निष्कर्षोऽयम्। एतद्बीजमप्युक्तम्। ऊर्णौ दीर्घ इति। 'स्यादि'त्यपकृष्यते। सन्वद्भावस्त्वत्र नोपयुज्यते। णौ कृतस्य स्थानिवत्त्वेन, 'नु'शब्दद्वित्वे सति, अभ्यासे अवर्णाऽभावात्।[1]

अर्थापयताविति। 'अर्थशब्दात् णिचि प्रकृतेरापुगागम' इति मते इदम्। 'आपुडागम' इतिभाष्योक्तपक्षाऽन्तरे तु ह्रस्वेनैव न भाव्यमित्यनयोरप्रसङ्ग एव[2]। तयोः फलाऽभेदाय लुङि अनभिधानमेवाऽस्येति तत्त्वम्। मूलन्तु[3] 'कृत्वाचिन्ता'न्यायेनेति दिक्। न स्यादिति। 'न स्यादेवे'त्यर्थः।

व्यवस्थयेति। 'स्वोक्तपक्षाऽन्तरेणे'त्यर्थः। कैयटेनैवेति। एतत्पक्षनिष्कर्षश्च प्रागेवोक्तः। अगितामिति। 'पच-कमिप्रभृतीनामि'त्यर्थः। न हीत्सञ्ज्ञानां लोपो णिचं प्रतीक्षते इति भावः।

सायात्, सन्यादिति। ननु 'जनसनखनामि'तिसूत्रे भाष्यप्रामाण्यात् सनोतेरेव ग्रहणमिति लभ्यते। एवञ्चाऽर्थाऽधिकारादत्राऽपि तस्यैवाऽनुवृत्तिरिति,-अत्राऽऽत्त्वविकल्पोऽनुचितः। तथा हि 'सनोतेरनुनासिकलोपादात्त्वं विप्रतिषेधेने'ति वार्त्तिकम्, 'आत्त्वे सनोतेर्ग्रहणस्य कोऽवकाशः?, 'सनि च' 'ये विभाषा' चे'ति भाष्यमिति चेन्न। सनोतेर्विप्रतिषेधविचारे तथोक्तावपि, अस्याऽग्रहणे मानाऽभावात्। न च 'आत्त्वस्याऽवकाशोऽन्ये जनादय' इत्युपक्रमस्थभाष्यं विरुध्येत। भौवा-

---

१ इतोऽग्रे—'सन्वदि'ति कार्याऽतिदेशेऽपि सन्वैकल्यप्रयुक्ताऽप्राप्तिमात्रेण चरितार्थस्याऽतिदेशस्य निमित्तद्वयवैकल्यप्रयुक्ताऽप्राप्तप्रापणे व्यापाराऽभावात्' इति ख. ङ. पाठः। क. कुण्डलितः।

२ इतोऽग्रे-'केचित्तु भाष्योक्तपक्षाणां फलाऽभेदाय आपुक्पक्षेऽपि संज्ञापूर्वकविधेरनित्यत्वमाश्रित्य ह्रस्वाऽभावमाहुः' इति ख. ङ. पाठः।

३ 'मूलन्तु माधवाद्यनुरोधेन (इति) बोध्यम्' इति ख. ङ. पाठः। क. कुण्डलितः।

दिके सन्ग्रहणस्याऽवकाशलाभेन, जनादिपर्यन्तधावने बीजाऽनापत्तेरिति वाच्यम् । अन्ययोर्जनखनोर्द्वयोरेव सत्त्वेन 'जनादय' इति बहुवचनस्याऽसङ्गत्या, एवं सनमादायैव तत्सङ्गतेर्वाच्यत्वेन, एतद्ग्रहणस्याऽपि भाष्यसंमतत्वात् । 'जन'ग्रहणेन तु व्याख्यानात् जौहोत्यादिक-दैवादिकौ द्वावपि गृह्येते । एवं 'जनिवध्योरि'ति सूत्रेऽपीति दिक् ।

केचित्तु 'आङो यी'तिवन्निर्देशे कर्त्तव्ये, गुरुनिर्देशेन अकारस्य विवक्षितत्वात् यगादावेवाऽस्य प्रवृत्तिः, न तु यासुडादावितीदं चिन्त्यमेवे'त्याहुः । तन्न । 'अचः परस्मिन्नि'तिसूत्रशेषे 'अजज्ञि आशाम्–अजज्ञ्याशामि'त्यादौ यणि, 'ये विभाषे'त्यात्त्वं प्राप्नोती'ति भाष्यविरोधाऽऽपत्तेः ।

जिमिमिति । तथाच भोजने 'जेमनमि'ति प्रयुञ्जते ।

वा भ्राश । 'भ्रमु चलने'–भ्वादिर्ज्वलादिः । [2]यत्तु मनोरमायां 'फणादिरि'त्यपि क्वचित्पठ्यते, सोऽपपाठः । अत एव 'वा जॄभ्रमुत्रसामि'ति 'भ्रमु'ग्रहणं चरिताऽर्थम् । वस्तुतः फणादिष्वेव भ्रमु, त्रसिं च पठित्वा, 'फणां च नवानामि'ति सूत्रं विधाय, 'वा जॄ' इति सूत्रे भ्रमु-त्रसिग्रहणं न कार्यम् । न च दिवाद्योरेत्त्वाऽभ्यासलोपाऽनापत्तिः । 'बभ्रमतुरि'त्यादेरिष्टत्वेन, इष्टाऽऽपत्तेरि'ति वदन्ति । तद्धननायेदमुक्तमिति बोध्यम् । इयं चाऽनवस्थानाऽर्थभ्रमि-क्लमि-त्रसीनां दिवादित्वात् श्यनि प्राप्ते, प्राप्तविभाषा । इतरत्राऽप्राप्तविभाषेति बोध्यम् ।

[3]शितीति । यत्तु 'इषगमियमामि'तिसूत्रे इष्यतीष्णात्योर्व्यावृत्त्यर्थं 'क्सस्याऽची'त्यतः 'अची'त्यनुवर्त्य, 'इषेश्छत्वमहली'तिवार्त्तिकं भगवता

---

१ इतोऽग्रे–'चेन भौवादिकसन्धातावकाशस्याऽप्युक्तत्वाच्च' इति ख. ङ. पाठः ।

२ 'यत्तु' इत्यारभ्य 'इति बोध्यम्' इत्यन्तः ख. ङ. पाठः । क. कुण्डलितः, लघुशब्दरत्नधृतत्वात् ।

३ 'शितीति' इत्यारभ्य 'सप्तानामिति चरितार्थम्' इत्यन्तः ख. ङ. पाठः, क. कुण्डलितो, मनोरमास्थत्वात् ।

प्रत्याख्यातम् । एवञ्चाऽचीत्यस्य सम्बन्धात्, श्यन्येवाऽनेन दीर्घो, न तु श्यनीति' इति । तन्न । वार्त्तिकमतेऽनुवृत्त्यभावेन, ऋष्योः फलभेदाऽऽपत्त्या मण्डूकप्लुत्या मध्येऽसम्बन्धस्यैव युक्तत्वात् । प्रथमोपस्थित-'क्रमः परस्मैपदेष्वि'त्यत्रैव 'अहली'तिवार्त्तिकोपन्यासस्य, 'अची'त्यनुवृत्त्या तत्प्रत्याख्यानस्य च कर्त्तुं युक्तत्वेन, 'इषे'ति सूत्रे एव तत्करणेन मण्डूकप्लुतेर्बोधनम् । एवञ्च धातुपाठे, 'इषगमी'तिसूत्रे च केषांचित् उदित्पाठोऽनार्षः । यदपि 'ष्ठिवुक्लमु' इति सिद्धे, क्रमः शमादौ पाठः 'श्यनि एषामेव दीर्घ' इति नियमाऽर्थः । तेन क्रमेः श्यनि न दीर्घः । न च न सर्वेषां श्यनि दीर्घः सिद्धो, येन 'श्यनि एषामेवे'ति नियमः स्यात् । किञ्च क्लमेः शमादौ पाठस्य घिनुणर्थतया चारितार्थ्यमिति वाच्यम् । 'वृद्भ्य' इति बहुवचनवत् 'शमामि'ति बहुवचनेनाऽऽद्यर्थलाभे सिद्धे, 'अष्टानामि'त्युक्तिः प्रत्येकं व्यापारबोधनाऽर्था । तेन 'श्यनि क्लम एवे'ति नियमः सुलभः । अन्येषां शमादीनां तु विध्यर्थमि'ति । तदपि न । 'अष्टानामि'त्यस्य ग्रहणाऽभावे मद्युत्तरेषां ग्रहणाऽऽपत्तेः । वृत्करणन्तु नाऽस्ति । अपूर्वकरणे तु पदलाघवाऽभावः । अत एव 'जक्षित्यादयः' 'फणां चे'त्यत्र 'षट्' 'सप्ताना'मिति चरितार्थम् ।

क्रामत्विति । 'उत्क्रामे'त्यत्र हेर्लुकि दीर्घस्तु भवत्येव । 'क्रम' इति

१ 'एवञ्च सन्दंशपतितेऽत्राऽपि 'अची'त्यस्य सम्बन्धात्' इति ख. ङ. पाठः । अयं पाठो मनोरमायामपि दृश्यते ।

२ 'क्लमावपि व्यापारबोधनाऽर्था' इति ख. ङ. पाठः ।

३ 'बाधनाऽर्था' इति क. पाठः । 'विधानाऽर्था' इति ग. पाठः ।

४ 'विध्यर्थः' इति ख. ङ. पाठः ।

५ इतोऽग्रे—'एतेन 'किञ्चे'त्यादिकमपास्तम् । 'सप्तानामि'त्युक्तौ लाघवाऽभावाच्चेति दिक्' इति ग. पाठः ।

६ 'क्रम'विशेषणस्योपस्थितशिब्निरूपितस्यैव' इति ख.ङ.पाठः। क. कुण्डलितः ।

सूत्रेऽनुवृत्ताऽङ्गस्य उपस्थितशिन्निरूपितस्यैव ग्रहणेन, ह्रेलुंक्यपि तन्निरूपिताऽङ्गस्य कार्योऽभावेन 'न लुमते'त्यस्याऽप्रवृत्तेः। प्रत्यासत्तिन्यायेन लुमता लुप्ते प्रत्यये यदङ्गं, तस्य कार्ये एव निषेधप्रवृत्तेः।

**स्नुक्रमोर** । 'अनात्मनेपदनिमित्ते' इति भावप्रधानो निर्देशः। प्रसज्यप्रतिषेधश्चाऽयम् । 'स्नुक्रमोरात्मनेपदनिमित्तत्वाऽभावे, प्रत्यासत्त्या ताभ्यामेव परस्य वलादेरार्द्धधातुकस्य इट्' इति वाच्योऽर्थः। उदात्तत्वादिटि सिद्धे, नियमश्चाऽयम्। तदाह–अत्रैवेति। 'स्नुक्रमोरात्मनेपदनिमित्तत्वाऽभावे एवे'त्यर्थः। अत एव 'स्नुक्रमोरि'ति षष्ठी सङ्गच्छते। 'प्रस्नुत' इत्यादौ तु 'श्र्युकः किती'ति प्रतिषेध एव भवति। पुरस्तात्प्रतिषेधकाण्डाऽऽरम्भसामर्थ्यात्। निमित्तत्वं चाऽत्र फलोपहितम् , न योग्यतामात्रेण। तेन 'प्रस्नविते'त्यादौ इडागमो भवत्येव। 'प्रक्रन्ते'त्यादिसिद्ध्यर्थं हि 'क्रमेः कर्त्तरि चाऽऽत्मनेपदविषयादि'ति वचनमेव कार्यमिति कृदन्ते स्पष्टम् , भाष्ये च।

'अनात्मनेपदे' इत्यस्य स्नुक्रमिविशेषणत्वात् 'प्रस्नवित्रीयते''प्रचिक्रमिषते' इत्यादौ न दोषः। क्यङ्णिचोरात्मनेपदनिमित्तत्वात्। सन्नन्ताद्भावे, कर्मणि वा आत्मनेपदे 'प्रचिक्रमिषिष्यते' इत्येव। 'पूर्ववत्सन' इत्यस्य तु तत्र न प्रवृत्तिः। 'कर्त्तरी'त्यनुवृत्तेः। न च 'स्नोरात्मनेपदेन समानपदस्थस्य इट् प्रतिषेधः', 'क्रमेश्चे'ति वार्त्तिकरीत्या सन्नन्ताण्णिचि, भावकर्मणोर्वा आत्मनेपदे, इडभाव एव लभ्यते इति, कथमिट्करणमिति वाच्यम्। 'यद्येतदुच्यते, 'प्रस्नवित्रीयते' इत्यत्र न प्राप्नोती'त्याशङ्क्य,-'बहिरङ्गत्वाच्च', 'बहिरङ्गलक्षणमत्राऽऽत्मनेपदमि'ति भाष्येण वार्त्तिके प्रत्यासत्तिन्यायेन 'स्नुक्रमिनिमित्तकाऽऽत्मनेपदेन समानपदस्थस्ये'-त्यर्थबोधनात्। 'प्रस्नविता' 'प्रक्रमितुमि'त्याद्येव हि तृजन्तादि तद्व्यावर्त्यम्। स्पष्टं चेदं सर्वं भाष्ये।

१ इतोऽग्रे–'स्नुक्रमोरनिमित्तत्वाऽभावात्। 'प्रचिक्रंसते' इत्यत्र तु न दोषः। 'पूर्ववत्सन' इति शास्त्रप्रामाण्यात्क्रमेरात्मनेपदनिमित्तत्वात्' इति ग. पाठः।

'परस्मैपदनिमित्ते' इति तु नोक्तम् । निमित्तशब्दस्य फलोपधायकपरत्वे 'प्रस्नविते'त्याद्यसिद्धेः । स्वरूपयोग्यपरत्वे 'क्रमिष्यते' इत्याद्यसिद्धिः । क्रमेः 'अनुपसर्गाद्वे'त्यनेन परस्मैपदं प्रत्यपि स्वरूपयोग्यत्वात् । 'स्नुक्रमोर-नात्मनेपदे' इति न्यासे 'परस्मैपदे परे इट्', 'आत्मनेपदे परे नेडि'ति वाऽर्थः स्यात् । तत्राऽऽद्ये 'चिक्रमिषिष्यती'ति न सिद्ध्येत् । स्येन व्यव-धानात् । द्वितीये तु 'प्रचिक्रंसिष्यते' इति न सिद्ध्येत् । अतो 'निमित्त'-पदोपादानमिति दिक् ।

**ततः परेषां षीध्वमिति ।** यद्यपि षीध्वमादीनामिटः परत्वं नास्ति, तद्भक्तत्वादिटः, तथापि श्रुतिकृताऽऽनन्तर्यमात्रेण सामर्थ्याच्छास्त्रप्रवृत्ति-र्बोध्या । न च धस्यैव 'इट' इति विशेषणमस्तु । षीध्वमि षीकारव्यवधानेन सामर्थ्याऽऽश्रयणाऽऽवश्यकत्वात् । युक्तं तु धकारविशेषणत्वमिति वदन्ति ।

अत्र 'अङ्गादि'ति निवृत्तम् । अत एव 'उपदिदीयिध्वे'[1] इत्यादौ विकल्पः सिद्धः । अन्यथा युटः पराऽऽदित्वान्न स्यादिति बोध्यम् । इयं च प्राप्त-विभाषा । लुङ्यपि 'आयिध्वमि'[2]त्यादौ 'धि चे'ति सलोपे, इवर्णान्तमङ्गं ध्वमि जातमिति 'इणः षीध्वमि'त्यस्य प्राप्तेरिति दिक् ।

**परस्योपसर्गस्येति ।** ननु 'अयतावि'ति प्राधान्यात् रेफविशेषण-मस्तु । न च 'पल्ययते' इत्यत्र दोषः, सूत्रस्य 'प्लायते' इत्यादिरवकाश इति वाच्यम् । 'अचः परस्मिन्नि'ति स्थानिवत्त्वेन तत्राऽपि व्यवधान-सत्त्वेन 'येन नाऽव्यधानमि'ति न्यायेन एकवर्णव्यवधाने प्रवृत्तेरावश्य-कत्वात् । न च निर्दुरावकाशः । तथा सति 'निर्दुरोरयतावि'त्येव वदेत् ।

न च तथा सति 'निराययति' 'दुराययती'त्यादौ ण्यर्थविशेषणत्वेन अयतिं प्रत्युपसर्गत्वाऽभावेऽपि, लत्वाऽऽपत्तिरिति वाच्यम् । 'अयतावन्वयिनो-र्निर्दुरोरि'त्यर्थेनाऽदोषादिति चेन्न । श्रुतत्वेन 'अयतावि'त्यस्योपसर्गविशेष-णताया न्याय्यत्वात् । 'प्लायते' इत्यत्र श्रुतिकृताऽव्यवधाने चरितार्थस्य

---

१ 'उपदिदीयिढ्वे' इति पाठान्तरम् । २ 'आयिढ्वम्' इति पाठान्तरम् ।

'पल्ययते' इत्यत्राऽप्रवृत्त्यापत्तेश्च । अत एव 'घ्नन्ती'त्यत्र कुत्वम्, न 'हननमि'त्यत्रेति स्पष्टमाकरे । प्लायते इति । 'अचः परस्मिन्नि'ति स्थानिवत्त्वाद्व्यपवर्ग इति स्पष्टं भाष्ये ।

निस्दुसोरिति । रेफस्याऽसिद्धत्वादिति भावः । इणो रूपमिति । न च अयतेः 'प्लत्यय' इत्यपि स्यादिति वाच्यम् । 'अथवाऽस्तु रेफविशेषणमि'ति भाष्यप्रामाण्येन अयतेः प्रत्युपसर्गसम्बन्धाऽभावादि'ति कैयटः ।

कथमुदयतीति । शानच्स्यादिति प्रश्नः । ज्ञापकादिति । 'पचाद्यजन्तादाचारक्विपा वा समाधेयमि'ति हरदत्तः । अत्र प्रकारणे 'व्यय वित्तसमुत्सर्गे' इति क्वचित्पठ्यते । उन्दे चेति । उन्दः = क्लेदनम् ।

पुनःप्रसङ्गेति । 'द्वित्वे कृते 'पी'भावः सावकाश' इत्यभिमानः । वस्तुतो 'लिटी'त्यस्य परसप्तमीत्वे, अस्य द्वित्वाऽपवादत्वमेव युक्तम् । तस्मात् 'लिटी'ति विषयसप्तमीति युक्तम् ।

दीपजनबुध । इदं कर्मकर्त्तरि न प्रवर्त्तते । 'कर्त्तरी'त्यनुवृत्त्या शुद्धकर्त्तृग्रहणात् । न च भावकर्मव्यावृत्त्यर्थं तत् । परत्वात् 'चिण्भावकर्मणोरि'त्यस्यैव प्रवृत्तेः । स्पष्टं चेदं 'न वेति विभाषे'ति सूत्रे भाष्यकैयटयोः । 'बुधे'ति बुध्यतेरेव ग्रहणम्, न बोधतेः, तस्य परस्मैपदित्वादिति बोध्यम् ।

चिणो लुक् । 'अकारितरामि'त्यादौ तरपो न लुक् । प्रतिलक्ष्यं लक्षणभेदेन पूर्वचिणो लुक उत्तरचिणो लुकि असिद्धत्वात् । 'क्ङिती'त्यनुवर्त्त्य क्ङितो लोपाच्चेति स्पष्टं भाष्ये । तद्भाष्येति । यदि तु सोपदेशः स्यात्तदा षोपदेशलक्षणे स्त्यायतिरिवाऽयमपि पर्युदस्येतेति भावः ।

[3]प्लुतगतिरिति । यत्तु 'प्लवे'ति धात्वन्तरमि'ति । तन्न । एवं हि ततो

---

१ 'जातिपक्षे द्वित्वे कृते' इति ग. पाठः ।

२ 'इति भावः' इति ग. पाठः ।

३ 'प्लुतगतिरिति' इत्यारभ्य 'इति दिक्' इत्यन्तः ख. ङ. पाठः । क. कुण्डलितः, मनोरमादिस्थत्वात् ।

घञि 'आप्लाव'शब्दे सिद्धे, तदर्थे 'विभाषाऽऽङि रुप्लुवोरि'ति प्लुवः पक्षे घञ्विधानमनर्थकं स्यात् । किञ्च 'स्रवतिशृणोती'त्यादिना प्लवतेरुकारस्य इत्त्वविधानमपि व्यर्थं स्यात् । धातुद्वयेन रूपद्वयसिद्धेरिति दिक् ।

ममव्येति । 'यस्य हल' इति लोपस्तु न । 'यस्ये'ति सङ्घातग्रहणात् । सूक्ष्र्ये-त्यादि । णलि 'सुषूक्ष्र्य' । षोपदेशत्वात् उत्तरस्य षः । अस्मात्क्विपि, वलि लोपे, 'स्कोरि'ति कलोपे, जश्त्वचर्त्वयोः 'सूट्' । 'रात्सस्ये'ति नियमान्न संयोगाऽन्तलोपः । ऊष्माऽन्त आदरे वक्ष्यते, तस्याऽप्येतदेव रूपम् । अत्र मनोरमायाम् 'अपदान्ते तु भेद' इत्यादिः अग्रन्थः ।

शिथिलीकरणमिति । 'सोममभिषुणोती'त्यादौ तथा दर्शनात् ।

सुराया इति । तत्प्रकरणे 'सन्धानं स्यादभिषव' इत्यमरोक्तेः । स्नानमिति । 'वारांञोनभिषुण्वते' इत्यादौ तथा दर्शनात् ।

अतो ऌान्त । क्वचिद्भाष्ये 'अतो र्लोऽन्तस्ये'ति पाठो दृश्यते । आगन्तुना अकारेण 'ऌान्तस्ये'ति निर्देशः । 'ऌान्तस्ये'ति अवयववाच्यन्तशब्देन बहुव्रीहिणा नाऽङ्गविशेषणम् । 'अन्त'ग्रहणवैयर्थ्याऽऽपत्तेः । तदन्त-विधिना सिद्धत्वात् । 'अन्त'शब्दस्य पूर्वनिपाताऽऽपत्तेश्च । 'ओदकाऽन्तात्, आ वनान्तात्प्रियं पान्थमनुव्रजेदि'त्यादौ दृष्टसमीपवाचिना षष्ठीसमासे तु श्वल्ल्यादीनामपि स्यात् । किञ्च लपि-रण्यादौ दोषः । कर्मधारये त्वन्त-

---

१ इतोऽग्रे—'अत एवाऽर्थवत्परिभाषया 'पुत्रकाम्ये'त्यादौ लोपो नेत्याहुः' इति ख. ङ. पाठः । क. कुण्डलितः ।

२ 'अस्मात् क्विपि' इत्यारभ्य 'अग्रन्थः' इत्यन्तः ख. ङ. पाठः । क. ग. नास्ति । मनोरमाशब्दरत्नधृतत्वात् ।

३ 'प्रोथमि'ति तु श्रुतौ पाठः । तत्र प्रोथः—पान्थः ।

४ 'परभूतसमीपवाचिनो ग्रहणे तु कपिरण्यादौ' इति ग. पाठः ।

५ 'दोषः स्पष्ट एव । 'इको गुणे'तिसूत्रस्थभाष्योक्तरीत्या वकारप्रश्लेषे तु-श्वल्ल्यादावपि दोषः' इति ग. पाठः ।

शब्दस्य पूर्वनिपाताऽऽपत्तिरत आह—लुप्तषष्ठीकमिति । 'समीपभूत-रेफलकाराऽन्ताऽङ्गस्याऽतो वृद्धिरि'त्यक्षराऽर्थः। तत्र 'कस्य समीपभूता-वि'त्याकाङ्क्षायां संनिधानात् 'अत' इति गम्यते। एवञ्च 'अत' इत्यस्य-आवृत्तिरेव फलिता। समीपपदाऽर्थस्य शाब्द्याकाङ्क्षासत्त्वेन, तन्निवृत्तये शाब्दाऽन्वयस्योचितत्वात्। तत्र प्रत्यासत्त्या वृद्धिस्थानी ल्रसमीपभूता-ऽकार एव गृह्यते। अतः 'अत्सारीदि'त्यादावटो न वृद्धिः।

भाष्ये तु'रेफलकाराऽन्ताऽङ्गाऽवयवस्य ल्रसमीपस्याऽत'इति ल्रशब्दो-ऽऽवृत्त्याऽर्थ उक्तः। 'अश्वल्लीदि'त्यादौ तु न। अकारसमीपलकाराऽन्ता-ऽङ्गाऽभावात्। भाष्यनये ल्रकारयोः प्रत्यासत्त्या एकत्वलाभेन अङ्गाऽन्त्य-लकारसमीपाऽकाराऽभावात्। एतदेव च समीपवाच्यन्तग्रहणफलम्। न च व्यवहितस्याऽपि समीपत्वाऽनपायेनाऽन्तग्रहणेऽपि 'अश्वल्लीदि'त्यादौ दोषः। 'उदकाऽन्तं गत' इत्यादौ लोके तथा दृष्टत्वेन, भाष्यादिप्रामाण्येन च अव्यवहितसमीपे एवाऽन्तशब्दशक्तिकल्पनात्। नचैवमप्यन्तग्रहणं व्यर्थम्। 'सिची'त्यकारविशेषणेन, येन नाऽव्यवधानन्यायेन च 'अश्वल्ली-दि'त्यत्र दोषाऽभावादिति वाच्यम्। अङ्गस्य प्रत्ययांऽशे उत्थिताऽऽकाङ्क्ष-त्वेन तद्विशेषणताया एव न्याय्यत्वात्। 'अन्त'ग्रहणसामर्थ्यादेव वर्णग्रहणे जातिग्रहणमि'त्यस्याऽत्राऽप्रवृत्तिः।

ननु 'अतो हलादेरि'त्यनन्तरमेव 'ल्रस्ये'ति क्रियताम्। 'वदव्रजे'ति सूत्रस्थ–'हलन्त'ग्रहणेन 'इत उत्तरं वृद्धिभाजामेव सिच्परत्वेन विशेष-णत्व'ज्ञापनात् 'अश्वल्लीदि'त्यादौ न दोषः। 'अत' इति च न कार्यम्। 'हलादेरि'त्यस्य तु अस्वरितत्वादेवाऽसम्बन्ध इति चेन्न। 'नेड्वशी'त्यस्य

---

१ 'ल्रशब्दाऽऽवृत्त्या' इति क. पाठः।

२ 'न च 'नेड्वशी'त्यस्य 'वरमनादावेवे'त्यर्थकाभाय क्वचिदप्रवृत्तये विभाषा-ग्रहणानुवृत्तेरावश्यकत्वेन मध्येपि सम्बन्धाऽऽपत्तिरिति वाच्यम्। नञ्घटिता-ऽनित्यत्वेनैव निर्वाहात्। एतदर्थकाभाय, क्वचिदप्रवृत्तये च 'ने'त्यनुवृत्ता-

'वर-मनाऽऽदावेवे'त्यर्थलाभाय, क्वचिदप्रवृत्तये, विभाषाग्रहणाऽनुवृत्तेरावश्यकत्वेन, मध्येऽपि सम्बन्धाऽऽपत्तेरिति दिक्।

अतः किम्?। 'अखोरीत्'। ळान्तस्याङ्गस्येति किम्?। 'अश्वलीत्'। अत्राऽऽद्यो ळकारोऽकारसमीपभूतो, न त्वङ्गस्याऽन्तः। द्वितीयस्तु नाऽकारसमीपः। नेटीत्यादि। बाध्यसामान्यचिन्ताऽऽश्रयणादिति भावः। विशेषचिन्तायां तु 'नेटी'त्येव बाध्येत। 'पुरस्तादपवाद'न्यायात्। तथा च रेफग्रहणवैयर्थ्याऽऽपत्तिरिति भावः।

[2]तृफलेत्येत्त्वमिति। न च निरनुबन्धकत्वात्तत्र 'फल निष्पत्तावि'त्यस्यैव ग्रहणम्, 'दिव औदि'त्यादिसूत्रस्थभाष्यप्रामाण्येन अप्रत्ययविषयेऽपि तत्परिभाषाप्रवृत्तिस्वीकारादिति वाच्यम्। 'तृपश्चे'ति च[3]कारेणाऽस्याऽपि समुच्चयादि'ति केचित्।

वपि, सिद्धान्ते पुनर्नग्रहणं चरिताऽर्थमिति चेत्। चिन्त्यमेतत्' इति ग. पाठः।

१ इतोऽग्रे—'न च अर्शब्दादाचारक्विपि मा भवानारीदित्यादौ चारितार्थ्यम्। नामधातौ वृद्ध्यभावस्य कैयटादिसंमतत्वात्। हलन्तेभ्य आचारक्विबभावस्य 'ह्रस्वनद्याप' इति सूत्रे भाष्ये ध्वनितत्वाच्च। तथा च रेफग्रहणादेवाऽत्र बाध्यसामान्यचिन्ताऽऽश्रयणम्। न च 'निषेधाश्च बलीयांस' इति न्यायविरोधः। निषेधमूलकत्वेनैव प्रकृते वैपरीत्यात्। 'अतो हलादेरित्य'पि निषेधविकल्पलाभाय'? इति ग. पाठः।

२ इतः पूर्वं 'मा भवानालीदिति। एतेन 'येन नाप्राप्ति'न्यायेन विकल्पस्यैवाऽपवाद' इत्यपास्तम्। 'अश्वलीदि'त्यादावन्तविशेषणाच्च वृद्धिरिति भाष्यविरोधाच्चेति दिक्' इति ख. ङ. पाठः। क. कुण्डलितः।

३ 'चकारेणाऽस्यापि समुच्चयात्। अन्यथा 'राधो हिंसायामि'त्यादाविव स्वरितत्वप्रतिज्ञाबलादाकाङ्क्षावशाच्चाऽनुवृत्तिसिद्धौ तद्वैयर्थ्यं स्पष्टमेव। 'फणां चे'ति चकारश्च फलान्तराऽभावात्कल्पान्तराऽनुवृत्त्यनुवादकएव।

सङ्कोच इति । 'नेत्रसङ्कोच' इत्यर्थः । तत्रैव प्रचुरप्रयोगात् । गति-चातुर्यम् अश्वनिष्ठमत्र विवक्षितम् । अत एव धोरितकमश्वानां गति-विशेषमाहुः । निष्ठाऽन्तात्संज्ञायां कन् अत्र । त्सर । छद्मगतिः-कपटगतिः ।

हूर्च्छने इति । 'कौटिल्ये' इत्यर्थः । (ष्ठिवु निरसने । [1]द्वितीयस्थकार इति । अत्र पक्षे पूर्वोक्तवार्त्तिकेन, यादित्वेन वा सत्वाऽभावः । ठकारो वेति । 'अत्र पक्षे ष्टुत्वनिष्पन्नः षकार इति, अषोपदेशत्वान्न सत्वमि'ति केचित् । तन्न । 'मधुलिट् ष्ठीवती'त्यत्र 'ङः सि धुट्'प्रसङ्गात् । तस्मात् पक्षद्वयेऽपि यादित्वात्, वचनेन वा सत्वप्रतिषेधः । तस्मात् 'तिष्ठेव'-'टिष्ठेवे'ति रूपद्वयसिद्ध्यर्थमेव पक्षद्वयम् । स्पष्टं चेदं 'धात्वादेरि'तिसूत्रे भाष्ये । अस्य ल्युटि 'ष्ठेवनम्' । पृषोदरादित्वाद्दीर्घे ष्ठीवनमपि ।

सन्लिटोर्जेः । 'जि'धातुसम्बन्ध्यभ्यासस्य, अङ्गस्य च निमित्ता-ऽपेक्षायामुपस्थितत्वात्सन्लिटोरेव निमित्तत्वं कल्प्यते । अत एव यङ्लुगन्तात्सनि कुत्वं न ) ।

सन्लिण्निमित्त इति । 'सन्लिटोरि'ति सति सप्तमी, अभ्यासविशेषण चेति भावः । न[2] चैवं 'जिगीषती'त्यादौ 'न हि कार्यी'तिन्यायेन कुत्वं न

---

'अनुवृत्त्यर्थाश्चकारा न कार्या' इति भाष्यस्याऽप्यत्रैव तात्पर्यम् । किञ्च परिभाषाया अनित्यत्वेन फलधातुविषयेऽप्रवृत्तिरेव । अत एव 'चरफलोश्चे'-त्यत्रोभयोर्ग्रहणम् । अत एव विकासार्थके 'फुल्ल' इत्यनुपसर्गादितिसूत्रस्थ-भाष्यप्रयोगे आदित्वप्रयुक्तेडभावात् निफलेत्यत्र 'ति चे'त्यनेन उत्वसिद्धिः । निष्पत्त्यर्थकस्य तु 'फलितमि'त्येव । निरनुबन्धकपरिभाषाया अनित्यत्वेन 'फल'धातुविषयेऽप्रवृत्तेः । अत एव 'चरफलोश्चे'त्यत्रोभयोर्ग्रहणमि'ति परे' इति ख.ग.ङ. पाठः ।

१ 'द्वितीयस्थकार' इत्यारभ्य 'कुत्वं न' इत्यन्तः खं. ङ. पाठः । क. कुण्डलितः ।

२ 'एतेन सन्लिण्निमित्तमित्यर्थे जिगीषतीत्यादौ' इति ग. पाठः ।

स्यात्, 'जिस्'शब्दस्य द्वित्वादिति वाच्यम्। सन्ग्रहणसामर्थ्येन तन्न्यायस्येहाऽप्रवृत्तेः। वस्तुतः परसप्तमी, कार्यिविशेषणत्वं चेति न्याय्यम्। जेर्यङ्लुगन्तात्सनोऽभिधाने न दृढतरं मानम्।[1]

(हिवि दिवि[3]। यत्तु प्राचा धिविकृवी स्वादौ पठितौ। तत्र तत्पाठसामर्थ्यात् श्नुप्रत्यये, ऋठि अनिष्टाऽऽपत्तेः। न च तव सिद्धान्तेऽपि शप् दुर्वारः। शपः सामान्यविधानेन, भ्वादित्वनिमित्तकत्वाऽभावेन च तत्तद्गणप्रयुक्त-विकरणैरिव 'धिन्विकृण्व्योरि'ति विहितेन उप्रत्ययेनाऽपि बाधसम्भवात्)।[2]

**धिन्विकृण्व्यो**। उप्रत्ययश्चेति[4]। श्रुतक्रमाऽनुरोधात्पूर्वम् अकारा-ऽऽदेशः। चाऽनुकृष्टत्वेन पश्चात्प्रत्ययः। अत एव आर्द्धधातुकोपदेशे अकाराऽन्तत्वाल्लोपः सिध्यति। तदाह-अतो लोप इति। तस्य स्थानि-वद्भावादिति। एतेन 'अकारस्य क्वाऽप्यश्रवणात्, लोप एव विधीयता-मि'त्यपास्तम्। प्रत्ययोकार इति। 'असंयोगपूर्वस्ये'त्यनेन अवध्यवधिमतोः साजात्यात् उकार एव विशेष्यः, न तदन्तप्रत्ययः[5]। तदन्तप्रत्यय-

---

१ 'द्वित्वादित्यपास्तम्। सन्शब्देन तदन्तलक्षणया तदन्तत्वप्रयुक्ताऽभ्यासस्ये-त्यर्थ इत्याशयात्' ग. पाठः।

२ 'तदाह सन्लिण्निमित्त इति। यत्तु प्राचा धिविकृवी स्वादौ पठितौ। तत्र तत्पाठसामर्थ्यात् श्नुप्रत्यये' इति रीत्या ख. ङ. पाठः।

३ 'हिवि दिवि' इत्यारभ्य 'बाधसम्भवात्' इत्यन्तः ख. ङ. पाठः। मनोरमादिस्थत्वात् क. नास्ति।

४ 'उप्रत्ययश्चेति। यत्तु 'तनादावेवेमौ पाठ्यौ। एवञ्च विकरणो न कार्य' इति। तन्न। अनयोर्भावकर्मादावात्मनेपदे लुङि 'तनादिभ्यस्तथासोरि'ति सिचः पक्षे लुगापत्तेः' इति ख. ग. ङ. पाठः।

५ इतोऽग्रे—'येन विधिरि'तिसूत्रप्रवृत्तेः पूर्वं वर्णमात्रपरत्वेन तद्विशेषणत्व-स्यैव न्याय्यत्वाच्च' इति ग. पाठः।

विशेषणे हि 'अभ्रुवहे' इत्यत्र उलोपः, 'आप्नुही'त्यादौ हेर्लुक् च स्यात्।[1] 'असंयोगपूर्वो य उकारस्तदन्तो यः प्रत्यय' इति सामानाधिकरण्येन व्याख्यानमुचितम्। अत्र वान्तेभ्यो विचो 'न धात्वि'ति सूत्रप्रत्याख्यानभाष्येण, 'लोपो व्योरि'ति सूत्रस्थभाष्येण च अभावस्यैव बोधितत्वात्तत्र[3] रूपविचारः कैयटादिकृतश्चिन्त्य एव।

अयं स्वादाविति। 'कृणोती'त्यादिरूपसन्दर्भे इत्यर्थः। तत्र हि 'कृन्व् हिंसायामि'ति पठितस्य शप्विषये परस्मैपदे, अनेन तुल्यानि रूपाणीति बोध्यम्। अमवीत्, अमावीदिति। यत्तु 'इको गुणवृद्धी' इत्यत्र 'अतोले'[2]ति सूत्रे वकारप्रश्लेषमुक्त्वा 'मा भवानवीत्, मवीदि'त्यत्र दोषमाशङ्क्य, 'ह्मयन्ते'त्यत्र 'अविमव्योर्नेति वक्ष्यामी'त्युक्तम्। एवञ्च नित्यनिषेध एव लभ्यते' इति। तन्न। 'मध्येऽपवाद'न्यायेनाऽस्य निषेधस्य 'अतो ले'रित्येतन्मात्रबाधकत्वात्। न चैवं जागर्त्तावपि तथा प्रसङ्गः। लक्ष्याऽनुरोधेन तद्विषये बाध्यसामान्यचिन्ताया एव स्वीकारात्। ह्मयान्तादिविषये तु सामर्थ्याद्विकल्पस्यैव निषेधः। अत एव सूत्रभाष्ययोर्न विरोधः। अन्यथा 'सिच्यन्तरङ्गाऽभावस्य णि-श्विग्रहणं ज्ञापकमि'ति तदग्रिमभाष्यपक्षे, एतद्वचनाऽभावेन विकल्पो दुर्वार एवेति, यत्किञ्चिदेतत्।

अव रक्षण(गति)कान्ति। कान्तिः—शोभा, इच्छा वा। दीप्तिः—तेजः। तृप्तिः—इच्छानाशः। स्वाम्यर्थः—स्वामित्वम्। आदानम्—ग्रहणम्।

भिक्षायामिति। 'याच्ञायामि'त्यर्थः। त्रयोऽर्थाः। दीक्ष। मौण्ड्यादयः पञ्चाऽर्थाः।

ईष गति। 'दानेषु' इति पाठान्तरम्। भाष्। अस्य ऋदित्त्वम्

---

१　'अश्नुहि' 'आप्नुही'त्यादौ' इति ख. ग. पाठः।

२　इतोऽग्रे—'अनुदात्तेत्त्वलक्षणाऽऽत्मनेपदस्याऽनित्यत्वादश्नुहीति परस्मैपदं बोध्यम्। अत एव 'उपदेशेऽत्वत' इति सूत्रे 'अञ्जथ तदुदाहरणमि'ति भाष्यं सङ्गच्छते' इति ख. ग. पाठः।

३　'अभावस्यैवोधितत्वात्' इत्यपि पाठान्तरम्।

आत्मनेपदमात्रफलकम् । 'भ्राजभासे'त्यनेनोपधाह्रस्वस्य विकल्पितत्वात्[1]। अनुबन्धाऽन्तराऽकरणन्तु प्रकरणाऽनुरोधात् ।

ग्रसु ग्लसु । 'भुवश्चे'ति चकारस्याऽनुक्तसमुच्चयार्थत्वात्[2] ग्रसिष्णु-भ्राजिष्णु-क्षयिष्णवो व्याख्याताः । परिभाषणम्—अनृतभाषणम् ।

केचित्त्विति । अत्राऽरुचिबीजन्तु 'देवा असुरान् प्रवह्लये'ति श्रुतिप्रयोगविरोधः । तत्र 'प्रवह्लये'त्यस्य 'अनृतं भाषित्वे'त्यर्थात् । दन्त्योष्ठ्यपाठाच्च[3] ।

आद्य इति । अत एव 'वेहत् गर्भोपघातिनी'त्यादि सङ्गच्छते । अन्त्य इति । बाहु-बाढशब्दयोरोष्ठ्याद्योर्निर्विवादत्वादिति भावः । 'बाहुशब्दो बाधतेरि'त्यन्ये । इत्यपरे इति । 'ववाह[4] रक्तं पुरुषा' इति प्रयोगे आर्षं परस्मैपदं बोध्यम् । ऊहतेः 'अनुक्तमप्यूहती'त्यादिप्रयोगः प्रामादिक एव । कासृ । आकारोपधप्रकरणादयमिह पठितः ।

गाढेति । 'ढलोपे ष्टुत्वाऽसिद्धत्वं न । लोपविधानसामर्थ्यादि'ति 'ढ्लोपे' इत्यत्रैव निरूपितम् । अगाढेति । 'झलो झली'ति सलोपे, ढत्वधत्वष्टुत्वढलोपाः । न च कृतेऽपि सलोपे प्रत्ययलक्षणेन भष्भावः स्यात् । वर्णप्राधान्ये[5] प्रत्ययलक्षणाऽभावात् ।

---

१ इतोऽग्रे—'मनोरमायामपि तङ्ग्रहणमात्मनेपदोपलक्षणम् । अत एव 'भासमान' इति भवति । उभयोरनुबन्धान्तराऽकरणन्तु' इति ग. ङ. पाठः ।

२ 'चस्य' इति क. पाठः ।

३ इतोऽग्रे—'प्रवह्ले'ति पाठान्तरं श्रुतौ शाखाविशेषे' इति ख. ङ. पाठः ।

४ 'ववाह रक्तं पुरुषा' इति प्रयोगोऽनुदात्तेत्वलक्षणात्मनेपदाऽनित्यत्वेनाऽस्यैव बोध्यः । एवमेव ऊहतेः 'अनुक्तमप्यूहती'त्यादिप्रयोगो बोध्यः' । इति ख. ग. ङ. पाठः ।

५ इतोऽग्रे—'न च परंझलोऽपि निमित्तत्वेन बहिरङ्गत्वात्सलोपस्याऽसिद्धत्वम् । फले विशेषाऽभावात् । 'ध्व'साहचर्येण श्रूयमाणे सकारे एव प्रवृत्तेश्चेति दिक्' इति ग. पाठः ।

शल इगुपधा । न च गृहादेः चल्यवस्थायां गुणः स्यात् , इगुपधत्वाऽभावेऽपि क्सविधानं भूतपूर्वगत्या चरितार्थमिति वाच्यम् । क्सस्य कित्करणसामर्थ्यात्तदप्राप्तेः । न च ककाराऽभावे वदेः से 'वत्सा' इत्यादौ, तृणादिभ्यश्चातुरर्थिके से 'तृणसा' इत्यादौ च 'क्सस्याऽची'ति लोपः स्यादिति वाच्यम् । 'लुग्वा दुहे'त्यत्र 'सस्ये'त्यनुवर्त्तते । तेनाऽर्थाऽधिकाराऽनुरोधाद्दुहादिषु संभावितस्यैव ग्रहणेनाऽदोषात् । अत एव ककारे कृतेऽपि दृशेः क्से 'तादृक्षावि'त्यादौ न दोषः । केचित्तु 'उत्तरसूत्रस्थाऽऽत्मनेपदग्रहणाऽपकर्षान्न दोष' इत्याहुः । तद्भूनयन्नाह—अजादौ तङीति । एतेन 'तङी'त्येतन्निर्मूलं, निष्फलञ्चे'त्यपास्तमित्याहुः ।

अघृक्षातामिति । लोपाऽभावे 'आतो ङित' इति स्यादिति भावः । प्रतिज्ञानमिति । तच्च शब्देन स्वाऽभिप्रायप्रकाशनम् । प्रणिक्षतीति । 'उपसर्गादसमासेऽपी'ति णत्वम् । 'वा निंसनिक्षनिन्दामि'ति तु 'कृत्यच' इत्यतः 'कृती'त्यनुवर्त्तनात्, पूर्वोत्तरसाहचर्याच्च कृद्विषयमेवेत्याहुः ।

अपपाठत्वे हेतुमाह—इत्यमर इति । सूक्ष्णम्–आदरः, ततोऽन्यत् असूक्ष्णमिति तदर्थः । शेष्टेति[3] । बोपदेवस्त्वेनं सेटमाह ।

तीषसह । यद्यपि धातुपाठे त्रयोऽपीषयोऽननुबन्धका इति, त्रयाणामपि ग्रहणं प्राप्नोति, तथापि 'इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध' इति वार्त्तिकादिष्यतेन ग्रहणम् । तदाह—इच्छत्यादिभ्य इति । 'आदि'पदेन इष्णातेः,

१ इतोऽग्रे—'अकृतव्यूहपरिभाषया पूर्वं च्लिप्रत्ययनिमित्तगुणाऽप्रवृत्तेश्चेति दिक्' इति ग. पाठः ।

२ इतोऽग्रे—'द्राक्षि ध्राक्षि । 'द्राक्षा' 'ध्राक्षे'त्यत्र अनुनासिकलोपो यवादिगणे निपातनात्' इति ख. ङ. पाठः । क. कुण्डलितः । मनोरमास्थत्वात् ।

३ 'शेष्टेति । मैत्रेयाद्यनुरोधेनाऽयमनिड्दाहृत इति स्पष्टं मनोरमायाम् । वस्तुतोऽयं सेडेवेति निरूपितमनिट्कारिकास्विति बोध्यम्' इति ख. ग. ङ. पाठः ।

सूत्रोपात्तसहादीनां च ग्रहणं बोध्यम्। अत एवाऽत्र सूत्रे, धातुपाठे च 'इषु इच्छायामि'त्युदित्पाठोऽसाम्प्रदायिक इति बोध्यम् ।

तादेरिति। ननु 'तादेरि'त्यर्थो दुर्लभः। 'वलादेरि'त्यादिग्रहणसामर्थ्येन विशेष्य-विशेषणयोरुभयोरपि सप्तम्युच्चारणे एव 'यस्मिन्विधिरि'त्यस्य प्रवृत्तेः। अत एव 'डः सि धुडि'त्यादौ 'सादेः पदस्ये'ति नाऽर्थ इति चेन्न। 'वलादेरि'त्यनुवृत्तविशेषणीभूतवलपदार्थस्य तकारेण विशेषणाददोषः। सौत्रत्वाच्च समास इति बोध्यम्। एवं 'सेऽसिची'त्यादावपि बोध्यम्। सप्तमी तु प्रथमाऽर्थे एवेत्याहुः।

उषविद। इयम् अप्राप्तविभाषेति 'नवे'ति सूत्रे भाष्ये स्पष्टम्। 'प्रत्ययान्ता धात्वन्तराणी'ति तत्रोक्तम्। न च यङ्लुकि विदंशे प्राप्तिरस्तीति वाच्यम्। उष-जागृसाहचर्येण विदेरपि यङ्लुक्यप्रवृत्तेरित्याहुः।

जिषु विषु। 'इह द्वितीयोऽनिडि'ति केचित्। 'सेडि'ति बोपदेवः।

कैयटादय इति। 'श्लिष आलिङ्गने' इति सूत्रे इति बोध्यम्[1]। अयं न सार्वत्रिक इति। न च 'लिट्यन्यतरस्यामि'ति ज्ञापकात् लिट्येव प्रयोगाऽभावोऽस्तु। न च फलाऽभावः। 'जघस्थे'ति इड्रहितप्रयोगवारणेन साफल्यादिति वाच्यम्[2]। 'उपदेशेऽत्वत' इति सूत्रस्थभाष्येण 'जघस्थे'त्यस्येष्टत्वाऽनुमानात्। अत्रैव पाठ इति। एतेन 'अयं द्युतात्पूर्वं पाठ्यः। पुषादिसूत्रे 'घसादी'ति पाठ्यम्। ऌदित्करणं च न कार्यमि'त्यपास्तम्। पाठस्याऽङ्सम्पादकतया चारितार्थ्येन, शपि परस्मैपदे प्रयोगाऽनापत्तेः। एतेन 'पाठस्य धातुसंज्ञाऽर्थं चारितार्थ्येन, इदं ज्ञापकमयुक्तमि'त्यपास्तम्। द्युतात्पूर्व पाठेनैव सिद्धेऽत्र पाठस्य ज्ञापकत्वाऽक्षतेः।

---

१ इतोऽग्रे—'अस्मात्पूर्वोत्तरत्र सेड्धातुदर्शनेन सेट्त्वमेवोचितमिति तदभिप्रायः' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

२ इतोऽग्रे—'सामान्ये प्रमाणानां पक्षपातात्, 'उपदेशेऽत्वत' इति सूत्रस्थभाष्येण' इति ग. पाठः।

लृदित्करणमङ्गीति । न च घस्लादेशेनैव 'अघसदि'त्यस्य सिद्धावस्य लृकारोऽव्यर्थ इति वाच्यम् । 'अघात्सीदि'ति प्रयोगवारणार्थं तस्याऽऽवश्यकत्वात् । अनिट्कारिकासु पाठेन वलाद्यार्द्धधातुके प्रयोगोच्च । आशिषीति । आशीर्लिङीत्यर्थः । इदमुपलक्षणम्—'थल्व्यतिरिक्ते लिट्यपि तदभावस्य, कर्मणि यक्चिणोर्विषये च प्रयोगाऽभावस्ये'त्याहुः ।

पुषादि । भ्वाद्यन्तर्गतपुषादेर्न ग्रहणम् । द्युतादीनां पृथग्ग्रहणात् । ते हि अत्र पुषेरुपरि पठ्यन्ते । नाऽपि चुराद्यन्तर्गतस्य । णिचा व्यवधानात् । नाऽपि क्र्याद्यन्तर्गतस्य । तत्र[2] हि पुष-मुष-खच-हिठ-ग्रहाः (पञ्च) पठ्यन्ते । तत्र ग्रहेः स्वरितेत्त्वात्[3] लृकार एवाऽनुबन्धोऽस्तु । पुषस्तु[4] भ्वादेः 'अपोषीदि'त्यस्येष्टत्वेन दोषाऽभावः । (अवशिष्टेषु) त्रिषु लृकाराऽनुबन्धदान[5]मप्युच्चारणाऽर्थोऽकारैः समं, 'पुषादी'त्यतो लघु चेत्याशयेनाऽऽह—श्यन्विकरणे[6]त्यादि ।

ननु पुषादयो, द्युतादयश्च लृदित एव पाठ्या इति चेन्न । प्रत्येकं

---

१ इतोऽग्रे—'लृदित्करणमप्यत्र मानं बोध्यम् । अनिट्कारिकास्विति । लृदित्पाठोऽप्यत्र मानमिति बोध्यम्' इति ग. पाठः ।

२ इतोऽग्रे—'द्युतादिसाहचर्येण ह्रस्वाऽकारवद्विकरणाऽव्यवहितपरस्यैव ग्रहणात् । किञ्च क्र्यादौ पुष मुष' इति ग. पाठः ।

३ 'स्वरितेत्त्वेनानुबन्धस्याऽऽवश्यकतया लृकार एव' इति ग. पाठः ।

४ 'पुषस्तु भ्वादेरेव द्युतादौ पाठमङ्गीकृत्य द्युतादित्वादस्यैवाऽङि 'अपुषदि'त्यस्येष्टत्वेन, 'अपोषीदि'त्यस्याऽपीष्टत्वेन चाऽक्षतेः' इति ग. पाठः ।

५ 'दानेऽपि 'पुषादी'त्येतदपेक्षया लाघवस्य सत्त्वेन, पुषादीत्यस्य वैयर्थ्यापत्तेरित्याशयेनाह' इति ग. पाठः ।

६ इतोऽग्रे—'अत्र 'पुषद्युतादी'त्येक एवाऽऽदिशब्दः पाठ्य' इति प्राञ्चः । द्वन्द्वगर्भ-बहुव्रीहिगर्भो द्वन्द्वः, व्याख्यानादिति तद्भावः' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

लकारपाठे विपरीतगौरवाऽऽपत्तेः। न चाऽनुबन्धाऽन्तरेण लकारो निमातुं शक्यः। तत्तत्कार्योऽनिर्वाहप्रसङ्गात्। 'ञिष्विदा'प्रभृतीनाम् आदितां,'मदी'ति ईदितः,षिधु-शमु-स्रंसु-ध्वंसूनामुदितां,'स्यन्दू'प्रभृत्यूदितां च तत्र सत्त्वात्। जर्ज चर्चेति। 'एष्वाद्यो दन्त्योष्माऽन्त'इति धातुवृत्तौ।

अशवीत्, अशावीदिति। यत्तु 'इको गुणवृद्धी' इति सूत्रे 'अतो ले'-त्यत्र वकारप्रश्लेषस्योक्तत्वेन नित्यमेवाऽत्र वृद्धिः। अत एव अविमव्योरेव निषेध उक्तो भगवते'ति। तन्न। तद्भाष्यस्य 'सिचि अन्तरङ्गप्रवृत्त्या 'इको गुणे'तिसूत्रे वृद्धिग्रहणस्य न प्रयोजनमि'ति पूर्वपक्षोपपादकत्वेन, सिद्धान्ते वकारप्रश्लेषसत्त्वे मानाऽभावात्। 'इको गुणवृद्धी' इतिसूत्रस्थ-भाष्यप्रामाण्यात्केवलौष्ठ्याऽन्तोऽयम्। 'शव' इत्यादौ दन्त्योष्ठ्याऽन्त-दर्शनन्तु व-बयोरैक्याद्भ्रोष्ण्यमि'ति परे।

---

१ इतोऽग्रे—'पुषादौ 'षिधू' इत्यूदिदि'ति स्वयुक्तम्। ऊदित्त्वेऽनिट्सु पाठस्य वैयर्थ्याऽऽपत्तेः। तस्माद्ध्रस्व एव सिध्यतेरनुबन्ध इति बोध्यम्' इति ख. ङ. पाठः। क. कुण्डलितः।

२ 'केचित्तु एषु आद्यो दन्त्योष्मान्तः। द्वावप्यर्थसाम्यात्पठितावित्याहुः' इति लघुशब्दरत्ने पाठः।

३ इतोग्रे—'एषां चवर्गीयाऽन्तेषु पाठ उचितः' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

४ इतोऽग्रे-'किञ्च सिद्धान्ते णिश्विग्रहणस्य सिच्यन्तरङ्गाऽप्रवृत्तौ ज्ञापकतया-ऽऽवश्यकत्वेन, ताभ्यां निमानाऽसम्भवेनाऽपूर्ववचनस्य कर्त्तव्यताऽऽपत्त्या गौरवम्। तस्मादत्रत्यपूर्वपक्षिणोऽचिरायीदिति प्रयोगाऽज्ञानमिव, 'अशयी-दि'त्यादिप्रयोगाऽज्ञानमेव कल्प्यम्। एतेनेको गुणवृद्धी इतिसूत्रस्थभाष्य-प्रामाण्यात्केवलोष्ठ्यान्तोऽयम्। शव इत्यादौ' इति ग. पाठः।

५ 'बोध्यमिति परास्तम्' 'यत्तु निरनुबन्धकपरिभाषयाऽस्य न ग्रहणमि'ति। तन्न। आदादिकस्यापि स्वरितेत्त्वेन सानुबन्धकत्वात्। 'लुग्विकरणे'ति परिभाषाया अपि सत्त्वाच्च। एतत्परिभाषाविषये साहचर्योऽनित्यत्वाश्रयणाच्च' इति ग. पाठः।

मह पूजायाम् । 'अयं दाने' इति 'दाधानि'ति सूत्रे भाष्यम् । रह त्यागे । 'अयं गतावि'ति 'घु'सञ्ज्ञासूत्रे भाष्यम् । [1]अनिट्कारिकास्विति । व्याख्यानमेवाऽत्र शरणम् । साऽनुबन्धकत्वं तूभयोः समम् ।

द्युतिस्वाप्योः । न चेदं सूत्रं 'लिट्यभ्यासस्ये'त्यनन्तरं 'व्यथः' 'द्युतिस्वाप्योरि'ति षष्ठे एव कर्त्तव्यम् । एवञ्च सम्प्रसारणग्रहणाऽकरणेन लाघवम्, तत्किं सप्तमे गुरुतरन्यासेनेति वाच्यम् । तथा सति अङ्गाऽधिकारबहिर्भावेन प्रत्ययाऽऽक्षेपाऽनापत्तेः । न चेष्टाऽऽपत्तिः । प्रत्यासत्त्या अङ्गाऽभ्यासयोरेकनिमित्तत्वाऽलाभेन 'दुद्योतकीयिषती'त्यादौ सम्प्रसारणाऽऽपत्तेः । 'व्यथो लिटी'त्यस्याऽत्र पाठस्तु 'लिटी'त्यनुवृत्त्यर्थो, हलादिःशेषबाधनाऽर्थश्च । अन्यथा परत्वेन, अभ्यासविकारे बाध्यबाधकभावाऽभावेन च हलादिःशेषेण यकारनिवृत्तौ, वकारस्य सम्प्रसारणं स्यात् । न चैवं 'व्यदिद्युतदि'त्यत्र चङोऽभ्यासनिमित्तत्वेन, णिचश्च अङ्गनिमित्तत्वेन, सम्प्रसारणाऽनापत्तिरिति वाच्यम् । 'द्युच इश्चे'ति समाहारद्वन्द्वगर्भ-द्वन्द्वाऽऽश्रयणेनाऽदोषात् । इकारेणोपस्थितद्युतेरेव इकाराऽन्तस्य ग्रहणम् । इकारश्च णिच एव गृह्यते । 'स्वापि'साहचर्यात् ।

इदं च वृत्त्यनुरोधेन । यथा तु भाष्यं तथा द्युतेर्ण्यन्ताच्चङि सम्प्रसारणं न भवत्येव । समाहारद्वन्द्वगर्भ-द्वन्द्वाऽऽश्रयणे मानाऽभावात् । स्वापिश्च न नामधातुः । 'द्युति'साहचर्यात् । न चाऽभ्यासाऽऽक्षिप्तप्रत्ययस्य प्रकृत्याकाङ्क्षायामुपात्तधातोरेव ग्रहणेन, 'अभ्यासनिमित्तप्रत्ययप्रकृतिभूतद्युतेः सम्प्रसारणमि'त्यर्थेन[2] नाऽत्र सूत्रपाठे फलमिति वाच्यम् । 'द्युत्यादिसम्बन्धिनो लिट्परद्वयोः पूर्वस्य, सन्नन्तादिसम्बन्धिद्वयोः पूर्वस्ये'त्यर्थस्य अभ्याससञ्ज्ञाबलेनाऽऽक्षेपे, तत्र लिडादीनां स्वरूपेणोपस्थित्यनन्तरं तद्व्यापकप्रत्ययत्वस्मृतौ, तस्य प्रकृतिनिरूपितत्वेन प्रकृतिस्मृतावपि, वृत्त्या

---

१ इतोऽग्रे—'इतः पूर्वोत्तरत्र धातुपाठे सेटामेव दर्शनात्' इति ख. ग. ङ. पाठः ।

२ 'इत्यर्थेन च' इति ग. पाठः ।

तद्विषयपदजन्योपस्थित्यभावेन शाब्दबोधविषयत्वे मानाऽभावात्। अङ्ग-सञ्ज्ञायास्तु कार्यकालत्वेन तद्विधायकैकवाक्यतया, तन्निमित्तप्रत्ययस्य शब्दादुपस्थित्या, अभ्याससञ्ज्ञैकवाक्यतया लिडादेरप्युपस्थित्या च, प्रत्यासत्तिन्यायेन तयोरेकत्वे एवाऽस्य प्रवृत्त्या न दोषः। यङ्लुकस्तु च्छान्दसत्वात्तत्र न दोषः[1]। अत एव 'अभिषिषेचनीयिषती'त्यत्र[2] 'स्थादिष्वि'ति षत्वं भवत्येवेत्याहुः। ध्वनितं चेदं सर्वं भाष्ये।

द्युद्भ्यो लुङि। बहुवचनात् आद्यर्थाऽवगतिः। षष्ठ्यर्थे 'लुङी'ति सप्तमी। तदाह-द्युतादिभ्य इति। शकारादाविति। अनुवृत्त'शिती'त्यत्र कर्मधारयः। अङ्गाऽऽक्षिप्तश्च प्रत्ययो विशेष्य इति भावः। तत्फलमाह—एश इति। बहुव्रीहौ तु स्यादेवाऽयं दोषः, गौरवञ्च स्यादिति[3] बोध्यम्। रुट लुट लुण्ठ[4]। तृतीयो द्वितीयाऽन्तः। आद्यौ प्रथमाऽन्तौ। 'द्वावेव धातू, द्वितीयान्तौ चे'त्येके। क्षुभ। सञ्चलनं—प्रकृतिविपर्यासो, मन्थनं च।

वृद्भ्यः स्य। प्रतिप्रसवविधिरयम्।

न वृद्भ्यः[5]। स्यन्दतेरूदित्त्वात् 'स्वरती'ति विकल्पे प्राप्ते, इतरेषां नित्यमिटि प्राप्ते, निषेधोऽयम्। अत्र 'गमेरि'त्यतः 'परस्मैपदेषु' इत्य-नुवर्त्तते। तच्च तङानयोरभावोपलक्षकम्। अर्थाऽधिकारात्। तत्र 'तङानयो-

---

१ इतोऽग्रे—'अङ्गाक्षिप्ते 'न लुमते'ति निषेधाऽप्रवृत्तेर्वा' इति ग. पाठः।

२ 'अभिषिषेचनीषिषतीत्यत्र' इति क. पाठः।

३ इतोऽग्रे—'यद्यपि साहचर्यात् अ-लादेशशितो ग्रहणेन नाऽत्र दोषस्तथापि 'पाघ्रे'ति सूत्रे वक्ष्यमाणरीत्याऽभ्यार्थमावश्यको, लघुभूतश्चेत्यतः कर्मधारय-एव कृतः' इति ग. पाठः।

४ 'लुण्ट' इति ख. रु. पाठः।

५ इतोऽग्रे—'चतुर्ग्रहणं न कृपिव्यावृत्त्यर्थम्। 'तासि चे'ति चकारेण तत्रापि तस्य निषेधसत्त्वात्। तत्फलन्तु स्यन्दतौ मूले एव स्फुटी भविष्यति' इति ख. ग. रु. पाठः।

रभाव'शब्देन तङानानिरूपितनिमित्त[1]त्वाऽभावो बोध्यः । 'स्नुक्रमो'रित्यत्र तथाऽर्थस्य क्लृप्तत्वा[2]त् । अत एव 'वर्त्तिषीष्टे'त्यत्र सादेरार्द्धधातुकात् 'सीष्ट'शब्दात्परत्र तङानयोरभावेऽपि, नेण्निषेधः । वृतेरात्मनेपदनिमित्तत्वात् । 'विवर्त्तिषते' 'इत्यत्र' (अकृत[3]व्यूहपरिभाषया) लडाद्युत्पत्तेः पूर्वमपि न निषेधः । 'पूर्ववत्सन' इत्युक्त्या अत्रापि वृतेरात्मनेपदनिमित्तत्वात् । 'विवृत्सिन्नीयते' इत्यत्राऽपि न दोषः । वृतेरात्मनेपदनिमित्तत्वाऽभावेन निषेधप्रवृत्तेः । एतेन 'विवृत्सयते' इत्यादि व्याख्यातम् । निमित्त[4]त्वं च तद्वदेव फलोपहितं निवेश्यम् । तेन 'विवृत्सिता' इत्यत्र तृजन्ते न दोषः ।

यद्यप्यत्र भाष्ये 'वृतादीनामात्मनेपदेन समानपदस्थस्येड् भवतीति वक्तव्यमि'त्युक्तम् । 'वृतादिसम्बन्धिनः सादेरार्द्धधातुकस्याऽऽत्मनेपदेन समानपदस्थस्य इड् वक्तव्य' इत्यर्थः । न[5]चैवं 'विवृत्सित्रीयते' इत्यत्र दोषः, 'नः क्ये' इतिनियमेनाऽवान्तरस्य पदत्वाऽभावादिति वाच्यम् । 'आत्मनेपदेनैव समानपदस्थस्ये'त्यर्थात् । अयं च त[6]ङुत्पत्तेः पूर्वं, क्यजुत्पत्तेश्च प्राक् सुबन्तेनाऽपि समानपदस्थ इति न दोषः । तथाऽपि 'स्नुक्रमोरि'तिसूत्रस्थवार्त्तिकसमानाऽऽकारवचनकरणेन, तत्प्रत्याख्यानरीत्या एतत्प्रत्याख्यानस्याऽपि भाष्ये ध्वनितत्वेन, न[7] क्षतिः । तदेतदाह—तङानयोरभावे

---

१ 'निरूपितत्वाऽभावो बोध्यः' इति क्वचित् शोधितः पाठः । 'क्यङ्तङुत्पत्तेः पूर्वं प्राक् सुबन्तेनापि' इति ख. ङ. पाठः ।

२ इतोऽग्रे—'अकृतव्यूहपरिभाषया लडाद्युत्पत्तेः पूर्वमपि न दोषः' इति ख. ग. पाठः ।

३ अयं ख. ग. ङ. पाठः ।     ४ 'तत्र निमित्तत्वं च' इति ग. पाठः ।

५ 'नूनमासीदित्यदोषात्' इति ग. पाठः ।

६ 'अयं तङुत्पत्तेः पूर्वम्' इति ख. ग. पाठः ।

७ 'न क्षतिः । 'एवञ्च 'विवृत्से'त्यत्र हेलुक्यपि न दोषः । 'परस्मैपदे परे' इत्यर्थे तु न सिध्येत् । न च प्रत्ययलक्षणेन तत्परत्वम् । 'न लुमते'ति निषेधात् ।

इति । 'तङानानिमित्तत्वाऽभावे' इत्यर्थः ।

अन्तरङ्गमपीति । सकारादिविशेषाऽपेक्षत्वात्, आत्मनेपदनिमित्तत्वाऽभावनिमित्तत्वाच्च निषेधस्य बहिरङ्गत्वम् । चतुर्ग्रहणसामर्थ्यादिति । तेन हि सर्वेषु प्रत्येकं निषेधव्यापारो ध्वन्यते । अन्यथा 'न वृद्भ्य' इत्येतावतैव सिद्धौ, तद्वैयर्थ्यं स्पष्टमेव । न च 'कृपि'व्यावृत्त्यर्थं तत्[२] । 'तासि चे'ति चकारेण साद्यार्द्धधातुके तस्याऽपि निषेधसत्त्वात् । वृत्करणेन

---

यद्यपि 'अङ्गस्ये'त्यनुवृत्तस्य 'आर्द्धधातुकस्ये'त्यादौ 'अङ्गनिमित्तस्ये'त्यर्थस्य क्लृप्तत्वेन, 'वृतादिभ्यः परस्याऽङ्गनिमित्तस्य सादेरार्द्धधातुकस्ये'त्यर्थात् 'हि'निरूपिताऽङ्गसञ्ज्ञकस्याऽत्रोद्देश्यकोटौ प्रवेशाऽभावेन, 'न लुमते' त्यस्य न प्राप्तिः । अत एव भाष्ये 'वृतादिप्रतिषेधे परस्मैपदेषु चेत्कृत्युपसङ्ख्यानमि'त्येवोक्तं, न तु 'हेर्लुकी'त्यपि । तथापि लक्षणापक्षे दोषशङ्कैव नेत्येतदभिप्रायेण प्रयोजनत्वमुक्तम्' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

'यद्वा प्रत्यये परतः पूर्वस्य कार्यसत्त्वात्, प्रत्ययाक्षिप्ताऽङ्गस्योद्देश्यत्वाच्च परभूतप्रत्ययस्य श्रवणेनाऽङ्गस्य तदंशे उत्थिताकाङ्क्षत्वेन तथैवान्वयस्य युक्तत्वाच्चाऽस्त्येव निषेधप्राप्तिः । भाष्ये तु 'कृती'त्युपलक्षणमिति बोध्यम्' इति च ग. पाठः ।

१ इतोऽग्रे—'इदं यङ्लुकि न प्रवर्त्तते । गणनिर्दिष्टत्वात् । तेन तत्र इडेव । 'वृद्भ्य' इति साहचर्यात्, तदनुवृत्त्या वा 'तासि चे'त्यस्यापि ( प्रत्यासत्त्या ) यङ्लुक्यप्रवृत्तिः । अत एव 'तासि च क्लृप' इति सूत्रस्थक्लृपग्रहणप्रत्याख्यानं भाष्योक्तं सङ्गच्छते । एवं 'गमेरिडि'ति सूत्रेऽपि बोध्यम् । 'असिची'ति तु नाऽनुवर्त्तते । अस्वरितत्वात् । फलाऽभावाच्च । न च गमेर्यङ्लुकि सिचि इडभावार्थं तत् । प्रकृतौ प्रवृत्तकार्यस्यैव यङ्लुकि प्रवृत्त्यङ्गीकारात् ? 'आर्द्धधातुकस्येडि'त्यस्य दुर्वारत्वात् । नच 'से' इत्यनुवृत्तिसामर्थ्यात्तस्याऽपि बाधः । पूर्वसूत्रे चारितार्थ्यादिति दिक्' इति ग. पाठः ।

२ 'तत्' इति क. नास्ति ।

घृतादिसमाप्तेरिव, वृतादिसमाप्तेरपि बोधयितुं शक्यत्वात्। अत एव 'वृद्भ्यः स्यसनोरि'ति सूत्रं सङ्गच्छते। न 'वृद्भ्य' इति वचनन्तु 'येन नाऽप्राप्ति'न्यायेन आर्द्धधातुकलक्षणेड्बाधेन चरितार्थम्। कृपेस्तु 'तासि चे'ति सूत्राऽऽरम्भसामर्थ्यादेव विकल्पो नेति सूत्राऽऽशयः।

वस्तुतः [1]'चतुर्भ्य' इति व्यर्थम्। 'निषेधाश्च बलीयांस' इतिन्यायेनाऽन्तरङ्गाणामपि बाधसिद्धेः। 'वृतादिभ्यो यद्यत्प्राप्तं तन्ने'ति वचनव्यक्त्या सर्वेण्निषेधाच्च। एवं च 'तासि चे'ति सूत्रे 'कृप'[2] इत्यपि न कार्यम्। न चाऽन्येषु वृतादिष्वतिव्याप्तिः। परस्मैपदाऽभावात्। आत्मनेपदनिमित्तत्वाच्च। न च 'तासि चे'त्यपि व्यर्थम्। 'न वृद्भ्य' इत्यत्र 'से' इति निवृत्त्या तास्यपि सिद्धेः। वृतादिष्वतिप्रसङ्गस्तु 'परस्मैपदे' इत्यनुवृत्त्यैव निराकार्य इति वाच्यम्। तृचि दोषाऽऽपत्तेः। न च 'परस्मैपदेषु' इत्यनुवृत्त्या निस्तारः। तस्य 'विवृत्सिता' इत्याद्यनुरोधेन आत्मनेपदनिमित्तत्वाऽभावोपलक्षणत्वात्। ध्वनितं चेदं भाष्यकैयटयोः सूक्ष्मदृशाम्।

अप्राणिष्विति पर्युदासादिति। प्रसज्यप्रतिषेधे असमर्थसमासवाक्यभेदयोरापत्तिरिति भावः। स्पष्टं चेदं भाष्यकैयटयोः।

१ 'वस्तुतश्चतुर्भ्यं इति व्यर्थम्। 'न वृद्भ्य' इत्यत्र इड्ग्रहणानुवर्त्तनेन 'इण्न-इण्न'इत्यर्थसामर्थ्यादिट्लक्षणस्यापि बाधसिद्धेः। अत एव इडिति वर्त्तमाने 'गमेरिडि'त्यत्र इड्ग्रहणं चरितार्थम्। 'निषेधाश्च बलीयांस' इतिन्यायेन' इति ग. पाठः॥ 'वस्तुतः चतुर्भ्य इति व्यर्थम्। 'न वृद्भ्य' इत्यनेन परत्वात्तद्बाधसिद्धेः। तत्सूत्रमन्योदित्सु, अस्मादात्मनेपदे च चरितार्थम्। अस्याऽन्ये वृतादयोऽवकाश इति। एवञ्च 'तासि चेति' सूत्रे 'कृप' इत्यपि' इति च ख. ङ. पाठः।

२ इतोऽग्रे—'कृपू इति। अस्य लृकारोपधत्वं कुतो न कृतमिति निरूपितं 'पथिमथी'तिसूत्रे' इति ग. पाठः।

उ इति च्छेद इति। स्पष्टं चेदं प्रत्याहाराह्निके भाष्ये। तच्चेति। 'कृपे'ति पदमित्यर्थः। 'सूत्रमि'त्यन्ये। आवृत्तिफलं[1] वाक्यभेदः।

रेफसदृश इति। वर्णैकदेशानां वर्णग्रहणेनाऽग्रहणात्। एवं च 'कृपे रो ल' इत्यर्वाचीनपाठः प्रामादिक इति बोध्यम्।

नन्वयं ऌकारोपध एवाऽस्तु। 'कृपणः' 'कृपे'त्यादौ ऋकारश्रवणन्तु बाहुलकेन तव लत्वाऽभाववत्तेनैव ऋकारकरणात्सिद्धम्[2]। न च 'अचीक्लृपदि'त्यत्र 'उर्ऋदि'त्यनेन ऌकारस्य ऋकारे, 'अचीकृपदि'ति स्यात्, ऋकारोपधपाठे तु लत्वस्याऽसिद्धतया गुणं बाधित्वा 'उर्ऋदि'ति ऋकारे, लत्वप्रवृत्तेस्तत्सिद्धिरिति वाच्यम्। तपरसूत्रे 'अप्रत्यय' इत्यस्याऽसम्बन्धेन, भाव्यमानऋकारेणाऽपि ऌकारग्रहणसत्त्वादन्तरतमतया ऌकारस्य ऌकारेणेष्टसिद्धेः। तपरत्वं हि ऌकारस्य, दीर्घॠकारस्य च स्थानित्वे सार्थकमिति, ग्राहकसूत्रे परेणाऽण्ग्रहणे तपरत्वस्य ज्ञापकताऽपि भाष्योक्ता युक्तेति चेन्न। 'उर्ऋदि'त्यनेन 'अनन्तरस्ये'तिन्यायात् 'अचीकृतदि'त्यादावित्त्वबाधाऽनापत्तेः। ऋदुपधत्वे तु 'उर्ऋदि'त्यत्र ऌकारग्रहणे फलाऽभावेन, दीर्घव्यावृत्त्यर्थतैव तपरत्वस्य वक्तव्येति, तत्सामर्थ्याद्भाष्यसामान्यचिन्तामाश्रित्याऽस्य सर्वबाधकत्वाऽङ्गीकार इत्यदोषः। म्लदादिभ्योऽनुकरणेभ्यो णिच् तु न। अनभिधानात्। ध्वनितं चेदममुम् ऋकारोपधं ब्रुवता पाणिनिनेति दिक्।

तङानयोरभावे इति। 'तन्निमित्तत्वाऽभावे' इत्यर्थः। क्लृप्सीष्टेति। 'लिङ्सिचावि'ति किंत्त्वान्न गुणः। वृदिति। वृतेः कर्त्तरि क्विप्।

षितश्चेति। अतिदेशोऽयम्। फलन्तु 'षिद्भिदे'त्यङ्। 'ञित्वरे' त्युत्तरं 'घटादयः षित' इत्युक्तेस्तावतामेव षित्त्वमिति भावः।

घट चेष्टायाम्। ये धातवोऽन्यत्राऽधीता इह पठ्यन्ते, तेषामर्थनियमः।

---

१ 'आवृत्तिफलं च' इति ग. पाठः।

२ 'सिद्धः' इति क. पाठः।

अन्यथा शपूविकरणानां घटादिपाठादेव सिद्धौ, 'ष्वन शब्दे' इत्यादेर्बहिर्भूतपाठस्य वैयर्थ्याऽऽपत्तिः। तत्र ये अन्यविकरणा अनूद्यन्ते, तेषां णिजभावे तत्तद्गणप्रयुक्ता एव विकरणाः। ये तु भ्वादिस्था एवाऽनूद्यन्ते, स्वतन्त्रा वा पठ्यन्ते, तेषां तदभावे शबेवेति बोध्यम्। ये त्विहैव पठ्यन्ते, तेषामुपसर्गादिनाऽर्थान्तरत्वेऽपि, मित्त्वमस्त्येव। अर्थनिर्देशस्य क्रियावाचित्वबोधाऽर्थं चारितार्थ्यादिति माधवादयः। तद्धनयन्नाह—विघटयतीति। न च[2] तस्यैवेति। एवञ्च 'विघटयती'त्यादौ मित्त्वं न स्यादिति भावः।

नाऽन्ये मित इति। न च षित्त्वाऽर्थमयं चुरादेरनुवाद[3]ः। तत्रैव 'घटषि'ति पठितुं युक्तत्वात्।

[4]हलादिःशेषापवाद इति। 'य'स्थानिकहलादिःशेषाऽपवाद' इत्यर्थ[5]ः। न चाऽभ्यासविकारे बाध्यबाधकभावाऽभावादिदमसङ्गतम्। 'अजीगणदि'त्यादौ हलादिःशेषे ईत्त्वस्य ज्ञाप्याऽर्थप्रयोजनत्वेन भाष्ये उपन्यासात्, लोपस्याऽपि तत्र विकारग्रहणेन ग्रहणात्। एवञ्च वस्यैव सम्प्रसारणा-

१ इतोग्रे—'एतेन 'धातुपाठेऽर्थनिर्देशस्योपलक्षणत्वादिदं चिन्त्यमि'त्यपास्तम्। अन्यत्र तथात्वेऽप्यत्र नियमार्थत्वात्' इति ग. पाठः।

२ 'न च तस्यैवेति। यद्यपि तदनुवादेऽप्याशङ्कितस्थले न क्षतिः, अर्थभेदात्, तथापि 'चेष्टयती'त्यर्थे 'विघटयती'त्यादौ मित्वं न स्यादिति शङ्काशयः' इति ख. ङ. पाठः। क. कुण्डलितः।

३ इतोऽग्रे—'अस्य णिचो नित्यतया प्रत्ययान्तत्वादेवाऽङ्सिद्धया, षित्वे फलाऽभावात्' इति ख. ङ. पाठः।

४ 'नान्ये मित इति। अस्य तु णिज्नित्यः। 'चिति स्मृत्यामि'त्यादिविशेषाऽपेक्षताया वक्ष्यमाणत्वात्' इति ग. पाठः।

५ 'बाध्यबाधकभावाऽभावस्य 'दीर्घोऽकित' इति सूत्रे ज्ञापितत्वेनेदमसङ्गतम्' इति ग. पाठः।

ऽऽपत्तिरिति वाच्यम् । 'लिट्यभ्यासस्ये'त्यत्र उभयेषाङ्ग्रहणसामर्थ्येन अभ्यासलोपा–ऽभ्याससम्प्रसारणविषये तन्न्यायाऽप्रवृत्तेः[2] । 'सम्प्रसारणं, तदाश्रयं च बलवदि'ति तु 'उभयेषाम्'ग्रहणवैयर्थ्याऽऽपत्त्या 'लिट्यभ्यासस्ये'ति सूत्रे भाष्ये एव प्रत्याख्यात इति, तदुपन्यासः केषाञ्चिदयुक्त एवेति दिक्[3] ।

अक्षञ्जीति । ण्यन्तात्क्विपि 'त'शब्दस्य लुक् । क्षाञ्जं क्षाञ्जमिति । ण्यन्तादाभीक्ष्ण्ये णमुल् । क्रियासमभिहारे द्वित्वम्[4] । एतत्सर्वं दक्षादिष्वपि समम् ।

१ इतोऽग्रे—'लिट्यभ्यासस्ये'त्यनन्तरं 'ष्यथ' इति वक्तव्ये, प्रकरणान्तरे पाठेन मण्डूकप्लुत्या 'हलादिः शेषः' इत्यनुवर्त्य, तद्विषयेऽस्य प्रवृत्तिबोधनेनाऽक्षतेः' इति ग. पाठः ।

२ इतोऽग्रे—'ज्ञापकसिद्धाऽनित्यत्वेन वा तस्या इहाऽप्रवृत्तेः । 'ष्यथो लिटी'त्यत्र यकारप्रश्लेषात्' ।······'अत एव 'लिटि वयो य' इत्यत्र 'लिटी'ति चरितार्थम् । अन्यथा वयादेशस्य लिट्येव सत्त्वेनाऽत्र तद्वैयर्थ्यम् । 'किति वयो यः' 'वश्चाऽस्याऽन्यतरस्याम्' 'लिटि वेञः' इत्येव न्यासं कुर्यात् । तस्माल्लिड्ग्रहणं सर्वत्र लिटि निषेधाऽर्थम् , 'उवाये'त्यत्राऽभ्यासविषयेऽपि । तत्र हलादिःशेषेण सिद्धेस्तद्व्यर्थं सत् अभ्याससम्प्रसारणविषये उक्तन्यायाऽप्रवृत्तिं ज्ञापयति । अत एव 'विव्याधे'त्यादौ यस्य सम्प्रसारणसिद्धिः । न च 'उवाये'ति तु परत्वाद्वलि लोपेन सिद्धम् । ततोऽपि परत्वेन हलादिःशेषप्राप्तेरिति दिक्' इति ख. ग. पाठः । क. कुण्डलितः ।

३ इतोऽग्रे—'मित्त्वसामर्थ्यादिति । 'गुरोश्च हल' इत्येवाऽङ्सिद्धेः षित्त्वाऽर्थं पाठ इति न शङ्क्यमिति भावः' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

४ 'ञित्वरा । आदित्त्वम् आत्मनेपदमात्रफलकम् । 'रुष्यमत्वरे'ति निष्ठायामिटो वैकल्पिकत्वादि'ति हरदत्तः । 'आदित्वं 'रुष्यमत्वरे'त्यस्य भावादिकर्मणोर्निष्ठायामप्रवृत्तिज्ञापनाऽर्थम् । एवञ्च 'विभाषा भावादिकर्मणोरि'त्येतदर्थमपि तदि'त्यन्ये' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

उत्सृष्टाऽनुबन्ध इति। डकारे अकार उच्चारणाऽर्थ इति भावः। न चोत्सृष्टाऽनुबन्धत्वादन्य एवाऽस्तु। अनुवादत्वे[1] लाघवात्। परस्मैपद-मिति। न चैतदर्थं पाठस्य चारितार्थ्येन, अर्थविशेषे नियमो न स्यात्। घटादिषु पाठेन, तत्त्वप्रयुक्तकार्यस्याऽप्यावश्यकत्वेन, तस्याऽपि लाभात्। एवञ्च मित्त्व-परस्मैपदे वेष्टने एव, विजातीयाऽर्थपाठात्[2]।

अहिडि अहीडीति। 'चिण्णमुलोरि'ति दीर्घः। एतदर्थमेव तत्र ह्रस्व एव न विकल्पितः।

केचित्तु 'ऊकाल' इति ह्रस्ववाक्ये उकारस्य अण्त्वात्तेन सवर्णग्रहणा-द्दीर्घप्लुतयोरपि ह्रस्वसञ्ज्ञा प्राप्नोती'त्याशङ्कायां 'ह्रस्वसञ्ज्ञावचनसामर्थ्या-न्ने'त्युक्तम्। ह्रस्वविधौ वा आन्तरतम्यान्मात्रिकादीनां तादृशे एवाऽऽदेशे, तद्विधीनां वैयर्थ्यमेव। अनुवादे तु अज्ग्रहणमेव कार्यम्। न च विधान-सामर्थ्यादनन्तरतमविधानम्। तत्परिभाषाबाधकल्पनाऽपेक्षया इष्टाऽनु-रोधेन तयोस्तत्समभावज्ञापनस्यैवौचित्यमिति तदाशयः। तदनन्तरं ह्रस्व-सञ्ज्ञाऽभावे 'ह्रस्वो नपुंसके' 'णौ चङि' 'अभ्यासस्य ह्रस्व' इति स्थलत्रये 'एच इगि'ति वक्तव्यमिति षट् पदानि। ह्रस्वसंज्ञायान्तु ह्रस्वप्रदेशत्रये त्रिर्ह्रस्वग्रहणानि, एकं संज्ञासूत्रे, इति चत्वारि पदानि। 'एच इग्घ्रस्वादेशे' इति चत्वारि, इत्यष्टौ पदानि। एवञ्च गुरुन्यासकरणं तयोर्ह्रस्वसंज्ञा-ऽभावार्थमि'त्युक्तम्। अस्य धातोरत्र सत्त्वे तु 'मितां ह्रस्व' इत्यत्राऽपि 'एच इगि'ति वक्तव्यमिति'षट् पदानी'ति भाष्याऽसङ्गतिः[3] स्पष्टैव। तथा 'चिण्णमुलोरि'ति सूत्रे दीर्घग्रहणं व्यर्थम्, अनुवर्त्तमानह्रस्वविकल्पेनैव सिद्धेरि'त्याशङ्क्य, शमेर्ण्यन्ताण्णिचि 'अशमी'त्यादौ णिलोपस्य स्थानि-

---

१ 'अनुवादत्वे लाघवार्थं, तथा सर्वैः प्राचीनैरुक्तत्वात्' इति ग. पाठः।

२ इतोऽग्रे—'न चाऽत्रैव परस्मैपदमित्यर्थं तत्। विनिगमनाविरहात्। घटादिषु पाठवैयर्थ्याऽऽपत्तेश्चेति भावः' इति ग. पाठः।

३ 'भाष्यसङ्गतिः' इति हरितालेन शोधितः पाठः क. पु.।

वत्त्वाद्ध्रस्वत्वं न स्यात्दीर्घग्रहणे तु दीर्घस्थानिवत्त्वनिषेधान्न दोष। इति 'कर्मणिङ्'सूत्रे भाष्ये उक्तम्। तदप्यनुपपन्नम्। 'अहिडि' 'अहीडी'त्यर्थं दीर्घविधानस्याऽऽवश्यकत्वेन, शङ्कोत्तरयोरुभयोरपि निर्दलत्वाऽऽपत्तेः। तस्मादस्याऽत्र पाठोऽसाम्प्रदायिकः। कैयटादयस्तु चिन्त्या एवे'त्याहुः।

भाष्यकृताऽनाटीति। इदमेव भाष्यं 'नट नृत्तावि'त्यर्थभेदकल्पने मानम्। निपात्यत इति। न च तत्र 'क्राथे'ति घञन्तमेव गृह्यते। पूर्वोत्तरसाहचर्येण धातुनिर्देशस्यैवोचितत्वात्। स्पष्टं चेदं वृत्तौ। न च धातुपाठे ह्रस्वोच्चारणवैयर्थ्यम्। दीर्घ-णिचोरभावे चारितार्थ्यात्।

नन्वत्र पाठवैयर्थ्यमत आह–मित्त्वमिति। निपातनं च चिण्णमुल-तिरिक्तविषये चरितार्थमिति भावः। उदित्करणसामर्थ्यादिति। 'विशिष्याऽर्थो नोच्यते'इत्युक्त्या नियमस्य वक्तुमशक्यत्वेन तद्वैयर्थ्यमिति भावः। एवञ्च[2] पूर्वपठित'वन षण संभक्तावि'त्यस्याऽपि नाऽनुवादः। पूर्वोक्तरीत्याऽर्थनियमाऽसम्भवेन, तत्र वनपाठस्य वैयर्थ्याऽऽपत्त्या, तदनुवादाऽसम्भवात्। उदित्त्वफलं तु णिजभावे बोध्यम्। न च 'सामान्यक्रियावाचकत्वे एव मित्त्वं, न विशेषवाचकत्वे' इत्येवं नियमः सुलभ इति वाच्यम्[3]। विशेषाऽनालिङ्गितसामान्यस्याऽभावात्।

[4]अपरे तु 'पूर्वपाठः संभक्तौ 'वनोती'ति रूपव्यावृत्त्यर्थः। अन्यथा

---

१ 'दीर्घग्रहणे तु स्थानिवत्त्वनिषेध' इति क. पाठः।

२ 'न च पूर्वपठित-वनषणसंभक्तावित्यस्यानुवादाऽभावार्थमुदित्करणमिति वाच्यम्' इति ग. पाठः।

३ इतोऽग्रे–'अनेकार्थत्वादिति पक्षेऽस्याप्यन्तर्भावेण तस्य प्रबलतया तत्पक्षे तस्य दुर्लभत्वादित्याहुः' इति ग. पाठः।

४ 'अपरे तु पूर्वपाठस्यैवमपि वैयर्थ्यमेव। अनेनैव 'वनती'त्यादिसिद्धेः। तस्मात्पूर्वपठितस्य, ज्ञानादिकस्य चाऽनुवाद एवाऽयम्। उदित्करणन्तु तस्यैव वैकल्पिकोदित्त्वबोधनार्थम्। तत्सामर्थ्याच्च निष्ठायां 'यस्य विभाषे' त्यस्याऽप्रवृत्तिरपीत्याहुः' इति ग. पाठः।

तत्राऽपि तद्वैयर्थ्यं तदवस्थमेव । अनेनैव 'वनती'त्यादिसिद्धेः । उदित्त्व- मप्यस्य व्यर्थमेव । तानादिकस्य उदित्त्वेन, पूर्वपठितस्याऽनुदित्त्वेन, निष्ठायां रूपद्वयस्येष्टत्वात् । एवञ्च तानादिकाऽनुवादेऽपि न क्षतिः । अस्यैवाऽनुवादबोधनाऽर्थमुकारोच्चारणमित्याहुः ।

विकल्पो वक्ष्यते इति । 'ग्लास्नावनुवमां चे'त्यनेनेति भावः । दरती- त्यादीति । 'क्र्यादेरनुवाद' इति मते तु णिजभावे श्नाप्रत्यये 'दृणाती'ति भावः । केचित्तु 'अयं दिवादावपीति ताच्छीलिकान्तप्रकरणे 'अन्येभ्योऽपि दृश्यते' इतिसूत्रस्थभाष्यस्वरस इति, तस्याऽप्यनुवाद' इत्याहुः ।

माधव इति । तस्याऽयं भावः—'सूत्रे दीर्घाऽन्तपाठ एवाऽविगीतः । व्याख्यातृभिः 'दॄ विदारणे'इत्यस्योक्तत्वात् । किञ्च ह्रस्वान्तस्याऽप्यभ्युपगमे 'शॄदॄप्रामि'ति दृणातेर्वैकल्पिकह्रस्वविधानं व्यर्थं स्यात् । धातुद्वयेन 'दद्रतुः' 'ददरतुरि'ति रूपद्वयसिद्धेः । न चाऽर्थभेदः । धातूनामनेकार्थत्वादि'ति ।

परिभाषाभ्यामिति । परिभाषयोः परस्परविरोधे उभयोरप्यप्रवृत्तिः; अवधारणांऽशपरित्यागेन समुच्चयो वेति बोध्यम् । 'घुमास्थागापे'त्यत्र तु परिभाषाद्वयस्याऽपि 'पा पाने' इत्यत्राऽविरोधसम्भवान्न 'पा'इत्यनेन सामान्यतः 'पा'मात्रग्रहणम् । मारणेति । 'मारणेऽर्थे संपूर्वकस्यैव प्रयोग'- इति पुरुषकारे उक्तम् । माधव इति । 'शम लक्ष आलोचने' इत्यस्य हि एतद्रूपम् । आलोचनं च चाक्षुषज्ञानमेव । 'पश्यार्थैश्चाऽनालोचने' इत्यादौ तथा दृष्टत्वादिति तद्भावः । ज्ञापनमात्रमिति । 'श्लाघह्नुङ'ति सूत्रे 'ज्ञीप्स्यमान' इति प्रयोगादिति भावः । 'बोधयितुमिष्ट' इति हि तदर्थः ।

माधवमतेऽस्योपपत्तिमाह—ज्ञप मिच्चेति । तथा च माधवमते बोधने धातुभेदेन रूपद्वयमिति भावः । कथमिति । माधवाऽन्यमते आक्षेपः । तद्धुनयन्नाह—माधवेति ।

कम्पने चलिरिति । धातुनिर्देशे इक् । 'कम्पनाऽर्थे चल् धातुर्मिदि'- त्यर्थः । एवमन्यत्राऽपि बोध्यम् । स्वार्थे णिजभावे इति । 'आ धृषाद्वे'ति

वैकल्पिकत्वादित्यर्थः। हेतुमण्णौ 'नाऽन्ये मितोऽहेताविं'त्यस्याऽप्रवृत्तेरिति भावः। स्वार्थणिचि त्विति। 'नान्ये मित' इत्यस्य प्रवृत्तेरिति भावः। जिह्वामिति। 'तां ज्ञापयती'त्यर्थः। जिह्वयेति। तया तृषादि[1] ज्ञापयतीत्यर्थः। लडयति शत्रुमिति। 'उन्मथ्नाती'त्यर्थः। दधीति। 'जिह्वाव्यापारेण लेढी'त्यर्थः। केचित्तु 'आद्यस्य गालयतीत्यर्थः। द्वितीयस्य विलोडयतीत्यर्थ' इत्याहुः। दैवादिकस्येति। न च ईदित्त्वं व्यर्थम्। दैवादिकस्यैवाऽनुवाद इत्यर्थबोधनाऽर्थं तत्सत्त्वात्[2]। मित्संज्ञा इत्यर्थ इति। 'अतिदेशोऽयमि'त्यपरे। मित्त्वं वेति। 'मित' इत्यनुवृत्तं षष्ठ्यनुरोधाद्भावप्रधानमिति भावः। प्राप्तेति। ज्वलादीनां पूर्वं पाठात्, नमोऽमन्तत्वाच्चेति भावः। घञन्तात्तत्करोतीति। 'आचष्टे' इत्यर्थेऽपि कारकपूर्वत्वाऽभावान्न कुल्लुगादि। तत्पूर्वत्वे तु 'मेघेनोन्नमयती'त्येवेति बोध्यम्। णौ टिलोपे सति, तस्य स्थानिवत्त्वान्न 'मितां ह्रस्व' इति भावः[3]। कथं संज्ञेति। घञन्ताण्णिच्यपि 'नोदात्तोपदेशस्ये'ति निषेधाद्वृद्धिर्दुर्लभेति प्रश्नः। प्राप्ते इति। वनोः पूर्वपाठात्, वमोऽमन्तत्वादिति भावः। यमोऽपेति। परिवेषणं भोजनाऽनुकूलः पात्रेऽन्नस्थापनादिरूपो व्यापार इति बोध्यम्।

**नियमवच्छब्दादिति।** न च मतुप्लोपे 'टेरि'त्यस्याऽप्राप्तौ, वृद्धौ, पुगागमः शक्यः। सञ्ज्ञापूर्वकविधेरनित्यत्वेन वृद्ध्यभावात्। अत एव समर्थसूत्रे 'स्वरयितव्यमि'ति भाष्यप्रयोगः सङ्गच्छते। तत्र हि 'स्वरवत्'-

---

१ 'तया पदार्थाऽन्तरम्' इति ग. पाठः।

२ इतोऽग्रे—'यङ्लुगन्ताण्णिचि मित्त्वाऽभावार्थमनुबन्धनिर्देश इत्याहुः' इति ग. पाठः।

३ इतोऽग्रे—'सम्पदादित्वाद्भावे क्विपि, 'अनुनासिकस्ये'ति दीर्घे, णौ 'उज्ञामयती'ति प्रयोगसिद्धिरिति केचित्' इति ख. ङ. पाठः।

'एतेन 'सम्पदादित्वाद्भावे क्विपि, 'अनुनासिकस्ये'ति दीर्घे, णौ 'उज्ञामयती'ति प्रयोगसिद्धिरि'त्यपास्तम्। एकाच्त्वेन टिलोपाऽभावेऽपि, एकदेशविकृतन्यायेन मित्त्वात्, ह्रस्वस्य दुर्वारत्वादित्याहुः' इति च ग. पाठः।

शब्दाण्णिच् । अन्यथाऽर्थाऽसङ्गतिः । तथा च इकारेण आद्गुणे, सिद्ध-मिष्टमिति भावः । अर्थाऽसङ्गतिभिया 'नियमशब्दादि'ति नोक्तम् ।

वृत्तिन्यासादिविरोधादिति । 'न पादमी'ति सूत्रे 'आयामयते' इत्युदाहृत्य 'यमोऽपरिवेषणे' इति मित्त्वं प्रतिषिध्यते' इति वृत्तावुक्तम् । न्यासकृता च 'न कमी'त्यतो 'ने'त्यनुवर्त्तते' इत्युक्तम् । अत एव 'न कमी'ति निषेधाऽनन्तरं तेषां पाठः । अन्यथा 'न कमी'त्यतः प्रागेव त्रिसूत्री पठ्येतेति बोध्यम् ।

असम्भवादिति । प्राप्तिं विना निषेधाऽसम्भवादित्यर्थः ।

फणेः प्रागेवेति । 'यो व्यती[1]रफाणयन्सुयुक्तामुपदाशुषे' इति श्रौत-प्रयोगोऽत्राऽनुकूल इति बोध्यम् । सामर्थ्यादिति । तपरत्वांऽशस्य पूर्वत्र, स्यमु-स्वनयोश्च कृताऽर्थत्वादिति भावः । अकारस्य स्थानित्वन्तु न त्यज्यते । तत्त्यागे मानाऽभावात् । अत एव दीर्घोपधानां फणादौ पाठश्चरितार्थः । तत्र हीति । षत्वविधावित्यर्थः ।

टल ट्वल । वैक्लव्यं–भयादिजनितोद्विग्नता । तद्व्यापार इति । बन्धुत्वाऽनुकूलो व्यापार इत्यर्थः । अटलीदिति । एदित्त्वान्न वृद्धिः । टुवम् । 'वान्त' इत्यत्र 'आदितश्चे'ति चकारस्याऽनुक्तसमुच्चयार्थत्वादिडभाव' इति वृत्तिकृत् । एवञ्चाऽस्य उदित्पाठोऽनाकरः । एवञ्च क्त्वायां 'वमित्वे'त्येव ।

सुधाकर इति । 'चुटू' इत्यादिसूत्रस्थभाष्यप्रामाण्याद्धात्वर्थनिर्देशोऽप्यार्ष इति भावः । केचित्तु 'उद्गरणे' इत्येव पठन्ति । भागवृत्ताविति[2] । 'वेमुश्च केचिद्रुधिरमि'त्यादिप्रयोगाश्च तस्याऽनुकूला इति भावः । तद्भाष्यादौ न दृष्टमिति । 'वेमुरि'ति प्रागुक्तप्रयोगस्तु च्छान्दसत्वाद्बोध्यः ।

---

१ 'रफाणयत्' इति पाठान्तरम् ।

२ 'भागवृत्ताविति । 'अत एके'ति सूत्रे एव 'अनादेशादि-शश-दद-वादि-गुणानामि'ति सिद्धे, योगविभागेन, नन्द्वयोपादानेन च निषेधस्याऽनित्यत्व-मिति तदाशयः' इति ख. ग. पाठः । क. कुण्डलितः ।

भ्रमु चलने । नन्वस्य ज्वलादौ पाठो व्यर्थः । न च 'ण'प्रत्ययाऽर्थः । 'नोदात्तोपदेशस्ये'ति वृद्धिप्रतिषेधेन, अच्प्रत्ययेनैव सिद्धेरिति चेन्न । अचि 'अभ्रम' इत्यत्र 'अच्कावशक्तावि'त्यन्तोदात्तत्वं स्यात् । णे तु पूर्वपदप्रकृतिस्वरेणाऽऽद्युदात्तत्वमिति विशेषात् । मर्षणं—क्षमा । सा चाऽपराधे सत्यपि क्रोधाऽनाविष्करणम् । ढलोप इति । बहुव्रीहिपक्षे निमित्तत्वेनाऽऽश्रयणादेव ष्टुत्वादीनामसिद्धत्वं नेति बोध्यम् । रलोपस्य त्वसम्भवान्निवृत्तिः । तत्पुरुषपक्षेऽप्येवमेव । ध्वनितं चेदमत्रैव भाष्ये ।

सोढः । 'न परे'त्यतो 'ने'ति वर्त्तते । सोढः किम् ? । 'परिषहते' ।

सिवादीनाम् । सिवु-सह-सुट्-स्तु-स्वञ्जः सिवादयः ।

रम । 'अस्य उदित्त्वमनार्षमि'ति माधवः । तथा च क्त्वायाम् अनुनासिकलोपे 'रत्वे'त्येव ।

पाघ्रा । 'पा पाने', अयमेवाऽत्र गृह्यते, अलुग्विकरणत्वात् । 'पै' इत्यस्य शिति 'पा'रूपत्वाऽभावाच्च । 'द्रष्टश्वर्त्ती'ति पाठे 'द्रष्टी'ति सौत्रो निर्देशः । अन्यथा शब्दपरत्वेन 'युष्मदी'त्यादाविवाऽऽगमो न स्यात् । 'भवतेरि'त्यादिवद्गुणश्च स्यात् । विकरणस्तु[1] कत्रर्थकत्वाऽभावान्नेत्यपि वक्तुं शक्यम् । अत एव प्रकृते 'अर्त्ति-सर्त्ती'ति प्रयोगः सङ्गच्छते ।

शाकारादाविति । 'शिती'ति लाघवात्कर्मधारय इति भावः । तेन 'पपे' इत्यादौ न[2] ।

---

१ 'विकरणस्तु ज्ञापकसिद्धत्वादनित्यत्वेन नेत्यपि' इति ख. ग. ङ. पाठः ।

२ अग्रे 'नन्वत्र न दोषः । पर्वोत्तरसाहचर्येणाऽलादेशस्यैव शितो ग्रहणात् । अत एव जादेशे दीर्घोच्चारणस्याऽङ्गवृत्तपरिभाषाज्ञापकत्वमाकरोक्तं सङ्गच्छते । अन्यथा यङ्लुगन्ताच्छतरि तस्य चारितार्थ्येनाऽसङ्गतिः स्पष्टैव । किञ्च पिबेर्गुणप्रतिषेधस्य अदन्तत्वाऽऽश्रयणेन प्रत्याख्यानं भाष्योक्तमसङ्गतं स्यात् । हलन्तत्वे यङ्लुगन्ताच्छतरि पिबादेशे, शब्लुकि, शि, तयोः परयोर्नुमोऽप्रवृत्तिः, अदन्तत्वे तु प्रवृत्तिरि'ति फलभेदात्प्रत्याख्यानाऽसङ्गतिः स्पष्टे-

सदिर । अप्रतेः किम् ? । 'प्रतिससाद' ।

सदेः परस्य । 'सदिस्वञ्ज्योरि'ति पाठस्तु भाष्याऽननुगुणः ।

वेति चेन्न । कर्मधारयाऽभावेऽर्त्तिसर्त्योर्जौहोत्यादिकयोरप्यादेशापत्तेः । शपः श्लुनाऽपहारेऽपि, चानशः शितः संभवात् । कर्मधारये तु न दोषः । आदिशित्त्वाऽभावात् । 'शतरि नेदं वर्त्तते' इत्युक्तमेव । 'शध्यै'प्रत्यये त्वयं दुर्वारः ।* न च शबाक्षिप्ते सार्वधातुके' इति ग. पाठः ।

'अत एव अर्त्तिसर्त्योर्जौहोत्यादिकयोः शपः श्लुनाऽपहारेऽपि, चानशि न । आदिशित्त्वाऽभावात्।*न च शबाक्षिप्ते सार्वधातुके लुक्श्लुविधानेन परनिमित्ततया स्थानिवत्त्वेन शपम् आदिशितमादाय कर्मधारयेऽपि दोष इति वाच्यम् । अनुमानेनोपस्थितसार्वधातुकस्य वृत्त्याऽनुपस्थितत्वेन 'अदिप्रभृतिभ्य' इत्यादौ शाब्दाऽन्वयाऽभावेन, शाब्दपरनिमित्तत्वाऽभावात्[1] । 'अन्तरङ्गानपी'ति न्यायेनाऽनुबन्धविशिष्टस्यैव लुकि, अजादेशत्वाऽभावाच्च । तत्र 'लुगि'ति लुमत उपलक्षणमिति, श्लावपि न दोषः । तस्य न्यायस्याऽकृतव्यूहपरिभाषाऽनतिरिक्तत्वात् । अत एव 'जुहुत' इत्यादौ गुणो न । न च श्तिपि आदेशाऽऽपत्तिः । 'सर्त्तिशास्त्यर्त्तिभ्यश्चे'ति निर्देशेन श्तिपि आदेशाऽप्रवृत्तेर्ज्ञापनात् । केचित्तु 'दशि-शदि-साहचर्याज्जौहोत्यादिकयोर्न ग्रहणमि'त्याहुः'[2] इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

'सदिस्वञ्ज्योरि'ति इत्यारभ्य 'परिषस्वजे' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितो, मनोरमादिस्थत्वात् ।

1 इतोऽग्रे—'उरदि'त्यादौ तु कार्यकालपक्षेऽङ्गसंज्ञासूत्रैकवाक्यतया प्रत्ययं इतिपदीयशब्दस्य शाब्दान्वयसम्भवान्न दोषः । अत एव 'जुहुयादि'त्यादौ गुणो न । 'लुकि ने'ति स्थानिवत्त्वनिषेधः । लुका श्लोरप्युपलक्षणादि'त्यन्ये । न च श्तिप्यादेशापत्तिः' इति ग. पाठः ।

2 'जानातिपिबतिभ्यां यङ्लुकि सत्त्वे, तदन्ताद्वा शतृसत्त्वे न मानम् । एवञ्च साहचर्याश्रयणेन गुरुभूतबहुव्रीह्याश्रयणापेक्षया, कर्मधारयो लघुरित्याहुः' इति ग. पाठः ।

'स्वञ्जेरुपसङ्ख्यानमि'ति वार्त्तिकात्। 'परिषस्वजे'। विशीर्णतायामिति। 'विशरणे' इत्यर्थः। शातनं हि तदनुकूलो व्यापारः। शदेरेव णिचि, 'शदेरगतावि'ति तत्वे, इदं रूपम्। तथा च तेन केवलस्याऽर्थकथनम् असङ्गतं स्यादत आह—शातनन्त्विति। विषयतयेति। विषयताऽत्र जनकतारूपा। तथा[1] च तज्जन्यं विशरणमर्थ इति भावः[2]।

शदेः शितः। शदेः सार्वधातुकोत्पत्तेः पूर्वं शितोऽसम्भवात्, 'शित' इत्यस्य शिद्विषये लक्षणा। तदाह—शिद्भाविन इति। शिद्विशिष्टे लक्षणायान्तु शितः शबादेः सार्वधातुकाऽऽश्रयत्वेन, पूर्वं परस्मैपदे जाते, 'भुक्तवन्तमि'ति न्यायेनाऽस्य सूत्रस्य वैयर्थ्याऽऽपत्तिरिति भावः। कुच सम्पर्चने इति। 'कुच शब्दे' इति पठितस्यैव पुनरिह पाठ एष्वर्थेष्वेव ज्वलादिकार्योऽर्थ इत्याहुः। बोधितेति। अनिट्कारिकासु 'बुध्यती'ति श्यना निर्देशादिति भावः। वृदिति। वृतेः कर्तरि। क्विप्। 'ज्वलितिकसन्तेभ्य' इतिसूत्रादत्र वृत्करणमनार्षम्। अन्यथा 'ज्वलादिभ्यो ण' इत्येव सूत्रयेदि'ति केचित्। अचीति। अस्य 'अञ्चयादि'ति रूपम्।

मेधृ सं। गृहैः = दारैः, मेधन्ते = सङ्गच्छन्ते 'गृहमेधिनः'। पूर्वोत्तरेति। दैवादिकैर्नित्यात्मनेपदिभिश्च साहचर्यात्तथाभूतस्यैव ग्रहणादिति भावः[3]।

---

१ 'तथा च तद्विषयभूतं विशरणमर्थः। एतद्धातुजन्यत्वेन प्रत्यासत्तेः शातनस्यैव निर्देशः कृतः' ग. पाठः।

२ इतोऽग्रे—'केचित्तु 'विषयतया = प्रसिद्धयेत्यर्थः। एतद्धातुजन्यत्वेन प्रसिद्धेः शातनस्यैव निर्देशः कृतः। 'गम्लृ गतौ' 'डुपचष् पाके' इतिवदित्याहुः। अन्ये तु 'अस्मादेव निर्देशात्स्वार्थे णिचं, निवृत्तप्रेषणात्प्राकृतेर्थेऽवा णिच-माहुः' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

३ इतोऽग्रे—'यत्तु 'अकर्मकैः साहचर्यादि'ति माधवः। तन्न। 'क्रमादमुं नारद इत्यबोधी'त्यादौ सकर्मकादपि चिण्दर्शनात्' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

निशामनम्–चाक्षुषं ज्ञानम् । अबुदिति । न च 'इरः प्रत्येकमित्त्वमि'ति पक्षे इदित्त्वान्नलोपाऽनापत्तिः । 'अनिदितामि'त्यत्र कर्मधारयेण 'इत्सञ्ज्ञेकारान्तभिन्नानामि'त्यर्थान्न दोषः । इरितो दृशेः क्सस्य निषेधकेन 'न दृश' इत्यनेनाऽन्त्येदित एवेदित्कार्यज्ञापनाच्च । अन्यथा नुमि इगुपधत्वाऽभावात्, क्सप्राप्तिरेव नेति, किं तन्निषेधेनेति प्राहुः । न च समुदायेत्त्वपक्षे 'रुन्धे' इत्यादौ 'स्वरितेत' इत्यात्मनेपदाऽनापत्तिः, समुदायस्य कार्याऽऽरम्भकत्वेऽवयवानां पृथक् तदनारम्भकत्वात् , अत एवाऽत्र पक्षे न नुमिति वाच्यम् । स्वरितत्वप्रतिज्ञासामर्थ्येनाऽवयवगतस्य तस्य समुदाये आरोपात्सिद्धेः । वादित्रग्रहणे(ष्वि)ति । 'वादनार्थं तद्ग्रहणे' इत्यर्थः ।

ये विभाषा । अत्र 'ये' इति विषयसप्तमी । अन्यथा 'जायते स्वयमेवे'त्यत्र 'अचः कर्तृयकी'ति स्वरो न स्यात् । तत्र हि 'स्तीर्यते' इत्यादिसिद्धये 'तास्यनुदात्तेदि'त्यत 'उपदेशे' इत्यनुवर्त्त्य, 'उपदेशेऽजन्त' इतिव्याख्यानस्याऽऽवश्यकत्वेन, परसप्तम्यां स न स्यादिति स्पष्टम् 'अचः कर्तृयकी'ति सूत्रे भाष्ये । एवञ्चाऽत्र सूत्रे 'अङ्गस्ये'त्यस्याऽसम्बन्धः, भाविबुद्ध्याश्रयणं वा ।

नान्तोपीति । 'उत माता महिषमन्ववेनदि'त्यत्र वेदभाष्यकारैस्तथोक्तत्वादिति भावः । स्पश । 'अस्माद्यङन्तादचि संज्ञापूर्वकत्वेनाऽनित्यत्वादभ्यासदीर्घाऽभावे, टापि 'पस्पशा' बोध्ये'ति माधवः । 'सर्वेतरतन्त्रसिद्धान्तबाधको विचारः पस्पशे'त्याहुः । 'पृषोदरादित्वाद्ध्रस्व' इत्यन्ये । 'उभयतः स्पाशे'त्यप्यस्यैव ।

ऊदुपधायाः । 'उपधा'ग्रहणमुत्तराऽर्थम् । प्रकृते तु 'ओः सुपी'त्यत 'ओरि'त्यनुवृत्त्याऽपि सिद्धम् । 'गोह' इति विषयाऽर्थम् । तदाह—गुणहेताविति । तेन 'जुगुहतुरि'ति सिद्धम् । अघुक्षदिति । एतदर्थमेव 'शल' इति सूत्रे 'अनिट' इतिच्लेर्विशेषणं व्याख्यातम् । धातुविशेषणे तु धातोः

'संस्तीर्यते' इति ग. पाठः । 'स्तर्यते' इत्यपि क्वचित्पाठः ।

सेट्त्वात् क्सो न स्यादेव। पाक्षिकेडभावमादायाऽनिट्त्वे तु नित्यमेव स्यात्। दन्त्ये तङीति। वर्णग्रहणात्, 'यस्मिन्विधिरि'ति न्यायाच्च दन्त्यादौ तङीत्यर्थः। अन्तलोप इति। अत एव 'अघुक्षातामि'त्यादौ 'आतो ङित' इति इयादेशो न।

ऋद्धनोः। 'एकाच' इति निषेधे प्राप्ते इदम्।

रिङ् श। 'अयङ् यी'त्यतो 'यी'ति, 'अकृत्सार्वे'ति सूत्रं चाऽनुवृत्तं लिङ एव विशेषणम्। शेऽसम्भवात्। यकि वैयर्थ्यात्। तदाह—यादाविति। इगागमेन सिद्धे रेफोच्चारणफलं, निर्दिश्यमानपरिभाषया सिद्धे ङकारोच्चारणे च फलं 'रीङृत' इति सूत्रे तद्धिते निरूपितम्।

उश्च। 'इको झलि'त्यतो झल्ग्रहणं,'लिङ्सिचावि'तिसूत्रं चाऽनुवर्त्तते। तदाह— ऋवर्णादित्यादि।

ह्रस्वादङ्गा। 'अङ्ग'ग्रहणादङ्गसञ्ज्ञानिमित्तस्य लोप इत्यर्थः। स च पूर्वाऽपरसाहचर्यात्सिजेव। तदाह-सिच इति। तेन 'अस्तम्''द्विष्टमामि'-त्यादौ न। न च 'ह्रस्वात्सिच' इत्येवाऽस्तु। 'अलाविष्टामि'त्यादौ लोपाऽऽपत्तेः। न चाऽऽगमे कृते तत्सहिते एव प्रत्ययत्वादिवत्सिच्त्वमपि विशिष्टे एव, स्वाऽवयवेन च पौर्वापर्याऽभाव इति वाच्यम्। एवं तर्हि पदलाघवाऽभावेन विशेषाऽभावात्तथा नोक्तमिति बोध्यम्।

प्रापणमित्यादि। 'भारं ग्रामं हरति','अंशं हरति स्वीयम्' 'परस्य स्वर्णं हरति', पापं हरती'ति क्रमेणोदाहरणानि।

'लिटि धातोरि'त्यतोऽनुवृत्तं 'धातोरि'ति एचा विशेष्यते। तदाह— उपदेशे एजन्तस्येति[1]।

---

[1] इतोऽग्रे—'ननु 'धातो'रिति व्यर्थम्। न च 'एजन्तधातोरि'त्यर्थसम्पादकत्वेन 'ढौकिते'त्येतद्व्यावृत्त्यर्थम्; एजुपदेशसामर्थ्यात्, समुदायोपदेशायाऽवयवानां नान्तरीयकतयोच्चारणेन, तदुपदेशाऽभावाच्चेति चेन्न। 'डो'प्रत्ययोपदेशात् उपदेशे एचः सत्त्वेन 'गोभ्यामि'त्येतद्व्यावृत्त्यर्थत्वात्। ओकारोच्चारणन्तु

परे तु 'उपदेशे' इति षष्ठ्यर्थे सप्तमी। तस्य च 'एच'इति विशेषणम्। तेन 'एजन्तस्योपदिश्यमानस्ये'त्यर्थः। 'गोह्यच'इत्यादिस्त्वनुवादो, नोपदेश इति, स्पष्टं ष्यङ्विधायकभाष्ये। 'उद्देशश्च प्रातिपदिकानां नोपदेश' इति प्रकृतसूत्रे भाष्येऽप्युक्तम्।

'धातोरि'त्यनुवृत्तौ 'उदीचां माङ'इत्यादावात्त्वानापत्तिः। अनुबन्धलोपोत्तरं तद्विनिर्मुक्तस्यैव धातुताया 'न धातुलोप' इतिसूत्रे भाष्ये स्पष्टमुक्तत्वात्।

किञ्च तत्सत्त्वे धातुसंज्ञायां, ङान्तस्य धातुत्वेऽपि, एजन्तस्य धातुत्वाऽभावः। न च तत्सत्त्वेऽपि तत्प्राग्भागस्यैव धातुत्वमिति न दोषः। एवं हि ङकारसत्त्वेऽपि धातोरेजन्तत्वाऽनपायेन, आत्त्वे बाधकाऽभावात्, अस्य निर्देशस्य नानुबन्धकृतमनेजन्तत्वमि'त्यर्थज्ञापकता,भाष्योक्ताऽसङ्गता स्यात्। धातोरुपदेशे एजन्तत्वाऽनपायात्। तस्मादुक्त एवाऽर्थो भाष्यसंमतो युक्तः। 'गोभ्यामि'त्येतद्व्यावृत्तिरेव 'उपदेश'ग्रहणफलम्। उणादीनामव्युत्पन्नत्वाच्च 'डो'इत्यादीनामुपदिश्यमानैजन्तत्वमस्तीति न वाच्यम्।

---

सर्वनामस्थानविषये 'गोतो णिदि'त्यस्य, तन्निमित्तकवृद्धेश्च परत्वात्प्रवृत्तौ चरितार्थम्। न च 'उपदेशे' इत्यस्य एजन्तविशेषणत्वादत्र न दोषः। 'धातोरि'त्यस्याऽभावे तदलाभात्। न च 'उपदेशे'इति षष्ठ्यर्थे सप्तमी। तस्य च 'एच' इति विशेषणम्, तेन 'एजन्तस्य उपदिश्यमानस्ये'त्यर्थान्न दोष इति वाच्यम्। मानाऽभावात्[1]। व्यपदेशिवद्भावेन तत्त्वाच्च। 'गोह्यच' इत्यादिस्त्वनुवादो, नोपदेश इति, स्पष्टं ष्यङ्विधायकभाष्ये। 'उद्देशश्च प्रातिपदिकानां नोपदेश' इतिप्रकृतसूत्रे भाष्येऽप्युक्तम्। उणादीनामव्युत्पन्नत्वपक्षे तु न[2] तत्फलम्' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

1 'उपदेशे' इत्यस्य कारकविभक्तिताया न्याय्यत्वाच्च। यत्तु 'गोह्यच' इत्यादौ समुदायस्याप्युपदेशोऽस्ती'ति। तन्न। तस्याऽनुवाद्यत्वात्। अज्ञातज्ञाप्यत्वाऽभावेनोपदेशत्वाऽभावात्। स्पष्टं चेदम्' इति ग. पाठः।

2 'तत्फलं चिन्त्यम्' इति ग. पाठः।

एवञ्चोपदेशग्रहणस्य वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाऽप्रवृत्त्यादि-ज्ञापकताऽपि चिन्त्या। एतदेवाऽभिप्रेत्य 'गोभ्यामि'त्याद्यर्थं धातुग्रहणाऽनुवृत्तिमुक्त्वा, 'अथाऽपि निवृत्तं तदि'त्युक्तम्। 'उपदिश्यमानस्य एजन्तस्ये'त्यर्थे मेङादौ ङकारसत्त्वे, तस्य एजन्तत्वाऽभावः। परस्य ङस्य सत्त्वेन तत्त्वाऽभावात्। अतस्तस्य 'नानुऽबन्धकृतमनेजन्तत्वमि'त्यर्थ-ज्ञापकता सुस्था। अनुबन्धलोपे तु एजन्तत्वसत्त्वेन, धातुसंज्ञादिकार्योऽर्थं तावतोऽप्युपदेशे तात्पर्याच्चोपदेशविषयैजन्तत्वसत्त्वेन भवत्येवाऽऽत्त्वम्।

एतदेवाऽभिप्रेत्य 'घु'सञ्ज्ञासूत्रे 'अवादातं मुखमि'त्यत्र 'पलोपोत्तर-मात्त्वे कृते प्राप्ताया घुसञ्ज्ञाया 'अदाप्'इति निषेधो न स्यात्। दैपः पकार-सत्त्वेऽनेजन्तत्वादात्त्वाऽप्राप्त्याऽस्याऽतिदेशेनाऽपि दाप्त्वाऽभावादि'-त्याशङ्क्य, 'नाऽनुबन्धकृतमनेजन्तत्वमि'ति समाहितम्। त्वद्रीत्या तत्परिभाषां विना आत्त्वस्याऽप्यप्राप्त्या, घुत्वप्राप्तिरेव नेति, निषेधाऽप्राप्तिशङ्का निर्दलैव स्यादित्याहुः।

उप[1]देशे किम्?। 'चेता'। 'यद्यप्ययं लाक्षणिकः, तथापि वर्णग्रहणे प्रतिपदोक्तपरिभाषाऽप्रवृत्तिज्ञापनार्थमिदमि'ति न[2]व्याः। अन्ये तु 'लक्षण-प्रतिपदोक्तपरिभाषाया अनित्यत्वमात्रमनेन ज्ञाप्यते। ध्वनितं चेदम् ओत्सूत्रादौ भा[3]ष्ये। एजन्तेभ्य आचारक्विप्तु अनभिधानान्नेती'त्या[4]हुः।

---

१ 'उपदेशे किम्' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. ग. ङ. पाठः। क. कुण्डलितः। मनोरमादिस्थत्वात्।

२ इतोग्रे—'अत एव 'क्षापयती'त्यादावादन्तलक्षणपुक् सिद्धिः। एतेन 'प्राधा-न्येन वर्णग्रहणे एवाऽस्या अभावो ज्ञाप्यते' इत्यपास्तम्। प्रकृते उपदेश-ग्रहणवैयर्थ्याऽनुद्धाराच्च। 'सर्वत्र विभाषा गोरि'त्यादौ तु गतिरुक्तैवेति दिक्' इति ग. पाठः।

३ 'भाष्ये इत्याहुः' इति ग. पाठः।

४ 'नेति बोध्यम्' इति ग. पाठः।

ननु शितीति । 'शिती'ति कर्मधारयात्सप्तमी । धात्वाक्षिप्तप्रत्ययस्य तेन विशेषणात्तदादिविधौ 'इत्सञ्ज्ञकशकारादावि'त्यर्थः । तेन 'जग्ले' इति सिद्धम् ।

प्रसज्यप्रतिषेधो[1], विषयसप्तमी च । तेन 'ग्लायती'त्यादौ शबाद्युत्पत्तेः प्रागपि नाऽऽत्त्वम् । पर्युदासे परसप्तम्यान्तु 'सुग्लः''सुग्ला''सुग्लान' इत्येतेषु आकारान्तलक्षणाः का-ऽङ्-युचो न स्युः । प्रत्ययनिमित्तं हि आत्त्वम्, आदन्ताच्चैते प्रत्यया इत्यन्योन्याश्रयात् । पूर्वमनिष्टे प्रत्यये कृते आत्त्वे तु परदेशस्याऽवष्टब्धत्वात् एषामप्राप्तावनिष्टं स्पष्टमेव । अत एव आदन्तलक्षण'क'बाधनाऽर्थं 'ह्वावामश्चे'त्यण्विधानं चरितार्थम् । तथा 'जग्ले' इत्यत्र 'द्विर्वचनेऽची'त्यभ्यासे इकारश्रवणाऽऽपत्तिः ।

किञ्च पर्युदासे 'इत्सञ्ज्ञकशकारादिभिन्ने' इत्यर्थाऽलाभे 'जग्ले' इत्यसिद्धिरेव । कर्मधारयेऽप्येकदेशस्य धात्वाक्षिप्ते विशेषणत्वाऽयोगात् । एतेन 'पर्युदासे, विषयसप्तम्यां न दोष' इत्यपास्तमित्याहुः ।

अन्ये[3] तु 'शिती'ति बहुव्रीहिः । 'अशिती'ति पर्युदासः[2][4], परसप्तमी च । 'सुग्ल' इत्यादौ तु न दोषः ।

'आत्त्वभाविन एजन्तादाकारान्तनिमित्तकः ।
प्रत्ययो ज्ञाप्यते सर्वो ह्वावामश्चेत्यणा पुनः' ॥

—इति कैयटोक्तेः । 'जग्ले' इत्यत्राऽपि न दोषः[5] । 'लिटि वयो य' इत्यतो

---

१　'प्रसज्यप्रतिषेधश्चायं, विषयसप्तमी च' इति ग. पाठः ।

२　'पर्युदासाद्धि' इति ग. पाठः ।

३　'अन्ये तु' इत्यारभ्य 'ज्याथ इति बोध्यम्' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः ।

४　ग. पुस्तके तु एतत्समानार्थो, भिन्नानुपूर्वीकः पाठः प्रायेण दृश्यतेऽत्र 'केचित्त्वि'त्यादिना ।

५　इतोऽग्रे—'वतिघटिताऽनित्यत्वादेतद्विषये 'द्विर्वचनेऽची'त्यस्याऽप्रवृत्तिरिति 'जग्ले' इत्यादिसिद्धिः' इति ग. पाठः ।

द्विलकारसहित'लिटी'त्यनुवृत्तेर्लावस्थलिट्यपि तद्विधानात् । 'मीनात्या'दि-सूत्रेऽप्येच इत्यनुवर्त्त्य 'एजन्तानामेषां ल्यपि, अशिति च परत एत्त्व-मि'त्यर्थः । 'ओकारान्तानामेजन्ताः प्रकृतयः, एजन्तानामपि इकारान्ता' इति घुसञ्ज्ञासूत्रभाष्योक्तेः[1] । न चाऽत्र[2] वार्त्तिकमते 'प्रणिदीयते' 'प्रणिदीन' इत्यादौ नित्यणत्वाऽनापत्तिः,'दी'त्यस्य घुप्रकृतित्वाऽभावादिति वाच्यम्[3] । एषामनभिधानात् । अत एव भाष्यवार्त्तिकपक्षयोर्न फलभेदः । अत एव वार्त्तिककृता 'प्रकृतिग्रहणं शिदर्थमि'त्येव घुसञ्ज्ञासूत्रे उक्तम । भाष्यकृता[4] णत्वविधौ प्रकृतिग्रहणेन प्रत्याख्यातम्[5] ।

यद्वा[6] 'एज्विषये आत्त्वमि'ति भाष्यपक्षे नित्यं णत्वं भवतीति, तदेक-वाक्यतया पक्षान्तरेऽपि 'शेषे विभाषे'त्यत्र व्यवस्थितविभाषाऽऽश्रयणेन नित्यं णत्वं साध्यमित्याहुः । बहुप्रतिविधेयत्वात्पर्युदासस्य, कर्मधारयः, प्रसज्यप्रतिषेध, इत्येतदेव ज्याय इति बोध्यम् ।

आतो लोपः । 'दीङो युडि'त्यतः 'अचि क्ङिती'ति वर्त्तते । तदाह— अजाद्योरिति । 'इट्' आगम एव । अन्याऽसम्भवात् । 'जग्मे' इत्यादौ तु अजादिक्ङित्त्वादेव सिद्धम् । इट आर्द्धधातुकत्वं तदवयवत्वाद्बोध्यम्[7] । आर्द्धधातुकयोः किम् ? । 'यान्ति' । 'व्यत्यरे' । रातेः कर्मव्यतिहारे

१ इतोऽग्रे–'तदुक्तं घुसंज्ञासूत्रे भाष्ये–'आकारान्तानाम्' इति ग. पाठः ।

२ 'न चाऽत्र पक्षे' ग. पाठः ।

३ 'इष्टापत्तेः । एज्विषये आत्त्वमिति पक्षेऽपि एज्विषयविशिष्टैकारान्तस्यैव प्रकृतित्वं, न त्वतस्येति ? न तत्प्राप्तिः । अत एव वार्त्तिककृता' इति ग.पाठः ।

४ 'भाष्यकृता च' इति ग. पाठः ।

५ 'प्रत्याख्यातमित्यन्यत्' इति ग. पाठः ।

६ इतोग्रे—'न चैवं प्रणिदीयते'इत्यत्र णत्वं न स्यात् , एतस्य घुप्रकृतित्वा-ऽभावादिति वाच्यम्। 'दा' इत्यत्र तत्प्रवृत्तावेकदेशविकृतन्यायेन दीइत्यत्रापि तदङ्गीकारात्'इति ग. पाठः ।

७ 'इट्शब्देन आगम एव गृह्यते इत्याहुः' इति ग. पाठः ।

तङि, लङुत्तमैकवचनम् इट् ।

अजाद्योः किम् ? । 'ग्लायते' । 'दासीय' । इटः सीयुट् । 'क्ङिती'ति च इटो न विशेषणम्, इट्ग्रहणसामर्थ्यात् ।

दोरूपा इति । यद्यपि लाक्षणिकत्वात्[1] दो-देङ्-धेटां कृताऽऽत्त्वानां न प्राप्नोति, तथापि 'गामादाग्रहणेष्वविशेष' इति परिभाषया न दोषः[2] । अस्यां च दैपः पित्त्वं ज्ञापकम्[3] । तच्च 'अदाब्वि'ति निषेधेऽस्यापि ग्रहणाय । धारूपा इति । प्रयोगाऽभिप्रायेण बहुवचनम्[4] । 'प्रनिदारयति', 'प्रनिधारयती'त्यादौ तु न दोषः । अनर्थकत्वात् । अनर्थकत्वेनैव 'घु'निरूपितोपसर्गत्वाऽभावाच्च । दापयत्यादौ 'यदागमा' इतिन्यायेन न दोषः । रेफस्तु आकाराऽऽगमो, न 'दा' इत्यस्य । दासाहचर्यात् धाग्रहणेन धेटोऽपि ग्रहणम् । 'दो दद्धोरि'त्यत्र दधातेर्हिविधानसत्त्वात् । धेट्निवृत्त्यर्थं 'दा'ग्रहणेन तस्याऽपि घुत्वज्ञापनाच्च ।

एर्लिङि । 'घुमास्थे'त्यादि वर्त्तते । 'क्ङिती'ति च ।

विभाषा धेट् । 'णिश्री'त्यतः 'कर्त्तरी'त्यनुवर्त्तते ।

विभाषा घ्रा । 'गातिस्थे'त्यतः 'सिचः परस्मैपदेष्वि'ति, 'लुगि'ति चाऽनुवर्त्तते ।

यमरम । अनयोः सगिट्-विधानम् 'अयंसीदि'त्यत्र 'नेटी'ति-वृद्धिनिषेधायेति बोध्यम् । 'अयंसिष्टामि'त्याद्यर्थं च । अधासीदिति । अत्र धातोः सकि, सिच इटि, तस्य सिचश्चित्त्वसामर्थ्यादुदात्तत्वे, एकादेशे, उदात्त ईकारः सिद्ध्यति । अन्यथा ईडनुदात्त एव स्यात् । द्विवचनादौ च स्पष्टमेव फलम् । तदाह—अधासिष्टामिति ।

१ इतोऽग्रे—'लुग्विकरणदाधोरभावाल्लुग्विकरणाऽलुग्विकरणपरिभाषाया न विषयः । यद्यपि लाक्षणिकत्वात्' इति ग. पाठः ।

२ इतोग्रे—'दा' इति 'धा' इत्यस्याप्युपलक्षणम्' इति ग. पाठः ।

३ 'सामान्यापेक्षं ज्ञापकमिति बोध्यम्' इति ग. पाठः ।

४ इतोऽग्रे 'अर्थवत्परिभाषा तु प्रवर्त्तत एव । तेन प्रणिधारयतीत्यादौ' इति ग. पाठः ।

वाऽन्यस्य। अन्यस्येति किम्?। अन्यथा स्थाधातौ परत्वादयमेव विकल्पः स्यात्। किति लिङीति। यद्यपि 'क्ङिती'त्यनुवर्त्तते, तथापि 'आर्द्धधातुके'इत्यनुवृत्त्या विधिलिङि अप्रवृत्तेर्क्ङितीत्यनुवृत्तौ फलाऽभाव इत्याशयः। घुमेति। अत्र व्याख्यानमेव शरणम्। विभाषा घ्रेति। दैवादिकशाच्छासाहचर्यादिति भावः। एवं 'शाच्छासे'ति युग्विधावपि बोध्यम्।

पिबादेश इति। अस्य आद्युदात्तत्वं निपात्यते इति स्पष्टं 'धातोरि'ति सूत्रे भाष्ये।

ऋतश्च। तपरकरणं स्पष्टाऽर्थम्। 'अकारविधानेनैव सिद्धे, गुणग्रहणं चिन्त्यप्रयोजनमि'ति कश्चित्। तन्न। 'तितीर्वानि'त्यादौ 'ऋच्छत्यृतामि'त्यस्य निषेधाय, तस्य इग्लक्षणताया आवश्यकत्वात्। तत्र हि क्वसोः कित्त्वसामर्थ्यान्निषेधविषयगुणस्याऽपि 'क्ङिति चे'ति निषेध इति स्पष्टमाकरे। 'गुणोर्त्तिसंयोगाद्योरि'त्युत्तरमेव 'लिटि चे'ति तु नोक्तम्। एवञ्च 'आरतुरि'त्येतत्सिद्ध्यर्थं 'ऋच्छत्यृतामि'त्यत्र ऋकारप्रश्लेषोऽपि न कार्य इति लाघवम्।

उपधावृद्धिरिति। न च परत्वाद्गुणे 'जाग्रो वी'ति गुणविधानेन उपधावृद्ध्यभावस्य ज्ञापनाद्दोष इति वाच्यम्। 'जागृ'धातौ गुणोत्तरं वृद्ध्यभावस्य बोधनेऽपि, सार्वत्रिकत्वे मानाऽभावात्। अत एव 'कृ'धात्वादौ भावकर्मणोः परत्वाद्गुणे, उपदेशग्रहणाच्चिण्वद्भावे 'कारिष्यते' इत्यादावुपधावृद्धिः। अत एव स्यसिच्सूत्रे 'उपदेश'ग्रहणं चरितोऽर्थम्।

---

१ इतोग्रे—'तत्र 'नित्य'ग्रहणाऽनुवृत्त्या, संचस्करतुरि'त्याद्यसिद्ध्यापत्तेः' इति ग. पाठः।

२ इतोऽग्रे—'एवञ्च 'ऋतो ल्लिटि गुणाद्वृद्धिः पूर्वविप्रतिषेधेने'ति वार्त्तिकं निष्फलमिति बोध्यम्। न च पूर्वविप्रतिषेधाऽभावे परत्वाद्गुणे, 'सकृद्गतावि'तिन्यायाद्वृद्धिर्दुर्लभेति वाच्यम्। गुणप्रवृत्तेः पूर्वम् 'अत उपधाया' इत्यस्य अप्रवृत्त्या, उक्तन्यायस्योक्तिसम्भवाऽभावात्। स्पष्टं चेदं कैयटे' इति ख. ग. ङ. पाठः।

गुणोर्त्ति । 'अर्त्ती'ति भ्वादि-ह्वाद्योः सामान्यग्रहणम् । विकरणस्तु न । श्तिपि तस्य न्यायप्राप्तत्वाऽभावात् । 'अयङ्यी'त्यतो 'यी' त्यनुवर्त्तते। तच्च लिङो विशेषणम्। तेनेह न–'संस्वृषीष्ट' । 'श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थ' इति माधवादयः ।

श्युकः किति । एकाच उगन्तादिति । एकाचः किम् ? । 'जागरितः' । गिदिति । चर्त्त्वेनाऽसौ प्रश्लिष्यते । तेन 'भूष्णुरि'ति सिद्धम् । 'स्नु'प्रत्ययो हि 'गिदि'त्युक्तम् । पुरस्तादिति । अत एव 'सनीवन्ते'तिसूत्रे 'स्वृ'ग्रहणं चरिताऽर्थम् । परत्वादिति । 'स्वरती'ति विकल्पस्तु 'मध्येऽपवाद'न्यायात् नाऽस्य बाधक इति भावः ।

ऋच्छत्यृताम् । ऋधातोरिति । बहुवचननिर्देशात् ऋकारोऽपि प्रश्लिष्यत इति भावः । ऋवर्णान्तधातुमात्रस्य तु न ग्रहणम् । 'ऋतश्च संयोगादेरि'त्यस्य वैयर्थ्याऽऽपत्तेः । इदं च 'इजादेरि'तिसूत्रे भाष्ये स्पष्टम् । ऋकारप्रश्लेषाऽभावे तु 'ऋ अतुसि'ति स्थिते 'द्विर्वचनेऽची'त्यनेन यणि

१ 'श्तिपि तस्य ज्ञापकसिद्धत्वेनाऽनित्यत्वात्' इति ख. ग. ङ. पाठः ।

२ इतोऽग्रे—'न च, गुणे, रपरत्वे च अनुगन्तत्वात्, 'अकृतव्यूह'परिभाषया निषेधाऽप्राप्तिरिति वाच्यम् । 'उपदेशे' इत्यस्याऽप्यनुवर्त्तनात् । अत एव 'तिस्तीर्षता'त्यादावकृतव्यूहपरिभाषया 'सनि ग्रहे'ति निषेधो [1]ने'त्यपास्तम् । अत एव 'श्वीदित' इति सूत्रे 'श्वि'ग्रहणं चरितार्थम् । अन्यथा सम्प्रसारणे, उगन्तत्वादेव निषेधे सिद्धे, तद्वैयर्थ्यं स्पष्टमेव । स्पष्टं चेदं 'श्वीदित' इति सूत्रे भाष्यकैयटयोः । 'एकाच' इति सूत्रस्थभाष्यन्तु पूर्वपक्षस्थत्वात् प्रौढिवादः' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

1 इतोऽग्रे—'अतः 'स्तीर्णमि'त्यत्र 'यस्य विभाषे'ति निषेधः । अन्यथा 'इट् सनि वे'त्यनेन 'वृतो वे'त्यधिकारात् ऋकारान्तत्वोपाधेरेव विकल्पेन, इत्वे कृते तदुपाधेरभावेन स न स्यात् । 'यदुपाधेर्विभाषा तदुपाधेरेव निषेध' इति तत्र सिद्धान्तात्' इति ग. पाठः ।

निषिद्धे, द्वित्वे, आ सप्तमसमाप्ति अङ्गाऽधिकारेण उरदत्त्वस्य बहिरङ्गतया, अन्तरङ्गत्वात्सवर्णदीर्घे, परादित्वाद्धातुत्वे, ॠदन्तलक्षणे गुणे, 'अरतुरि'ति प्राप्नोति। पूर्वाऽन्तवत्त्वेनाऽभ्यासत्वे तु उरदत्त्वे, हलादिःशेषे, 'अत आदेरि'ति दीर्घत्वे, आतो लोपे 'अतुरि'ति स्यात्। न च वार्णादाङ्गन्यायेन दीर्घं बाधित्वा उरदत्त्वे, रपरत्वे, अभ्यासलोपे, 'अत आदेरि'ति दीर्घत्वे, उत्तरखण्डे यणि, 'आरतुरि'त्यस्य सिद्धेर्व्यर्थः प्रश्लेष इति वाच्यम्। दीर्घोत्तरं परत्वेन आद्गुणे 'अर्तुरि'त्यस्याऽऽपत्तेः। न च यणादेशस्याऽपि प्राप्तत्वेनाऽकृतव्यूहपरिभाषया गुणो न। 'अचः परस्मिन्नि'ति स्थानिवत्त्वं तु न, पूर्वस्यैव विधेरभावादिति वाच्यम्। ईदृशे विषये तत्परिभाषाऽप्रवृत्तेः। अत एव लघूपधगुणप्राप्तिसत्त्वेऽपि, 'रियती'त्यादावियङादिसिद्धिः। प्रश्लेषे तु तत्सामर्थ्यात्पूर्वं गुणे, द्वित्वमिति न दोषः।

इडत्यर्त्ति। ननु इट्ग्रहणं व्यर्थम्। न च विकल्पनिवृत्त्यर्थम्। भारद्वाजनियमेन अत्ति-व्ययत्योर्विकल्पस्य सिद्धत्वे, तद्ग्रहणसामर्थ्यादेव तन्निवृत्तिसिद्धेः। न च निषेधनिवृत्त्यर्थम्। अर्त्तिग्रहणसामर्थ्येनैव तन्निवृत्तेरिति चेन्न। स्पष्टाऽर्थत्वात्। 'अर्त्ती'त्युभयोर्ग्रहणम्, पूर्वोत्तरसाहचर्यादिति दिक्।[1]

गृ घृ। अत्र घृधातोर्घृत-घर्म-घृणाभ्योऽन्यत्र न प्रयोग इति 'तृन्वदि'ति सूत्रे भाष्ये स्पष्टम्। अनयैव रीत्या प्रयोगाऽनुसारादन्येषामप्यूह्यम्। अन्तरङ्गत्वादुवङिति। एवं श्रयतावन्तरङ्गत्वादियङिति बोध्यम्।

श्रुवः शृ च। न च 'श्रु'धातुः स्वादावेव पाठ्य इति वाच्यम्। यङ्लुगर्थत्वात्। तेन यङ्लुकि 'श्रृणोती'त्येवे'त्याहुः। तन्न। 'शबादेशाः श्नादय' इति भाष्योक्तपक्षाऽन्तरे स्थानिवद्भावेन शप्त्वात्तस्य लुकि, संनियोगशिष्टन्यायेन आदेशनिवृत्तावुक्तरूपस्य दुर्लभत्वात्। तस्मात्पक्षान्तरेऽपि

1 इतोऽग्रे—'इडेवे'ति नियमाऽर्थत्वात्। तेन जौहोत्याद्यर्त्तेरपि नित्यमिट्। एतत्सामर्थ्याच्चाऽर्त्तीत्युभयोर्ग्रहणम्' इति ग. पाठः।

साहचर्येण एषां यङ्लुकि अप्रवृत्तिरेव स्वीकर्त्तुमुचिता। स्वादावपाठस्तु गणकार्योऽनित्यत्वबोधनार्थैवेति दिक्।

हुश्नुवोः। 'एरनेकाच' इत्यतः 'असंयोगपूर्वस्ये'त्यनुवृत्तम् 'ओः सुपी'त्यतोऽनुवृत्तस्य 'ओरि'त्यस्य विशेषणम्, नतु प्रत्ययस्य। तेन 'आप्नुवन्ती'त्यत्र यण्न। तदाह—'असंयोगे'त्यादि।

'अचि श्नु' इत्यतः 'अची'त्यनुवर्त्तते। तदाह—अजादाविति। ननु 'हुश्नुवोरि'ति व्यर्थम्। 'अयुवन्नि'त्यादावडागमस्य आभीयतयाऽसिद्धत्वादेव यणभावसिद्धेः। 'लावस्थायामडागम' इति पक्षेऽपि तत्स्थान्याश्रयस्याऽपि तत्समानाऽऽश्रयत्वेन असिद्धत्वं बोध्यम्। तत्प्रत्याख्याने तु 'एरनेकाचोऽसंयोगपूर्वस्ये'त्यत्र 'अनेकाच' इतियोगं विभज्य, 'इणो यणि'त्यनुवर्त्त्य, योगविभागस्य इष्टसिध्यर्थतया, व्याख्यानेन च 'अडादिसहिताऽनेकाचश्चेद्यण् तर्हि इवर्णान्तेण एवे'ति नियमान्न दोषः[1]। 'द्वितीयन्तु 'एरसंयोगपूर्वस्ये'त्येतत्, 'अनेकाच' इत्यनुवर्त्तनेन विध्यर्थं बोध्यम्[2]। न च भानु-दानुशब्दाभ्यामाचारक्विपि 'भानवती'त्यादौ दोषः। परेण गुणेन बाधात्। अयं च मध्येऽपवादन्यायेन उवङ एवाऽपवादः। ( क्ङित्परत्वाऽभावाच्च[3] )। न च 'योयुवती'त्यादौ यङ्लुकि दोषः। तस्य च्छान्दसत्वेन प्रत्ययस्य आर्द्धधातुकत्वादेव यणभावसिद्धेरितिचेन्न। भाषायामपि कचिद्यङ्लुकसत्ताज्ञापनाऽर्थत्वात्। 'अनेकाच' इत्यनुवृत्तिरपि ज्ञापकतानिर्वाहाय। तेन हि 'युवन्ती'त्यादिव्यावृत्तौ सत्यां ज्ञापकता निर्वहति[4]। चान्द्रादयस्तु निःसङ्कोचं

---

१　इतोऽग्रे—'अत एव लावस्थायामडागमेऽपि 'अयुवन्नि'त्यादौ न दोषः। अत एव तत्पक्षे अध्यैयाताम्' 'अधीयन्' इत्यादौ न यण्। यदि तु तत्स्थान्याश्रयमपि तत्समानाश्रयं, तदाऽसिद्धत्वेनापि सिद्धम्'। इति ख. ग. ङ. पाठः।

२　'पदद्वयानुवर्त्तनेन विध्यर्थम्' इति ग. पाठः।

३　अयं ग. ङ. पाठः।

४　'निर्वहतीति दिक्' इति ग. पाठः।

यङ्लुको भाषाविषयत्वमिच्छन्ति । तत्तु पाणिनिसूत्र-भाष्यविरुद्धम् ।

असंयोगपूर्वेति किम् ? । 'अक्ष्णुवन्ति' ।

इङादेशस्यैवेति । स्थानिङित्त्वेनैव सिद्धे आदेशङकारस्याऽचरितार्थतया, प्रयोजनाऽऽकाङ्क्षत्वेन शीघ्रोपस्थितिकत्वात्, व्याख्यानाच्चेति भावः । स्पष्टं चेदं 'गाङ् लिटी'ति सूत्रे भाष्यकैयटयोः ।

फले तु न भेद इति । न च 'गा-अ-आते' इत्यत्र वार्णपरिभाषया सवर्णदीर्घं बाधित्वा 'आतो ङित' इतीयादेशः स्यादिति वाच्यम् । तस्याः स्थान्येकत्वे एव प्रवृत्तेरिति भावः । नेर्गदेतीति । नन्वत्र णत्वं दुर्लभम् । शिति 'मा'रूपाऽभावात् । किञ्चाऽशिति आत्त्वेऽपि, लाक्षणिकत्वाण्णत्वं दुर्लभम् । गा-मा-दाग्रहणेष्वविशेषे तु मीनात्यादीनामपि कृताऽऽत्त्वानां प्रसङ्ग इत्यत आह—तत्रेति । 'घुप्रकृतिमाङि'ति—त्रिपदो[2] द्वन्द्वः । प्रकृतिश्च प्रत्यासत्त्या पूर्वोत्तरयोरेव गृह्यते । ङकाराऽनुबन्धग्रहणान्मीनात्यादीनामग्रहणम् । अत एव 'प्रणिदयते' इत्यादौ णत्वसिद्धिः । एतच्च 'घु'संज्ञासूत्रे भाष्ये स्पष्टम्[3] ।

दिग्यादेशेनेति । दयतेर्लिटि, द्वित्व-दिग्यादेशयोः प्राप्तयोर्येन नाप्राप्तिन्यायेनाऽऽदेशेन द्वित्वशास्त्रं बाध्यते, 'सत्यपि सम्भवे बाधनं भवती'ति

---

१ इतोऽग्रे—'अत एव सूत्रेऽनुबन्धविशिष्टोच्चारणम् । न चाऽसन्दिग्धाऽन्याऽनुबन्धेनैवाऽन्यनिवृत्तिसिद्धौ 'गाङ् गतावि'त्यनेन सामान्यग्रहणाऽर्थं एवाऽयं ङकार इति वाच्यम् । तदभावेपि सामान्यग्रहणस्य 'गामादाग्रहणेष्वि'ति सिद्धत्वात् । तस्मात्सानुबन्धानुवादः प्रयोजनाकाङ्क्षङकारस्यैव ग्रहणाऽर्थः । एतेन 'कुटादिसाहचर्येण अनादेशगाङ एव ग्रहणमि'त्यपास्तम् । तन्मात्रस्य कुटादिपाठेनैव सिद्धेश्च' इति ग. पाठः ।

२ 'घुश्च, प्रकृतिश्च, माङ् चे'तिरीत्या त्रिपदो द्वन्द्व इत्यर्थः ।

३ इतोऽग्रे--'भाष्यानुरोधेन सूत्रमतेऽपि 'शेषे विभाषे'त्यत्र व्यवस्थितविभाषात्वमाश्रित्य लक्ष्याऽविरोधो बोध्य इत्याहुः' इति ग. पाठः ।

न्यायात् । अत एव यासुड्विषये सीयुट् न[1] । 'वृत्तिरि'त्युपलक्षणं भाष्यस्याऽपि । 'अस्तेर्भूरि'त्यादिभिस्तु न द्वित्वं बाध्यते । विषयसप्तम्याश्रयणेन लिङुत्पत्तेः पूर्वमेव तेषां प्रवृत्तेः । 'प्यायः पी' 'लिङ्यङोश्चे'त्यादावप्येवमेव । दिगौ तु परसप्तम्येवेष्यते । लक्ष्याऽनुरोधात् । तद्ध्वनयन्नाह—इष्यत इति ।

स्थाघ्वोरिच्च । इह 'आत्मनेपदेष्वि'ति नाऽनुवर्त्तितम् । परस्मैपदेषु 'गातिस्थे'ति सिचो लुकः सत्त्वेन, परिशेषात्तत्रैव प्रवृत्तेः । न[2] वा 'अधासीदि'त्यादौ दोषः । स्थासाहचर्येण घोरपि परस्मैपदेऽप्रवृत्तेरिति तत्त्वम्[3] ।

'एतदपेक्षयाऽनुवृत्तिरेव लघीयसी । तस्य स्वरितत्वप्रतिज्ञा तु 'उश्च' 'विभाषोपयमने' इत्याद्यर्थमावश्यकी'ति परे । इदिति । तपरत्वं व्यर्थम् । विधेयत्वात् । न च गुणनिवृत्त्यर्थम् । सिचः कित्त्वेनैव सिद्धेः ।

डीङ् । 'विहायसे'ति करणे तृतीया । आकाशेनेत्यर्थः ।

मान्वध । अभ्यासविकारः-'आभ्यासः' । स[4] च ह्रस्वमेव । व्याख्यानात् । तदाह—इकारस्येति । वस्तुतस्तद्धितनिर्देशो व्यर्थः । अभ्यास-

---

१ इतोऽग्रे—'तत्र सजातीयत्वाज्जातिपक्षाऽऽश्रयणाच्च द्वित्वशास्त्रस्यैव बाधाऽङ्गीकारात् । भ्रष्टावसरत्वादादेशेऽपि न द्वित्वमित्याहुः' इति ग. पाठः ।

२ 'न चाऽधासीदित्यादौ दोषः' इति ग. पाठः ।

३ इतोऽग्रे—'अत एवाऽभ्यर्हितत्वेन 'स्था'इत्यस्य पूर्वनिपातः' इति ग. पाठः ।

४ 'स च ह्रस्वमेव । दीर्घश्रुत्या 'अच' इत्युपस्थितम् । न च मानादीनामभ्यासविकारभूतोऽच् इकारादन्यः सम्भवति । यदि तु ह्रस्व एव गृह्येत, तर्हि तद्धितनिर्देशो व्यर्थः स्यात्[1] । अन्यथा अजन्ताऽभ्यासस्य विधीयमानो दीर्घो हलादिःशेष-ह्रस्वावेव प्रतीक्षतां, न तु सन्वदित्त्वमपि' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

1 'आदि'त्येव सिद्धे दीर्घग्रहणं च व्यर्थं स्यात् । स हि अभ्यासे इकारश्रवणार्थमेव क्रियते । अन्यथा' इति ग. पाठः ।

विकारे बाध्य-बाधकभावाऽभावेन, समावेशस्यैव वक्तव्यतया, इत्त्वोत्तरं दीर्घस्य सुलभत्वादिति बोध्यम्। स्पष्टं चेदं 'गुणो यङ्लुकोरि'ति सूत्रे भाष्ये। एवं ह्रस्वम्, इत्त्वं च कृत्वैव दीर्घः कार्यः। यद्यपि सूत्रे गुपादयः सामान्यत उपात्तास्तथापि वृत्त्याद्यनुरोधात्,'परक्षेत्रे चिकित्स्यः' 'जुगुप्सा-विरामेत्या'दौ विशेषाऽर्थप्रतीतेः, 'विचिकित्सा तु संशय' इत्यादिकोश-बलाच्च, 'गुप गोपने' इत्यत्र 'गोपते' इति धातुवृत्तिषु प्रयोगाच्च, 'धातोरि'-त्यतो 'वा'ग्रहणमपकृष्य, व्यवस्थितविभाषाऽऽश्रयणाच्च, अर्थविशेषोपहि-तेभ्य एव सन्नित्याह–गुपेर्निन्दायामिति। गोपनाद्यर्थकानां निन्दादौ वृत्तिरनेकार्थत्वाद्बोध्या। जिज्ञासायामिति। 'तत्प्रयोज्ये विचारे' इत्यर्थः। अत एव 'मानेर्विचारे' इति वृत्तिग्रन्थेन न विरोधः।

सनन्तस्येति। अत एव 'प्रतीषिषति' 'अटाट्यते' इत्यादौ सन्यङो-र्द्वित्वसिद्धिः। अत एव 'सन्यङोः' 'चङी'ति सूत्रद्वयप्रणयनम्। अन्यथा 'सन्यङ्चङ्षु' इत्येव वदेदित्याहुः। अत एव यङ्लुकि प्रत्ययलक्षणेन यङन्तत्वात् द्वित्वं सिध्यति। परसप्तम्यान्तु 'न लुमते'ति निषेधान्न स्यात्।

---

१ इतोऽग्रे–'यत्तु शपोऽकारेण सिद्धे सन्यङोरकारोच्चारणात्तयोर्निमित्तत्वेऽपि 'अजादेर्द्वितीयस्ये'ति यसनोर्द्वित्वम्। न च 'अहर्यीदि'त्यादौ लोपवारणाय 'यस्ये'ति सङ्घातग्रहणमावश्यकम्, एवञ्च 'अपापचिष्टे'त्यादौ यलोपो न स्यादिति वाच्यम्। 'हलन्तादङ्गादुत्तरस्य यस्य लोप' इत्यर्थेन समुदायग्रहणे फलाऽभावादि'ति। तन्न। दित्सादिभ्यो यङभावार्थम् अनेकाच्त्वाय सनो-ऽकारस्य सत्वात्। 'पापचक' इत्यत्राऽल्लोपस्य स्थानिवत्त्वात् वृद्ध्यभावाय यङोऽपि तस्य सत्त्वाच्च। किञ्च[1] 'यस्ये'त्यत्र सङ्घाताऽग्रहणे पापच्यतेरचो

1 'यत्तु पापच्यतेरचो यति, यस्येति संघाताऽग्रहणे,'पापाक्य' इति स्यादिति। तन्न। 'यस्य हल' इत्यत्र सङ्घातग्रहणे यलोपाऽप्राप्तेः। 'हलो यमामि'ति लोपे तु भस्याऽसिद्धत्वं दुर्लभम्। 'निष्ठायामनिट' इति सत्त्वेन कुत्वस्य दुर्लभत्वात्। केचित्तु 'हलन्तादङ्गादुत्तरस्य यस्ये'तिव्याख्याने सङ्घातग्रहणे

गुपिप्रभृतय इति । गुप्-तिज्-मान-वधा इत्यर्थः । कितभिन्ना इति । स च ( निवासरोगाऽपनयनयोः ) परस्मैपदी भ्वादिषु पठितः । अत एव 'य एवं विद्वान्विचिकित्सती'त्यादिप्रयोगाः सङ्गच्छन्ते । यद्यपि भाष्ये 'गुप्-तिज्-कित-माना अनुदात्तेत' इत्युक्तं, तथापि 'अनुक्रमदर्शनाय कितिः पठितो, न त्वयमनुदात्तेदि'ति कैयटः । यद्यपि बधिर्नोक्तः । 'दानशानौ च स्वरितेताऽवि'ति च नोक्तम्, तथापि वृत्त्याद्यनुसारादुक्तम् । धातुपाठे सम्प्रति तथा पाठदर्शनाच्च । 'गुपादिष्वनुबन्धकरणमि'तिभाष्येण ध्वनितोऽप्ययमर्थः । अन्यथा 'गुपादिष्वनुदात्तेत्त्वं किमर्थमि'त्येव वदेदित्याहुः ।

केचित्तु 'यथाश्रुतभाष्यस्वरसात्कितिरनुदात्तेत् । बधिः परस्मैपदी । 'विचिकित्सती'ति तु छान्दसमि'त्याहुः ।

अर्थान्तरे त्वननुबन्धका इति । अत एव 'गुपादिष्वनुबन्धकरणसामर्थ्यात्सन्नन्तादात्मनेपदमि'ति भाष्योक्तं सङ्गच्छते । अन्यथा सनोऽभिधानात्, अर्थविशेषे एव साधुत्वेन, अर्थान्तरे सनभावे, आत्मनेपदाऽर्थं तस्य चारितार्थ्येन, सामर्थ्योक्तिरसङ्गता स्यादिति भावः ।

---

यति—'पापच्यः'। हलन्तत्वे तु ण्यति, यलोपे, उपधावृद्धौ, 'चजोरि'ति कुत्वे, 'पापाक्य' इति स्यात् । न च 'निष्ठायामनिट' इत्यस्य सत्त्वेन कुत्वं दुर्लभम् । यस्य कुत्वं तस्य निष्ठयामनिट्त्वेन कुत्वस्य सुलभत्वात्' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

१ अयं ग. पाठः ।

२ 'चारितार्थ्येन भाष्याऽसङ्गतेः । एवञ्चाऽर्थान्तरे भ्वादित्वाऽभावेन, गणान्तरे चाऽपाठेन, केषांचिच्चुरादौ दर्शनेन तत्त्वमेवोचितम् । 'ये चुरादौ दृश्यन्ते तत्पर एवाऽयं ग्रन्थः । अन्येषां त्वर्थान्तरे प्रयोगे एव मानाऽभाव' इत्यन्ये । न चैवं भ्वादौ 'गुप गोपने' इत्याद्यर्थविशेषेऽनुदात्तपाठो व्यर्थ इति वाच्यम् ।

---

फलाऽभाव इति मतो कोपः ? । यस्य कुत्वं तस्य निष्ठायामनिट्त्वेन' इति' इति ग. पाठः ।

चुरादय इति। नन्वत्र मानाऽभाव इति चेन्न। गुपतिज्मानां चुरादौ पाठदर्शनेन, वृत्त्यादिप्रामाण्येन इतरेषां बहुलग्रहणेन[1] चुरादित्वात्। एतत्सर्वं वृत्तिग्रन्थाऽनुरोधेन।

केचित्तु 'दाधर्त्ती'ति सूत्रे 'तेतिक्ते इति किं निपात्यते ?। तिजेर्यङ्लुगन्तादात्मनेपदमि'ति भाष्यात् भ्वादौ शप्विकरणा अप्येते। अन्यथा णिजन्ताद्यङ्णिलोपयोरपि निपात्यता वक्तव्या स्यात्। एतेन 'भ्वादौ'गुप गोपने' इत्याद्यर्थेषु अनुदात्तपाठो व्यर्थ' इत्यपास्तम्। 'गुपादिषु अनुबन्धकरणसामर्थ्यादि'ति भाष्यस्य 'सन्प्रकृतिभूतेष्वर्थविशेषे[2] पठितेष्वित्यर्थ' इत्याहुः। इङ्गुणाविति। यद्यपि 'हलन्ताच्चे'ति सनः कित्त्वेनाऽपि गुणः सुपरिहरस्तथापि इडभावे उक्तहेत्वनुसरणमेवाऽऽवश्यकम्। एवञ्च गुणप्राप्तेरेवाऽभावेन, किं कित्त्वेनेति भावः।

---

क्रियावाचित्वप्रदर्शनार्थं तत्कथनात्। चुरादावेतदर्थकानामेव पाठेन प्रसिद्धत्वात्तेषामेव ग्रहणं च। 'ये चुरादावेवमर्थकास्ते भ्वादावनुदात्तेतोऽर्थविशेषे बोध्या' इत्यर्थात्। एवञ्च 'लुग्विकरणाऽलुग्विकरणयोरि'त्यादौ गणभेदेन भिन्नत्वस्य प्रसिद्धत्वाच्चुरादि-भ्वादय, आनुपूर्वीमात्रेण साम्येऽपि, भिन्ना एवेति बोध्यम्। न च मानेराधृषीयत्वेन वैकल्पिकतया णिजभावेपि, निरनुबन्धकत्वात्तस्याऽत्र ग्रहणं स्यादिति वाच्यम्। साहचर्येण भ्वादेरेव ग्रहणात्। अनुबन्धकृतभेदाऽभ्युपगमस्य फलमाह—सन्नन्तात्तङिति। यदि तु चुरादावेव सानुबन्धाः पठ्यन्ते, कितश्चोभयत्र पाठे गौरवात्, णिच्सनोश्चाऽर्थभेदकृतव्यवस्था, तदा सन्नन्तादिव ण्यन्तादप्यकर्तृगे फले तङ् स्यात्। न चेष्टापत्तिः। वृत्त्यादिविरोधात्। यत्तु वाचस्पत्ये मीमांसाशब्दो माङ् माने' इति ग. पाठः।

१ 'बहुलग्रहणेन तथोक्तेः। केचित्तु दाधर्त्तीति' इति ख. ङ. पाठः।

२ 'अर्थविशेषविशिष्टेषु' इति तु लघुशेखरे पाठः।

य[1]त्तु वाचस्पत्ये 'मीमांसा'शब्दो 'माङ् माने' इत्यनेन निष्पन्न' इत्युक्तम् । तस्याऽयं भावः—सन्प्रकृतिः 'माङि'ति ङिदेवाऽस्तु । नुक् च सूत्रे निपात्यताम् । न च तथाऽपि 'माङो विचारे' इति वक्तव्ये, 'माने' इत्युक्तिरसङ्गता[2] । 'मान'पदस्यैव विचाराऽर्थत्वात् । 'सनि मीमे'तीस् तु न । घ्वादिसाहचर्येण इच्छासन्येव तद्विधानात् । ( अ[3]र्थवत एव सनस्तत्र ग्रहणाच्च ) । न च 'प्रनिमीमांसते' इत्यत्र 'नेर्गदे'ति णत्वाऽऽपत्तिः । घ्वादिसाहचर्येण केवले प्रयोगाऽर्हस्यैव माङस्तत्र ग्रहणात् ।

न चैवं 'मीमांसन' इत्यत्र 'अनुदात्तेतश्च हलादेरि'ति युच् न स्यादिति वाच्यम् । परत्वेन 'सनाशंसे'त्युप्रत्ययेन तस्य बाधेनेष्टाऽऽपत्तेः । अत एव 'तितिक्षुः क्षमिता क्षमी'त्यमरो, 'बीभत्सुरि'त्यर्जुननाम च सङ्गच्छते ।

न चैवं तत्र 'आदि'ग्रहणं व्यर्थम् । अनुदात्तेदजन्ताऽभावेन व्यावर्त्याऽभावात्, हल्ग्रहणसामर्थ्येनैव हलादेरित्यर्थसम्भवादिति वाच्यम् । 'वद संदेशवचने' इति चुरादावदन्तेष्वेकीयमतेनाऽनुदात्तेतः, 'सङ्ग्राम युद्धे' इत्यस्य चाऽनुदात्तेतः सत्त्वात् । तस्य हि अनुदात्तेत्त्वं नित्यणिजन्तत्वेन ण्यन्तोपकारकमेव । 'अनुदात्तेत' इति सूत्रस्थवृत्तिस्तु चिन्त्यैव । क्वचित् युच इष्टत्वे तु बाहुलकात्, चस्याऽनुक्तसमुच्चयाऽर्थत्वाद्वा साधनीय उभाभ्यामपि । भ्वादौ च 'माङ् माने' इत्येव पाठ्यम् । अस्य सन्येव प्रयोगः । चुरादौ पाठाऽभावात् । पुनर्भ्वादौ ङित्करणसामर्थ्यात्सन्नन्तादात्मनेपदम् । मानेस्तु विचारे वृत्तिरेव नेति, न विचारे 'मानते' इत्यादीनामापत्तिरिति दिक् ।

१ 'यत्तु' इत्यारभ्य 'इति दिक्' इत्यन्तः ख. ग. ङ. पाठः, क. कुण्डलितः । मनोरमादिस्थत्वात् ।

२ इतोग्रे—'मान पूजायामि'त्यादिवृत्तिधातुपाठवत्पूर्वोक्तरीत्या भङ्क्त्वा व्याख्यानसम्भवात्' इति ग. पाठः । ३ अयं ग. पाठः । ४ इतोग्रे—'घुसंज्ञासूत्रस्थभाष्यप्रामाण्येन व्यवस्थितविभाषाया आवश्यकत्वेनाऽक्षतेः' इति ग. पाठः ।

रभ। राभस्यम्—उपक्रमः। भाष्योदाहरणादिति। 'अत एके'ति सूत्रस्थाऽऽदिग्रहणमप्यत्र मानमिति प्रागेव निरूपितम्।

वेः स्कन्दे। अषोपदेशत्वादप्राप्तविभाषेयम्। भाष्यमिति। 'सम्प्रसारणाच्चे'त्यादिसूत्रेषु' इति शेषः। पूर्वं साधनेनेति। तुनाऽरुचिर्बोधिता। तद्बीजन्तु पक्षद्वयस्य लक्ष्याऽनुरोधाद्व्यवस्थाऽङ्गीकारेणाऽन्यतरपक्षाऽऽश्रयणस्यैवाऽङ्गीकर्त्तुमुचितत्वम्। तत्र 'अभिषिषेणयिषति' 'अभिषुणु' इत्यादिप्रयोगाणां भाष्ये दर्शनेन, आद्यपक्ष एवाऽऽश्रयणीय इत्याहुः। णम प्र। उदित्पाठोऽत्राऽनार्षः।

इषगमि[1]। अत्र मण्डूकप्लुत्या 'अची'ति वर्त्तते। तस्य च 'शिती'ति विशेषणम्। तेन 'अच्रूपे शिती'त्यर्थात् इष्णातीष्यत्योर्नाऽतिप्रसङ्ग इति स्पष्टं भाष्ये। अत एवाऽत्र सूत्रे, तुदादौ धातुपाठे च उदित्पाठोऽनार्ष इति बोध्यम्।

गमेरिट्। अत्राऽपि 'परस्मैपद'पदम् आत्मनेपदनिमित्तत्वाऽभावे लाक्षणिकम्। 'न वृद्भ्य' इतिवत्।

अनुदात्तस्य च। 'आदेच' इत्यत 'उपदेशे' इति, 'सृजिदृशोरि'त्यतो 'झल्यमकिती'ति च वर्त्तते। तदाह—उपदेशे इत्यादि। असृपदिति। लृदित्त्वादङ्। 'स्पृशमृशकृषे'तिवार्त्तिके 'सृपि'प्रक्षेपस्तु प्रामादिक एवेति बोध्यम्। यम उपरमे। केचिदमुम् उदितं पठन्ति।

सृजिदृशो। धात्वाक्षिप्तस्य, 'अकिती'तिपर्युदासलब्धस्य वा, 'धातोः स्वरूपग्रहणे' इति संनिधापितस्य वा प्रत्ययस्य 'झली'ति विशेषणम्। तदाह—झलादाविति। अनुनासिकलोप इति। स च दंष्ट्राव्यापाराऽर्थक एव। 'तनुत्रं वर्म दंशनमि'त्यमर[2]प्रामाण्यात्। कश्चिदिति। अत्र[3] यदुक्तव्यं

---

१ इतोऽग्रे—'गमिसाहचर्यादकारविकरणस्यैव इषेर्ग्रहणम्। ध्वनितं चेदमत्रैव भाष्ये, सन्विभायके च' इति ग. पाठः।

२ 'इत्यमरप्रामाण्यान्नलोपाऽभावोऽपि बोध्यः' इति ग. पाठः।

३ इतोऽग्रे—'य एवं विद्वान् विचिकित्सती'त्यादिप्रयोगविरोधो, धातुपाठ

तदुक्तम् । यज । देवपूजेह देवतोद्देशेन द्रव्यत्यागः ।

लिटथभ्यासस्य । 'वचिस्वपि' 'ग्रहिज्ये'तिसूत्रोपात्तयोः 'उभयेषाम्'-ग्रहणेन ग्रहणमित्याह—वच्यादीनामिति ।

वचिस्वपि । इकार उच्चारणाऽर्थः । इको निर्देशे[1] वा सौत्रः[2] सम्प्रसारणाऽभावः । 'आदि'शब्दो वचौ न सम्बध्यते, 'स्वपि'ग्रहणात् । चुरादौ सम्प्रसारणयोग्यवच्याद्यभावाच्च । यजादिः—'अदि'पर्यन्तम् ।

परत्वात्सम्प्रसारणे कृते, सकृद्गतिन्यायेन द्वित्वाऽप्राप्तेराह–पुनरिति । ([3]परस्य सम्प्रसारणे कृते, पूर्वस्य सम्प्रसारणेन तु न सिद्धिः । 'न संप्रसारणे' इति निषेधात् ) । विकिरणमिति । क्युरत्र प्रत्ययः । अत एव 'वपिः प्रकिरणाऽर्थ' इति 'सन्यङोरि'ति सूत्रे भाष्ये स्पष्टम् । ( 'विकरणमि'-त्यपि पाठः ) ।

डुवप् । 'ड्वितः क्त्रिः' । 'उप्त्रिमम्' । 'टुवप्' इति तु क्वाचित्कोऽपपाठः । आदेशप्रत्ययत्वाऽभावादप्राप्तेविधिरयम्–शासिवसीति । अत्र शासिद्वयमपि गृह्यते, 'आशिषि लिङि'त्यादिनिर्देशात् । अवात्तामिति । सिज्लोपस्याऽसिद्धत्वात् 'सः सी'ति तत्वे, लोपः । इकार इति । इत्सञ्ज्ञत्वे नुम् स्यादित्यभिमानः[4] । अत्र यद्वक्तव्यं तत् 'दिव औत्'सूत्रे उक्तम् । उवायेति[5] । 'लिटि वयो य' इति यस्य निषेधाद्वस्य सम्प्रसारणम् ।

---

सन्दर्भविरोधश्च । यथाश्रुतभाष्यात्तु आत्मनेपदमेव लभ्यते इत्याहुः' इति ग. पाठः ।

१ 'इको निर्देशे संप्रसारणं स्यात्' इति ग. पाठः ।

२ 'इको निर्देशो वा । सौत्रः सम्प्रसारणाऽभावः' इति ख. पाठः ।

३ अयं ग. पाठः ।

४ 'नुम् स्यादिति बोध्यम्' इति ग. पाठः ।

५ 'उवायेति । अत्र यस्य (परत्वाल्लोपो व्योरिति) लोपेन निवृत्तौ, 'लिटथभ्यासस्ये'त्यस्य वकार एव प्राप्तेः, 'लिटि वयो य' इति नोपन्यस्तम्' इति ख. ग. ङ. पाठः ।

ग्रहिज्या। अत्र[1] ग्रह्यादिसाहचर्यात्परस्मैपदिनो वयेर्ग्रहणं, न तु 'अय-वये'तिदण्डकपठितस्य वयेः अपरस्मैपदिनः[2]। वस्तुतो 'ग्रहिज्ये'ति सूत्रे 'वयि'ग्रहणं व्यर्थम्। वेञ्त्वात्पूर्वसूत्रेणैव सिद्धेः। 'वेञ' इति निषेधस्तु 'लिटि वयो य' इति ज्ञापकान्नेति बोध्यम्।

यस्येति। तेन वस्य भवत्येव। तदाह—ऊयतुरिति।

वश्चास्या। ऊवतुरिति। वकारे कृते तस्य सम्प्रसारणन्तु न। 'उश्चाऽस्ये'त्येव सिद्धे वाऽऽदेशविधानसामर्थ्यात्। चकारेण सम्प्रसारणनिषेधस्याऽप्याकर्षणेन, तन्निषेधाच्च॥ 'अन्यतरस्यां किति वेञ' इत्येवं सम्प्रसारणविकल्पेनैव सिद्धे, 'वश्चाऽस्ये'ति व्यर्थम्[3]। परत्वात्सम्प्रसारणे[4], पूर्वरूपे, द्वित्वे, 'वार्णादाङ्गमि'ति न्यायेन सवर्णदीर्घं बाधित्वा उवङि, ततः सवर्णदीर्घे, 'ऊवतुरि'ति सिद्धम्[5]। सम्प्रसारणाऽभावे 'ववतुरि'ति स्पष्टं भाष्ये। 'ततो 'ल्यपि चे'ति 'च'शब्देन 'लिटी'त्यनुकर्षणात् 'ववौ' 'वविथे'ति सिद्धमिति दिक्। उपदेशेऽजन्तत्वात्, अत्वत्त्वाच्च थलि निषेधमाशङ्क्याऽऽह—वयेस्तासाविति। न च तासौ नित्याऽनिट्त्वं स्थानि-

१ 'अत्र वय्यादिसाहचर्यात्, पूर्वोत्तरसाहचर्याच्च परस्मैपदिन एव' इति ग. पाठः। 'परस्मैपदिनोऽपि' इति ख. ङ. पाठः।

२ इतोऽग्रे—'एतेनाऽनेनैव सिद्धे 'वेञो वयिरि'ति व्यर्थमित्यपास्तम्। तस्यात्मनेपदित्वात्' इति ग. पाठः।

३ इतोऽग्रे—'नित्यत्वेन आलोपं बाधित्वा पूर्वं सम्प्रसारणे, वार्णपरिभाषाया अनित्यत्वादन्तरङ्गत्वेन पूर्व(रूप)त्वे च कृते, द्वित्वे' इति ग. पाठः।

४ 'परत्वात् आतो लोपे, सम्प्रसारणे' इति ख. ङ. पाठः।

५ इतोऽग्रे—'न च नित्यं सम्प्रसारणम्। सम्प्रसारणे जाते, वार्णपरिभाषया पूर्वत्वं बाधित्वा आल्लोपस्यैव प्राप्त्या, तस्यापि नित्यत्वात्। न च उवङि-कर्त्तव्ये आल्लोपस्याऽऽभीयाऽसिद्धत्वम्। तस्याऽनित्यत्वात्' इति ख. ङ. पाठः। क. कुण्डलितः।

वत्त्वेन लभ्यम् । अशास्त्रीयत्वात् । प्रत्यासत्त्या यन्निमित्तवैकल्यप्रयुक्तोपदेशाऽप्रवृत्तावतिदेशप्रवृत्तिर्मृग्यते, तस्य धर्मस्य शास्त्रीयस्यैव ग्रहणात् ।

एतेन 'अचस्तास्वदि'त्यादिनिषेधः शास्त्रीयोऽतिदिश्यतामि'त्यपास्तम् ।

यत्तु[1] 'अच' इत्युक्तेरल्विधित्वान्ने[2]'ति । तन्न । 'उपदेशे' इत्यस्य सत्त्वेन, तदंशे स्थानिवत्त्वाऽनपेक्षणात् । 'उपदेशेऽत्वत' इत्यस्य वारयितुमशक्यत्वाच्च ।

वेञः । 'अत्र 'किती'ति नाऽनुवर्त्तते' इति 'ग्रहिज्ये'तिसूत्रे भाष्ये स्पष्टम् । तदाह—ववाविति । सामर्थ्यादिति । तत्सामर्थ्यात्पुनर्विधानम् । तेन विध्यन्तराणां बाध इति भावः । 'सम्प्रसारणं, तदाश्रयं च कार्यं बलवदि'ति तु 'उभयेषां'ग्रहणवैयर्थ्योपत्त्या भाष्ये प्रत्याख्यातमेव ।

विव्यतु[3]रिति । अत्र यद्वक्तव्यं तत् अज्धातावुक्तम् । इडत्यर्त्तीति । अन्यथा 'ऋतो भारद्वाजस्ये'ति विकल्पः स्यादिति भावः ।

वीयादिति । सम्प्रसारणे, 'अकृत्सार्वे'ति दीर्घः ।

अभ्यस्तस्य च । ननु द्वित्वे, अभ्यस्तसंज्ञायामुत्तरखण्डस्य सम्प्रसारणे, अभ्यासस्य 'न सम्प्रसारणे' इति निषेधात्तन्न स्यादत आह—अभ्यस्ती-

१ 'यत्तु'इत्यारभ्य'वारयितुमशक्यत्वाच्च' इत्यन्तः ख. ङ. पाठः । क. कुण्ड० ।

२ 'अल्विधित्वात्स्थानिनिष्ठाऽभावस्य स्थानिनिष्ठाऽलभावाश्रितत्वेनाऽनल्विधाविति निषेधेनाऽतिदेष्टुमशक्यत्वादिति । तन्न । यन्निमित्तवैकल्यप्रयुक्तोपदेशाऽप्रवृत्तावतिदेशो मृग्यते, स च धर्मः स्थान्यल्वृत्तिस्तदैव निषेधाऽङ्गीकारादित्याहुः । अजन्तत्वाय तु नाऽतिदेशः । 'उपदेशे' इत्यपकर्षणात् । 'उपदेशेऽत्वत' इत्यस्य प्राप्तेश्चेति दिक्' इति ग. पाठः ।

३ इतोऽग्रे—'यद्यपि व्ये-व्ये इति द्वित्वे, हलादिःशेषे, ह्रस्वे, विव्यतुरित्यादि सिद्ध्यति, तथापि वस्यं संप्रसारणेऽनिष्टं स्यादिति भावः' इति ग. पाठः ।

भविष्यत इति। 'अभ्यस्तीभविष्यतः प्रकृतेर्ह्वेञ' इत्यर्थः। तेन 'जिह्वापकीयिषती'त्यादौ न। यदवयवस्यैकाचो द्वित्वं स हि अभ्यस्तप्रकृतिः। प्रकृते च सन्नन्तं तथा, न ह्वयतिरिति दिक्। जुहुवतुरिति। 'ह्वा'इत्यत्र आलोपाऽपेक्षया नित्यत्वात्सम्प्रसारणे, वार्णपरिभाषाया अनित्यत्वाऽऽश्रयणेनाऽन्तरङ्गत्वात्पूर्वरूपे, ततो द्वित्वे, उवङ्। उवङि पूर्वरूपस्य न स्थानिवत्त्वम्। उवर्णान्तधातोरुवङ्विधानेनाऽकारात्पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यकत्वाऽभावात्। अच्छ वदतीति। 'अच्छ गत्यर्थवदेष्वि'ति गतित्वम्। उवदिथेति। 'कूले यदूदिथ वचस्तपनात्मजाया' इति तु प्रामादिकमेवेति बोध्यम्।

विभाषा श्वेः। 'उभयत्र विभाषेयमि'ति 'नवे'ति सूत्रे व्युदपादि। शुशावेति। न चाऽत्र सम्प्रसारणात्परत्वाद्वृद्ध्यायोः, सम्प्रसारणे, रूपाऽसिद्धिः। नित्यत्वेन सम्प्रसारणप्रवृत्तेः, अन्तरङ्गत्वाच्च पूर्वरूपप्रवृत्तेरिति बोध्यम्। नन्वेतदभावे 'लिट्यभ्यासस्ये'ति दुर्वारम्। तथा च 'शिश्वाये'-त्यसिद्धरत आह—श्वयतेर्लिटीति। वाचनिकमेवेदम्। एवञ्च एतद्वचन-

१ 'अभ्यतीभविष्यत इति। सन्-चङ्परणिविषये सम्प्रसारणसिद्ध्यर्थं कृतस्य 'ह्वः सम्प्रसारणमि'ति योगविभागस्य सामर्थ्यात् अभ्यासनिमित्तप्रत्ययप्रकृतेरेव ह्वयतेरनेन सम्प्रसारणम्। अर्थाध्याहारवादमाश्रित्य आक्षिप्तस्याऽपि शाब्दबोधे भानं च। तेन 'जिह्वापकीयिषती'त्यादौ न सम्प्रसारणमिति भाष्ये स्पष्टम्' इति ख. ग. ङ. पाठः। २ 'अकृतद्विर्वचनस्ये'त्यर्थः।

३ 'जुहुवतुरिति। 'ह्वा' इत्यत्र सम्प्रसारणात्पूर्वं परत्वादालोपे, सम्प्रसारणे, उकारस्याऽनादिष्टादचः पूर्वत्वेन स्थानिवत्त्वात्, अनित्यत्वेनाऽऽभीयाऽसिद्धत्वाऽभावाच्चोवङ्। यद्वा नित्यत्वात्सम्प्रसारणे, वार्णादाङ्गमित्यस्याऽनित्यत्वेनाऽन्तरङ्गत्वात्पूर्वत्वे उवङित्याहुः' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

४ इतोऽग्रे—'न च 'विभाषा श्वेरि'त्यनेन बाधः। तदभावे आपत्तेः। द्वित्वात्पूर्वं तत्प्राप्तिकालेऽस्याऽप्राप्तत्वेन, बाधाऽयोगाच्च। उभयेषांग्रहणेन पृथग्व्यापारबोधनेन 'हलादिः शेष' इत्यस्येव, 'विभाषा श्वेरि'त्यस्यापि बाधापत्तेश्चेत्यत आह—श्वयतेर्लिटीति' इति ग. पाठः।

सामर्थ्यात् श्वयत्यभ्यासविषयलक्षणाऽनुपप्लव एवेति भावः । स्पष्टं चेदं प्रकृतसूत्रे भाष्ये । यत्तु 'अनेन परत्वात्तस्य बाध' इति । तन्न । अस्य द्विर्वचनात्पूर्वं परत्वेन प्राप्त्या, 'लिट्यभ्यासस्ये'त्यस्य च ततः परं प्राप्त्या, युगपत्प्राप्त्यभावेन परत्वाऽसम्भवात् । पुनः प्रवृत्तौ तु न मानम् ।

**पररूपमिति** । आर्द्धधातुकोपदेशेऽकारान्तत्वाऽभावान्नाऽतो लोपः ।

**अश्वयीदिति** । नन्वन्तरङ्गत्वाद्गुणे कृते, इगन्तत्वाऽभावाद्वृद्ध्यप्राप्त्या, अयादेशे कृते प्राप्ताया हलन्तलक्षणाया यान्तत्वादेव निषेधे सिद्धे, किं णिश्विग्रहणेनेति चेन्न । सिचिवृद्धेर्येननाऽप्राप्तिन्यायेनाऽन्तरङ्गबाधकत्वात् । तदेतदुच्यते-'न सिच्यन्तरङ्गमि'ति । अत एव 'अचिरायीदि'त्यादिसिद्धिः ।

यत्तु 'इकोगुणवृद्धी'इतिसूत्रे भाष्येऽस्य 'न सिच्यन्तरङ्गमि'त्येतज्ज्ञापकतोक्ता, सा तु तत्र सिद्धान्त्येकदेशयुक्तिरिति भाष्यप्रदीपोद्द्योते निरूपितम्[3] ।

इति शिवभट्टसुत-सतीगर्भज-नागोजीभट्टकृते शब्देन्दुशेखरे भ्वादिव्याख्यातः ।

---

१ 'श्वयत्यभ्यासविषयकलक्षणस्याऽचरितार्थत्वेन न्यायसिद्धमिति प्रकृतसूत्रभाष्ये, द्विर्वचनेऽची'त्यत्र कौस्तुभे च स्पष्टम् इति ग. पाठः ।

२ इतोऽग्रे—'अन्यार्थत्वात् 'अचिरायीदि'त्यत्र निषेधाऽप्रवृत्तिः फलम् । 'अतो हलादेरि'ति सूत्रस्थमद्ग्रहणं च मानम् । 'न्यकुटीदि'त्यादौ तु बहिरङ्गवृद्धिबाधकान्तरङ्गगुणस्य 'क्ङिति चे'त्यनेन निषेधे भ्रष्टावसरन्यायेन वृद्धेरप्राप्तेः । येन नाप्राप्तिन्यायेनाऽपि वृद्धेर्बाधकत्वं बोध्यम् । अत एवैकपरिभाषासंस्कृतसिचिवृद्धिरित्यस्योक्तिसंभव इति दिक्' इति ग. पाठः ।

३ इतोऽग्रे—'वृद्धिविषये 'इक' इति सम्बन्धो माऽस्तु । 'न्यनुवीदि'त्यादौ अन्तरङ्गत्वादुवङि, अजन्तत्वाऽभावात् 'सिचि वृद्धि'रिति वृद्धेरप्राप्त्या, तन्निषेधायाऽपि नेगलक्षणत्वोपयोगः । व्यञ्जनव्यावृत्तिः—'सिचि वृद्धिरि'ति तु 'अचैषीदि'त्यादौ गुणे कृते वृद्ध्यर्थं चरितार्थमि'ति पूर्वपक्षिमतमुपेत्य-तन्मतरीत्या बोध्या । न च गुणे कृते वृद्धेश्चारितार्थ्येऽपि, तत्काले

## अथाऽदादिप्रकरणम् ।

सौत्र इति । 'कमेर्णिङि'ति साहचर्यात्तान्त इका निर्दिष्ट इति बोध्यम् । अत एव 'वञ्चिलुञ्च्यृतश्चे'त्यत्र न धात्वन्तरकल्पना । न च तत्र ऋदन्तधातोर्ग्रहणम् । व्याख्यानेन हलन्तस्यैव ग्रहणात् । किञ्च 'ङ्य'प्रत्यये, 'अकृत्सार्वे'ति दीर्घेण सिद्धे, ईयङ्करणं तान्तत्वज्ञापनाऽर्थम् ।

यत्तु 'ईयङो दीर्घोच्चारणात्तान्तोऽयम् । इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धेरि'ति । तन्न । 'एरनेकाच' इति यणापत्तेः । तैक्ष्कौण्डिन्यन्यायेन इकारभिन्नस्यैव, धात्ववयवभिन्नस्यैव वाऽचो निमित्तत्वमिति न वाच्यम् ।

---

प्राप्तिमात्रेणाऽपवादत्वमिति, ज्ञापकाऽसम्भव इति वाच्यम् । अस्यैवाऽर्थस्य दृढतरत्वबोधनाय ज्ञापकोपन्यासात् । न चैवमपि णिङ्योर्गुणे कृते 'वार्णादाङ्गमि'तिपरिभाषया अयादेशं बाधित्वा प्राप्तवृद्धेर्निषेधेन णिङ्ग्रहणस्य चारितार्थ्याज्ज्ञापकाऽसम्भव इति वाच्यम् । 'अलावीदि'त्यादौ गुणाऽवादेशयोः कृतयोर्वृद्धिर्न प्राप्नोतीति शङ्कायाम् 'अतो लान्तस्ये'त्यत्र वकारप्रश्लेषेण पूर्वपक्षिणा समाधानात्, वार्णपरिभाषा तेन नाऽऽश्रितेति तद्रीत्या ज्ञापकसत्त्वादित्यलम्' इति क. कुण्डलितः पाठः ।

१ इतोऽग्रे—'वञ्च्यादिसाहचर्येण हलन्तस्यैव ग्रहणात् । 'ऋत' इत्यत्र विभक्त्यैवोच्चारणे सहायसम्पादनेन 'वञ्चिलुञ्ची'तिवदुच्चारणार्थं इकारो नोपात्तः । निर्णायकत्वेनाऽभ्यर्हितत्वात्पूर्वनिपातः । अत एवाऽस्य धातुसंज्ञा । किञ्चेकारान्तत्वे 'अर्त्तनमि'ति न स्यात् । 'ऋतयनमि'ति च स्यात् । किञ्च ङ्यप्रत्यये' इति ग. पाठः ।

२ 'यत्तु' इत्यारभ्य 'इति दिक्' इति ख. ङ. पाठः क. कुण्डलितः । मनोरमाशब्दरत्नस्थत्वात् ।

३ 'न च नहि कार्यीति न्यायेन इकारभिन्नस्यैव' इति ग. पाठः ।

४ 'धात्ववयवभिन्नस्यैव वा ग्रहणान्न यणिति वाच्यम् । आद्ये 'प्रध्यि' इत्यादौ

ईदृशेषु तन्न्यायाऽविषयस्य 'सुध्युपास्य'प्रकरणे उपपादितत्वात् । तुल्यन्यायेन णिचि गुणाद्यनापत्तेश्च । न च यङेवाऽस्तु, 'अकृत्सार्वे'ति दीर्घोपपत्तेरीकारोच्चारणं तान्तत्वे प्रमाणमिति वाच्यम् । 'सन्यङोरि'ति द्वित्वाऽऽपत्तेरिति दिक् ।

एके इति । 'ऋतीयते स्याद् घृणयोरि'ति कोशादर्थद्वयमपि । तत्र 'घृणयोरि'त्यस्य 'जुगुप्साकरुणयोरि'त्यर्थः । नित्यमिडिति । अन्यथा भारद्वाजनियमाद्विकल्पः स्यादिति भावः ।

हुझल्भ्यो । न च 'रुदिही'त्यादावतिप्रसङ्गः । 'घसिभसोरि'त्यतो 'हली'त्यनुवृत्त्या अर्थान्तराऽसम्भवेन 'हलादेर्हेरि'तिव्याख्यानेनाऽदोषात् । यद्वा निर्दिश्यमानस्य व्यवहितत्वादिट्सहितस्य चाऽनिर्दिश्यमानत्वात् न दोषः । अत्तादिति । अत्र धित्वात्परत्वात्तातङि, स्थानिवद्भावेन पुनर्धित्वन्तु न । 'सकृद्गतावि'ति न्यायात् । स्पष्टं चेदं स्थानिवत्सूत्रे भाष्ये ।

यणनापत्तेः । तस्मादेतत्सूत्रविषये तत्परिभाषाऽप्रवृत्तिरेवावश्यकीति द्वितीयोऽपि न । न च यङेवास्तु' इति ग. पाठः ।

१ 'शब्दाऽधिकारात् षष्ठ्यर्थत्वेन, अर्थाऽन्तराऽसम्भवेन च' इति ख. ङ. पाठः । क. कुण्डलितः ।

२ इतोग्रे 'स्वरूपसत्सप्तम्या एव 'यस्मिन्विधिरि'त्येतत्परिभाषाप्रवृत्तिनिमित्तत्वात्'इति ख. ङ. पाठः । क. कुण्डलितः ।

३ इतोऽग्रे—'अत एव 'पुष्णीतात्' [1]'जहीतादि'त्यादौ 'हलः श्नः शानज्झौ' 'आ च हावि'त्यादिकं न' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

४ इतोग्रे—'केचित्तु—हुझल्भ्यो हेर्धिरित्युभयत्राऽपि इकार उच्चारणाऽर्थः । हस्य च धः । यद्यप्यङ्गेन प्रत्ययाक्षेपस्तथापि हकाररूपप्रत्ययस्य, हान्तस्य चाऽसम्भवात्प्रत्ययाऽवयवहस्येत्यर्थः । 'हुझल्भ्य' इति विशेषणं तु श्रुतत्वात् हस्यैव । एवं च 'रुदिही'त्यादौ न दोषः । हस्य इटा व्यवहितत्वात् ।

1 'जहितात्' इति ग. पाठः ।

अदः सर्वेषाम्। 'अङ्गार्ग्ये'त्यतः 'अङि'तिवर्त्तते। प्रणिहन्तीति। 'नेर्गदे'ति णत्वम्। लुप्तषष्ठीकमिति। असमस्तं, सौत्रत्वाल्लुप्तविभक्तिकं पृथक्पदमित्यर्थः। वनतीतरेषामिति। वनतेस्तु अव्यभिचारान्न विशेषणमिति भावः। तेन कृन्प्रपचादिर्व्यावृत्तिः।

अनुदात्तोपदेशा इति। 'अनुनासिकाऽन्ता' इति शेषः। एवमग्रेऽपि। उपदेशे किम्?। 'यतिः'। क्तिनि नित्त्वेन आद्युदात्तत्वेऽपि न दोषः।

'जघनिथे'त्यादौ ञ्णिणन्नपरत्वाऽभावादाह—अभ्यासाच्चेति। इदं च प्रत्यासत्त्याऽभ्यासाऽऽक्षिप्तस्य, हन्तिनिष्ठाऽङ्गत्वाऽऽक्षिप्तस्य च प्रत्ययस्य एकत्वे एव प्रवर्त्तते। तेन 'जिहननीयिषतो'त्यादौ नाऽतिप्रसङ्गः। अदन्त

अत एव 'अत्तादि'त्यत्र न धिः। ह्रस्वस्याऽल्विधित्वेन, स्थानिधर्मत्वाऽभावेन च स्थानिवत्त्वाऽभावात्। 'शाद्धि''शानज्झौ' 'आ च हावि'त्यादावपि हकारादावित्यर्थादुक्तरीत्या स्थानिवत्त्वाऽप्रवृत्तौ 'शिष्टात्' 'पुष्णीतात्''जहीतादि'त्यादौ[1] शादेशादिकं[2] न। न च [3]'जहीतादि'त्यादावेकस्मिन् द्विकार्ययोगस्य, असम्भवरूपस्य च विरोधस्याऽभावात् 'परत्वादि'त्यादिभाष्याऽसङ्गतिरिति वाच्यम्। एकस्मिन्पदे कार्यद्वययोगसत्त्वेन विरोधस्य सत्त्वात्। ईदृशविरोधग्रहणे च भाष्यमेव मानमित्याहुः।

१ इतोऽग्रे—'न च 'तनादिकृञ्भ्य' इत्यत्र कृञ्ग्रहणात्कृञस्तनादिकार्याऽभावः। गणकार्याऽनित्यत्वज्ञापनेन चारितार्थ्यात्। भवदुक्तार्थज्ञापनेपि तनादिगणे कृञ्पाठस्य वैयर्थ्यानुद्धाराच्च' इति ग. पाठः।

२ इतोऽग्रे'हो हन्तेरिति। णलाद्युत्तरमेव द्वित्वप्रवृत्ते'र्द्विवचनेची'ति सूत्रभाष्यादिसंमततया द्वित्वात्पूर्वं परत्वाद्धो हन्तेरिति कुत्वमिति भावः' इति ग. पाठः।

1 'शादेशादिकं नेति। तन्न। 'शाधी'त्यसिध्यापत्तेः' इति ग. पाठः।

2 इतोऽग्रे—'शाधी'त्यादि–'शाद्धावि'त्यत्र सामर्थ्यात् भूतपूर्वगत्याश्रयणेन सिद्धमित्याहुः। तत्स्थानिवत्सूत्रस्थभाष्याऽसंमतम्' इति ख. ङ. पाठः।

3 'न च शिष्टादित्यादौ एकस्मिन् द्विकार्ययोगस्य' इति ग. पाठः।

इति । तेन 'अवधीदि'त्यत्र 'अतो हलादेरि'ति वृद्धिर्न । अकारस्य सिच्परत्वेन विशेषणात् । 'वध हिंसायामि'ति स्वतन्त्रधातुस्तु न सार्वत्रिकः । अदन्तत्वप्रतिपादकभाष्यादिप्रामाण्येन तस्य ईदृशे विषये प्रयोगाऽभावाऽनुमानात् । अलिक्षतेति । 'शल' इति क्सः । 'लुग्वे'ति वा लुक् । अलिक्षातामिति । 'क्सस्याऽची'त्यन्तलोपः ।

[1]दर्शनेऽपीति । 'विश्वा रूपाभिचष्टे शचीभिरि'त्यादौ तथा व्याख्यातत्वादिति भावः । युजर्थ इति । 'अनुदात्तेतश्च हलादेरि'ति युच् । तेन 'विचक्षणः प्रथयन्नि'त्यादावन्तोदात्तत्वसिद्धिः । अन्तेदित इति । एतद्बीजं प्रागेवोक्तम् ।

ङकारस्त्विति । न च अन्त्येदित्त्वव्याघातकत्वेन चारितार्थ्यात्, कथं ज्ञापकत्वम् । 'चक्षे'त्येव सिद्धेः । अकारेणैव तादृशेन युचः सिद्धेः । नुमो व्यावृत्तेश्च । प्राथमिके लसार्वधातुके एव फललाभात्पश्चादुपस्थिताऽनुदात्तेत्त्वप्रयुक्तस्वरोऽनित्य इति नोक्तम् । भाष्ये त्विदं न दृश्यते । 'विचक्षण' इत्यत्र स्वरस्य च्छान्दसत्वमाश्रित्य इकार उच्चारणाऽर्थ' इत्येव युक्तम् । न त्वेवंविधस्य ऋष्यनुक्तस्याऽर्थस्य साधुत्वनियामकता युक्ता । ख्शादिरिति । तेन 'पुंख्यानमि'त्यत्र रुत्वं न । असिद्धकाण्डे इति । तेन सुप्रख्येन निर्वृत्तं 'सौप्रख्यम्' । तत्र भवः-'सौप्रख्यीय' इत्यत्र 'धन्वयोपधादि'ति वुञ् न, किन्तु छ एवेति बोध्यम् । तच्च वचनं णत्वप्रकरणाऽनन्तरं बोध्यम् । तेन 'पर्याख्यानमि'त्यत्र 'कृत्यच' इति णत्वं न[2] ।

अस्यतिवक्ति । अस्यतेः पुषादित्वात्सिद्धे तङर्थं ग्रहणम् । 'वक्ती'ति

१ 'दर्शनेपी'त्यारभ्य 'भावः' इत्यन्तोऽयं पाठो मनोरमस्थत्वात् क. कुण्डलितः ।

२ इतोऽग्रे—'यणो मय' यस्य इति द्वित्वं च भवति । चक्शे इति । न च 'खरि चे'त्यत्र खरो निमित्तत्वेन कार्यित्वबाधात्खस्य चर्त्वं दुर्लभमिति वाच्यम् । भाष्यादिप्रामाण्येनाऽत्र न्यायाऽनङ्गीकारात्' इति ग. पाठः ।

चक्ष्यादेश-स्वतन्त्रयोरुभयोरपि ग्रहणम्। यत्तु 'ख्याती'ति ख्शादेरेवाऽनुकरणम्। लक्षणवशसंपन्नं च यत्वम्, 'वक्ती'ति कुत्ववत्। एवञ्च यत्वाऽभावेऽपि अङि'ति। तन्न। धातुपाठे प्रयोगस्थानामनुकरणेन, सूत्रपाठेऽपि तथैवौचित्यात्। 'ख्शे'त्यस्य लौकिकप्रयोगे क्वाऽप्यसत्त्वेन तदनुकरणस्य वक्तुमशक्यत्वात्। 'ख्याती'ति कृतयत्वप्रयोगस्थख्याधातूनामनुकरणात् यत्वाऽभावे न अङ्। स्पष्टा चेयं रीतिः 'दाधा घ्वदाबि'त्यत्र भाष्ये। विधिसामर्थ्याच्चैतद्दृष्ट्या यत्वं नाऽसिद्धम्। स्वतन्त्रख्याते सार्वधातुकमात्रविषयत्वात्। वर्जने इति। 'अने वा'। 'विचक्षणः': 'पुंख्यानम्'। 'असि न'। 'नृचक्षो रक्ष' इत्यपि बोध्यम्।

ईशः से। 'से''ध्वे' इति एदन्ताऽनुकरणम्, अविभक्तिकश्च निर्देशः। तेन 'ऐड्ढ्वमि'ति सिध्यति। जन उदाहरणं छन्दसि। छान्दसत्वात् श्यनो लुकि, उपधालोपाऽभावे च, 'जनिषे' 'जनिध्वे' इति बोध्यम्।

वैचित्र्यार्थ इति। 'ध्वे' इत्यस्य पूर्वत्राऽपकर्षः, 'से' इत्यस्योत्तरत्राऽनुवृत्तिरिति वैचित्र्यम्। एतेन 'ईशेध्वे इडभावाऽर्थं योगविभाग' इत्यपास्तम्। भाष्यविरोधात्। 'ईडजनोः स्ध्वे चे'ति भाष्यसंमतः पाठः।

एकदेशेति। 'स भवान् ईशिष्व ईशिष्व इत्येव अयमीष्टे' इत्यत्र लोड्भावादिडिति बोध्यम्।

आङः शासु। अयं धातुर्वेवीङनन्तरमिति जक्षित्यादिसूत्रस्थभाष्यस्वरसः। नमोवाकमिति। 'नमस्कारमि'त्यर्थः। 'रुद्राऽध्यायमित्यर्थ'इत्यन्ये। बभ्रामेति। तथा च 'नुम्विसर्जनीये'ति सूत्रे भाष्यं-

---

१ 'शास्त्रे, लौकिकप्रयोगे च' इति ख. ङ. पाठः।

२ 'वक्तुमशक्यत्वाच्च' इति ख. ङ. पाठः।

३ 'एवञ्च कृतयत्वख्यातीति' इति ख. ङ. पाठः।

४ अने वा = ल्युडादौ वा भवति। न असि = अस्प्रत्यये नैवेत्यर्थः।

५ 'जनिध्वम्' इति ङ पाठः। 'अट्कुप्वाङिति सूत्रे' इति ख. ङ. पाठः।

'नुम्विसर्जनीयेत्यनेन नुमादिभिः प्रत्येकं व्यवाये षत्वं वक्तव्यम्'। 'निंस्से'-इत्यादौ मा भूदि'ति । तत् तालव्याऽन्तपाठे विरुध्येत । तदा हि व्रश्चादि-षत्वे,'षढोरि'तिकत्वे, कवर्गात्परत्वेन षत्वं दुर्वारमेव । 'निंक्षे' इति च रूपं स्यादिति भावः । 'तालव्याऽन्तस्याऽपि स्वीकारे बाधकाऽभाव' इत्यन्ये ।

**शिजि** । 'अयं दन्त्यादिरपी'त्यन्ये । **सुषुविषे** इति । स्वरतिवत् अस्याऽपि नित्यमिट् । **सोता, सवितेति** । 'स्वरतिसूती'ति वेट् ।

**शीङः** । 'सार्वधातुकमपिदि'त्युत्तरं 'शीङो ने'त्येव सिद्धे 'सार्वधातुके गुण' इति व्यर्थ'मिति **केचित्** ।

**शीङो रुट्** । 'झोऽन्त' इत्यतो 'झ' इति, 'अदभ्यस्तादि'त्यतः 'अदि'ति च वर्त्तते । तच्च षष्ठ्या विपरिणम्यते । तदाह—**अत इति** । झस्यैव रुटि तु आदेशो दुर्लभः ।

**उतो वृद्धिः** । 'अचि' 'नाऽभ्यस्तस्ये'ति रहितं 'नाऽभ्यस्तस्ये'ति सूत्र-मनुवर्त्तते । तदाह—**पितीत्यादि** । **भाष्ये पिच्चेति** । इदं च 'हलः श्न' इति सूत्रे भाष्ये स्पष्टम् । अत्र 'भाष्ये' इत्युक्त्या वार्त्तिकमते 'उत औदि'ति वक्तव्ये 'वृद्धि'ग्रहणेन संज्ञापूर्वकविधेरनित्यत्वान्नेति बोधितम् ।

ननु पूर्ववाक्येन ङित्त्वमपि दुर्लभमत आह–**विशेषेति** । न चाऽनया युक्त्या ल्यपः पित्त्वेन, क्त्वः कित्त्वबाधे, 'प्रकृत्ये'त्यादौ गुणः स्यादिति वाच्यम् । 'ङिच्च पिन्ने'त्यस्य वाचनिकत्वात् । अनयोर्विरोधे विशेषविहित-त्वेन निर्णय इत्याहुः ।

वस्तुतस्तु श्नः शानचः शित्त्वेन क्वचिदनुबन्धकार्ये[1] 'अनल्विधावि'ति निषेधप्रवृत्तिज्ञापनेन, लक्ष्याऽनुसारेण च तदाश्रयणाऽनाश्रयणाभ्यां सर्वेष्टसिद्धिः। अत एव 'भविषीष्टे'त्यादौ लिङाऽदेशेऽपि ङित्त्वं न । एतन्न्यायमूलकत्वमेवाऽस्याऽर्थस्य । ध्वनितं चेदं भाष्ये इति निरूपितं भाष्यप्रदीपोद्द्योते । **यूयादिति** । अत्र सार्वधातुकत्वाऽभावान्न वृद्धिः ।

१ 'अनुबन्धकार्येषु' इति ख.'पाठः ।

स्मरन्तीति। 'न्यास-वर्द्धमानादय' इति शेषः। अत्र बीजं रु-स्तु-साहचर्यम्, अव्यवहिततिङ ईड्विधानं चेति दिक्। शम्यमोस्तु 'बहुलं छन्दसी'ति विकरणलुकि वेदे उदाहरणं बोध्यम्।

केचित्तु तत्र 'अ'शब्दस्यैव द्वित्वमाहुः।

ऊर्णोते। 'उतो वृद्धिरि'त्यतो 'वृद्धिरि'त्याद्यनुवर्त्तते। तदाह—वृद्धिर्वे-त्यादि। आम्नेतीति। ऊर्णोतेर्नुवद्भावात् 'इजादेरि'ति, 'अनेकाच'इति च आम्न। 'नु'वद्भावेन यङो भावाऽतिदेशस्य, आमिटोरभावाऽतिदेशस्य च बोधनादिति भावः।

न न्द्राः। 'अजादेरि'ति कर्मधारयात्पञ्चमी। 'आदि'ग्रहणस्य च प्रकृतेऽनुपयोग इत्येकदेश एवाऽनुवर्त्तते। अत एव 'चन्दिद्रीयिषती'त्यादि सिद्धमित्याशयेनाऽऽह—अचः परा इति। अयं च निषेधो द्वितीयद्वित्व-स्यैव। अत्राऽपि 'द्वितीयस्ये'त्यनुवृत्तेः। तेन 'आनर्दे'त्यादौ रेफ-विशिष्टस्य द्वित्वसिद्धिः। केचित्तु तत्र 'अ'शब्दस्यैव द्वित्वमाहुः।

ननु 'ऊर्णुनावे'त्युत्तरखण्डेऽपि णश्रवणं स्यात्। अत आह—नुशब्द-स्येति। णत्वस्याऽसिद्धत्वेन 'नु'बुद्धयैव द्वित्वप्राप्त्या, यद्बुद्धया शास्त्रप्रवृत्तिः तदीयद्वितीयप्रयोगस्यैवाऽनेन साधुत्वाऽन्वाख्यानात्, न उत्तरखण्डे णकार श्रवणम्। पूर्वोच्चारणेन व्यवधानाच्च न उत्तरखण्डे शास्त्रेण णत्वप्रसङ्ग इति भावः। आगन्तूनामन्ते निवेशाच्च द्वित्वशास्त्रबोधितद्वितीयप्रयोग उत्तरत्रैवेति बोध्यम्।

---

१ इतोऽग्रे—'शम्यमिसाहचर्यात् तुरुस्तुभ्योऽपि च्छन्दस्येवेडित्यन्ये' इति ख. ङ. पाठः।

२ इतोऽग्रे—'गौणं त्वादित्वं नाश्रयणीयम्। लक्ष्याऽनुरोधात्' इति ग. पाठः।

३ 'अनन्तरस्येति न्यायादजादेर्द्वितीयस्येत्यस्यैव' इति ग. पाठः।

४ इतोऽग्रे—'न च निमित्तविनाशात्कृतस्यापि णत्वस्य निवृत्तिः। द्वित्वशास्त्रे-णोत्तरखण्डेपि णस्य साधुत्वबोधनादित्यत आह-नुशब्दस्येति' इति ग. पाठः।

पूर्वत्रासिद्धीयमिति । 'पूर्वत्राऽसिद्धमि'त्यधिकारे भवमि'त्यर्थः । गहादित्वाच्छः । 'यत्पूर्वत्राऽसिद्धीयं शास्त्रं, तत्र 'अद्वित्वे' इत्युपतिष्ठते' इत्यथः । तच्च 'पूर्वत्रे'त्यनेनाऽन्वेति । एवञ्च 'द्वित्वभिन्ने पूर्वत्र इदमसिद्धमि'त्यर्थः । अत एव द्वित्वस्याऽन्यत्राऽसिद्धता भवत्येवेति संयोगसंज्ञासूत्रे कैयटे ध्वनितम् । अत्र 'द्वित्व'शब्देन षाष्ठम्, आष्टमिकं च गृह्यते । 'सन्यङोः' 'धातोरेकाच' इति सूत्रस्थभाष्यस्वरसात् ।

लिङ्गादिति । अन्यथा 'अनितेरि'त्यनेन कृतणत्वस्य द्विर्वचने, 'प्राणिणदि'त्यादेः सिद्धौ, 'उभौ' इति सूत्रं व्यर्थं स्यादिति भावः । एवञ्च णत्वविधावस्याऽनुपस्थानमिति तात्पर्यम् ।

विभाषोर्णोः । 'गाङ्कुटादिभ्य' इत्यतो ङिदिति, 'विज' इत्यत इडिति चाऽनुवर्त्तते ।

गुणोऽपृक्ते । 'नाऽभ्यस्तस्ये'त्यतः पितीत्याद्यनुवर्त्तते । 'उतो वृद्धी'त्यतो हलीति च ।

ऊर्णोते । 'सिचि वृद्धी'ति सूत्रं, 'नेटी'ति च वर्त्तते । निषेधविकल्पे विधिविकल्पस्य फलितत्वात्, नेति निवृत्तेर्वाऽऽह—वृद्धिर्वेति ।

ब्रुवः पञ्चानाम् । आद्यं 'ब्रुव' इति पञ्चम्यन्तम् । द्वितीयं षष्ठ्यन्तम् । 'विदो लटो वे'त्यतो 'लटो वे'ति वर्त्तते । चर्त्त्वमिति । न च 'आहस्त' इत्येव सूत्र्यताम् । महाप्राणाऽऽदेशप्रकरणत्यागस्याऽनुचितत्वादिति भावः ।

ब्रुव ईट् । हलादेः पित इति । 'सार्वधातुकस्ये'त्यपि बोध्यम् । 'नाऽभ्यस्तस्ये'त्यतः 'पिती'त्याद्यनुवर्त्तते । तेन ब्रुवो वचौ 'उवक्थे'त्यत्रेट्न[1] । 'अपृक्त' इति तु नाऽनुवर्त्तते । 'ब्रवीती'त्यसिद्ध्यापत्तेः । न च 'उवक्थे'त्यत्र परत्वादीडागमे, तत ईट्सहितस्याऽऽदेशे दोषाऽभावः, 'परस्मैपद'शब्देनाऽऽगमसहितस्य ग्रहणादिति वाच्यम् । प्रकृतिप्रत्ययविशेषनिरपेक्षत्वेन आदेशानामन्तरङ्गत्वात् ।

१ 'उवक्थेत्यत्र इट् नेत्याहुः' इति ख. ग. ङ. पाठः ।

केचित्तु झलि थत्वविधानेन स्थानिवत्त्वाऽभावस्य ब्रुव आदेशे सामान्यतया ज्ञापनात्, 'सार्वधातुके' इत्यस्याऽसम्बन्धेऽपि न क्षतिः। न च 'आत्थे'त्यत्र परत्वादीटि, पश्चात् 'ब्रुवः पञ्चानामि'त्यनेन तस्याऽऽदेशे ज्ञापकमसङ्गतमिति वाच्यम्। 'येन नाप्राप्ति'न्यायेन आदेशानामीडपवादत्वात्। 'पञ्चानामि'त्युक्त्या तिबादिष्वपि प्रत्येकं व्यापारसत्त्वादित्याहुः। वक्तीत्यङिति। प्रयोगस्थाऽनुकरणे अस्य, स्वतन्त्रस्य च विनिगमनाविरहादनुकरणमिति भावः।[1]

दीर्घ इणः। 'अत्र लोप' इत्यतः 'अभ्यासस्ये'ति, 'व्यथ' इत्यतो 'लिटी'ति चाऽनुवर्त्तते। कितीति किम्?। 'इयाय'। न च दीर्घे कृते, 'अभ्यासस्ये'तीयङि रूपसिद्धेस्तद्व्यर्थम्। परत्वाद्दीर्घे 'सकृद्गति'न्यायेन इयङनापत्तेः। अभ्यासविकारे बाध्यबाधकभावाऽभावे तु 'मीमांसते' इत्यादावित्त्वोत्तरं दीर्घवत्, कदाचिदियङुत्तरं दीर्घेऽनिष्टाऽऽपत्तेश्च। 'लिटी'ति स्वरूपकथनम्।

ईयतुरिति। ननु 'इ इ अतुसि'ति स्थिते अभ्यासदीर्घे, यण्यपि स्थानिवत्त्वेन सवर्णदीर्घस्य प्रवृत्तेः, अकृतव्यूहपरिभाषया यणभावे वा, सवर्णदीर्घे, अभ्यासदीर्घविधानसामर्थ्यात्पुनर्यणभावे,[2] 'ईअतुरि'ति प्राप्नोति। तत्राऽभ्यासदीर्घविधानसामर्थ्येन न सवर्णदीर्घबाधः। 'अनन्तरस्ये'ति न्यायेन, स्वविनाशकत्वेन च यण एव बाधात्। सवर्णदीर्घस्तु नाऽनन्तरो, न स्वस्वरूपनाशक इति चेन्न। पूर्वस्यैव विधौ स्थानिवत्त्वेन, यणि दीर्घाऽप्रवृत्तेः। बहिरङ्गकृतनिमित्तविनाशस्यैव अकृतव्यूहपरिभाषाप्रवृत्तिनिमित्ततया, यणंशे तदप्रवृत्तेश्चे[3]ति दिक्।

१ इतोऽग्रे—'एतेन 'शीघ्रोपस्थितिकत्वेन स्वतन्त्रस्यैव ग्रहणमि'त्यपास्तम्। अष्टाध्यायीस्थत्वेनाऽस्य प्रत्यासन्नत्वाच्चेत्यलम्' इति ग. पाठः।

२ 'सवर्णदीर्घोऽभ्यासदीर्घविधानसामर्थ्यात्' इति ग. पाठः।

३ इतोऽग्रे—'यणा दीर्घनिमित्तविनाशस्य संभावितत्वेन सवर्णदीर्घोऽप्रवृत्तेश्चेति दिक' इति ग. पाठः।

[1]आभीयत्वेनेति । 'लावस्थायामडि'ति पक्षे तु दोषशङ्कैव न। न च 'अजादीनामटा सिद्धमि'ति पक्षे अटि, 'अटश्चे'त्यपेक्षया परत्वात्, आङ्गत्वाच्च यणि, 'आयन्नि'त्यसिद्धिः । अन्तरङ्गत्वाद्वृद्धिप्रवृत्तेः । 'वार्णादाङ्गमि'ति त्वनित्यम् । न च वृद्धौ स्थानिवत्त्वेन इण्त्वात् यण् दुर्वारः । 'इण' इति सूत्रे 'एरि'त्यनुवर्त्त्य 'इण इवर्णस्ये'ति व्याख्यानेनाऽल्विधितया स्थानिवत्त्वाऽभावात् । 'अचः परस्मिन्नि'त्यपि न । अपूर्वविधि[2]त्वात् ।

इणोऽण इति । 'इणो यणि'त्यादौ सुप्रसिद्धत्वेन, 'एतेर्लिङी'त्यत्राऽस्यैव ग्रहणम् । उभयत इति । पूर्वपरशब्दाभ्याम्, अन्ताऽऽदिशब्दाभ्यां च विरोधस्य पुरःस्फूर्त्तिकत्वाद्विरुद्धाऽतिदेशद्वयस्य युगपदसम्भवः । यथा द्वयोरेकः प्रेष्यस्ताभ्यां युगपद्भिन्नदेशकार्ये प्रेरितोऽविरोधार्थी कस्यापि न करोति, तद्वदिति भावः । स्पष्टं चेदं भाष्ये । न त्विदं वचनमिति भ्रमितव्यम् ।

न चाऽन्तादिवद्भावप्रवृत्तावपि न क्षतिः । एकादेशे धर्मद्वयलाभेऽपि, उपसर्गात्परत्वस्य तासौ नित्याऽनिट्त्ववदशास्त्रीयत्वेनाऽतिदेष्टुमशक्यतया, तदभावेन ह्रस्वाऽप्राप्तेरिति वाच्यम् । 'पूर्वपरयोरि'त्याद्यनुवृत्त्या पूर्वाऽन्तवत्त्वाद्यतिदेशेन, पूर्वत्वाद्यतिदेशस्याऽपि सुलभत्वात् । पूर्वत्वादेः तद्घटितसमुदायधर्मत्वात् । शास्त्रीयत्वाच्च । तस्मात्परत्वं तु आर्थसमाजग्रस्तमित्याहुः । [3]एतद्विषये आद्यस्थानिवत्त्वं तु न । 'आनुमानिकस्थानित्वं विशिष्टस्यैव, न तु प्रत्येकमि'त्यदोषात् । श्रौतं तु वर्णयोरेवेति निरूपित-

१ 'आयन्निति । यण आभीयाऽसिद्धत्वादाट् । लावस्थायामडिति पक्षे तु' इति ग. पाठः ।

२ इतोऽग्रे 'अन्तरङ्गेण बाधितस्य भ्रष्टाऽवसरत्वान्न पुनः प्रवृत्तिरित्यन्ये' इति ग. पाठः ।

३ 'एतद्विषये आद्यस्थानिवत्त्वं तु न । परत्वेनाऽनेन बाधात् । एतन्निषेधेऽपि [1]सकृद्गतिन्यायात्तदप्रवृत्तिः' इति ख. ङ. पाठः ।

1 'भ्रष्टावसरत्वात्तदप्रवृत्तिः' इति ग. पाठः ।

मन्तादिवत्सूत्रे। 'अचः परस्मिन्नि'ति तु प्रवर्त्तते एव। अत एव 'प्लायते' इत्यादिसिद्धिः। 'एकदेशविकृत'न्यायस्य यथाऽत्र न प्रवृत्तिस्तथा स्थानिवत्सूत्रे निरूपितम्। भौवादिकस्येति। 'इट किटे'त्यत्र प्रश्लिष्टस्य आशीर्लिङीति भावः।

समेयादिति। अत्र आङ्पूर्व इण् बोध्यः। इह[2] 'आर्द्धधातुके' इति स्वरूपकथनम्। 'किति लिङी'त्येतावतैव सिद्धेः। नित्यमधिपूर्व इति। धातुसंज्ञा तु पाठाऽपेक्षणात्, भ्वादिसाहचर्याच्च अधिरहितस्यैव। क्रियावाचकत्वमपि काल्पनिकं तस्याऽस्त्येव। वस्तुतस्तु 'इ' इत्यस्यैव पठने वृत्तिः। अधिरुपरिभावे। उपरिभावश्च पठने नियमपूर्वकत्वमिति, नियमपूर्वकपठने एवाऽस्य प्रयोग इति, भूवादिसूत्रे भाष्यकैयटयोः स्पष्टम्। [3]लावस्थायामिति। इदं 'द्विर्वचनेऽची'त्यत्र भाष्ये। एतेन 'द्विर्वचनेऽची'ति निषेधात् इण एव द्वित्वे, उत्तरखण्डस्य गाऽऽदेशे, 'अधीगे' इति स्यादि'त्यपास्तम्। द्वित्वनिमित्ताऽज्निमित्तत्वाऽभावेन 'द्विर्वचनेऽची'त्यस्याऽप्रवृत्तेः।

विवक्षिते[4] इति। इदम् 'आर्द्धधातुके' इत्यत्र द्वितीयेऽध्याये भाष्ये, 'एकाच उपदेशे' इत्यत्र सप्तमे च। अत एव 'प्रत्ययोत्पत्तेः पूर्वमादेशा'[5] इति सिद्धान्तः। निर्देशान्नेति[6]। भिन्नकालप्रवृत्तिकेऽपि 'वार्णादाङ्गमि'त्यस्य प्रवृत्तिर्ज्ञाप्यते इति भावः।

१ इतोऽग्रे—'इदमुपलक्षणम्, 'न हि तरणिरुदीते' इत्यादिप्रयोगाऽनुरोधात् 'वी गतौ'त्यत्र प्रश्लिष्टस्य दीर्घस्याऽपि बोध्यम्' इति ख. ङ. पाठः। क. कुण्डलितः, मनोरमास्थत्वात्। २ इह = 'एतेर्लिङी'त्यत्र।

३ 'लावस्थायामिति। वार्त्तिकमते एतत्' इति ग. ङ. पाठः।

४ 'भाष्यमते आह—विवक्षिते' इति ख. ग. ङ. पाठः।

५ इतोऽग्रे—'अत्र पक्षेऽनैमित्तकत्वात्तस्याऽप्राप्तिरि'ति कश्चित्। 'उक्तयुक्त्यैवे'त्यन्ये' इति ख. ग. ङ. पाठः।

६ 'निर्देशान्नेति। व्याश्रयेऽपि वार्णादाङ्गमित्यस्य' इति ख. ग. ङ. पाठः।

परत्वादियङिति । इदं च सूत्रमते । 'लावस्थायामडि'ति पक्षेऽपि 'प्रत्यय' इत्यादिनिर्देशानां सामान्याऽपेक्षज्ञापकतया, कचिदन्तरङ्गादपि पूर्वमाङ्गप्रवृत्तेर्न दोषः । यथा चाऽत्र पक्षे न यण् तथा 'हुश्नुवोरि'ति सूत्रे उक्तम् । गाङादेशादिति । एतद्बीजं 'गाङ् गतावि'ति धातौ निरूपितम् ।

घुमास्था । 'जहाती'ति हाको ग्रहणम्, न हाङः । तस्याऽभ्यासे इत्त्वाऽऽपत्तेः । 'हाक' इति तु वक्तुमुचितम् । 'दीङो युडि'त्यतः 'क्ङिती'ति वर्त्तते । 'आर्द्धधातुके' इतिचाऽधिकृतम् । 'ईद्यती'त्यत 'ईदि'ति च वर्त्तते ।

इक् स्मरणे । 'इण्वदिक' इत्यादौ विशेषणाऽर्थः ककारः । केचित्त्विति । अत एव भाष्ये 'इणो गा लुङी'त्येतत्प्रकरणे इदं पठितम् । 'णौ गमि' 'सनि चे'ति सूत्रयोश्चाऽनुवृत्तिर्दर्शिता । अधीयन्निति । इयङि, सवर्ण-दीर्घः । राघवयोरिति । 'अधीगर्थे'ति कर्मणः शेषत्वेन षष्ठी ।

'चङ्क्रम्यमाणोऽधीष्वाऽत्राऽधीयंश्चङ्क्रमणं कुरु ।
तादर्थ्यस्याऽविशेषेऽपि शब्दाद्भेदः प्रतीयते' ॥

—इति 'ध्रुवमपाये' इति सूत्रस्थ-कैयट-लिखित-हरि-श्लोकेऽप्येवमेव । 'अधीयान'इति तूचितम्[1] । केचिदिति । अत्राऽरुचिबीजन्तु अट आभीयतया असिद्धत्वेनाऽनेकाच्त्वाऽभावः । लावस्थायामट्पक्षेऽप्युपपत्तिः 'हुश्नुवोरि'-त्यत्रोक्ता । 'अस्यार्द्धधातुके न प्रयोग' इति 'अज'धातावुक्तम् । ईकारो-पीति । तेन 'तरणिरुदीते' इत्यादिसिद्धिः[2] । केचित्तु[3] 'भावे निष्ठायां सप्तम्यन्तम् । उदयकाले इत्यर्थः । 'उदयती'ति शेषः, 'भवती'ति वे'त्याहुः ।

जुस्चेति । 'एव'कारस्तूत्तरत्र पठ्यमान-'लिट् च''लिङाशिषी'त्या-द्यर्थः । एवं 'नित्यं ङित' इत्यनुवृत्त्या सिद्धे, 'लङ्'ग्रहणं व्यर्थं सत्

---

१ 'इति पाठस्तूचितः' इति ग. पाठः ।

२ इतोग्रे—'कर्मव्यतीहारेऽयं तङ् । आविर्भावाऽर्थत्वात् 'न गती'ति निषेधो ने'त्याहुः । 'व्यतीहारस्याऽनेकनिष्ठत्वाच्चिन्त्यमिदमि'ति कश्चित् । केचित्तु भावे निष्ठायां सप्तम्यन्तम्' इति ख. ग. ङ. पाठः ।

३ 'केचित्त' इति क. नास्ति ।

लङ्वद्भावेन लङो व्यावृत्त्यर्थम्[1]। स्पष्टं चेदम् 'आत' इत्यत्र भाष्ये। विध्याशिषोः 'स्कोरि'ति सलोपे 'यायादि'त्येव रूपमिति, विशेषद्योतनाय द्विवचनमुदाहरति–यायातामिति। 'लिङः सलोप' इति सलोपः। आशिषि तु सुटः सकारस्य श्रवणात् 'यायास्तामि'त्येव।

पा रक्षणे। 'गातिस्था', 'घुमास्थे'त्यत्र च पिबतेरेव ग्रहणात् न ईत्त्व-सिज्लुकौ। प्रणिदातीति। घुत्वाऽभावात् 'शेषे विभाषे'ति वैकल्पिकं णत्वम्। सार्वधातुकमात्रेति। 'मात्र'शब्दोऽवधारणे। सस्थानत्वमिति। ख्शादित्वप्रयोजनकथनाऽवसरे वार्त्तिकमिदम्। 'शर्परे विसर्जनीय' इत्युक्तेः सस्थानत्वं = जिह्वामूलीयो व्यावर्त्त्यत्वेन प्रयोजनमित्यर्थः। फलित-माह–सस्थानत्वं जिह्वामूलीय इति। 'सस्थान' इति त्वपपाठः। 'त्व'स्या-ऽर्थोऽसङ्गतेः। यद्वा सस्थानत्वं = सस्थानशब्दः। तेन स्ववाच्यो जिह्वामूलीयो लक्ष्यते। अन्यथाऽस्मात्तृचि जिह्वामूलीयस्य दुर्वारत्वेन, भाष्याऽसङ्गतिः स्पष्टैव। प्रमाणानां सामान्ये पक्षपाताच्च सामान्यत एव आर्द्धधातुके प्रयोगाऽभावो ज्ञाप्यते। एवञ्च ख्याते[2] यत्वस्याऽसिद्धत्वादेव निष्ठानत्वाऽभावे सिद्धे, 'न ध्याख्ये'ति सूत्रे 'ख्या'ग्रहणं न कार्यमिति लाघवम्। 'निष्ठानत्वमाख्याते' इति भाष्यस्याऽप्यत्रैव[3] तात्पर्यम्। प्रख्याने णत्वाऽभावोऽपि यत्वस्याऽसिद्धत्वादेवेति दिक्। यत्तु हरदत्तेन—'अयं स्वतन्त्रधातुरपि ख्शादिः। शस्य 'य'वचनमपि साधारणमि'त्युक्तम्। तन्न। मानाऽभावात्। 'नटः ख्याती'त्यादावपि जिह्वामूलीयाद्यनापत्तेश्च।

---

१ 'लङ्वद्भावेन एतदप्रवृत्त्यर्थम्' इति लघुशेखरपाठः।

२ 'आख्याते' इति ग. पाठः।

३ इतोऽग्रे—'अस्य 'आख्याधातोर्निष्ठायां प्रयोगं स्वीकुर्वन् कैयटस्तु चिन्त्यः। भाष्यविरोधात्। अन्यथा 'न ध्याख्ये'त्यनेनैव सिद्धे, निष्ठानत्वस्य प्रयोजनत्वेनोपन्यासस्याऽसङ्गत्यापत्तेः। 'न ध्ये'त्यत्र तु 'अस्यतिवक्ती'ति सूत्रोक्तरीत्याऽस्यामस्त्येव' ? इति ग. पाठः।

संपूर्वस्येति । सार्वधातुकेऽपि नेति भावः । 'सङ्ख्ये'ति प्रयोगस्तु चक्षिङ एव । नाऽस्येति । 'घुप्रकृति-माङि'ति भाष्ये पाठादिति भावः ।

अयमन्तीति । आदादिक इत्यर्थः । शिष्टोक्तयेति भावः । आधृषीयस्तु प्रयुज्यते एव । स्वरे विशेष इत्याहुः ।

विदो लटो वा । 'विद' इति पञ्चमी । विन्दति-विद्यत्योस्तु न ग्रहणम् । विकरणव्यवधानेन लटस्ततः परत्वाऽभावात् । तदाह—वेत्तेरिति । अकारान्तनिपातनादिति । 'आम्संनियोगेने'ति शेषः ।

विदाङ्कुर्वन्त्विति । 'इतिः' प्रकारे । 'एवंजातीयके' इत्यर्थः । अत एव पुरुषवचने न विवक्षिते । न च लोट् अपि अविवक्षितः स्यादिति वाच्यम् । लोडुच्चारणवैयर्थ्याऽऽपत्तेः । पुरुष-वचनयोस्तु नाऽन्तरीयकमुच्चारणम् । 'उषविदे'ति 'आम्'विधानवैयर्थ्याऽऽपत्तेश्च । तत्र हि उषि-जागृभ्यां साहचर्यात्, व्याख्यानाच्च केवल[2]परस्मैपदिनो ग्रहणम् । प्रकृतेऽपि तस्यैव[3] । यङ्लुकि तु नेदं प्रवर्त्तते । तस्य च्छान्दसत्वात् । प्रकाराऽर्थकेतिशब्दस्य अव्याप्त्यतिव्याप्त्युभयवारकत्वाच्च । पूर्वोत्तरसाहचर्येण 'उषविदे'त्यस्याऽपि यङ्लुक्यप्रवृत्तिः । ध्वनितं चेदम् 'अप्राप्ते विभाषे'ति वदता भाष्यकारेण 'नवेति विभाषे'ति सूत्रे । 'इति'शब्दादेव परस्मैपदं विवक्षितम् ।

---

१ इतोग्रे—'ब्रुवः पञ्चानामि'ति साहचर्येणाऽऽदादिकस्यैव ग्रहणाच्च' इति ग. पाठः ।

२ 'आदादिकपरस्मैपदिनो' ग. पाठः ।

३ 'तस्यैव, उपस्थितत्वात्' इति ग. पाठः ।

४ इतोग्रे—'आख्यातप्राग्वर्त्तिभागे गुणाऽभावातिरिक्तस्याऽपि निपातनाश्रयणे गौरवाऽऽपत्तेः' इति ग. पाठः ।

५ इतोग्रे—'केचित्तु नाऽत्राऽपूर्वं आम् विधीयते, किन्तु क्रिटि विहितस्य लोटि प्रवृत्तिरित्येतावदेव बोध्यते, लाघवात् । एवञ्च गुणाऽभावार्थं यत्ना-ऽन्तरं नाऽऽश्रयणीयमिति लाघवम् । पूर्वसूत्रे आम्संनियोगेन अदन्तत्व-

तस्य लोकविवक्षाऽनुसारित्वात्। परस्मैपदं च कर्त्तृगामिक्रियाफलेऽपि। अनुप्रयोगविषये 'आमप्रत्ययवदि'ति सूत्रेण तथा निर्णीतत्वेनाऽत्राऽपि तथैवौचित्यात्। अत एव उपसर्गनिमित्ताऽऽत्मनेपदे विदेर्न आमादि। तद्वक्ष्यति—पुरुषवचने इति।

लोटो लुगिति। 'आम' इति सूत्रे 'लेरि'त्यनुवर्त्तते' इति मतेनेदम्। निष्कर्षे तु तेनैव लुगिति बोध्यम्।

गणकार्यस्येति। 'कृञ् हिंसायामि'त्यत उप्रत्ययाऽर्थमि'ति तु न वाच्यम्। तनादिसाहचर्येण तद्गणस्थस्यैव ग्रहणात्। एतदर्थमेव तद्गणे पाठः। क्रियासामान्यवाचित्वेनाऽन्वययोग्यत्वादत्राऽनुप्रयोगस्तनादेरेव। यङ्लुगर्थमपि न। अनुबन्धनिर्देशात्। ध्वनितं चेदं भाष्यादिष्विति भावः। न च धातूनामनेकार्थत्वादुत्पादने 'कृणोती'ति, हिंसायां 'करोती'-ति च दुर्वारम्। भाष्यादिप्रामाण्येनाऽत्र तदनङ्गीकारात्। (यद्यपि) कृञस्तनादिकार्याऽभावज्ञापनेनाऽपि तस्य चारितार्थ्यं वक्तुं शक्यं, तथाऽपीष्टाऽनुरोधादेवमेवाऽऽश्रितम्। अत एव 'अनुदात्तोपदेशे'तिसूत्रे 'अनुनासिक'ग्रहणं तनोत्यादीनामपि विशेषणं कृतमित्याहुः।

'अविश्वस्त' इत्यत्र इडभाव आगमशास्त्रस्याऽनित्यत्वाद्बोध्यः।

अत उत्। 'गमहने'त्यतः 'क्ङिती'ति वर्त्तते। 'नित्यं करोतेरि'त्यतः 'करोतेरि'ति। तदाह—उप्रत्ययान्तेति। तपरत्वसामर्थ्यादिति। इदं

---

निपातनादेव सिद्धिरित्याहुः'। इति ख. ग. ङ. पाठः। क. कुण्डलितः।

'वैपरीत्यस्याऽऽपत्तेरिदमयुक्तमि'त्यन्ये। कर्त्ता तु विवक्षित एव। बहुवचनेन तस्य प्राधान्यबोधनेन विवक्षितत्वबोधनात्। परस्मैपदस्य कर्त्तृगामिक्रियाफलसाधारणस्य विवक्षैव। अनुप्रयोगविषये' इति ग. पाठ.।

१ इतोऽग्रे—'कृञ् त्वत्र तनादिरेव। क्रियासामान्यवाचित्वेनाऽन्वययोग्यत्वात्। 'कृञ्चानुप्रयुज्यते' इत्येतत्साहचर्याच्च। अन्यथा उप्रत्ययादीनामपि निपात्यताऽऽपत्तौ, गौरवाऽऽपत्तिश्च' इति ग. पाठः।

स्थानिवत्सूत्रे भाष्ये स्पष्टम् । 'उद्वोढामि'तिवृद्धिवत्, 'लक्ष्ये लक्षणस्ये'ति-न्यायेनाऽप्येतद्वारयितुं शक्यम् । 'हलि चे'ति दीर्घस्तु न । बहिरङ्गत्वेन यणोऽसिद्धत्वात् । 'न भकुर्छुरामि'ति निषेधाच्च ।

लुकोऽसिद्धत्वादिति । 'सार्वधातुक'ग्रहणं स्पष्टार्थमिति भावः । केचित्तु 'सार्वधातुक'ग्रहणं भूतपूर्वगत्या सार्वधातुकलुक्यपि 'विदाङ्कुरु' इत्यादावुत्त्वाऽर्थम् । उत्तरत्र त्वस्य नोपयोग इति, तत्र-तत्र वक्ष्यते । एवं चेदम् 'आभात्'सूत्राऽनित्यत्वस्य ज्ञापकमित्याहुः ।

दश्च । 'सिपि धातोरि'ति सूत्रं, 'पदस्ये'ति, 'झलां जश' इत्यतः 'अन्ते' इति चाऽनुवर्त्तते । पदान्तस्येति किम् ? । 'वेत्सि' । चर्त्वस्याऽसिद्धत्वाद्दोऽस्त्यत्र ।

श्नसोर । तपरकरणं[1] तु असिद्धवत्सूत्राऽनित्यत्वबोधनायेति स्पष्टं भाष्ये । एतदर्थमेव 'अत उदि'त्यतः 'अत' इत्यनुवर्त्तमाने, पुनस्तपदम्[2] । तत्रत्यस्य ज्ञापकता वक्तुमशक्या । 'अस्ये'त्युक्तौ गौरवेण, लाघवाऽर्थं तपरकरणमि'त्यपि वक्तुं शक्यत्वादित्याहुः । 'श्नसोरि'ति शकन्ध्वादित्वात्पररूपम्[3] । 'श्न'साहचर्येणाऽस्तेरपि आर्द्धधातुके नेति सार्वधातुकाऽनुवृत्तिर्निष्फला । किञ्च तस्य तत्र 'भू'भावेन भाव्यम् । 'ईहामास' इत्यत्राऽपि द्वित्वे (अभ्यासविकारे बाध्यबाधकभावाऽभावेन) हलादिशेषे, 'अत आदेरि'ति दीर्घे[4], परस्याऽकारस्य लोपेऽपि क्षत्यभावादित्याहुः ।

आसिन्निति । 'आर्यन्नि'तिवत् अस्योपपत्तिः ।

उपसर्ग । 'परस्ये'ति सस्य विशेषणम् । नाऽस्तेः । तेन 'प्रादुरस्ती'-

---

१ इति = इत्यत्रेत्यर्थः ।

२ 'अत उदि'त्यतोऽत इत्यनुवर्त्तमाने पुनरद्ग्रहणं चिन्त्यप्रयोजनम्' इति ग. पाठः ।

३ इतोऽग्रे—'श्नाभ्यस्तयोरित्युत्तरसूत्रसाहचर्येणाऽत्रत्यपूर्वपदार्थस्य विकरणरूपस्यैव ग्रहणात्सिद्धमिति श्नकारोच्चारणं तदनित्यत्वज्ञापकमित्याहुः'इतिग.पाठः।

४ अर्थे ग. पाठः ।

त्यत्र न षत्वम्। ननु 'अस्तेरि'ति व्यर्थम्। सकारनिरूपितोपसर्गत्वस्य अन्यत्राऽसम्भवात्, प्रादुश्च कृभ्वस्तिविषय एवेति चेन्न। अनुसूते 'अनुसूः'। तस्याऽपत्यम् 'आनुसेय' इत्यत्र शुभ्रादित्वाड्ढकि 'ढे लोप' इति ऊलोपे सम्भवात्। 'प्रादुसि'ति सान्तमव्ययम्।

मृजू। भिदादौ 'मृजे'ति पाठादयम् अषित्। अयं चुरादावपि आधृषीयेषु पठ्यते।[1] 'मृजेर्वृद्धिरि'त्यत्र उभयोर्ग्रहणम्। द्वयोरूदित्करणेन समानत्वबोधनात्। तेन[2] 'अलुग्विकरणस्यैव ग्रहणं स्यादि'त्यपास्तम्। तन्न्यायाऽनित्यत्वाच्च। ध्वनितं चेदं वृद्धिसञ्ज्ञासूत्रे[3] आकरे।

धातुप्रत्यये इति। 'धातोः स्वरूपग्रहणे' इति परिभाषालब्धोऽयमर्थः। तेन 'परिमृड्भ्यामि'त्यादौ न[4]। अजादाविति। अत्र आद्यंशो 'यस्मिन्विधिरि'ति परिभाषालभ्याऽर्थोऽनुवादो, न वाचनिकः। गौरवात्। फलाऽभावाच्च। 'इको गुणवृद्धी' इति सूत्रभाष्यात्तथैव लाभाच्च।

मृड्ढीति। हेर्धिः। षत्व-ष्टुत्व-जश्त्वानि।

---

१ इतोऽग्रे—'अत एव आधृषीयपाठश्चरितार्थः। अन्यथा ऊदित्त्वेनैव णिज्विकल्पे सिद्धे, आधृषीयपाठो व्यर्थः स्यात्। मम तूदित्त्वस्य चारितार्थ्याण्णिज्विकल्पो न सिध्येत्, अत्रोभयोर्वा ग्रहणं न सिध्येदित्येतत्पाठ आवश्यक एव' इति ग. पाठः।

२ 'एतेन' इति ख. ग. ङ. पाठः।

३ 'मृज्वादीनां स्वरूपेणाधृषीयेषु पाठे फलं चिन्त्यमेव। 'अशोकवनिका'-न्यायेनैव उभयोरपि तत्र पाठ इति लुग्विकरणेतिन्यायाऽनित्यत्वादेवोभयोरत्र ग्रहणमि'त्यन्ये' इति ग. पाठः।

४ इतोऽग्रे—'अत एव 'मर्मृष्ट' इत्यादौ यङ्लुकि अङ्गत्वे 'न लुमते'ति निषेधाऽप्रवृत्त्या, प्रत्ययलक्षणेनाऽङ्गत्वेऽपि वृद्धिर्न। प्रकारान्तरेणाऽपि प्रत्ययस्य निमित्तत्वे 'न लुमते'ति निषेधात्। 'क्ङिती'त्यस्य निमित्तसप्तमीत्वेन प्रत्ययलक्षणाऽनुपयोगात्। 'क्ङिति चे'ति निषेधाच्च' इति ग. पाठः।

रुदादिभ्यः । सार्वधातुके किम् ? । 'स्वप्ता' । परत्वादिति । इटि कृते निर्दिश्यमानस्य व्यवहितत्वात्, हित्वाऽसम्भवः । धिभावे कृते च शास्त्राऽन्तराऽपेक्षां विना इटोऽसम्भव इति विरोधोऽस्ति । स्थानिवद्भावादि-शास्त्राऽन्तरसापेक्षसम्भवो न विप्रतिषेधविरोधी । 'शिष्टादि'त्यादौ परत्वा-त्तातङि सकृद्गतिन्यायेन शाभावो ने'ति स्थानिवत्सूत्रभाष्यादिति भावः ।

रुदश्च । हलादेः किम् ? । 'व्यत्यरुदि' । सार्वधातुकस्येति किम् ? । 'अस्वाप्सीत्' । अपृक्तस्य किम् ? । 'रोदिति' । पञ्चभ्यः किम् ? । 'अजागः' । यद्यपि 'तुरुस्तु' इत्यत्रैव 'पिती'त्यस्य निवृत्तेः 'पित' इति दुर्लभम्, अपृक्ताऽपितोऽसम्भवेन निष्फलं च, तथापि स्वरूपकथनं बोध्यम् । अरुदितामिति । प्रकृतिविशेषाऽपेक्षेडपेक्षयाऽन्तरङ्गत्वात् तामादयः । तत इट् । अन्यथा इटि निर्दिश्यमानतसस्तेन व्यवहितत्वात्तामा-दयो न स्युः । स्पष्टं चेदं 'पादः पदि'त्यत्र भाष्ये । प्रकृतीति । प्रत्यय-विशेषाऽपेक्षयासुडपेक्षयाऽन्तरङ्गत्वात् 'इतश्चे'ति लोपे, यासुडीटोः प्राप्तयो-रन्तरङ्गत्वाद्यासुडित्यर्थः । ईदृशमन्तरङ्गत्वं च मतुप्विधायके भाष्ये उक्तम् । 'सामान्यधर्माऽपेक्ष-शास्त्राऽपेक्षया कश्चिद्विशेषधर्मोऽधिको निमित्त-कोटौ यस्मिन्विशेषाऽपेक्षशास्त्रेऽस्ति, तत् ततो बहिरङ्गमि'ति तदर्थः । यथाऽत्र रुदादित्वं, सार्वधातुकत्वं चेति बोध्यम् । सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं, प्रत्ययस्य तत्त्वज्ञानं चाऽऽवश्यकमिति, सामान्यधर्म-निमित्तकत्वमत्राऽप्यस्तीति बोध्यम् । 'नित्यत्वादि'त्यपि बोध्यम् । यासुटि कृते तु न अडीटोः प्राप्तिः । अपृक्तत्वाऽभावात् ।

१ इतोऽग्रे—'धित्वं नेति । सकृद्गतिन्यायादिति भावः' इति ख. ग. ङ. पाठः ।

२ 'हलादिसार्वधातुकाऽपृक्ताऽपितः' इति ख. ग. ङ. पाठः ।

३ 'यत्र सामान्यधर्मापेक्षशास्त्राऽपेक्षया' इति ग. पाठः ।

४ इतोऽग्रे—'न चैवं यासुटि अपृक्तत्वस्य विनाशोन्मुखत्वेन अडीटोः प्राप्तिरेव नेति वाच्यम् । बहिरङ्गकृतनिमित्तविनाशसम्भावनाया एव तत्प्रवृत्ति-निमित्तत्वात्' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

सुविनिर्दुर्भ्यः । अत्राऽपि 'उपसर्गादि'ति वर्त्तते' इति कैयटस्वरसः । 'सुपी'ति आगन्तुना इकारेण कृतसम्प्रसारणस्याऽनुकरणम् । 'सूती'ति क्विन्नन्तम् । न श्तिपा निर्देशः । गुणाऽऽपत्तेः । 'समे'ति पचाद्यजन्तसाहचर्येण तस्याऽपि कृदन्तस्यैव ग्रहणाच्च ।

षत्वे कृते द्वित्वमिति । अत एव 'षुपिभूतो द्विरुच्यते' इति भाष्यं सङ्गच्छते । सुपिरूपाऽभावादिति । 'अर्थवत्सुपिरूपाऽभावादि'त्यर्थः । अन्यथा एकदेशविकृतन्यायेन तत् दुर्वारं स्यात् । द्वित्वे कृते केवलाऽभ्यासस्य नाऽर्थवत्त्वमिति स्पष्टमत्रैव भाष्ये ।

अनितेः । 'उपसर्गादसमासे' इत्यत 'उपसर्गादि'ति वर्त्तते । 'नो ण' इति च । तदाह–उपसर्गस्थादिति । 'अनितेरि'ति 'समीपे' इत्यध्याहृताऽपेक्षया षष्ठी । एवञ्च 'अनितेः समीपे यो रेफस्तस्मान्नस्य णत्वमि'त्यर्थः । समीपपदाऽध्याहाराच्च सामीप्यमव्यवहितमेव गृह्यते । 'प्राणिती'त्यत्राऽपि परादिवद्भावेन एकादेशस्य अनित्यव्यवहितत्वं रेफस्याऽस्त्येव । 'पर्यनिती'त्यादौ यकारेण व्यवधानान्न तथात्वम् । 'प्राणिती'त्यत्र स्थानिवत्त्वन्तु न । अपूर्वविधित्वात् । भाष्ये त्वन्तग्रहणमत्राऽऽकृष्य समीपाऽर्थत्वमाश्रित्य, पञ्चम्या, सप्तम्या वा विपरिणम्य च उक्ताऽर्थः साधित इति दिक् ।

अन्तापवाद इति । 'दधती'त्यादावपि 'उपजनिष्यमाणोऽप्यपवाद' इत्यन्तरङ्गोऽप्यन्तादेशो न । 'प्रकल्प्य चाऽपवादविषयमि'ति भाष्यमूलकमेतत् । 'प्रकल्प्ये'त्यस्य 'परित्यज्ये'त्यर्थ इत्याहुः । 'अपवादो यद्यन्यत्र चरितार्थ' इति न्यायस्य तु न विषयः । अन्तादेशाऽप्राप्तिविषये चारितार्थ्याऽभावात् । 'ईत्संन्ती'त्यादौ च नेदं प्रवर्त्तते । ('उभे'ग्रहणसामर्थ्येन, 'अभ्यस्तमि'ति महासंज्ञाकरणेन च ) अभ्यासलोपे अभ्यस्तसंज्ञाया एवाऽभावात् । यथा चैतत्तथा 'उभे अभ्यस्तमि'ति सूत्रे निरूपितम् ।

---

१ 'प्रकल्प्य वाऽपवादविषयम्' इति क. पाठः ।

२ अयं ग. पाठः ।

'अनत' इत्यपकर्षाच्च। अत एव 'प्रतीषिषन्ती'त्यादौ न दोषः। बभ्रामेति। 'जक्षन् क्रीडन् रममाण' इत्यादौ जक्षादित्वस्य सर्वसंमतत्वादिति भावः।

जाग्रो। चिण्णल्पर्युदासेन वृद्धिविषयस्य ग्रहणम्, ङित्पर्युदासेन प्रतिषेधविषयस्येति बोध्यम्। अत्र 'वि'शब्देन औणादिको 'विन्' गृह्यते। 'जागृविः'। न चाऽयं ङित्कर्तुं शक्यः। 'दर्वि'रि'त्यादौ गुणाऽनापत्तेः। (प्रकृतसूत्रस्थभाष्यविरोधाऽऽपत्तेश्च)[1]। किन्तु न गृह्यते। च्विणादिसाहचर्येण श्रूयमाणस्यैव वेर्ग्रहणात्। जागृवौ[2] लक्षणाऽन्तरेणाऽपि गुणो न। 'वि'ग्रहणसामर्थ्यात्। न च वकारादीत्यर्थात्कसुर्व्यावर्त्त्यः। लिडादेशत्वात्कित्त्वे लब्धे, पुनः कित्करणस्य प्रतिषेधविषयगुणबाधनार्थत्वात्। अत एव 'तितीर्वानि'त्यादिसिद्धिः। स्पष्टं चेदं भाष्ये।

जुसि च। यत्तु 'मिदेर्गुणोऽजुसी'ति संहितापाठे 'अजुसी'ति च्छित्वा 'अजादावुसी'त्यर्थान्न दोषः 'जागृयुरि'त्यत्रेति। तन्न। 'चक्रुः' 'जहुरि'त्यादावतिप्रसङ्गात्। अतः 'क्सस्याऽची'त्यतः 'अची'त्यनुवर्त्त्य व्याचष्टे—अजादौ जुसीति[3]। ननु 'अजागरुरि'त्यत्राऽस्योपन्यासो व्यर्थः। आतिदेशिकङित्त्वेऽपि ङिद्भिन्नत्वाऽनपायेन 'जाग्र' इत्यनेनैव सिद्धेरिति चेन्न।

---

१ अयं ग. पाठः।

२ 'अत एव तत्र लक्षणाऽन्तरेणाऽपि' इति ग. पाठः।

३ इतोऽग्रे—'अय् जुसी'तिच्छित्वा अयकारादौ जुसीति सूत्रस्य भङ्क्त्वा व्याख्यानन्तु क्लिष्टम्। भाष्याऽरूढस्पष्टसमाधानस्य मदुक्तस्य लाभात्। यत्तु 'शृणुयुरि'त्यादौ यासुटो ङित्वान्न गुण' इति। तन्न। जुसि गुणस्य निषेधाऽपवादत्वात्।[1] श्नोर्ङित्त्वेऽपि 'न हि कार्यी'तिन्यायेन तन्निमित्तनिषेधाऽप्राप्तेः। अत एव 'शृणोती'त्यादौ गुण इति बोध्यम्' इति ख. ङ. पाठः।

---

1 'यासुटः पूर्वस्य श्नोर्ङित्वान्न गुण इति भङ्क्त्वा व्याख्यानन्तु क्लिष्टम्' इति ग. पाठः।

प्रसज्यप्रतिषेधेऽप्राप्तेः। अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याऽभावाच्च। एवञ्च चिण्वदिट्यपि गुणो नेति बोध्यम्।

निषिध्यत इति। न च 'जागरक' इत्यत्र गुणे कृते, 'अत उपधाया' इति वृद्धिः स्यादिति वाच्यम्। चिण्णल्प्रतिषेधवैयर्थ्याऽऽपत्त्या जागर्त्तेर्गुणे, उपधावृद्ध्यभावस्य कल्पनात्।

इद्दरिद्रस्य। 'दरिद्र'शब्दप्रकृतेर्धातोरित्यर्थः। 'दरिद्र' इति वक्तु-मुचितम्। 'ई हल्यघोरि'त्यस्याऽपवादोऽयम्। आर्द्धधातुके लोपविधाना-त्सार्वधातुके एवेदम्। लोपोत्तरन्तु नाऽस्य प्रवृत्तिः। 'आत' इत्यनुवृत्तेः।

अभ्यस्तयोः। अनयोरात इति। 'आ'साहचर्येणाऽन्त्यस्यैव ग्रहात्, 'जाग्रती'त्यत्र न दोषः। 'आकारान्तयोरि'त्यर्थस्तूचितः। 'आ'साहचर्येण अभ्यस्तस्याऽपि सार्वधातुके एव लोप इत्याशयेनाऽऽह–सार्वधातुके इति।

दरिद्राञ्चकारेति। इदं च 'कास्प्रत्ययादि'ति सूत्रे भाष्ये स्पष्टम्। ओ इत्येवेति। प्रथमोपस्थितत्वात्, औकारस्य विवृततरत्वेन प्रयत्नलाघ-वाच्चेति भावः। आलोपे इति। न च परत्वादौत्वे संनिपातपरिभाषया लोपो दुर्लभ[1] इति वाच्यम्। आर्द्धधातुके विवक्षिते तद्विधानात्[2]। 'औ'-विधानसामर्थ्यादेव भूतपूर्वगत्याऽऽकारान्तत्वमाश्रित्य णल आदेशः[4]। ध्वनितं चेदं मतं 'वस्वेकाजादि'तिसूत्रे भाष्ये। यद्यपि 'अङ्ग'संज्ञाया विधानप्रतिबद्धतया, अङ्गाऽधिकारे विवक्षितसप्तमी वक्तुमशक्या, तथाऽप्यत्र लक्ष्याऽनुरोधादङ्गाऽसम्बन्धः, भाविसंज्ञाविज्ञानं वेत्याहुः।

ददरिद्रतुरिति। न च णल्येव आम् माऽस्तु, अन्यत्र तु तेन नित्यं

---

१ इतोऽग्रे—'ह्रस्वान्तनिर्देशेनाऽकारान्तत्वबोधनद्वारा 'दरिद्रातेरार्द्धधातुके' इति वचनं ज्ञाप्यते इत्याहुः' इति ग. पाठः।

२ 'दुर्लभः। अकृतव्यूहपरिभाषयौत्वस्याऽप्यप्राप्तेश्चेतिवाच्यम्' इति ग. पाठः।

३ 'विवक्षिते तद्विधानेन लोपस्याऽन्तरङ्गत्वात्' इति ग. पाठः।

४ 'आदेश इत्याहुः। एके इति। ध्वनितं चेदं मतम्' इति ख. ग. पाठः।

भाव्यमिति वाच्यम् । 'ददरिद्रवान्' इत्यत्राऽऽप्यामोऽदर्शनात् । विवक्षित इति । तेन दरिद्रातीति 'दरिद्र' इत्यत्र अजेव, न तु 'श्याद्व्यधे'ति णः । णे हि युक् स्यात् । लोपस्तु न । 'संनिपात'परिभाषाविरोधात् ।

**सनि ण्वुलीति** । अनन्तरस्येति न्यायेन वार्त्तिकप्राप्ताऽऽल्लोपस्यैव निषेधोऽयम् । तेन इट्पक्षे 'दिदरिद्रिषती'त्यत्र 'आतो लोप' इति लोपो भवत्येव । अत एव भाष्ये 'दिदरिद्रिषतीत्येके, दिदरिद्रासतीति वे'ति । अत्राऽपि 'सनि विवक्षिते ने'त्यर्थः । विध्यनुरोधात् । [1]अदरिद्रुरिति । 'सिजभ्यस्ते'ति जुस् । परत्वात् 'श्नाभ्यस्तयोरि'त्यालोपे, आकारान्तत्वाऽभावात् 'लङः शाकटायनस्यैवे'ति विकल्पो न । न च 'दरिद्रा झो'ति स्थिते आल्लोपाऽपवादतया 'ई हल्यघोरि'त्यतो 'हली'त्यनुवर्त्तमाने 'इद्दरिद्रस्ये'ति स्यादिति वाच्यम् । अकृतव्यूहपरिभाषयाऽप्रवृत्तेः । जुसि हलादित्वस्य विनाशात् ।

**अदरिद्रासीदिति** । न च 'यमरमे'ति सूत्रे 'एकाच' इति वर्त्तते । तदुक्तं 'वदव्रजे'ति सूत्रे भाष्ये—'एकाचस्तौ वलीति चे(ती)'ति वाच्यम् । 'इद्दरिद्रस्ये'तिसूत्रस्थ'अदरिद्रासीदि'तिप्रयोगपरभाष्यविरोधेनाऽस्यभाष्यस्य प्रौढिवादपरत्वात् । ध्वनितं चेदं कैयटे । **एके इति** । तथा च 'धि चे'त्यत्र 'सिचो ग्रहणं कर्त्तव्यमि'ति वार्त्तिकम् ।

**भाष्यमिति** । 'न हि सिच्पदाऽनुवृत्तिरस्ति । अपूर्वकरणं चाऽनिष्टाऽऽवहम् । इष्टमेवैतत् 'चकाधी'ति भाष्ये स्पष्टम् ।

**तिप्यनस्तेः** । अनस्तेः किम् ? । 'सर्वम् आ इदम्' । 'आ' इति लङि तिपि अस्ते रूपम् । 'बहुलं छन्दसी'तीट् न ।

**सिपि धातोः** । 'सिपि वे'त्येव दत्वविकल्पे, सामान्यसूत्रेणैव रुत्वसिद्धौ, 'धातो रुरि'ति 'दश्चे'त्युत्तराऽर्थम् । 'यत्तु 'अत्राऽप्यनस्तेरित्यनु-

---

१ 'अदरिद्रुरिति' इत्यारभ्य 'विनाशात्' इत्यन्तः ख. ग. ङ. पाठः । मनोरमास्थत्वात् क. नास्ति ।

वर्त्तते' इति। तन्न। 'रुर्वे'ति विकल्पस्य सत्त्वात् पठ्यमानरूपस्य सिद्धत्वेन, आपाद्यरूपस्य वेदेऽभावेन, अनुवृत्तेर्निःफलत्वात्। न च 'ससजुषोरि'त्यनन्तरम् 'अस्तेरि'ति रुत्वविधायकेन दत्वबाधनाऽर्थेन सिद्धेः, 'अनस्तेरि'ति व्यर्थमिति वाच्यम्। वैचित्र्याऽर्थत्वात्। 'मात्रालाघवेऽपि योगविभागो गरीयानि'त्यर्थज्ञापनाऽर्थमि'ति कश्चित्।

पक्षे द इति। स च जश्त्वेनेति भावः। ( धातुग्रहणं 'धातुरेव यो धातुरि'त्यर्थबोधनेन नामधातुव्यावृत्त्यर्थमिति कश्चित् )।

शास इद्। 'अङ्योग्यस्यैव शासेर्ग्रहणात् 'आशास्ते' इत्यादौ ने'ति कैयटः। 'आशीरि'ति तु 'क्षीयाऽऽशीरि'ति निपातनात्सिद्धम्।

शा हौ। इत्त्वाऽपवादोऽयम्। यद्यपि पूर्वसूत्रे 'उपधा'पदाऽनुवृत्तेः 'शास' इत्यवयवषष्ठी, तथाऽपीह स्थानषष्ठ्येव। 'उपधा'पदनिवृत्तेः।

असिद्धत्वादिति। 'शास् हावि'ति च्छेदेन शासादेशे, धौ, सलोपे, नाऽसिद्धत्वोपयोग इति स्पष्टं भाष्ये। पञ्चेति। 'दीधीवेवी'तिसूत्रे 'दीधीवेव्योश्छान्दसत्वादि'ति भाष्यात्, 'जक्षित्यादय' इति सूत्रे 'षसि-वसी छान्दसावि'ति भाष्याच्चेति बोध्यम्।

यीवर्णयोरिति। 'यिश्च इवर्णश्चे'ति द्वन्द्वः। 'यि' इत्यत्र इकार उच्चारणाऽर्थः। तदाह—यकार इति। 'यिवर्णयोरि'ति पाठस्तूचितः। टेरेत्त्वमिति। यत्तु 'यीवर्णयोरि'त्यत्र 'यि-इवर्णयोरि'ति च्छेदः। अत एव इकारोच्चारणं चरिताऽर्थम्। 'इवर्णयोरि'त्येकशेषे द्विवचनम्। 'यकारे, इवर्णे, इवर्णे च परत' इति सूत्राऽर्थः। एतत्सामर्थ्याद्विकृतेऽपि तस्मिन्भूतपूर्वगत्या लोपः। अत एव आदीधयतेः 'आदीधक' इति सिद्धम्। णिलोपेऽपि ईलोप-

---

१ अयं ग. पाठः।

२ 'यीवर्णयोरि'त्यत्र समाहारद्वन्द्वगर्भेतरेतरयोगः। 'यकारे, इकारे, वर्णे च परत' इति सूत्राऽर्थः। तत्र संनिहितत्वाद्वर्णशब्देन इवर्ण एव। तत्सामर्थ्यात्' इति ग. पाठः।

सिद्धेः । ध्वनितं चेदं 'नाऽग्लोपी'ति सूत्रे भाष्यकैयटयोः । तत्र हि 'वर्णग्रहणसामर्थ्याद्विकृतेऽप्यस्य प्रवृत्तिरि'त्युक्तम् । एवं च 'दीध्ये' इत्यत्र लोपो दुर्वार'इति । तन्न । 'अचः परस्मिन्नि'ति सूत्रस्था'ऽऽदीध्ये' इतिभाष्यप्रयोगेण विकारस्य लोपरूपस्यैव ज्ञाप्यकोटौ प्रवेशात् । वस्तुतो 'नाग्लोपी'तिसूत्रस्थं भाष्यं न वर्णग्रहणप्रयोजनतात्पर्यकम् । अन्तरङ्गत्वेन णिलोपात्पूर्वं 'यीवर्णयोरि'ति लोपे 'आदीधक' इत्यस्य सिद्धेः, फलाऽभावात् । न च 'अकृतव्यूह'परिभाषया दोषः । तस्या असार्वत्रिकत्वात् । किन्तु तस्य प्रयोजनाऽन्तराऽभावबोधनतात्पर्यकम् । इदमेवाऽभिप्रेत्य 'दीधीवेवीटामि'त्यत्र कौस्तुभे उक्तम्—'वर्णग्रहणं भाष्ये प्रत्याख्यातमि'ति । एतेन 'वर्णग्रहणसामर्थ्यात् श्रूयमाणेवर्णे एव लोपः । तेन आदीधयतेरादीध्यक इत्येवे'ति हरदत्तोक्तम्, 'इवर्णयोरि'ति द्विवचननिर्देशादि'त्यन्योक्तं च परास्तम् । 'यी'तीकारस्य उच्चारणमात्राऽर्थत्वात् । 'वर्ण'ग्रहणं तु स्वरूपकथनपरमेवेति दिक् ।

षस सस्ति । 'जक्षित्यादय' इति सूत्रस्थभाष्यस्वरसात्तु 'सस्ति'-धातुरत्र नास्तीति प्रतीयते । तत्रैव कैयटे—'षस शास्ति स्वप्ने' इत्येके पठन्ती'त्युक्तम् । धातुवृत्त्यनुरोधी तु मूलपाठः । असः, असदिति । 'सिपि

---

१ 'इतोग्रे—'स्थानिवत्त्वस्य दुर्वारत्वेन निमित्तविनाशाऽभावात् । न चेदृशे विषये स्थानिवत्त्वप्रवृत्तौ 'नाग्लोपी'ति सूत्रे 'अग्लोपि'ग्रहणं व्यर्थं सत् इत ऊर्ध्वं स्थानिवत्त्वाऽभावस्य ज्ञापकमिति वाच्यम् । अगनग्लोपेऽपि अज्झलादेशोऽजादेशो नेति भाष्यकारेणैव निर्णीतस्य 'अत्यरराजदि'त्यर्थमग्लोपिग्रहणसार्थक्यात् । चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधस्य सत्त्वेनाऽन्यत्याऽग्लोपिग्रहणस्य चरितार्थतया इत ऊर्ध्वं स्थानिवत्त्वाऽभावज्ञापकत्वाऽसम्भवाच्च' इति ग. पाठः ।

२ 'भाष्यानुरोधाद्वषट्कार इत्यादिस्थकारप्रत्ययादीनामिव वर्णग्रहणे न्यायप्राप्तार्थानुवादकल्पनस्यैवौचित्यादिति दिक्' इति ग. पाठः ।

धातोरि'ति रुः। पक्षे जश्त्वम्। सन्तीति। इदित्त्वान्नुमि, 'स्कोरि'ति सलोपे, 'झरो झरी'ति पक्षे तलोपः। इत्येके इति। अत्राऽरुचिबीजं 'हलोऽनन्तरा' इति सूत्रस्थभाष्यविरोधः।

वश कान्तौ। अस्य च्छान्दसत्वात् 'वष्टि भागुरिरि'त्यादिप्रयोगोश्चिन्त्याः। यत्तु 'च्छान्दसा अपि क्वचिद्भाषायामिति समाधेया' इति। तन्न। तज्ज्ञापकस्य'वयस्यासु मूर्ध्नः'[2] इति सूत्रप्रयोगस्य 'च्छन्दोवत्सूत्राणी'ति-भाष्यकारेष्ट्याऽन्यथासिद्धत्वात्। उड्ढीति। सम्प्रसारण-धित्व-षत्व-जश्त्व-ष्टुत्वानि। अवड्ढिति। लङि हल्ङ्यादिलोपे, षत्व-जश्त्व-चर्त्वानि।

औष्टामिति। सम्प्रसारणे अजादित्वादाट्। न च 'लावस्थायामडादि रि'ति 'न माङ्योगे' इति सूत्रभाष्योक्तपक्षे आट् दुर्लभ इति वाच्यम्। भाव्यजादेरप्याड्विधानान्न दोषः। तस्मिन्पक्षे इत एवाऽस्वरसात् अटैव सिद्धिं सम्पाद्य, आटस्तत्रैव प्रत्याख्यानाद्वा अदोषः।

चर्करीतं चेति। यङ्लुगन्तस्य संज्ञा[3]। अदादाविति। तेन यङ्लुगन्ताच्छपो लुगिति बोध्यम्। परस्मैपदिन उपक्रम्याऽस्य पाठात्, अस्य परस्मैपदित्वमपि बोध्यम्।

इत्यदादयः।

## अथ जुहोत्यादिप्रकरणम्।

भाष्यमिति। 'तृतीया च होरि'त्यत्रेति भावः। दानं प्रसिद्धं चेत् 'विप्राय जुहोती'त्यपि स्यादत आह—प्रक्षेप इति। देवतोद्देशेन त्यक्तस्य विनियोग इत्यर्थः। वैधे—आहवनीयाऽग्न्यादिरूपे। तत्र प्रज्वालनाय प्रक्षिप्यमाणकाष्ठादावतिप्रसङ्गनिवृत्तये आह—हविषश्चेति।

---

१ 'प्रयोगाश्छान्दसा अपि क्वचिद्भाषायामि'ति समाधेयाः' इति ग. पाठः।

२ 'मूर्ध्नो मतुबि'ति' इति ख. पाठः।

३ 'चर्करि-इतम् = तत्सदृशमित्यर्थः। 'हलदन्तादि'ति सप्तम्या अलुक्' इति ग. ङ. पाठः।

परस्मैपदिन इति। 'जुह्वान' इति तु चानशि बोध्यम्। 'होष्ये' इत्यादिकन्तु प्रामादिकमेव। जुहुत इति। अत्र यथा न गुणस्तथोक्तम्।

परत्वादिति। 'हुश्नुवोरि'त्येतदपेक्षयेति बोध्यम्।

भियोऽन्य। 'अत उदि'त्यतः 'सार्वधातुके' इति, 'गमहने'त्यतः 'क्ङिती'ति चाऽनुवर्त्तते। तदाह–क्ङितीत्यादि। वस्तुतोऽत्रानयोर्नोपयोगः। अक्ङिति गुणस्य सत्त्वात्। 'भीत' इत्यादौ 'अभ्यस्तस्ये'त्यनुवृत्त्या न दोषः। यङि तु 'अकृत्सार्वे'त्यनेन कृतेऽप्यस्मिन् दीर्घसिद्धेर्न दोषः। अतो यङ्लुकि, आशिषि च न दोषः। यद्यपि अजादौ 'एरनेकाच' इति यणा भाव्यम्, तथापि 'हली'त्युत्तराऽर्थम्।

पृ पालन। दीर्घोच्चारणं 'पिपूर्त्त' इत्यादावुत्वाय।

उदोष्ठ्य। अङ्गावयवेति किम्?। 'ऋ गतौ' इति क्र्यादेः क्ते 'समीर्ण' इति यथा स्यात्। गुणे प्राप्ते इति। अनन्तरत्वादस्यैव बाध इति भावः।

शॄदॄप्राम्। ह्रस्वविधानस्य कित्येव फलमिति सूचयितुं 'किती'-त्युक्तम्। न च प्रकृतो गुण एव विकल्प्यताम्, किं ह्रस्वविधानेनेति वाच्यम्। गुणाऽभावे 'वार्णादाङ्गमि'ति यणं बाधित्वा उत्वाऽऽपत्तेः।

डुभृञ्। चान्द्रा एनं द्वितं पठन्ति।

भृञामित्। बहुवचनात् आद्यर्थोऽवगतिः। ते च कपिञ्जलाधिकरण-न्यायेन त्रय एवेत्याह—त्रयाणामिति। 'निजामि'त्यतस्तदनुवर्त्तते' इत्यन्ये।

ई हल्य। 'श्ना'साहचर्यादभ्यस्तांशेऽपि सार्वधातुके एवेदं प्रवर्त्तते।

१ 'यङि तु यकारेण सह द्विर्वचनाच्च 'भी'त्यभ्यस्तम्। 'अकृत्सार्वे'त्यनेन दीर्घसिद्धेश्च' इति ग. पाठः।

२ इतोऽग्रे—'पूर्वोत्तरसाहचर्येण तत्राऽप्रवृत्तेश्च' इति ग. पाठः।

३ इतोग्रे–'यङ्लुकि रुगाद्यभावाय, 'पिपूर्त्त' इत्यादौ उत्वाय च' इति ग.पाठः।

न च[1] 'मिमीते' इत्यत्र 'घुमास्थे'त्येव सिद्धम्। तत्राऽऽर्द्धधातुकाऽधिकारात्। 'आर्द्धधातुकाऽधिकारो 'न ल्यपी'ति यावदि'ति वृत्त्युक्तेः। अन्यथा लुग्विकरणपरिभाषा-निरनुबन्धकपरिभाषाभ्यां 'मा'ग्रहणेन आदादिकस्याऽपि ग्रहात् 'मातः' 'माथ' इत्यादावतिप्रसङ्गः स्यात्। न चाऽयं शप्विकरण एवाऽस्तु। एवञ्च 'कृदतिङि'तिसूत्रस्थभाष्यरीत्या एकादेशे कृतेऽपि 'अचः परस्मिन्नि'ति स्थानिवत्त्वेन व्यवधानान्नेत्वमिति वाच्यम्। 'मात' इत्यादावदुपदेशात्परत्वेन लसार्वधातुकाऽनुदात्तत्वाऽऽपत्तेः। 'गाधातुरादादिक' इति हरदत्तादिमते 'गाते' इत्यादावप्यतिप्रसङ्गः। लुङि, सिज्लुकि 'अधातामि'त्यादावतिप्रसङ्गश्च[2] स्यादिति दिक्। 'न ल्यपी'त्यत्र तु व्यभिचाराऽभावादसम्बन्धः।

जहातेश्च। 'अभ्यस्तस्ये'त्यनुवृत्त्या अस्य सार्वधातुके एव प्रवृत्तिः। एवं 'लोपो यी'त्यस्याऽपि। दत्त इति। 'अघोरि'ति प्रतिषेधात् ईत्त्वाऽभावे, 'श्नाभ्यस्ते'ति आल्लोपः[3]। अदादिति। 'गातिस्थे'ति सिचो लुक्।

दधस्तथोश्च। कृतद्वित्वस्य धाञोऽनुकरणं 'दध' इति। न तु 'दध धारणे' इत्यस्य। शपा व्यवधानात्[4], व्याख्यानाच्चेत्याशयेनाऽऽह–धाञ इति। न च 'धस्तथोरि'त्येव वाच्यम्। 'झषन्तस्य बश' इत्यनुवृत्तिसामर्थ्येन द्विरुक्तस्यैव ग्रहणमिति[5] वाच्यम्। यङ्लुकि 'दध' इति रूपा-

---

१ 'न च' इत्यारभ्य 'व्यभिचाराऽभावादसम्बन्ध' इत्यन्तः ख. ग. ङ. पाठः। क. कुण्डलितः। मनोरमादिस्थत्वात्।

२ 'इत्यादावतिप्रसङ्गश्च स्यादिति दिक्' इति ग. ङ. पाठः।

३ 'आलोपः' इति क. पाठः।

४ इतोग्रे 'न च यङ्लुकय्व्यवधानम्। प्रकृतौ प्रवृत्तकार्यस्यैव तत्र प्रवृत्तेः। 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहण'मिति प्राचां परिभाषणाच्च। 'प्रकृतिकार्यभाक्त्वेन ग्रहणे' इति तदर्थः। 'दधातेर्हिरि'त्यादावष्टाध्याय्यां प्रसिद्धत्वेन शीघ्रोपस्थितिकत्धाञ्चेत्याशयेनाह-धाञ इति' इति ग. पाठः।

५ 'ग्रहणमित्येव' इति ख. पाठः।

ऽभावे दोषाऽऽपत्तेरि'ति केचित्। झषन्तस्येति किम्?। 'दधाति'।

नन्वेवमाल्लोपस्य स्थानिवत्त्वात् 'धत्त' इत्यादावपि न स्यादत आह—वचनेति। पूर्वत्राऽसिद्धे इति। एवञ्च वामनाद्युक्तवचनसामर्थ्याऽऽश्रयणं वृथेति भावः।

**निजां त्रयाणाम्।** श्लाविति किम्?। 'निनेज'।

**नाभ्यस्तस्य।** अभ्यस्तस्य किम्?। 'द्वेषाणि'। अचि किम्?। 'नेनेक्ति'। 'पित्'ग्रहणमुत्तराऽर्थम्। ओविजीत्यस्यैवेति। तौदादिकस्य, रौधादिकस्य चेत्यर्थः। कुटादिसाहचर्येण श्रूयमाणविकरणस्यैव ग्रहणादिति भावः। एतेन 'अस्य 'विज इडि'त्यत्र न ग्रहणम्, अनिट्त्वादि'ति हरदत्तोक्तमपास्तम्। थलि इट्सम्भवात्।[2] तत्र पित्त्वेन कित्त्वाऽभावादिति दिक्। अभिजिहर्त्तीति। अत्रापि च्छान्दसत्वादित्त्वम्। इयूतीति। यणो बहिरङ्गतयाऽसिद्धत्वात् 'लोपो व्योरि'ति लोपो न।

ऐय इति। द्वित्वे, अभ्यासस्य इत्त्वे, इयङि, आटि, वृद्धौ, उत्तरखण्डे गुणे, रपरत्वे, हल्ङ्यादिलोपे, विसर्गः। लावस्थायामप्यपि शब्दान्तरप्राप्त्या वृद्धेरनित्यत्वात् द्वित्वे, आङ्गत्वाच्चाऽभ्यासकार्ये, वृद्धिरिति बोध्यम्। दन्धन्त इति। 'चक्षसे' इतिवन्न[3] दीर्घः। जजायादिति। 'ये विभाषे'त्यात्वम्। एवं 'जायादि'त्यत्राऽपि। जिगीत इति। 'बहुलं छन्दसी'त्यभ्यासस्येत्त्वम्। 'ई हल्यघोरि'तीत्त्वम्।

इति जुहोत्यादयः।

१ 'नन्वेकाज्ग्रहणाऽनुवृत्या न दोषः। अटि दोषाऽऽपत्तेः। इण्निषेधभिन्नैकाज्ग्रहणस्य यङ्लुकि प्रवृत्तेः स्वीकाराच्च' इति ग. पाठः।

२ 'अन्यत्र क्ङिति कित्त्वेन गतार्थत्वेऽपि थलीट्' इति ग. पाठः।

३ इतोऽग्रे–'छान्दसत्वान्ने'त्यन्ये। सति त्वभिधाने दीर्घो भवत्येवेति बोध्यम्' इति ख. ग. क. पाठः।

# अथ दिवादिप्रकरणम् ।

दिवु । उदित्त्वम् 'उदितो वे'ति क्त्वायामिड्विकल्पाऽर्थम् । [1]परिषिषेवेति । 'परिनिविभ्यः षेवे'त्यभ्यासस्य षत्वम् । 'आदेशप्रत्यययोरि'ति उत्तरस्य । 'स्थादिषु' इति नियमस्तु नाऽत्र । सितात्प्राचीनविषयत्वात्तस्य । स्पष्टं चेदं 'सुविनिर्दुर्भ्यः' इत्यत्र भाष्ये । न्यषेवीदिति । 'सिवादीनां वे'ति विकल्पः । व्युष दाहे । दन्त्योष्ठ्यादिर्मूर्द्धन्याऽन्तः । तथा च वैद्यके त्रिकटुकपर्यायो 'व्योष'शब्दः पठ्यते । नृती । ईदित्त्वं 'यस्य विभाषे'त्यस्याऽनित्यत्वाय । अन्यथा 'सेऽसिची'ति विकल्पितेट्त्वात् 'यस्य विभाषे'त्येव सिद्धौ, 'श्वीदित' इत्येतत्प्रवृत्तिर्व्यर्थैव । तेन 'धावितमि'त्यादि सिद्धम्[2] ।

सेऽसिचि । 'से' इत्यकारोऽविवक्षितः । 'असिची'ति पर्युदासात् । 'सादेरि'त्यर्थलाभो यथा तथा 'तीषे'त्यत्र निरूपितम् । पुष्प वि । ओष्ठ्याऽन्तोऽकर्मकः । 'तया नभः पुष्प्यतु कोरकेणे'ति श्रीहर्षः । 'काला[3]त्साधुपुष्प्यत्पच्यमानेषु' इति सूत्रम् । अच् । 'पुष्पम्' । संज्ञायां कन्—'पुष्पकम्' ।

तिम ष्टिम । केचित् 'तीमे'त्यपि पठन्ति । व्रीड । घञि 'व्रीडः' । 'गुरोश्चे'ति 'अ'प्रत्यये–'व्रीडा' । षह षुह । 'शकिसहोश्चे'त्यत्र साऽनुबन्धसाहचर्यात्, निरनुबन्धकपरिभाषया च शप्-श्यन्विकरणयोरुभयोरपि ग्रहणम् ।

---

१ 'परिषिषेवेति । न च 'स्थादिष्वेवाऽभ्यासस्ये'ति नियमात्षत्वं दुर्लभम् । स्थादयश्च तत्र 'उपसर्गात्सुनोती'तिसूत्रादिस्थाः सितात्प्राचीना एव गृह्यन्ते इति वाच्यम् । 'प्राक्सितादि'त्यनुवृत्त्या 'प्राक्सिताच्चेत्स्थादीनामेवे'ति नियमेन, नियमस्य सजातीयत्वात्प्राग्वर्त्तिनामेव व्यावृत्तेः । स्पष्टं चेदं 'सुविनिर्दुर्भ्यः' इत्यत्र भाष्ये' इति ख. ग. ङ. पाठः ।

२ 'सिद्धमिति माधवः' इति क. पाठः ।

३ 'कालात्साधु' इत्यारभ्य 'एवेत्याहुः' इत्यन्तः प्राक् ख. ग. ङ. पाठः । क. नास्ति मनोरमास्थत्वात् ।

एवं 'तीषसहे'त्यत्राऽपी'त्येके। अन्ये तु 'शपा निर्देशादस्य तत्र न ग्रहणमि'ति प्रतिपन्नाः । 'परिनिविभ्य' इति षत्वं भवत्येवाऽत्रेति आत्रेयः।

अन्ये तु 'षत्वमपि शपा निर्देशान्न। अर्द्धजरतीयस्याऽयुक्तत्वात्। उभयमपि वा भवत्येव। तत्त्वन्तु महद्भिर्निर्णेयमि'त्याहुः।

अपरे तु—'इषेः श्यन्प्रत्ययात्तकारे प्रतिषेध' इति वार्त्तिकात् सहेः श्यन्विकरणस्य तत्र ग्रहणं भवत्येव। अकारस्तूच्चारणाऽर्थ एवे'त्याहुः।

तृप्तिरिति। यद्यपि प्रतीघातोऽपि चक्यर्थस्तथापि प्रकृते तृप्तेरेव ग्रहणम्। 'पूरणगुणे'ति सूत्रे 'सुहिताऽर्थ'शब्देन तृप्त्यर्थानामेव ग्रहणस्य आकरे उक्तत्वादिति भावः। जेरतुरिति। 'ऋच्छत्यॄतामि'ति गुणे कृते, 'वा जॄभ्रमु' इत्येत्त्वविकल्पः।

दीङो। 'उभयनिर्देशे पञ्चमी निर्देशो बलीयानि'ति 'अची'ति षष्ठ्यर्थे सप्तमी, तदादिविध्यर्था। तदाह—अजादेरिति। कृताऽकृतप्रसङ्गित्वेनाऽपि नित्यताऽभ्युपगमेन, परमपि यणं बाधित्वा, नित्यत्वादादौ युट्। तत्र कृतेऽप्यसिद्धत्वेन यण्प्राप्तिमाशङ्क्याऽऽह—वुग्युटाविति।

मीनातिमिनोति। 'एज्निमित्ते' इति विषयसप्तमी। तेन 'उपादाय' इत्यत्र घञ् सिध्यति। अन्यथा एरच् स्यात्। परे तु 'एच' इति, 'उपदेशे' इति च वर्त्तते। तच्च कालपरम् अधिकरणसाधनघञन्तम्। 'अशिती' त्यनुवृत्तेः फलं तु चिन्त्यम्। 'एचो विषये सति उपदेशकाले आत्त्वमि'त्यर्थः। एतदेवाऽभिप्रेत्य 'एच' इत्यस्य 'एज्विषये' इत्यर्थः। 'उपदेशग्रहणं चाऽत्र विषयविशेषणमि'त्युक्तं भाष्ये। 'विषय'पदेन विधेयम्। एवञ्चोपदेशपदं कालपरं विधेयविशेषणमिति भाव' इत्याहुः।

अदास्तेति। ननु 'घु'सञ्ज्ञासूत्रे 'अस्यतिवक्ती'तिसूत्रोक्तरीत्या प्रयोगस्थकृताऽऽत्त्व-दा-धामेवाऽनुकरणम्। अत एवं 'घु'सञ्ज्ञासूत्रे 'प्रकृतिग्रहणं शिदर्थं कर्त्तव्यम्, 'प्रणिधयती'त्यादौ 'नेर्गदे'ति णत्वं यथा स्या-

*दि'ति वार्त्तिकं सङ्गच्छते । भगवता च 'नेर्गदे'त्यत्र 'घुप्रकृति-माङि'ति* पठित्वा, तत्प्रत्याख्यानं कृतम् । तत्र हि माऽर्थं प्रकृतिग्रहणमावश्यकम्[2] ।

किञ्च वार्त्तिकाऽऽरम्भे 'उपदिदीषते' इत्यत्र 'सनि मीमे'तीस्प्रसङ्गः । मम तु 'घु'सञ्ज्ञासूत्रे तदभावान्न दोष इति तदाशयः । न च एजन्तानामात्त्वाऽभ्युपगमेन, नेयं दाप्रकृतिः । तथात्वे हि आदन्तनिबन्धनयुजादिसिद्धये 'आकारान्तलक्षणप्रत्ययविधिरि'ति वचनस्य, 'ह्वावामश्चे'ति ज्ञापकस्य वा सामान्याऽपेक्षस्याऽऽश्रयणे गौरवाऽऽपत्तेः ।

भाष्येऽप्येतदुक्तिः कस्य चिदेकदेशिन एव, न तु वार्त्तिककृतः । किञ्चाऽस्य वार्त्तिकमतत्वे आकारान्तप्रत्ययविधिवचनं क्वचिद्वा वार्त्तिककृत् आरभेत । न च क्वाऽपि दृश्यते । विपरीतं 'मीनाती'ति सूत्रे 'उपदेशवचनं णघञ्युच्प्रत्ययविध्यर्थमि'ति वार्त्तिकं दृश्यते । 'अवदाय' इत्यत्र 'श्याद्व्यधे'ति आदन्तलक्षणो णः । 'अवदायो वर्त्तते' इत्यत्र घञ् । अन्यथा इवर्णान्तत्वादच् स्यात् । 'अवदानमि'त्यत्र 'आतो युच्' । तदनन्तरम् 'उपदेशे एच इति निरुद्धमि'त्याशङ्क्य 'एज्विषये' इति भाष्ये उक्तम् । घुसञ्ज्ञासूत्रस्थं 'प्रकृतिग्रहणं कर्त्तव्यमि'ति वार्त्तिकन्तु भाष्ये दूषितमेव । एतेन 'इदं वार्त्तिकमतमि'ति कौस्तुभोक्तं परास्तम् ।

ये तु 'दो-देङ्-धेटामनुकरणानि व्यवस्थाप्य 'प्रकृतिवदि'त्यतिदेशात् अनैमित्तिकत्वेन आत्त्वम् । ततश्चतुर्णां दारूपाणां, द्वयोश्च धारूपयोरेकशेषं कृत्वा द्वन्द्वः । 'प्रणिदाते'त्यादौ कृताऽऽत्त्वानां दो-देङ्-धेटान्तु स्थानिवत्त्वात्सिद्धम् । अतो लक्षणप्रतिपदोक्तपरिभाषा-निरनुबन्धकपरिभाषादीनाम् इहाऽप्रवृत्तिः । सर्वेषां स्वरूपेणैवाऽनुकृतत्वात् । अत एव दारयति-धारयत्योर्नाऽतिप्रसङ्गः । तेषामनुकरणे आत्त्वाऽप्रसङ्गात् । अत एव दीक्षोऽपि नाऽनुकरणमिति सूत्रमतमि'ति वदन्ति, तेषां वार्त्तिकोत्थानमेव न स्यात् । ऋषितात्पर्यस्य ऋषिवाक्यैरेव निर्णयत्वात् ।

---

१ 'अत एव भगवता 'नेर्गदेत्यत्र' इति ग. पाठः ।

२ 'आवश्यकमिति तदाशयः' इति ग. पाठः ।

किञ्चाऽस्मिन्पक्षे दाप्दैपोरनुकरणे अनुकरण-पर्युदासोभयसामर्थ्यात्, तयोर्घुत्वविकल्पः स्यात् । अननुकरणे तु स निषेधो व्यर्थः स्यादिति, 'अदाप्' इति प्रतिषेधः प्रयोगस्थानामेवाऽनुकरणं सूचयति ।

एतेन 'तदननुकरणतात्पर्यग्राहकः स निषेध' इत्यपास्तम् । 'प्रयोगस्थानामेवाऽनुकरणमि'त्यत्रैव तात्पर्यग्राहकताया वक्तुं युक्तत्वात् ।

न च भवन्मते देङादीनां 'प्राणिदाते'त्यादौ घुत्वं न स्यात्, निरनुबन्धकपरिभाषयाऽस्य ग्रहणाऽभावादिति वाच्यम् । 'गामादाग्रहणेष्वविशेष' इत्यनेनाऽत्र व्यवस्थापकन्यायानामप्रवृत्तेः । अत्र च दैपः पित्त्वं लिङ्गम् । 'दा'साहचर्याच्च धाऽशेऽपि सामान्यग्रहणमत्रेति बोध्यम् । नचाऽर्थवत्परिभाषाया अप्यप्रवृत्तौ, 'प्रनिदारयती'त्यत्राऽतिप्रसङ्ग इति वाच्यम्[1] । भाष्यप्रामाण्येनाऽर्थवत्परिभाषाया अत्र प्रवृत्तिस्वीकारात्[2] । 'प्रणिदापयती'त्यत्र तु न दोषः[4] । 'यदागमा' इतिन्यायेन पुग्विशिष्टस्य घुग्रहणेन ग्रहणात् ।

'दारयती'त्यत्र तु न दोषः । 'यदागमा' इत्यस्य 'यमुद्दिश्यविहिता' इत्यर्थात् । रेफश्चाऽणमुद्दिश्य विहितो, न समुदायम् । ध्वनितं चेदं घुसंज्ञासूत्रे भाष्ये । एवञ्च 'अदास्ते'त्यत्र घुत्वस्य सत्त्वात् 'स्थाघ्वोरिच्चे'तीत्त्वं स्यादिति चेन्न । 'संनिपात'परिभाषया वारणात् । 'यदि अत्र घुत्वं स्यात्

१ 'अनुकरणे' इति हरिताललेपेन शोधितः पाठः क. ।

२ इतोऽग्रे—'घुसञ्ज्ञकार्थान्वयिनो ने'रिति व्याख्यानेनाऽदोषात् । एतदवयवदादीनामनर्थकत्वेनाऽदोषात्' इति ग. पाठः ।

३ 'स्वीकाराच्च' इति ग. पाठः ।

४ इतोऽग्रे—'णत्वस्याऽसिद्धत्वात्पुकः पूर्वं तदप्रवृत्तौ, तन्निमित्तघुसंज्ञाया अपि फलाऽभावादप्राप्तौ, पुकि, 'यदागमा' इति न्यायेन दाग्रहणेन ग्रहणात्, पुग्विशिष्टस्यैव घुत्वात्' इति ग. पाठः ।

५ इतोऽग्रे—'प्रसज्यमान एव रपर' इति पक्षे रेफस्य दाऽवयवत्वे मानाऽभावाच्च' इति ग. पाठः ।

तर्हि 'स्थाघ्वोरि'ति सिचः कित्त्वं स्यात्। अत एव्विषये प्रवर्त्तमानतया अकित्त्वमुपजीव्य प्रवृत्त आकारः कित्त्वप्रवर्त्तकं घुत्वं न प्रवर्त्तयति।

यद्यपि कित्त्वाऽप्रवृत्त्या[1] संनियोगशिष्टपरिभाषया इत्त्वस्याऽप्यप्रवृत्तौ सिद्ध्यतीदं, तथापि तदा घुत्वस्य फलाऽभावादेवाऽप्रवृत्तिरित्याशयेन भाष्ये 'घुत्वं न प्रवर्त्तयती'त्युक्तम्।

दीङस्तृजादावात्त्वे 'प्रणिदाते'त्यादौ 'नेर्गदे'ति नित्यणत्वं भवत्येव। अत एव 'दीङः प्रतिषेधः स्थाघ्वोरित्त्वे' इति विषयविशेषो निर्दिष्टो वार्त्तिककृता। इदमपि वार्त्तिकं संनिपातपरिभाषाऽनित्यत्वज्ञापक-मित्यन्यत्। 'प्रणिदीयते' 'प्रणिदीन' इत्यादौ नित्यणत्वं न[2] भवत्येव, घुत्वाऽभावात्, घुप्रकृतित्वाऽभावाच्चेति दिक्।

[3]डीङ्। डीनः। स्वादीनामोदित्त्वात् निष्ठानत्वम्। स्वादिपाठसामर्थ्या-दिडभावः। इटि हि व्यवधानात् 'ओदितश्चे'ति नत्वाऽप्रसङ्गः। 'डयित-मि'ति तु भ्वादेः। 'निष्ठा शीङि'त्यत्र 'निष्ठे'ति योगविभागात् अकित्त्वेन गुण इत्याहुः[4]। हिंसाऽत्रेति। अतोऽयमकर्मक इति भावः।

यकेति। 'सार्वधातुके यगि'ति विहितेन, द्योत्याऽर्थाऽभावेऽपि सौत्रत्वात्प्रकृते साधुनेत्यर्थः[5]।

१ 'कित्त्वाऽप्रवृत्त्याऽपि' इति ग. पाठः।

२ 'नित्यणत्वं भवति, न वेति 'अच उपदेशे' इति सूत्रे निरूपितमिति दिक्' इति ख. ग. ङ. पाठः।

३ 'डीङ्' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. ग. ङ. पाठः। मनोरमास्थत्वात् क. नास्ति।

४ इतोऽग्रे—'अन्ये तु इट्यपि सामर्थ्याद्व्यवधानेऽपि नत्वम्। 'डीन' इति त्वागमशास्त्रस्याऽनित्यत्वादिडभावे इत्याहुः' इति ग. पाठः।

५ इतोऽग्रे—'वैकल्पिके कार्ये समानार्थधातुनियमस्याऽनुपयुक्तत्वादिति भावः' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

नन्वेवं 'लीङः' इत्येव सूत्र्यताम् । 'विभाषे'त्यस्य, यकश्च वैयर्थ्यम् । धातुभेदेन रूपद्वयस्य सिद्धत्वादिति चेन्न । अन्यस्य परस्मैपदित्वेन, आत्मनेपदे रूपद्वयाऽसिद्धेः । एतेन 'विभाषा लिय' इत्येव सिद्धे, यका निर्देशश्चिन्त्यप्रयोजन' इत्यपास्तम् । निरनुबन्धकपरिभाषया क्र्यादि-चुराद्याधृषीययोरेव ग्रहणाऽऽपत्तावात्मनेपदे रूपद्वयाऽनापत्तेः ।

स्वादय इति । गणसूत्रमेतत् । 'षूङि'त्यारभ्य व्रीङन्ता' इत्यर्थः । 'ओदित' इत्यतिदेशः । अयां चक्रे इति । अत्र यद्वक्तव्यं तत् 'इटकिटे' त्यत्रोक्तम् । प्रीङ् । सकर्मक इति । एतेनाऽस्याऽकर्मकत्वोक्तिश्चिन्त्येति बोध्यम् । अत्र मानन्तु चिन्त्यम् ।

षोऽन्त । अन्तकर्म—नाशनम् । अभिष्यतीति । 'उपसर्गात्सुनोती'ति षत्वम् । अभिससावति । 'स्थादिष्वभ्यासेन चाऽभ्यासस्ये'त्युक्तेर्न षत्वम् । धूरी गूरी । अत्र 'गुरी'ति ह्रस्वं केचित्पठन्ति । 'पते'ति पाठे प्रमाणं प्रयोगमाह—द्युतद्यामेति । पक्षान्तरे इति । अत्राऽरुचिबीजन्तु 'नाऽपवादे उत्सर्गकृतं भवति, यदयं श्यनादीन् कांश्चिच्छितः करोती'ति श्यनः शित्त्वस्य ज्ञापकतापरस्थानिवत्सूत्रस्थभाष्यविरोधः । न च पित्त्व-निवृत्तये नियमाऽर्थं शित्त्वम् । नित्त्वसामर्थ्यादेव तत्सिद्धेः । तद्धि आद्युदात्तार्थम् । श्यनः पित्त्वे तु पित्त्वादेवाऽनुदात्तत्वे, लसार्वधातुकाऽनुदात्तत्वे च धातुस्वरेणैव सिद्धौ, किं नित्त्वेनेति तदाशयः । 'वावृतु' इत्यस्याऽनेकाचः सत्त्वे तत्र धातुस्वरेणाऽसिद्धेर्भाष्याऽसङ्गतिः स्पष्टैवेति भाष्य-प्रदीपोद्द्योते विस्तरः ।

'भाष्याऽसङ्गतिः स्पष्टैव । न चैकाक्ष्वेव ताच्छील्यादिचानशि लसार्वधातुकत्वाऽभावेनाऽनुदात्तत्वाऽभावे, इष्टमपि चित्त्वप्रयुक्ताऽन्तोदात्तत्वं बाधित्वा, आद्युदात्तार्थे नित्त्वं चरितार्थं स्यादिति, भाष्यमसङ्गतमेवेति वाच्यम् । 'अन्यत्र विकरणेभ्य' इत्यस्य स्वरस्य श्यन्स्वरेणाऽबाधाय खसूत्रे भाष्ये स्पष्टमुक्तत्वेन, श्यन्स्वरस्य दुर्बलतयाऽन्तोदात्तत्वस्यैवौचित्यात् । न च

यत्तु 'वृतेः श्यन्विकल्पाऽर्थं 'वा'शब्दः। तेन पक्षे शबि'ति। तन्न। 'वृद्भ्यः स्यसनोरि'त्याद्यर्थमावश्यकेन भ्वादिपाठेन धातूनामनेकार्थत्वात् वरणेऽपि शपः सिद्धेः। न च दैवादिकस्य भ्वादौ गणकार्याऽर्थमनुवाद इति वाच्यम्। गणभेदेन धातुभेदस्य 'लुग्विकरणे'त्यादिपरिभाषाबलात्, 'यस्य विभाषे'त्यादिसूत्रस्थभाष्यादिबलाच्च लाभात्। भट्टिप्रयोगे तु 'वा'शब्दस्य इवाऽर्थतया 'कामयमानेव, न तु तथा, किन्तु च्छलनाऽर्थ-मागते'त्यर्थान्न दोषः। 'वृते तु वृत्त-वावृत्तौ'इति कोशप्रयोगस्तु पृषोदरा-दित्वात्साधुरित्याहुः।

केचित्तु 'इत एवाऽस्वरसाद्भाष्ये आदिना आदीनां शित्त्वस्य ज्ञापक-तोक्तेत्यनेकाच्त्वेऽपि न दोष' इत्याहुः।

क्लेद इति। अत एव क्लिन्ने 'शुक्तमि'ति प्रयोगः। नन्द्धेति। अत्र 'नहो ध' इति धत्वम्। तशब्द इति। स चाऽत्र आत्मनेपदप्रथमपुरुषैक-वचनमेव। पदेस्तस्यैव सम्भवात्। अबोधीति। 'दीपजने'ति णिच्।

---

नित्त्वसामर्थ्यान्न बाधः। तस्य सार्वधातुके चारितार्थ्यात्। न च तत्र स्थानिवद्भावलब्धपित्त्वेन गतार्थतेति वाच्यम्। इह नित्त्वेनाऽतिदेशपर्यु-दासयोरन्यतरबाधस्याऽऽवश्यकत्वे, उपदेशापेक्षयाऽतिदेशस्य दुर्बलत्वेना-ऽतिदेशबाधस्यैव न्याय्यत्वात्। 'अन्यत्र विकारणेभ्य' इत्यस्य 'तास्यनु-दात्तेदि'त्यत्र निष्पन्नत्वेन परत्वात्। 'मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तराणि'ति न्यायेन निर्वाहाच्च। यत्तु वृतेःश्यन्विकल्पार्थम्' इति ग पाठः। 'लाभादिति वदन्ति। यद्यपि मूले 'वरणे' इति पठ्यते। एवञ्च तत्राऽर्थे न शप्सिद्धिस्तथापि धातूनामनेकार्थत्वात्सिद्धमिति बोध्यम्। अन्ये तु श्यना-त्मनेपदयोर्विकल्पमाहुः' इति ग. पाठः।

इतोऽग्रे—'केचित्तु वरणे इति पाठे शबर्थे 'वा'शब्दः। प्रमाणं विना पठितभिन्नाऽर्थे धातोरप्रयोगात्। अन्यथा पचत्यादीनां गमनाद्यर्थे प्रयोगा-ऽऽपत्तेरित्याहुः' इति ग. पाठः।

युधमिति । 'व्यत्ययो बहुलमि'तिसूत्रे भाष्ये तु 'व्यत्ययेन परस्मैपदमि'त्युक्तम् । स्रष्टेति । 'सृजिदृशोरि'त्यम् । 'एव'कारात् अर्थाऽन्तरे राधः श्यन्न स्यादत आह—भिन्नक्रम इति । अन्यथा 'अकर्मकादि'ति व्यर्थं स्यादिति भावः । उदाहरणमिति । तथा च'वृद्धौ'इत्युपलक्षणमिति भावः । ध्वनितं चेदं 'कर्मवत्कर्मणे'ति सूत्रे भाष्ये । तत्र हि 'राध्यति ओदनः स्वयमेवे'त्युदाहृतम् । सकर्मकतयेति । 'शत्रुमपराध्नोती'त्यादौ हिनस्तीत्यर्थदर्शनात् । चुरादिश्चेति । यद्यपि चुरादौ न दृश्यते, तथापि क्वचित् धातुवृत्तिपुस्तके दृश्यते एव ।

• 'शल इगुपधे'त्यनन्तरं 'श्लिष आलिङ्गने' इति पठ्यते । तस्य एकसूत्रत्वे सोऽङ्बाधनाऽर्थम् अपूर्वविधिरेव स्यात् । न नियमः । अङ् तु अर्थाऽन्तरे साऽवकाशः । एवञ्च यद्यपि कर्त्तरि परस्मैपदे सिद्धमिष्टम् । कर्मणि तु 'त'शब्दे 'समाश्लेषि कन्या देवदत्तेने'ति चिणिष्यते, सोऽपि परत्वात्सिद्धः । तथा 'समाश्लिक्षातां कन्ये' इत्यादौ क्सः सिद्धः, तथापि कर्मणि, कर्मव्यतीहारे कर्त्तरि च 'आताम्'प्रभृतिषु अनालिङ्गनेऽपि पूर्वसूत्रेण क्सः स्यात् । तथा च 'समश्लिक्षत जतूनि काष्ठैरि'त्यत्र 'अनत' इति प्रतिषेधात् अदादेशो न स्यात् । अतः सिजिष्यते, इत्यतो योगविभागेन व्याचष्टे—श्लिष इति । अनिटः किम् ? । 'श्लिषु दाहे' इति सेटो भ्वादेर्मा भूत् । अयं प्रतिप्रसवविधिः, तदाह—अङोऽपवाद इति । पुषाद्यङस्तु अन्ये पुषादयोऽवकाशाः । यद्वा वक्ष्यमाणनियमपर्यालोचनया अनालिङ्गने चरिताऽर्थस्य अङोऽयमपवादः सम्पद्यते इति तात्पर्यम् ।

पुरस्तादिति । स्पष्टं चेदं भाष्ये । द्वितीयो योगो नियमाऽर्थ इत्याह—आलिङ्गने एवेति । विपरीतनियमस्तु न । भाष्यादिविरोधात् । योगविभागेति । अन्यथैकवाक्यतया विधिमेव कुर्यादिति भावः । शल इगुप-

१ 'समाश्लिक्षत' इति ख. ङ. पाठः ।

२ इतोऽग्रे 'किञ्च दैवादिकस्याऽपि यङ्लुकि मा भूत्' इति ग. पाठः ।

धादित्यस्येति । तेन आत्मनेपदेऽनालिङ्गने चिण्विषयादन्यत्र सिजेव, न तु क्स इति भावः। प्रत्यासत्ताविति। आलिङ्गनं प्राणिकर्त्तृकमेवेति भावः।

नियमफलमाह—कर्मणीति । कर्मण्यतीहारस्याऽप्युपलक्षणमेतत्। चिणिति। आलिङ्गने, अनालिङ्गने च परत्वादयमेवेति भावः। सिच्फलमुदाहरति—अश्लिक्षत, अश्लिष्टा इति। अत्र अदादेश–'झलो झली'तिलोपयोः सिद्धिः। 'अश्लिक्षातामि'त्यादौ तु क्ससिचोरविशेष इति भावः। केचित्तु[1] अट्निघातयोरभावे 'यदि मा श्लिक्षातामि'त्यादौ स्वरे[2] विशेषोऽस्तीत्याहुः।

शक वि। 'विभाषित'पदं तन्त्राऽन्तरे 'उभयपदि'शक्तमित्याशयेनाऽऽहउभयेति। षिधु। संराद्धिः—निष्पत्तिः। प्रामादिक इति। अन्यथा अनुदात्तपाठस्य वैयर्थ्याऽऽपत्तिः[3]। ररन्धतुरिति। परत्वान्नुमि सति, अकित्त्वान्न नलोपः।

रधादिभ्यश्च। 'स्वरती'त्यत्रैव पाठे कर्त्तव्ये, योगविभागश्चिन्त्यप्रयोजनः। [4]नंष्टेति। यत्तु 'नशेर्वे'ति कुत्वे 'नङ्क्ष्वे'[5]त्युदाहृतम्। तन्न। कुत्वस्य पदान्ते एव विधानात्। न च 'नशकिन्प्रत्ययस्य कुरि'ति वक्तव्ये 'नशेरि'ति पृथक्सूत्रकरणेनैव विकल्पलाभे, 'वे'तिकथनं योगविभागेन झलि[6] परतो नित्यकुत्वाऽर्थमिति वाच्यम्। तेन प्रयत्नाऽऽन्तरतम्यात्खकारे

१ 'केचित्तु' इति ख. ग. ङ. पाठः। क. नास्ति।

२ 'स्वरेऽपि विशेषो बोध्यः' इति ग. पाठः।

३ इतोग्रे—'अन्ये तु उदित्पाठोऽप्ययुक्तः। 'उपसर्गात्सुनोती'त्यादिसूत्रस्थवृत्त्यादिग्रन्थविरोधादित्याहुः' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

४ 'नंष्टेति' इत्यारभ्य 'न सिद्ध्येदित्याहुः' इत्यन्तः ख. ग. ङ. पाठः। क. कुण्डलितः। मनोरमाशब्दरत्नस्थत्वात्।

५ 'प्रनङ्क्ष्वेति' इति ग. पाठः।

६ 'क्वचित् झलि परतो नित्यकुत्वार्थम्' इति ग. पाठः।

जातेऽपि, झषन्तत्वाऽभावात्तथोधत्वस्य दुर्लभत्वेन, त्वदुक्तप्रयोगाऽसिद्धेः । किञ्च 'नष्टम्' 'नष्टिरि'ति न सिद्ध्येदित्याहुः ।

**नशेः षान्त** । 'न भाभू' इत्यतो 'ने'ति वर्त्तते । **भूतपूर्वेति** । स्पष्टं चेदं भाष्ये । 'नञा प्रापितनिषेधस्यैव क्रादिसूत्रेण नियम' इति मतेनाऽऽह—दुद्रोग्ध-दुद्रोहिथेति । वस्तुतो 'दुद्रोहिथे'त्येव रूपमिति निरूपितं प्राक् । **आ गणान्तादिति** । अत एव 'अस्यतिग्रहणमात्मनेपदार्थम्, पुषादित्वात्' इति 'अस्यतिवक्ती'ति सूत्रस्थं भाष्यं सङ्गच्छते । यस्तु[1] 'अस्यतेस्थुगि'ति सूत्रमत्र लिङ्गमि'त्याह । स तु देवानांप्रिय एव । 'अस्यतिवक्ती'त्यनेनाऽङि तस्य चारितार्थ्यात् । **चक्षण्वेति** । 'म्वोश्चे'ति नत्वे, णत्वम् ।

**यसोऽनु** । 'संयसश्चे'ति नियमेन सिद्धे, 'अनुपसर्गादि'ति व्यर्थमिति स्पष्टं भाष्ये । **पठित इति** । दिवादावेवेत्यर्थः । **इह पाठ इति** । दिवाद्यन्तर्गणपुषादावित्यर्थः । **श्यनर्थ इति** । एवञ्च पुषादेः प्रागेव पठितुं युक्त इति भावः । अत्र गणे 'त्रुट छेदने' इत्यपि पठन्ति, चुरादौ च । चुरादेर्नित्यण्यन्तत्वात् 'त्रोटती'त्यस्य सिद्धये 'वा भ्राशे'त्यत्र त्रुटिग्रहणम्[2] । 'दृहत् दृणातेर्दीर्यतेर्वा' इति भाष्यात् 'दृ'धातुरप्यत्र बोध्यः ।

इति दिवादयः ।

## अथ स्वादिप्रकरणम् ।

**सुन्व इति** । 'लोपश्चाऽस्ये'ति वा 'उ'लोपः । **सुनु इति** । 'उतश्चे'ति हेर्लुक् । **सुनवानीति** । अत्र 'हुश्नुवोरि'ति यणं बाधित्वा परत्वाद्गुणः ।

**सुनोतेः स्य** । 'न रपरे'त्यतो 'ने'त्यनुवर्त्तते । सनि-अभिसुसूषतेः अप्रत्यये 'अभिसुसूरि'त्युदाहरणम् । अन्यत्र 'स्तौतिण्योरेवे'ति, 'स्थादिषु' इति च नियमादेव तदभावः सिद्ध इत्याहुः ।

---

१ 'यस्तु अस्यतेस्थुगिति' इति क. पाठः ।

२ त्रुटिग्रहणम्, यङ्लुकि श्यनर्थे चेत्याहुः' इति ग. पाठः ।

विभाषा चेः । 'चजोरि'ति सूत्रात्कुरिति, 'अभ्यासाच्चे'ति, 'सन्लिटोर्जेरि'त्यतः 'सन्लिटोरि'ति चाऽनुवर्त्तते ।

ऋतश्च । 'इट् सनि वे'त्यत 'इड् वे'ति, 'लिङ्सिचोरि'ति सूत्रं च वर्त्तते । न च लावस्थायामटि संयोगादित्वाऽभावात् 'अस्तरिष्टे'त्यसिद्धिः । 'संयोगादेरि'ति कर्मधारयः, 'अङ्गस्ये'ति संयोगादिविशेषणमि'ति संयोगसंज्ञासूत्रभाष्योक्तपक्षेऽपि 'अङ्गाद्यवयवसंयोगात्परऋकारस्ये'त्यर्थात् असिद्धिरेवेति वाच्यम् । अत्र सिजनुवृत्तिसामर्थ्येनाऽटि कृतेऽपि, तत्प्राक्कालीनसंयोगादित्वमादाय शास्त्रप्रवृत्तेर्ज्ञापनेनाऽदोषात् । अत एव 'अस्तर्यत' इत्यादौ 'गुणोर्त्ती'ति गुणसिद्धिः । 'उपदेश'ग्रहणाऽनुवृत्त्या साधनं तु अयुक्तम् । तस्य बहुयोगविच्छिन्नत्वात् । 'गुणोर्त्ती'त्यस्य 'अस्तर्यते'त्यादौ प्रवृत्तये उपायान्तराऽभावाच्चेति दिक् ।

बभूथा । क्रादिनियमादेव सिद्धे 'ववर्थ'ग्रहणं 'निगमे एवे'ति नियमाऽर्थम् । तदाह—तेनेति ।

लिङ्सिचो । 'वृत' इति, 'इट् सनि वे'त्यत 'इड् वे'ति च वर्त्तते ।

न लिङि । 'वृत' इति, 'दीर्घ' इति च वर्त्तते । 'अवारिष्टामि'त्यादौ 'सिचि च परस्मैपदेषु' इत्यनेन 'वृतो'वे'ति दीर्घनिषेधः ।

अवरीष्टेति । 'वृतो वे'ति दीर्घः ।

ह्रेर । अचङीति किम् ? । 'अजीह्रयत्' । ननु 'अचङी'ति व्यर्थम् । अभ्यासाऽऽक्षिप्तप्रत्यया-ऽङ्गाऽऽक्षिप्तप्रत्यययोः प्रत्यासत्त्या यत्रैक्यं, तत्रैवाऽस्य प्रवृत्तिरिति, न 'अजीह्रयदि'त्यादावतिव्याप्तिः, ण्यन्तस्य धात्वन्तरत्वादिति चेन्न । 'ण्यधिकस्याऽपि कुत्वं भवती'ति ज्ञापनाऽर्थत्वात् । तेन 'जिघांर्ययिषती'त्यादि सिद्धम् । 'अचङी'ति पर्युदासो न्याय्यः[1] । आप्नुवन्तीति । संयोगपूर्वकत्वात् 'हुश्नुवोरि'ति यण् , 'उतश्चे'ति हेर्लुक् च न ।

---

१ 'पर्युदासः । तेनाऽपि प्रत्ययपरत्वाऽऽक्षेपाद्धह्लुकि न । अङ्गाऽऽक्षिप्तप्रत्ययपरत्वे तु 'न लुमते'ति निषेधो न प्रवर्त्तते इति प्रागेव निरूपितम् । नचैवं

राधो । 'अत' इत्यनुवर्त्तमानेऽपि, सामर्थ्यात्तपरत्वलभ्याऽर्थबाधः । प्राणवियोगाऽनुकूलफलव्यधिकरणव्यापाररूपहिंसायां सकर्मकत्वात् दिवादौ नोपन्यस्तमिदम् । न च कर्मकर्त्तरि तत्सम्भवः । 'हिंस'धातोरपि तत्राऽकर्मकत्वस्य सम्भवादिति वाच्यम् । कर्मकर्तृप्रक्रियायां लेखस्य उचितत्वेऽपि, दिवादावनुचितत्वात् । अन्यथा तद्विषयशास्त्राऽन्तराणामपि तत्र तत्र लेखाऽऽपत्तिरिति दिक् । अशू । अयं परस्मैपद्यपीति 'उपदेशेऽत्वत' इति सूत्रस्थभाष्यस्वरसः ।

अश्नोतेश्च । 'तस्मान्नुडि'ति वर्त्तते । 'अश्नाति'व्यावृत्त्यर्थं 'श्नु'निर्देशः । अन्यथा 'अशेरि'त्येव वदेत् । इहाप्याश्रीयत इति । आश्रयणे प्रमाणञ्च 'अत एके'त्यत्र निरूपितम् । 'दम्भेश्चे'त्यस्याऽपि मूलं तत्रोक्तम् ।

सुधाकरादय इति । अत्राऽरुचिस्तु 'वार्त्तिके लिट्पदस्य, कित्पदस्य च कर्त्तव्यताऽऽपत्तौ गौरवमि'ति । 'अपिद्विषयकमि'ति मते तु व्याकरणाऽन्तरे 'सार्वधातुकमपित्' 'असंयोगाल्लिट्किदि'त्येतत्समानाऽर्थकप्रकरणे एवेदं वचनम् । एवं च लिट्कित्पदयोरकर्त्तव्यता स्पष्टैव । एवञ्च तद्वत् 'अपिदि'त्यस्याऽप्यनुवृत्तिर्दुर्वारैवेति । अत एव भाष्ये प्रथमोपस्थितणलं विहाय 'देभतुरि'त्याद्युदाहृतमिति दिक् । तृप । अत्रत्योऽयं सेट्कः । छन्दसीति । गणसूत्रमेतत् ।

इति स्वादयः ॥

पूर्वोक्ताऽर्थज्ञापकताऽनुपपत्तिः । व्यधिकस्याऽग्रहणे केवलहिनोतेश्चङ्परत्वस्य निरूपयितुमशक्यत्वेन वैयर्थ्यस्य सत्त्वात् । प्रसज्यप्रतिषेधेऽपि ण्यन्तसाहचर्येण यङ्लुक्यप्रवृत्तिरिति बोध्यम्' इति ग. पाठः ।

१ 'प्राणवियोग' इत्यारभ्य 'इति दिक्' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः, मनोरमाशब्दरत्नस्थत्वात् ।

# अथ तुदादिप्रकरणम् ।

भ्रस्ज पाके। 'भ्रस्जो' इत्यपपाठः। 'भृष्टः' 'भृष्टवानि'त्यत्र 'ओदितश्चे'ति निष्ठानत्वप्रसङ्गात्। आर्द्धधातुके इति। रोपधयोरार्द्धधातुकपरत्वेन विशेषणात्, 'बरीभृज्यते' इत्यत्र रीको रेफस्य न निवृत्तिः। 'उपदेशे' इत्यनुवृत्तेर्वा। ध्वनितं चेदं कैयटे। रमि अकार उच्चारणाऽर्थः। 'रोपे'त्यत्राऽप्येवम्। मित्त्वादिति। यस्य देशाऽन्तरे विधानं नास्ति, स उपस्थितस्थानिदेश एव। देशविशेषे एव स्थानिनः प्रसक्त्या, उपस्थितं परित्यज्य अनुपस्थितदेशकल्पनाया अन्याय्यत्वात्। इह तु मित्त्वेन न्यायो बाध्यते। स्थानषष्ठीसामर्थ्यात्तु देशाऽन्तरे प्रयुज्यमानोऽपि रोपधे निवर्त्तयति। 'रोपधयोः स्थाने प्रसङ्गे रम् प्रयुज्यते, रोपधे न प्रयुज्येते' इत्यर्थात्।

अत एव[1] 'शबादेशाः श्यन्नादयः करिष्यन्ते' इति भाष्योक्तपक्षाऽन्तरे श्नमि न दोषः। तदेवं रम आदेशत्वाऽऽगमत्वे द्वे अपीष्टे, यथा श्नमः प्रत्ययत्वाऽऽगमत्वे इतिस्थितम्। बभ्रज्जतुरिति। संयोगात्परत्वात्कित्त्वाऽभावः।

ननु आशीर्लिङि सम्प्रसारणं बाधित्वा परत्वाद्रमि, सकृद्गतिन्यायेन सम्प्रसारणाऽभावे, पुनःप्रसङ्गेन सम्प्रसारणेऽपि, आङ्गुणेन 'भर्ज्यादि'ति स्यादत आह—पूर्वविप्रतिषेधेनेति। सम्प्रसारण-रमोः 'भृज्जति' 'भर्ष्टा'- इत्यवकाशौ। किञ्च 'कृताऽकृतप्रसङ्गित्वमात्रेण सम्प्रसारणं नित्यमि'त्यपि सुवचम्। न च ऋकाराऽन्तर्गतरेफमादाय रमपि नित्यः। वर्णग्रहणे तदेकदेशाऽग्रहणात्। 'उपदेशे' इत्यनुवृत्तेश्च। अत एव 'बरीभृज्यते' इत्यादौ न रीको रेफे दोषः।

ननु[2] 'भ्रस्जो रसो र्[3]न्यतरस्यामि'त्येवाऽस्तु। 'रस्' इत्यस्य सङ्घातस्य 'ऋ' इत्यादेश' इत्यर्थः। समुदायस्य स्थानित्वेन निर्देशात् 'अलोऽन्त्यस्ये'-

१ 'अत एव च' इति ङ पाठः।

२ 'ननु' इत्यारभ्य 'श्विभातावुपपादितम्' इत्यन्तः ख.ग.ङ.पाठः।क. कुण्डलितः। मनोरमाशब्दरत्नधृतत्वात्।

३ अत्र 'र-अन्यतरस्याम्' इति च्छेदः।

त्यस्याऽप्रवृत्तिः । एवं च 'भृज्यादि'त्येतत् ऋकारपक्षे, तदभावेऽपि सम्प्रसारणे तदेव रूपमिति, पूर्वविप्रतिषेधो न वक्तव्यः। ऋकारविकल्पस्तु 'बभर्ज', 'बभ्रज्जे'[1]त्यादौ चरितार्थः। 'बरीभृज्यते' इत्यादिव्यावृत्तये 'उपदेश'ग्रहणं च नाऽनुवर्त्त्यमिति लाघवमिति चेन्न[2]। 'बरीभृज्ज्यते'[3] 'भृज्ज्यादि'त्यादौ नित्यतया जकारद्वयश्रवणाऽर्थम् 'ऋभावात्सम्प्रसारणं विप्रतिषेधेने'त्यस्या[4]ऽऽवश्यकत्वात्। ध्वनितं चेदं 'सर्वथा पूर्वविप्रतिषेधात् न मुच्यामहे' इति भाष्येण।

अपि च अपिल्लिटि ऋभावे, असंयोगात्परत्वेन कित्त्वे, गुणाऽभावे,

---

१ 'बभ्रज्ज' इति क. नास्ति।

२ 'लाघवमि'ति चेन्न। लुङि परत्वात् हलन्तलक्षणया वृद्ध्या ऋत्वस्य बाधितत्वात् 'अभ्राक्षीदि'त्येवाऽऽपत्तेः, नतु 'अभार्क्षीदि'ति, पूर्वविप्रतिषेधस्य तवाऽप्यावश्यकत्वात्। न च ऋत्वं नित्यम्, वृद्धावप्येकदेशविकृतन्यायेन रत्त्वात्, वृद्धिस्तु शब्दान्तरस्य प्राप्त्याऽनित्येति वाच्यम्। ऋभावस्याऽपि तेन न्यायेनाऽनित्यत्वात्। कृताऽकृतप्रसङ्गित्वमात्रेण नित्यत्वेतूभयोरपि नित्यत्वम्। न च वृद्धौ कृतायामेकदेशविकृतन्यायेन ऋभावे, पुनर्वृद्धौ, तस्याऽपि सिद्धिः। 'लक्ष्ये लक्षणस्ये'तिन्यायेन पुनर्वृद्ध्यप्राप्तेः। नचाऽन्तरङ्ग ऋभावः। 'न सिचयन्तरङ्गमि'ति निषेधात्। न च धर्मिग्राहकमानेन अच्स्थानिकाऽन्तरङ्गाऽभावेऽपि, अज्झलादेशस्थानिकाऽऽदेशस्याऽभावे मानाऽभावः। किञ्च 'येन नाऽप्राप्ति'न्यायेन वृद्धेर्गुणबाधकत्वात् ज्ञापकमपि तदर्थे दुरुपपादमिति वाच्यम्। प्रकृतिविशेषाऽऽपेक्षत्वेनाऽस्यापि बहिरङ्गत्वात्। बहुस्थानिकत्वेनाऽपि बहिरङ्गत्वाच्च। रमि तु परत्वाद्वृद्धौ, पुनःप्रसङ्गविज्ञानाद्रमागमे इष्टसिद्धिः। किञ्च 'बरीभृज्ज्यते' 'भृज्ज्यादि'त्यादौ नित्यतया जकारद्वयश्रवणाऽर्थम्' इति ग. पाठः।

३ 'बरीभृज्यते' इति ख. पाठः।

४ 'त्यस्याऽप्यावश्यकत्वम्' इति ग. पाठः।

'बभृजतुरि'ति स्यात्। इष्यते तु 'बभर्जतुरि'ति। तत्सिद्ध्यर्थं रमेव कर्त्तव्यः। सम्प्रसारणस्य तु नाऽत्र प्राप्तिः। संयोगात्परत्वेनाऽकित्त्वात्।

किञ्च 'सनीवन्ते'ति इड्विकल्पात् 'बिभर्क्षती'त्यादीष्यते। 'बिभृक्षती'-त्यादि स्यात्। 'हलन्ताच्चे'ति सनः कित्त्वात्। इक्समीपहलः परत्वा-ऽभावेनाऽकित्त्वान्नाऽत्र सम्प्रसारणप्राप्तिः।

किञ्च लिङ्सिचोस्तङि 'भर्क्षीष्ट' 'अभर्ष्ट'त्यादीष्यते। 'भृक्षीष्ट' 'अभृष्ट' त्यादि स्यात्। 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वात्। सम्प्रसारणा-ऽप्राप्तिस्तूक्तयुक्त्यैव। न च संनिपातपरिभाषया एषु न दोषः। शब्दतोऽर्थतो वा अस्य अकित्संनिपातलक्षणत्वाऽभावात्। अत एव 'भ्रस्जादेशात्सम्प्रसारणं पूर्वविप्रतिषेधेने'ति भाष्यादि सङ्गच्छते। एतेन 'भ्रस्जेर्भृज्' इत्येवाऽस्त्वि'ति परास्तम्।[1]

यत्तु[2] 'यङ्लुकि द्वित्वे कृते, साऽभ्यासस्यैवाऽर्थवत्त्वेन धातुत्वाऽङ्गत्वयोः समुदाये एव स्वीकारेण, समुदायस्य भृजादेशे, स्थानिवत्त्वेन 'अन-भ्यासस्ये'ति निषेधात्, विकाराऽन्यानुपूर्व्यैक्येन 'लक्ष्ये लक्षणस्ये'ति न्यायाच्च पुनर्द्वित्वाऽभावे, 'बाभर्जिते'त्याद्यसिद्ध्यापत्तेः। अत एव हन्तेर्यङ्लुकि 'वध्यात्' अवधीदि'त्येव माधवादिभिरुदाहृतम्। साऽभ्या-[3]सत्वस्याऽशास्त्रीयत्वेनाऽतिदेशाऽभावात्, लक्ष्ये लक्षणस्याऽनित्यत्वाच्च,[4] द्वित्वाऽभ्युपगमेऽपि ऋगुपधत्वेन रीगाद्यापत्तेरि'ति। तन्न। अन्तरङ्गेषु

१ इतोऽग्रे—'अत एव 'भृष्टमि'त्यादौ कित्यपि परत्वादम्भावविकल्पः स्वीकृतः कैयटादिभिः' इति ग. पाठः।

२ 'किञ्च' इति ग. पाठः।

३ 'यत्तु वैतण्डिकतया ऋदुपधत्वेन रीगाद्यापत्तेः, द्वित्वाऽभ्युपगमेऽप्यत्र दोषः। तथा रस ऋभावेऽप्यत्र दोषः। अकृतव्यूहपरिभाषया दीर्घाऽनापत्तेश्चेति। तन्न' इति ग. पाठः।

४ 'लक्ष्येलक्षणस्येत्यस्याऽनित्यत्वाच्च' इति ख. ङ. पाठः।

रीगादिषु बहिर्भूताऽऽर्द्धधातुकनिमित्ततया 'भृज्'भावस्य, ऋभावस्य च बहिरङ्गत्वेनाऽसिद्धत्वात्[1]।

किञ्च तनादिशेषे उपपादयिष्यमाणया 'दयतेरि'तिसूत्रस्थभाष्यसंमतया रीत्या 'उत्तरखण्डस्यैवाऽर्थवत्त्वम्, अभ्यासस्तु साधुत्वाऽर्थ एवे'ति पक्षस्यैव भाष्यसंमतत्वेन, उत्तरखण्डस्यैवाऽऽदेशो, न समुदायस्येति, न तत्र दोषशङ्काऽपीति बोध्यम्। 'रस अरादेशस्तु कर्त्तुं शक्य' इति नव्याः। लुङि तु बहिर्भूतपरस्मैपदपरसिजपेक्षवृद्ध्यपेक्षया अन्तरङ्गत्वादस्य प्रवृत्तिरिति, 'अभ्राक्षीत्' 'अभार्क्षीदि'ति रूपद्वयसिद्धेर्न दोषः। 'न सिच्यन्तरङ्गमि'ति तु नाऽस्त्येवेति 'श्वि'धातावुपपादितम्।

अकृक्षतेति। क्सादेशे, तङेकवचने, सिच्पक्षे बहुवचने च 'अनत' इत्यदादेशे एतदेव रूपम्।

अकृक्षन्तेति। क्सादेशे, 'अनत' इत्युक्तेः अदादेशाऽभावः[2]।

विज इट्। अत्र 'वृद्धिर्यस्ये'त्यतो मण्डूकप्लुत्या 'यस्य''आदिरि'त्यनुवर्त्तते। तदाह—इडादिरिति। अत्र तुदादिरुधाद्योरेव ग्रहणम्, न जुहोत्यादेरित्यत्र बीजं जुहोत्यादिगणे उक्तम्। पर्युदासेनेति। अन्यथा वाक्यभेदाऽसमर्थसमासाऽऽपत्तिरिति बोध्यम्। अत एव 'लिट्यभ्यासस्ये'तिसूत्रे अस्य वार्त्तिकस्य प्रथमोपस्थिततिङन्तं विहाय कृदन्ते उदाहृतं भाष्ये। कृन्मात्रेति। अवधारणे 'मात्र'शब्दः[3]।

यत्तु[4] व्यचं कुटादौ पठन्ति, तत्पाणिनीयधातुपाठविरुद्धम्। 'व्यचेः

---

१ इतोऽग्रे—'अन्त्ये ऋदुपधसम्बन्धिद्विरुच्चारणाऽभावेन, ऋदुपधाऽभ्यासाऽभावाच्च। 'रसः अरादेश' इत्यपि वृद्धिविषयपूर्वविप्रतिषेधाऽङ्गीकारात् गुर्वेव। यदि त्वन्यतरस्यांग्रहणेन विध्यन्तरबोधनद्वारा वृद्धेः पूर्वं 'रम्'-इत्युच्यते तदा तथा न्यासः सुकर इति दिक्' इति ग. पाठः।

२ 'अन्तादेशः' इति क. पाठः।

३ इतोऽग्रे—'तेन स्यसिच्सीयुट्तासिषु नेदं प्रवर्त्तते' इति ग. पाठः।

४ 'यत्तु' इत्यारभ्य 'वदेत्' इत्यन्तः ख. ग. ङ. पाठः। क. कुण्डलितः। मनोरमादिस्थत्वात्।

कुटादित्वं वक्तव्यम्। किं प्रयोजनम् ?। अञ्णिति सम्प्रसारणाऽर्थमि'ति वार्त्तिकभाष्यविरुद्धं च। किञ्च त्वत्पक्षे अविधेयस्य कुटादित्वस्य वचनशतेनाऽपि निषेद्धुमशक्यत्वेन 'अनसी'ति वार्त्तिकवैयर्थ्याऽऽपत्तिः। तत्प्रयुक्तङित्त्वस्य निषेधे तु 'व्यचेर्ङित्त्वमनसी'त्येव वदेत्।

उछि-उछी। अनयोरिह पाठेनैव सिद्धे, भ्वादौ पाठः स्वराऽर्थः। शप्[1]िबादीनां पित्त्वादनुदात्तत्वे धातुस्वरेण पदमाद्युदात्तम्। शे तु प्रत्ययस्वरेण मध्योदात्तम्। 'अन्यत्र विकरणेभ्य' इति निषेधस्तु 'सार्वधातुकस्वराऽपेक्षया विकरणस्वरस्य बलीयस्त्वं ने'त्येवं परः। स्पष्टं चेदं 'खश्' विधायकसूत्रे भाष्ये। 'उच्छती' 'उच्छन्ती'त्यत्र 'आच्छीनद्योरि'ति नुम्विकल्पाऽर्थश्चेह पाठः।

ऋछ। ऋच्छत्यृतामिति। न च 'ऋच्छति'शब्देन तत्र 'ऋ'धातोर्ग्रहणम्। धातुपाठे साक्षात्पाठेनाऽस्यैव ग्रहात्। भ्वादेः प्रश्लेषेणैव सिद्धत्वाच्च। अत एव सूत्रे बहुवचनम्। अस्य तुकि, तस्य चुत्वेन चकारे, लिटि, द्वित्वे, अभ्यासकार्ये, उत्तरखण्डस्य 'ऋच्छती'ति गुणे, त्रिहल्त्वात् नुट् न स्यादत आह—अनेकहलिति। अत एव 'अदुपधस्य चेदश्नोतेरेवे'ति नियममाश्रित्य द्विहल्ग्रहणप्रत्याख्यानं भाष्योक्तं सङ्गच्छते[2]। लोभितेति। 'तीषसहे'ति वेट्।

तृप तृम्फ। 'शे मुचादी'तिसूत्रे भाष्ये 'शे तृंपादीनां नुम्वाच्यः'। 'तृंपति तृंफती'ति पाठदर्शनादाद्योऽपि सनकार इति प्रतीयते। मूलन्तु

---

१ 'पिद्वचने शप्तिबादीनाम्' इति मनोरमायां पाठः। 'पिद्वचने' इति तसादेरप्युपलक्षणमि'ति च शब्दरत्ने।

२ इतोऽग्रे—'न चाऽकृतव्यूहपरिभाषया तुगभावे द्विहल्त्वमेवास्तीति वाच्यम्। 'च्छ्वोः शूडि'तिसूत्रे 'सतुक्'निर्देशेन तुग्विषयेऽस्या, 'वार्णादाङ्गमि'त्यस्याश्चाऽनाश्रयणात्। अत एव 'अनृच्छ' इति निषेधश्चरितार्थः' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

धातुवृत्त्यनुसारीति बोध्यम् । अङपवादत्वादिति । 'उत्सर्गसमानदेशा अपवादा' इति न्यायादिति भावः। भाष्यसंमतपाठे तुदादौ तृपेरभावाच्च। किञ्च तत्राऽनयोर्ग्रहणे पक्षे सिजभावे च्लेरेव श्रवणाऽऽपत्तौ 'च्लिः क्वाऽपि न श्रूयते' इति भाष्यविरोधाऽऽपत्तिः। अत एव भाष्ये सिजभावे 'अतृपत्' 'अदृपत्' इत्यङ् उदाहृत इति दिक्।

वृण च । यत्तु 'रुधादिभ्य' इति सूत्रे भाष्ये 'पृणती'त्यादौ 'प्वादीनामि'ति ह्रस्वत्वाय श्नमः शित्त्वम्। 'न वा धात्वन्यत्वात्'। 'पृणि-मृणी तौदादिकौ धात्वन्तरमि'त्युक्त्वा,'यर्त्तहि न धात्वन्तरं, वृणसे' इति, तत्तु 'तद्योग्यं धात्वन्तरं ने'त्यभिप्रायकं बोध्यम्। अस्य परस्मैपदित्वा-दित्याहुः। केचित्तु व्यत्ययेन श्नम्वत्, इत एव व्यत्ययेन आत्मनेपद-संभवात्, तद्भाष्यप्रामाण्येनाऽस्याऽप्रामाणिकत्वमेवाऽऽहुः।

[3]करोतेरेवेति। बहुशो व्यवहारेण, क्रियासामान्यवाचित्वेन च सुप्रसिद्धतया लाक्षणिक 'कुर्'रूपस्य सानुबन्धकस्याऽपि तस्यैव ग्रहणम्। यथा 'गो'शब्दस्याऽनेकार्थत्वेऽपि प्रकरणादिकं विना स्वर्गवज्रादयो न गृह्यन्ते, तथेति बोध्यम्।

---

१ इतोऽग्रे—'किञ्च 'रधादिभ्यश्चे'ति सूत्रे, अनिट्कारिकासु च दैवादिकयोरेव तृपदृपोः प्रसिद्धत्वेन, वार्त्तिकेऽपि तयोरेव ग्रहणम्' इति ग. पाठः।

२ इतोऽग्रे—'अपि च स्पृशादौ सिजपवादकस्ये सूत्रस्थभाष्यविरोधः ?। 'वश-कान्तौ' अस्य च्छान्त ? तत्साहचर्यात्तृपदृपोरपि तथात्वमेवोचितम्' इति ग. पाठः।

३ 'करोतेरेवेति। न तु अस्य। व्याख्यानादिति भावः' इति क. पाठः।

४ 'बहुश' इत्यारभ्य 'तथेति बोध्यम्' इत्यन्तः ख. ग. ङ. पाठः। क. कुण्ड-लितः। मनोरमादिस्थत्वात्।

५ इतोऽग्रे—'एवञ्च 'विदाङ्कुर्वि'त्यत्र दीर्घाऽभावार्थं यत्नान्तरं न कल्प्यमिति लाघवम्। न चाऽत उदिति परत्वाद्दीर्घत्वाऽभावः। 'पुरस्तादपवाद'न्यायेन

इष इच्छायाम्। अत्राऽनुदित्पाठो भाष्यवार्त्तिकसंमतः।

शिल षिल। क्रमेण तालव्यमूर्धन्यादी। मिल। स्वरितेत्सु पठिष्यमाणस्याऽप्यस्याऽत्र पाठः कर्तृगेऽपि फले परस्मैपदाऽर्थः।

लिख। लेखिता॥ 'लिखिता' 'लिखितुमि'त्यादि प्रामादिकमेव। अनयैव रीत्या 'मिलनमि'त्यपि। (संज्ञापूर्वकत्वेनाऽनित्यत्वाद्वा गुणाऽभावः)। यत्तु 'कुटादिभ्य' इत्यत्रैकशेषेण षष्ठीतत्पुरुषस्यापि निर्देशान्न गुण' इति। तन्न। 'शकुनिष्वालेखने' इति सौत्रप्रयोगविरोधात्। 'लिखापयती'ति तु 'लिखस्य आपः, तं करोती'ति साधु। यत्तु 'घञर्थे कप्रत्ययान्त-'लिख'-शब्दादाख्यानणिचि, आपुको दीर्घोच्चारणसामर्थ्यात् अन्यत्राऽपि प्रवृत्त्या सिद्धमि'ति। तन्न। भाष्ये आकारप्रत्याख्यानात्। यस्य आकारोच्चारणं विना न सिद्धिः, तत्र तत्सामर्थ्यात्तत्कल्पनसम्भवेऽपि, अत्र कल्पने मानाऽभावाच्च। कड मदे। अस्य कुटादित्वसामर्थ्यादनिग्लक्षणवृद्धेरपि निषेध इत्याहुः।

मृङ् प्रा। तङिति। आनस्याऽप्युपलक्षणम्। नान्यत्रेति। ननु माऽस्तु नियमत्वम्, अस्तु च विधित्वम्, किं ङित्त्वेनेत्यत आह—स्वरार्थमिति। तेन 'मा हि मृते'त्यत्र ङितः परत्वेन लसार्वधातुकाऽनुदात्तत्वे कृते, धातु-

तस्य गुणमात्रबाधकत्वात्। दीर्घस्याऽसिद्धत्वाच्च। न च यणादेशस्य प्रत्यय-निमित्तत्वेन बहिरङ्गत्वादसिद्धत्वम्। दीर्घस्य धातुनिमित्तत्वेन समत्वात्। यथोद्देशपक्षे दोषाच्चेति दिक्' इति ग. पाठः।

१ 'संज्ञापूर्वकत्वेन अनित्यत्वाद्वा गुणाऽभावः' इति ख. ग. ङ. पाठः। मनोरमास्थत्वात् क. नास्ति।

२ 'यत्तु' इत्यारभ्य 'प्रयोगविरोधात्' इत्यन्तः ख. ग. ङ. पाठः। मनोरमास्थत्वात् क. नास्ति।

३ 'यत्तु' इत्यारभ्य 'मानाऽभावाच्च' इत्यन्तः ख. ग. ङ. पाठः। क कुण्डलितः। मनोरमास्थत्वात्।

रुदात्तः सिध्यति। न च सिज्लोपोऽसिद्धः। ङित्त्वसामर्थ्यादेकादेश इव तस्याऽसिद्धत्वबाधनात्। लधूपधगुणमाशङ्क्याऽऽह—अन्तरङ्गत्वादिति। 'नाऽजानन्तर्यें' इत्यपि न। तस्या असिद्धपरिभाषाऽपवादत्वात्।

अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यमिति। यद्यपि 'सुट् कात्पूर्व इति सूत्रम्, तथापि 'अडभ्यासव्यवायेऽपी'त्यस्याऽऽवश्यकत्वेन, तेनैव सिद्धौ, 'कात्पूर्व'ग्रहणं व्यर्थम्। प्रत्याख्यातं च भाष्ये। 'सुडि'त्यंशस्तु 'संपरिभ्यामि'त्यनेनैव पाठ्यः। प्रकृते तत्कथनन्तु फलितार्थतयेत्याहुः। गिरतेरिति। 'गिरतेर्णावुक्तमि'ति भाष्यप्रामाण्यात् 'ग्रो यङी'त्यत्राऽस्यैव ग्रहणमित्याहुः।

अजादाविति। 'धातोः स्वरूप'ग्रहणे इति परिभाषासंनिधापितप्रत्ययस्य अचीति विशेषणमिति भावः। अत एव 'गिरौ' 'गिर' इत्यादौ न दोषः। 'परेश्च घाऽङ्कयोरि'ति सूत्रे, 'मृजेर्वृद्धिरि'ति सूत्रे च भाष्ये स्फुटमेतत्। आद्रियते इति। रिङ्। इयङ्।

प्रच्छ। 'पृच्छक'शब्दस्तु भिदाद्यङि निष्पन्न–'पृच्छ'शब्दात्तत्करोतीति णौ, ण्वुलि बोध्यः। प्रष्टेति। 'व्रश्चभ्रस्जे'ति षः। न च षत्वस्याऽसिद्धत्वात् पूर्वं तुकि, छस्य षत्वे, 'प्रत्ष्टे'ति स्यादिति वाच्यम्। अत्राऽपि सतुक्कनिर्देशात्। स्पष्टं चेदं 'च्छ्वोः शूडि'ति सूत्रे भाष्ये।

किरादयो वृत्ता इति। एतच्च 'भूषाकर्मकिरादी'त्यत्रोपयोक्ष्यते। विभाषा सृजीति। इदं थलीड्विधायकम्। मज्जतीति। सस्य श्चुत्वजश्त्वे।

---

१ इतोऽग्रे—'न च तत्सामर्थ्यात्सार्वधातुकत्वांऽशं बाधित्वा आर्द्धधातुके प्रवृत्तिरस्त्विति वाच्यम्। श्रौतनिमित्तसमुदायस्य लुङि लाभात्, पूर्वत्रेत्यस्याऽन्यत्र क्लृप्तबाधत्वाच्चाऽसिद्धत्वबाध एवोचित इति दिक्' इति ग. पाठः।

२ इतोऽग्रे—'अकृतव्यूहपरिभाषा त्वनित्यत्वान्न' इति ग. पाठः।

३ इतोऽग्रे—'किरतौ ल। 'उपचाकर्त्ती'ति यङ्लुग्व्यावृत्त्यर्थं श्तिपा निर्देशः' इति ग. पाठः।

अन्त्यात्पूर्व इति । एतत्फलन्तु 'मग्न' इत्यादावुपधात्वात् 'अनिदिताम्'ि'ति नलोपसिद्धिः । संयोगादिलोपस्तु बहूनां समवाये द्वयोर्द्वयोरपि संयोग-संज्ञया सिद्ध इति बोध्यम् । संयोगादिलोप इति । जस्य कुत्वे, नस्याऽनुस्वारे, परसवर्णे, गस्य चर्त्त्वमिति बोध्यम् । मंक्ष्यतीति । सस्य षत्वं विशेषः । विच्छायतीति । आये कृतेऽपि श एव । तुदादौ विछः पाठसामर्थ्यात् । तेन शतरि 'विच्छायती' 'विच्छायन्ती'त्यत्र नुम्विकल्पः ।

न[1] च विच्छेर्ण्यन्तादपि श एव स्यात् । शीघ्रोपस्थितिकत्वेन 'विच्छि'शब्दमुच्चार्य विहितप्रत्ययाऽन्तस्यैव 'विच्छि'शब्देन 'तुदादिभ्य' इति सूत्रे ग्रहणादित्याहुः । यत्तु 'आयप्रत्ययो वैकल्पिकः । पाठसामर्थ्यादि'ति । तन्न । अबाधेनोपपत्तौ, बाधकल्पनस्याऽन्याय्यत्वादित्याहुः । तङर्थ इति । पूर्वपाठस्तु कर्त्रभिप्राये परस्मैपदाऽर्थ इति बोध्यम् ।

विद्लृ लाभे । 'वित्तो भोगे'तिसूत्रस्थकैयटे 'विदिर्लाभे' इति पठ्यते ।

षिच । 'षिचिरि'ति पाठः प्रामादिकः । फलाऽभावादिति भावः ।

इति तुदादयः ।

## अथ रुधादिप्रकरणम् ।

रुधादिभ्यः । श्नमो मित्त्वादागमत्वेऽपि, अधिकारात्प्रत्ययत्वम् । अत एव शस्येत्त्वम् । शकारस्तु 'श्नान्नलोप' इत्यादौ विशेषणाऽर्थः । 'नान्नलोप' इत्युक्ते हि 'यज्ञानामि'त्यत्राऽपि स्यादित्याहुः । श्रवणाऽर्थस्तु शो न । 'तृणह्' इत्यादिनिर्देशात् । अत एव 'शबादेशाः श्यन्नादयः करिष्यन्ते' इति भाष्योक्तपक्षाऽन्तरेण न विरोधः । न च प्रत्ययत्वे तस्मिन्नङ्गत्वाऽऽपत्तिः । अवयवमुद्दिश्याऽविहितत्वात्[2] । 'मिदचोऽन्त्यादि'-त्यनेन मित्त्वेन विधानेऽपि, प्रत्ययत्वेनाऽविधानाच्च । अत एव 'भनक्ती'-

---

१ 'न च' इत्यारभ्य 'अन्याय्यत्वादित्याहुः' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः । मनोरमाशब्दरत्नस्थत्वात् ।

२ इतोग्रे—'महासञ्ज्ञयाऽर्थवत्स्येव प्रवृत्तेश्च' इति ग. पाठः ।

त्यादौ न दीर्घः । रुधादीनां श्नम्निमित्ताऽङ्गत्वं तु न । तेषां श्नम्परत्वाऽभावात् । फलदोषयोरभावाच्च । शप्तु न । 'येन नाऽप्राप्ति'न्यायेन श्नमोऽपवादत्वात् । 'सत्यपि सम्भवे बाधनं भवती'ति न्यायात् ।

न च 'मिदचोऽन्त्यादि'ति सूत्रस्य अन्यत्र चारितार्थ्येनाऽधिकृत-'परश्चे'त्यस्य बाधे मानाऽभावः । प्राप्तसंज्ञाबाधे मानाऽभावेन, मित्त्वस्यैव मानत्वात् । 'मिदचोऽन्त्यादि'ति तु एकवाक्यतयैव सम्बध्यते । एवञ्च 'रुधादिभ्यो रुधादीनामन्त्यादचः परो मित् श्नम्प्रत्यय' इत्यर्थः । 'शे मुचादीनामि'त्यादाविव यस्य विहितस्तस्याऽन्ताऽवयव इति त्वत्र न सम्बध्यते । अयोग्यत्वात् । अत एव तन्मध्यपतितन्यायस्य 'भिनत्ती'त्युदाहरणं तदन्तविधिसूत्रे भाष्ये दत्तम् ।

उच्छृदिर् । उदित्त्वं क्त्वायामिड्विकल्पाय । जश्त्वं ष्टुत्वमित्यादि । अत्र प्रक्रियाप्रदर्शनमात्रे तात्पर्यम् , न तु क्रमे इत्याहुः ।

तृहण । श्नमि कृते इम् यथा स्यादिति श्नमो निर्देशः । अन्यथा येननाऽप्राप्तिन्यायेन इम् श्नमो बाधकः स्यात् । तदाह—श्नमि कृते इति । हलादाविति । भाष्ये तु 'अचि ने'त्यनुवर्त्त्य 'तृणहानी'त्यादौ वारणं कृतम् । अत एव 'अतृणेडि'त्यादिसिद्धिरिति निरूपितं प्रत्ययलक्षणसूत्रे ।

अञ्जेः सिचि । ऊदिल्लक्षणविकल्पाऽपवादः ।

इति रुधादयः ।

इतोग्रे—'यत्र मिद्विधीयते तत्राऽचोन्त्यादिरित्युपतिष्ठते' इति तदर्थात्' इति ग. पाठः ।

'रुधादिभ्यः परोऽन्त्यादचः परो मिदित्यर्थः । तत्र सामर्थ्याद्रुधादिभ्यः परत्वमवयवद्वारकं बोध्यम् । 'शे मुचादीनामि'तिवत्षष्ठीनिर्देश एव तु न कृतः । आनुगादीनामिव प्रत्ययत्वाऽनापत्तेः । केचित्तु 'रुधादिभ्यः परः श्नमि'त्येवार्थः । अनेन तद्देश एवोत्पत्तिः । पश्चान्मिदचोऽन्त्यादित्यनेन तत उत्कृष्याऽन्त्यादचः परो विधीयते । यथा स्वमोर्लुगित्यादिबकाज्जातस्य निवृत्तिः । यथा वा सिंहे वर्णविपर्यय इत्याहुः' इति ग. पाठः ।

# अथ तनादिप्रकरणम् ।

तन्व इति । 'लोपश्चाऽस्यामि'ति वा लोपः । क्षिणु-क्षिण्वोर्णो 'न'स्थाने 'रषाभ्यामि'ति लाक्षणिकः । अत एव 'चंक्षंती'त्यादावनुस्वारः । आत्रेयादय इति । तथा च 'उतश्चे'ति सूत्रे कैयटेन 'क्षिणु' इत्युदाहृतम् । अत एव 'न तद्यशः शस्त्रभृतां क्षिणोती'ति महाकविप्रयोगश्च[1] ।

'अत्राऽन्त्यं मतं युक्तम् । 'क्षिणु' इत्यादिप्रयोगास्तु 'बहुलमेतन्निदर्शनमि'ति 'क्षि'धातुं स्वादावप्यङ्गीकृत्य समाधेया' इत्यन्ये ।

नित्यं करोतेः । 'नित्य'ग्रहणं स्पष्टार्थम्[2] ।

सम्परिभ्याम् । 'सम्परिभ्यां भूषण-समवाययोः करोतावि'ति 'अत उत्सार्वे'ति सूत्रे भाष्यात् 'संपर्युपेभ्य' इति वृत्तिपाठः प्रामादिक इति बोध्यम् । न च भाष्यरीत्या यथासङ्ख्यं स्यात् । 'संस्कृतं भक्षा' इत्यादिनिर्देशेन तद्बाधात् । समवायः—सम्बन्धः, समूहश्च ।

उपात्प्रति । यद्यप्यत्र सूत्रे चो वृत्तौ न पठ्यते, तथापि वृत्त्युक्तपाठ-

---

१ इतोग्रे—'एवं यङ्लुक्यपि 'चेक्षेन्ति' 'चेक्षिन्ती'ति च मतभेदेन बोध्यमिति केचित्' इति ख. ग. ङ. पाठः ।

२ इतोग्रे—'सुडिति । यद्वा देशान्तरे प्राप्तः ककारात्पूर्वं विधीयते । न चाऽन्त्यपक्षे 'समस्करोदि'त्यत्राऽप्राप्तिः, अटा व्यवधानादिति वाच्यम् । 'संपरिभ्यामि'त्यस्य तृतीयान्तत्वं स्वीकृत्य ताभ्यामुपसृष्टस्येति व्याख्यानान्न दोष इति सूत्राशयः । तमप्रतिपद्य 'तस्य करोतेः सुट् यस्य कृतः कात्पूर्व' इति करोत्यवधारणार्थमेवे'ति पक्षमवलम्ब्याऽभ्यासव्यवायेपीति वार्त्तिकम् । अत्र पक्षे 'संचस्करतुरि'त्येतत्सिद्धये संयोगोपधग्रहणम् 'ऋतश्च संयोगादेरि'त्यत्र कर्त्तव्यं, यद्वेति पक्षे च । एतत्पक्षद्वये च 'समचिस्करदि'त्यत्र दीर्घो लघोरि'ति दीर्घाभावोऽकृतव्यूहपरिभाषया बोध्यः । भाष्ये तु कात्पूर्वग्रहणं, वार्त्तिकञ्चोभयमपि प्रत्याख्यातम् । तदाह—कात्पूर्वे इत्यादीति' इति ख. ग. ङ. पाठः ।

फलस्य भाष्यमते साधनाऽर्थं तदावश्यकतेत्याहुः । केचित्तु भूषण-सङ्घयो-रुपात्परस्य सुटं नेच्छन्ति, चं च न पठन्ति ।

सुट् कात्पूर्वः । अत्र 'कात्पूर्व'ग्रहणं कालाऽवधारणाऽर्थम्–'तदा सुट् भवति, यदा कृतः कात्पूर्वो भवती'ति । तेनाऽन्तरङ्गमपि द्वित्वादिकं बाधित्वा पूर्वं सुडि'ति भाष्यकृत् ।

वार्त्तिककृत्तु 'कात्पूर्वग्रहणस्य कालाऽवधारणाऽर्थत्वे लक्षणाऽऽपत्त्या, देशप्रक्लृप्त्यर्थमेव । स्थाने द्विर्वचनत्वे अन्तरङ्गत्वेन कृतद्वित्वस्य स्थानि-वद्भावेन करोतित्वात्, चकारात्पूर्वं प्राप्तस्य मध्यप्रवेशाऽर्थमिदमि'ति सूत्र-प्रयोजनमुक्त्वा, 'द्विःप्रयोगो द्विर्वचनमि'ति सिद्धान्ते, अभ्यासस्याऽऽनर्थ-क्येन उत्तरखण्डस्यैवार्थवत्तया करोतित्वेन, तस्य चाभ्यासेन व्यवधानात्, 'समस्करोदि'त्यादौ विकरणाऽन्तभक्ततया अटस्तेन व्यवधानात्समादि-परत्वाऽभावात्सुटोऽप्राप्तौ, 'अडभ्यासव्यवायेऽपी'ति वचनमारब्धवान् । तत्र सुटोऽप्राप्त्या तत्र देशप्रक्लृप्त्यर्थं 'कात्पूर्वग्रहणं' व्यर्थमिति तदाशयः ।

ततो भाष्यकृता 'सम्परिभ्यामि'त्यस्य तृतीयाऽन्तत्वं स्वीकृत्य, 'ताभ्यामुपसृष्टस्ये'ति व्याख्यानमाश्रित्य वार्त्तिकं प्रत्याख्यातम्[2] । तदाह—कात्पूर्व इत्यादीति ।

---

१ इतोऽग्रे—'एवञ्च वृत्त्युक्तपाठे 'समवाये चे'ति योगविभाग-चकारौ, उपस्य द्विर्ग्रहणं च व्यर्थमिति बोध्यम्' इति ग. पाठः ।

२ इतोऽग्रे—'अर्थतो–द्विःप्रयोगपक्षे कात्पूर्वग्रहणमपि प्रत्याख्यातमेव । देशा-न्तरेऽप्रसक्तेः । ततः पदद्वयाऽपेक्षसुटो बहिरङ्गतयाऽसिद्धत्वात्, 'संचस्कर-तुरि'त्यादौ 'ऋतश्च संयोगादेरि'ति गुणो न स्यात् । 'समचिस्करदि'त्यादौ 'दीर्घो लघोरि'ति दीर्घश्च स्यादित्याशङ्क्य-संयोगोपधग्रहणेन गुणसिद्धिः, धातूपसर्गकार्यस्याऽन्तरङ्गत्वेन सुटः सिद्धतया दीर्घाऽभावस्य च सिद्धिरुक्ता । एवं च 'स्थाने द्विर्वचन'पक्षेऽपि कात्पूर्वग्रहणं न कर्त्तव्यमित्युक्तम् । तत्र पक्षे 'संचस्करतुरि'त्येतत्सिद्ध्यर्थं 'संयोगोपध'ग्रहणम् 'ऋतश्च संयोगादेरि'त्यत्र

पूर्वं धातुरिति। अत एव 'अनुभूयते' इत्यत्र कर्मणि लकारः। 'पूर्वं धातुः साधनेने'ति तर्कविरुद्धमिति भावः। 'प्रत्यय' इत्यादिनिर्देशेन 'उपसर्गकार्यात्पूर्वमपि क्वचित्साधनकार्यप्रवृत्तिर्ज्ञाप्यते' इति 'प्रत्येती'-त्यादौ न दोषः। अन्यथा पूर्वं दीर्घे, ततः कृतैकादेशस्य गुणे, रूपाऽसिद्धिः स्पष्टैवेति दिक्।

ऋतश्च संयोगादेर्गुण इति। न च द्वित्वे समुदायस्यैवाऽङ्गत्वेन संयोगादित्वं दुर्लभम्, परत्वान्नित्यत्वाच्च गुणात्पूर्वं 'शर्पूर्वाः खय' इत्यस्य प्रवृत्तेरिति वाच्यम्। प्रत्ययोत्पत्तिवेलायां संयोगादित्वस्य विवक्षणेन अदोषात्। अत एव 'सस्वरतुरि'त्यादिसिद्धिः। सूत्रं च सार्थकम्।

न चाऽभ्यासस्य नैरर्थक्येन, उत्तरखण्डस्यैवाऽर्थवत्त्वेनाऽङ्गत्वम्। अभ्यासस्य नैरर्थक्यन्तु लोके केवलाऽभ्यासतोऽर्थाऽबोधात्। अत एव न बोधाऽऽवृत्तिः। उत्तरखण्डस्य तु प्रत्ययाऽव्यवहितप्राग्वर्त्तिनः केवलस्या-ऽप्यन्यत्राऽर्थबोधकताया दृष्टत्वात्, अर्थवत्त्वमेवेति नाऽत्र दोषः। 'पेचतु-रि'त्यादौ तदभावेऽप्यर्थप्रत्ययेन तस्याऽर्थवत्त्वाच्च। अभ्यासप्रयोगस्तु 'रैपोषं पुष्यती'तिवत्साधुत्वाऽर्थं एव। अत एव 'दयतेर्दिगी'ति सूत्रे 'अस्तेर्द्विर्वचने कृते, परस्य भूभावे कृते, पूर्वस्य श्रवणं प्राप्नोती'त्याशङ्क्य, 'आर्द्धधातुके' इत्यस्य विषयसप्तमीत्वेन परिहृतम्। समुदायेऽस्तित्वं तु द्विःप्रयोगपक्षे दुरुपपादम्। विभिन्नाऽऽनुपूर्वीकत्वात्। हलादिःशेषा-दिकन्तु न भूभावात्प्राक्। अङ्गसंज्ञादिसापेक्षत्वेन तेषां बहिरङ्गत्वात्। अत एव 'आटिटर्दि'त्यादावुत्तरखण्डे णेर्णित्वादिप्रयुक्तलोपसिद्धिः, ण्यन्तत्वप्रयुक्तधातुत्वसिद्धिश्चेति वाच्यम्।

---

कर्त्तव्यम्। एतत्पक्षद्वये च 'समचिस्करदि'त्यत्र 'दीर्घो लघोरि'ति दीर्घा-ऽभावोऽकृतव्यूहपरिभाषया बोध्यः। भाष्ये तु कात्पूर्वग्रहणं, वार्त्तिकञ्चो-भयमपि प्रत्याख्यातम्' इति क. कुण्डलितः। ख. ग. ङ. तु भिन्नः पाठः।

१ इतोऽग्रे—'न चैवमुत्तरखण्डस्याऽङ्गत्वात्प्रत्ययोत्पत्तिवेलायामित्यादि व्यर्थ-मिति वाच्यम्' इति ख. ङ. पाठः। क. कुण्डलितः।

द्वित्वे, आगन्तूनामन्ते निवेशेन, द्वितीयप्रयोगे प्रकृतित्वाऽभावेन, आद्ये प्रत्ययविधानाऽवधित्वप्रत्यभिज्ञया च तदादिग्रहणसत्त्वेन, समुदाये एव अङ्गत्वमित्यर्थस्य 'एकाचो द्वे' इति सूत्रे भाष्ये एवोक्तत्वात् । अङ्गसंज्ञाया विकरणविशिष्टे समुदाये निरर्थकेऽप्यङ्गीकारेण, अङ्गसंज्ञायामर्थवत्परिभाषाया अप्रवृत्त्या, 'यस्मादि'त्यनेनाऽप्युद्देश्यताऽवच्छेदकशब्दाऽऽनुपूर्वीमात्राऽवच्छिन्नस्यैव ग्रहणात् । न चाऽस्तूक्तरीत्या समुदायस्याऽङ्गत्वम्, उत्तरखण्डमात्रस्याऽपि तु तद्वर्योरमिति वाच्यम् । ईदृशे विषये मुख्यतदादिलाभेन, व्यपदेशिवद्भावलब्धतदादेस्तदप्रवृत्तिरिति तदाशयः ।

नित्यमित्यनुवर्त्तते इति । इदं च कैयटे स्पष्टम् । परन्त्विदं चिन्त्यम् । तस्याऽतिदूरत्वात्, विच्छिन्नत्वाच्च । तस्य तत्सूत्रे विधेयविशेषणत्वाच्च ।

किञ्च तदनुवृत्तावपि नित्यं संयोगादित्वं यदि प्रयोगमात्राऽवच्छेदेन संयोगादित्वं, तर्हि न कस्याऽपि तत् । 'सस्वरतुः' 'अस्वरिष्टे'त्यादौ तदभावात् । 'यगादिघटितप्रयोगमात्राऽवच्छेदेने'त्यपि न । 'अस्तर्यत' 'तरीस्तर्यादि'त्यादावभावात् । 'संयोगादेरि'ति कर्मधारयः, ऋकारविशेषणं चे'ति पक्षेऽपि अङ्गाद्यवयवसंयोगात्परत्वमुक्तेषु दुरुपपादम् । अत एव प्रत्येकं संयोगसंज्ञापक्षे 'संहृषीष्ट' 'संह्वियते' इत्यादौ 'ऋतश्च संयोगादेः' 'गुणोर्त्ती'तीट्गुणाऽऽपादनपरं 'हलोऽनन्तरा' इति सूत्रस्थभाष्यं सङ्गच्छते । एतेन इड्विधावुपदेशग्रहणाऽनुवृत्तिरपि परास्ता । किञ्च तत्रोपदेशग्रहणाऽनुवृत्तौ तेनैव 'अस्तरिष्टे'त्यस्य सिद्धौ, ज्ञापकत्वाऽसम्भवेन 'अस्तर्यते'त्यादौ गुणाऽसिद्धिरिति निरूपितं स्वादौ । तस्माद्भाष्योक्तरीत्या इड्गुणयोः प्रतिषेधवचनाऽऽरम्भ एव युक्तः । 'संचस्करिवे'त्यर्थं 'कृसृभृ' इति सूत्रे 'कृञोऽसुट' इत्यप्यावश्यकमेवेत्याहुः ।

इति तनादयः ।

---

१ 'अस्वारिष्ट' इति क. पाठः ।

२ इतोऽग्रे—'केचित्तु संज्ञापूर्वकविधेरनित्यत्वान्न गुणः । [1]आगमशास्त्राऽनि-

1 'आगमशास्त्राऽनित्यत्वाच्च'-इति ङ.पाठः । 'स'शास्त्राऽनित्यत्वाच्च' इति क.पाठः ।

# अथ श्न्यादिप्रकरणम् ।

एवं झस्येति । आत्मनेपदे इत्यर्थः । स्तन्भु । चत्वारोऽपि नोपधाः । विष्टभ्नोतीति । 'स्तन्भेः' 'अवाच्चे'ति षः ।

वेः [1]स्कभ्नातेः । अत्र श्नानिर्देशः 'अश्नोतेरि'तिवन्नेतरव्यावर्त्तकः । किन्त्वदृष्टाऽर्थ एव । व्याख्यानात् । तद्ध्वनयन्नाह—विष्कभ्नोतीति । क्षुभ्नादित्वाण्णत्वाऽभावः [2] ।

त्यत्वाच्च नेट् । किञ्च व्यवस्थितविभाषया[1] नेट् । 'स्वरती'ति सूत्रे पुनर्वा-ग्रहणात् । न च 'लिङ्सिचोरि'त्यादि निवृत्त्यर्थं तत् । 'स्वरति'ग्रहणादेव तत्सूत्रस्था'ऽऽत्मनेपदेष्वि'त्यस्येव,' 'लिङ्सिचोरि'त्यस्याऽपि निवृत्तिसिद्धेः । एतेन 'नित्याऽर्थं 'स्वरति'ग्रहणमि'त्यपास्तम् । इष्टाऽनुरोधेन तन्निवृत्तेरेव कल्पनाच्च । 'ऋतश्चे'ति सूत्रे 'लिङ्सिचोरि'त्यादेः चाऽनुकृष्टत्वेनैवोत्तरत्रा-ऽसम्बन्धसिद्धेश्च । किञ्च 'वा'ग्रहणनिवृत्तौ सूतिसूयतिधूञां ग्रहणस्य वैय-र्थ्याऽऽपत्तिः । 'लिङ्सिचोर्निवृत्त्यर्थमि'ति भाष्यस्य लिङ्सिचोः परतः क्वचि-त्पूर्वसूत्रस्थ-वाग्रहणस्य व्यवस्थितविभाषात्वबोधनद्वारा इण्निवृत्त्यर्थमि'-त्येवाऽर्थ इत्याहुः' इति ख. ङ. पाठः । क. कुण्डलितः ।

१ 'नेदं श्नाप्रत्ययविशिष्टस्याऽनुकरणम् । धातुनिर्देशाऽभावेन श्तिबनापत्तेः । अत एव 'हिनुमिने'ति निर्देशः सङ्गच्छते । धात्वनुकरणे तूपसर्गात्सुनोती-त्यादौ श्न्वादीनामिव श्नोऽपि ज्ञापकसिद्धत्वेन नेतरव्यावर्त्तकत्वम् । अतएव 'विष्कम्भितमि'त्यादौ षत्वसिद्धिः । तद्ध्वनयन्नुदाहरति-विष्कभ्नोतीति' । इति ग. पाठः ।

२ इतोऽग्रे—'न च 'वेः स्कम्भेरि'त्येवाऽस्तु, किं श्तिपा निर्देशेनेति वाच्यम् । 'स्फुरतिस्फुलत्योरि'ति सूत्रस्थश्तिप्प्रत्ययस्येव, तत्र योगविभागेन सिद्धे-ऽत्रत्य'वि'ग्रहणस्येव च तत्सत्त्वात् । 'एत्येधती'तिवच्च' । इति ग. पाठः ।

1 'व्यवस्थितविभाषयाऽपि' इति ख. ग. ङ. पाठः ।

[1]हलः श्नः । ननु 'श्ना'ग्रहणं व्यर्थम् । 'स्तन्भु-स्तुन्भु-स्कन्भु-स्कुन्भु-स्कुञ्भ्यः श्नुः' । ततः 'श्ना' । 'क्र्यादिभ्यः' । 'हलः श्नः शानज्झावि'तिसूत्रन्यासेन, 'श्ना' इत्यत्र स्तन्भ्वाद्यनुवृत्त्या, 'क्र्यादिभ्य' इत्यत्र 'श्ने'त्यनुवृत्त्या, चरमसूत्रे 'क्र्यादिभ्य' इत्यनुवृत्त्या चेष्टसिद्धेरिति चेन्न । स्तन्भ्वादिभ्यः सौत्रेभ्यः शानजनापत्तेः[2] । स्तन्भ्वादीनामनुवृत्तौ तु श्नोरपि विषये तदापत्तिः । एवञ्च स्कुञ्संनिधौ व्युत्पाद्यमानतया प्रथमोपस्थितस्तन्भ्वादीनपहाय, ग्रहौ 'हलः श्नः' इत्यस्योपन्यासो न युक्तः प्राच इति बोध्यम् ।

दॄ विदारणे । 'अयं दिवादावपी'त्युक्तम् । ताच्छीलिकप्रकरणाऽन्ते 'दीर्यतेर्वा दृदत्' इति भाष्यात् ।

हलः । 'अङ्गस्ये'त्यावर्त्तते । तत्रैकं हलो विशेषणम् । अवयवसम्बन्धे षष्ठी । द्वितीयं च सम्प्रसारणस्य विशेष्यम् । तदन्तविधिः । तदाह—अङ्गावयवादिति । तेन 'निरुतम्' 'दुरुतमि'त्यादौ न । दीर्घनिर्देशेति । 'अङ्गवृत्तपरिभाषाज्ञापनद्वारे'ति शेषः । सिज्लोपस्याऽसिद्धत्वादिति । यद्यपीदं नियमाऽर्थम् । स्थानिवत्सूत्रदृष्ट्या च त्रिपादी नाऽसिद्धा[3] । तथापि अल्विधित्वान्न दोषः । मूलन्तु 'प्रत्ययलक्षणसूत्रं विध्यर्थम् । 'एकाच' इति सूत्रे 'ध्व'साहचर्यात् सादिप्रत्यय एव गृह्यते' इति मतेनेत्याहुः ।

तत्र मूलमिति । 'एत्त्वाऽभ्यासलोपावत्रे'त्यारभ्य यदुक्तं तत्र मूलं मृग्यमित्यर्थः । संयुक्तहल्मध्यस्थत्वात्, ग्रन्थेरादेशादित्वाच्च सूत्रेणाऽप्राप्तेः, वार्त्तिकाऽदर्शनाच्चेति भावः ।

---

१ 'हलः श्नः' इत्यारभ्य 'बोध्यम्' इत्यन्तः ख. ङ. पाठः । शब्दरत्नस्थत्वात् क. कुण्डलितः ।

२ 'शानजनापत्तेः । तदाह—स्तभानेति' इति ग. पाठः ।

३ इतोऽग्रे—'तथापि वार्णत्वान्न प्रत्ययलक्षणम् । 'एकाच' इति सूत्रे 'प्रत्यय'-ग्रहणस्याऽसंनिहितत्वेन, 'सकारे परे' इत्येवाऽर्थादिति बोध्यम्' इति क. कुण्डलितः । ख. ग. ङ. पाठः ।

**वेष्टेति** । न्यासकृन्मतेनेदम् । वस्तुतो 'वेषिते'त्येव ।

**ग्रहो** । 'इडि'त्यनुवृत्तस्य 'ग्रह' इति पञ्चम्या षष्ठी कल्प्यते[1] इत्याह— **इट** इति । एकाचः किम् ? । यङ्लुकि मा भूत् । इदं चिन्त्यम् । यङ्लुकि दीर्घस्येष्टत्वात् । यथा चैतत्तथा[2] यङ्लुगन्ते निरूपयिष्यामः । विहितस्येति किम् ? । 'ग्राहितम्' । न च णिलोपस्य स्थानिवत्त्वाद्वृद्धेः परत्वाऽभावेन, विहितविशेषणाऽभावेऽपि न दोष इति वाच्यम् । अपूर्वविधित्वात् । (पञ्चमीसमासस्तु[3] नाऽस्त्येव, फलाऽभावादित्युक्तम्) । मतान्तरे दीर्घविधौ तन्निषेधाच्च । **ग्रहीषीष्टेति** । 'न लिङी'ति न दीर्घनिषेधः । 'वृत' इत्यनुवृत्तेः । **अग्रहीष्टामिति** । ननु 'लावस्थायामडि'ति पक्षे एकाचो विहितत्वाऽभावात्कथं दीर्घ इति चेन्न । बहिरङ्गत्वादटोऽसिद्धत्वेनाऽक्षतेरित्यभिमानः । अत्र गणे 'वस निवासे' इति केचित्पठन्ति ।

इति क्र्यादयः ।

## अथ चुरादिप्रकरणम् ।

**सिद्धे इति** । न च स्वाऽर्थे विधानाऽर्थमिदमस्तु । 'सत्यस्य कृञि आपुगि'त्यादिभाष्यविरोधात् । न च आपुग्निपातनाऽर्थं 'सत्याप'-ग्रहणमावश्यकम् । अर्थ-वेदाऽर्थमावश्यके वार्त्तिके एव 'सत्य'पाठेन सिद्धेरित्यभिप्रायः । **स्वार्थे इति** । 'करणे' इत्यस्य विच्छिन्नत्वात् नाऽनुवृत्तिरिति भावः ।

**णिचश्च** । लक्षेः स्वरितेत्त्वमनार्षम् । सत्त्वेऽपि वा णिचः पाक्षिकत्वे लिङ्गम् । एतेन 'लक्षेः स्वरितेत्त्वादिदं चुरादौ न प्रवर्त्तते' इत्यपास्तम् ।

---

१ 'षष्ठी कल्पते' इति क. पाठः ।

२ 'ग्रहोऽलिटीति सूत्रे भाष्यप्रदीपोद्योते निरूपितम्, यङ्लुगन्ते च' इति ग. पाठः ।

३ अयं ख. ग. ङ. पाठः । क. नास्ति ।

'एष विधिर्न चुरादिणिजन्तात्स्यादिति कश्चन निश्चिनुते स्म ।
आप्तवचोऽत्र न किञ्चन दृष्टं, लक्षयतेः स्वरितेत्त्वमनार्षम्' ॥

–इति हरदत्तः । इदित्करणमिति । णिचो नित्यत्वे हि तेन व्यवधानान्नलोपाऽप्रसक्त्या, किमिदित्त्वेनेति भावः । ननु णिजन्तात्क्विपि नलोपाऽभावाय तच्चरिताऽर्थम् । स्थानिवत्त्वं तु क्वौ लुप्ते, क्वौ विधौ च निषिद्धमिति चेन्न । 'असिद्धवदत्रे'ति णिलोपस्याऽसिद्धत्वात् । किञ्च 'क्वौ लुप्तमि'ति असार्वत्रिकम् । 'क्वौ विधिमि'त्यपि लक्षणप्रतिपदोक्तपरिभाषया क्विशब्दमुच्चार्य विहितविधिविषयमिति न दोषः ।

सामान्यापेक्षमिति । 'चुरादित्वाऽपेक्षमि'त्यर्थः । 'आधृषीयाद्वा'-इति, ज्ञापकसिद्धस्याऽसार्वत्रिकत्वबोधनाय । एवं चाऽऽधृषीयाणामेव ऐच्छिको विकल्पः । अन्येषान्तु शिष्टाऽऽचाराद्व्यवस्थित इति तत्त्वम् ।

जगणतुरिति । मन्त्रत्वात् आम्नेति तदाशयः । नचैवं नित्यण्यन्तत्वेऽपि 'णेरनिटी'ति लोपेनेष्टसिद्धिः । उत्तरसूत्रस्थ—'जगणिथे'त्यस्याऽसङ्गतेस्तदवस्थत्वात् । एत्त्वाऽभ्यासलोपौ तु न । लिण्निमित्ताऽऽदेशाऽऽदित्वात् । अल्लोपस्य स्थानिवत्त्वेन, असिद्धत्वेन च, अकारस्य कित्परत्वाऽभावाच्च । 'किती'त्यादेरङ्गविशेषणत्वपक्षे तु वृत्तिकृता प्रत्युदाहृतम् । अत्र पक्षे 'णेरणौ' इतिसूत्रस्थभाष्यविरोधो बोध्यः ।

---

१ इतोऽग्रे–'यत्तु इदित्करणाद्यङ्विधितो 'वे'त्यनुवर्त्तते । सा च व्यवस्थितविभाषे'ति । तन्न । यङ्विधौ 'वा'ग्रहणाऽभावात् । सन्विधौ यद्यप्यस्ति, तथापि भाष्ये तस्य प्रत्याख्यानादयुक्तं तत्' इति ग. पाठः ।

२ इतोऽग्रे–'पूर्वं पूर्वमन्तरङ्गमि'तिपक्षे बहिरङ्गतयाऽसिद्धत्वाच्च । 'क्वौ लुप्तमि'-त्यस्याऽसार्वत्रिकत्वाच्च' इति ग. पाठः ।

३ 'विहितविधिविषयमिति केचित्' इति ग. पाठः ।

४ इतोऽग्रे–'अत्राऽरुचिबीजन्तु 'णेरणौ' 'घुषिरविशब्दने' इत्यादिसूत्रस्थभाष्यविरोधः' इति ग. पाठः ।

विशेषेति । 'असंयोगोपधेकारान्तरूपविशेषे'त्यर्थः । न वैयर्थ्यमिति । 'न वैयर्थ्यशङ्काऽपी'त्यर्थः ।

तच्चिन्त्यमिति । णिजभावे, नकारविशिष्टपाठेऽपि नकारस्याऽनुपधात्वादेव नलोपाऽप्राप्तौ, इदित्त्ववैयर्थ्यस्य तदवस्थत्वादिति भावः । 'यस्मिन् ज्ञापिते यस्य चारितार्थ्यं, तत्तेन ज्ञाप्यमि'ति सिद्धान्तात् । आधृषीयेष्वेव पाठस्तु न कृतः । वैचित्र्याऽर्थत्वात् । एकजातीयाऽर्थस्याऽनेकप्रकारैर्बोधने बाधकाऽभावात् । केचित्तु 'तत्र्यादीनामिदित्त्ववत्, चित्यादेरपि तदुच्चारणाऽर्थमेवेति, ज्ञापकमसङ्गतमेव, भाष्याऽनुक्तेरि'त्याहुः । ओकार इदित्येके इति । ओदित्त्वफलन्तु 'डीङ्'धातूक्तरीत्याऽत्रापि बोध्यम् ।

भ्राजभास । अत्र 'भ्राजि'ग्रहणं व्यर्थमिति प्रागेव निरूपितम् ।

तद्धि सेट्कत्वायेति । ननु धातुपाठे विशिष्यैव उदात्ताऽनुदात्तानां पाठेन, 'ॠदृदन्तैरि'त्यस्य च अबुधबोधनायाऽनुवादरूपत्वात् ॠकारान्तत्वस्य सेटकत्वे निमित्तत्वाऽभावेन कथमिदं ज्ञापकमिति चेन्न । 'ॠच्छत्यॄतामि'ति गुणाऽऽदिप्रवृत्त्यर्थम्, 'ॠतश्चे'ति रुगाद्यप्रवृत्त्यर्थं च क्रियमाणस्य दीर्घोच्चारणस्य ज्ञापकत्वाऽक्षतेः । एवं च 'पारयतिर्नित्यण्यन्त' इति कविकल्पद्रुमोक्तमपास्तमि'ति केचित् ।

अपरे तु 'ॠकारान्तत्वप्रयुक्तकार्यविशिष्टरूपाणां जौहोत्यादिकमादाय सिद्धेः, ज्ञापितेऽपि चारितार्थ्याऽभावेन ज्ञापकाऽसम्भवात्, अस्य नित्यण्यन्तत्वमेवेत्याहु'रिति दिक् ।

उऋत् । अत्र यद्वक्तव्यं तत् 'कृपू'धातावुक्तम् ।

---

१ इतोऽग्रे—'केचित्तु विशेषाऽपेक्षत्वपक्षेऽपि चुरादिपठितेदित्त्वेन चितीति ज्ञापकस्य वर्णने, यत्र्यादिभ्योऽपि णिज्विकल्पो भवत्येवेत्याहुः इति ख. ग. ङ. पाठः ।

२ 'न चेदशानामाधृषीयेष्वेव पाठेन सिद्धेरिदित्त्वं व्यर्थम् इति ग. पाठः ।

३ 'यद्वक्तव्यं तदणुदित्सूत्र-पथिमथीतिसूत्रयोरुक्तम्' इति ग. पाठः ।

इररारामिति । दीर्घोपधे इर् , मृजौ आर् , अन्यत्र अरिति विवेकः ।
षान्त्व सामप्रयोगे इति । केचित्त्वत्र 'षाम सान्त्वप्रयोगे' इति पठन्ति। णिजन्तात्तङिति । शास्त्रबाधस्याऽन्याय्यत्वात् णिचो वैकल्पिकत्वं नोक्तम् । चित्रङादावुक्तन्यायस्य क्लृप्तत्वाच्च । स्माययते इति । आत्त्वं त्विह न । 'स्मयतेरि'ति निर्देशादि'ति प्राञ्चः।[2] शपा[3] निर्देशेन शप्प्रकृति'स्मि'धातोरेव तत्र ग्रहणमिति तदाशयः ।[4] अन्ये तु 'स्मयतेरि'ति सूत्रे 'हेतुभये' इत्यनुवर्त्तते । 'भये' इति च धात्वर्थोपलक्षणम् । तथा च प्रत्यासत्त्या तद्व्यापारवाचकणिच्येव प्रवृत्तिरि'त्याहुः ।

• शुल्ब माने । पवर्गतृतीयाऽन्तोऽयम् । 'शुल्बसूत्रमि'ति प्रयोगात् । 'पवर्गचतुर्थाऽन्तं'[5] इत्यन्ये । 'वज' 'मार्गे'ति (द्वौ) धातू । 'व्रजे'त्येके । केचित्तु 'मार्गसंस्कारोऽर्थ' इत्याहुः ।

अयं ज्ञाने, ज्ञापने चेति । 'प्रच्छ ज्ञीप्सायामि'ति प्रयोगात्, श्लाघादिसूत्रे 'ज्ञीप्स्यमान' इति प्रयोगाच्चेति भावः । 'मारणादिकमप्यस्याऽर्थ' इत्यन्ये । 'परिवेषण'शब्देन अण्यन्तप्रकृतिकल्युडन्तेन वेष्टनम् , भोजना चोच्यते । 'भोजना'पदेन च अदनीयवस्तुनो भोजनाऽर्थं भोजनपात्रे

---

१ इतोऽग्रे—'अनेन चङ्परणिनिमित्त आङ्कोऽन्तरङ्ग एवादेशो बाध्यते । प्रत्यासत्तेः । अत एव ऋधातोर्णिचि, चङि, 'अर्त्तिह्री'ति पुकि, गुणं बाधित्वा उरृदिति ऋकारे, 'द्विर्वचनेऽची'त्यनेन णिलोपबाधेन पिशब्दस्य द्वित्वे, आटि, 'आर्पिपदि'त्यादावाटश्चेति वृद्धिर्भवत्येवेत्याहुः' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

२ प्राञ्चः = मनोरमाकारा दीक्षिताः, तत्प्राचीनाश्च ।

३ 'ज्ञापकसिद्धशपानिर्देशेन' इति ख. ङ. पाठः ।

४ 'अन्ये तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. ग. पाठः । क. कुण्डलितः, मनोरमाशब्दरत्नधृतत्वात् ।

५ भकारान्तः 'शुल्भ'धातुः-इति तदर्थः ।

निक्षेप उच्यते। ण्यन्तप्रकृतिकेन वेष्टना। तत्र 'यम चे'त्यत्र न भोजनाऽर्थः। तत्र भुज्यर्थ'यम्'धातोर्हेतुमण्णौ घटादिपठित'क्लसुरञ्जोऽमन्ताश्चे'त्यनेन रूपसिद्धेः। 'यमोऽपरिवेषणे' इति तु निषेधो न प्रवर्त्तते। भोजनाऽर्थत्वात्। नाऽपि वेष्टना। वेष्टनरूपाऽर्थकात् चुरादिण्यन्ताद्धेतुमण्णौ 'यमयती'ति प्रयोगस्य सिद्धत्वेन, चुरादिण्यन्ते वेष्टनायां मित्त्वविधानस्य वैयर्थ्याऽऽपत्तेः। न च 'यमोऽपरिवेषणे' इति निषेधबाधनाऽर्थम्। 'अनन्तरस्ये'ति न्यायेन अमन्तत्वप्रयुक्ताया एव निषिद्धत्वात्। इह तु वेष्टनरूपाऽर्थनिमित्तं चुरादिपठितवचनेन मित्त्वमिति न दोषः। 'यमोऽपरिवेषणे' इति सूत्रे 'परिवेषण'शब्देन भोजनावद्वेष्टनाऽपि गृह्यते' इति मते तु घटादिपठिताऽमन्तत्वेनैव सिद्धेः। एवं चेह वेष्टनमेव परिवेषणम्। घटादिपठितवचने वेष्टनं न गृह्यते। पूर्वोत्तरसाहचर्येण हेतुमण्णावेव प्रवृत्तेः, फलाऽभावादित्याशयेनाऽऽह—परिवेषणमिहेति।

चिस्फुरोर्णौ। अत्र 'णि'शब्देन लक्षणप्रतिपदोक्तपरिभाषया चुरादिणिच एव ग्रहणम्। अत एव 'चिञ् चयने' इत्यस्य स्वादेर्न ग्रहणम्। न च स्फुरतिसाहचर्यादस्य हेतुमण्णावेव प्रवृत्तिः। तस्याऽपि चुरादौ पाठात्।

नन्वेवमस्य चिञो ञित्त्वं व्यर्थम्। तद्धि सामान्यग्रहणाऽविघाताऽर्थम्। न च तत् तवेष्टमित्यत आह—ञित्करणेति। एवं चाऽस्माण्णिजभावे हेतुमण्णावपि 'चाययती'त्येव। एवं स्वादेरपीत्याहुः।

अन्येतु 'ञित्त्वं सामान्यग्रहणाऽविघातार्थमेव। णिशब्देन, च्यादिग्रहणेन च उभयोरपि ग्रहणम्। ननु गणाऽन्तरस्थाद्धेतुमण्णिचि'चापयती'ति पुग्विशिष्टं स्यादिति चेत्। इष्टाऽऽपत्तेः। अबाधेनोपपत्तौ, बाधकल्पनस्याऽन्याय्यत्वात्। ईदृशरीत्या लक्षणप्रतिपदोक्तपरिभाषा तु असार्वत्रिकीति स्पष्टमेव। उत्तरत्र 'णावि'त्यस्य शब्दाऽधिकारश्च नेत्याहुः। ध्वनितं चेदं मतं हेतुमण्ण्यन्तमूले।

ज्ञपादिभ्य इति। द्वे च पञ्च। मताऽन्तरे चपि-रहिभ्यां सह सप्ते-

1 'चिञ्शब्दनिमित्तकस्य स्वार्थिकस्य चुरादिणिच एव ग्रहणम्' इति ग. पाठः।

त्याहुः । पूर्णेत्येके इत्यादि । ईदृशेषु पाठशुद्धिः कीदृशीति चिन्त्यम् । तदुक्तं (क्षीर)स्वामिना—

'पाठेऽर्थे चाऽऽगमभ्रंशान्महतामपि मोहतः ।
न विद्मः किं जहीमोऽत्र, किमुपादद्महे वयम्' ॥ इति ।

चूर्ण संं । पुनः पाठोऽर्थभेदात् । मर्चे चेति । 'मिद्चोन्त्यादि'ति सूत्रे भाष्ये स्पष्टोऽयम् । अर्दने इत्येके इति । अत्राऽरुचिबीजन्तु–'इदित्त्वादेव 'लुम्बति तुम्बती'त्यादिसिद्धौ, भ्वादावर्दनेऽनयोः पाठो व्यर्थः स्यादि'ति । अदर्शने त्वर्थभेदात्सार्थक्यं स्पष्टमेव । 'इदित्त्वस्य णिज्विकल्पाऽज्ञापकत्वे तु सोऽपि पाठो युक्त एवे'त्यन्ये । म्रक्ष । म्लेच्छनम् = अपशब्दनम् । तैलादिनाऽभ्यञ्जनरूपे म्रक्षणेऽप्ययम् । म्लेछ । अव्यक्ता वाक् अत्राऽपशब्दनम् । 'न म्लेच्छितवै' इत्यस्य 'नाऽपभाषितवै' इति विवरणस्य [1]श्रुतौ दर्शनात् । यद्यपीदं रूपं भ्वादेः, तथाऽपि तस्येदृशाऽर्थकत्वेनाऽत्रापि तत्साजात्यादेवमेवोचितम् ।

गुर्द पुर्वेति द्वौ धातू । केचित्तु 'पूर्वनिकेतने' इत्यर्थनिर्देशः । 'पूर्वनिवास' इत्यर्थः । जसु हिंसायाम् । अस्य उदित्त्वात् णिज्विकल्पः ।

आ कुस्मादिति—गणसूत्रम्, आत्मनेपदविधायकम् । तदाह–अकर्तृगेति । णिच्सन्नियोगेनैवेति च । स्पश । 'अपस्पशत' । 'अतस्मृ' इति अकारः । तर्ज । 'तर्जयते' । 'तर्जयन्निव केतुभिरि'ति तु भ्वादेस्तर्जेर्हेतुमण्णिचि बोध्यम् ।

शामयते इति । 'निशामये'ति तु स्वार्थण्यन्ताद्धेतुमण्णिचि बोध्यम् । निवृत्तप्रेषणाण्णिचः सत्त्वेन नाऽर्थाऽसङ्गतिः ।

त्रुट । अयं तु दादावपि । 'वा भ्राशे'ति सूत्रे 'त्रुटि'ग्रहणात् श्यन् च । इदमेवाऽभिप्रेत्य दिवादावपी'ति मनोरमा ।

भल । आभण्डनम्–निरूपणम् । 'आलम्बने'इति पाठान्तरम् । 'पवर्ग-

---

१ 'भाष्ये' इति ग. पाठः ।

तृतीयादिरप्ययमि'ति देवः । कुट्ट । 'कुटे'त्यन्ये[1]। वंचु । 'ऊदिदयमि'-त्यन्ये । 'नाम्नो वे'त्यंशं व्याचष्टे—अथवेति । 'कु'शब्दपूर्वात्स्मयतेः- 'अन्येभ्योऽपी'ति डप्रत्यये,'कुगती'ति समासे,निष्पन्नं प्रातिपदिकमित्यर्थः। यद्यपि 'कु'पूर्वस्मिङा 'कुस्मयते' इति सिद्धम्, तथापि स्वरे विशेषो बोध्यः । 'अचुकुस्मते'ति च न स्यात् । ( 'कुस्मयाञ्चकारे'त्याम् च न स्यादित्याहुः )[2] । धात्वर्थे इति । 'करोत्यर्थे, आचष्टे इत्यर्थे वे'त्यर्थः ।

शब्द उपसर्गेति । यद्यपि 'शब्द'शब्दात्तत्करोतीति णिचि 'शब्दयति' 'प्रतिशब्दयती'त्यादि सिद्धं, तथाऽपि 'शब्दवैरे'ति क्यङा बाधाऽभावाय, विशिष्टेऽर्थे साधुत्वाऽर्थं चेदमुक्तम् ।

नाऽन्ये मित इति । 'न कम्यमी'ति निषेधस्तु 'चमि'साहचर्यात्, 'अनन्तरस्ये'ति न्यायेन च अमन्तनिमित्त-मित्त्वस्यैव । तच्च पूर्वोत्तर-साहचर्याद्धेतुमण्णावेवेति भावः । तस्माद्धेत्विति । 'न कमी'ति निषेधात् वृद्धिर्भवत्येवेति भावः । हन्त्यर्थाश्चेति । तेषां तत्तद्गणे पाठसामर्थ्यादयं णिज्वा । एवं 'कृपेश्चे'त्येतद्विषयेऽपि । अत एव ज्ञापकात् 'निवृत्तप्रेषणा-द्धातोरि'ति असार्वत्रिकं बोध्यम्[3] ।

निषेधाल्लिङ्गादिति । अन्यथा विशब्दनाऽर्थादस्मात्परा निष्ठा नास्तीति, प्रतिषेधवैयर्थ्यं स्पष्टमेव । भ्वादेस्तु न विशब्दने वृत्तिः । 'घुषिर् अवि-शब्दने' इत्युक्तेरिति भावः । न च चुरादिण्यन्तात् विशब्दनाऽर्थघुषः कर्त्तरि क्विपि, तत आचारक्विपि, निष्ठायामिदं चरिताऽर्थम् । हलन्तेभ्य

---

१ 'कुटेत्यन्ये' इति ग. पाठः ।

२ अयं ख, ग, ङ. पाठः । क. नास्ति ।

३ इतोग्रे—'केचित्तु श्रथ-श्लथादीनां हिंसार्थानां 'हन्त्यर्थाश्चे'ति चुरादिणिचि, 'नान्ये मित' निषेधेन मित्त्वाऽभावः । तत्तद्गणपाठसामर्थ्येनाऽस्य णिचो वैकल्पिकत्वात् । 'निवृत्तप्रेषणादि'तिन्यायेन हेतुमण्णिचि तु घटादिपाठात् मित्त्वमिति विशेषस्य सत्त्वादुभयमप्यावश्यकमित्याहुः' इति ग. पाठः ।

आचारक्विपोऽनभिधानात् । णिलोपस्य स्थानिवत्त्वाच्च । 'क्वौ लुप्तमि'ति तु न सार्वत्रिकम् । 'अभिव्यक्ते'ति न्यायेन तस्याऽत्राऽग्रहणाच्चेत्याहुः । इरित्करणमपि अत्र लिङ्गं बोध्यम् ।[1]

लस । 'लषे'ति पाठाऽन्तरम् । भृधु । उदित्त्वादस्य णिज्वा ।

यत । तालव्याऽन्तस्थाऽऽदिः । स्वामी 'परिभवेऽप्ययमि'त्याह[2] । निसः परो धान्यधनयोः प्रतिदाने, 'ऋणं निर्यातयती'त्यादौ । प्रतिददातीत्यर्थः ।

अंचु । विशेषणं व्यावर्त्तनम् । स्वदिमभीति । पूर्वत्र 'आ कुस्मादि'त्यत्र, परत्र 'आधृषादि'त्यादौ च अभिविध्यर्थतायाः सर्वसंमतत्वेन, तत्साहचर्यात् अयमपि तथैवेति भावः[3] । एतेन 'आङ्पूर्वात्स्वदः सकर्मकात् णिजित्यर्थ' इति स्वाम्युक्तं परास्तम् । घाटयतीति । सङ्घाते गतस्याऽपि अर्थभेदात्पुनः पाठः । स्वाद इत्येके इति । अत्र पक्षे 'आ स्वादः सकर्मकादि'ति दीर्घपाठो बोध्यः ।

असिष्वददिति । ननु षोपदेशलक्षणे 'स्वञ्जि'साहचर्यात् भ्वादेरेव ग्रहणेन, अस्य षोपदेशत्वाऽभावेन, षत्वं दुरुपपादमिति चेन्न । निरनुबन्धकपरिभाषया अस्याऽपि ग्रहात् ।

([4]दीर्घस्य त्विति । 'इदमेव दीर्घपाठस्य फलमि'ति मनोरमा । तत्र इदमेवेत्यस्य'षत्वाऽप्रवृत्तिरूपमि'त्यर्थः । एवं 'सिस्वादयिषती'ति[5] सन्नन्तेऽपि

---

१ 'इदित्करणमप्यत्र लिङ्गं बोध्यम्' इति क. पाठः ।

२ 'परिभवस्वपनिकारेऽप्ययमित्याह' इति ग. पाठः ।

३ इतोग्रे—'अत एव न मर्यादायाम् । त्यागाऽपेक्षया असङ्कहस्योचितत्वादित्याहुः' इति ख. ग. पाठः ।

४ 'दीर्घस्य तु' इत्यारभ्य 'स्वदेर्ग्रहणात्' इत्यन्तः पाठो मनोरमादिस्थत्वात् क. नास्ति ।

५ 'न च 'सिस्वादयिषती'ति सन्नन्तेपि षत्वाऽषत्वाभ्यां विशेषोऽस्तीति वाच्यम् । 'सः स्विदी'ति सूत्रेण सकारस्यैव विधानेनाऽविशेषात् । न च 'स्विदि'साहचर्येणाऽस्य हेतुमण्णावेव प्रवृत्तिरिति वाच्यम् । 'न स्विदी'ति

अविशेषो बोध्यः। सन्नन्ते 'सः स्विदी'तिसूत्रेण सकारस्यैव विधानात्। न च 'स्विदि'साहचर्येणाऽस्य हेतुमण्णावेव प्रवृत्तिरिति वाच्यम्। 'निरनुबन्धक'परिभाषयाऽस्याऽपि स्वदेर्ग्रहणात्)। इत्यास्वदीयाः।

आ धृषाद्वा। योग्यतावशात् णिच एवाऽनेन विकल्पः। लाययतीति। 'लीलोरि'ति नुक् तु न। 'ला'साहचर्याद्धेतुमण्णावेव प्रवृत्तेः।

लेतेति। 'विभाषा लीयतेरि'त्यात्वं न। 'लिनातिलीयत्योर्यका निर्देश' इति भाष्यात्। आसीदतीति। 'पाघ्रे'ति सूत्रे'शदि'साहचर्यात् अस्याऽग्रहण-मि'ति कश्चित्। नुकमाहुरिति। 'शाच्छासे'ति सूत्रे भाष्येऽस्य पाठात्, तत्साहचर्येण हेतुमण्णावेवाऽस्य प्रवृत्तिरि'त्यन्ये। 'वायुर्विधूनयती'ति च हेतुमण्ण्यन्तस्यैव रूपम्[1]। हरदत्तेति। अनेन भाष्यविरोधो ध्वनितः।

अवाक्षीदिति। नच अङ् शङ्क्यः। 'ख्याति'साहचर्येण, प्रसिद्धया च लुग्विकरणस्यैव ग्रहादित्याहुः। 'वचिस्वपी'ति सूत्रे तु 'स्वपि'साहचर्यात्, लुग्विकरणपरिभाषया च, व्याख्यानाद्वा, आदादिक-चौरादिकयोर्ग्रहणम्। तेन 'उच्यादि'त्येवेत्याहुः। णिचि तु 'वाच्यादि'त्येव। अन्ये तु प्रसिद्धत्वा-त्तत्राऽप्यादादिकस्यैव ग्रहणमाहुः। 'अस्याऽप्यन्तौ न प्रयोग' इत्येके। 'स्वरे विशेषात् तदभावे न मानमि'त्यपरे।

घृष। अस्य निष्ठायां 'धृषित' इति। न च 'निष्ठा शीङि'ति कित्त्व-

---

षत्वनिषेधेनैव सिद्धे, सग्रहणस्य विध्यन्तरार्थत्वेन, सर्वत्र प्रवृत्तिस्वीकारात्। एतेन 'निरनुबन्धकपरिभाषया चुराद्योरेव स्वदि-सह्योर्ग्रहणमि'त्यपास्तम्' इति ग. पाठः।

१ इतोऽग्रे—'केचित्तु नुग्विभावप्युभयोरेव ग्रहणम्। सर्वत्रैकरूप्यस्योचित-त्वात्। अतो न नुगित्याहुः' इति ग. पाठः।

२ इतोऽग्रे 'अन्यथा 'कम्पते' इतिवत्सकर्मकत्वं न स्यादिति बोध्यम्' इति ग. पाठः।

निषेधः । साहचर्येण ञीदादित एव तत्र ग्रहणात् । एषु 'पश बन्धने' इति तालव्याऽन्तं मैत्रेयादयः पठन्ति । इत्याधृषीयाः ।

अथाऽदन्ता इति । वक्ष्यमाणधातुष्वन्तोऽकारो विवक्षितो, नेत्संज्ञक[2] इत्यर्थः । स्थानिवत्त्वादिति । 'अचः परस्मिन्नि'त्यनेनेति भावः ।

गण । अयं सङ्ख्यानिमित्तज्ञानविशेषरूपपरिच्छेदे, भागशोऽवस्थापने चेति 'णेरणावि'त्यत्र भाष्यकैयटयोः ।

ई च गणः । 'गण' इति णिचः प्राग्वर्त्तिनोऽनुकरणम् । तत्फलन्तु'गण'-प्रकृतिकणिजन्ताच्चङि प्रवृत्तिः । ण्यन्ताऽनुकरणे तु ण्यन्ताण्णौ चङ्येव स्यात् । 'णौ चङ्परे' इत्यनुवृत्तेः[3] । एतेन 'नित्यणिजन्तत्वाद्गण इत्यसङ्गतम्, 'गणो णिच्वैकल्पिक'इति ज्ञापयती'त्यपास्तम् । स्तन-गदी । इगन्तात्, णिज-न्ताद्वा द्विवचनम् । प्रकरणाददन्तत्वम् । इदं चाऽसिद्धवत्सूत्रे भाष्ये स्पष्टम् । अनेकाच्त्वान्न षोपदेशः । अससामदिति । पूर्वत्र 'षाम सान्त्वप्रयोगे' इत्येव पठ्यते' इति मते, तेन सिद्धिभ्रमं व्यावर्त्तयति । तद्ध्वनयन्नाह–षामेति । पल्यूल । पल्यूलनं-'साबण' इति प्रसिद्धम् ।

ऊन । अस्माण्णौ चङि 'न'शब्दस्य द्वित्वमिष्टम् । तच्च दुर्लभम् । द्वित्वादन्तरङ्गत्वादल्लोपात्[4] । णिचो द्वित्वनिमित्तत्वाऽभावात् 'द्विर्वचनेऽची'-ति तु दुर्लभम् । अत आह–ओः पुयणिति । अयं भावः–'बिभावयिषती'-त्यादावन्तरङ्गत्वात् वृद्धौ, आवादेशे,'सन्यत'इत्येव सिद्धम् । पूङो, यौतेश्च सनि, 'स्मिपूङ्' 'सनीवन्ते'तीटि, 'द्विर्वचनेऽची'ति सूत्रप्रवृत्त्या, अभ्यासे

१ इतोऽग्रे—'शाकटायनस्त्वेनम् आदितमाह । तन्मते 'धर्षितः' इति ख. ग. ङ. पाठः ।

२ 'नोच्चारणाऽर्थो, नाऽपीत्सञ्ज्ञक इत्यर्थः' इति ग. पाठः ।

३ इतोऽग्रे—'वस्तुतो, गणरूपाऽभ्यासस्थे'त्यर्थान्न काचिद्दोषशङ्का' इति ग. पाठः ।

४ 'द्वित्वात्परत्वादन्तरङ्गत्वाच्चाऽल्लोपात्' इति ग. पाठः ।

उकारसत्त्वेऽपि, तदर्थं 'पथयोरि'त्येव वाच्यम्। एवं च वर्गाऽऽदिग्रहणं व्यर्थं सत् णिचो द्वित्वनिमित्तत्वाऽभावेऽपि तन्निमित्तकाऽजादेशस्य द्वित्वे कर्त्तव्ये निषेधं, स्थानिवत्त्वं वा ज्ञापयती'ति।

न च 'उरु' 'ऋजु' 'अम्बु'शब्दादिभ्य आचारक्विपि, सनि, इटि च, 'द्विर्वचनेऽची'ति गुणाद्यभावे, 'उरुरिविषती'त्यादावित्त्वाऽर्थं वर्गादिग्रहण-मिति वाच्यम्। 'सनि ग्रहे'त्यत्रोपदेशाऽधिकाराऽभावस्य 'एकाच उप-देशे' इति सूत्रभाष्ये ध्वनितत्वेन, उक्तप्रयोगेषु इटो दुर्लभत्वात्। 'ज्ञापक-परभाष्यप्रामाण्येन आचारक्विबन्तेभ्यः[2] सनोऽनभिधानमि'त्यन्ये।

णिचीति। 'णिज्निमित्तके' इत्यर्थः। 'णिचि परत'इत्यर्थे तु 'पुस्फार-यिषती'त्यादौ रेफेण व्यवधानान्न स्यादिति बोध्यम्। न च 'यियविषते'[3] इत्यत्र गुणाऽयादेशयोः 'अचः परस्मिन्नि'ति स्थानिवत्त्वेन अवर्णपरयकार-परत्वाऽभावः। एतत्सूत्राऽऽरम्भसामर्थ्येनैव तदभावात्। ज्ञापनफलन्तु[4] 'तुतावयिषति' 'अतूतवत्' 'ऊर्णुनावयिषति' 'और्णूनवदि'ति, 'पुस्फार-यिषति' 'अपुस्फरदि'ति च। अत्र 'णिची'ति णिङोऽप्युपलक्षणम्। अत एव 'आस्य'शब्दादिभ्यो 'णिङङ्गान्निरसने' इति चङादौ, 'आसस्यदि'त्यादौ प्रक्रियादशायाम् अवर्णस्योत्तरखण्डे सत्त्वात्, अल्लोपनिषेधे, 'स्य'शब्दस्य

---

१ 'अत्राऽकारस्य विवक्षितत्वात्, 'अपरे' इत्युक्तेश्च 'पुपूषती'त्यादौ न दोषः' इति ग. पाठः।

२ 'तेभ्य आचारक्विबन्तेभ्यः' इति ग. पाठः।

३ 'पिपविषते' इति पाठान्तरम्।

४ 'ज्ञापनफलन्तु–उडुरिवाचरति उडवति, ततो णौ, सनि, 'उडुडावयिषति'। चङि 'औडुडवदि'ति बोध्यम्। पुस्फारयिषति' इति ग पाठः।

५ 'स चैकः प्रत्ययः 'ओः पुयणि'त्यत्रोपस्थितसन्सदृशोऽकृदेव गृह्यते इति दवादिशब्देभ्य आचारक्विपि, सनि, 'दिदविषती'त्यादौ नाऽतिप्रसङ्गः। तथा चेदं सूत्रं ण्यन्तात्सनि' इति ग. पाठः।

द्वित्वसिद्धिः । तदुक्तं भाष्ये—'ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्ये'ति ।

ननु 'ओः पुयणि'ति सूत्रे 'णावि'ति नाऽस्ति, तत्कथं तल्लाभ इति चेन्न । नाऽनेनाऽपूर्वो निषेधो ज्ञाप्यते, किन्तु 'द्विर्वचनेऽची'त्यस्य व्यवधानेऽपि प्रवृत्तिः । तत्र 'येन नाऽव्यवधानमि'तिन्यायेन एकव्यवधाने तत्प्रवृत्तिः । अतस्तल्लाभः । तेन 'दिद्वनीयिषती'त्यादौ नाऽतिप्रसङ्गः । एतन्मूलकमेव 'अच आदेश' इति स्वरूपकथनम् । तथा चेदं सूत्रं ण्यन्तात् सनि प्रवर्त्तते । ण्यन्ताच्चङि तु सन्वद्भावेन । पूयुवोस्तु केवलसन्यपि ।

. इतीति । 'इत्यत्र वर्गादिग्रहो लिङ्गमि'ति पूर्वेणाऽन्वयः । [2]यत्रेति । यद्यपि'अचिकीर्त्तदि'त्यत्र 'त'इत्यवर्णपरमस्ति, तथाऽपि न दोषः । चङ्सहितस्योत्तरखण्डत्वा[3]ऽभावात् । तस्य आदित्वाऽभावाच्च । तदुक्तं भाष्ये—'यद्येतज्ज्ञाप्यते,'अचिकीर्त्तत्'–अत्रापि प्राप्नोति । तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयः ? । यथाजातीयकाः पु-यण्-जयः । कथं जातीयकाश्चैते ? । 'अवर्णपरा' इति । तत्र अवर्णपरत्वं किं द्वित्वप्रवृत्तिवेलायाम्, उत परिनिष्ठिते रूपे ? । नाऽऽद्यः । 'चुक्षावयिषती'त्याद्यसिद्ध्यापत्तेः । नाऽन्त्यः । 'औननदि'त्याद्यसिद्धेः । अत आह—प्रक्रियायामिति । न त्वमुकत्रैवेत्याग्रह इति भावः । 'उवर्णाऽऽदेश एव स्थानिवदि'ति तु

---

१ 'केवलसन्यपीत्याहुः । अच आदेश इति । 'अचः परस्मिन्नि'त्यतोऽच इत्यनुवृत्तेर्लब्धम् । फलन्तु चिन्त्यम्' इति ग. पाठः ।

२ 'सजातीयेति । यद्यप्यचिकीर्त्तदित्यत्र' इति ग. पाठः ।

३ 'खण्डतात्वाऽभावात्' क. पाठः ।

४ इतोऽग्रे[1]–स्यादेतत् । ज्ञापकस्य सजातीयाऽपेक्षत्वेन, पुयण्जीनां परिनिष्ठितरूपे एव अवर्णपरत्वसम्भवेन, परिनिष्ठितरूपे यत्र अवर्णपरत्वं तद्विषयमेव ज्ञापकमुचितम् । न त्वनियमः । 'यथाजातीयका'दिशब्दैर्भाष्यादप्येवमेव

---

1 'स्यादेतत्' इत्यारभ्य 'तद्ध्वनयन्नाह—औननदिति' ( पृ. १८१५ ) इत्यन्तः अयं ख. ग. ङ. पाठः । क. नास्ति । मनोरमास्थत्वात् ।

न युक्तम् । तथा सति भाष्ये 'कथंजातीयकाश्चैते' इति प्रश्ने, 'उवर्णाऽऽदेशपरा' इत्येव वदेत् । तदनुक्त्या अन्यत्राऽपि स्थानिवत्त्वसूचनेन,

---

लभ्यते । न च 'लोपः पिबतेरि'ति सूत्रे 'अपीप्य'दित्यत्र 'पिबतेर्णौ पुकि, चङि, उपधालोपे, तस्य स्थानिवत्त्वात्पायशब्दस्य द्विर्वचनमि'ति वृत्तिविरोध इति वाच्यम् । अभ्यासात्पूर्वं सन्नियोगशिष्टन्यायेन लोपाऽप्रवृत्तेस्तस्या असङ्गतत्वात् । एतेन 'पूर्वत्राऽसिद्धमि'ति सूत्रे 'क्तान्तस्य 'औजढदि'ति वृत्तिग्रन्थः परास्तः । सूत्रभाष्यविरोधात् ।

अत एव बोपदेवेन 'शुष्किका, शुष्कजङ्घा च, क्षामिमान्, औजढत्-तथा' इति[1] वैयाघ्रपद्यवार्त्तिके 'औजिढदि'त्येव पाठ' इत्युक्तम् । इदं च 'पूर्वत्राऽसिद्धमि'त्यस्य प्रयोजनकथनपरम् । तत्र आद्ये निष्ठाकत्वस्याऽसिद्धत्वात् 'उदीचामात' इति विकल्पाऽभावः । द्वितीये 'न कोपधाया' इति पुंवत्त्वनिषेधाऽभावः । इदं चिन्त्यम् । कोपधप्रतिषेधे तद्धितवुग्रहणात् । तृतीये निष्ठामत्वस्याऽसिद्धत्वान्मतुपो वत्वाऽभावः । अन्त्ये 'कुहोश्चुरि'त्यस्य प्रवृत्तिः । 'पूर्वत्राऽसिद्धीयमद्विर्वचने' इत्यस्य सत्त्वादिदमपि चिन्त्यम् । अनित्यत्वेन तदप्रवृत्तौ दृढतरस्य भाष्यादेर्मानस्याऽभावात् ।

एवं च उवर्णाऽऽदेशे एव स्थानिवत् । 'ओः पुयणि'ति ज्ञापकस्य सजातीयाऽपेक्षत्वात् । 'कश्च तुल्यजातीय'इत्यादि भाष्येणाऽपि इदमेवोपलक्ष्यते । अत एव बोपदेवेन 'आञ्चकदि'ति[2] रूपं मुनित्रयविरुद्धमि'त्युक्तम् । [3]तथाहि—'द्विर्वचनं यण्-अयवायावादेशा-ऽऽल्लोपो-पधालोप-णिलोप-कि-किनोरुत्वेभ्य' इति वार्त्तिकं षाष्ठद्वित्वप्रकरणाऽन्ते, 'द्विर्वचनेऽची'त्यत्र च भाष्ये पठ्यते । ( [4]वस्तुतो द्वित्वप्रकरणस्थमेव 'द्विर्वचनेऽची'त्यत्र स्मारि-

---

1 'वैयाघ्रपद्यश्लोके' इति ख. ग. ङ. पाठः ।

2 'आञ्चकदि'ति 'अङ्क'धातो रूपमिति ध्येयम् ।

3 'किञ्च द्विर्वचनम्' इति ग. पाठः ।

4 अयं ग. पाठः । क. ख. ङ. नास्ति ।

'परिनिष्ठिते एव यत्र अवर्णपरत्वं, तत्रैव निषेध' इति कल्पनाऽपि प्रत्युक्ता। अत एव 'प्रकृत्यैकाजि'तिसूत्रप्रत्याख्यानाऽवसरे भाष्ये 'प्रेष्ठ' इत्यत्र

---

तम्। 'अत्र सूत्रे पठिष्यति ह्याचार्य' इति भाष्योक्तेः)। 'किकिनोरुत्त्वेभ्य' इत्यत्र आर्षो विभक्त्यलुक्। 'पिपविषते' इत्यादौ ह्रस्वार्थं वचनाऽऽवश्यकता उभयोरपि समा। तच्च 'द्विर्वचनेऽची'त्यस्य, आनुमानिकस्य च खण्डन-तात्पर्यकं विरुध्येत। न हि तत्र अतो लोपो गणितः। न वा भाष्ये तदुदाहरणं दत्तम्। 'दध्यत्र', 'चयनम्', 'चायकः', 'लवनम्', 'लावकः', 'गोदः', [1]'श्लेष्मघ्नः','कारणा', 'पिपूर्त्त' इत्यादौ सावकाशा यणादयो, 'बिभिदतुरि'-त्यादौ सावकाशेन द्वित्वेन, 'चक्रतुः' 'चिचाय', 'लुलाव', 'विवयिथ,' 'लुलविथ,' 'पपतुः''जग्मतुः' 'आटिटत्', 'ततुरिरि'त्यादौ पूर्वविप्रतिषेधात् बाध्यन्ते' इति तदर्थः। भाष्यकृता च अन्तरङ्गैर्विप्रतिषेधाऽयोगात्, 'चुक्षावयिषति' 'पुस्फारयिषती'त्यादावन्तरङ्गत्वाद्वृद्ध्यादौ कृते, ह्रस्वमभ्यासे स्यात्। तस्माद्वार्त्तिकमते 'ओदौदादेशस्य चु-टु-तु-शरादेरभ्यासस्याऽत उद्भवती'ति वचनाऽन्तरं कर्त्तव्यत्वेनाऽऽपादितम्। 'ओदौदादेशस्ये'त्यत्र समानाधिकरणबहुव्रीह्यङ्गीकारे 'चुक्षावयिषती'त्यादौ दोषः। ([2]स्थानिवत्त्वं त्वल्विधित्वान्न)। तस्मात् 'ओदौतोरादेशो यस्मिन्नङ्गे तस्याऽभ्यासस्य चुटुतु-शरादेर्योऽकारस्तस्य उदि'त्यर्थः। 'चुक्षावयिषति,' '[3]उड्डुड्डावयिषति,' 'ऊर्णुनावयिषति' 'शुशावयिषति,' 'पुस्फारयिषती'त्यादि। [4]चुलुम्पादिवत् उड्डावयतिः 'बहुलमेतन्निदर्शनमि'त्युक्तेर्धातुर्बोध्यो, विहायसा गमना-ऽनुकूलव्यापाराऽर्थकः[5]।

1 'श्लेष्मघः' इति ख. ङ. पाठः।

2 अयं ग. पाठः।

3 'उड्डुडावयिषति' इति तु मनोरमापाठः।

4 अयं 'केचित्' इत्यन्तः ख. ङ. पाठः। क. ग. नास्ति। शब्दरत्नस्थत्वात्।

5 'व्यापारार्थको बोध्यः'. इति ख. ङ. पाठः।

टिलोपमाशङ्क्य, प्रत्याख्याताऽसिद्धत्वमाश्रित्य समाहितम्, न त्वकारोच्चारणसामर्थ्येनेति । 'अपप्रदि'त्यत्राऽभ्यासे अकारोच्चारणं सार्थकमिति

यत्तु 'आचारक्विबन्तोड्डुधातुप्रकृतिकण्यन्तात्सनि'ति । तन्न । ततः सनादेरदर्शनात् । 'पक्षिण उड्डावयती'त्येवं लोकव्यवहाराच्चे'ति केचित् ।

इदं च वचनम् 'उत्परस्याऽत' इत्युत्तरं पाठ्यम् । तेन 'उदि'ति नाऽपूर्वम् । त्वद्रीत्या तु 'औननदि'त्यादिसिद्धये वचनाऽन्तरमपि आपादयेदिति भाष्यविरोधः, ज्ञापकस्य सजातीयाऽपेक्षत्वात्सूत्रविरोधश्चेति चेत् ।

अत्रोच्यते—एवं हि उवर्णाऽऽदेशस्यैव [1]स्थानिवत्त्वं लभ्यते । एवं च 'कश्च तुल्यजातीय' इति प्रश्ने, 'उवर्णाऽऽदेश' इत्येवोत्तरयेत् । तदनुक्त्या अन्यत्राऽपि स्थानिवत्त्वसूचनेन, 'परिनिष्ठिते एव अवर्णपरत्वे निषेध' इति भाष्यव्याख्या नोचिता । 'ओः पुयण्जिषु' इत्यत्र 'ओरि'त्युक्तिस्तु सूत्रैकदेशग्रहणाच्चाऽधिकेति[2], न तद्बलेन कुकल्पनाऽभिनिवेशः कार्यः ।

किञ्च विनिगमनाविरहेण सर्वत्र प्रवृत्तौ, विशेषणस्यैवाऽदानान्मम लाघवम् । किञ्च 'औदोदादेशस्ये'ति वचनाऽऽपादानस्य दूषणोपलक्षणतामाश्रित्य अभ्यासाऽकारसहितस्य 'आञ्चकदि'त्यादे रूपस्य सिद्धये, वचनाऽऽपादनपरतयैव भाष्यव्याख्योचिता । लघुभूतसूत्रमताऽनुरोधात् । किञ्च वार्तिकस्योपलक्षणताया आवश्यकत्वम् । तथाहि—'निन्यतुरि'त्यस्य सिद्धये इयङ्पाठ आवश्यकः । 'जग्लावि'त्यादिसिद्ध्यर्थं वृद्धिपाठस्याऽऽवश्यकत्वाच्च । किञ्च[3] यण्-आल्लोपादीनां नित्यत्वेन विप्रतिषेधो न युक्तः । वाचनिकतदङ्गीकारे तु अन्तरङ्गाणामपि बाधाऽऽपत्त्या 'दिद्वनीयिषती'-त्याद्यसिद्ध्यापत्तिः । अपि च 'एकाचः' 'प्रथमस्ये'त्यादिसापेक्षद्वित्वाऽपेक्षया यणादीनाम् अन्तरङ्गत्वाद्वार्त्तिकस्याऽसंभवः ।

1 'स्थानिवत्त्वे कश्च' ख. ङ. पाठः ।

2 'ग्रहणादत्राऽधिकेति' इति ग. पाठः ।

3 'यद्यप्ययादीनां द्विर्वचनस्य समत्वं, तथापि यणोऽल्लोपादीनाम्'इति ग. पाठः ।

तद्भावः । 'उवर्णाऽऽदेश' इत्यादि वदतां तदसङ्गतिः स्पष्टैव । यत्तु 'ज्येष्ठ इत्यत्राऽकारोच्चारणसामर्थ्येन टिलोपवारणम् । तत्तु ततो णिचोऽनभिधान-

किञ्चेष्टाऽनिष्टविवेकस्य लक्षणैकचक्षुष्कैर्वचनमन्तरेण कर्तुमशक्यतया, सर्वत्रैव पूर्वविप्रतिषेधे वचनस्याऽऽवश्यकत्वेन, ([1]इह नित्याऽन्तरङ्गबाधाय सुतरां वचनस्याऽऽवश्यकत्वेन,) क्व सूत्रमताऽपेक्षया लाघवम् ? । यदि तु 'ओदौदादेशस्ये'ति वचनम् अन्तरङ्गाणामबाधे ज्ञापकमिति ब्रूषे, तदा तस्य वचनस्य 'दिद्वनीयिषती'त्यादावतिप्रसङ्गवारणाय 'सनी'ति पूरणीयम् । तच्चाऽभ्यासविशेषणम् । एवं च निर्दिष्टपरिभाषयाऽनेकव्यवधाने 'दिद्वनीयिषती'त्यादौ न दोष इति भाष्यं न्यूनम् । किञ्च 'जु'धातोः सौत्रात् णिचि, सनि, लुङि च 'जिजावयिषति''अजीजवदि'त्यत्र 'ओदौदादेशस्ये'त्यभ्यासे उत्वाऽऽपत्तिः । तदर्थं 'जोर्ने'ति वक्तव्यम्, 'ओः पु' इति सूत्रे 'ज'ग्रहणं वा कार्यम् । न च चकारमेव पठिष्यामि, न 'चु'शब्दमिति वाच्यम् । गुङ्-घुङ्भ्यां णिचि, चङि, सनि च 'अजूगवदि'त्यादौ दोषाऽऽपत्तेः । 'पिपविषते' इत्यादिसिद्ध्यर्थम् 'ओः पुयण्वि'त्यस्याऽप्येतन्मते आवश्यकत्वमिति, बहुगौरवम् । (अपि[2] च 'तनु'शब्दादाचारक्विबन्ताद्धेतुमण्णौ, चङि, सनि वा 'अतीतनवदि'त्यादौ 'ओदौदादेशस्ये'त्युत्वापत्तिः । तस्मात् ओदौदादेशयोग्यवर्णघटिताऽभ्यासस्येति वाच्यम् ) ।

किञ्च 'सनी'ति कृतेऽपि तदभ्यासविशेषणम् । एवं च 'तुतावयिषती'-त्यादौ चारितार्थ्येन, 'तुष्टावयिषती'त्यादावनापत्तिः, [3]षकारेण व्यवधानात् । एवं च भाष्यस्योपलक्षणत्वाऽऽवश्यकत्वे, 'अल्लोपवतो णेरदि'त्यपि कार्यमिति, एतदुपलक्षणतयैव भाष्यव्याख्योचिता, न तु परिनिष्ठितत्वांऽशनिवेशः । एतेन 'लौकिकप्रयोगाऽर्थं शास्त्राऽऽरम्भात्, तत्रत्यमेवाऽवर्णपरत्वं

1 अयं ग. पाठः ।

2 अयं ग. पाठः ।

3 'षकारेणाऽव्यवधानात्' इति ख. ङ. पाठः ।

माश्रित्येति, न तेन विरोधः। एतेन 'ओः पुयणि'तिसूत्रे 'अभ्यासस्य इकार' इति व्याख्येयम्। अलोऽन्त्यपरिभाषया अन्त्यस्य भविष्यति।

ग्रहीतुमुचितमि'त्यपास्तम्। शास्त्रस्य प्रक्रियादशायामेव प्रवृत्तेस्तत्रस्य-निमित्तसत्ताया अपि ग्रहीतुमुचितत्वात्। किञ्चैवम् 'ओदौदादेशस्ये'ति-वार्त्तिकेऽपि चुटुतुशरादित्वं परिनिष्ठिते एव गृह्येत। एवं च 'पुस्फारयिषती'-त्यादौ दोषः स्यात्। एवं च तत्र यथा अनियमस्तथा ज्ञाप्यकोटावपीति, न दोषः।

यत्तु 'प्रकृत्यैकाजि'तिसूत्रे तदभावेऽपि [1]'ज्येष्ठ' इत्यादौ टिलोप उच्चारण-सामर्थ्यान्ने'त्युक्तम्, तद्विरुध्यते। त्वदुक्तरीत्या 'अजज्यदि'त्यत्र अभ्यासे अकारश्रवणेन चारितार्थ्यादि'ति। [2]तन्न। तत्र णिचोऽनभिधानमित्या-शयात्। अत एव 'प्रेष्ठ' इत्यत्राऽपि उच्चारणसामर्थ्येनैव समाधानस्यो-चितत्वेन, विजातीय-प्रत्याख्याताऽसिद्धत्वमाश्रित्य टिलोपसमाधानपरभाष्येण 'अपप्रदि'त्यादावभ्यासे अकारोच्चारणसार्थक्यं[3] भाष्याऽभिप्रेतं नाऽसङ्गतम्। [4]परिनिष्ठितत्वाऽन्तनिवेशे तु भाष्यस्य निर्बीजत्वाऽऽपत्तिः।

यदपि 'ओः पुयणि'ति सूत्रे 'अत' इत्यनुवृत्त्यैव सिद्धे, ओग्रहणसाम-र्थ्यात् ज्ञाप्यकोटौ 'उवर्णादेश' इत्यस्य निवेश' इति। तदपि न। 'पिपविषते' इत्याद्यसिद्धेः। न च 'अत' इति निवर्त्य, 'अभ्यासस्य इकार' इति व्याख्येयम्। अलोऽन्त्यपरिभाषया अन्त्यस्य भविष्यति। एवं च 'ओरि'ति व्यर्थम्। यङन्तप्रकृतिक'पापचिषते' इत्यादौ तु 'सन्निमित्तकाऽभ्यासस्ये'ति

1 'श्रेष्ठ' इत्यादौ' इति ग. पाठः।

2 'तन्न। णिच्युपसर्गस्य पृथक्करणेन 'प्रशस्य'शब्दाण्णिचि श्राद्यादेशस्यैव अभावेन, त्वदुक्तरूपस्यैवाऽभावात्। वस्तुतः 'प्रेष्ठ' इत्यत्राऽपि उच्चारण-सामर्थ्येनैव' इति ग. पाठः।

3 'सार्थक्यस्य भाष्याऽभिप्रेतत्वात्' इति ग. पाठः।

4 'परिनिष्ठितत्वांऽशनिवेशे तु' इति ग. पाठः।

यङन्तप्रकृतिक'पापचिषते'इत्यादौ तु 'सन्निमित्तकाऽभ्यासस्ये'ति व्याख्यानात् न दोषः । एवञ्च 'ओरि'त्यधिकं ज्ञाप्यकोटौ 'उवर्णादेश'

व्याख्यानाच्च दोष इति वाच्यम्[1]। बिभर्जिषते' इत्यादौ हलादिःशेषात्परत्वेन हल इत्ववारणाऽर्थं तत्सार्थक्यात् । न चाऽभ्यासविकारेषु बाध्यबाधक-भावाऽभावादिष्टसिद्धिः । तदनित्यत्वज्ञापनाऽर्थत्वात् । नन्वेवं सति 'हलिकल्योरदन्तत्वनिपातनं कृतायां वृद्धौ टिलोप इत्यर्थज्ञापकमि'ति भाष्यम् असङ्गतं स्यात् । ण्यन्ताभ्यामाभ्यां चङि 'यथेष्टं नामधातुषु' इत्यनेन द्वितीयद्वित्वे 'अहलल‌दि'त्यादावभ्यासे अकारश्रवणेन चारितार्थ्यादिति चेन्न । (तस्य[2] सन्येव प्रवृत्तेर्वक्ष्यमाणत्वात् । तत्र च 'सन्यत' इतीत्वप्रवृत्त्या विशेषाऽभावात् । किञ्च—) णिच्सन्नियोगेन इकारस्याऽत्वं निपात्यमानं णिनिमित्तकमिति, तस्याऽपि स्थानिवत्त्वेन 'लि'शब्दस्यैव द्वित्वेनाऽक्षतेः । 'द्विर्वचनेऽची'त्यत्र तद्भावभावितामात्रेण निमित्तत्वस्योक्तत्वेन, तत्सूत्रशेष-भूतेऽत्रापि तथैवौचित्यात्[3] । 'हल'प्रातिपदिकाण्णिचि त्वदुक्तरूपस्य सिद्धेश्च । प्रकरणाऽऽदिसाहाय्येन लक्षणया ततोऽपि हलिशब्दार्थबोधसम्भ-वात् । 'अजहलदि'त्यत्र उभयबोधनिर्वाहाय प्रकरणाद्यनुसरणस्य तवाऽप्या-वश्यकत्वाच्चेति दिक् । तद् ध्वनयन्नाह—औननदिति' । इति ख. ग.

1 'इति वाच्यम् । 'अपूर्ववचनकल्पनाऽपेक्षया वर्गादिग्रहणस्य 'अबीभवदि'-त्यादौ 'दीर्घो लघोरिति'दीर्घोत्तरमित्त्वे, 'लक्ष्ये लक्षणस्ये'तिन्यायेन पुनर्दीर्घो मा भूदित्यर्थकल्पकत्वमेव स्यादिति, भाष्योक्तज्ञापकत्वं भज्येतेति, 'ओ'रित्यस्य सार्थक्यात्' इति ग. पाठः ।

2 अयं ग. पाठः । अन्यत्र नाऽस्ति ।

3 'यद्यप्यन्यत्र 'पादशतस्य सङ्ख्यादेरि'त्यादौ सहविधानेन निमित्तत्वम्, तथाऽप्यत्र कथञ्चिन्निमित्तमेव गृह्यते इत्युक्तम् । तद्ध्वनयन्नाह-औननदिति' इति ग. पाठः ।

इत्यस्य निवेशाऽर्थमि'त्यपास्तम् । स्पष्टाऽर्थत्वात् ।

नन्वेवं सति 'हलिकल्योरदन्तत्वनिपातनं 'कृतायां वृद्धौ टिलोप' इत्यर्थज्ञापकमि'ति भाष्यमसङ्गतं स्यात् । ण्यन्ताभ्यामाभ्यां चङि 'यथेष्टं नामधातुषु' इत्यनेन द्वितीयद्वित्वे, 'अहलल्दि'त्यादौ अभ्यासे अकारश्रवणेन चारितार्थ्यादिति चेन्न । एतद्भाष्यप्रामाण्येन,'कण्ड्वादेस्तृतीयस्ये'त्युत्तरं तत्पाठेन च, त्र्येकाचामेव भाष्ये तत्रोदाहृतत्वेन च, एकाच्त्रयसंनिधाने एव 'यथेष्टमि'ति प्रवृत्तेरदोषात् । तद्ध्वनयन्नाह—औननदिति । न च अदन्तत्वसामर्थ्यात् अल्लोपविकल्पः । शास्त्रबाधस्याऽन्याय्यत्वात् । मम तु न कस्याऽपि शास्त्रस्य बाधः । एतेन 'णिज्विकल्पाऽर्थं तदि'त्यपास्तम् । किञ्च अस्य अदन्तत्वम् अग्लोपित्वसम्पादनेन 'मा भवानूननदि'त्यत्र ह्रस्वाऽभावाऽर्थं चरितार्थम् । तद्ध्वनयन्नाह—मा भवानूननदिति । न च 'नोनयती'ति चङ्निषेधः शङ्क्यः । तत्र 'च्छन्दसी'त्यनुवृत्तेः । 'मा त्वायतो जरितुः काममूनयीरि'त्युदाहरणम् ।

स्तेन । अयं न षोपदेशः । अनेकाऽच्त्वात् । अदन्तत्वसामर्थ्यादिति । उपधावृद्धिवारण-दीर्घसन्वद्भावविरहो-पधाह्रस्वव्यावृत्त्यु-पधागुणव्यावृत्त्यर्थं हि कथ-सार-भाम-गृह-मृगप्रभृतीनामदन्तत्वं सार्थकम्, न च तदिहाऽस्तीति, णिज्विकल्पाऽनुमानम् । युक्तं चैतत् । 'चिन्त्यादेरिदित्त्वं सामान्याऽपेक्षं ज्ञापकमि'ति मते इहाऽपि अकारफलस्य स्पष्टत्वात् । विशेषाऽपेक्षज्ञापकवादेऽपि इदित्त्वादेर्यथा तज्ज्ञापकता स्वीकृता, तथा अदन्तताया अप्यस्तु । तेन णिजभावे 'गर्वाञ्चकारे'त्यादावामसिद्धिः ।

ङ. पाठः । अयं सर्वोऽपि ग्रन्थो मनोरमादिस्थत्वात् क. नास्ति ।

१ इतोऽग्रे–'यथा 'पक्षा परिग्रहे' इति पाठे तत्-आदित्त्वस्य, चिन्त्यादेरिदित्त्वस्य, 'वृजी' इति ईदित्त्वस्य, 'वञ्चु' इत्यादेरुदित्त्वस्य, पाठाऽन्तरे ऊदित्त्वस्य, तज्ज्ञापकता स्वीकृता, तथाऽदन्तताया अप्यस्तु' इति ख. ग. ङ. पाठः ।

यद्यपि 'गर्व'शब्दात् आचारक्विपि इदं सिद्ध्यति, तथापि 'गर्ववान्बभूवे'-त्यर्थे तत्सिद्धिरदन्तत्वफलं बोध्यम् । यत्तु 'सूत्रैरपि अदन्तत्वमेवमि'ति । तन्न । अनेकाच्त्वेन अषोपदेशत्वसम्पत्त्यर्थत्वात् ।

अन्त उदात्त इति । तेन 'गर्वती'त्यादौ मध्योदात्तत्वसिद्धिः ।

यत्तु[1] 'अदन्तत्वसामर्थ्याद्वाक्यशेषं समर्थयिष्यामहे । 'संप्रश्नप्रार्थने'-त्यादिप्रयोगाच्च अल्लोपविकल्प' इति । तन्न । चित्यादेरिदित्त्वेन, 'आधृ-षाद्वे'त्यनेन च क्लृप्तबाधस्य णिच एव बाधेनोपपत्तावक्लृप्तबाधस्य अल्लोपस्य बाधकल्पनाया अनुचितत्वात् । अन्यथा इदिदादिष्वपि तेषां लोपबाध एव स्यात् । एतेन 'अर्थधातो: 'अर्थापयते' 'आर्त्तिथपते'ति रूपमि'ति परास्तम् । 'आर्त्तथते'त्यभ्यासे अकारश्रवणेन, अदन्तत्वस्य चरितार्थ्येन, अल्लोपबाधे मानाऽभावाच्च[2] । किञ्च लुङि सन्वद्भावादित्त्वे, दीर्घोऽपि स्यादिति दिक्[3] ।

सूत्रमूत्रयोः पाठे फलं चिन्त्यम् । 'तत्करोती'त्यस्य 'सूत्रयति' 'मूत्रयती'-ति भाष्ये उदाहृतत्वात् । 'मूत्राञ्चकारे'ति 'आमर्थः पाठ' इति केचित् । अन्ये तु 'कार्पासेन वेष्टयती'त्यर्थे 'कार्पासेन सूत्रयती'त्यर्थं पाठ' इत्याहुः ।

गणसूत्रमाह—प्रातिपदिकादिति । यत्तु 'तत्प्रकृतिकसुबन्तादि'त्यर्थः । 'तत्करोती'त्यस्य एतद्विवरणत्वात् । तत्र हि—'तदि'ति कर्मपदम् । 'तेन द्वितीयान्तात्प्रत्यय' इति तृतीये हरदत्तोक्तेरि'ति । तन्न । 'सुप' इत्यस्याऽप्रकृतत्वात्[4] । अन्यथा मुण्डादिसूत्रे एव पठेत् । 'सुप' इत्येव सिद्धे, गणसूत्रोपात्तप्रातिपदिकपदेन विरोधाच्च ।

१ 'यत्तु' इत्यारभ्य 'इति दिक्' इत्यन्तः ख. ग. ङ. पाठः । मनोरमाशब्द-रत्नस्थत्वात् क. कुण्डलितः । २ चकारो ग. नास्ति ।

३ 'दीर्घोऽपि स्यात् । 'अङ्गं यत्र द्विरुच्यते' इति पक्षे तु ह्रस्वमपि दुर्लभमिति दिक्' इति ग. पाठः ।

४ इतोऽग्रे—'तत्करोती'ति गणसूत्रसमानाऽऽकारवार्त्तिकस्य 'हेतुमति चे'ति-

'तत्करोती'ति तु 'धात्वर्थे' इत्यस्य सकर्मकधात्वर्थविशेषपरतां, कर्मत्वाऽन्तर्भावेणैकार्थीभावं प्राक् अबोधितं बोधयितुमिति बोध्यम्। अत एव 'घटो जायते' 'घटं पचती'त्यर्थे 'घटयती'ति न। इदमेवाऽभिप्रेत्य मूले 'तत्करोती'ति पूर्वस्य प्रपञ्च' इत्युक्तम्। माधवस्वरसोऽप्येवमेव। हरदत्तोऽपि एतदर्थपरतया नेतुं शक्य एव, 'द्वितीयान्तादि'त्यस्य 'तदन्ताऽर्थकादि'त्यर्थात्।

न च 'स्वार्थे परिपूर्णं पदं पदार्थाऽन्तरमाकाङ्क्षती'ति 'कुत्सिते'इति सूत्रभाष्योक्तन्यायेन सुबन्तादेव णिजुचितः। आचारक्विप्यपि एवमापत्तेः। 'तत्र प्रातिपदिकग्रहणसामर्थ्येन तद्बाध' इति चेत्। प्रकृतेऽपि तुल्यम्। अपि च 'प्रर्षभयती'त्यत्र सुबन्ताण्णिचि, वृद्धिविकल्पाऽऽपत्तिः।

केचित्तु[2] 'तत्करोति तदाचष्टे' इति 'हेतुमति चे'ति सूत्रे वार्त्तिकात्, 'टेरि'ति सूत्रे 'णाविष्ठवत्प्रातिपदिकस्ये'ति वार्त्तिकाच्च, गणसूत्राणि प्रामादिकानीति प्रतीयते। तत्र तत्र सूत्रे वृत्तिकारादिभिः 'ख्युनामि'त्यादीनां सूत्राऽवयवत्वेन पठितानामपि वार्त्तिकेषु दर्शनेन, प्रामादिकत्वकल्पनस्य सर्वसंमतत्वादि'त्याहुः।

यत्तु 'सुबन्ताण्णिजि'ति पक्षे अन्तर्वर्त्तिविभक्त्या पदत्वेन, 'अत्यरराजदि'त्यादौ कुत्वाद्यापत्तिरि'ति। तन्न। णिचि[3] सति भत्वेन तदप्राप्तेः। णिचि लुप्तेऽपि, भत्वस्य निवृत्तौ मानाऽभावात्।

---

सूत्रे कृतत्वेन, तस्य वैयर्थ्यमाशङ्क्य,'साऽपेक्षेभ्योपि णिजर्थमि'त्याकरे उक्तत्वेन च, तत्र सुबसम्बन्धस्य ध्वनितत्वाच्च' इति ग. पाठः।

१ इतोग्रे—'अन्यथा 'सुपो धात्वर्थे' इत्येव वदेत्। तद्धितविषये तु 'बकाले'-त्यादिज्ञापकान्न्यायाश्रयणमित्यन्यत्' इति ग. पाठः।

२ 'यत्तु तत्करोति तदाचष्टे' इति ग. पाठः।

३ 'णिचि सति भत्वेन तदप्राप्त्या, 'भ्रष्टाऽवसर'न्यायेन लुप्तेऽपि तदप्रवृत्तेः। भत्वस्य निवृत्तौ मानाऽभावाच्च' इति ग. पाठः।

अकृतव्यूहपरिभाषा तु अनित्या[1] । अत एव स्रग्विणमाख्यत् 'असस्रजदि'-त्यादौ न कुत्वम् । अत एव 'प्रातिपदिकाण्णिजुत्पत्तावपि भत्वाऽतिदेश आवश्यकः । नचैवं[2] सति 'वृक्षव् करोती'त्यादौ 'क'निमित्तको 'व'लोपः स्यात् । न च णिलोपस्य स्थानिवत्त्वम् । 'न पदान्ते'ति निषेधादि'त्याशङ्क्य, पद-चरमाऽवयवत्वाऽभावात्समाहितं कैयटादिभिः, तदसङ्गतं स्यात् । भत्वेन पदत्वाऽभावात्, 'न पदान्ते'त्यस्य प्राप्तेरेवाऽभावात् । बहिर्भूतसुप्निमित्त-पदत्वस्याऽपि समानाऽवधिकभत्वेन बाधादिति वाच्यम् । तद्रीत्या[3] बहि-रङ्गत्वेनाऽस्य पदत्वस्याऽन्तरङ्गेण भत्वेन बाधाऽयोगात् । न चाऽन्तर्वर्त्ति-विभक्तिनिमित्तकस्याऽन्तरङ्गस्य पदत्वस्य बहिर्भूत'णि'निमित्तकेन बहि-रङ्गेण भत्वेन कथं बाध इति वाच्यम् । अतिदेशसामर्थ्येन अन्तरङ्गस्य बाधाऽऽवश्यकत्वात् । शास्त्राऽतिदेशे उत्तरकालप्रवृत्तिके भत्वे अजानन्तर्य-सत्त्वेन, तदंशे 'नाऽजानन्तर्ये' इति निषेधाच्च । अत एव 'औपगव' इत्यादौ भत्वसिद्धिः । यादितद्धितांऽशे तु सामर्थ्यादेव अन्तरङ्गपदत्वबाध इति मात्सर्यमुत्सार्य सुधीभिरूह्यम् ।

'इष्ठवच्चे'त्यंशस्तु 'टेरि'ति सूत्रे भाष्ये 'णाविष्ठवत्प्रातिपदिकस्ये'ति वार्त्तिकरूपेण पठितः । तत्र वार्त्तिके 'णा'वित्युपमेये सप्तमीनिर्देशात्, सप्तम्यन्ताद्वतिः । तदाह—इष्ठे यथेति । अत एव 'भावयती'त्यादौ 'इष्ठस्य यिट् चे'ति यिडागमो न । वार्त्तिके 'प्रातिपदिकस्ये'त्यपि उक्ताऽर्थे शब्दमर्यादया तात्पर्यग्राहकमि'ति कैयटः ।

प्र-स्थ-स्फादीति । 'आदिना 'युवाऽल्पयोः कनपी'ति केचित् । 'प्रस्थ-स्फाद्यादेश'शब्देन षाष्ठाऽऽदेशा एव, न पाञ्चमिका ज्यादय इत्याहुः । यद्यपि भसंज्ञा भाष्ये न दृश्यते, तथाऽपि 'उदाहरणमात्रमिदं, न परिगणन-मि'ति भाष्यात्तस्या अपि ग्रहणम् । अत एव 'स्रग्विणमाचष्टे स्रजयती'-

---

१ 'अकृतव्यूहपरिभाषा तु अनित्या' इति क. कुण्डलितः पाठः ।

२ 'न च वृक्षव् करोतीत्यादौ' इति ग. पाठः ।

३ 'स्वद्रीत्या' इति ख. क. पाठः ।

त्यादिसिद्धिः। 'भारद्वाजीया' इत्यपि न परिगणनम्, किन्तु परिगणनत्वाऽभावे निदर्शनमात्रमित्याहुः।

ननु 'एनी'शब्दाण्णौ टिलोपेन ङीपि निवृत्ते, तत्सन्नियोगेन नस्याऽपि निवृत्तौ, 'एतयती'त्यादिसिद्धेः, किं पुंवत्त्वगणनयेति चेन्न। 'इडविडमाचष्टे ऐडविडयती'त्याद्यर्थं तस्याऽऽवश्यकत्वात्। एतेन 'सन्नियोगशिष्टपरिभाषाया अनित्यत्वज्ञापनाय पुंवद्ग्रहणम्। तेन 'ऐनेय' इत्यादौ 'यस्ये'ति लोपे, नकारो न निवर्त्तते' इत्यपास्तम्। तत्र स्थानिवद्भावेन सिद्धेश्चेत्याहुः।

परत्वाद्वृद्धाविति। इदं च 'मुण्डमिश्रे'त्यत्र भाष्ये स्पष्टम्। अत एव तत्र सूत्रे 'हल-कले'ति हलिकल्योरदन्तत्वनिपातनं सार्थकम्। लोपः शब्दाऽन्तरप्राप्त्याऽनित्यः। वृद्धिरनित्येति स्पष्टमेव। एवं चोभयोरनित्ययोः परत्वात् वृद्धौ, आवादेशात्पूर्वमेव—परत्वात्, वार्णादाङ्गस्य बलीयस्त्वाच्च, लोपः। एवं च अनग्लोपित्वाद्दीर्घसन्वद्भावौ स्त एव। न च टिलोपस्य स्थानिवत्त्वेन, चङ्परणिपर-लघुपरत्वाऽसम्भव इति वाच्यम्[1]। 'अभ्यासस्य कार्ये कर्त्तव्ये अभ्याससम्बन्धिधात्ववयवाऽऽदेशस्य तत्प्रतिबन्धकस्थानिवत्त्वं ने'त्यर्थस्य 'अभ्यासस्याऽसवर्णे' इति सूत्रस्था'ऽसवर्ण'ग्रहणेन ज्ञापनात्[2]।

यत्तु[3] 'अभ्यासस्य आदिष्टादचः पूर्वत्वेन, न स्थानिवत्त्वमि'ति। तन्न। द्वित्वनिष्पन्नस्य 'आगन्तूनामन्ते निवेश'इति परत्रैवोत्पत्त्या, पूर्वस्य अनादिष्टादचः पूर्वत्वाऽक्षतेः। षाष्ठद्वित्वस्य द्विःप्रयोगत्वाच्च। तदाह—अपीपटदिति। न च अत्र अन्त्यवृद्धिं बाधित्वा, इष्ठवद्भावेन 'णि'निमित्ता आदिवृद्धिरेव भविष्यतीति, कथं वृद्धौ कृतायां लोपः[4]। इष्ठनि आदिवृद्धेः

१ इतोऽग्रे—'ज्ञापकस्य सजातीयाऽपेक्षत्वेन स्थानिनो द्वित्वभाक्त्वे एव तत्प्रवृत्तेः' इति ग. पाठः। २ 'ज्ञापनाच्च' इति ग. पाठः।

३ एतत्स्थाने 'एतेन षाष्ठद्वित्वस्य द्विःप्रयोगत्वादनादिष्टादचः पूर्वत्वमस्त्येवेति परास्तम्। तदाह—अपीपटदिति' इति ग. पाठः।

४ इतोऽग्रे—'औपदेशिकत्वेनाऽन्त्यवृद्धेरेव बलवत्त्वात्' इति ग. पाठः।

कथमपि सम्भावितत्वाऽभावेन अतिदेष्टुमशक्यत्वात्[1] । नचाऽत्र पक्षे वारि आख्यत् 'अवीवरदि'त्यादौ वृद्धौ कृतायां, कृतस्य टिलोपस्य स्थानिवत्त्वाद्ध्रस्वत्वं न प्राप्नोति । चङ्परनिर्ह्रासे तन्निषेधादिति दिक् ।

वृद्धेर्लोप इति । अत एव 'नाऽग्लोपी'ति सूत्रे 'अग्लोप' इति प्रत्याहारग्रहणं चरिताऽर्थम् । न च स्वामिन्नादिभ्यो णिचि, टिलोपे, तत् चरितार्थम् । इदुदुपधेभ्यो णिजन्तेभ्यो लुङ्भावस्य भाष्यप्रामाण्येन अङ्गीकारात् । कृताऽकृतप्रसङ्गित्वमात्रेणाऽपि नित्यत्वाऽङ्गीकारादिति भावः ।

एवं च सूत्र[2]संमतपक्षभेदेन विकल्पस्यैव भाष्यबोधितत्वेन, दुर्युक्त्या फलैक्ये नाऽभिनिवेष्टव्यम्[3] । स च लक्ष्यभेदेन व्यवस्थितो, न तु ऐच्छिक उचित[4]' इति बोध्यम् । न च ण्यन्ताण्णौ 'ण्यल्लोपावि'ति पूर्वविप्रतिषेधेन[5] वृद्धेः पूर्वं णिलोपे, अग्लोपित्वेन ह्रस्व-सन्वद्भावाद्यभावे, 'अवीवददि'ति भाष्यप्रयोगाऽसङ्गतिरिति वाच्यम् । णेर्णिच्युपसङ्ख्यानेनैव[6] सिद्धेः ।

१ 'अतिदेष्टुमशक्यत्वाच्च' इति ग. पाठः ।

२ 'एवञ्च सूत्रभाष्यसंमतपक्षभेदेन' इति ग. पाठः ।

३ इतोऽग्रे—'न चाऽत्र चङ्निमित्तकणिलोपस्याऽग्रे भावित्वेन 'अकृतव्यूह'परिभाषया 'णाविष्ठवदि'ति टिलोपाऽनापत्तिरिति वाच्यम् । 'अचः परस्मिन्नि'ति स्थानिवत्त्वात् । 'न पदान्ते'ति निषेधस्तु न । लोपस्य पदाऽनवयवत्वात् । न च ण्यन्ताण्णौ ण्यल्लोपावितिʼ इति ग. पाठः ।

४ उचित इति कश्चित्' इति ख. ङ. पाठः ।

५ 'पूर्वविप्रतिषेधेन, अपवादत्वेन वा' इति ग. पाठः ।

६ इतोऽग्रे—'किञ्च 'णौ चङी'त्यत्र 'णि'ग्रहणं स्पष्टाऽर्थमुक्तं, तदेव ज्ञापयति 'णिग्रहणे जातिग्रहणमि'ति । तेन न दोषः । एवञ्च वार्त्तिकमपि नाऽपूर्वम् ।

न चैवं 'न पदान्त'सूत्रे 'चङ्परनिर्ह्रासे न स्थानिवदि'त्यस्य 'अवीवददि' त्युदाहरणपरं भाष्यं विरुध्येत । तस्य प्रयोजनोपलक्षणत्वात् । 'प्रत्याहारग्रहणमेव ह्रस्वे स्थानिवत्त्वाऽभावज्ञापकमि'ति 'चङ्परनिर्ह्रासे' इत्यपि

**तत्करोतीति** । 'कर्मसमर्पकादि'त्यर्थः । **प्रपञ्च इति** । **अनेनाऽपि** प्रातिपदिकादुत्पत्तेः । अत एव एतत्समानाऽऽकारं 'तत्करोती'ति वार्त्तिकं मुण्डादिसूत्रमपहाय, 'हेतुमति चे'त्यत्र पठितमित्याहुः[1] ।

**लडर्थस्त्विति** । तेन भाव-कर्म-भूत-भविष्यद्-द्वित्व-बहुत्वेषु ण्यन्तात् प्रत्ययाः सिद्ध्यन्तीति भावः ।

**धातुरूपं चेति** । गणसूत्रमेतत् । **वार्त्तिकमिति** । 'हेतुमति चे'ति सूत्रे' इति शेषः ।

**आख्यानादिति** । अत्र 'आख्यान'शब्देन प्रसिद्धं 'कंसवध'-'नलोपाख्याना'दि एव गृह्यते' इति न । किन्तु सर्वम् । तेन 'राजानम् आगमयती'त्यपि भवति । 'राजाऽऽगमनमाचष्टे' इत्यर्थः । [2]'आख्याने'ति-स्वरूपग्रहणं तु न[3] । व्याख्यानात् ।

'आख्यानवाचककृदन्तात् 'तदाचष्टे'इत्यर्थे णिच् । णिच्प्रकृत्यवयवकृतो लुक् । तस्यैव कृतो या प्रकृतिः 'हनि'त्यादिः, तस्या विकारपरित्यागेन स्वेन रूपेणाऽवस्थानम् । **प्रकृतिवच्चेति** । आख्यानणिचो या प्रकृतिः =कंसवधादिः, तस्या यथा आख्यानक्रियाऽपेक्षं कारकत्वम्, आख्यान-क्रियाऽनन्तर्भूतत्वं च, तथा कृदन्तघटककंसादेरपि णिच्प्रकृत्यर्थं प्रति कारकत्वं, णिच्प्रकृत्यर्थाऽनन्तर्भूतत्वं चे'त्यर्थ' इति कैयटः[4] । तन्न ।

पुष्ययोगं जानाति-'पुष्येण योजयति' इत्यत्र तृतीयाऽनापत्तेः ।

---

नाऽपूर्वम् । एवञ्च मायाः (=लक्ष्म्याः) नौः—'मा-नौः । तत आचक्षाण-णिचि, चङि, ह्रस्वो भवत्येवेत्यलम्' इति ग. पाठः ।

१ 'पठितम् । सापेक्षेभ्योऽपि णिजर्थं च तत् । 'व्याकरणं सूत्रयती'त्याद्यर्थमि'-त्याहुः' इति ग. पाठः । २ 'अत्राऽऽख्याने'ति' इति ग. पाठः ।

३ इतोऽग्रे–'कृत' इत्यस्य वैयर्थ्याऽऽपत्तेः । व्याख्यानाच्च' इति ग. पाठः ।

४ इतोऽग्रे—'किञ्च तन्मते धातावनन्तर्भूतत्वविधानाय 'कृत्प्रकृतौ यथा कारकं धातावनन्तर्भूतं, तथाऽऽख्यातप्रकृतिकणिजन्तेऽपी'त्यावृत्त्या अतिदेशान्तरं वाच्यम्' इति ग. पाठः ।

तस्मात् 'हेतुमण्णिचः प्रकृतेः = हन्यादेः, हेतुमण्णौ यादृशं कारकं, धातावनन्तर्भूतं, द्वितीयाद्यन्तं च, तथा इहापी'त्यर्थः । 'प्रकृतिवदि'त्यस्य 'कृत्प्रकृतिप्रकृतिकणिजन्तवदि'त्यर्थः । 'लुप्यमानकृत्प्रकृत्यर्थे[1] यादृशं कारकमाख्यानघटकं नाम, तादृशं णिच्प्रकृत्यर्थेऽपी'ति तु नोक्तम् । 'कंसं घातयती'त्यत्र[2] षष्ठ्यापत्तेः । 'राजाऽऽगमनमाचष्टे' इत्यादौ राज्ञः कृत्प्रकृत्यर्थे कर्त्तृतया 'राजानमागमयती'ति भाष्यविरोधाच्च । 'तदाचष्टे' इति, 'आख्यानादि'ति च उपलक्षणम् । अत एव 'उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सम्भावयते = प्राप्नोती'ति, 'सूर्यमुद्गमयती'त्यत्राऽपि भवति । मृगरमणादिभ्यस्तु यदा तत् दर्शयन्नाचष्टे, तदैव णिच् । यदा तु अरण्ये मृगरमणं दृष्ट्वा, स्वयं ग्रामे आचष्टे, तदा न णिज्, अनभिधानादित्याहुः ।

'कृद्ग्रहणे' इति परिभाषया 'कंसवध'शब्दः कृदन्तः ।

द्वितीयान्तमिति । अन्यथा धातावनन्तर्भूतत्वेऽपि, प्रत्ययलक्षणेन कृदन्तत्वात्, कृत्प्रकृत्यर्थकर्मतया षष्ठी स्यादिति भावः ।

यादृशं च[3] कार्यमिति । 'प्रकृतिवत्कारकमि'त्येतावन्मात्रोक्तौ, धातावनन्तर्भूतत्वविधानद्वारा, तद्रहितणिजन्तस्य धातुत्वेन[4], अट्-द्विर्वचनयोर्द्वितीयादीनां च सिद्धावपि, णिचो धातुप्रत्ययत्वाऽभावात्कुत्वतत्वयोर्न सिद्धिरिति, उभयमुक्तम् । 'राजानमागमयती'त्यत्र अन्तर्वर्त्तिषष्ठ्या प्रत्ययलक्षणेन पदत्वेऽपि[5], 'प्रकृतिवत्कारकमि'ति रूपाऽतिदेशात् नलोपो नेति

१　'लुप्यमानकृत्प्रकृतेस्तु न ग्रहणम्', इति ग. पाठः ।

२　'कंसं घातयती'त्यादौ प्रत्ययलक्षणेन कृदन्ततया षष्ठ्यापत्तेर्भाष्यविरोधात् । किञ्च राजागमनमाचष्टे' इत्यादौ' इति ग. पाठः ।

३　'चात्कार्यमिति' इति ग. पाठः ।

४　'धातुत्वाच्चङ्लुङादीनां धातुप्रत्ययत्वाच्चाऽट्द्विर्वचनयोः' इति ग. पाठः ।

५　'पदत्वेऽपि नलोपादि नेति बोध्यम् । वस्तुतः प्रकृतिपदेन' इति ग. पाठः ।

बोध्यम्। देवदत्तपाकमाचष्टे'देवदत्तेन पाचयती'त्यत्र तृतीयैव।'गतिबुद्धी'तिनियमेन कर्मत्वाऽपहारे, कर्त्तृत्वस्यैव स्थितेरिति दिक्।

केचित्तु 'उभयत्राऽपि 'प्रकृति'पदेन हेतुमण्ण्यन्तप्रकृतिः। हेतुमण्ण्यन्तश्च प्रत्यासत्त्या कृत्प्रकृति-प्रकृतिक एव। प्रत्यापत्तिः-प्रत्यभिज्ञाविषया आपत्तिः = स्थितिः। सा च तन्मात्रस्य सत्त्वे, तत्रत्यकार्यसत्त्वे च भवतीति, अनेनैव कारकबहिर्भावो, वधाऽऽदेशनिवृत्तिः, कुत्वतत्वादिकं, 'योजयती'त्यादौ कुत्वादिनिवृत्तिश्च सिद्धा। एवमपि कंसादेः षष्ठी प्राप्नोतीति— 'प्रकृतिवच्चे'ति। यद्विभक्त्यन्तं तत्र कारकं, तादृशमत्राऽपीत्यर्थः। अत एव रात्रिविवासमाचष्टे 'रात्रिं विवासयती'त्युदाहरणविषये वचने प्रकृतिप्रत्ययाऽऽपत्तिरि'त्युक्तिर्भाष्ये चरिताऽर्थेत्याहुः।

कर्त्तृकरणादिति। यत्तु 'कर्त्तुः, करणाच्चे'ति। तन्न। द्विवचनाऽऽपत्तेः। 'तेने'त्यनुवृत्त्यैव सिद्धे, 'कर्त्तृकरणादि'त्यस्य वैयर्थ्याऽऽपत्तेश्चेत्याशयेनाऽऽह-कर्त्तुर्व्यापारार्थमिति। 'कर्त्तृ'ग्रहणफलमाह—न त्विति। तदभावे चक्षुषा पश्यति 'चक्षयती'त्यादावेव स्यात्। लोके इन्द्रियाणामेव करणत्वेन सुप्रसिद्धत्वादिति भावः।[1]

चित्र। 'चित्रात्क्यचा णिचो बाधा मा भूदि'ति पाठ इत्याहुः।

अदन्तेष्विति। 'वटी'त्यादिनिर्देशस्तु सौत्र इति भावः।[2] शाकटायनेति। अत्राऽरुचिस्तु 'सर्वत्र अल्लोपबाधे मानाऽभाव' इति।

सङ्ग्रामेति। 'युद्धे वर्त्तमानं सङ्ग्रामेति प्रातिपदिकं कृत्यर्थे णिचं लभते' इत्यर्थः। 'प्रातिपदिकादि'त्यनुवृत्तेः, अन्यस्याऽसम्भवाच्च, 'प्रातिपदिकमि'ति लब्धम्। मन्त्रधिकारे 'ग्रसेरादि'ति 'ग्राम'शब्दव्युत्पादनाच्च।

---

१ 'लोके इन्द्रियाणामेव करणत्वेन सुप्रसिद्धत्वात्। 'करिभिरवबध्नाति अवकरयती'त्यादौ तु न स्यादिति भावः' इति ग. पाठः।

२ 'इतोऽग्रे—'अन्ये हृति। अत्राऽरुचिस्त्वदन्तप्रकरणेऽपि हृदित्वनिर्देशाऽसङ्गतिरित्याहुः' इति ग. पाठः।

'युद्धे' इत्यस्य णिजर्थत्वं तु न। प्रकृत्यैव लोकव्युत्पत्त्या तद्बोधनात्। 'धात्वर्थे' इत्यनुवृत्तेश्च।

अनुदात्तेदिति। अत्र मानं भृशादिसूत्रस्थं भाष्यम्। तत्र हि— 'अवश्यं सङ्ग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या, 'असङ्ग्रामयत शूर' इत्येवमर्थम्। तन्नियमाऽर्थं–'सङ्ग्रामयतेरेव सोपसर्गात्, नाऽन्यस्मात् सोपसर्गादि'त्युक्तम्। 'णिजन्तात्संग्रामयतेरकर्त्तृगेऽपि फले आत्मनेपदार्थमनुबन्धसम्बन्धाय अयं पाठ आवश्यकः सन् नियमाऽर्थो भविष्यती'ति तदर्थः। उपसर्गपृथक्करणाऽभाव-फल-बोधनाय लङुदाहृतः। एतेन 'अस्य अनुदात्तेत्त्वम् अपाणिनीयमि'ति माधवोक्तं परास्तम्।

आत्मनेपदाऽर्थाऽनुबन्धश्च केवल'संग्राम'शब्दस्य क्रियावाचकत्वाऽभावेन अधातुत्वात्तत्राऽचरिताऽर्थ इति, ण्यन्ते उपकरोतीति बोध्यम्।

न चैवं भाष्योक्तम् उपसर्गपृथक्करणज्ञापकत्वं भज्येतेति वाच्यम्। 'ग्राम युद्धे' इत्येतावतैव अनुदात्ताऽनुनासिकाऽऽसञ्जनस्य सिद्धत्वेन, 'सम्'विशिष्टपाठस्य ज्ञापकत्वाऽक्षतेः। न चेदं णिजर्थमिति, अनुबन्धाऽऽसञ्जने मानाऽभावः। 'तत्करोती'त्येव सिद्धेः। युद्धे केवल'ग्राम'-शब्दस्य वृत्त्यभावेन, सामर्थ्यात्तदर्थकस्य ग्रामाऽन्त'संग्राम'शब्दस्य ग्रहणं सिद्धम्। विशिष्टस्यैव उद्देश्यकोटौ प्रवेशात् 'सनाद्यन्ता' इति सूत्रे 'प्रत्यय-

---

१ 'नाऽन्यस्मात्सोपसर्गादित्युक्तमि'ति अस्मत्कृते भाष्यप्रदीपोद्द्योते स्पष्टम्' इति ग. पाठः।

२ 'पृथक्कारण' इति क. पाठः ?।

३ 'तच्च केवलसंग्रामशब्दस्य' इति ग. पाठः।

४ 'अधातुत्वात् णिचो वैकल्पिकत्वे तदभावेऽपि न चरितार्थम्' इति ण्यन्ते उपकरोतीति बोध्यम्' इति ख. ङ. पाठः।

५ 'पृथक्कारण' इति क. पाठः ?।

६ 'अनुदात्ते'ति ग. नास्ति।

ग्रहणे' इति तदादिनियमसत्त्वेऽपि, 'संग्रामि' इत्यस्य विशिष्टस्यैव[1] धातुत्व-सिद्धिश्च[2]। 'इङ् अध्ययने' इत्यादिविषये तु भूवादिसूत्रविहितधातुसंज्ञायाः पाठाऽपेक्षित्वेन, काल्पनिकक्रियावाचकत्वमादाय अधिरहिते एव प्रवृत्ति-र्बोध्या। नचाऽस्य समो नोपसर्गत्वम्[3], 'ग्राम'शब्दस्य क्रियाबोधकत्वाऽभावेन, क्रियायोगाऽभावादिति वाच्यम्। 'सोपसर्गादि'त्यस्य 'सोपसर्गसमानाकारा-दि'त्यर्थात्। ननु अर्थानाम् आधुनिकत्वात्, 'युद्धे' इति पाठ एव दुर्लभ इति चेन्न। अस्याऽन्तर्गणसूत्रत्वात्। अत एव 'मारण-तोषण-निशामनेषु ज्ञा' इत्यादिष्वर्थानां विवक्षितत्वम्।

नन्वेवम् 'अससङ्ग्रामते'त्यत्र ह्रस्वाऽऽपत्तिः। अग्लोपित्वाऽभावात्। अत आह-अकारप्रश्लेषादिति[4]। अदन्तप्रकरणादिति भावः। एतेन 'संग्रामे'त्यस्याऽपि प्रपञ्चाऽर्थत्वेन, उपसर्गपृथक्करणे न मानम्। 'स्वमनायते'त्यादौ स्वादीनां प्रत्ययाऽर्थविशेषणत्वात्फलाऽभावश्च। तदु-पपत्तिश्च भाष्यकैयटयोर्द्रष्टव्या। हरदत्तस्वरसोऽप्येवमि'ति परास्तम्।

---

१ णिज्विशिष्टस्यैवेत्यर्थः।

२ 'धातुत्वसिद्धिः' इति ग. पाठः।

३ 'नोपसर्गत्वम्, किन्त्वखण्ड एव 'संग्राम'शब्द इति वाच्यम्। 'वा पदान्तस्ये'ति परसवर्णाऽनापत्तेः। 'संग्रामयतेरेव सोपसर्गादि'त्याद्युक्त-भाष्यविरोधाच्च' इति ग. पाठः।

४ 'प्रश्लेषादिति। अन्यथा अनुनासिकविशिष्टस्य आद्योच्चारणेन, उपदेशे एव ह्रस्वे, लोपे, मान्त'ग्राम्'शब्दस्य, तदन्तस्य वा, लोके युद्धे वर्त्तमानत्वा-ऽभावेन, 'युद्धे योऽयं ग्रामशब्द' इत्यनुवादाऽसम्भवेन, 'ग्रामशब्दो युद्धे वर्त्तते, तस्माण्णिजि'त्यर्थाऽऽपत्तौ, 'ग्राम युद्धे' इत्यनेन संपूर्वकस्याऽलाभेन, ज्ञापकाऽसङ्गत्यापत्तिः। क्वचित् 'अससङ्ग्रामत शूर' इत्येवमर्थमि'ति पठ्य-मानेन 'भृशादि'सूत्रस्थभाष्येणाऽग्लोपित्वाच्च। अदन्तप्रकरणाच्च' इति ग. पाठः।

भाष्यकृतैव स्पष्टं तथोक्तेः । 'प्रभौ परिवृढ' इति सूत्रभाष्योदाहृत-'परिवृढय्ये'त्यस्य[1] पृथक्करणज्ञापनफलस्य सत्त्वाच्च । नहि तत्र प्रत्ययाऽर्थ-विशेषणं सम्भवति । 'परिवृढ'शब्दाण्णिजुत्पत्तेः । प्रादिग्रहणादत्र क्त्वा[2]ऽन्तेन समासः । प्रभौ 'परिवृढ'शब्दस्य रूढतया, क्रियायोगाऽभावेन अगतित्वात् । न च प्रादिसमासोऽपि क्त्वाऽन्तेन न प्राप्नोति, असामर्थ्या-दिति वाच्यम् । प्रकृत्येकदेशद्वारकस्य विशिष्टेन सामर्थ्यस्य कृत्सु सर्वत्रैव वाच्यत्वात् । 'मनस्'शब्दस्य वृत्तिविषये तद्वति वृत्तिमाश्रित्य, 'मनस्वी सुष्ठु भवती'त्यर्थेऽपि, प्रत्यया[3]ऽर्थविशेषणपक्षे 'असुमनाः सुमना भवती'-त्यर्थबोधाऽसम्भवेन, त[4]त्पक्षस्याऽप्रयोजकत्वाच्चेत्याहुः ।

अतुस्तोमदिति । अग्लोपित्वाद्ध्रस्वाऽभावः । त[5]त्क्रियायामिति । 'सुखदुःखकर्मकक्रियायामि'त्यर्थः । अयमपि प्रपञ्चः । यत्तु 'सोपसर्गात् प्रत्ययाऽर्थे' इति मैत्रेयः । तन्न । अखण्डत्वेन एतद्घटकसुदुरोरुपसर्ग-समानाऽऽकारत्वेऽपि, पूर्वपदत्वाऽभावा[6]त् । अत एव 'दुःख'शब्दे 'इदुदुप-धस्ये'ति षो न । विसर्गाऽन्तस्य पदत्वाऽभावात् । व्युत्पन्नत्वेऽपि 'सु'धातो-र्दुल्धातोः खे, अन्त्ये धात्वन्तस्य विसर्गो, बाहुलकात् , 'बहुलमन्यत्रापी'-ति णिलुक् चेति व्युत्पादनं बोध्यम् । यदाऽपि दुःपूर्वात्खनतेर्डे दुःखमिति,

१ 'भाष्योदाहृतस्य परिवृढय्येत्यस्य' इति ग. पाठः ।

२ 'क्त्वाऽन्तेन' इति क. पाठः ।

३ 'प्रत्ययाऽर्थाऽविशेषणपक्षे' इति ग. पाठः ।

४ 'तिङ्ङतिङ' इत्यनेन 'मनायते' इत्यस्य निघाताऽऽपत्त्या च तत्पक्षस्य अप्र-योजकत्वाच्चेत्याहुः' इति ग. पाठः । तत्पक्षस्य = प्रत्ययार्थविशेषणपक्षस्य ।

५ इतोऽग्रे—'तत्पदेन सुखदुःखे प्रातिपदिकाऽर्थौ परामृश्येते' इति ख. ग. ङ. पाठः ।

६ इतोऽग्रे--'उत्तरत्र खण्डद्वयमि'तिवादिनां मते उपसर्गत्वाऽभावाच्च' इति ख. ग. पाठः ।

तदापीत एव निपातनात्षत्वाऽभावो बोध्यः। यत्तु 'षत्वमङ्गीकृत्य 'दुष्खेने'-त्यादौ णत्वाऽभावः 'षात्पदान्तादि'ति निषेधादि'ति धातुपारायणे जिनेन्द्र-बुद्धिग्रन्थे प्रोक्तम् , तत्प्रामादिकमेव। यत्तु 'चुरादाविमौ धातू एवे'ति कालापाः। तन्न। तच्छब्देनाऽर्थनिर्देशे[1], धात्वर्थपरामर्शाऽयोगात्। धात्वर्थस्य क्रियात्वेन, 'तत्क्रियायामि'त्यस्याऽसङ्गत्यापत्तेश्चेति दिक्।

'अत[2] एव केवलोत्तरखण्डस्य लोके अप्रयोग' इत्यन्ये।

रूपस्येति। 'निरूपयती'ति तु अनेकाऽर्थत्वेन 'नि'पूर्वकाद्विचारे बोध्यम्।

'णिङ्ङ्गात्', 'श्वेताश्वे'त्यपि गणसूत्रे। ग्रन्थाऽन्ते = धातुपाठाऽन्ते। मङ्गलाऽर्थः। प्रसङ्गात् तदर्थः 'सिद्ध'शब्दः।

अथ[3] गणभेदेन, एकगणे[4] एव वा, द्विस्त्रिःपठिता धातवः संगृह्यो-च्यन्ते–मदि स्तुति। 'मदी हर्षे' दिवादौ। 'हर्षक्लेशनयोर्घटादावि'त्येके। दिवादेरेव, अस्यैव वा, घटादावनुवादाच्चिन्त्यमिदम्। 'मद तृप्तियोगे' इति चुरादौ। मन्थ विलोडने। अयं क्र्यादावपि। इह चाऽग्रे निरनुषङ्ग एदित्पठ्यते। शुन्धु[5] शुद्धौ। अयं शौचकर्मणि युजादौ। 'शुन्ध शौचे' इति दिवादावनिट्। षच सेचने। अयं समवाये स्वरितेद्वक्ष्यते।

पचि व्यक्तीकरणे। 'पचि विस्तारवचने' इति चुरादौ। कुच शब्दे। अयं ज्वलादौ, तुदादौ चाऽर्थाऽन्तरे वक्ष्यते। 'गतावप्ययमि'ति स्वामी। अञ्चु गति। गतियाचनयोरग्रे स्वरितेत्। विशेषणाऽर्थो युजादौ।

गुजि अव्यक्ते शब्दे। 'अयमनिदिदपी'ति शाकटायनः। 'गुञ्ज शब्दे' इति तुदादौ।

१ 'तच्छब्देनाऽर्थनिर्देशे, धात्वर्थनिर्देशे धात्वर्थपरामर्शाऽयोगात्' इति क.पाठः।

२ 'अत एव' इत्यादिः 'इत्यन्ये' इत्यन्तः ख. ग. ङ. पाठः। क. नास्ति।

३ 'अथ' इत्यारभ्य चुरादिसमाप्तिपर्यन्तं ख. ग. ङ. पाठः। क. कुण्डलितः।

४ 'एकगणाः' इति ग. पाठः। ५ 'शुन्ध' इति ख. ङ. पाठः।

अर्च पूजायाम् । अयं युजादौ स्वरितेत् । इह पाठः कर्त्तृगेऽपि फले परस्मैपदार्थः । शाकटायनस्तु 'आत्मनेपदी'त्याह । प्रयोजनं त्वकर्त्तृगेऽपि फले तङ् । तर्ज भर्त्सने । अयं चुरादावपि । खज मन्थे । केचित् 'कज मदे' इति पठन्ति । एजृ कम्पने । दीप्तावात्मनेपदी गतः ।

क्षि क्षये । अस्याऽजन्तेषु पाठ उचितः । 'क्षि निवासगत्योरि'ति तुदादौ । 'क्षीष् हिंसायामि'ति क्र्यादौ । 'क्षिणु हिंसायामि'ति तनादौ । 'क्षि हिंसायामि'ति स्वादिर्वैदिक' इति बोपदेवः ।

लज लजि । 'ओलस्जी व्रीडे' इति तुदादौ । 'लज प्रकाशने' इति कथादौ । 'लजी'ति पटपुटादिदण्डके भाषाऽर्थः । तुजि पालने । भाषार्थोऽयं युजादौ । गज गजि । 'गज मदे च' । अयं चुरादौ शब्दाऽर्थः । 'गर्ज शब्दे' इति पश्चाद्गतः । 'अग्रे गत' इति मनोरमा । तत्राऽग्रशब्दः प्रथमाऽर्थकः । 'अग्रं पुरस्तादुपरि, परिमाणे पलस्य च । आलम्बने, समूहे च, प्रान्ते च च स्यान्नपुंसकम् । अधिके च, प्रधाने च, प्रथमे चाऽभिधेयवदि'ति मेदिनीकोशात् ।

अट्ट अतिक्रम । अयमनादरे चुरादिः । घट्ट चलने । अयं चुरादावपि । स्फुट । अयं कुटादावपि । विशरणाऽर्थोऽग्रे परस्मैपदिषु । भेदनाऽर्थश्चुरादौ ।

वठि । अयमनिदित् स्थौल्ये परस्मैपदिषु । मठि कठि । इमावनिदितौ परस्मैपदिष्वग्रे । 'कठि शोके' इति चुरादौ । हेठ । 'अयं परस्मैपद्यपी'ति केचित् । कुडि दाहे । वैकल्याऽर्थः परस्मैपदिष्वग्रे । रक्षणाऽर्थश्चुरादौ ।

मडि च । 'मडि भूषायामि'त्यग्रे परस्मैपदी । भडि । अयं चुरादावपि । पिडिरप्येवम् । मुडि । खण्डनाऽर्थः परस्मैपदिषु ।

तुडि । अयमनिदित्परस्मैपदिषु । चडि कोपे । अयं चुरादावपि । पडि । नाशाऽर्थश्चुरादौ । कडि मदे । भेदने चुरादिः । अनिदिदिहैव । तुदादौ च परस्मैपदी । खडि मन्थे । 'खुडि' इत्येके । 'खडि भेदने' इति

चुरादौ। हेडृ होडृ। 'हेड वेष्टने' इति घटादौ। 'होडृ गतौ' इत्यग्रे परस्मैपदी। [1]कटे। अयमनिदिदग्रे।

लुट। अयं दिवादावपि। भाषाऽर्थश्चुरादौ। प्रतिघाते द्युतादौ। इदित् परस्मैपदिषु। मडि। विभागे आत्मनेपदी गतः। जभी जृभि। जभिर्विनाशाऽर्थश्चुरादौ। 'भावेऽर्थे[2] परस्मैपद्यपी'ति केचित्।

मील श्मीलेत्यादि। 'मिल श्लेषणे' इति ह्रस्वोपधस्तुदादौ।

नील वर्णे। 'णिल गतौ' इति ह्रस्वोपधस्तुदादौ। शील। उपधारणे चुरादौ। 'शिल उञ्छे' इति ह्रस्वोपधः तुदादौ। तिल गतौ। स्नेहने चुरादौ। ष्ठिवु। अयं दिवादावपि।

क्लेश अव्यक्ते। 'क्लिश उपतापे' इति दिवादौ। 'क्लिशू बाधने' इति क्र्यादौ। ईष गति। अयम् उञ्छाऽर्थः परस्मैपदिपु। ह्रस्वादयस्त्रयः-गत्यर्थो दिवादौ, इच्छाऽर्थस्तुदादौ, आभीक्ष्ण्याऽर्थः क्र्यादौ। वर्ष स्नेहने। 'वृषु सेचने' इति अग्रे परस्मैपदी। शक्त्यर्थश्चुरादौ। आङः शंसु। 'शंसु स्तुतौ' इत्यग्रे परस्मैपदिषु। 'शसि' इति पाठान्तरम्। बहि महि। 'मह पूजायामि'त्यग्रे परस्मैपदिषु। 'महीङि'ति कण्ड्वादिषु। बर्ह बल्ह। इमौ भाषार्थौ चुरादौ। आद्यो हिंसायामपि तत्रैव। मूष स्तेये। अयं ह्रस्वोपधः क्र्यादौ। जूष चेति। 'जुषी प्रीतौ'त्यादि तुदादौ। 'जुष परितर्कणे' इति युजादौ। ह्रस्वोपधौ। भूष। अयं चुरादावपि। रह त्यागे। अयं कथादौ, मित्प्रकरणे च चुरादौ।

ञिमिदा। अयं दिवादिश्चुरादिश्च। ञिष्विदा। 'क्ष्वेदती'त्यव्यक्ते शब्दे भविष्यति। 'क्ष्विद्यती'ति स्नेहनमोहनयोर्दिवादौ। 'स्विद्यती'ति गात्रप्रक्षरणे। घुट। अयं तुदादावपि। क्षुभ। अयं दिवादिः,

---

१ 'कठे' इति ग. ङ. पाठः।

२ 'भवार्थे' इति ख. ङ. पाठः।

क्र्यादिश्च। व्यय गतौ ।'वित्तत्यागे तु नित्यमात्मनेपदी गत'इत्येकीयमतम। चुरादावदन्तोऽप्ययम् । इति भ्वादयः ।

दिवादौ–मीङ् हिंसायाम् । 'मीञि'ति क्र्यादौ । 'डुमिञि'ति ह्रस्वाऽन्तः स्वादौ । 'मी गतावि'ति चुरादौ । प्रीङ् । 'व्री वरणे' इति क्र्यादौ । प्रीङ् प्रीतौ । 'प्रीञ् तर्पणे' क्र्यादौ, युजादौ च ।

धूरी गूरी । 'गूरे उद्यमने' आकुस्मीयः । 'गुरे' इति लघूपधस्तुदादौ । चुट छेदने । अयं तुदादावपि । इल प्रेरणे । तुदादावप्ययम् । म्रक्ष । सङ्घाते भ्वादिः । म्लेच्छ । भ्वादावप्ययम् । गुर्द पुर्व । अन्त्यो भ्वादावपि ।

जसि । मोक्षणे दिवादिरपि । ताडनहिंसनयोश्चाऽग्रे । रुष रोषे । अयं हिंसायां भ्वादिः । दिवादौ चाऽयम् । डिप सङ्घाते । आकुस्मीयः । दिवादिभ्वाद्योश्चाऽयम् । स्पश । बाधनस्पर्शनयोर्भ्वादावयम् । तर्ज । अयं भ्वादावपि । वस्त । दन्त्योष्ठ्यादिः । कूण । ह्रस्वोपधो भ्वादौ, क्र्यादौ च ।

गूर । ह्रस्वोपध ईदित् दिवादौ, तुदादौ च । त्रुट । अयं तुदादावपि । 'वा भ्राशे'ति सूत्रे 'त्रुटि'ग्रहणादस्य श्यन् च । रक लग । 'रके लगे' इति घटादौ । वस स्नेहेत्यादि । अयं निवासे क्र्यादिर्भ्वादिश्च । आच्छादने अदादिः । स्तम्भने दिवादिः । पुष धारणे । शप्-श्यन्-श्नासु पुष्टौ गतः । ईर क्षेपे । गतिकम्पनयोरदादौ । ग्रन्थ बन्धने । सन्दर्भे क्र्यादावयम् ।

इति चुरादयः।

१ 'गुर' इति ख. ग. पाठः ।

# अथ ण्यन्तप्रक्रिया ।

हेतुमति च । 'हेतु'शब्देनाऽत्र 'तत्प्रयोजक'इति कृत्रिम एव गृह्यते । अन्यथा विक्लित्त्यनुकूलव्यापारादीनामपि हेतुमत्त्वेनाऽतिप्रसङ्गाऽऽपत्तेः । हेतुमांश्च आधेयतासम्बन्धेन प्रेरणादिरेव । व्याख्यानात् । यद्यपि हेतुत्वं प्रकृत्यर्थपाकादिनिरूपितम्, प्रेरणानिरूपितन्तु कर्त्तृत्वमेवेति, हेतुमत्पदेन तस्यैव ग्रहणमुचितम्, तथापि तस्य धातुनैवोक्तत्वान्न ग्रहणम् । न च प्रयोज्यस्यैव ग्रहणमस्तु । तस्य द्रव्यत्वात् । 'करणे' इत्यनुवृत्तेश्च । तस्मात् प्रेरणैव तेनोच्यत इत्याशयेनाऽऽह—**प्रयोजकव्यापारे** इत्यादि ।

**प्रेषणादाविति** । आदिना अध्येषण-तत्समर्थाऽऽचरणे । तत्र निकृष्टस्य प्रवर्त्तनं प्रेषणम् । आराध्यस्य प्रवर्त्तना अध्येषणम् । तत्समर्थाऽऽचरणम्-अनेकधा,-अनुमतिः, अनुग्रहः, उपदेश इति । तत्र यस्याऽनुमतिं विना क्रियाया अनुपपत्तिः, सोऽनुमत्या प्रयोजकः । यथा राजा । यस्तु केनचिज्जिघांसितं पलायमानं निरुणद्धि, सोऽपि हन्त्रनुग्राहकत्वेन तथा । तथा-अचेतनोऽप्यनुग्राहकतामात्रेण प्रयोजकः । यथा 'भिक्षा वासयति,' 'कारीषोऽग्निरध्यापयती'ति । वैद्यादिस्तु 'ज्वरितः कषायं पिबेदि'त्युपदेशेन ।

सर्वे चैते विशेषाः प्रकरणादिना गम्या, न तत्तद्रूपेण वाच्याः । गौरवात्, मानाऽभावाच्च ।

सर्वाऽनुगतं प्रवर्त्तनासामान्यं णिचोऽर्थः । स च वाच्य एव ।

---

१ इतोऽग्रे—'प्रयोजनाऽभावेन तत्र णिजनुत्पत्तेः' इति ग. पाठः ।

२ 'सर्वाऽनुगतं प्रवर्त्तनासामान्यं णिचोऽर्थः । तदपि द्योत्यमेव । 'पञ्चभिर्हलैः कृषती'त्यादौ एकान्ते तूष्णीमासीनत्वादिप्रस्तावशाण्णिचं विनाऽपि तदर्थप्रतीतेः, प्रकृत्यर्थत्वस्याऽऽवश्यकत्वात् । न च द्योतकत्वे 'अभिसावयती'त्यत्र ण्यर्थविशेषकत्वे षत्वाऽभाव' इत्याद्याष्टमिकभाष्यादिविरोधः । उपसर्गाऽऽक्षिप्तक्रियाबोधकानाम्[1] उपसर्गेतराऽनपेक्षसुनोत्यादीनां ग्रहणेनाऽदोषात् । 'वाच्यता'पक्षे तु दोषशङ्कैव नेत्याशयेनाह—वाच्य इति । इति ख.ङ.पाठः ।

---

1 'उपसर्गाक्षिप्तक्रियाबोधकतापर्याप्त्यधिकरणानामेव सुनोत्यादीनां ग्रहणेना-

न तु द्योत्यः । तस्य द्योत्यत्वे विशेषणताऽऽपत्तौ, 'गमितो ग्रामं देवदत्तो यज्ञदत्तेने'त्यादौ प्राधान्येन गत्यर्थत्वात्कर्त्तरि क्तस्याऽऽपत्तेरिति

ऽदोषात् । अत्र च तादृशप्रेरणाबोधकतापर्याप्तिर्ण्यन्ते, न तु तत्पूर्वभागे । अत एव ण्यन्तस्य धातुत्वसिद्धिः । अत एव 'व्याकरणं सूत्रयती'त्यत्र सूत्रस्य क्रियात्वमङ्गीकृतं भाष्ये । द्योतकाऽनपेक्षक्रियाबोधकसुनोत्यादीनामेव ग्रहणाद्वा । वाच्यतापक्षे तु दोषशङ्कैव नेत्याशयेनाऽऽह—वाच्य इति ।

नन्वेवं णिज्लिङोः पर्यायः स्यात् । तथा च 'पृच्छतु' इति प्रयोक्तव्ये, णिजपि प्रयुज्येतेति चेन्न । लोडर्थप्रैषविषयस्य लोडन्तप्रयोगकाले कर्त्तृत्वेनाऽवधारणाऽभावात् । तूष्णीं स्थितत्वेनैव व्यापाराऽयोग्यत्वनिश्चयाऽभावात् । न च कर्त्तृप्रत्ययेन लोटा तस्याऽभिधानं कथमिति वाच्यम् । विवक्षामात्रेण लकारोत्पत्त्यङ्गीकारात् । कर्त्ता चाऽस्याः क्रियाया भवत्येवं प्रेरणेन । तस्य कर्त्तृताया विधीयमानतया सम्भावितकर्त्तृत्वेनैव तदुपपत्तेश्च । हेतुसंज्ञा तु 'तत्प्रयोजक' इति सूत्रस्वरसेन व्यापारवत्तया निश्चीयमानप्रयोज्यकस्यैवेति न दोषः । 'निश्चीयमाने'ति विशेषणात्सम्प्रति क्रियाया अभावेऽपि न दोषः । अत एव भूतभविष्यत्प्रत्ययाः सङ्गच्छन्ते । एवञ्च दृष्टसामर्थ्यतया, सम्भावितसामर्थ्यतया वा निश्चितव्यापारवत्प्रयोज्यप्रेरणा णिजर्थः । केवला तु लोडर्थः । स्पष्टं चेदं 'स्वतन्त्रः कर्त्ते'त्यत्र भाष्ये ।

किञ्च प्रयोक्तृधर्मः प्रेरणा लोडर्थः । अनियतकर्तृका तु णिजर्थः । 'पचे'त्युक्ते वक्तैव प्रेरकः । 'पाचयती'त्यत्र वक्तृभिन्नः । 'पाचयामी'त्यादौ वक्ताऽपि । किञ्च ण्यन्ते गत्यादिसूत्रेण धातुभेदेन प्रयोज्यस्य कर्त्तृत्वकर्मत्वे व्यवस्थिते । लोडादौ तु कर्त्तृत्वमेव । अपि च लोडादौ प्रयोज्यनिष्ठा सङ्ख्या । णिचि तु प्रेरकनिष्ठैव । किञ्च णिचि प्रयोज्यप्रयोजकव्यापारौ सार्वकालिकौ । लोटि तु भविष्यत्काले एव प्रयोज्यव्यापारः । प्रयोजकव्यापारस्तु वर्त्तमानकाले एवेति । अपि च लोटि लोडर्थप्रकारकतत्प्रकृत्यर्थ-

भाष्ये स्पष्टम् । विशेष्यत्वे तु 'पाचयति देवदत्तो यज्ञदत्तेने'त्यादौ प्रधानीभूतव्यापाराऽनाश्रयत्वेन प्रयोज्यस्य कर्त्तृत्वाऽनापत्तिः । अत एव 'अभिसावयती'त्यत्र ण्यर्थविशेषकत्वे, षत्वाऽभावः' इत्याद्याष्टमिकभाष्यं सङ्गच्छते इत्याशयेनाऽऽह—वाच्य इति । लोडादिविषये यथा णिज् न, तथा विध्यादिसूत्रे निरूपितम् ।

ओः पुयण् । 'अः परो यस्मादि'ति बहुव्रीहिः । न तु 'यस्ये'ति । पकारादीनाम् अकाराऽवयवकत्वाऽभावादिति बोध्यम् । णौ कृताऽऽदेशस्य स्थानिवत्त्वज्ञापनात् 'भू-भू' इति द्वित्वे, सन्वद्भावेन इत्वे, 'दीर्घो लघोरि'-ति दीर्घः । तदाह—अबीभवदिति । अजीजवदिति । 'जु गतौ' सौत्रो, 'जुचङ्क्रम्ये'त्यत्र निर्दिष्टः ।

स्रवति । 'अपरे' इत्यनुवर्त्तते । न तु 'पुयण्जी'ति । पवर्ग-जकारयोः असम्भवात् । यणः सम्भवेऽपि, अव्यभिचारात् । बहुव्रीहिणाऽन्यपदार्थं आक्षिप्तः । स च प्रत्यासत्त्या धात्वक्षरमेव । यद्यप्यक्षरशब्दः 'चतुरश्लयतावि'त्यादावज्झल्समुदाये दृष्टस्तथाऽपि 'वर्णं चाऽऽहुः पूर्वसूत्रे' इति भाष्योक्तेर्वर्णपरोऽपि । तदाह—अवर्णपरे इत्यादि । एकहल्व्यवधाने तु सामर्थ्यात्प्रवृत्तिः । 'ओः पुयणि'त्यस्य तु न व्यवधाने प्रवृत्तिः । मानाऽभावात् । अत एव 'पुस्फारयिषती'त्यादिसिद्धिः । अवर्णपरे इति किम् ? । 'सुस्रूषति' । अचीचकासदिति । 'चङ्परे णौ यदङ्गं, तस्य योऽभ्यासो लघुपर' इति व्याख्यातृणां मते एतत् ।

मतान्तरे इति । 'चङ्परे णौ यल्लघु' इति भाष्यमते इत्यर्थः ।

---

विशेष्यको बोधः । ण्यन्ते तु प्रकृत्यर्थप्रकारकण्यर्थविशेष्यक इति वैलक्षण्यम् । इदं च सर्वं प्राशस्त्याऽर्थकमतुपा बोधितम् । अन्यथा 'हेतोरि'ति न्यासे करणशब्दाऽनुवृत्त्यैव सिद्धौ, किन्तेनेति दिक्' इति ग. पाठः ।

१ 'अवयवकत्वाऽभावादित्याह—अवर्णपरेष्विति । णौ कृतादेशस्य' इति ग. ।

२ 'अक्षरं न क्षरं विद्यादि'त्युपक्रमे 'वर्णं चाहुः' इति ग. पाठः ।

द्वयोरपीति । 'अवीवददि'त्यादौ सन्वत्त्वस्याऽप्युपलक्षणमेतत् ।

[1]ण्याकृतीति । एवं च णिलोपस्य स्थानिवत्त्वेऽपि न दोषः । 'इदम् असङ्गतमि'ति 'चिण्णमुलोरि'त्यत्र वक्ष्यते । तस्मादेतत्सिद्धये स्थलद्वये णेर्णिच्युपसङ्ख्यानं कार्यम् । न च ह्रस्वे स्थानिवत्त्वप्रतिषेधेन अन्याऽर्थमावश्यकेन सिद्धे, उपसङ्ख्यानं व्यर्थम् । तद्विषयफलाऽन्तरस्याऽनभिधानात् । इदं च ह्रस्वविधायके 'णेर्णिची'ति वार्त्तिकं कुर्वता ध्वनितम् । 'तद्वा कर्त्तव्यमिदं च, फले न विशेष' इति ध्वनयितुमेव तत्कृत्वाऽपि, अत्रेदं कृतम् । भगवता च तदाश्रयणेन न प्रत्याख्यातमिति दिक् ।

णौ च संश्चङोः । अत्र 'णौ च संश्चङोरि'ति विषयसप्तमी । एवं च तयोर्विवक्षितयोरन्तरङ्गत्वात् वृद्ध्यादेः पूर्वं सम्प्रसारणम् । अन्यथा अन्तरङ्गत्वात् वृद्ध्यायोः कृतयोः, पश्चात्सम्प्रसारणेऽपि, 'अशूशवदि'त्याद्यसिद्धिः । तदाह—संप्रसारणं चेति । न त्वियं परिभाषेति भ्रमितव्यम् । मानाऽभावात्, फलाऽभावात्, भाष्ये प्रत्याख्यानाच्च ।

स्तन्भुसिवु । उपसर्गनिमित्तेति । '[2]उपसर्गादिति वक्तव्यमि'ति वार्त्तिकात् । तत्फलमुदाहरति—न्यसीषहदिति । अत्राऽभ्यासनिमित्तं षत्वं भवत्येवेति भावः । ऋदित्करणादिति । अन्यथा नित्यत्वात् द्वित्वे, उपधात्वाऽभावात्प्राप्त्यभावे, किं तेन ।

मा भवान्प्रेदिधदिति । अत्र यद्वक्तव्यं तत् 'एत्येधती'त्यत्रोक्तम् ।

[3]औन्दिददिति । चङ्परे णौ यल्लघु, तत्पराऽभ्यासाऽभावान्न दीर्घः । अर्वाचीनव्याख्यानेऽपि चङ्परे णौ यदङ्गम् 'उन्द्' इति, तदीयाऽभ्यासोऽभावाच्च । नन्वर्वाचीनपक्षे 'द्विःप्रयोगो द्विर्वचनमि'ति सिद्धान्तात्,

---

१ इतोऽग्रे—'अस्य बीजं चुरादावेवोक्तम् । एवञ्च णिलोपस्य' इति ग. पाठः ।

२ इतोऽग्रे—'इष्टिरेवेयम् । उपसर्गादिति वक्तव्यमिति वार्त्तिकात्' इति ग. ।

३ 'औन्दिददि'ति इत्यत आरभ्य 'निरूपितं तनादिशेषे इति दिक्' ( १८३८ पृष्ठे ) इत्यन्तः ख. ग, क. पाठो, मनोरमास्थत्वात् क. कुण्डलितः ।

द्वितीयप्रयोगविषयीभूतचङ्परणिचं प्रति तदादिग्रहणात् 'औन्दिद्' इत्यङ्गं, तदवयवश्चाऽभ्यास इति, दीर्घः स्यादेवाऽत्र पक्षे। न च णिचो लुप्तत्वात् लघुपरत्वाऽभावः। चङमेव लघुमाश्रित्य तत्प्राप्तेः। 'द्विर्वचनेऽची'ति-शास्त्रबलेन 'दि'शब्दस्य द्वित्वे, ततो लोपेन अभ्यासस्याऽनादिष्टादचः पूर्वत्वेन, णिलोपस्य स्थानिवत्त्वाच्च। दीर्घविधौ स्थानिवत्त्वनिषेधस्त्वाष्ट-मिकदीर्घविषय[1] इति चेन्न। 'चङ्परे णौ यदङ्गं, तस्य योऽभ्यासो लघुपर' इत्यर्थेऽपि[2] प्रत्यासत्त्या लघोश्चङ्परणिनिरूपिताऽङ्गाऽवयवस्यैव ग्रहणेन, अदोषात्। यत्तु 'तक्रकौण्डिन्यन्यायेन चङ्परणेर्निमित्तत्वेनोपादानात्तद्भिन्न-लघोरेव दीर्घविधौ कार्यित्वम्[3]। अत एव 'आटिटदि'त्यत्र लघूपधगुणो न। निमित्ताऽऽर्द्धधातुकभिन्नस्य इकस्तेन न्यायेन स्थानित्वात्। यथा 'न-ने'त्यत्र 'आबाधे चे'ति द्वित्वे, बहुव्रीहिवद्भावेऽपि, द्विरुक्तप्रक्रियोक्तमताऽन्तररीत्या कर्मधारयवद्भावेऽपि[4] वा, 'नलोपो नञ' इति न, तद्वदिति। तन्न। 'येन नाप्राप्ति'न्यायसमकक्षस्य 'तक्रकौण्डिन्य'न्यायस्य इहाऽप्रवृत्तेः। अत एव 'करोति' 'शृणोती'त्यादौ गुणसिद्धिः। 'आटिटदि'त्यादौ गुणाऽभावस्तु चङ्निमित्तद्वित्वस्य बहिरङ्गतयाऽसिद्धत्वात्। आर्द्धधातुकमध्येऽचामन्त-र्भावेऽपि, 'नाऽजानन्तर्ये' इति निषेधो न। एतस्याऽनित्यत्वादित्याहुः।

एतेन[5] 'णिज्निमित्ता अङ्गसंज्ञा प्रथमणिचः प्राचीनस्यैव, न तु तद्विशिष्टस्य। यत एकस्यैव णिचो द्विःप्रयोगः। तथा च अङ्गत्वे निमित्त-भूतो णिच् कथं कार्यिकोटौ प्रविशेत्?। 'तक्रकौण्डिन्य'न्यायविरोधात्[6]।

---

१ 'विषय इति स्पष्टं भाष्ये' इति ग. पाठः। २ 'अपिः' ग. नास्ति।

३ 'कार्यित्वाच्च। यथा 'न-नेत्यत्र' इति ग. पाठः।

४ 'कर्मधारयवद्भावेऽपि'इति मनोरमायां क्वचित्कोऽपपाठ इति शब्दरत्ने।

५ 'किञ्च' इति ग. पाठः।

६ 'तक्रकौण्डिन्यन्यायविरोधात्। साऽपि प्रथमणिचमादायैव। द्वितीयस्य व्यवहितत्वात्। तस्य प्रथमोपस्थितत्वेनाऽन्तरङ्गत्वाच्च। न च 'तन्मध्य-

संज्ञा वा प्रथमोपस्थितम् अन्तरङ्गं कथं निमित्ततया न गृह्णीयात् ? । द्वितीयस्य व्यवहितत्वात् । किञ्चाऽभ्यासाऽवयवस्य नैरर्थक्येन, तदवयवणिचमादाय पूर्वभागस्य अङ्गता वक्तुमशक्या । नचाऽभ्यासस्य नैरर्थक्येऽपि न तदवयवस्य तत्त्वम् । तावन्मात्रादर्थप्रतीत्यभावस्यैव तद्बीजत्वात् ।

---

पतित'न्यायेन 'इटी'त्यस्यैव प्रत्ययत्वम् । द्वयोः प्रत्यययोर्मध्यपातेऽपि, प्रत्ययत्वपर्याप्त्यधिकरणमध्यपातित्वाऽभावात् । एतेन 'द्वित्वात्प्रागेव प्रवृत्ताऽङ्गत्वं, तन्मध्यपतितन्यायेन आद्यन्तणिचमप्यवगाहते' इत्यपास्तम् ।

आष्टमिकद्वित्वस्य द्विःप्रयोगत्वेऽपि 'पचसि-पचसी'त्यादावाद्यपचेर्द्वितीयसिपो विहितत्वेन, विशिष्टस्य पदत्वे तु न क्षतिः । तत्र सुप्तिङन्तयोः पदत्वेन, तक्रकौण्डिन्यन्यायविषयाऽभावात् । न चाऽभ्यासाऽवयवस्य नैरर्थक्यम् । तस्य तत्त्वेऽपि, तदवयवस्य तत्त्वे मानाऽभावात् । अर्थवत्त्व-प्रत्ययत्वादीनां न्यायप्राप्तत्वात् । अन्यथा 'जिगीषा' इत्यादौ सनः सकारेण विशिष्टस्य द्वित्वे, धातोर्द्वितीयभागस्य सनन्तर्भावे, हलादिःशेषे, एकदेशविकृतन्यायेन अभ्यासोत्तरभागस्य प्रत्ययत्वे, प्राचीनस्य अङ्गतायां, दीर्घाऽऽपत्तिः । एवञ्च 'दिवोऽविजिगीषायामि'त्यादिनिर्देशा असङ्गताः स्युः । किञ्च 'प्रतीषिषती'त्यादौ द्वितीयसनं प्रति प्राचीनसनन्तस्याऽङ्गत्वे, 'अज्झनगमामि'ति दीर्घाऽऽपत्तिः । न च 'ह्रस्व' इत्यनेन ह्रस्वे निस्तारः । अभ्यासविकारेषु बाध्यबाधकभावाऽभावस्य ज्ञापितत्वेनाऽभ्यासह्रस्वत्वे, 'सन्यत' इतीत्वे, दीर्घत्वे, 'लक्ष्ये लक्षणस्ये'तिन्यायेन ह्रस्वाऽप्रवृत्तेः । 'दीर्घ इणः किति' 'गुणो यङ्लुकोरि'त्याद्यारम्भसामर्थ्येन अभ्यासे दीर्घादौ कृते, ह्रस्वाऽप्रवृत्तिज्ञापनाच्च । एतेनोक्तरीत्या 'आटिट्' इत्यस्याऽङ्गत्वेन, णिलोपस्य स्थानिवत्त्वात्, गुणः स्यात् । न च 'णौ चङी'त्युपधाह्रस्वेन निर्वाहः । 'तक्रकौण्डिन्य'न्यायेन वारणात् । द्वित्वात्पूर्वं ह्रस्वप्रवृत्त्या, पुनरप्रवृत्तेश्च । न च चङ्निमित्तत्वेन बहिरङ्गस्य द्वित्वस्याऽसिद्धत्वम् । गुणे पश्चात्प्रवर्त्तमानेऽजानन्तर्यसत्त्वेन 'नाऽजानन्तर्ये' इति निषेधात् । इण्मध्ये इव, आर्द्धधातुकमध्येऽप्यचामन्तर्भावादि'त्यपास्तमिति दिक्' इति ग. पाठः ।

किञ्चैवं 'प्रतीषिषती'त्यादावित्त्वाऽनापत्तिः । प्रत्यासत्त्या सन्निमित्तकाऽङ्गावयवाऽभ्यासस्य अत इत्त्वविधानात् । 'अज्झने'ति दीर्घस्तु तत्र न । द्वितीय'स'शब्दपूर्वभागस्य अङ्गत्वेऽपि, अनर्थकत्वात् । अङ्गसंज्ञा तु अनर्थकेऽपि विकरणविशिष्टे दृष्टैव । तस्मात् 'एकाचो द्वे' इति सूत्रशेषभाष्योक्तन्यायेन उत्तरणिचमादाय प्राक्तनसमुदायस्यैव अङ्गत्वमुचितम् । द्विःप्रयोगत्वात् द्वितीयेऽपि ततो विहितत्वबुद्ध्यनपायात् ।

न चैवमपि समुदायस्यैवेति कुतः, पूर्वसनमादाय धातोरप्यङ्गत्वे, 'इषिषती'त्यादौ 'अज्झने'ति दीर्घाऽऽपत्तिरिति वाच्यम् । तस्याऽनर्थकत्वेन प्रत्ययत्वाऽभावात् । किञ्चेदृशे विषये मुख्यतदादिलाभे, व्यपदेशिवद्भावेन तदादौ तदप्रवृत्तेरिति निरूपितं तनादिशेषे इति दिक् ।

अजादेरित्येवेति । 'न न्द्राः' इति सूत्रे 'अजादेर्द्वितीयस्ये'त्यतस्तदनुवृत्तेरित्यर्थः[1] । सा च कर्मधारयात्पञ्चमी । न बहुव्रीहेः । अत एव 'इन्दिद्रीयिषती'त्यादौ दकारस्य[2] न द्वित्वनिषेधः[3] । अत एव संयोगसंज्ञासूत्रे भाष्ये बहूनां सन्निपाते द्वयोः संयोगसंज्ञायाम्, 'इन्दिद्रीयिषती'[4]त्यादौ दोषमाशङ्क्य 'न वाऽज्विधेः', 'अजादेरिति वर्त्तते' इति समाहितम्[5] । ('अचं निमित्तीकृत्य निषेधविधेरि'ति तदर्थः) ।

---

१ 'इत्यर्थः' इति ग. नास्ति ।

२ 'दकारस्य न द्वित्वनिषेधः । अत्राऽऽदित्वं पूर्ववृत्तितामात्रम् । अत एव 'चन्दिद्रीयिषती'त्यादौ नस्य द्वित्वनिषेधसिद्धिः । 'अजादेरि'ति च कर्मधारयात्पञ्चमी'त्युक्तम् । वस्तुतः 'अच' इत्येकदेशाऽनुवृत्तिरेवोचिता' इति ख. ग. ङ. पाठः ।

३ इतोऽग्रे—'नचैवमपि 'चन्दिद्रीयिषती'त्यादौ दोषः । नकारस्याऽऽद्यवयवाऽचः परत्वाऽभावेन निषेधाऽनापत्तेरिति वाच्यम् । शब्दाऽधिकाराश्रयणेन आदिशब्दस्य पूर्ववर्त्तिमात्रपरत्वात् । अत एव संयोगसंज्ञासूत्रे भाष्ये बहूनां संनिपाते' इति ग. पाठः ।

४ 'इन्दिद्रीषिषति' इति क. पाठः ? ।

५ 'इत्यादिग्रहणपरित्यागेन समाहितम्' इति ग. पाठः ।

अदिद्रपदिति। ननु 'द्विलकारकनिर्देशाल्लावस्थायामडि'ति पक्षे आदे-रचः[1] परत्वमस्त्येव । किंच 'चङी'ति द्वित्वात्परत्वादपि प्रथममट् न्याय्यः[2]। अन्तरङ्गत्वं[3] तु नाऽटः। आङ्गत्वादिति चेत्। अत्राहुः—अस्य[4]

1 'अजादेः परत्वम्' इति ख. ग. ङ. पाठः ।

२ इतोऽग्रे—'अपि चाऽनभ्यासत्वैकाच्त्वद्वितीयत्वादिज्ञानसापेक्षद्वित्वस्य बहिरङ्गत्वादपि पूर्वमट्। प्रकृतिप्रत्ययविशेषाऽपेक्षत्वेन चङो बहिरङ्गत्वाच्च, ततोऽपि पूर्वमडिति चेत्। अत्राहुः—आदेरचः परस्य द्वितीयत्वाऽव्यभिचारेऽपि, 'द्वितीयस्ये'त्यप्यनुवर्त्य, विभक्तिविपरिणामेन, 'द्वितीयभागाऽवयव-न-द्-रा' इत्यर्थसामर्थ्येन 'धातुसंज्ञाप्रवृत्तिकाले ये तादृशा' इत्यर्थान्न दोषः। न च प्रथमोपस्थिताऽजादेरित्यस्य त्यागेन 'द्वितीयस्ये'त्यनुवृत्तिसामर्थ्येनैव तावदर्थकल्पनासिद्धौ, 'अजादेरि'ति व्यर्थमिति वाच्यम् । आसन्नत्वेन तस्यैवाऽनुवृत्तेर्युक्तत्वात्। 'इन्दिद्रीयिषती'त्यादौ दकारस्यापि द्वित्वनिषेधाऽऽपत्तेश्च। नकाराऽपेक्षया तस्याऽपि द्वितीयत्वात्। न च विनिगमनाविरहात् द्वितीय एव, न प्रथमो, नाऽपि तृतीय इत्यर्थान्न दोषः। 'चन्दिद्रीयिषती'त्यादौ [1]दकारस्याऽपि द्वित्वनिषेधाऽनापत्तेः। न चैवं 'द्वितीयस्येति न वक्तव्यमि'ति भाष्यं विरुध्येत, पूर्वसूत्रे एकाच्पदाऽनुवृत्त्येष्टसिद्धावप्युक्तार्थलाभाऽर्थं तस्याऽऽवश्यकत्वात्, उत्तरत्र चारितार्थ्याच्चेति वाच्यम्। पूर्वसूत्रे ईदृशेऽर्थे फलाऽभावात्। 'अपीपचन्नि'त्यादौ दोषाच्च। 'यत्र पठितं तत्र मास्त्वि'ति तदाशयाच्च।

अपरे तु 'पूर्वम् अटि अपि, बहिर्भूतलनिमित्तकस्य तस्याऽन्तर्भूतचङ्निमित्ते द्वित्वे बहिरङ्गतयाऽसिद्धत्वादचः परत्वाऽभावेन न निषेधः। 'नाजानन्तर्ये' इति निषेधस्तु नाऽस्या इति स्पष्टमेवेत्याहुः' इति ग. पाठः।

३ अन्तरङ्गत्वम् = मनोरमोक्तम् अन्तरङ्गत्वम्। 'द्वित्वात्, अन्तरङ्गत्वाच्च अट् न्याय्य'इति हि मनोरमायामुक्तम्। ४ अस्य = 'न न्द्राः' इति सूत्रस्येत्यर्थः।

1 'नकारस्याऽपि' इति ग. पाठः।

अधिकारसूत्रत्वेन, तत्तत्सूत्रे उपस्थितौ, तत्र 'धातोरि'ति सत्त्वेन, प्रत्यासत्त्या, व्याख्यानेन च 'धातुसंज्ञाकालिकाऽऽद्यचः परा न-द्-रा' इत्यर्थान्न दोषः। किञ्चाऽटो बहिर्भूतलनिमित्तकस्याऽङ्गस्याऽन्तर्भूतचङ्निमित्ते असिद्धत्वात्, न दोषः। 'अच्परसंयोगादि-न-द्-र-भिन्ना द्वे भवन्ती'त्यर्थात् निषेधं प्रत्येव वाऽसिद्धत्वम्[२]। 'नाऽजानन्तर्ये' इति निषेधस्तु अनित्यत्वान्नेत्याहुः।

यत्तु[३] 'द्वितीयस्ये'त्यनुवर्त्य तत्सामर्थ्यात् 'नित्यं द्वितीयस्य = धातुसंज्ञाप्रवृत्तिकाले द्वितीयस्ये'त्यर्थः। 'अजादेरि'ति तु 'इन्दिद्रीयिषती'त्यादौ नकाराऽपेक्षया दस्याऽपि द्वितीयत्वेन, तस्याऽपि निषेधाऽऽपत्तिवारणाय। 'अजादेरि'ति सूत्रे 'द्वितीयस्ये'ति माऽस्तु' इति भाष्यन्तु— 'यत्र पठितं तत्र माऽस्तु' इत्येतदभिप्रायकमि'ति। तन्न। उक्तरीत्या उपपत्तावेतावतः क्लेशस्य निःफलत्वात्। यदपि-'इन्दिद्रीयिषती'त्याद्यर्थम् 'अजादेरि'त्यनुवृत्तिमुक्त्वा, 'चन्दिद्रीयिषती'त्यादौ दोषमाशङ्क्य 'अजादेरिति कर्मधारयात्पञ्चमी'त्युक्तम्। तदपि चिन्त्यम्। 'अजादेरि'त्यस्य बहुव्रीहित्वे, दरयोरपि संयोगत्वेन, 'इन्दिद्रीयिषती'त्यत्राऽपि दोष एवेति, तदर्थमेव कर्मधारयात्पञ्चम्याश्रयणस्य भाष्यरीत्या आवश्यकत्वेन, शङ्काऽन्तरकरणपूर्वकं तदर्थकथने बीजाऽनापत्तेः। 'बहूनामेव संयोगत्वमि'ति चन्दिद्रीयिषतावपि न दोषः। दस्य संयोगाऽऽदित्वाऽभावादिति दिक्।

**ह्वायि-बाणि**[४]। द्वितीयः पवर्गीयादिः।

**लोटि-लोचय** इति। चोपधोऽन्त्यः। आद्यष्टवर्गप्रथमोपधः[५]।

---

१ 'धातुसंज्ञाकालिकादादेरचः पराः' इति लघुशेखरे पाठः।

२ 'नाऽसिद्धत्वम्' इति ख. ग. पाठः।

३ 'यत्तु' इत्यारभ्य 'इति दिक्' इत्यन्तः ख. ग. ङ. पाठः। मनोरमादिस्थत्वात् क. कुण्डलितः।

४ 'तपरत्वेति। 'सन्यत' इत्युत्तरं 'न स्मृद' इति तन्निषेधेनैव सिद्धे, अकारविधानसामर्थ्यान्न दीर्घ इत्यपि बोध्यम्' इति ग. पाठः।

५ 'लोचय' इति पाठः। एवं हि द्वादशत्वमुपपद्यते' इति ग. पाठः।

वाणि-लोठीति । आद्यो दन्त्योष्ठ्यादिः । द्वितीयः टुद्वितीयोपधः ।

स्वापेश्चङि । अत्राऽपि 'चङी'ति विषयसप्तमी । तेन पूर्वं सम्प्रसारणे, द्वित्वं बोध्यम् ।

शाच्छासा । 'अत्र 'पा'शब्देन अलुग्विकरणत्वात्पिबतेरेव ग्रहणमि'ति कैयटः । 'पै' इत्यस्य तु न ग्रहणं, लाक्षणिकत्वात्, अप्रसिद्धत्वाच्चेति तस्याऽऽशयः ।[1]

ह्वः संप्र । 'णौ च संश्चङोरि'त्यनुवर्त्तते । सा च विषयसप्तमी ।

लोपः पि । अभ्यासेकारसन्नियोगशिष्टत्वात्, द्वित्वे कृते, उपधालोपः ।

अर्त्तिह्री । 'अर्त्ती'ति भ्वादिजुहोत्याद्योर्द्वयोरपि ग्रहणम् । एवं 'री'त्यत्राऽपि । साहचर्यस्याऽनित्यत्वादि'ति वृत्तिः । अर्पयतीति । वृद्धिं बाधित्वा, नित्यत्वात् पुकि, गुणः । यलोप इति । 'लोपो व्योरि'त्यनेन ।

तिष्ठते[2] । 'तिष्ठतेरि'ति श्तिपा निर्देशो यङ्लुक्निवृत्त्यर्थः । 'अतास्थपैदि'त्येके[3] ।

पातेर्णौ । कैयटमते 'अर्त्तिह्री'त्यस्याऽपवादः । अन्यमते 'शाच्छे'त्यस्य । अत्र लुक्-आगम एव । साहचर्यात् । प्रत्ययाऽदर्शनस्यैव लुक्संज्ञत्वाच्च । 'पाल रक्षणे' इत्यनेन रूपस्य सिद्धत्वेऽपि, आगमाऽन्तरनिवृत्तये वचनम् ।

---

१ इतोऽग्रे—'न च 'वे'साहचर्यात्तस्याऽपि ग्रहणम् । तद्विषयेऽस्या अप्रवृत्तेः 'स्वरती'ति सूत्रे उक्तत्वादिति तस्याशयः । अन्ये तु 'सामान्यग्रहणम् । अत एव 'पै'धातोरपि युक् । पातेस्तु न । लुका बाधात् । अत एव पातेर्लुग्वचनं 'शाच्छेति' सूत्रे पठितं, तदपवादत्वबोधनार्थे'त्याहुः । तच्चिन्त्यम् । परिभाषाबाधे मानाऽभावात्' इति ग. पाठः ।

२ 'तिष्ठते' इत्यारभ्य 'इत्येके' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः । मनोरमास्थत्वात् ।

३ 'इत्येके' इति ग. नास्ति ।

वो विधून। अत्राऽर्थाऽनुरोधात् वातेरेव ग्रहणं, न वेञो, नाऽपि 'वै'इत्यस्य। लाक्षणिकत्वात् सानुबन्धकत्वाच्चेत्याहुः। केशान्वापयतीति। सुगन्धी करोतीत्यर्थः। वजेर्ण्यन्तस्य सिद्धे, वातेः पुक्निवृत्त्यर्थं वचनम्।

**विभाषा लीयतेरिति**। आत्वविधायकं स्मारितम्।

**लीलो**। **लीयतेरिति**। नच निरनुबन्धकत्वात् क्र्यादेरेव 'ली'ति ग्रहणमुचितम्, 'ला' इति च आदादिकस्यैव ग्रहणमुचितम्, प्रतिपदोक्तत्वादिति वाच्यम्। धातुभेदेन रूपद्वयस्य सिद्धौ, प्रकृतसूत्रे अन्यतरस्यामग्रहणस्य वैयर्थ्याऽऽपत्तेः। एवं च इदमेव ज्ञापयति–'अत्र सूत्रे धातुद्वयेऽपि विनिगमनाविरहात् व्यवस्थापकन्यायाऽप्रवृत्तिरि'ति। एवं च वृत्तौ 'लीयतेरि'ति यका निर्देशो बोध्यः। पूर्वोत्तरसाहचर्यात् हेतुमण्णावेवाऽस्य प्रवृत्तेश्चौरादिकस्य न ग्रहणम्। **लातेरिति**–कृताऽऽत्वलीयतेर्ग्रहणं, लातेश्च।

ननु कृताऽऽत्वस्याऽपि 'एकदेशविकृत'न्यायेन लीत्वात् नुक् स्यादत आह–**ली ई इतीति**। इदं च स्थानिवत्सूत्रे भाष्ये स्पष्टम्। **प्रलम्भनाभिभवेत्यादि**। यद्यपि भाष्ये 'णौ लीयतेः प्रलम्भन-शालीनीकरणयोर्नित्यमि'त्येव पठितम्, तथापि तत् आत्मनेपदविषयोपलक्षणम्। तेन पूजायामपी'ति कैयटः। 'द्वयोरेवे'त्यपि मताऽन्तरं तेनैवोक्तम्। 'अशिती'ति तु प्रकरणात् लब्धम्। अशित् चाऽत्र णिरेव। 'क्रीङ्जीनामि'त्यत्र पाठात्। भाष्ये 'णावि'त्युक्तेश्च।

**लियः सं**। इहाऽपि द्वयोर्ग्रहणम्। 'ली'विषये सामान्येन

---

१ 'क्र्यादेरेव कृताऽऽत्वस्याऽकृताऽऽत्वस्य च 'लीलोरि'ति ग्रहणमुचितम्' इति ख. ग. ङ. पाठः।

२ 'ग्रहणम्। 'अलुग्विकरणत्वात्। लातेरपीत्यन्ये' इति ग. पाठः।

३ इतोऽग्रे–'परत्वेन लुगागमेन बाध इत्यन्ये' इति ग. पाठः।

४ 'लीयतेरुपसङ्ख्यानम्' इति ग. पाठः।

ऽव्यवस्थापकन्यायाऽप्रवृत्तिज्ञापनात्। तदाह—लीङ्लियोरिति। **शालीनीकरणम्**—अभिभवः। 'अधृष्टीकरणमि'त्यक्षराऽर्थात्।

**प्रयोजकाद्भयं चेदिति।** हेतुसम्बन्धिभयस्याऽव्यावर्त्तकत्वात्पञ्चमीसमास आश्रीयते इति भावः। 'हेतुभये' इत्युक्तेर्भयस्मयावित्यनुपपन्नमत आह—सूत्रे इति। **भी ई** इति। इदं स्थानिवत्सूत्रे भाष्ये स्पष्टम्।

**नित्यं स्मयतेः।** 'हेतुभये' इति वर्त्तते। 'भये' इति धात्वर्थोपलक्षणम्। तदाह—**हेतोः स्मये** इति। **भाययतीति।** द्वितीयस्तालव्याऽन्तस्थाः[1]।

**विस्मापयन्निति।** आत्त्वं कृतम्, आत्मनेपदं च नेत्यत्र बीजाऽभाव इति प्रश्नः। 'विस्माययन्नि'ति स्माऽऽकारोत्तरं तालव्ययकार[2] एवेति नाऽत्राऽऽत्त्वं, नाऽपि आत्मनेपदमिति भावः। **प्रयोज्यकर्त्रीति।** द्वितीयणिजर्थं प्रतीति भावः। आद्यं प्रति सा प्रयोजिका। आत्मनेपदं तु भी-स्मि-प्रकृतिकण्यन्तादेवेति, न ण्यन्ताण्णौ भवति। जातिग्रहणे तु न मानमित्याहुः।

**णौ च संश्च।** अत्र 'आर्द्धधातुके' इत्यधिकृतस्य विषयसप्तमीत्वेन, तत्सामानाधिकरण्यात् 'णावि'त्यस्याऽपि तथात्वम्। तत्राऽऽदेशस्य[3] 'णि'बुद्धिनिमित्तकत्वेऽपि, गाङो द्वित्वे कर्त्तव्ये 'णावच आदेशो ने'ति न प्रवर्त्तते। सति हि तस्मिन् 'अजादेर्द्वितीयस्ये'ति णिच एव द्वित्वं स्यात्। ततश्च न प्रक्रियायां, नाऽपि परिनिष्ठितरूपे अवर्णपरत्वमस्तीति[4], कीर्त्तयतिसाम्यात्। तदाह—अध्यजीगपदिति।

**ऐहलौकिके इति।** यद्यपि 'अन्नं साधयति, ब्राह्मणेभ्यो दास्यामी'ति

१ 'द्वितीयोऽपि' इति लघुशेखरे पाठः।

२ 'तालव्यान्तःस्था यकार एव' इति ग. पाठः।

३ 'तथात्वेनाऽऽदेशस्य' इति ग. पाठः।

४ इतोऽग्रे—'आदेशे निषेधेऽपि[1] यत्रोत्तरखण्डेऽवर्णपरत्वं तत्रैव तन्निषेधप्रवृत्तेः' इति ख. ग. ङ. पाठः।

1 'आदेशनिषेधेऽपि' इति ङ. पाठः।

पारलौकिकत्वं गम्यते, तथापि सिद्ध्यतिफलम्-अन्ननिष्पत्तिः ऐहिकमेव। परलोकस्तु तद्दानस्येति, आत्त्वं भवत्येव। ध्वनितं चेदं भाष्ये।

**प्रजने वीयतेः**। नाऽयं श्यन्। आदादिकत्वात्। यका निर्देशे च फलं चिन्त्यम्।

**वा चित्त**। 'णावि'ति वर्त्तते। प्राप्तविभाषेयम्। तेनेह न—'चित्तस्य दोषः'। जृणातेस्त्विवति। तस्य षित्त्वाऽभावेन मित्त्वाऽभावादिति भावः। **आखेट इति**। 'रजयां चकार विरजाः स मृगानि'ति भारविप्रयोगात् मृगरमणं यथाश्रुतमेव। अत एव भाष्ये 'मृगरमणे इति किमर्थम्?। 'रञ्जयति वस्त्राणी'तिप्रत्युदाहृतमि'ति मताऽन्तरं कौस्तुभे स्पष्टम्। ज्ञपादिरिति। तेन मित्त्वात् ह्रस्वः। चिनोतेस्तु उदाहरति[2]-चापयतीति। 'चिस्फुरोरि'त्यात्त्वे पुक्। तस्य मित्त्वाऽभावान्न ह्रस्वः। चाययतीति। द्वावपि यकारौ तालव्यौ पक्षे इति भावः। अपुस्फरदिति[1]। आत्त्वस्य णौ कृतत्वेन स्थानिवत्त्वात् 'स्फुरि'त्यस्य द्वित्वमिति भावः।

**साभ्यासस्याऽनितेरिति**। 'गुणः कृतात्मसंस्कार' इति न्यायेन नकारविशेषणस्याऽपि अनितेः 'साभ्यासस्ये'ति विशेषणम्, न प्रधानस्याऽपि

---

१ इतोग्रे—'चुरादिपठितवचनेन हि धातुस्वरूपाऽनुवादेन विहितं मित्त्वम् अविशेषात्सर्वत्र प्रवर्त्तते। न च ज्ञपादिसाहचर्याच्चुरादिणिच्येव मित्त्वं, तत्प्रयुक्तं कार्यं चेति वाच्यम्। तेषां नित्यणिजन्तत्वाऽसम्भवात्। तथात्वेऽप्यस्य मित्त्वसामर्थ्याण्णिचो वैकल्पिकत्वेनाऽप्रवृत्तौ मानाऽभावात्। किञ्चात्र साहचर्याश्रयणेऽमन्तानामपि जनीजृषादिसाहचर्येण हेतुमण्णावेव मित्त्वप्रयुक्तकार्यप्रवृत्त्या, स्वार्थणिचो व्यावृत्तौ, 'नाऽन्ये मितोऽहेतौ' इत्यस्य वैयर्थ्याऽऽपत्तिः। न च मित्त्वं 'चिस्फुरोरि'त्यत्र सामान्यग्रहणाऽविघातार्थम्। अन्याऽनुबन्धे एव कर्त्तव्ये मकारकरणेन णिज्विकल्पस्याऽपि लाभादित्याहुः। अपुस्फरदिति' इति ग. पाठः।

२ 'उदाहरति' इति ख. ग. ङ. नास्ति। क. पाठः।

नस्य । एतेन 'अभ्याससहितनस्ये'त्यर्थे रमागमेन रोपधयोरिव अभ्यास-निवृत्त्यापत्तिः । 'उभौ'ग्रहणं च नस्यैव स्थाने णद्वयाऽर्थं स्यादि'त्यपास्तम् ।

'साभ्यासस्ये'तिपदलभ्यमर्थमाह–उभौ नकाराविति । न च 'साभ्या-सस्ये'त्युक्तावपि, अनन्तरस्य पूर्वेण णत्वस्य सिद्धतया, व्यवहिताऽर्थमिदं स्यादिति वाच्यम् । 'स्थादिष्वभ्यासेने'त्यत्रेव 'अभ्यासेने'त्युक्त्यैव व्यवाय-पदाऽध्याहारेण सिद्धे, बहुव्रीहिरूपगुरुभूत'साभ्यासस्ये'तिपदेन सामर्थ्या-त्तन्न्यायबाधपूर्वकं 'न' इत्यस्य जातिपरतया, द्वयोः स्थानित्वलाभात् । स्पष्टं चेदं 'साभ्यासस्य द्वयोरिष्टमि'त्यत्र 'साभ्यासस्य'पदग्रहणेन प्रकृतसूत्रे भाष्ये इति, भाष्यप्रदीपोद्द्योते निरूपितम् ।

'उभौ'ग्रहणन्तु 'ण'इत्यस्य जातिपरत्वबोधनद्वारा, आदेशद्वयाऽर्थम् । तदाह–णत्वमिति । अन्यथा 'ज्वरे'त्याद्यूठ्वत्सकृत्प्रवृत्त्यैव उभयोर्निवृत्तौ, स्थान्यभावादेव पुनः प्रवृत्त्यभावेन, आदेशद्वयलाभो न स्यात् । 'उभौ'-ग्रहणादेव चाऽन्यत्र विधेयविषये जातिविवक्षा नाऽस्तीति ज्ञायते । स्पष्टं चेदम् 'एकः पूर्वपरयोरि'त्यत्र भाष्ये इति, तत्रैव भाष्यप्रदीपोद्द्योते निरू-पितम् । न च 'पूर्वत्राऽसिद्धीयमद्वित्वे' इत्युक्तत्वेन पूर्वं णत्वे, पश्चात् द्वित्वे सिद्धत्वेनेदं व्यर्थम् । तदनित्यत्वज्ञापनाऽर्थत्वादिति दिक् । निमित्ते सतीति । तच्चोपसर्गरेफ इत्याहुः ।

णौ गमि । अत्राऽपि णाविति विषयसप्तमी । अत्र बोधनं शब्दजो-ऽनुभवो, न स्मृतिरिति,'इक् स्मरणे' इति धातौ माधवः ।

ईर्ष्यतेरिति । 'ईर्ष्यतिप्रकृतिकप्रत्ययाऽन्ताद्धातोरि'त्यर्थः । स च

---

१ 'एतेन 'उभौ'ग्रहणाऽभावेऽभ्याससहितस्य' इति ग. पाठः ।

२ 'अभ्यासनिवृत्त्यापत्तिरित्यपास्तम्' इति ग. पाठः ।

३ 'व्यवहिताऽर्थमिदं स्यात् । अनन्तरस्य तु तक्रकौण्डिन्यन्यायेन स्यादिति वाच्यम्' इति क. कुण्डलितः ख. ग. ङ. पाठः ।

ण्यन्तः, सन्नन्तश्च, विनिगमनाविरहात्। ईर्ष्यतेरामः सत्त्वेन, लिटोऽभावात्, अन्यत्र द्वित्वाऽभावाच्चेति बोध्यम्। इति वार्थे इति। 'न न्द्राः' इति सूत्रे भाष्ये स्फुटमेतत्। षकारस्येति। रेफस्य तु 'न न्द्राः' इत्यनेन वारणादिति भावः। द्वितीयस्यैवेति। 'अजादेर्द्वितीयस्ये'त्यनेनेति भावः। रेफस्य तु 'न न्द्राः' इति निषेधादिति बोध्यम्। तृतीयाऽभावेनेति। इहोपन्यासस्त्वाद्यव्याख्याने प्रकृतोपयोगादिति बोध्यम्।

निवृत्तप्रेषणादिति। तदुक्तं हरिणा—'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति। अस्याऽनित्यत्वं प्रागुक्तम्। तेनेति। 'आ गर्वादि'त्यात्मनेपदं तु स्वार्थिकणिजन्तादेवेति भावः। यत्तु 'प्रार्थनं प्रार्थः, तत्कुर्वन्ति प्रार्थयन्ती'ति। तन्न। धातुसंज्ञानिमित्तप्रत्ययविषये उपसर्गसमानाकारपृथक्करणेन, 'अर्थवेदसत्यानामि'त्यापुको दुर्वारत्वात्। ('गणकार्यमनित्यमि'त्यागर्वादित्यात्मनेपदं ने'त्यन्ये)।

इति ण्यन्तप्रक्रिया।

## अथ सनन्तप्रक्रिया।

धातोः कर्मणः। नन्वत्र 'आत्मने' इत्येव कर्त्तव्यम्। तदेव उत्तरत्राऽनुवर्त्तयिष्यते। तस्य धातौ, इच्छायां चाऽन्वयः। तत्र इच्छायाम् 'आत्मन' इत्यस्य कर्त्तृत्वेनाऽन्वयस्य क्लृप्तत्वात्, अन्तरङ्गत्वाच्च धातावप्यर्थद्वारककर्त्तृतासम्बन्धेनैवाऽन्वयः। उत्तरत्र तु तथाऽन्वयाऽसम्भवाद्भिन्नसम्बन्धेनैवाऽन्वयः। प्रत्यासत्त्या च उभयोरैक्यत्वे एवैतत्प्रवृत्तिः। एवञ्च 'समानकर्तृका'दिति व्यर्थम्। ध्वनितं चेदम् 'अन्यतरत्कर्त्तव्यमि'ति प्रतीकमुपादाय कैयटेनेति चेन्न। स्पष्टाऽर्थत्वात्।

'इच्छायामि'ति श्रुतत्वात्समानकर्त्तृकत्वं, कर्मत्वं च तदपेक्षमेव गृह्यते। तदाह—इषिकर्मण इत्यादि। कर्मत्वादिकं चाऽर्थद्वारकं धातो-

---

१ 'सन्नन्त इति। यद्यपि सन्नन्तं धात्वन्तरं, तथापि वचनसामर्थ्यात्, भाष्यप्रामाण्याच्च तत्र प्रवृत्तिरिति बोध्यम्' इति ग. पाठः।

विशेषणं बोध्यम्। एवञ्च 'इषिकर्मवाचकादि'त्यर्थः। ननु कर्त्तृत्वस्य क्रिया-निरूपितत्वात् 'समानकर्तृकादि'त्युक्त्या क्रियावाचकाद्धातोरेव भविष्यति, किं 'धातु'ग्रहणेनेत्यत आह—धातोर्विधेरिति। अत एव 'इको झलि'ति कित्त्वं सार्थकम्। स्पष्टं चेदं भाष्यकैयटयोः। **पिपठिषतीति**। 'पठनकर्त्तृ-कर्त्तृका पठनकर्मिका वर्त्तमानेच्छे'ति बोधः।

**कर्मणः किमिति**। प्रत्ययवाच्येच्छाया नियतं कर्माऽऽकाङ्क्षतया, तदाकाङ्क्षायां प्रत्यासत्त्या प्रकृत्यर्थकर्मिकायामेव विधानं भविष्यतीति प्रश्नः। प्रत्यासत्तिः सर्वैर्दुर्ज्ञेयेत्युत्तरयति–**गमनेनेति**। **समानकर्त्तृकात् किमिति**। प्रत्यासत्तिमाश्रित्य प्रश्नः। प्राग्वदेवोत्तरम्। **यिसनोरिति**। उक्तव्याख्याभेदादिति भावः।

रुदविद। लक्ष्याऽनुरोधिव्याख्यानाद्विदेः सर्वस्याऽपि ग्रहणमित्याहुः।

**सनि ग्रह**। च उगनुकर्षणाऽर्थः। अन्यथा 'बुभूषती'त्यादौ कित्त्वात् परत्वादिडेव स्यात्। कित्त्वाऽभावेन 'श्र्युक' इत्यस्याऽप्रवृत्तेः। एतेन 'सर्वविधिभ्य इड्विधिर्बलवानि'त्यस्या इदं ज्ञापकमि'त्यपास्तम्।

एकाजिति किम्?। 'जिजागरिषति'। [1]ननु परत्वेन षत्व-कत्वयोः कृतयोर्भष्भावो न स्यादत आह—षत्वस्येति।

**किरश्च**। 'सनि ग्रहे'ति, 'एकाच' इति च निषेधे प्राप्ते वचनम्। जिगरिषतीति। 'इट् सनि वे'त्येतं परत्वात्, अपवादत्वाद्वाऽयं बाधते। अत्रेटो दीर्घ इति। इदं च वृत्तौ स्पष्टम्। भाष्ये तु न दृश्यते।

**इको झल्**। स्यादेतत्—'इको झलि'ति व्यर्थम्। येन नाप्राप्तिन्यायेन 'अज्झने'ति वक्ष्यमाणदीर्घेण गुणबाधसिद्धेः। दीर्घेष्वपि पर्जन्यन्यायेन दीर्घप्रवृत्तिर्गुणबाधायैव स्यात्। 'चिकीर्षती'त्यादावित्त्वं तु दीर्घनिमित्तक-

---

१ 'ननु षत्वकत्वयोर्भाविस्वेनाऽकृतव्यूहपरिभाषया भष्भावो न स्यादत आह—षत्वस्येति। कत्वस्याऽप्युपलक्षणम्। तथा' चाऽसिद्धत्वाच्चाऽकृतव्यूह-परिभाषाप्रवृत्तिरिति भावः' इति ग. पाठः।

त्वान्न बाध्यते ।'पृ'धात्वादिष्वपि गुणनिवृत्तिद्वारा दीर्घत्वमुक्तप्रयोजकम् । न च 'सनि मीमे'त्यत्र 'मी'ग्रहणेन मिञोऽपि ग्रहणं यथा स्यादिति दीर्घविधानं चरितार्थमिति, दीर्घोत्तरं गुणप्रवृत्तिर्दुर्वारेति वाच्यम् । गुणे, आत्वे, तद्विषये आत्वे वा, 'मा'ग्रहणेनैव सिद्धेः ।

न च गु-धुभ्यां कुटादिभ्यां सनि 'जुगूषती'त्यादौ चरितार्थत्वात्कथं दीर्घेण गुणबाध इति वाच्यम् । एवं हि 'उ-हने'त्येव ब्रूयात् । न चैवम् 'अजादेशगमेरि'त्यर्थोऽलाभः । 'सनी'त्यावर्त्य, 'सन्निमित्तकगमेरि'ति व्याख्यानेनेष्टसिद्धेः । एतेन 'पुरस्तादपवादा' इति न्यायेन 'ज्ञीप्सती'-त्यादौ णिलोप एव दीर्घेण बाध्य' इत्यपास्तम् । किंच कार्यविशेषस्य यत्र बाध्यता निर्णीता, तत्कार्यस्य चाऽनेकशास्त्रविधेयत्वं,तत्र तद्बाध्यतानिर्णया-ऽर्थमुक्तो न्यायः । प्रकृते तु तन्नेति स्पष्टमेव । किञ्च 'पुरस्तादि'त्यादीनां लक्ष्यविशेष-पाठोभयसापेक्षत्वेन बहिरङ्गतया, तदपेक्षयाऽन्तरङ्गत्वात् येननाप्राप्तिन्यायेन गुणबाधकतैवोचितेति चेन्न । उत्तराऽर्थम् 'इको झलि'-त्यस्यांऽऽवश्यकत्वात् । योगविभागः किमर्थ इति चेन्न । बाध्यसामान्य-चिन्तापक्षे णिलोपबाधशङ्कावारणाऽर्थत्वादिति प्राहुः । ( 'इकः स' इत्येव कुतो न सूत्रितम् । 'सादेः सन' इति चाऽर्थादिति चिन्त्यम् ) ।

---

१ 'अष्टाऽवसरन्यायस्त्वनित्य इति वाच्यम् । तावताऽपि प्रत्याहारग्रहणस्या-ऽनर्थकत्वात्' इति ग. पाठः ।

२ 'गुणे, आत्वे च 'मा'ग्रहणेनैव सिद्धेश्च । अष्टाऽवसरन्यायेन गुणाऽप्राप्तेश्च' इति ग. पाठः ।

३ इतोऽग्रे–'अज्झनोः सनीट् गम' इति न्यासेन सिद्धेः' इति ग. पाठः ।

४ इतोऽग्रे–'किञ्च णिलोपस्य बाध्यता नोचिता । 'अनिटी'ति वचनसामर्थ्येन सर्वापेक्षया णिलोपस्य प्रबलत्वात् । अत एव प्रत्याहारग्रहणं चरितार्थ-मिति चेन्न' इति ग. पाठः ।

५ अयं ग. पाठः ।

हलन्ताच्च । 'हलि'ति लुप्तपञ्चम्यन्तम् । 'अन्त'शब्दः समीपवाची । 'इक' इत्यनुवृत्तं षष्ठ्या विपरिणम्यते । तदाह—इक्समीपादिति ।

धियक्षते इति । सति कित्त्वे यजेः संप्रसारणं स्यादिति भावः । जातिपरमिति । सामीप्यम् अव्यहिते एवेति भावः । स्पष्टं चेदं भाष्ये ।

अज्झन । ननु 'सनी'त्येव सूत्र्यताम् । दीर्घश्रुत्या 'अच' इत्युपस्थितम् । प्रकरणात् 'अङ्गस्ये'ति च । तेन 'अजन्ताङ्गस्ये'त्यर्थः । ततो 'हनिगम्योः' । एवञ्चाऽज्ग्रहणं व्यर्थमिति चेत् । सत्यम् । आवृत्त्या गमिविशेषणाऽर्थं तत् । तदाह—अजादेशगमेरिति । 'इणिङिकाम् आदेशस्ये'त्यर्थः । तेन 'गम्लृ गतौ' इत्यस्य 'संजिगंसते' इत्येव । हन्तेस्तु न विशेषणम् । असम्भवात् । न चाऽऽवृत्त्याऽजन्तानामित्यर्थे मानाऽभावः । प्रत्याहारबहुवचनयोरेव प्रमाणत्वात् । 'च्छ्वोः शूडि'ति सूत्रे भाष्ये झलनुवृत्तेरुक्तत्वादाह—झलादौ सनीति । जिगमिषतीति । 'गमेरिट् परस्मैपदेषु' इतीट् । तत्र हि सर्वोऽपि गमिर्गृह्यते । ध्वनितं चेदं 'सनि चे'ति सूत्रे भाष्ये ।

रलो । 'न क्त्वे'त्यतः सेडिति वर्त्तते । तच्च क्त्वासम्बद्धमपीहाऽनुवर्त्तमानं सनोऽपि विशेषणम् । व्याख्यानात् । 'नोपधे'त्यतो वेति च वर्त्तते । नेति निवृत्तम् । सनि प्राप्त्यभावेन, निषेधस्य वक्तुमशक्यत्वादाह—सेटौ वेति ।

सनीवन्तर्द्ध । अत्र 'सन्'धातुस्तानादिको गृह्यते, भौवादिकश्च । विनिगमनाविरहादित्याहुः ।

आपूज्ञप्यृधा । 'सनि मीमे'त्यतोऽच इति, सनीति च, 'सः सी'त्यतः 'सी'त्यनुवर्त्तते । तदाह—अच ईदित्यादि ।

अत्र लो । तत्रेति । 'तत्र कृते सति योऽभ्यास' इत्यर्थः । यद्वा—'अत्र = 'सनि मीमे'त्यादिसूत्रचतुष्टये 'लोपोऽभ्यासस्ये'त्युपतिष्ठते' इत्यर्थः ।

१ इतोऽग्रे 'न च लुग्विकरणहनिसाहचर्येणैव सिद्धे 'अजादेशे'इतिव्यर्थम् । लुग्विकरणपरिभाषायाः सत्त्वेन, तस्यैव ग्रहणाऽऽपत्तेः' इति ग. पाठः ।

अत्राऽलोन्त्यस्येति नोपतिष्ठते, 'नाऽनर्थके' इति निषेधात्। लोपस्य अविकारत्वात्, 'अनभ्यासविकारे'इत्यस्याऽप्रवृत्तिः। यद्वा 'सनि मीमे'-त्याद्यनुवृत्त्यैव सिद्धे, 'अत्र'ग्रहणात् 'अत्राऽभ्यासत्वेन यो निर्ज्ञातस्तस्य समस्तस्य लोप' इत्यर्थात् 'अलोऽन्त्यस्ये'त्यस्याऽनुपस्थितिरित्युपधासंज्ञा-सूत्रे भाष्यकैयटयोः स्पष्टम्।

ईत्सतीति। 'पूर्वत्राऽसिद्धीयमद्वित्वे' इति चर्त्वे[1] कृते 'त्स'शब्दस्य द्वित्वम्। भ्रस्जेः-इट्रमागमयोर्विकल्पाच्चत्वारि रूपाणि। उदोष्ठ्येति। 'अज्झने'ति दीर्घे कृते एतत्प्राप्तिः। यियविषतीति। 'द्विर्वचनेऽची'ति 'यु'-शब्दस्य द्वित्वे, 'ओःपुंयणि'तीत्त्वम्[2]। ऊर्णोतेरिडभावे 'अज्झने'ति दीर्घः। इट् पक्षे'विभाषोर्णोरि'ति वा ङित्त्वम्। चौरादिकश्चेति। ह्रस्वविशिष्टयो-रुभयोरपि लाक्षणिकत्वादिति भावः। कित्त्वान्न गुण इति। 'णिच' इति शेषः। इदमुपलक्षणम्, णिलोपेन गुणस्य बाधादित्यपि बोध्यम्।

आपज्ञपीनी'ति। (अपवादत्वात्–)[3] णिलोपे, ज्ञकाराऽकारस्येत्त्वम्। पूर्वविप्रतिषेधवार्त्तिके ईत्त्वमप्युपलक्ष्यते इत्याहुः। वस्तुतः सूत्रे णिच्प्रकृ-तिभागस्यैव इका निर्देश इति, न णिचोऽस्य प्राप्तिः। 'इकाररहित एव सूत्र-पाठ' इत्यन्ये। आशङ्कायामिति। 'आशङ्काविषयाऽर्थप्रतिपादकाद्धातोः स्वार्थे सन्नि'त्यर्थः। श्वा मुमूर्षतीति। 'पूर्वत्सन' इत्यात्मनेपदं यथा न, तथा वक्ष्यते। वर्त्तमानसामीप्ये लट्।

सनि मीमा। 'सः सी'त्यतः 'सी'ति वर्त्तते। 'मी'शब्देन कृतदीर्घयो-र्मीनातिमिनोत्योर्ग्रहणम्। मांऽशे 'गामादे'ति सर्वेषां ग्रहणेन, तत्साहचर्या-न्मीशब्दांशेऽपि न्यायाऽप्रवृत्तेः। दैवादिकमीङस्तु न ग्रहणम्। अप्रसिद्ध-

---

१ 'परत्वादीत्त्वे 'पूर्वत्राऽसिद्धीयमद्वित्वे' इति जश्त्वचर्त्वयोः कृतयोः' इति ख. ग. ङ. पाठः।

२ 'ओः पुयण्जीतीत्त्वम्' इति ख. पाठः।

३ अयं ग. पाठः।

त्वात् । स्पष्टं चेदम् 'इको झलि'त्यत्र भाष्ये ।

'शक'ग्रहणेन द्वयोरपि ग्रहणम् । द्वयोरपि साऽनुबन्धकत्वात् ।

मुचोऽकर्मकस्य । किरत्वाद्गुणाऽप्राप्तौ वचनम्, अभ्यासलोपाऽर्थं च ।

इट् सनि वा । 'सनि ग्रहे'त्यस्याऽपवादः । ननु 'चिकीर्पती'त्यादौ 'अज्झने'ति दीर्घे, इत्त्ववत्, इड्विकल्पोऽपि स्यादिति चेन्न । संनिपातपरिभाषया वारणात् । 'कृसृभृ' 'श्वीदित' इत्यादिसूत्रभाष्येषु उपदेशाऽधिकारस्योक्तत्वाच्च । 'वर्णग्रहणेऽपि क्वचिल्लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिरि'तिमते लाक्षणिकत्वाच्चेति दिक् । तद्ध्वनयन्नाह–दुध्वूर्षतीति । 'अज्झने'ति दीर्घे, 'उदोष्ठ्ये'त्युत्त्वे, रपरत्वे, 'हलि चे'ति दीर्घः ।

स्मिपूङ् । ऋ-स्मिङोरनिट्त्वात्, पूङ उगन्तत्वान्निषेधे प्राप्ते, अऊञ्श्रोरूदित्त्वाद्विकल्पे प्राप्ते, वचनम् । पूङो ङकारोच्चारणं पूञ्व्यावृत्तये । तेन तस्य 'पुपूषती'त्येव । 'सनि ग्रहे'ति निषेधात् । सिस्मयिषते इति । 'स्तौतिण्योरि'ति नियमान्न षः । पूर्वत्रासिद्धीयमिति । यत्तु 'शर्पूर्वा' इति सूत्रे कैयटेन अस्याऽनित्यत्वात्तकार-छकारसहितद्वित्वे, 'खर्पूर्वाः खय' इति वार्त्तिकेन तकारलोप उक्तः, तत्तु वार्त्तिकाऽऽश्रयवर्णनमात्रम् । एतदाश्रयणेन वचनप्रत्याख्यानस्यैव युक्तत्वात् । ध्वनितं चेदं भाष्ये इत्यलम् ।

[1]प्रक्रतीति । 'अत्क'शब्दादाचक्षाणणिचि, लुङि, चङि 'त्क'शब्दस्य द्वित्वे 'आकत्कदि'ति रूपाऽर्थं वार्त्तिकमावश्यकमि'त्यन्ये । अत्र यद्वक्तव्यं तत् 'न बहुव्रीहौ' इति सूत्रे उक्तम् ।

पुस्फारयिषतीति । व्यवधानात् 'ओः पुयणि'ति न ।

स्तौतिण्योरेव । एवकार इष्टतोऽवधारणाऽर्थः । अन्यथा 'षण्येवे'ति नियमः स्यात् । 'आगन्तूनामन्ते निवेश' इतिन्यायात् । तथा च 'तुष्टावे'ति

---

१ 'प्रकृतीति । अन्यथा कुल्लुकि, अनयैव परिभाषया कृन्निमित्तप्रकृत्यादेशनिवृत्तौ, किं तेन' इति ग. पाठः ।

न स्यात्। सानुबन्धकषणीति किम् ?। 'सुषूष इह'[1]। अत्र न स्यात्। यदि अयादेशस्य बहिरङ्गत्वं, तदा सानुबन्धकनिर्देशे फलं चिन्त्यम्। एवञ्च 'सिषाधयिषे'त्येव साधु।

उपसर्गात्त्विति। 'स्तौतिण्योरि'ति नियमेन मध्येऽपवादन्याय-बलात् 'आदेशप्रत्यययोरि'ति षत्वमेव बाध्यते इति भावः।

प्रतीषिषतीति। धातूपसर्गैकाऽऽदेशनिष्पन्नेण्निमित्तं हीदं षत्वमाद्य-खण्डे। द्विःप्रयोगत्वादभ्यासस्य[2] षण्परत्वम्। द्वितीयस्य तु न षण्परत्वम्। अत्रत्यं भाष्यन्तु स्थाने द्विर्वचनमादायेति न तद्विरोधः।

सः स्विदि। 'न स्विदी'ति वक्तुं युक्तम्। 'स्विदि'साहचर्येण, निरनुबन्धकपरिभाषया च, अचुराद्योः, चुराद्योश्च स्वदि-सह्योर्ग्रहणम्। 'णि'शब्देन च णिमात्रग्रहणम्, पूर्वसूत्रवदिति बोध्यम्।

शैषिकादिति। सन्विधायके भाष्ये इदम्। शेषे=शेषाऽधिकारे, भवः-'शैषिकः'। अध्यात्मादित्वाट्ठञ्। शैषिकात्सरूपः शैषिको न। तेन 'शालायां जाते भव' इत्यर्थे[3] छान्ताच्छो न भवत्येव। मतुबर्थे भवो 'मतुबर्थीयः'। गहादित्वाच्छः। मतुबर्थोऽस्यास्तीति 'मतुबर्थिकः'। 'अत इनिठनौ' इति ठन्। मत्वर्थीयात्तु समानाऽर्थो विरूपोऽपि न, भिन्नाऽर्थः समानाऽऽकारोऽपि न, समानाऽर्थः समानाऽऽकारश्च न। 'दण्डिमती', त्यत्र तु षष्ठी-सप्तम्यर्थाऽन्यतरवृत्तेः सप्तमी-षष्ठ्यन्यतराऽर्थे प्रत्ययेनाऽर्थतः, शब्दतश्च सरूपत्वाऽभावान्न दोषः। स्पष्टं चेदं मतुप्सूत्रे भाष्यकैयटयोः।

केचित्तु 'शैषिकांशेऽप्येवमेव। 'आहिच्छत्रीय' इत्यादौ तु जाताऽर्थाऽणन्ताद्वृद्धाच्छो बाध्यः। अत एव 'शालीये भव' इति वाक्यमेवे'ति मूलं सङ्गच्छते। अन्यथा अण् स्यादेवेति 'वाक्यमेवे'त्यनुपपन्नं स्यादि'-

१ 'षूङ्। लिट्। थासः से। इति प्रक्रिया। 'सुषूषे' इति च रूपम्। 'सुसूष इह' इति तु सर्वत्र सकारयुतः पाठो दृश्यते।

२ 'द्विर्वचनस्य षण्परत्वम्' इति ग. पाठः।

३ 'इत्यर्थेऽपि' इति ग. पाठः।

त्याहुः । तद्वृत्त्यादिविरुद्धम् । एवकारेण तु च्छ एव व्यावर्त्यते । अत एवोक्तं 'न तु च्छान्ताच्छ' इति । अत एव 'भवाऽर्थकाऽणन्ताद्भवार्थे छो भवत्येवे'ति, आहिच्छत्रीये वृत्त्याद्युक्तं सङ्गच्छते । सनि त्वर्थगतमेव सारूप्यं, विशेषणसामर्थ्यादित्याहुः । 'ईत्सन्ती'त्यादौ यथा अदादेशो न, तथा 'अदभ्यस्तादि'त्यत्र प्रतिपादितम् ।

इति सन्प्रक्रिया ।

---

## अथ यङन्तप्रक्रिया ।

**भृशाऽर्थः**—कार्त्स्न्यम् । **बोभूयते** इति । अत्र यथा न द्वित्वं, तथा द्विरुक्तप्रक्रियायामुक्तम् । क्रियासमभिहारे धातोरेव वृत्तिसम्भवात्पृच्छतिधातोः किमिति । 'सूचिसूत्री'ति वार्त्तिकस्य नियमाऽर्थत्वं स्वीकृत्याऽत्रसूत्रे 'एकाचो हलादेरि'ति त्यक्तुं शक्यमित्याहुः ।

**यङ् नेति** भाष्यमिति । अनभिधानादिति भावः । धातुसम्बन्धे भृशाऽर्थ-पौनःपुन्ययोरन्यतरस्मिन्विवक्षिते, अन्तरङ्गत्वाद्यङि प्राप्ते, 'वे'त्यनुवृत्त्या तस्य वैकल्पिकत्वात्, तदभावे, लोट् अपि । अन्यतराऽर्थयङन्तात् पुनरन्यतरविवक्षायां यङन्तादपि लोट्, इत्यपि भाष्ये स्पष्टम् । क्रियासमभिहारादि तु यङो द्योत्यम् । वाच्यत्वे सन्नन्तादौ इच्छादेरिवाऽत्राऽपि तस्य विशेष्यत्वं स्यात् । अत एवोक्तं भाष्ये—'क्रियासमभिहारे स्वार्थे यङिती'त्याहुः ।

सूचिसूत्रि । अत्र 'ऊर्णोति'ग्रहणं व्यर्थम् । 'नु'वद्भावेन सिद्धेः । सङ्घातग्रहणमिति । तेन 'अहर्यीदि'त्यादौ नाऽतिप्रसङ्गः । 'पुत्रकाम्ये'त्यत्राऽपि न । अर्थवत एव यस्य ग्रहणात् ।

---

१ इतोऽग्रे—'यञ्ञाऽपवादे छे निवर्त्तितेऽपि, उत्सर्गोऽण् न । भ्रष्टाऽवसरत्वादित्याशयः' इति ग. पाठः । २ 'छो नेती'ति, आहिच्छत्रीये' इति ग. पाठः ।
३ 'सिद्धेरित्याहुः' इति ग. पाठः । ४ इतोऽग्रे—'केचित्तु 'अङ्गसंज्ञानिमित्तो यो यकार' इत्यर्थान्न दोष इत्याहुः' इति ग. पाठः ।

दीर्घोऽकितः। अकितोऽभ्यासस्येति। 'अनन्तरस्ये'ति न्यायेन, 'प्रतिपदोक्त'परिभाषया च, 'अभ्यास'पदसम्बन्धेन विहितानाम् , एतत्-प्रकरणस्थकिद्युक्तानामेव व्यावृत्तिरि'ति 'चाच्छायते' इत्यादावन्तरङ्गत्वात्तुकि माधवादिभिर्दीर्घ उदाहृत' इति केचित्।

यङि, यङ्लुकि चेति। यत्तु 'अटाट्यते' इत्यादौ न स्यात्। यङो द्वित्वं प्रति कार्यित्वेन, दीर्घनिमित्तत्वाऽयोगादि'ति। तन्न। प्रत्यासत्त्या यं प्रति कार्यित्वं, तं प्रति निमित्तत्वाऽभावस्यैव 'न हि कार्यी'त्यनेन बोधनात्[1]। अत एव 'अरार्यते' इति भाष्योदाहृतं सङ्गच्छते।

नित्यं कौटि। 'नित्य'ग्रहणं न वाक्यनिवृत्त्यर्थम्। 'वा'ग्रहणनिवृत्त्यैव[2] सिद्धेः। 'विग्रहेण यङन्तप्रतिपाद्यविशेषाऽसम्प्रत्ययान्नित्यग्रहणाऽऽनर्थक्यमि'ति भाष्योक्तेश्च। तस्मात् कौटिल्यपदाऽन्वय्यवधारणाऽर्थं तदित्याशयेनाऽऽह—कौटिल्ये[3] एवेति। इदं च वृत्तौ स्पष्टम्।

अन्ये तु 'वाच्यवृत्त्या 'नित्य'पदान्न एतदर्थलाभः। भाष्ये प्रत्याख्यानाच्च। क्रियासमभिहारे तु न एतेभ्यो यङ्। एतत्प्रकृतिकयङा तस्य विशेषस्याऽसम्प्रत्ययात्। तदुक्तं भाष्ये–'क्रियासमभिहारे च नैतेभ्यो यङि'ति। अत्राऽपि 'विशेषाऽसम्प्रत्ययादि'ति सम्बध्यते' इत्याहुः।

---

१ 'बोधनादिति, यत्किञ्चिदेतत्। यत्तु 'तक्रकौण्डिन्य'न्यायेन निमित्तस्य कार्यित्वाऽयोग' इति। तन्न। तदवयवस्य कार्यित्वेऽपि, तस्य कार्यित्वाऽभावात्। तस्याऽनित्यत्वाच्च' इति ग. पाठः।

२ 'वा'पदाऽननुवृत्त्यैव सिद्धेः। अनभिधानाच्च' इति ग. पाठः।

३ इतोऽग्रे—'न च 'तक्रकौण्डिन्य'न्यायेन सिद्धे व्यर्थं 'नित्य'ग्रहणम्। भाष्ये प्रत्याख्यातत्वेन इष्टाऽऽपत्तेः। 'तदनित्यत्वज्ञापनाऽर्थं तदि'त्यन्ये। तन्न। भाष्यविरोधात्। न चैवकार एव कर्त्तव्यः। तुल्यत्वात्। विरुद्धशब्दोपादानेन 'वा'शब्दनिवृत्तिबोधनाऽर्थं 'नित्य'पदोपादानाच्च। अत एव कण्ड्वादियको नित्यत्वम्' इति ग. पाठः।

कैयटस्तु 'एतद्विषये न क्रियासमभिहारे यङ्। 'तक्रकौण्डिन्य'-न्यायेन कौटिल्य-भावगर्हाभ्यां यङः क्रियासमभिहारादाच्छिद्य स्वीकृतत्वादि'त्याह ।

परे तु 'क्रियासमभिहारादेर्यङ्द्योत्यतया 'तद्वृत्तेर्धातोरि'त्यर्थेन तस्य अत्राऽनुवाद्यत्वं, न विधेयत्वम् । 'तक्रकौण्डिन्य'न्यायश्च विधेयविषयः । 'विशेषविहितेन सामान्यविहितं बाध्यते' इत्येवाऽभियुक्तव्यवहारात् ।

किञ्च न विशेषविहितत्वमात्रं बाधकत्वे बीजम्, किन्तूत्सर्गाऽप्राप्तियोग्येऽचारितार्थ्यम् । न चाऽत्र 'नित्यं कौटिल्ये' इत्यचरितार्थम् । क्रियासमभिहाराऽविवक्षया चारितार्थ्यात् । अत एव 'मिदचोऽन्त्यादि'ति सूत्रे—'न राजाज्ञयाऽपवादैरुत्सर्गा बाध्यन्ते । किन्तर्हि ? । न्यायोऽयमि'-त्युक्त्वा, 'ब्राह्मणेभ्यो दधि दीयतामि'त्याद्युपन्यस्तं भाष्ये । तस्मात्—अनभिधानमेव गत्यर्थादिभ्यः क्रियासमभिहारे यङभावे बीजमि'त्याहुः ।

कुटिलं व्रजतीति[1] । नाऽयं विग्रहः । किन्तु अर्थप्रदर्शनमात्रम् । विग्रहस्तु अस्य 'गच्छती'त्येवोचितः । कौटिल्यादेः प्रकृत्यर्थविशेषणत्वात् । न च तावता कौटिल्यादेरवगतिरस्ति । एवञ्च क्रियासमभिहारयङि अपि न वाक्यम् । तस्य वैकल्पिकत्वन्तु 'स भवान् लुनीहि लुनीहीत्येवाऽयं लुनाती'त्यादौ पक्षे लोडर्थमिति बोध्यम् ।

लुपसद । भावगर्हायामेवेति[2] । पूर्वसूत्रोक्तरीत्येदमपि बोध्यम् ।

उत्परस्य । 'पर'शब्दसामर्थ्यात् 'अभ्यासस्ये'त्यनुवर्त्तमानं पञ्चम्या विपरिणम्यते । तदाह—[3]अभ्यासात्परस्येति । 'अत' इति तपरत्वं

---

१ 'रथेन तरती'त्यादिवदर्थप्रदर्शनायेदं, न तु विग्रहः' इति ग. पाठः ।

२ 'तक्रकौण्डिन्यन्यायसिद्धमर्थमाह—भावगर्हायामेवेति' इति ग. पाठः ।

३ इतोग्रे—'नुगत इत्यनुवर्त्तमाने पुनरद्ग्रहणादेवाऽभ्यासस्येत्यस्य निवृत्तिः सिद्धा, तथापि 'अचर्करीदि'ति अटो व्यावृत्त्यर्थं परग्रहणम्' इति ग. पाठः ।

स्पष्टोऽर्थम्[1]। 'अस्ये'त्युक्तौ लाघवाऽभावात्[2]।

जपजभ । इह दशेर्यङ्लुकि[3]—यङ्-नुग्विधायकयोः 'दशे'ति निपातनबलात्, यङ्लुकि अक्ङित्यपि 'न्'लोपः । तेन 'दंदशीती'ति नकाररहितमेव रूपमि'ति[4] वृत्तिः। इह 'पस्'धातुः सौत्रो, दन्त्याऽन्तो, गत्यर्थो बोध्यः । क्वचित्तालव्यान्तपाठः सूत्रे दृश्यते ।

ओ यङि । गिरतेरेवाऽत्र ग्रहणम्[5]। स्पष्टं चेदम् 'अचि विभाषे'त्यत्र भाष्ये । संचेस्क्रीयते इति । न च 'सं-क्रृ'इत्यस्यामवस्थायां द्वित्वनिमित्त-प्रत्यययङः पूर्वमन्तरङ्गत्वात्[6]सुटि, ततो यङि, द्वित्वात्परत्वात्, रीङश्चाऽपवा-दत्वात्, 'यङि चे'ति गुणः स्यादिति वाच्यम् । 'सुट् कात्पूर्व' इति सूत्रे भाष्ये ध्वनितेन गुणनिषेधेन 'संस्क्रियते' इतिवददोषात्। 'पूर्वं[7] धातुः साध-नेन, धातूत्तरप्रत्ययाऽर्थेन, तत्प्रयुक्तकार्येण च युज्यते' इति पक्षे 'अध्ययने' इत्यादिनिर्देशसिद्धे, पूर्वं यङि, द्वित्वे, रीङि च कृते, सुट्प्राप्तेरदोषात्।

अत एव 'अड्भ्यासव्यवायेऽपी'त्यस्याऽऽरम्भः सङ्गच्छते । (अत[8] एव

---

१ 'स्पष्टार्थम्' इति क. ख. ङ. नास्ति । 'अत इति तपरत्वम्, 'अस्ये'त्युक्तौ लाघवाऽभावात्' इत्येव तत्र पाठः ।

२ 'लाघवाऽभावाच्च' इति ग. पाठः ।

३ 'इह दशेर्यङ्लुकि विप्रवदन्ते' इति ख. ग.ङ. पाठः ।

४ इतोऽग्रे—'केचित्तु यङ्विधायके नलोपनिर्देशेन, नलोपनिमित्तो यङ् भवती-त्यर्थाद्यङ्लुगेवास्य नास्तीत्याहुः' इति ग. पाठः ।

५ 'उपसर्गस्यायतौ' इत्यकारविकरणाऽयतिसाहचर्यात् गिरतेरेवाऽत्र ग्रहणम् । स्पष्टं चेदमचि विभाषेत्यत्र भाष्ये' इति ग. पाठः ।

६ 'परत्वात्' इति ग. पाठः। तत्र परत्वात् = उत्कृष्टत्वात्, अन्तरङ्गत्वादित्यर्थः ।

७ 'पूर्वं धातुः साधनेन' इत्यारभ्य 'इति दिक्' ( १८५७ पृ० ) इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः । मनोरमाशब्दरत्नस्थत्वात् ।

८ अयं पाठः क. नास्ति ।

'संस्क्रियते' 'संस्क्रियादि'त्यादौ 'गुणोर्त्ती'ति न गुणः )। न चाऽत्र पक्षे 'सस्मरतुरि'त्यादौ द्वित्वात्पूर्वमङ्गस्य संयोगादित्वात्, द्वित्वे, अभ्यासकार्येऽपि भूतपूर्वगत्या तत्त्वाच्च सिद्धेऽपि, 'संचस्करतुरि'ति न सिद्ध्यतीति वाच्यम्। 'ऋतश्च संयोगे'त्यत्र 'संयोगोपधग्रहणं कर्त्तव्यमि'ति वार्त्तिकेन समाधानात्[1]। न च 'सस्वरतुरि'त्याद्यर्थं तच्चरितार्थम्। उक्तरीत्या संयोगादिग्रहणेनैव सिद्धेः। ( 'पूर्वं [2]धातुरुपसर्गेणे'ति दर्शनेऽपि संज्ञापूर्वकविधेरनित्यत्वान्न[3] दोषः )।

यद्वा[4] 'यस्मात्प्रत्ययविधिरि'त्यत्र 'तदादि'पदे 'तत् आदिः आदिर्यस्ये'ति 'उष्ट्रमुख'वत्समासेन समाधेयम्। 'संचस्करतुरि'ति तु 'ऋतश्च संयोगादेरि'ति सूत्रे 'आदि'ग्रहणं त्यक्त्वा, प्रत्यासत्त्या 'अङ्गाऽवयवसंयोगात्पर ऋकारान्तस्याऽङ्गस्य गुण' इत्यर्थकरणेन चकारस्य तदादेरादेः सत्त्वात्, 'चस्कृ' इत्यस्याऽङ्गत्वात् सिद्धम्। स्पष्टं चेदम् 'अङ्ग'संज्ञासूत्रे भाष्ये इत्याहुः। एतेन 'सुटो बहिरङ्गत्वेनाऽसिद्धत्वात्संयोगादित्वाऽभावेन, न गुण' इति कस्य चिदुक्तिः परास्ता। 'पूर्वं धातुः साधनेने'ति पक्षे यङ्-द्वित्व-रीङ्षु कृतेषु, पश्चात्सुटि, साऽभ्यासाऽङ्गस्य संयोगादित्वम्, ऋदन्तत्वं च नाऽस्तीति, गुणप्राप्तेरेव अभावात्। 'पूर्वं धातुरुपसर्गेणे'ति पक्षे बहिरङ्गत्वाऽभावादिति दिक्।

---

१ इतोग्रे– 'वार्त्तिकारम्भसामर्थ्येन परिभाषाऽप्रवृत्तेः' इति ग. पाठः।

२ अयं ग. पाठः।

३ इतोऽग्रे—'नचैवं द्वित्वे सुटि, संयोगोपधत्वेन गुणप्राप्त्या, 'अकृतव्यूह'-परिभाषया रीङभावे, गुणो दुर्वारः। 'गुणोर्त्ती'त्यादौ तदभावात्। 'पूर्वं धातुरुपसर्गेणे'ति दर्शनेऽपि कात्पूर्वग्रहणेनाऽभक्तत्वबोधनात्, 'नित्य'ग्रहणाऽनुवृत्त्या नित्यं संयोगादिरित्यर्थाद्वा न दोषः। अभक्तत्वे तद्विशिष्टात्प्रत्ययविध्यभावेनाऽङ्गत्वं दुरुपपादमिति, नित्यग्रहणाऽनुवृत्त्यैव समाधेयम्' इति ग. पाठः। ४ 'यद्वा' इति ख. नास्ति।

निसेसिच्यते इति। 'उपसर्गात्सुनोती'त्यादि यद्यपि निषेधबाधकं, तथापि 'येन नाप्राप्ति'न्यायेन,'पुरस्तादपवाद'न्यायेन च 'सात्पदाद्योरि'ति-निषेधस्यैव बाधकम्। अयन्तु निषेधो विनिगमकाऽभावात्सर्वस्याऽपि निषेधकः। न च 'येन नाऽप्राप्ति'न्यायेनेदम् 'आदेशप्रत्यययोरि'त्यस्यैव बाधकम्। न च परत्वादुपसर्गनिमित्तस्याऽपि बाधकम्[1]। असिद्धत्वा-दिति वाच्यम। स्पष्टप्रतिपत्तये 'उपसर्गादि'त्यतः पूर्वमेव निषेधप्रकरणे कर्त्तव्ये, परत्र करणेन सर्वनिषेधकत्वादित्याहुः। ध्वनितं चेदं भाष्ये। तत्राऽभ्याससकारस्य 'उपसर्गात्सुनोती'ति प्राप्तं, ततः परस्य 'स्थादिषु' इति प्राप्तं षत्वं निषिध्यते।

न कवतेर्यङि। शपा निर्देशफलमाह–कौतिकुवत्योरिति। 'कु शब्दे' इत्यदादेः, 'कूङ् शब्दे' इति तुदादेश्च निवृत्तिः फलम्। कुङो भ्वादेरेव तु ग्रहणमिति भावः। एतच्च वृत्त्याद्यनुसारेण।

([2]न च यङ्लुम्निवृत्त्यर्थः सः[3]। यङ्परत्वाऽभावात्। न च यङन्तादच्चि भाष्यमते यङोऽवयवलोपाऽङ्गीकारात्तन्मते तत्र व्यावृत्त्यर्थं सः। श्तिपा निर्देशेनैव सिद्धेः। यङ्लुग्व्यावर्त्तकेन इतरव्यावृत्तावपि बाधका-ऽभावाच्च। यद्यपि 'कोरि'त्युक्त्या 'कूङ् शब्दे' इतिदीर्घान्ततुदादेः प्रसङ्गो नाऽस्ति, तथापि 'कु शब्दे' इत्यदादिव्यावृत्त्यर्थं क्रियमाणः शपा निर्देशः कुवतिमपि व्यावर्त्तयति। न च 'लुग्विकरण'परिभाषया निर्वाहः। 'निर-नुबन्धक'परिभाषाया अपि दुर्वारत्वेन उभयग्रहणध्रौव्यात्। 'निरनुबन्धक'-परिभाषा प्रत्ययविधिविषये'ति तु भूवादिसूत्रादिस्थभाष्यविरोधाच्चिन्त्य-मेव। एवञ्च 'कुङ'इत्येव वक्तुं युक्तम्। न च पर्यायेषु लाघवगौरवाऽभावः। 'कवतेरि'त्यस्य अनुबन्धरहितधातुमात्राऽर्थकत्वेन, पर्यायत्वाऽभावात्।

केचित्तु 'धातुभेदेन रूपद्वये 'कोरि'ति सिद्धे, 'कवतेरि'ति गुरूच्चारणं

१ 'बाधकः' इति ग. पाठः।

२ 'न च' इत्यारभ्य 'इत्येवेत्याहुः' इत्यन्तः ख. ग. ङ. पाठः। क. कुण्डलितः।

३ सः। 'कवतेरि'ति शपा निर्देश इत्यर्थः।

त्रयाणामपि संग्रहाय । 'शपः श्तिङ्विषये ज्ञापकसिद्धस्य त्रिभ्योऽपि सुलभत्वात् । 'कवतेरि'ति समाहारद्वन्द्वविषये एकशेषः । तेन त्रयाणामपि 'कोकूयते' इत्येवेत्याहुः ) ।

नीग्वञ्चु । 'कस'धातुर्निरनुबन्धकत्वात्, अलुग्विकरणत्वाच्च भ्वादिरेव गृह्यते । अकित इत्युक्तेरिति । 'ननु अजन्तस्याऽभ्यासस्य दीर्घ'इत्यर्थे नुग्रीकादौ कृते, अजन्तत्वाऽभावान्नीकि विशेषाऽभावात्प्राप्तिरेव नेति किम् 'अकित' इत्यनेन । न च 'चरिकर्त्ती'त्यादौ रिको दीर्घव्यावृत्त्यर्थं तत् । रीकैव सिद्धे, रिग्विधिसामर्थ्यादेव तदभावसिद्धेरिति चेन्न । 'अभ्यासविकारविधौ वैयधिकरण्येनैवाऽन्वय' इत्यर्थज्ञापकत्वात् । तेन छ्यतेः सनि, द्वित्वेऽन्तरङ्गत्वात्तुकि, 'चिच्छासती'त्यादावभ्यासह्रस्वेत्त्वसिद्धिः[1] । 'चाच्छायते' इत्यादौ च तुकि 'दीर्घोऽकित' इति दीर्घसिद्धिः । नचैवमपि अपवादत्वान्नीगादिभिर्दीर्घबाधे,[2] व्यर्थमेव तदिति वाच्यम् । 'अभ्यासविकारेषु बाधका न बाधन्ते' इत्यस्याऽपि ज्ञापनादिति स्पष्टं भाष्ये ।

तस्याऽयमाशयः—'तेषां सति सम्भवे युगपदेव प्रवृत्तिः । यौगपद्याऽसम्भवे तु क्रमेणैव । तत्राऽन्यत्र बाधकप्रवृत्त्युत्तरं, बाध्यप्रवृत्त्यभावः । प्रकृते तु तस्मिन्कृतेऽपि, प्राप्तियोग्यं बाध्यं भवत्येव । किञ्च यत्र बाधकप्रवृत्त्युत्तरं बाध्यस्य प्रवृत्त्ययोग्यता, तत्र पूर्वं बाध्यस्य प्रवृत्तिः, अनन्तरं बाधकप्रवृत्तिरि'ति । अत एव 'मीमांसते' 'अचीकरदि'त्यादावित्त्वे कृते, दीर्घः । अनुस्वार इति । तस्य पदान्तवत्त्वात्परसवर्णः[3] ।

हन्तेर्हिंसायामिति । यद्यपि 'ह्नो'आदेशे, 'अभ्यासाच्चे'ति कुत्वेन

१ 'चिच्छासते' इत्यादौ' इति क. ख. ग. पाठः ।

२ 'दीर्घबाधे भ्रष्टाऽवसरत्वाच्च पुनरप्रवृत्तौ व्यर्थमेव तत् । किञ्च दीर्घे कृते नीगादीनां चारितार्थ्येन, परत्वान्नीगादौ, सकृद्गतिन्यायेन दीर्घाऽप्रवृत्तौ, व्यर्थमेव तदिति वाच्यम्' इति ग. पाठः ।

३ 'पक्षे परसवर्णः' इति लघुशेखरे पाठः ।

सिध्यति, तथापि प्रक्रियालाघवाय 'घ्नी'त्युक्तमिति प्राञ्चः[1]। ननु हिन्योरिकारोच्चारणेन उत्त्वबाधवत्, हकारोच्चारणसामर्थ्यात् 'घ्नी'भावे कुत्वं न स्यादिति चेन्न। शास्त्रबाधकल्पने गौरवेण 'हकारोच्चारणं कुत्वप्रवृत्त्यर्थमि'त्यर्थस्यैव कल्पयितुं युक्तत्वात्। तत्र तु 'येन नाऽप्राप्ति'न्यायेन हिन्योरुत्त्वाऽपवादत्वेन, इकारोच्चारणस्य तद्बाधकत्वमेव युक्तम्। घ्नीभावे 'यङी'ति विषयसप्तम्याश्रयणात्पूर्वमेव घ्नीभाव इति, 'पिप्ये' इतिवत् द्वित्वमित्याहुः[2][3]।

([4]अन्ये तु 'घ्नीभावेन द्वित्वं न बाध्यते। विषयभेदात्। यङन्ताऽवयवद्वितीयाऽजवधिकस्य हि द्वित्वम्, प्रकृतिमात्रस्य 'घ्नी'ति। अपवादत्वेन बाधे विषयैक्यमपेक्षितम्। विप्रतिषेधेऽपि परस्परपरिहारेण चारितार्थ्ये सति, तुल्यवर्णाऽऽनुपूर्व्या निमित्तत्वमपेक्षितम्। विषयैक्यन्तु तत्र न। अत एव तातङा 'शा'भावादिकं परत्वाद्बाध्यते इति भाष्यकृत इत्याहुः। दीर्घोच्चारणं संज्ञापूर्वकविधेरनित्यत्वज्ञापनाय)। श्तिपा निर्देशाद्यङ्लुकि न। यङ्येव भाष्ये उपसङ्ख्यानाच्चेति दिक्। वेवीयते इति। 'हल' इति दीर्घः।

चायः की। दीर्घोच्चारणं यङ्लुगर्थम्। अत एव तत्र 'न लुमत'ति निषेधोऽपि न। यद्यपि एकवचने न विशेषः, तथापि 'चेकीत' इत्यादावस्त्येवेत्याहुः।

ई घ्रा। दीर्घोच्चारणम् प्राग्वत्[5]। ननु 'अस्य च्वौ' इत्युत्तरत्र दीर्घोच्चारणं सार्थकमिति, 'न लुमते'ति निषेधबाधे न मानम्। न च तत्रापि 'च्वौ'

---

१ प्राञ्चः = मनोरमाऽऽदिकृतो दीक्षितादय इत्यर्थः।

२ इतोऽग्रे–'परत्वाद्धिन्योः प्रवृत्तौ तु सकृद्गतिन्यायान्नोत्त्वम्। परत्वात् व्यक्तिपक्षाश्रयणात् 'ईजतुरि'त्यादाविव द्वित्वम्। दिग्यादेशे तु जातिपक्ष एव लक्ष्याऽनुरोधादिति स्पष्टं भाष्यकैयटयोरित्याहुः' इति ग. पाठः।

३ 'इत्याहुः' इति ख. ग. ङ. नास्ति।

४ 'अन्ये तु' इत्यारभ्य 'अनित्यत्वज्ञापनाय' इत्यन्तः ख. ग. ङ. पाठः। क. कुण्डलितः।

५ दीर्घोच्चारणम् 'अस्य च्वौ' इत्युत्तरार्थम्' इति लघुशेखरपाठः। अयमेव परिनिष्ठितः पाठः।

इति दीर्घेणेष्टसिद्धिः । ईत्त्वस्य येन नाप्राप्तिन्यायेन दीर्घोऽपवादत्वात् । दीर्घोऽन्तेऽपि पर्जन्यवल्लक्षणप्रवृत्त्या दीर्घप्राप्तेरिति चेन्न । क्वचिदपवाद-विषयेऽप्युत्सर्गप्रवृत्तेरिति केचित्। केचित्तु 'उभयत्राऽपि दीर्घोच्चारणं प्रक्रियालाघवाऽर्थमि'त्याहुः । शाशय्यते[2] इति । 'यि क्ङिती'त्यस्य विषयसप्तमीत्वात्, अन्तरङ्गत्वेन अयङि, द्वित्वम् ।

इति यङन्तप्रक्रिया ।

## अथ यङ्लुगन्तप्रक्रिया ।

यङोऽचि । व्याख्यानात्[3] अच् प्रत्यय एव । चेन 'बहुलमि'त्यपकृष्यते । अत एव 'योयूयः' 'रोरूय' इतिभाष्योदाहृतं सङ्गच्छते । यद्यपि 'च्छन्दसी'-त्यनुवृत्तिर्भाष्यादितो लभ्यते, तथापि 'हुश्नु'ग्रहणाल्लिङ्गाल्लोकेऽपि भाष्यकृता

१ इतोऽग्रे 'घटी भवतीत्यादौ दीर्घे कृतेऽपीत्त्वप्रवृत्तेः सत्त्वेन, 'खट्वी भवती'त्यादौ फलाऽभावाद्दीर्घोऽप्रवृत्त्या ईत्त्वस्य सावकाशत्वेन, 'तनू करोती'त्यादौ दीर्घस्य सावकाशत्वेन, परत्वादीत्त्वप्रवृत्त्या, सकृद्गताविति न्यायेन दीर्घोऽप्रवृत्त्याऽनिष्टं स्पष्टमेवेति चेन्न । पुनःप्रसङ्गमाश्रित्य दीर्घसम्भवात् । यद्यपि पर्जन्यवत्-लक्षणप्रवृत्त्या निरवकाशत्वेनाऽपवादत्वमीत्त्वस्य, अष्टावसरत्वाच्च तत्र ईत्त्वे कृते, दीर्घोऽप्रवृत्तिस्तथापि क्वचिदपवादे कृतेऽप्युत्सर्गप्रवृत्तेर्न दोषः । अपि च 'ई घ्राध्मोरि'त्यत्र विधेयस्य पूर्वमुपादानेन प्राबल्यबोधनात्पूर्वं प्रवृत्तिरित्याहुः । केचित्तूभयत्रापि' इति ग. पाठः ।

२ 'शाशय्यते इति । परत्वान्नित्यत्वादन्तरङ्गत्वाच्च अयङि कृते द्वित्वम् । न च द्वित्वमपि नित्यम् । शब्दाऽन्तरप्राप्तत्वात् । न चाऽयङपि तथा । 'द्विः-प्रयोगो द्विर्वचनमि'ति सिद्धान्तेन शब्दान्तरत्वाऽभावादित्याहुः । ततो गुण इति । अभ्यासविकारे बाध्यबाधकभावाऽभावादिति भावः' ख.ग.ङ. पाठः ।

३ 'यङ्साहचर्यात् अच् प्रत्यय एव' इति ख. ग. ङ. पाठः ।

क्वचिदभ्युपगमेन, तन्नाऽऽदृतम् ।

केचित्तु 'दाधर्त्ती'ति सूत्रे 'बोभूतु' इति निपातनमपि यङ्लुको भाषाविषयत्वे प्रमाणम् । तद्धि यङ्लुगन्तभूधातोश्छन्दसि लोट्येव गुणाऽभावो, नाऽन्यत्रे'त्येतदर्थमिति स्पष्टं भाष्ये। तत्र सङ्कोचे मानाऽभावेन यङ्लुकि च्छन्दसि लडादाविव, भाषायां लोट्यपि गुणो बोध्यते । न च 'काऽन्यत्र माभूत् ?। 'बोभवती'ति लेटि भाष्ये उदाहरणात्, छन्दो-[2]विषयक एव नियमः स्यादिति वाच्यम् । तस्योपलक्षणत्वादित्याहुः ।

अनैमित्तिकोऽयमिति । 'बहुल'ग्रहणलभ्य इत्यर्थः । अन्तरङ्गत्वादिति । 'लुक्त्वाच्चे'त्यपि बोध्यम् । यङन्तत्वादिति । 'सन्यङोरि'त्यस्य षष्ठी-त्वादिति भावः[3] । ननु 'एकाच' इति विधीयमानं द्वित्वं 'श्तिपा शपे'ति-निषेधात् यङ्लुकि न स्यादिति चेन्न[4] । तस्याऽनित्यत्वात् । अत एव यङ्लुकि भपभावसिद्धिः । अत एव 'गुणो यङ्लुकोरि'त्यादि चरितार्थम्[5] । वस्तुतः

१ इतोऽग्रे — यद्यपि वार्त्तिककृता 'हुश्नु'ग्रहणं प्रत्याख्यातं, [1]तथापि तत्पूर्वपक्ष-मात्राऽभिप्रायम् । ऋषिद्वयमताऽविरोधे संभवति, विरोधस्याऽन्याय्यत्वात् । अत एव 'यथोत्तरं मुनीनां प्रामाण्यमि'त्यभियुक्ताः । किञ्च दाधर्त्तीति सूत्रे' इति ख. ग. ङ. पाठः ।

२ 'च्छन्दसि लडादिविषयक एव नियमः स्यात्' इति ग. पाठः ।

३ इतोऽग्रे—'अत एव 'गुणो यङ्लुकोरि'त्यत्र 'यङ्'ग्रहणं चरितार्थम्' इति ग. पाठः ।

४ इतोऽग्रे — 'औपदेशिकैकाच्त्वेन प्राप्तेण्निषेधस्य वृग्रहणसामर्थ्येन क्वचि-त्कल्प्यमानाऽप्राप्तिकस्यैव तेन यङ्लुकि अप्राप्तिबोधनात्' इति ग. पाठः ।

५ इतोऽग्रे—'श्तिपा साहचर्यादेकाच्पदेन सामानाधिकरण्येन यत्र धातुमात्र-निर्देशो, न तु तदवयवनिर्देशोऽपीत्यन्ये' इति ग. पाठः ।

1 'तथापि 'भाष्यकृतोक्तेऽर्थे तस्य ज्ञापकत्वमाश्रितम् । यथोत्तरं च मुनीनां प्रामाण्यमित्यभियुक्ताः' इति ख. ङ. पाठः ।

स नास्त्येवेति प्राक् निरूपितम् । धातुत्वादिति । यङन्ते प्रवृत्ताया एकदेशविकृतन्यायेन सुलभत्वम् । 'चर्करीतमि'त्यदादौ पाठात् भ्वादित्वेन भूवादिसूत्रेण सा । ङित्त्वस्येति । न चाऽनुबन्धनिर्देशादेव 'अनुदात्तङित' इत्यस्याऽप्रवृत्तिरिति वाच्यम् । 'क्ङिति च' 'अनिदितां हल' इत्यादेर्यङ्लुकि प्रवृत्त्यर्थं प्रत्यासत्त्या (श्तिबादिसाहचर्याच्च, यत्र) यदीयाऽनुबन्धनिर्देशः, तत्प्रकृतिकयङ्लुगन्ते तस्याऽप्रवृत्तिरि'त्यर्थस्यैवाऽङ्गीकारात् । तदेतत् ध्वनयन्वक्ष्यति—येऽपि स्पर्धशीङादय इति । यत्र हीवि । अत्र यद्वक्तव्यं तत्प्रत्ययलक्षणसूत्रे एवोक्तम् । ननु[2] 'प्रत्ययलक्षणस्य विध्यर्थत्वमि'ति वार्त्तिकपक्षे दोषः । तत्पक्षे हि यत्र प्रत्ययस्य विशेष्यत्वं तत्र विधिप्रवृत्तिः । अस्ति च इमादिविधौ प्रत्ययस्य विशेष्यत्वम् । 'ङित' इत्यत्राऽपि बहुव्रीहि-

१ इतोऽग्रे—'केचित्तु[1] क्विबन्तेष्विव प्रत्ययोत्पत्तेः प्राक् प्रवृत्तधातुसंज्ञाया निरपवादत्वेन अवस्थितत्या, न दोष इत्याहुः । कार्यकालपक्षेपि प्रत्ययलक्षणवशात्सनाद्यन्तसूत्रेण सा । यत्तु भूवादिसूत्रेणेति । तन्न । गणकार्यत्वात्' इति ख. ङ. पाठः ।

२ 'ननु प्रत्ययलक्षणस्य विध्यर्थताया अपि सत्त्वेन दोषः । न च तत्पक्षेऽपि 'स्थानिवदि'त्यनुवृत्त्यैव सिद्धे, प्रत्ययलक्षणग्रहणसामर्थ्यात् यत्र प्रत्ययस्य विशेष्यत्वं, 'ङित' इति च साधारणं रूपं यत्राऽऽश्रीयते, तत्र विधिप्रवृत्तेर्न दोष इति वाच्यम् । तेन 'प्रत्ययस्य विशेष्यत्वे प्रत्ययलक्षणमि'त्येव कल्पनात् । अस्ति चेमादिविधौ' इति ग. पाठः ।

1 'यद्वा क्विबन्तेष्विव प्रत्ययोत्पत्तेः प्राक् प्रवृत्तधातुसंज्ञाया निरपवादत्वेन सुलभत्वम् । कार्यकालपक्षेऽपि भूवादिसूत्रेण, प्रत्ययलक्षणवशात्सनाद्यन्तसूत्रेण वा प्रवृत्तिरिति भावः । न च गणकार्यत्वाद्भूवादिसूत्राऽप्रवृत्तिः । श्तिपादिसाहचर्येण, तत्सामर्थ्येन च धातुसञ्ज्ञाभिन्नगणकार्यस्यैव निषेधात् ।

नचैवमपि यङ्लुगन्तस्य गणे पाठाऽभावात्कथं धातुत्वम् । 'चर्करीतं चे'त्यदादौ पाठात् । अत एवाऽदादित्वप्रयुक्तः शपो लुक् । ङित्त्वस्येति' इति ग. पाठः ।

सत्त्वेन प्रकृतोदाहरणसंस्कारके, प्रत्ययस्यैव अन्यपदार्थत्वेन विशेष्यत्वात्, दोषः।

किञ्चाऽनुबन्धकार्ये 'अनल्विधावि'त्यप्रवृत्तेः स्थानिवत्त्वेन स्यादेव आत्मनेपदप्रवृत्तिरिति चेन्न। 'तेतिक्ते' इति निपातनेन 'अत्रैव यङ्लुगन्तस्य[1] आत्मनेपदं, नाऽन्यत्रे'ति नियमान्न दोष इति भाष्ये स्पष्टम्।

अनुबन्धनिर्देशादिति। एवञ्च सत्यभिधाने 'भावकर्मणोः' 'नेर्विश' इत्याद्यात्मनेपदं यङ्लुगन्ताद्भवत्येव। भाष्योक्तनियमोऽपि सजातीयाऽपेक्ष एव। 'प्रत्ययलक्षणसूत्रं नियमाऽर्थमि'तिपक्षैकवाक्यत्वादित्याहुः।

तत्र[2] च श्तिपेति। तदभावे तु 'तेतिक्ते' इति निपातनादेव तदभावः। 'तिजेरनुदात्तेत्त्वात् 'अनुदात्तङित' इत्यात्मनेपदं सिद्धमि'त्याशङ्क्य, 'नियमाऽर्थं भविष्यति–'अत्रैव यङ्लुगन्तस्याऽऽत्मनेपदमि'ति भाष्योक्तेः। श्यनादयोऽपि न। विशिष्याऽदादौ पाठेन तत्र गणान्तरप्रयुक्तस्याऽप्राप्तेरिति बोध्यम्। अत एव 'अजर्घा' 'बेभिदीती'ति भाष्यप्रयोगः सङ्गच्छते।

यङन्तादिति। लुक्यपि, प्रत्ययलक्षणेन यङन्तात्परत्वम्[3]।

छन्दसि निपातनादिति। तद्धि यङ्लुगन्तभूधातोश्छन्दसि लोट्येव गुणाऽभावो, नाऽन्यत्रेति स्पष्टं भाष्ये। तत्र सङ्कोचे मानाऽभावेन 'छन्दस्येव, तत्राऽपि लोट्येवे'ति नियमाऽङ्गीकारादिति भावः[4]। न च 'क्वाऽन्यत्र

---

१ 'यङ्लुगन्तस्य' इति क. नास्ति।

२ 'शपो लुगिति। इदं च विशिष्याऽविहितविकरणविषये। अत एव 'श्नवः श्न चे'त्यादि यङ्लुगन्ते भवत्येवे'ति केचित्। यङन्तादिति' इति ग. पाठः।

३ 'यङन्तात्परत्वं बोध्यम्' इति ख. ङ. पाठः।

४ इतोऽग्रे—'केचित्तु 'लोट्येवे'तिनियमस्य भाष्यप्रामाण्यादावश्यकत्वेऽपि, 'छन्दस्येवे'ति द्वितीयनियमे मानाऽभावः। तस्माद्यङ्लुकि सर्वत्र गुणनिषेधो भवत्येवेत्याहुः। न चेति' इति ग. पाठः।

मा भूत् ? । 'बोभवती'ति लेटि भाष्ये उदाहरणाच्छन्दोविषय एव नियम इति वाच्यम् । तस्योपलक्षणत्वात् । 'भूसुवोरि'ति सूत्रे हि 'एकाज्ग्रहणं कार्यमि'ति वार्त्तिकम् । तत्पक्षे भाषायां यङ्लुकि सर्वत्र गुण एव लभ्यते इति, तदेकफलत्वात्तत्प्रत्याख्यानप्रकारेऽपि द्विविधो नियम एवोचितः । अत एव भाष्ये वार्त्तिकाऽऽरम्भे 'अभूदि'त्यसिद्धिवत्, भाषायां यङ्लुकि गुणाऽऽपत्तिर्दोषत्वेन नोद्भाविते ति दिक् ।

**न चेति** । तस्य भूत्वाऽभावादिति भावः ।

**सिद्धान्तादिति** । तेन[1] सिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेन, 'प्रकृतिग्रहणे' इति न्यायसिद्धमिति भावः ।

**परे तु** 'तेन सिद्धान्तेन प्रत्येकं द्वयोरपि तत्त्वमिति लभ्यते, न समुदायस्येति । अन्यथा इच्छया 'पच् पचिति' द्विःप्रयोगेऽपि विशिष्टस्य धातुत्वाऽऽपत्तौ, 'अपच्पचदि'त्यादेरपि साधुत्वाऽऽपत्तिः । युक्तेस्तुल्यत्वात् । अत एव 'दयतेर्दिगी'तिसूत्रे 'द्वित्वे कृते परस्याऽस्तेर्भूभावे, पूर्वस्य श्रवणं प्राप्नोती'त्याशङ्क्य विषयसप्तम्याश्रयणेन परिहृतं भाष्ये । अन्यथा त्वदुक्तरीत्या समुदायस्यैवाऽऽदेशाऽऽपत्तिरेकाज्द्विर्वचनन्यायेनेति, तदसङ्गतिः स्पष्टैव[2] । तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिरित्येव मूलार्थः । 'भूसुवोरि'त्यस्य तु तदन्ताऽङ्गस्येत्यर्थात्प्राप्तस्य नियम इति बोध्यम् । एवञ्च हन्तेर्यङ्लुगन्ताल्लिङि 'वध्यादि'ति रूपमिति माधवोक्तमसङ्गतमित्याहुः ।

---

१ 'तेन हि सिद्धान्तेन 'प्रकृतिग्रहणे द्वित्वसहितस्य ग्रहणमि'त्यर्थो बोध्यते । अत एव 'निजां त्रयाणाम्' 'न कवतेरि'त्यादीनामुक्तिसंभवः । एवञ्च तेनैव न्यायेनेदमपि सिद्धमिति भावः' इति ग. पाठः ।

२ इतोऽग्रे—'तस्मात् 'शीङः सार्वधातुके' 'दीङो युडची'त्यादिनिर्देशानाम्, 'भरज्ञपी'त्यादिश्तिपानिर्देशानाम्, श्तिपानिर्देशानां च प्रकृतिग्रहणे यङ्लुगन्तग्रहणज्ञापकतोचिता । 'बोभूत्वि'ति निपातनन्तु न ज्ञापकम् । अप्राप्तगुणाऽभावनिपातनेन चारितार्थ्यादित्याहुः' इति ख. ग. ङ. पाठः ।

**सिचो लुगिति**। श्तिबादिसाहचर्येण धातोरनुबन्धनिर्देशे एव निषेध इति भावः। **नित्यत्वाद्गुगिति**। अत एव वुको नित्यत्वमाश्रित्य 'इन्धिभवतिभ्यामि'ति प्रत्याख्यातम्। अभ्यस्ताश्रय इति। 'सिचः परस्य चेत् जुस्, तर्हि आत एवे'त्येवंरूप 'आत' इति नियमस्तु नियमस्वारस्येन, प्रत्यासत्त्या च, सिचः परत्वमाश्रित्य यो जुस् प्राप्तस्तन्मात्रपर इति भावः।

न²चैवं पञ्चमीसमासखण्डनाऽवसरे 'अपीपचन्नि'त्यत्र जुस्वारणाय 'परविदिसाहचर्येणाऽभ्यस्तादपि लङ एव झेर्जुस्, न लुङी'ति **मनोरमादा**वुक्तम्, एवञ्च कथमत्र जुसिति वाच्यम्। पूर्वोत्तरसाहचर्येण अनादिष्टझेरेव ग्रहणेन, 'अपीपचन्नि'त्यादिसिद्धौ, परसाहचर्यमात्राऽऽश्रयणेन तादृशाऽर्थाऽऽश्रयणे मानाऽभावात्। तावताऽपि 'अपीपचन्नि'त्यादिवारणं शक्यमित्यभिप्रायेण तु तत्र त³दुक्तम्।

न च तद्वदेवाऽत्राऽपि पूर्वम् अन्तादेशे, 'झेर्जुसि'त्यत्र इकारस्योच्चारणाऽर्थत्वेन 'झ'मात्रस्य स्थानित्वे, अल्विधित्वादन्तेर्झत्वा⁴ऽभावेन, कथं जुसिति वाच्यम्। अ⁵न्ताऽऽदेशप्रवृत्तिकाले एवाऽभ्यस्तत्वसत्त्वेन जुसा बाधात्। तत्र तु अन्तौ कृते, चङि च कृते, अभ्यस्तत्वमिति विशेषादित्याहुः।

**अन्ये तु** 'आत' इति नियमस्य लाघवात् सामान्याऽपेक्षत्वमाश्रित्य जुस् वार्यते, तदा 'अदभ्यस्तादि'त्यस्तु, 'अबोभूवदि'ति। 'अबोभूवन्नि'ति तु चिन्त्यमेवे'त्याहुः। तन्न। 'आतश्चे'ति सूत्रस्थभाष्यविरोधात्। ध्वनितं चेदम् 'अस्तु नामे'ति वक्रोक्त्या मनोरमायाम्।

---

१ 'वधात्' इति क. पाठः। लेखकप्रमादात्।

२ 'न चैवम्' इत्यारभ्य 'मनोरमायाम्' इत्यन्तः ख. ग. ङ. पाठः। क. कुण्डलितः। मनोरमादिस्थत्वात्।

३ इतोऽग्रे—'वस्तुतस्तदयुक्तमेव। पूर्वसाहचर्यस्याऽन्तरङ्गत्वादिति तत्रैव निरूपितम्' इति क. पाठः। ४ 'अन्ते अत्वाऽभावेन' इति ख. पाठः।

५ 'अन्तादेश' इति क. नास्ति।

नित्यत्वाद्वुगिति । 'जुसि चे'ति गुणाऽपेक्षयेत्यर्थः । अपास्पा इति । न च दीर्घे रुत्वमसिद्धम् । 'ढ्रलोप'सूत्रे दत्तोत्तरत्वात् । मोमुदीतीति । 'नाऽभ्यस्तस्याऽचो'ति निषेधान्न गुणः । मोमोदितेति । 'न धातुलोप' इति गुणनिषेधस्तु न । अत्र यङ्लुकोऽनैमित्तिकत्वात् ।

वनीवञ्चीतीति । न च 'नीग्वञ्चु' इत्यनुबन्धनिर्देशेन यङ्लुकि नीक् दुर्लभ इति वाच्यम् । अत्राऽपि 'यङ्लुकोरि'त्यनुवृत्तिसामर्थ्येन प्रवृत्तेः । अत एव 'यङोऽचि चे'ति सूत्रे 'सनीस्रंसः' 'दनीध्वंस' इति भाष्यप्रयोगः सङ्गच्छते । नलोपस्तु न । यङो लुका लुप्तत्वात् ।

वनीवक्त इति । तसो ङित्त्वान्नलोपः ।

न्यासकार इति । 'राजा वृत्रं जङ्गनदि'ति प्रयोगस्तस्य बीजम् । परिभाषायां 'निर्दिष्ट'पदेन यत्र सूत्रे श्तिबन्तोच्चारणं, त[1]स्यैवाऽनित्यत्वं स्यात्, न श्तिबादिनिबन्धनस्येति भावः । त[2]परत्वान्न गुण इ[3]ति । न च तपरत्वेन वारणे 'हलि चे'ति दीर्घोऽपि न स्यात् । न च तस्य त्रिपादीस्थत्वेन, बहिर्भूतहलिनिमित्तकत्वेन च, असिद्धत्वान्न तपरव्यावर्त्यत्वम् । बहिरङ्गत्वेन गु[4]णस्याऽप्यसिद्धत्वादिति वाच्यम् । अष्टाध्यायीस्थशास्त्रबाधाऽपेक्षया आनुमानिकबहिरङ्गाऽसिद्धत्वबाधेन तपरत्वचारितार्थ्यं संभवति.

१ 'तस्यैव निषेधो, यत्र त्वनुवृत्तिस्तद्भवत्येवेत्यन्ये' इति ख. ङ. पाठः ।

२ एतत्स्थाने—'असिद्धत्वेनेति । त्रिपादीस्थत्वेन, बहिर्भूतहल्निमित्तकत्वेन चेति भावः । न च बहिरङ्गत्वेन गुणस्यापि असिद्धत्वमिति वाच्यम् । अष्टाध्यायीस्थशास्त्रबाधाऽपेक्षया' इति रीत्या क. पाठः ।

३ इतोऽग्रे—'इदं च वृत्त्यनुरोधेन । वस्तुतो यदि गुणो नेष्यते तर्हि 'अङ्गवृत्त'-परिभाषया वारणीयः । तपरत्वेन वारणे तु 'हलि चे'ति दीर्घोपि न स्यात् । न च तस्य' इति ग. पाठः ।

४ 'गुणस्याऽप्यसिद्धत्वात् । 'अत' इति तपरत्ववत्, अस्यापि सत्त्वाच्चेत्याहुः । अन्ये त्वष्टाध्यायीस्थशास्त्रबाधाऽपेक्षया' इति ग. पाठः ।

तद्बाधे मानाऽभाव[1] इत्याशयात् । एवं 'पोपूर्यते' इत्यत्र 'उदोष्ठ्ये'त्युत्त्वेऽपि अभ्यासगुणो भवत्येव । विप्रतिषेधसूत्रे 'पोपूर्यते' इति भाष्योदाहरणादिति बोध्यम् । असिद्धत्वेनेति । त्रिपादीस्थत्वेन, बहिर्भूतहल्निमित्तकत्वेन चेति भावः ।

चञ्चूर्तीति । 'चरफलोरि'ति नुक् । 'हलि चे'ति दीर्घः । अचञ्चूरिति । 'र्वोरुपधाया' इति दीर्घः । ( चञ्चात[2] इति । यत्तु 'धातुग्रहणेन उक्तं यङ्लुकि वे'त्युक्त्वा 'चञ्चुन्त' इत्यप्युक्तं, तन्निर्मूलम् ) ।

हाङ्-हाकोस्तन्त्रेण रूपाण्याह—जाहेतीति । श्तिपा निर्देशादिति[3] । एतन्माधवाऽनुसारेण । ननु 'अकित' इति निषेधाद्दीर्घो दुर्लभः । न च

---

१ 'मानाऽभावः । किञ्च गुणे उत्त्वजात्यनुवृत्त्यभावेन, दीर्घे तदनुवृत्तिसत्त्वेन, दीर्घेण सह नाऽत्यन्तविरोध इत्याहुः । यत्तु 'चरधातोर्णिजन्तात्कर्त्तरि क्विपि, आचारक्विपि, यङ्लुकि, एकदेशविकृतन्यायेन 'चर'ग्रहणेन ग्रहणेऽपि, 'हत्परस्ये'त्युत्त्वं न । 'अत' इति तपरकरणादि'ति । तन्न । धातुविशेषमुच्चार्य विहितस्य आचारक्विप्यप्रवृत्तेः । अतएव 'घुषिरविशब्दने' इति णिचः पाक्षिकत्वे लिङ्गमि'ति भाष्यं सङ्गच्छते । अन्यथा चुरादिण्यन्तात् घुषेः कर्त्तरि क्विपि, तत आचारक्विपि, 'अविशब्दने' इति चारितार्थ्यं स्पष्टमेव । किञ्च असिद्धवत्सूत्रे आचारक्विबन्तायङ्लुगभावस्य ध्वनितत्वात् । अपि च हलन्तेभ्य आचारक्विप एवाऽभाव इत्याहुः । एवं 'पोपूर्यते' इत्यत्र 'उदोष्ठ्ये'त्युत्त्वेऽपि, तपरत्वसामर्थ्यान्न गुणः । अभ्यासगुणस्तु भवत्येव, विप्रतिषेधसूत्रे' इति ग.ङ.पाठः ।

२ अयं ख. ङ. पाठः ।

३ इतोऽग्रे—'अर्थबोधकत्वमिव कित्त्वमपि समुदायस्योत्तरखण्डस्यैवेत्यदोषात् । नन्वर्थवत्त्वस्य दोषभिया समुदाये, उत्तरखण्डे एवाऽङ्गीकारेऽपि वा, कित्त्वस्य तत्रैव सत्त्वे मानाऽभाव इति चेत् । एवमपि न दोषः' इति ख. ङ. पाठः ।

'अकित' इति न धातोर्विशेषणम् । 'वनीवञ्चीती'त्यसिद्ध्यापत्तेः । किन्तु अभ्यासस्य, एवं च दीर्घः सुलभ इति वाच्यम् । द्विर्वचनस्य द्विःप्रयोगत्वेन धातोः कित्त्वे, अभ्यासस्याऽपि कित्त्वादिति चेन्न । 'अकित' इत्यत्र

१ 'इति चेन्न । द्वित्वाऽभावे केवलस्याऽर्थवत्त्वेऽपि, द्वित्वे सति केवलादर्थ-प्रतीत्यभावेन, 'द्वावि'त्यादाविव समुदाये एवाऽर्थवत्त्वम् । अत एव बोधाऽऽवृत्तिर्न । बोधकतापर्याप्तेः समुदाये एव स्वीकारात् । बोधकतापर्याप्त्यधि-करणत्वमादायैव चाऽङ्गत्वं समुदाये सिध्यति । 'सुविनिर्दुर्भ्यं' इत्यत्र भाष्य-कैयटयोः स्फुटमेतत्-'समुदायस्यैवाऽर्थवत्त्वमि'ति । अत एव अडादिव्यवस्था सिध्यति । अत एव 'नाऽनर्थकेऽलोन्त्यविधिरि'त्यस्य 'अनभ्यासविकारे' इति वाक्यशेषः सङ्गच्छते । न चैवम् 'आटिटदि'त्यादौ णित्वादिप्रयुक्तलोपादि न सिध्यति, ण्यन्तत्वादिप्रयुक्तधातुत्वं च न स्यादिति वाच्यम् । 'अनभ्यास-विकारे' इति वाक्यशेषेणाऽभ्यासनैरर्थक्येनैव बोधाऽऽवृत्त्यभावोपपत्तौ, उत्तरखण्डस्य, तदवयवस्य चाऽनर्थकत्वे मानाऽभावात् । प्रादिवदुत्तर-खण्डेनाऽर्थे बोधनीयेऽभ्यासस्य सहकारित्वं त्वस्त्येवमिति तावदेवाऽर्थ-बोधाऽनुभवात् । एवमभ्यासस्य नैरर्थक्येऽपि तदवयवस्य सम्भव्यर्थस्य अर्थत्वमेवेत्याहुः । ध्वनितं चेदं 'दयतेर्दिगी'तिसूत्रे भाष्ये । तत्र हि 'द्विः-प्रयोगपक्षे अस्तेर्द्विर्वचने कृते, परस्य भूभावे कृते, पूर्वस्य श्रवणं प्राप्नोती'-त्याशङ्क्य 'आर्द्धधातुके' इत्यस्य विषयसप्तमीत्वेन समाहितम् । एवञ्चार्थ-बोधकत्वमिव, कित्त्वमपि समुदायस्य, उत्तरखण्डस्यैव चेति न दोषः ।

नन्वर्थवत्त्वस्य दोषभिया समुदाये, उत्तरखण्डे एव वाऽङ्गीकारेऽपि, कित्त्वस्य तत्रैव सत्त्वे मानाऽभाव इति चेत् । एवमपि न दोषः । 'अकित' इत्यत्र 'न विद्यते किद्यस्मिन्नि'ति बहुव्रीहिगर्भबहुव्रीह्याश्रयणात् । तत्राऽनन्तरस्येति न्यायेन, प्रतिपदोक्तपरिभाषया चाऽभ्यासनिमित्तकित एव ग्रहणम् । अत एव 'चाच्छायते' इत्यादौ तुकि माधवाद्युदाहृतो दीर्घः सङ्गच्छते । हाकः कित्त्वस्य चारितार्थ्यन्तु 'वनो र च'त्यत्र व्युत्पादितम्' इति ग. पाठः ।

'न विद्यते कित् यस्मिन्नि'ति बहुव्रीहिगर्भबहुव्रीह्याश्रयणात्। तत्सामर्थ्याच्च व्यपदेशिवद्भावाऽनाश्रयणम्। ह्याकः कित्त्वस्य चारितार्थ्यन्तु 'वनो र चे'-त्यत्र व्युत्पादितम्।

पञ्चाऽपीति। पूर्वोक्तमताऽन्तरे तु द्वयोरेवाऽभाव इति बोध्यम्।

लुका लुप्ते इति। न च 'स्वपिस्यमी'ति सूत्रे 'व्येञ्यामि'त्यनुबन्ध-निर्देशो व्यर्थः। 'व्यामि'त्युक्तौ 'वी'धातोरपि ग्रहणशङ्का स्यादिति, तद्व्यावृत्त्यर्थत्वात्।

रिक् रीगिति। चकारेण 'रीगृदुपधस्ये'त्यतो रीगनुवर्त्तते इति भावः।

अवर्वेर्दिति। अत्र यद्वक्तव्यं तत् हल्ङ्यादिसूत्रे एवोक्तम्। चर्करीतीति। न च गुणे ऋकाराऽन्तत्वस्य विनाशोन्मुखतया रीगादिकं न स्यादिति वाच्यम्। 'अचः परस्मिन्नि'ति स्थानिवत्त्वात्तत्प्रवृत्तेः।[1]

चाकर्त्तीति। नन्वत्र यङं निमित्तीकृत्य अन्तरङ्गत्वाद्गुणं बाधित्वा, 'ऋत' इतीत्त्वं प्राप्नोति, 'उरदि'त्यादिवदिति चेन्न। यङो लुका लुप्तत्वात्। उरदत्त्वे तु 'अजर्घा' इति भाष्योदाहरणेन 'न लुमते'ति निषेधाऽप्रवृत्ति-रि'त्युक्तम्। अत एव 'तपरकरणे किं प्रयोजनम्?। 'चाकर्त्ति' 'चाकीर्त्त' इति प्रकृतसूत्रस्थं भाष्यं सङ्गच्छते। एतेन 'रीग्विधायके 'रीगृत्वत्संयोगा-ऽर्थमि'ति वचनेन ऋदुपधग्रहणं प्रत्याख्यायते, 'कास्प्रत्ययादि'त्यत्राऽनेका-ज्ग्रहणेन प्रत्ययग्रहणवत्। तदेव च 'रुग्रिकौ चे'त्यत्राऽनुवर्त्तते। एवञ्च 'ऋतश्चे'ति सूत्रं न कार्यमिति लाघवम्। एवञ्च 'कृ'प्रभृतीनामभ्यास-ह्रस्वत्वे, ऋत्वत्ताऽनपायेन, रीगादिकं दुर्वारमि'ति परास्तम्। ऋदुपध-ग्रहणादेः प्रत्याख्याने मानाऽभावात्। अत एव 'तन्न कर्त्तव्यमि'ति भाष्ये नोपसंहृतम्। उत्तराऽर्थमावश्यकत्वात्। अत एव च तृक्ष-मृक्षादौ न रुक्।[2]

---

१ इतोऽग्रे—'गुणप्राप्तिसम्भावनया ऋकाररूपनिमित्तविनाशसम्भावनायाः सत्त्वात् 'अकृतव्यूह'परिभाषया तदप्राप्तेः' इति ग. पाठः।

२ 'न रुगित्याहुः। अन्ये त्वभ्यासऋकारमादाय' इति ग. पाठः।

किञ्चाऽभ्यासऋकारमादाय ऋकारवत्ता वक्तुमशक्या। 'ऋत्वत' इति तपरत्वस्य वैयर्थ्याऽऽपत्तेः। 'उरदि'त्यस्य प्रवृत्त्या तदभावाच्च। स्थानिवत्त्वन्तु न। अपूर्वविधित्वादित्याहुः।

आरतीति। 'ढ्लोपे' इति दीर्घः। न च दीर्घे यणः स्थानिवत्त्वम्। 'अभ्यासकार्ये तदनवयवधात्ववयवाऽऽदेशस्य तत्प्रतिबन्धकस्थानिवत्त्वं ने'त्यर्थस्य 'अभ्यासस्याऽसवर्णे' इति 'असवर्ण'ग्रहणेन ज्ञापिततया अक्षतेः। दीर्घविधौ तन्निषेधाच्च। किञ्च उत्तरपदाऽधिकारस्य विच्छिन्नत्वात्, 'ऋ'साहचर्याच्च पूर्वमात्रस्य सिद्धे, तत्साहचर्यादेवाऽसिद्धत्वबाधेन 'अजर्घा' इत्यादिसिद्धौ च सत्यां, पूर्वग्रहणस्य श्रुतिमात्रेण रेफात्पूर्वस्य दीर्घोऽर्थतया न दोष इत्याहुः।

अरियृतीति। यणादेशस्य स्थानिवद्भावात् इयङ्। तस्य बहिरङ्गतयाऽसिद्धत्वाद्ढलि लोपो न। 'अचः परस्मिन्नि'ति स्थानिवत्त्वाच्च। निषेधस्तु लोपरूपाऽजादेशस्यैवेति, न दोषः। लिङि रिग्रीकोः 'अरियरियादि'ति बोध्यम्।

एकाच इत्यनुवृत्तेरिति। अपरे तु 'यङन्ते 'ग्रहोऽलिटी'ति दीर्घम् आशङ्क्य 'एकाचो द्वे' इति सूत्रे 'ग्रहेरङ्गादि'ति भाष्ये उक्तम्। 'एकदेशविकृत'न्यायेनाऽपि तृचो 'जरीगृह्' इत्यङ्गं, न तु 'ग्रहिरि'ति तदाशयः कैयटेनोक्तः। नन्वेकमेव द्विरुच्यते इति एकस्माद्यः प्रत्ययः सोऽपरस्मादपीति, द्वे अङ्गे। एवञ्च उत्तरस्याऽप्यङ्गत्वाद्ढलोपयलोपयोः कृतयोः, एकदेशविकृतन्यायेन उत्तरं 'ग्रह्' इत्यप्यङ्गमेवेति, ततः परत्वाद्दीर्घः स्यादिति चेन्न।

---

१ इतोऽग्रे—'तातर्तीति। 'नाऽवतरीतर्त्तो'ति तु 'उतृदिर् हिंसाऽनादरयोरि'त्यस्य बोध्यम्। धातूनामनेकार्थत्वान्नाऽर्थाऽसङ्गतिः' इति ख.ग.ङ. पाठः।

२ 'किञ्च' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. क. ङ. पाठः। क. कुण्डलितः।

३ 'जरिगृह्' इति ख. पाठः। ४ 'तद्भावः' इति ग. पाठः।

५ 'दीर्घः स्यादिति शङ्कायां द्विःप्रयोगे पूर्वभागस्यापि ग्रहित्वेन, तस्याऽपि

पूर्वभागेऽपि ग्रहित्वेन तदादिग्रहणात्, 'समुदाये वाक्यपरिसमाप्ति'-न्यायेन समुदायस्यैवाऽङ्गत्वमिति भाष्ये एव समाधानादिति निरूपितं तनादिशेषे। ननु द्विःप्रयोगत्वाज्जरीगृहिग्रहिरेव। 'एकदेशविकृत'न्यायेन चाऽङ्गत्वमपीति, दोषः स्यादेवेत्याशङ्कय कैयटेनोक्तं–'विशेषणसामर्थ्याद्धि यथाश्रुतरूपाऽऽश्रयणमि'ति। 'अङ्गस्ये'त्यस्य 'अङ्गनिमित्ताऽऽर्द्धधातुकस्ये'-त्येवंप्रकारेण षष्ठ्यन्ततया व्याख्यानसम्भवेऽपि, ग्रहेरत्र विषये अङ्गत्वा-ऽव्यभिचारेऽपि, पञ्चम्यन्ततया विपरिणमय्य, ग्रहिविशेषणसामर्थ्यादि'-त्यर्थः। यथाश्रुतरूपं च सूत्रे श्रूयमाणं 'ग्रह्'इति। तस्य हि 'सूत्रश्रुतानुपूर्वीक-ग्रहेरङ्गात्परस्येटो दीर्घ' इत्यर्थः कार्य इत्याशयो लभ्यते। स चाऽसङ्गतः। 'दयतेरि'ति सूत्रभाष्यात् द्विःप्रयोगत्वेऽपि, प्रत्येकमेव ग्रहित्वं लभ्यते, न समुदायस्य। किञ्चैवम् अङ्गसञ्ज्ञानिरपेक्षत्वेनाऽन्तरङ्गत्वात्संप्रसारणे,

द्वितीयेनाऽर्थबोधे जननीये सहकारितयोद्देश्यतावच्छेदकावच्छिन्नत्वेन, तदा-दिग्रहणात्समुदायस्यैवाऽङ्गत्वम्। समुदाये वाक्यपरिसमाप्तिन्यायात्।

यद्वा आगन्तूनामन्ते निवेशात्, द्वित्वशास्त्रस्य द्वितीयोच्चारणमेव विधेयम्। आद्यमुच्चारणन्तु प्रत्ययविधानकालिकमिति, तत एवाऽस्य विहितत्वबुद्धिर्न द्वितीयोच्चारणविषयादिति, आद्योच्चारणविषयादेरेवाऽङ्गत्वादिति भाष्ये द्वेधा समाहितम्' इति ग. पाठः।

१ 'ग्रहीति' इति ख. पाठः।

२ 'इत्याशयो लभ्यते। एवञ्च यङ्लुगन्ते दीर्घो भवत्येव। यङ्लुगुत्तरमेव द्वित्वे, ततः प्रत्ययोत्पत्त्या, ग्रहेर्विहितत्वाऽनपायात्। प्रकृतिग्रहणे यङ्-लुगन्तस्यापि ग्रहात्। हरदत्तोक्ता 'एकाच' इत्यनुवृत्तिस्तु असङ्गतैव। भाष्याऽनुक्तेः। मध्ये विच्छेदाच्च। 'यत्रैकाज्ग्रहणमि'त्यक्षरस्वारस्येन अनुवृत्त्यैकाच्पदकस्य तत्राऽप्रवृत्तिर्नेत्यस्य लाभ' इत्यन्ये। अत एव स्थाने द्विर्वचनेऽयं दोषोद्भावितो भगवतेत्याहुः' इति ख. ग. ङ. पाठः।

३ 'अङ्गसंज्ञानिरपेक्षत्वेन, पर्वकार्यत्वेन च' इति ग. पाठः।

'गृहीतमि'त्यस्याऽसिद्धिः । न च 'अङ्गसंज्ञाप्रवृत्तिकाले यथाश्रुतग्रहिरूपात् परस्ये'त्यर्थ इति, तत्सिद्धिः । कार्यकालपक्षे संप्रसारणोत्तरमिट्प्रवृत्तिकाले एवाऽङ्गत्वप्रवृत्त्या, तत्कालेऽपि यथाश्रुतरूपाऽभावात् ।

न च 'अङ्गत्वनिमित्तप्रत्ययोत्पत्तिकाले' इत्यर्थः । अक्षरमर्यादया एतदर्थाऽलाभात् । किञ्च प्रत्यासत्त्या 'अङ्गत्वनिमित्तेट्योग्यप्रत्ययोत्पत्तिकाले' इत्यर्थाऽऽपत्तौ, 'असिद्धवत्'सूत्रस्थभाष्यसंमतोपदेशाऽवस्थायाम् अडाटाविति पक्षे 'अग्रहीष्टामि'त्यादौ दीर्घाऽनापत्तेश्च । तस्माद्विहितविशेषणत्वे एवैतद्भाष्यकैयटतात्पर्यम् ।

एवञ्च अङ्गत्वतुल्यन्यायेन, यङन्तत्वमपि समुदायस्यैव । प्रत्ययग्रहणे यस्माद्विहितस्तदादितदन्तस्यैव ग्रहणात् । इदमेवाऽभिप्रेत्य 'ग्रहोऽलिटी'तिसूत्रे 'यङ्लोपे चोक्तमि'ति प्रतीकमुपादाय 'ग्रहेर्विहितस्ये'त्येवं विहितविशेषणाद्यङ्लोपे दीर्घाऽभावः । भाष्यकृता तु 'एकाचो द्वे' इति सूत्ररूपेऽन्यत्राऽस्य दोषस्य सम्यक्परिहाराऽभिधानात्, अनादरेण तद्वार्त्तिकं 'तदन्ते द्विर्वचनादि'ति विवृतमि'ति व्याख्यातं कैयटेन । अनेन हि ग्रन्थेन अत्रत्यं भाष्यं विहितविशेषणतात्पर्यकमिति स्पष्टं लभ्यते ।

अत एव 'ग्राहितमि'त्यादौ णिजन्ते न दीर्घः । एवं च यङ्लुगन्ते दीर्घो न भवत्येव । यङ्लुगुत्तरमेव द्वित्वेऽपि, यङन्तत्वप्रयुक्तस्य, अदादिपाठप्रयुक्तस्य वा धातुत्वस्य अङ्गत्ववत्, विशिष्टे एव सत्त्वम्, 'दयतेरि'तिसूत्रभाष्यरीत्या च तत्र न ग्रहित्वमिति, इडादेः प्रत्ययस्य ग्रहेर्विहितत्वाऽभावात् । एवञ्च हरदत्तोक्तैकाच इत्यनुवृत्तिर्निष्फला । मध्ये विच्छेदात् दुर्लभा चेत्याहुः ।

भाष्ये ध्वनितमिति । तथाहि तत्र 'क्ङिती'त्यनुवर्त्तते, न वे'त्युपक्रम्य, दोषानुद्भाव्य, परिहृत्य चोक्तम्—'एतावान् विशेषः, अनुवर्त्तमाने

---

१ इतोऽग्रे—'ननु चे'त्यादि भाष्यन्तु आशयाऽनभिज्ञस्येत्यादि सर्वेषां समम् । तदन्तद्विर्वचनात्' इति ग. पाठः ।

क्ङिद्ग्रहणे छः षत्वं वक्तव्यम् । तत्र च सतुक्ग्रहणं कर्त्तव्यम् । अननुवर्त्तमाने तु सतुक्छः शत्वे कृते, शान्तत्वादेव 'प्रष्टे'त्यत्र षत्वे सिद्धे, 'व्रश्चे'ति सूत्रे छग्रहणं न कार्यम् । न च 'प्राडि'त्यत्र सोर्लोपे[1], षत्वाऽर्थं 'छ'ग्रहणमावश्यकम्[2] । क्विप्निमित्तकशादेशस्य दुर्वारत्वात् । विचोऽसार्वत्रिकत्वाच्च । एवं हि वदता ऊठ्भाविभ्यो यङ्लुक् नास्तीत्यभिसंहितम् ।

अन्यथा दिवेर्यङ्लुकि 'देदेति' 'देदेषी'त्यादावूठो भावाऽभावाभ्यां महान्विशेषः स्यादिति, 'एतावानि'ति विरुध्येत ।

ननु 'वृक्षवभ्यामि'त्यादौ ऊठ्भावाऽभावाभ्यां विशेषस्य सत्त्वेन, भाष्यमसङ्गतमेव । न च णिलोप-टिलोपयोः स्थानिवत्त्वम् । 'न पदान्ते'तिनिषेधादिति चेन्न । भ्यामादौ तस्याऽप्यनभिधानात् ।

अन्ये तु 'एतद्भाष्यं पदकर्त्तव्यत्वाऽकर्त्तव्यत्वरूपविशेषमात्रपरम् । तदपि क्ङिद्ग्रहणाऽनुवृत्तौ ज्ञापकप्रदर्शनाय । न च 'द्युभ्यामि'त्यादावूठ्स्थाने आन्तर्यतो दीर्घवारणाय कृतं 'दिव उदि'ति तपरत्वम्, अननुवृत्तावपि ज्ञापकं भाष्ये उक्तमिति, तयोः समफलता सूचितेति वाच्यम् । भाव्यमानस्य सवर्णाऽग्राहकत्वेन, तस्य ज्ञापकस्य शिथिलत्वात् । इदमेव ध्वनयता भगवता तदग्रे क्ङिद्ग्रहणाऽनुवृत्तिपक्षे, गुरुतरेऽपि संभावितदोषान् परिहृत्य, उपरतम् । तेन चाऽनुवृत्तिपक्षस्यैवाऽऽदरः सूचितः । एवञ्च प्रागुक्तलक्ष्याणाम् अभावकल्पने न मानमित्याहुः ।

'लोपो व्योरि'तिसूत्रस्थवलोपप्रत्याख्यानपरभाष्यन्तु वान्तेभ्यो यङ्लुगभावे मानं बोध्यम् ।

जाहाम इति । लोण्मध्यमपुरुषे—'जाहहि' । संनिपातपरिभाषया 'अतो हेरि'ति न । यलोपस्य वल्निमित्तत्वात् । ननु आरम्भसामर्थ्यादत्र

१ 'सोर्लोपे, लुकि च' इति ग. पाठः ।

२ इतोऽग्रे—'च्छ्वोः शूडि'त्यनेनं त्वत्र न निर्वाहः । वर्णाश्रयत्वेन, लुका लुप्तत्वेन च प्रत्ययलक्षणाऽभावादिति वाच्यम्' इति ग. पाठः ।

संनिपातपरिभाषाया अप्रवृत्तिः । 'भवे'त्यादौ शबादेरपि तन्निमित्तकत्वात् । न च हेलुकीष्टाऽऽपत्तिः । 'अतो हेरि'त्यत्र 'प्रत्ययादि'त्यपकर्षेण, 'जही'त्यादिसिद्धेः, असिद्धवत्सूत्रं न कार्यमि'ति भाष्यविरोधादिति चेत्।

सत्यम् । 'यङ्लुकश्छान्दसत्वेन, लोण्मध्यमपुरुषैकवचनेऽस्य प्रयोगाऽभावस्यैव कल्पनात् । अत एव मुन्योर्न विरोधः ।

ज्वरत्वर । ऊठ् स्यादिति । 'उपधायाश्चे'ति चकारेण वाक्यभेदात्, आदेशिभेदेन ऊठ्द्वयमित्यर्थः । तयोश्च सवर्णदीर्घे 'जूरि'त्यादिसिद्धिः । 'ऊठ् एक एव । रमागमन्यायेनोभयोर्निवृत्तिरि'त्यप्याहुः ।

राल्लोपः । वलि लोपेन सिद्धे, वलोपविधानमूठ्बाधनाऽर्थम् ।

न धातुलोप । 'धातुलोपे' इति बहुव्रीहिः, न तत्पुरुषः । तथा सति 'आर्द्धधातुक'ग्रहणं धातुलोप-गुणवृद्ध्योरन्यतरस्य विशेषणं स्यात्, आवृत्त्या उभयविशेषणं वा । सर्वथाऽपि 'भेद्यते' इत्यत्र दोषः । न च णिलोपात् प्रागेवाऽन्तरङ्गत्वात् गुणः । 'उपजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते' इति न्यायात् । यद्यपि 'दधती'त्यादाविव नाऽत्राऽचरितार्थत्वं, तथापि 'निषेधाश्च बलीयांस' इत्यनेनाऽस्य प्राबल्यबोधनात्, अस्त्येव एतद्विषयः[2] ।

नन्वत्र बहुव्रीह्यभावेऽपि न दोषः । 'अचः परस्मिन्नि'ति णिलोपस्य स्थानिवद्भावात्, अभावाऽतिदेशेन निषेधाऽप्रवृत्तिसिद्धेः । सूत्रन्तु समुदायलुकि 'लोलुव' इत्यादौ चरिताऽर्थमिति चेन्न । धात्वंशलोपाऽभाव[3]प्रतियोगिनोऽशास्त्रीयत्वेन, तदभावस्य तासौ नित्याऽनिट्त्ववदतिदेशा-

१ इतोऽग्रे—'विधेयस्य प्रथमोपादानेन प्राबल्याऽनुमानात् । प्रत्ययविशेषसापेक्षत्वेनाऽऽदेशस्य बहिरङ्गत्वाच्च' इति ग. पाठः ।

२ इतोऽग्रे—'अकृतव्यूहपरिभाषयाऽप्रवृत्तेश्च । अपवादविषयाऽभावस्याऽपि निमित्तत्वात्' इति ग. पाठः ।

३ 'धात्वंशलोपनिमित्तत्वाऽभावप्रतियोगिनोऽशास्त्रीयत्वेन' इति ख. ङ. पाठः ।

ऽभावेनाऽदोषात्। यन्निमित्तप्रयुक्ता प्राप्तिः, तन्निमित्तवैकल्याऽतिदेशद्वारैव तत्कार्याऽभावस्याऽनेनाऽतिदेशात्। यन्निमित्तवैकल्यप्रयुक्ताऽप्राप्तिस्तन्निमित्ताऽतिदेशद्वारैव तत्कार्याऽतिदेशवत्। तत्र कार्यवत् निमित्तस्याऽपि शास्त्रीयस्यैव ग्रहीतुमुचितत्वादिति भाष्याशयादिति भाष्यप्रदीपोद्द्योते निरूपितम्।

गुणवृद्धी नेति। नन्वेतयोर्निषेधो दुर्लभः, संनिधानेन इक्परिभाषाया एव निषेधाऽऽपत्तिरिति चेन्न[2]। व्याख्यानात्। अत एव 'दीधीवेवीटामि'-ति नाऽसम्बद्धम्। नन्वेवं हलादिःशेषस्याऽऽङ्गत्वेन अङ्गाऽऽक्षिप्तप्रत्ययनिमित्तत्वात्, 'बिभेदे'त्यादावनेन निषेधाऽऽपत्तिरिति चेन्न। तत्र लक्ष्याऽनुरोधेन यथोद्देशपक्षस्यैवाऽऽश्रयणात्[3]। सूत्रोदाहरणन्तु 'लोलुवः''पोपुवः' 'मरीमृज' इत्यादि। न च 'यङोऽचि चे'त्यत्र 'ऋतोऽची'ति वार्त्तिकम्। हलन्तेभ्यो यङि,ततोऽचि,'अतो लोपः''यस्य हल'इतिलोपाभ्यां रूपसिद्धिः। अन्याऽजन्तेभ्यस्तु नेष्यते भवताऽपि, बहुलग्रहणादिति तदाशयः। एवञ्च 'मरीमृज' इत्युदाहरणमसङ्गतमिति वाच्यम्। 'सनीस्रंसः''दनीध्वंस'इत्येव भवितव्यमि'ति भाष्येण तत्प्रत्याख्यानात्। 'पृथक् अल्लोपे हि अल्लोपस्य स्थानिवत्त्वान्नलोपः स्यादि'ति कैयटः। भाष्ये तु 'यस्य हल'इत्यत्र 'यस्ये'ति योगं विभज्य, 'अत' इत्यनुवर्त्य, लुग्बाधकम् अतो लोपं कृत्वा, अवशिष्टस्य

१ 'विधिग्रहणसामर्थ्येन कार्यस्याऽशास्त्रीयस्य ग्रहणेपि, निमित्तस्याऽशास्त्रीयस्य ग्रहणे मानाऽभावादिति भाष्यप्रदीपोद्द्योते निरूपितम्' इति ग. पाठः।

२ इतोऽग्रे—'इको गुणे'त्यत्र पुनर्गुणवृद्धिग्रहणसामर्थ्यात् तन्निषेधात्। अन्यथा विशिष्टानुवृत्त्यैव सिद्धे, किं तेन ?। नच 'इक' इत्युक्तेऽनुवृत्त्यर्थमेव स्यान्नतु परिभाषेति वाच्यम्। योगविभागसामर्थ्येन परिभाषात्वस्याऽक्षतेः। अत एव' इति ग. पाठः।

३ 'लक्षणप्रतिपदोक्तपरिभाषयाऽदर्शनसङ्केतितशब्दविहितलोपस्यैव ग्रहणात्' ग. इति पाठः।

लुकि, तस्य स्थानिवत्त्वादेवोक्तेषु गुणाऽभावे सिद्धे, इदं व्यर्थमि'त्युक्तम् । न च उवङ आदिष्टादचः पूर्वत्वेन लघूपधगुणे कर्त्तव्ये स्थानिवत्त्वाऽभावः । 'अङ्गकार्ये कृते पुनर्नाऽङ्गकार्यमि'ति न्यायेन (संज्ञा[1]पूर्वकविधेरनित्यत्वेन वा) तदभावात् । न च पृथक् अल्लोपे, यावादिभ्यो यङन्तेभ्योऽचि, उक्तरीत्या योगविभागेन अल्लोपे, व्यञ्जनमात्रस्य लुकि, अजादेशस्य स्थानिवत्त्वेन 'आतो लोप इटि चे'ति न स्यादिति वाच्यम् । योगविभागस्येष्टसिद्ध्यर्थतया, गुणवृद्धिप्राप्तियोग्यविषये अच्प्रत्यये एव पृथगल्लोपः, अन्यत्र समुदायलुगेवेति स्वीकारेणाऽदोषात् । अत एव 'सनीस्रंस' इत्यादि भाष्योदाहृतं सङ्गच्छते । 'मरीमृज' इत्यादौ विकल्पस्तु न । व्यवस्थितविभाषाऽऽश्रयणात् । यद्वा इष्ट एव । तदर्थं सूत्राऽऽरम्भेऽपि एतत्कल्पनाऽऽवश्यकत्वमिति भाष्याऽऽशयः[2] । 'दरीदृश' इत्यादावङ्निमित्तगुणस्तु न । [3]अस्याऽङो लाक्षणिकत्वात् । 'देद्य' इत्यादौ युट् तु न । अनुबन्धनिर्देशादिति बोध्यम् ।

एतेन 'पृथगल्लोपे यङो विषयाऽपहाराऽभावेन, यणि, अजेः 'व्येव्य' इति स्यादि'त्यपास्तम् । योगविभागस्य इष्टसिद्ध्यर्थतयैव, तद्विषये पृथक् अल्लोपाऽनङ्गीकारात् । जरीगृह्यतेः, सास्मयतेश्च अचि सम्प्रसारण-गुणौ सूत्रमतेऽपि 'न लुमते'पि निषेधाऽनित्यत्वेन, ([4]अकृतव्यूहपरिभाषाऽनित्यत्वेन वा) साध्यौ । एवं 'निजेगिल' इत्यादावनयैव रीत्या 'ग्रो यङी'ति नित्यं लत्वं भवत्येव । (अत [5]एवाऽभ्यासे एकारश्रवणम् । अन्यथा यङ्लुका भावित्वेन, अकृतव्यूहपरिभाषया पूर्वमित्त्वाऽनापत्तेः)। ध्वनितं चेदं 'नवे'ति सूत्रे भाष्ये।

---

१ अयं ख. ग. ङ. पाठः ।

२ इतोऽग्रे —'लोलुवादावुवङि कृते त्वङ्गवृत्तपरिभाषया न गुण' इति ग. पाठः।

३ 'अस्याऽङोऽनर्थकत्वात् । विकरणानां तु द्योत्याऽर्थेनाऽर्थवत्त्वमेव' इति ख. ग. ङ. पाठः ।

४ अयं ख. ग. ङ. पाठः । क. नास्ति ।

५ अयं ख. ग. ङ. पाठः । क. नास्ति ।

निरूपितं चैतद्विस्तरेण 'न धातु'सूत्रे भाष्यप्रदीपोद्द्योते। यङ्लुगन्तात् ण्वुलादौ तु 'पापाचकः' 'बेभेदिते'त्यादौ गुणवृद्धी भवत एव। यङन्तात्तत्र तु न। अल्लोपस्य स्थानिवत्त्वात्। जङ्गम्यतेर्ण्वुलादौ तु 'गमहने'त्युपधालोपो भवत्येव, 'यातिरि'त्यादावल्लोपवत्। 'अनङी'ति निषेधस्तु न। यङ्त्वात्[1], लाक्षणिकत्वात्। यङ्लुगन्तात्तु तत्र नलोपो, वृद्धिश्च भवत्येव-'जङ्गामक' इति। यत्तु 'संज्ञापूर्वकविधेरनित्यत्वादुभयमपि ने'ति। तत्र मानं चिन्त्यम्।

मरीमृज्यतेस्तत्र वृद्धिविकल्पो भवत्येव। उक्तं च भाष्ये-'कथं 'मरीमृजक' इति'। 'अल्लोपस्य स्थानिवत्त्वान्न दोष' इति। 'नित्या वृद्धिः प्राप्नोती'ति पूर्वपक्षाऽऽशयः[2]। 'विकल्पप्रवृत्त्या तत्सिद्धिरि'त्युत्तरम्।

यत्तु 'गमहने'त्यत्र 'कित्यनङी'त्येव वाच्यम्। ङिति तु 'अनङी'ति-निषेधाद्भविष्यति। एवं सिद्धे सति, 'ङिती'ति मुख्यश्रूयमाणाऽजादि-ङित्प्रत्ययग्रहणार्थम्। एवञ्चाऽत्र लोपो न। 'मरीमृजक' इत्यत्र व्यवस्थित-विभाषाऽऽश्रयणाद्वृद्धिविकल्पो ने'ति। तन्न[3]। उत्तरत्र 'ङिती'त्यस्याऽऽवश्य-कत्वात्। वृद्ध्यभावकल्पने मानाऽभावाच्च। 'दरीदृशक' इत्यत्राऽङ्निमित्त-गुणस्तु न। उक्तयुक्तेः। एतेन 'यस्य हल' इति समुदायलोप' इत्यपास्तम्। 'सङ्घातग्रहणपक्षे आदेः परवचनात्सिद्धमि'ति तत्सूत्रस्थभाष्यविरोधात्। 'यङ्-यक्-क्यप्-अलोपे प्रतिषेध' इति 'न धातुलोप'सूत्रस्थवार्त्तिके यक्क्यपोर्ग्रहणन्तु प्रौढ्यैव[4]।

---

१ 'यङ्त्वात्' इति क. पाठः। एतत्स्थाने-'अर्थवत्त्वाऽभावात्' इति ग. पाठः।

२ 'पूर्वपक्ष्याशयः' इति ख. पाठः। क. कुण्डलितः।

३ इतोऽग्रे—'पर्युदासे 'अङ्भिन्ने विकरणे' इत्यर्थस्याऽप्यापत्तेः' इति ग. पाठः।

४ इतोऽग्रे—'अत एव तत्रैवाऽग्रे 'कथं मरीमृजक' इति। अल्लोपस्य स्थानिवत्त्वान्न दोष' इति भाष्यं सङ्गच्छते। 'नित्या वृद्धिः प्राप्नोती'ति पूर्वपक्षः। 'विकल्पप्रवृत्त्या तत्सिद्धिरि'त्युत्तरम्' इति ग. पाठः। क. पुस्तके तु अयं पाठः पूर्वमेवाऽत्रैव पृष्ठे।

यत्तु[1] 'यस्ये'ति लोपस्याऽवयवलोपत्वे, यङन्तात् ण्वुलि, 'जङ्गमक' इत्यत्र अतो लोपः स्यादि'ति प्राचीनोक्तस्य दूषणाऽवसरे, त्वयाऽपि 'पापाचक' इत्यत्रेव वृद्धेर्दुर्वारतया, कुशकाशाऽऽवलम्बनेन वृद्धिनिवारणस्य लोपनिवारणेऽपि तौल्यादि'ति मनोरमायामुक्तम, तत्, तद्रीत्याऽपि तदीयग्रन्थस्य 'तुष्यतु दुर्जन'न्यायेनाऽशुद्धत्वबोधनायेत्यलम्[2] ।

धात्विति किम् ? । लूञ्–'लविता' । तदभावे बहुव्रीह्यलाभेन 'लोपनिमित्ते' इत्यर्थाऽलाभात् ।

ननु 'आर्द्धधातुके' इति व्यर्थम् । बहुव्रीहिस्तु तं विनाऽपि 'एकाचो द्वे' इतिवद्भविष्यतीति चेन्न । 'तोतोर्त्ति'व्यावृत्त्यर्थत्वात् ।

'क्ङिति चे'तिसूत्रस्थभाष्यात्तु एषां यङ्लुगन्तानामभाव एव लभ्यते भाषायामिति बोध्यम् । यदि तु 'लोपयतीति लोप' इति विगृह्य, 'लोपनिमित्ते' इति व्याख्यायते, तदा 'धातु'ग्रहणं स्पष्टाऽर्थम् ।

**लुकापहारेति** । अत्र यद्वक्तव्यं तत् 'अज'धातावुक्तम् ।

इति यङ्लुगन्तप्रक्रिया ।

---

## अथ नामधातुप्रक्रिया ।

**सुप आत्मनः** । 'कर्मणः' 'इच्छायां वे'त्यनुवर्त्तते । संनिधानाच्च इच्छानिरूपितमेव कर्मत्वम् । 'आत्म'शब्दः स्वपर्यायः, परव्यावृत्तिपरः । 'स्वश्च क' इत्याकाङ्क्षायाम्, इच्छया संनिधापितत्वात्, एषितैव । तदाह— **इषिकर्मण** इत्यादि । सुबन्ते च उक्तविशेषणे स्वार्थद्वारके बोध्ये । इच्छाक्यजन्तस्याऽकर्मकत्वात्ततः कर्मणि प्रत्ययो नेति भाष्ये स्पष्टम् ।

आत्मनः किम् ? । 'राज्ञः पुत्रमिच्छति' । न च साऽपेक्षत्वेन

१ 'यत्तु' इत्यारभ्य 'अशुद्धत्वबोधनायेत्यलम्' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः । मनोरमादिस्थत्वात् ।

२ इतोऽग्रे–अत एव 'यङोऽचो'ति लुग्विधायकं भाष्ये न प्रत्याख्यातम्' इति ग. पाठः ।

असामर्थ्यम् । 'पुत्र'शब्दस्य नित्यसाऽपेक्षत्वात् । पदविधित्वसम्पादनेन समर्थपरिभाषाप्रवृत्तये 'सुप' इति। यद्यपि 'गोसमानाऽक्षरनान्तादित्येके' इति परिगणनं भाष्ये उक्तं, तथापि 'एके' इत्युक्त्या भगवतैव तत्राऽरुचिर्बोधिता । अत एव 'नः क्ये' इति सूत्रे 'वाच्यती'ति भाष्यप्रयोगः सङ्गच्छते इत्याशयेनोदाहरति-**नाव्यतीति** ।

**नः क्ये** । ककारोच्चारणन्तु सामसु साधुः 'सामन्य' इत्येतद्व्यावृत्तये । अन्यथा तत्रैव विध्यर्थं स्यात् । 'यस्य हल' इति लोपमाशङ्क्याऽऽह–संनिपातेति । **राजीयतीति** । 'नलोपः सुप्स्वरे'ति नियमात्, ईत्त्वे नलोपो नाऽसिद्धः । **दिवमिच्छतीति** । दिवेः क्विपि । क्यचि तु 'द्यूयती'ति बोध्यम् । इह **पुरमिच्छतीति** । 'पुर्'शब्दमिच्छती'त्यर्थेऽपि 'प्रकृतिवदनुकरणमि'त्यनेन धातुत्वमस्त्येवेत्याहुः । **प्रामादिक एवेति** । 'हलि चे'-त्यत्र 'धातोरि'त्यनुवृत्तेरिति भावः । **क्यच्व्योश्चेति** । आपत्ययलोपोऽनेन क्रियते । **वाच्यतीति** । अत्र सम्प्रसारणं न । 'धातोः कार्यमुच्यमानमि'ति परिभाषणात् ।

'मान्ताऽव्ययानां प्रतिषेध' इति वार्त्तिकम् । तस्य यथाश्रुतत्वे 'पुत्रमिच्छती'त्यत्राऽपि न स्यात् । 'पुत्रौ, पुत्रान् वा इच्छती'त्यत्रैव स्यात् । अतस्तत्पूरयित्वा व्याचष्टे–**मान्तप्रकृतिकादिति** ।

(अत[2] एव 'कमिच्छती'त्यादावपि नेति बोध्यम् ) ।

**अशनायोदन्य** । बुभुक्षापिपासे-तात्कालिकभोजन-पान-विषयेइच्छे । [3]गर्द्धः = धने सति धनेच्छा । **अशनायतीति** । अत्र अविवक्षितप्रकृत्यर्थं बुभुक्षादिकमेवाऽर्थः । 'उदन्या तु पिपासा तृडि'ति कोशात् । 'किमु धनं धनायितुमि'ति भारविप्रयोगाच्च । यस्तु कालाऽन्तरोपयोगाऽर्थमशनमिच्छति, यश्च स्नातुमुदकम्, यश्च दरिद्रः सन् धनम्, तत्र

१ 'पूर्शब्दमिच्छति' इति ख. पाठः ।

२ अयं ख. ग. ङ. पाठः । क. कुण्डलितः ।

३ 'गर्द्धर्यम्' इति क. पाठः ।

प्रत्युदाहरणानि । ( [1]केचित्तु 'अशनादिविषयकबुभुक्षाद्योऽर्थाः । तत्र बुभुक्षादयः प्रयोगोपाधय[2]' इत्याहुः ) । अश्ववृषयोरिति । ( [3]स्वकर्मकेतरकर्त्तृकमैथुनेच्छायामित्यर्थः) । अत्राऽपि प्रकृत्यर्थपरित्यागेन मैथुनेच्छाऽर्थः । 'वृषस्यन्ती तु कामुकी'ति कोशात् । ( [4]केचित्तु मैथुनाऽर्थमश्वमिच्छतीत्यर्थमाहुः ) । लालसायामिति । 'अतिशयेनाऽभ्यवजिहीर्षायामि'त्यर्थः । तेन ऐश्वर्याद्यर्थं लवणाद्युपादाने 'लवणीयती'त्येवे'ति कैयटः ।

काम्यच्च । धातुस्वरेण सिद्धेऽस्य[5] चित्त्वं व्यर्थम् । माधवस्तु 'पुत्रकामिष्यती'त्यादौ सतिशिष्ट'स्य[6]'स्वरं बाधित्वा धातुस्वरो यथा स्यादिति चित्त्वमि'त्याह । कस्येत्संज्ञा तु न । फलाऽभावात् । उच्चारणसामर्थ्याच्च । यकाराऽऽदित्वेन प्रत्ययादित्वाऽभावाच्चेत्याहुः ।

कर्त्तुः क्यङ् । 'धातोः कर्मण' इत्यतो 'वा' इत्यनुवर्त्तते । चकारोऽन्वाचये[7] । 'से'ति लुप्तषष्ठीकं कर्तृविशेषणम् । 'कर्त्तुरि'ति क्यङ्विधौ पञ्चम्यन्तमपि, सलोपविधौ योग्यतया षष्ठ्यन्तं बोध्यम् । तदाह—सान्तस्येति । तेन 'हंसायते'इत्यादौ सलोपो न । इतरेषामिति । स्पष्टं चेदं भाष्ये । भाष्ये[8] नानामतप्रदर्शनेन विकल्पे तात्पर्यादित्याहुः ।

'क्रियाकर्त्रादिस्वरूपं विभागं च विद्वस्यमानः' इतिवाचस्पतिप्रयोगे क्यङेव । विदेः कर्माऽशे नित्यसापेक्षत्वान्न दोषः । 'क्यषन्तमेतदि'ति कल्पतरूक्तं तु चिन्त्यम् । अभूततद्भावाऽप्रतीतेः । 'विद्वदाभास' इत्यर्थस्य विवक्षितत्वात् । क्यषो हलन्तात् अनभिधानस्य भाष्ये उक्तेश्चेत्याहुः ।

---

१ अयं ख. ग. ङ. पाठः । क. नास्ति ।

२ 'प्रयोगोपाधयः । 'समुदायशक्या' इति यावदित्याहुः' इति ग. पाठः ।

३ अयं ख. ग. ङ. पाठः ।　　४ अयं ख. ग. ङ. पाठः ।

५ 'सिद्धेश्चित्त्वं व्यर्थम्' इति ग. पाठः ।　　६ 'स्य' इति ख. ग. नास्ति ।

७ इतोऽग्रे—'च'शब्दः क्यजनुकर्षणाऽर्थः । उत्तरत्र क्यच एव सम्बन्धो यथा स्यादिति' इति ग. पाठः ।　　८ 'भाष्ये' इति लघुशेखरपाठः ।

**सपत्नीवेति**—त्रितयसाधारणं विग्रहवाक्यम्। **सपत्नायते इति**। शत्रुपर्याय'सपत्न'शब्दाच्छाङ्गरवादिङीनन्तात्क्यङ्। **सपत्नीयते इति**। समानस्वामिकाऽभिधायिनो भाषितपुंस्कस्य 'नित्यं सपत्न्यादिषु' इति नाऽऽदेशे, नान्तत्वान्ङीपि, क्यङ्। सपत्नीयते इति। विवाहजन्यसंस्कार-विशेषनिमित्तकपतिशब्देन समासे सति, नित्यस्त्रीत्वान्न पुंवत्। एतत्तत्त्वं 'भस्याऽढे' इत्यत्र निरूपितम्।

**युवायते इति**। 'वयोवाचिनां जातिकार्यं वैकल्पिकमि'ति 'जाते-रस्त्री'ति सूत्रे निरूपितम्। एतेन 'जातेश्चे'ति निषेधादिदं रूपं दुर्लभमि'ति प्रत्युक्तम्। **पट्वीमृदयते इति**। पूर्वपदस्य क्यङ्परत्वाऽभावान्न पुंवत्।

**वाग्रहणादिति**। अन्यथा[1] विशेषविहितत्वात्क्विपा क्यङो बाधा स्यादिति भावः। एताननुक्रम्य 'सर्वप्रातिपदिकेभ्य इत्येके' इतिभाष्योक्तेरस्याऽपि प्रातिपदिकादुत्पत्तिः। सर्वप्रातिपदिकेभ्योऽस्य[2], क्यङश्च विधानेन, वचन-सामर्थ्यलब्धपर्यायस्यैवाऽनुवादको 'वा'शब्द' इति माधवः।

**भूतपूर्वादपीत्यादि**। अत्र यद्वक्तव्यं तत् 'कास्प्रत्ययादि'ति सूत्रे उक्तम्। **तङ् नेतीति**। उत्तरवार्त्तिकेन क्विप्मात्रस्य सुलभत्वादिति भावः। **अनुबन्धाऽऽसङ्गेति**[3]। 'आत्मनेपदे आमर्थमि'त्यर्थः। **प्रत्यय-ग्रहणमपनीयेति**। अत्र यद्वक्तव्यं तत् 'कास्प्रत्ययादि'त्यत्र निरूपितम्। **द्वित्वमिति**। 'द्विर्वचनेऽची'ति निषेधात्, अतो लोपो नेति भावः।

**माधवोक्तं प्रक्रियाक्रममाह–अतो गुणे इति**। अन्तरङ्गत्वात् अतो लोपम्, 'अत आदेरि'ति दीर्घं च बाधित्वेति भावः। 'वार्णादाङ्गमि'ति तु न प्रवर्त्तते। व्याश्रयत्वात्[4]। प्रथमत्वप्रयुक्तमेव द्वित्वम्। अन्तरङ्गत्वात्।

१ 'अन्यथा कौटिल्ययङा क्रियासमभिहारयङ इव, प्रातिपदिकविषयेणाऽनेन सुबन्तविषयस्याऽपि क्यङो बाधा स्यादिति भावः' इति ग. पाठः।

२ 'वस्तुतस्तु सर्वप्रातिपदिकेभ्योऽस्य' इति ग. पाठः।

३ 'सङ्गार्थमिति' इति ग. पाठः।

४ 'व्याश्रयत्वात्। प्रवृत्तावल्लोपेऽपि न क्षतिः। न च 'अत आदेरि'त्यपवादः।

एकाज्द्वयसत्त्वे 'अजादेरि'त्यस्य प्राप्तेः । 'आदेरचः परस्य द्वितीयस्यैकाच' इति तदर्थात् । 'न न्द्रा' इति तु अनन्तरत्वात्, 'आदेरचः परा द्वितीयैकाचोऽवयवा न्द्रा न द्विरि'त्यर्थाच्च 'अजादेरि'त्यस्यैव निषेधः । एवञ्च युगपत्, हलादिःशेषात्पूर्वमेव वा, परत्वात् 'अत आदेरि'ति दीर्घः । न हि तदा पररूपप्राप्तिः । 'अभ्यासविकारे बाध्यबाधकभावो नास्ती'त्यस्य हि युगपत्प्रवृत्तौ, न्याय्यक्रमेण समावेशे वा तात्पर्यम् । 'पररूपाऽपवाद' इति ग्रन्थस्तु तदभावे प्राप्तिमात्रेणेति तद्भावः ।

अत आदेरिति । पररूपस्य अङ्गग्रहणेन ग्रहणात् प्राप्तम् अतो लोपं परत्वाद्बाधित्वेति भावः । 'ण्यल्लोपावियङ्यणि'त्यत्र तु इयङादिसाहचर्येण

अन्यत्र चरितार्थोऽपवादस्याऽप्यन्तरङ्गेण बाधात् । इदं च 'आनदे' ([1]'आनृजे') इत्यादौ चरितार्थम् । तत्र हि युगपत्, हलादिःशेषात्पूर्वमेव वा, परत्वात् 'अत आदेरि'ति दीर्घः । न हि तदा पररूपप्राप्तिः । 'अभ्यासविकारे बाध्यबाधकभावो नास्ती'त्यस्य हि युगपत्प्रवृत्तौ, न्याय्यक्रमेण समावेशे वा तात्पर्यम् । 'पररूपाऽपवाद' इति ग्रन्थस्तु[2] तदभावे प्राप्तिमात्रेणेति तद्भावः' इति ख. ग. ङ. पाठः ।

१ 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्य' इति तु न प्रवर्त्तते । 'अकारादेरभ्यासस्याऽचो दीर्घ' इत्यर्थका'ऽऽदेरि'तिन्यासेन सिद्धे, 'अत आदेरि'तिन्यासेन अकारस्य प्राधान्यसूचनेन, अकारमात्रे प्रवृत्त्या, पूर्वविप्रतिषेधं बाधित्वा, दीर्घस्यैव प्रवृत्तिबोधनात् । 'इयङादिसाहचर्येण अभ्यासाऽनिमित्तदीर्घस्यैव तत्र ग्रहणादि'ति तु कश्चित् । ननु भ्याश्रयेऽपि वार्णपरिभाषाप्रवृत्तौ, अतो लोपे, ततो दीर्घे, अल्लोपस्याऽऽभीयाऽसिद्धत्वात् आतो लोपः अतुसादौ दुर्लभ इति चेन्न । भ्याश्रयत्वेन वा, अनित्यत्वेन वा, आभीयाऽसिद्धत्वस्येहा-

1 अयं ग. पाठः ।

2 'द्वन्द्वाऽपवाद एकशेष' इतिवत्तदभावे प्राप्तिमात्रेण बोध्यः' इति ग. पाठः ।

अभ्यासाऽनिमित्तदीर्घस्यैव ग्रहणम्[1]। अत एव तद्वार्त्तिकव्याख्याऽवसरे 'अकृत्सार्वे'त्यस्यैव अवकाशप्रदर्शनं कृतमिति भावः[2]।

एतत्सर्वं सत्येषामभिधाने बोध्यम्।

मालातीति। एवं 'खट्वा'शब्दात् आचारक्विपि, आशीर्लिङि,

ऽप्रवृत्तेः। मालातीति।' इति ग. पाठः।

१ 'ग्रहणमित्यभिमानः' इति ख. ङ. पाठः।

२ इतोऽग्रे—'वस्तुत इदं सर्वं चिन्त्यम्। व्याश्रयेऽपि 'वार्णादाङ्गमि'त्यस्याः प्रवृत्तेः। अनित्यत्वकल्पने तु न दृढं मानम्। अत एव 'आनर्दे'त्यादिसिद्धिः। अन्यथा 'न न्द्राः' इति निषेधेन तत्र अकारमात्रस्य द्वित्वे, 'आनृजे' इत्यादौ चरितार्थम् 'अत आदेरि'त्येतद्बाधित्वा, अन्तरङ्गत्वेन 'अतो गुणे' इत्यापत्तौ, तदसिद्धिः स्पष्टैव। 'न न्द्राः' इति 'अजादेरि'त्यस्यैव बाधकमिति न युक्तम्। मानाऽभावात्। अत्र प्रथमत्ववत् द्वितीयत्वस्याऽपि सत्त्वेन, परत्वात्तस्यैव प्राप्तेश्च। एवञ्च 'आनर्दे'त्यत्र चारितार्थ्यमि'त्यपि चिन्त्यम्। किञ्चाऽकृतव्यूहपरिभाषयाऽप्यत्र पररूपाऽप्राप्तिः। तत्राऽभ्याससञ्ज्ञासापेक्षदीर्घाऽपेक्षया अन्तरङ्गत्वात्पूर्वम् अतो लोपः, ततः अभ्यासदीर्घ इत्युचितम्। नन्वेवम् अल्लोपस्याऽऽभीयाऽसिद्धत्वात् आतो लोपोऽतुसादौ दुर्लभ इति चेन्न। भाष्यकृता असिद्धवत्सूत्रप्रत्याख्यानेन, भाष्योक्तप्रत्याख्यानप्रकारविषयाऽतिरिक्तविषये तत्सूत्रस्याऽनित्यत्वेनाऽप्रवृत्तेरवश्यवक्तव्यत्वात्। बहिरङ्गत्वं तूभयोः सममिति वदन्ति' इति ख. ङ. पाठः। क. कुण्डलितः।

३ 'न च 'आनर्दे'त्यवकाशो न युक्तः। तत्र व्यपदेशिवद्भावेन द्वितीयत्वस्याऽपि सत्त्वेन, 'अजादेर्द्वितीयस्ये'त्यस्य प्राप्तौ, तत्र 'न न्द्राः' इति निषेधेन, अकारमात्रस्य द्वित्वेन,'आनृजे' इत्यादौ चरितार्थम् 'अत आदेरि'ति बाधित्वा, भवदुक्तरीत्या अन्तरङ्गत्वेन 'आद्गुण' इत्यस्यैवाऽऽपत्तेः, रूपाऽसिद्धिश्चेति वाच्यम्। 'तक्रकौण्डिन्य'न्यायेन 'अजादेरि'तिसूत्रे प्रथमत्वाऽनाक्रान्तद्वितीयस्यैव ग्रहणात्। अर्थाऽधिकारात्तस्यैव 'न न्द्राः' इत्यत्राऽनुवृत्तेश्च' इति ग. पाठः।

'खट्वायादि'त्येव। अङ्गाऽधिकारात्, 'अन्यस्ये'त्यस्य श्रुतत्वाच्च, 'संयोगादेरि'-त्यस्याऽङ्गविशेषणत्वात्। आकारविशेषणत्वेऽपि 'अङ्गाद्यवयवसंयोगात् पराऽऽकारस्ये'त्यर्थात्[1]।

'आतोऽनापः' 'आतो धातोरि'ति न्यासयोः फलैक्याय, आबन्तेभ्य आचारक्विबेव ने'त्यन्ये।

ङीसाहचर्यादिति। ईकाररूपङ्यन्तात्परयोः तिस्योरसम्भव इति हल्ङ्यादिसूत्रे निरूपितम्।

कैयटादय इति। अत्राऽरुचिबीजन्तु 'न वै सन्ध्यक्षरमन्त्यमस्ती'ति 'इको गुणे'ति, 'वदव्रजे'ति च सूत्रस्थभाष्यविरोधात् एङन्तेभ्य आचार-क्विपोऽभाव एव। ओकारान्तेभ्यस्तु 'ओतः श्यनी'तिसूत्रस्थभाष्यप्रामाण्या-दपि तदभावः। किञ्च 'आदेच उपदेशेऽशिती'ति'सूत्रस्थभाष्य-प्रामाण्यात् एजन्तेभ्य एव तदभाव इति, तथा व्याख्याने मानाऽभाव इति बोध्यम्। अवायीदिति। माधवमतेनेदम्। धातुपाठस्थस्यैवेति। तस्य[2] शीघ्रोपस्थितिकत्वादिति भावः। भू-द्रु शब्दौ पृथ्वी-वृक्षवाचिनौ।

इदामतीति। केचित्तु 'ह्रस्वनद्याप' इति सूत्रभाष्ये 'कास्प्रत्ययादि'-त्यामो मस्येत्संज्ञा कुतो ने'त्याशङ्क्य, 'इत्कार्याऽभावान्न'। 'न च मिदचो-ऽन्त्यात्परो यथा स्यात्, प्रत्ययपरत्वं मा भूदि'ति फलमिति वाच्यम्। प्रत्ययान्तादयं विधीयते, तत्र विशेषाऽभावः प्रत्ययपरत्व-मिदचोऽन्त्यात्-

१ 'आकारविशेषणत्वे 'संयोगादि'त्येव सिद्धे, 'आदि'ग्रहणवैयर्थ्याऽऽपत्तिः। संयोगसंज्ञा तु महासंज्ञाकरणबलात्समुदायस्येति संयोगसंज्ञासूत्रे निरूपितम्। आतोऽनापः' इति ग. पाठः।

२ 'धातुपाठप्रसिद्धाऽर्थस्य शीघ्रोपस्थितिकत्वाच्चे'त्यपि बोध्यम्। एतेन 'अभिव्यक्तपदार्था ये' इति न्यायस्य पदकार्यविषयत्वान्नेह प्रवृत्तिरिति, न दोष' इत्यपास्तम्। अन्ये त्वाचारक्विपः प्रमाणसिद्धत्वे, भवन्त्येवैतानि कार्याणि। 'अभिव्यक्ते'तिन्यायस्याऽत्र प्रवृत्तौ तु उपसर्गसमभिव्याहारेण प्रसिद्धार्थप्रतिपादकानामपि कार्याऽनापत्तिरित्याहुः' इति ग. पाठः।

परत्वयोरि'त्युक्तम् । तत्रैव कैयटेन-'हलन्तेभ्य आचारक्किपोऽभावः, अनभिधानात् । अन्यथा तत्र विशेषः स्यादि'त्युक्तम् ।

अवगल्भादयोऽप्याचारक्विबन्ता अजन्ता एवेति, निरूपितं 'कास्प्रत्ययादि'ति सूत्रे । ण्यन्तात्तु 'अयामन्ते'त्ययविधानात् अविशेषः ।

न च बेभिदादेर्यङ्लुगन्तात् आमि विशेषः । तेषां छान्दसत्वात् । छन्दसि दृष्टाऽनुविधानात् । लोके तु लिटि अनभिधानमेव ।

न च तदुत्तरं 'यस्तर्हि अप्रत्ययाऽन्तात्—'उषविदे'ति, तत्र विशेष' इत्याशङ्क्य 'आस्कासोराम्विधानान्नाऽस्य मस्येत्त्वमि'त्युक्त्वा, 'अथाऽपि कथञ्चित् इत्कार्यं स्यादि'त्युक्तम् । तत्र च कैयटेन 'मित्त्वेऽपि विधान-सामर्थ्यात् आसादिषु सवर्णदीर्घत्वं न स्यादि'ति व्याख्याय, हलन्तेषु आचारक्विप्यपि इत्कार्यं स्यात्, न हि अनभिधाने प्रमाणमस्ती'त्युक्तमिति, अनभिधाने न मानमिति वाच्यम् । 'कथञ्चित्'पदस्वारस्यभङ्गाऽऽपत्तेः । पूर्वव्याख्यायान्तु प्रधानविधिबाधाऽपेक्षया, इत्संज्ञाबाध एवोचित इति, तत्स्वारस्यं स्पष्टमेव । 'निषादस्थपत्यधिकरण'न्याय-'प्रधानाऽप्रधान'-न्याययोः पूर्वस्यैव आश्रयणे दृढतरमानाऽभावात् ।

न च जागर्त्तावामो मिद्चोऽन्त्यात्परत्वे, स्वाऽवयवेन पौर्वापर्या-ऽभावात् गुणो नेति, इत्सञ्ज्ञाफलमिति वाच्यम् । अङ्गाऽधिकारे आमि णेरय्विधानेन, 'तस्याऽन्ताऽवयव' इत्यस्याऽत्राऽसम्बन्धात् । तथा तदुत्तरं 'कारयां चकार' 'चिकीर्षां चकारे'त्यादौ अल्लोपाऽयादेशाभ्यां बाधात् नुडभावसिद्धेः, अस्य आमो नुड्विधायके ग्रहणे, न दोष' इत्युक्तम् । तद्भाष्यप्रामाण्याच्च आबन्तात् एतदभाव आवश्यक इत्याहुः ।

---

१ 'आसादिषु सवर्णदीर्घत्वं न स्यादित्युक्तम्' इति ख. ङ. पाठः ।

२ 'आबन्तादप्येतदभाव आवश्यकः । आचारक्विपम् अवदता सूत्रकृता तस्या-ऽत्यल्पविषयतासूचनाच्च । अत एव स्वकर्त्तृकाऽऽचारसदृशाऽऽचारवृत्ति-प्रातिपदिकानां यथाप्रयोगं 'बहुलमेतन्निदर्शनमि'त्यनेन चुलुम्पादीनामिव

पथीनतीति । अत्र यथा 'इन्हन्नि'ति नियमस्य न प्राप्तिस्तथा 'इन्हन्नि'ति सूत्रे निरूपितम् । 'पथेनती'ति तु युक्तम् । मूलन्तु माधवाऽनुसारेण, सत्यभिधाने । देवतीति । क्विपि अपदान्तत्वात् 'दिव उत्' न ।

द्यवतीति । लघूपधगुणं बाधित्वा अन्तरङ्गत्वाद्यण् । न च बहिरङ्गोठोऽसिद्धत्वम् । 'नाऽजानन्तर्ये' इति निषेधात् । 'वाणोदाङ्गमि'ति तु व्याश्रयत्वात्, अनित्यत्वाच्च न । अनित्यत्वाऽऽश्रयणे दृढतरं मानं चिन्त्यम् ।

हरदत्त इति । अत्राऽरुचिं दर्शयति—माधवस्त्विति । ध्वनितं चेदम् 'अचो ञ्णिती'त्यत्र भाष्यकैयटयोः ।

अनाकरमेवेति । अत्र यद्वक्तव्यं तत् 'कास्प्रत्ययादि'त्यत्रोक्तम् ।

भृशादिभ्यो । भृशादिराकृतिगणः । सुमनसादयो बहुव्रीहयः ।

---

धातुत्वात् 'अश्वती'त्यादि सिद्धिरिति सूत्रमतमाहुः । एवञ्च दीर्घोऽटादीनाम् अप्रवृत्तिरेव । वार्त्तिककारेण क्विप्करणन्तु तस्य सर्वलोपिप्रत्ययत्वेन प्रसिद्धिमात्रेण । 'अनुनासिकस्य क्वी'त्यादौ तु झलादिक्ङित्साहचर्येण धातुविहित एव क्विप् गृह्यते इत्युचितं, यदि प्राञ्चो न कुप्यन्ति । एवमाम्विधायके 'अनेकाच' इति वक्तव्यमि'त्यपि 'दयायासश्चे'त्यनुक्तसमुच्चयाऽर्थेन चेन संगृहीतमित्याहुः। 'क्विट्येवाऽनभिधानमि'त्यन्ये' इति ग. पाठः ।

१ इतोऽग्रे–'एवम् 'ऊ'शब्दादिभ्य एकाऽक्षरेभ्य आचारक्विपि, 'इजादेश्चे'त्याम् । 'उवोखे'त्यादौ संनिपातपरिभाषयैव सिद्धे 'मतु'निर्देशस्य मुख्यगुरुमतो ग्रहणाऽर्थत्वात् । इजादित्वस्याऽप्यादिग्रहणसामर्थ्येन मुख्यस्यैव ग्रहणाच्च । 'वल्गु'प्रभृतिभ्यस्त्वाचारक्विपि अनेकाच्त्वात् आम् भवत्येव । न च 'अनृच्छ' इत्युकारप्रश्लेषस्य भाष्ये उक्तत्वादुकारान्तादाम् दुर्लभ इति वाच्यम् । 'अनन्तरस्ये'ति न्यायेन तत्सूत्राऽप्राप्तस्यैव निषेधात् । 'ऋच्छ'साहचर्येण उपदेशे उकारान्तस्यैव निषेधाच्च । अत एव प्रश्लेषेण ऊर्णोतेर्णुवद्भावः प्रत्याख्यात इति कश्चित्' इति ग. पाठः ।

२ 'अभिमनसादयः' इति क. ख. ङ. पाठः । 'सुमनसादयः' इति लघुशेखरपाठः । सुमनस् , अभिमनस् , दुर्मनस् , इत्यादयो हि भृशादिगणे पठ्यन्ते ।

'अभूततद्भावग्रहणमि'ति वार्त्तिकम्। तदाह—अभूतेत्यादि। वार्त्तिका-ऽन्यथासिद्धिमाह—[1]अच्वेरितीति।

'क्व दिवे'त्यस्याऽर्थमाह—ये रात्राविति। 'लोपश्चे'ति चोऽन्वाचये। अत एव 'भृश'ग्रहणं चरितार्थम्। तदाह—सुमनस्। अस्य सलोप इति।

प्रातिपदिकमिति। न धातुः। तथा सति वक्ष्यमाणज्ञापका-ऽनुपपत्तिरिति भावः। अनुबन्ध इति। 'अतो गुणे' इति पररूपेणेति भावः। अन्यथा 'णौ चङी'ति ह्रस्वः स्यात्।

उपसर्गसमानाकारमिति। अत एव 'स्वाशश्वदि'ति माधवाद्युदाहृतं सङ्गच्छते। उपसर्गस्याऽपि प्रयोगभेदेन उपसर्गसमानाऽऽकारत्वं बोध्यम्। अत्र यद्वक्तव्यं तत्सङ्ग्रामधातौ चुरादावुक्तम्।

[2]पूर्वपदमिति। तेन तुन्दपरिमृजादेः क्यजादौ न पृथक्[3]करणम्। तच्च समासे एवेति, 'आन्दोलयित्वा' 'प्रेङ्खलयित्वे'त्यादौ 'आ''प्रे'त्यादीनां धात्ववयवत्वेन अपूर्वपदत्वान्न पृथक्करणमि'ति भावः। 'बहुलमेतन्निदर्शन-मि'ति बाहुलकात् तेषां धातुत्वम्।

'अवधीरे'ति विशिष्टधातुकल्पनेन 'आववधीरदि'ति भवति। 'तस्याऽवधीरयित्वे'ति चेति बोपदेवः। 'अवधीर्ये'ति तु केवल'धीर'धातो-रपि कल्पनात्, तस्याऽवपूर्वत्वे साधित्विति बोध्यम्।

१ 'अच्वेरितीति। एतेन च्वेर्भवतियोगे विधानेन, अस्य च तदर्थे विधानेन, उक्ताऽर्थत्वात् च्व्यन्ते क्यङभावसिद्धेः, 'अच्वेरि'ति व्यर्थमि'त्यपास्तम्। एतत्सामर्थ्यादेव 'कृभ्वस्तियोगे' इत्यस्य 'तदर्थयोगे' इत्यर्थाच्च। अत एव डाजन्तात् क्यष् सङ्गच्छते' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

२ इतोऽग्रे—तच्च क्यजादिप्रकृतिसम्बन्धि प्रत्यासत्त्या ग्राह्यम्' इति ग. पाठः।

३ 'पृथक्कारणम्' ? इति क. पाठः।

**चिकीर्षिते** इति । पृथक्करणेन समासाऽभावकल्पनेऽपि, सामर्थ्यात्[1] तद्विषयके लक्षणे 'सुबन्तादि'त्यंशे 'यस्माद्विहितस्तदादी'त्यंशाऽप्रवृत्त्या न दोषः । 'यस्माद्विहित' इत्यनेन अधिकव्यावृत्तिरेव, न तु न्यूनव्यावृत्तिरिति तत्त्वम् । **पृथक्क्रियते** इति । 'तेन जातसमासस्याऽभावः कल्प्यते' इत्यर्थः । अत एव 'सुमनाय्ये'त्यादौ पुनः क्त्वाऽन्तेन समासे, ल्यप्सिद्धिः[2] ।

**श्रूयते** इति । अस्य च 'उत्तरपदात्पार्थक्येने'ति शेषः । पृथक्करणफलं पूर्वत्राऽपि दर्शयति—**एवं चेति** । **आदेशेनेति** । एकाऽऽदेशरूपेणेत्यर्थः । अत एव 'स्वाशश्वत्' 'सम्यचिचदि'ति माधवोदाहृतं सङ्गच्छते ।

**अवगल्भ्येति** । [3]स्वोत्तरभागेन धातुसंज्ञानिमित्तप्रत्ययप्रकृतिभूतेन समर्थम् अवादिकम् । तद्द्वारा तद्घटितविशिष्टाऽर्थेनाऽपि क्त्वाऽन्तेन सह समर्थतया, 'कुगती'ति सूत्रेण प्रादिग्रहणादीदृशक्रियायोगस्याऽपि ग्रहणे, गतिग्रहणाद्वा समासे, क्त्वो ल्यबादेशः । प्रकृत्येकदेशद्वारकमेव च कृत्सु सर्वत्र सामर्थ्यमित्याहुः । **आटः प्रतिषेध** इति । 'उस्यपदान्तात्' 'ओमाङोश्चे'ति प्राप्तस्य पररूपस्येत्यर्थः । **औस्रीयदिति** । एतन्निषेधसामर्थ्येन, 'उस्य-

---

१ 'सामर्थ्याद्भूतपूर्वगत्या प्रत्यय इति बोध्यम् । अपरे तु 'धातुसंज्ञायां चिकीर्षितायामेव पृथक्करणम् । अन्यथा प्रत्ययोत्पत्तेः पूर्वमेव पृथक्करणे, उपर्षभादेः क्यजाद्यनापत्तिः । समासाऽभावेन उपर्षभस्य सुबन्तत्वाऽभावात् । 'ऋषभ'पदार्थमात्रस्य तु न इषिकर्मत्वम् । तथात्वे वा तस्मादेव सुबन्तात् क्यचि 'उपर्षभयती'त्यादौ पाक्षिकवृद्ध्यापत्तिः । अर्थाऽसङ्गतिश्चेत्याहुः' इति ख. ङ. पाठः ।

२ 'ल्यप्सिद्धिः । आदेशेनेति । एकादेशरूपेणेत्यर्थः । अन्यादेशेन सर्वथाऽपहाराऽसम्भवात् । ज्ञापकस्य विशेषविषयत्वाच्च । अत एव 'स्वाशश्वत्' 'सम्यचिचदि'ति माधवोदाहृतं सङ्गच्छते । पृथक्करणफलं पूर्वत्राऽपि दर्शयति—एवञ्चेति' इति ग. पाठः ।

३ 'जहत्स्वार्थवृत्तौ स्वोत्तरभागेन धातुसंज्ञानिमित्त' इति ग. पाठः ।

पदान्तादि'ति सूत्रे 'अपदान्त'ग्रहणसामर्थ्येन च 'अर्थवत्परिभाषा' 'प्रतिपदोक्तपरिभाषा' 'प्रत्ययाऽप्रत्यययोश्चे'तिपरिभाषाणामप्रवृत्तेरिति भावः ।

चशब्देनेति । विनिगमनाविरहेण सर्वबाधकत्वं तस्य । एवञ्च सूत्रकारोऽपि ज्ञापकस्य विशेषविषयत्वे प्रमाणमिति भावः ।

इदं च ज्ञापकं भृशादिसूत्रविहितक्यङन्तसुदुरुदभिपूर्वमनस्शब्दे स्वराऽतिरिक्तविषयकम् । अत एव 'देवदत्तः सुमनायते' इत्यादौ 'सु'विशिष्टस्य निघातः । 'सुमनायते' इत्यादौ च सोः परस्य न निघात इति बोध्यम् । भृशादिसूत्रे भाष्ये तु 'भृशादिषूपसर्गः पराऽङ्गवत्स्वरविधौ' इति वचनमेव पठितम् ।

लोहितादिडा । भवत्यर्थे इति । न च भवतियोगे डाच्, तत्र भवतिनैवोक्तत्वात्तदर्थस्य, कथं क्यषिति वाच्यम् । वचनप्रामाण्याड्डाचं भवत्यर्थविवक्षया कृत्वा, भवत्यर्थे क्यष्सिद्धेः ।

क्यषिति । अत्र ककार-षकारौ भाष्ये प्रत्याख्यातौ । न च ककारो 'नः क्ये' 'क्यस्य विभाषे'त्यादौ सामान्यग्रहणाऽर्थः । हलन्तात्क्यषभावेन फलाऽभावात् । न च 'क्याच्छन्दसी'त्यत्र सामान्यग्रहणाऽर्थः । 'याच्छन्दसी'त्येव सिद्धेः । अत एव कण्ड्वादियगन्ते 'तुरण्युरि'ति सिद्धम् ।

षकारोऽपि न 'वा क्यष' इत्याद्यर्थः । 'वा यादि'त्येव सिद्धेः ।

'पाश्या''सभ्या'ऽऽदिभ्य आचारक्विबन्तेभ्यस्तु नैतत्प्रवृत्तिः । अनभिधानेन आचार क्वबभावात् । नामधातुषु एतेषामप्रवृत्तेः पूर्वमुपपादितत्वाच्च ।

यत्तु-'अत्र क्यष् चे'त्यस्तु । चात्-क्यङ् । एवं च 'वा क्यष' इति माऽस्त्वि'ति । तन्न । लिङ्गविशिष्टपरिभाषया 'लोहिनी'शब्दात्क्यङि, 'क्यङ्मानिनोश्चे'ति पुंवत्त्वे, 'लोहितीयते' इत्यस्याऽऽपत्तेः । क्यषि तु 'लोहिनीयते' इति फलभेदात् । अत्राऽच्वेरिति । अत एव भाष्ये लोहिता-

१ इतोग्रे 'केचित्तु 'षकारो 'याच्छन्दसी'त्यत्र सामान्यग्रहणाऽविघातार्थः । अन्यथा निरनुबन्धकपरिभाषयाऽस्यैव ग्रहणं स्यादित्याहुः' इति ग. पाठः ।

ऽतिरिक्तानां लोहितादिगणपठ्यमानानां भृशादिपाठे नित्यात्मनेपदमेव प्रयोजनमुक्तं, न त्वभूततद्भावविषयतालाभोऽपीति भावः। असम्भवादिति। अनुकरणात् डाज्विधानेन, अनुकरणत्वभङ्गाऽऽपत्त्या तत्र तदसम्भव इति भावः। भृशादिष्विति। नित्यमात्मनेपदस्यैव तेभ्य इष्टेरिति भावः।

यत्त्विति। वृत्तिकाराऽनुयायिनः। 'भृशादिष्वितराणी'ति भाष्यं पठित'नील हरित-मन्द्र[1]-फेन-मुण्ड'विषयम्। तस्मात् क्यषः ककारेण अस्य आकृतिगणत्वं ज्ञाप्यते। तत्त्वेन च यानि संगृह्यन्ते, तानि न भृशादिष्विति, तेषां संग्रहाऽर्थमयं श्लोकः। तत्र 'नित्य'स्थाने जिह्मं केचित्पठन्ती'ति ते व्याचक्षते। तद्भाष्येति। तथा भाष्यव्याख्याने मानाऽभावादित्यर्थः।

कष्टायेति। तादर्थ्ये चतुर्थी। 'कष्टाऽर्थप्रतिपादकप्रातिपदिकप्रकृतिकसुबन्तात्क्यङि'त्यर्थः। स चोपस्थितत्वात् चतुर्थ्यन्तादेव। स्पष्टं चेदं भाष्ये। तदाह—चतुर्थ्यन्तादिति। क्रमणम्—उत्साहः। 'वृत्तिसर्गे'त्यत्र 'सर्ग उत्साह' इत्याकरे व्याख्यातत्वात्। 'येनेन्द्रलोकाऽवजयाय सृष्ट' इति प्रयोगाच्च। तदाह—उत्साहेऽर्थे इति। 'क्रमणेऽनार्जवे' इति भाष्ये[2] क्रमणं गमनमेव। तेन हि तदुद्देश्यकेन तद्विषयकोत्साहो गम्यते। इदमेवाऽभिप्रेत्य 'क्रामती'ति विग्रहे परस्मैपदं प्रयुक्तम्। कैयटस्याऽप्यत्रैव

१ 'मण्ड' इति ख. ङ. पाठः।

२ 'इति भाष्ये ऋजोरिदमार्जवम्, न आर्जवम् अनार्जवम्। तेन 'ऋजुसंबन्धिभिन्नम्' इत्युक्ते, तात्पर्यतः अनृजुसम्बन्ध उच्यते, लक्षणया वा। ([1]अनृजोरेवाऽत्र भाष्यप्रामाण्यादुत्तरपदवृद्धिर्वा)। क्रमणं पादविक्षेप एव। [2]तदुद्देश्यकपादविक्षेपेण हि तद्विषयकोत्साहो गम्यते। इदमेवाऽभिप्रेत्य 'क्रामती'ति विग्रहे परस्मैपदं प्रयुक्तम्। कैयटस्याऽप्यत्रैव [3]तात्पर्यम्। केचित्तु भाष्यप्रामाण्यादेव परस्मैपदमाहुः। एवञ्च 'क्रमणे' इत्यस्य

1 अयं ख. ङ. पाठः। 2 'तदुद्देश्यकयत्नेन हि' इति ङ. पाठः।

3 इतोऽग्रे—'यद्वा भाष्येऽनार्जवे इति प्रकृत्यर्थविशेषणम्। अनार्जवं च पापमेव। क्रमणं प्राग्वदेव। केचित्त' इति ग. पाठः।

तात्पर्यम् । मूलस्य त्वयमाशयः—'क्रमणे' इत्यस्य 'उत्साहे' इत्येवाऽर्थ उचितः । 'कष्टायते' इत्युक्त्या गमनाद्यप्रतीतावपि, उत्साहप्रतीतेरि'ति । तदाह–उत्साहेऽर्थे इति । अत एव 'अत्यल्पमिदमुच्यते–'कष्टाय क्रमणे, इति । 'सत्र-कक्ष-कृच्छ्र-कष्ट-गहनेभ्यः कण्वचिकीर्षायामि'ति वाच्यमि' ति भाष्ये उक्तम् ।

अत्र 'चिकीर्षायां वाच्यायामि'ति, 'गम्यायामि'ति वाऽर्थः । तेन हि सूत्रस्याऽकर्त्तव्यत्वं लभ्यते । चिकीर्षा च उत्कटेच्छारूप उत्साह एव । एवञ्च तदनुरोधात्पूर्वोक्तभाष्यस्याऽप्येवं व्याख्यैवोचिता । अत एव 'कष्टाये'त्यस्य तादर्थ्यचतुर्थीत्वमाश्रित्य, अतिप्रसङ्गस्य अनभिधानादेव वारणेन, तद्वचनं भाष्ये प्रत्याख्यातम् ।

'कष्ट'शब्देन पापं कर्म लक्ष्यते । मुख्येऽर्थे उत्साहाऽसम्भवात् । तदाह–पापं कर्त्तुमिति । अन्तरङ्गत्वात् , योग्यताबलाच्च, 'कण्वचिकीर्षायामि'तिवार्त्तिकस्वारस्याच्च 'कर्त्तुमि'त्यस्यैवाऽन्तर्भावः । 'कष्टाय क्रमते' इति विग्रहे 'कर्त्तुमि'त्यर्थाऽध्याहारेण 'क्रियाऽर्थोपपदस्ये'ति चतुर्थी । 'वृत्तिसर्गे'ति तङ् ।

वृत्तिविषये इति । न च वृत्तिविषये एव पापाऽर्थत्वे, अन्यत्र तत्त्वे मानाऽभावेन, 'कष्टाय क्रमते' इति विग्रहोऽसङ्गतः, अस्वपदविग्रहस्यैव औचित्यादिति वाच्यम् । 'वृत्तिविषये' इत्यस्य सत्र-कक्ष-गहन-शब्दाऽभिप्रायेण प्रवृत्तेः । अत एव भाष्ये 'कष्टाय क्रामती'ति विग्रहं प्रदर्श्य, सत्रादिषु

'उत्साहे' इत्येवाऽर्थ उचितः । 'कष्टायते' इत्युक्त्या [1]यत्नाद्यप्रतीतावप्युत्साहप्रतीतेरिति नव्यानामाशयः । अत एव 'अत्यल्पमिदमुच्यते 'कष्टाय क्रमणे' इति । 'सत्र-कक्ष-कृच्छ्र-कष्टगहनेभ्यः कण्वचिकीर्षायामिति वाच्यमि'ति भाष्ये उक्तम्' इति ख. ङ. पाठः ।

१ 'तदाह' इत्यारभ्य 'प्रत्याख्यातम्' इत्यन्तः कः कुण्डलितः पाठः ।

२ उत्साहयत्नयोरसम्भवात्' इति ख. पाठः ।

३ 'शब्दाऽभिप्रायेणाऽप्रवृत्तेः' ? इति क. पाठः ।

---

1 'पादविक्षेपाद्यप्रतीतावपि' इति ग. पाठः ।

विग्रहो नाऽदर्शि। पापं चिकीर्षतीति । उत्पादनायाः कृञर्थत्वात् द्वितीया। प्रत्याख्याने तु 'पापाय क्रमते' इत्यादिर्विग्रहो बोध्यः । यद्यपि 'चिकीर्षा उत्साह' इति भाष्योक्तेः 'कष्टाय क्रामती'ति परस्मैपदमनुचितम्, वार्त्तिकाऽनुरोधेन सूत्रेऽपि 'क्रमणे' इत्यस्य उत्साहपरतैवोचिता च, तथापि भाष्याऽनुरोधेन वार्त्तिकेऽपि 'गम्यायामि'त्यर्थः । तदुद्देश्यकगमनरूपक्रमणेन हि स गम्य इति, क्रमेस्तदर्थत्वाऽभावान्नाऽनुपपत्तिः ।

कष्टम्—कृच्छ्रम् । 'कृच्छ्रगहनयोः कष' इतीडभाव इति दिक् ।

**कर्मणो रोमन्थतपोभ्याम्**। 'कर्मण' इति षष्ठी। प्रतिपादकत्वं सम्बन्धः षष्ठ्यर्थः । 'कर्मप्रतिपादकरोमन्थतपोभ्यामि'ति वाच्योऽर्थः । फलितमाह-कर्मभ्यामिति[2] । 'वर्त्तीति' ण्यन्तादत एव निपातनात् क्तिन् । धात्वर्थनिर्देशे इगन्तं वा । चरतेः सम्पदादित्वाद्भावे क्विप् ।

कैयट इति । तदुक्तं भाष्ये 'उद्गीर्णस्याऽवगीर्णस्य वा मन्थो रोमन्थ' इति । 'उद्गीर्णम्—उदरादुपर्याकृष्टम् । अवगीर्णम्—अपानान्निर्गतम् । मन्थः—चर्वणम् । उभयाऽन्वययोग्यत्वादि'ति व्याख्यातारः ।

**तपसः परस्मैपदञ्चेति** । अत्रैव सूत्रे वार्त्तिकमिदम् ।

---

१ इतोऽग्रे—'किञ्च न सन्नादीनां पापं वाच्यं, नापि तत्साधनं, येन शक्त्या, लक्षणया वाऽयं बुध्येत । वृत्तौ तु वार्त्तिकप्रामाण्यादेकार्थीभावाच्च बोधः' इति ग. पाठः ।

२ 'कर्मभ्यामिति । '[1]एतेन 'कर्मण' इत्यस्य पञ्चम्यन्तस्यैकवचनान्तत्वेन द्विवचनान्तेन सामानाधिकरण्याऽन्वयो दुर्लभः । सहविवक्षायां द्वन्द्वविधानात्प्रत्येकान्वयोऽपि दुर्लभ इति परास्तम्[2]' इति ख. ग. ङ. पाठः ।

---

1 'ननु कर्मण इत्यस्यैकवचनान्तत्वेन' इति ग. पाठः ।

2 'इति चेन्न । 'रोमन्थतपोभ्यां, कर्मणश्च प्रत्यय' इति बोधोत्तरमाकाङ्क्षावशात्पार्ष्ठिकस्तयोः प्रत्येकमभेदान्वय इत्यन्तरङ्गत्वादेकवचनमित्याहुः । 'द्वित्वे सौत्रमेकवचनमि'त्यन्ये' इति ग. पाठः ।

शब्दवैर । 'कर्मण' इति वर्त्तते । करणम्—अत्र क्रिया, न पारिभाषिकम् । व्याख्यानात् । नीहारेभ्यश्चेति । चात् अटा-अट्टा-शीका-कोटा-पोटा-सोटा-प्रुष्टा-प्लुष्टाशब्दानामपि ग्रहणमिति स्पष्टं भाष्ये । 'प्रुष्वा''प्लुष्वे'ति पाठाऽन्तरम् । पोटा-स्त्रीपुंसलक्षणा । अन्ये अट्टादयः क्रियावचनाः ।

सुखादिभ्यः । 'कर्तृ' इति लुप्तषष्ठीकं पृथक्पदम् । वेदना—ज्ञानम् । कर्त्तृत्वं च वेदनाऽपेक्षमेव । 'वेदनाकर्तृसम्बन्धि-सुखादि-प्रतिपादकेभ्यः सुखादिभ्य' इति वाच्योऽर्थः । फलितमाह—वेदनेत्यादि ।

'सुखदुःखाऽस्रकृच्छ्राणि[2], प्रतीपः, करुणस्तथा ।

कृपा चाऽलीकतृप्राश्च, कृपणाः[3] सोढसंयुताः'।। इति सुखादिः ।

पूजायामिति । 'नम'आदिभिः क्रमेणाऽन्वयः । चित्रीयते इति । अवयवेऽचरिताऽर्थं ङित्त्वमिति, क्यजन्ते तङानौ प्रवर्त्तयति । विस्मापयते इति । तथा[4] च मायामृगं प्रकृत्य भट्टिः—'ततश्चित्रीयमाणोऽसौ' इति ।

पुच्छभाण्ड । अत्राऽपि 'करणे' इत्यनुवृत्तेः क्रियाविशेषे । तदाह—पुच्छादिति । अत्र पुच्छादय एव स्वकर्मिकायाम् उदसनादिक्रियायां लाक्षणिकाः, ततः स्वार्थे णिङिति, 'णेरणौ' इति सूत्रे भाष्ये ध्वनितम् । कैयटेन च स्पष्टमुक्तम् । 'बहुलमिष्ठवच्चे'ति 'बहुल'ग्रहणात्, णिङि अपि इष्ठवत्त्वाट्टिलोपः । 'णाविष्ठवदि'त्येव वार्त्तिकाच्च ।

संवस्त्रयतीति । 'वस्त्रैः समाच्छादयती'त्यर्थः[5] ।

---

१ 'मुखान्निर्गतम्' इति ग. पाठः ।

२ 'प्रतीतः' इति ख. पाठः ।

३ 'कृपाणाः सोढ' इति ख. ङ. पाठः ।

४ 'तथा हि' इति क्वचित् पाठः ।

५ इतोऽग्रे—'वस्त्रशब्दः समाच्छादनवृत्तिः । प्रत्ययस्तु करणे एवेति बोध्यम्' इति ग. पाठः ।

**परत्वाद्वृद्धौ सत्यामपीति**[1]। न च नित्यत्वाल्लोप एवोचितः। शब्दाऽन्तरप्राप्त्या लोपस्याऽप्यनित्यत्वात्। व्यक्तिभेदमात्रेण शब्दाऽन्तरप्राप्तिग्रहणात्। ध्वनितं चेदं 'नेर्विश' इत्यत्र भाष्ये, इति निरूपितं परिभाषाप्रकरणे। 'रन्धयती'त्यत्र तु तस्याऽनित्यत्वान्न दोषः। **सापेक्षेभ्योपीति**। स्पष्टं चेदं 'सुप आत्मन' इत्यत्र भाष्ये। अत्रेदं बोध्यम्—'वाक्ये कर्मसामानाधिकरण्यान्माणवकस्य कर्मता। वृत्तौ तु मौण्ड्यरूपफलाऽऽश्रयत्वात्तत्त्वम्। निरूपितं चेदं सर्वसमासशेषे इत्याहुः।

**सत्यापयतीति**। आपुग्विधानसामर्थ्याट्टिलोपो न। एषां[2] लुङि अनभिधानम्। अत एव '**णेरापुङि**'ति भाष्यं सङ्गच्छते।

**घ इति**। निपातनात्कुत्वाऽभावः। **माधवस्तु** 'अच्'प्रत्ययमाह। हलन्तात् 'तत्करोती'ति णौ 'त्वाचयती'[3]ति।

रभावे, टिलोपे चोदाहरति—**पृथुमिति**। केवलटिलोपे उदाहरति—**ऊढिमिति**। **हृतिशब्दस्येति**। 'द्विः प्रयोगो द्विर्वचनमि'त्याश्रयणात् ढत्वादीनाम् असिद्धत्वेन, 'हृति'शब्दबुद्ध्या द्वित्वे, तस्यैव द्विःप्रयोग इति, अभ्यासे श्रुत्वसिद्धिः। **अनित्यमिति**। 'उभौ साभ्यासस्ये'ति

१ 'अपिनाऽरुचिर्बोधिता। नित्यत्वाल्लोप एवोचितः। न च शब्दाऽन्तरप्राप्त्या लोपोऽप्यनित्यः। नहीदं वचनं, किन्तूपदेशाऽतिदेशभेदादेकस्य कृताऽकृतप्रसङ्गित्वाऽभावादनित्यत्वं लोपस्येत्युक्तं, तत्तु 'रन्धयती'त्युदाहरणाऽनवलोकननिबन्धनम्। तस्माददन्तत्वनिपातनेन वृद्धौ कृतायां टिलोपो ज्ञाप्यते इत्येव सारमि'ति केचित्। वस्तुतोऽदन्तत्वनिपातनेनाऽतिदेशाऽभावेपि, व्यक्तिभेदमात्रीया शब्दाऽन्तरप्राप्तिर्गृह्यते। ध्वनितं चेदं 'नेर्विश' इत्यत्र भाष्ये' इति निरूपितं परिभाषाप्रकरणे' इति ग. पाठः।

२ 'एषां लुङि 'णौ चङी'ति ह्रस्वो न। संज्ञापूर्वकविधेरनित्यत्वात्' इति ख. ग. ङ. पाठः।

३ 'त्वाचयती'त्येके। 'संज्ञापूर्वकविधेरनित्यत्वात् वृद्ध्यभावे 'त्वचयती'त्येव।

लिङ्गादिति भावः। तदाश्रयेणाऽऽह—ढीत्यस्येति। औडिढदिति। द्वित्वे कृते, तदाश्रयस्य कार्यान्तरे कर्त्तव्येऽपि [1]असिद्धत्वनिषेधात्, न अभ्यासे चुत्वादीति भावः। अन्ये इति। अत्राऽरुचिबीजन्तु वैयाघ्रपद्यश्लोक[2]-स्थौजढत्तथे'तिविरोधः[3]। 'औजढदि'ति 'शर्पूर्वाः' इति सूत्रे कैयटे अभ्यासाऽकारसहितः पाठो दृश्यते[4]।

प्रकृत्यैकाजिति। तेनाऽतिदिष्टटिलोपो न। न च 'यस्ये'तिलोपाऽऽपत्तिः, प्रकृतिभावस्तु 'अनन्तरस्ये'तिन्यायेन टिलोपस्यैवेति वाच्यम्। इष्ठनि तस्याऽदृष्टत्वेन तदनतिदेशात्। 'नैकाऽजि'त्येव सिद्धे 'प्रकृत्ये'-त्युक्त्या 'यस्ये'तिलोपस्याऽपि बाधाच्च[5]। 'श्रायमि'त्येतद्वत् परत्वाद्वृद्धौ, परत्वादेव पुकि, सकृद्गतिन्यायेन, न टिलोपाऽल्लोऽपौ' इत्यपि केचित्।

यत्तु 'अचो ञ्णिती'तिसूत्रस्थभाष्यप्रामाण्येन[6] अस्या वृद्धेः, प्रातिपदिकाण्णौ अप्रवृत्तिध्वननेन, 'स्वयती'ति रूपमि'ति। तन्न। 'प्रापयती'ति-

'पुकैव सिद्धे, आपुग्विधानं नामधातुण्यन्ते क्वचिदुक्तन्यायेन 'अत उपधायाः' इति वृद्ध्यभावस्य ज्ञापकमपी'त्यन्ये। दरदमिति। दरदोऽपत्यमित्यर्थे 'द्व्यञ्मगधे'त्यणः 'अतश्चे'ति लुक्। ततो णौ 'भस्याऽढे' इति पुंवत्त्वमित्याशयः' इति ख. ग. ङ. पाठः।

१ 'स्थानिवत्त्वनिषेधात्' इति ख. ङ. पाठः।

२ 'वैयाघ्रपद्यवार्त्तिकस्थ' इति लघुशेखरे पाठः।

३ इतोऽग्रे—'भाष्ये त्विदं न दृश्यते इति, अनित्यत्वाऽऽश्रयणे दृढं मानं चिन्त्यम्' इति ख. ङ. पाठः।

४ इतोऽग्रे—'अतोऽपि 'उवर्णादेश एव णौ स्थानिवदि'ति कल्पना युक्ता' इति ग. पाठः।

५ 'बाधाच्चेत्याहुः' इति ग. पाठः।

६ 'भाष्यप्रमाण्येन संज्ञापूर्वकविधेरनित्यतया अस्या वृद्धेः' इति ख. ग. ङ. पाठः।

भाष्यप्रयोगविरोधात्। किञ्च हलिकल्योरदन्तत्वनिपातनपरभाष्यप्रामाण्या- दस्त्येव वृद्धिः। 'अचो ञ्णिती'ति सूत्रस्थभाष्यन्तु-'न ञ्णित्यत उपधाया' इत्येवोच्येत। किमर्थो योगविभागः?। सखिव्यञ्जनाद्यर्थ' इत्यादि, तत्, तदेकवाक्यतया प्रयोजनोपलक्षणत्वेन व्याख्येयमित्याहुः।

न्याय्यमिति। पररूपोत्तरं प्रकृतिभावेन टिलोपाऽप्राप्तेर्नित्यत्वं वक्तुमशक्यमिति भावः। 'यस्य लक्षणाऽन्तरेण निमित्तं विहन्यते, न तदनित्यमि'त्यस्य स्वीकारेऽप्याह[1]-अन्तरङ्गत्वादिति। वार्णपरिभाषा तु व्याश्रयत्वात्, अनित्यत्वाद्वा न प्रवर्त्तते इति बोध्यम्।

'व्याश्रयेऽपि वार्णपरिभाषाया 'इयाये'त्यादौ प्रवृत्तेरङ्गीकारात्, अनि- त्यत्वाऽऽश्रयणे दृढतरमानाऽभावाच्च'त्वापयती'त्याद्येव न्याय्यमि'ति परे।

भाष्यस्येति। वृत्तिकारैर्हि 'प्रकृत्यैकाजि'तिसूत्रे प्रेष्ठादय उदाहृताः। ते च 'आ भात्'सूत्रेण सिद्धाः। न च प्रादीनामसिद्धत्वात्तन्निबन्धन- टिलोपाऽप्रवृत्तावपि[2], प्रकृतिलक्षणटिलोपाऽऽपत्तिः। विप्रतिषेधे आभीया- ऽसिद्धत्वाऽभावात्पूर्वं टिलोपं बाधित्वा, परत्वात् प्राद्यादेशे, 'सकृद्गतावि'- ति न्यायेन पुनरप्रवृत्तेः। 'आदेशेन निरवकाशत्वात्प्रवृत्तेन, जातिपक्षे टिलोपो बाध्यते' इति तु कैयटः। अत एव 'आभात्'सूत्रप्रत्याख्यानेऽपि, न दोषः[3]। वरादौ रेफाद्युच्चारणसामर्थ्यादपि[4] तदभावः। 'श्रेष्ठः' 'ज्येष्ठ'

१ 'स्वीकारेणाऽऽह' इति ग. पाठः।

२ 'प्रकृतिभावाऽप्रवृत्तावपि' इति ग. पाठः।

३ इतोऽग्रे-'यत्तु 'अकारोच्चारणसामर्थ्यान्ने'ति। तन्न। 'औननदिति'वत् 'अपप्रदि'त्यभ्यासेऽकारश्रवणेन चारितार्थ्यस्य[1] वक्तुमशक्यत्वात्' इति ख. ङ. पाठः।

४ 'सामर्थ्यात्तदभाव इत्यन्ये' इति ग. पाठः।

1 'चारितार्थ्यात्। उपदेशोत्तरमतिदेशप्रवृत्तेः सत्त्वेन, उपदेशे फलकल्पना आवश्यकी' इति ग. पाठः।

इत्यादावपि अज्ययोरकारोच्चारणसामर्थ्यान्ने[1]'ति भाष्यम् । इदं च व्यक्तिपक्षे ।

जातिपक्षे तु कैयटोक्तरीत्या अपवादत्वात् टिलोपं बाधित्वा आदेशे तद्भावो बोध्यः । 'अशश्रादि[2]'त्यादौ यथा न चारितार्थ्यं तथा 'ऊन'धातौ निरूपितम् । 'स्रग्वान्', 'स्रजिष्ठः' 'स्रजयती'त्यत्र तु टिलोपाऽपवादस्य विन्मतोर्लुकस्तस्मिंल्लक्ष्ये प्रवृत्तत्वेन न[3] टिलोपः । न च विन्नन्ते प्राप्तटिलोपस्य बाधेऽपि, तत्प्रकृतौ प्राप्तस्य बाधे मानाऽभावः । 'सत्यपि सम्भवे बाधनं भवती'तिन्यायेन, जातिपक्षाऽऽश्रयणेन च, टिलोपद्वयस्याऽपि बाधात् । नान्ते तु 'नस्तद्धिते'इति भवत्येव । 'येन नाप्राप्ति'न्यायेन लुका 'टेरि'त्यस्यैव बाधात्, मतोर्लुक्प्राप्त्यवस्थायां तस्याऽप्रवृत्तेश्चेति स्पष्टं भाष्ये । अनेकाक्षु अस्या एव गतेरावश्यकत्वात् । भाष्यकृता तत्राऽप्यवशिष्टस्य टिलोपाऽनङ्गीकारात् ।

नन्वनया रीत्या पुंवत्त्वविषयेऽपि टिलोपो न स्यादिति चेन्न । पुंवत्त्वस्य टिलोपेन येन नाप्राप्त्यभावात् । 'भस्याऽढे' इत्यस्य प्रत्ययोत्पत्तेः पूर्वमेव इष्ठनि प्रवृत्तत्वेन, तादृशस्यैव णिच्यतिदेशेन, तत्काले[4] टिलोपा-

---

१ 'सामर्थ्यान्न । न च लोपेऽपि ण्यन्ताच्चङि 'अशश्रादि'त्यादावकारश्रवणाय तदुच्चारणं सार्थकम् । उपसर्गसमानाकारपूर्वपदस्य पृथक्करणेन 'शस्य'-शब्दादेव णिचो विधानेन, 'प्रशस्य'प्रकृतिकणिपरत्वाऽभावेन, तत्र श्राद्यादेशस्यैव दुर्लभत्वात् । एवञ्च 'प्रशस्य'स्थानिकतत्साहचर्येण संज्ञापूर्वकविध्य-नित्यतया वृद्धशब्दादेशेपि टिलोपो न । परत्वाट्टिलोपे, तत आदेशे, 'लक्ष्ये लक्षणस्ये'ति न्यायेन टिलोपाऽप्रवृत्तेश्च । एतेन—'धातुसंज्ञाप्रवृत्तिकाले एव पृथक्करणमि'ति पक्षे सार्थक्यमि'त्यपास्तम् । 'वृकज्येष्ठाभ्यां' 'श्रसो-वसीयः श्रेयस' इत्यादिनिर्देशाच्च । 'स्रग्वान्' 'स्रजिष्ठः' 'स्रजयती'त्यत्र' इति ग. पाठः ।

२ 'अशश्रात्' इति क. पाठः । 'अशश्रत्' इति ख. ग. ङ. पाठः ।

३ 'भ्रष्टाऽवसरत्वान्न टिलोपः' इति ग. पाठः ।

४ 'तत्काले टिलोपाऽप्रवृत्त्या तेनाऽबाधेन तत्प्रवृत्तेः' इति ग. पाठः ।

ऽप्रवृत्तेः। एतेन 'पुंवत्त्वस्य आभीयाऽसिद्धत्वाट्टिलोप एव स्यात्। किञ्च परत्वाट्टिलोपः स्यात्। अतिदिश्यमानकार्याणां देशाऽऽकाङ्क्षायामुपदेश-देशत्वेन, कार्याऽतिदेशेऽपि परत्वसत्त्वादि'ति परास्तम्। उक्तरीत्या पुंवत्त्वस्याऽन्तरङ्गत्वात्। अतिदेशसामर्थ्याच्च। आभीयाऽसिद्धत्वा-ऽनित्यत्वाच्च। अत एव 'लोहितयती'त्यादौ 'लोहिनी'शब्दाण्णिचि, पुंवत्त्वोत्तरं टिलोपः। अन्यथा तस्याऽसिद्धत्वान्न स्यादिति दिक्।

एवं करिष्ठादावपि बाधक'तृ'लोपस्य प्रवृत्तेर्न टिलोपः। तदुक्तम्—

**'इष्ठेमेयःस्वनेकाचोऽप्यवशिष्टस्य नेष्यते।**
**टिलोपो भाष्यकारेण प्रवृत्ते विन्मतोर्लुकि।**
**लुकोऽपवादभूतस्य तस्मिंल्लक्ष्ये प्रवर्त्तनात्।**
**करिष्ठादाविदं तुल्यं तृलोपस्य प्रवर्त्तनात्'** ॥ इति।

'इष्ठनि च्छन्दस्येव तृलोपप्रवृत्तेस्तत्रैवाऽतिदेश' इति मतमनुरुध्य 'इष्ठवदि'त्यत्र पुंवद्भावादिषु तृलोपो नोक्तो मूले, नाऽप्युदाहृतः। ध्वनितं चेदं 'रऋत' इति सूत्रे भाष्ये। तत्र हि 'मातयति' 'भ्रातयती'-त्युदाहृतम्। 'उणादीनामव्युत्पन्नत्वादत्र 'तृ'लोपो नाऽकारी'ति केचित्।

**अन्यथासिद्धीति**। अत एव 'तन्न वक्तव्यमि'ति भाष्ये नोक्तम्। अङ्गवृत्तपरिभाषया[2] वृद्ध्यभावे तु 'त्वदयति' 'मदयती'ति बोध्यम्।

**युष्मयतीति**। युवाऽऽवौ तु न। विभक्तिपरत्वाऽभावात्। 'युष्मयति'

१ इतोऽग्रे–'पुंवत्त्वस्य आभीयाऽसिद्धत्वाट्टिलोपो दुर्लभ' इत्यपास्तम्। उक्तरीत्या समानाऽऽश्रयत्वाऽभावात्। शास्त्राऽतिदेशपक्षे दोषाऽभावाच्च। एतेन 'परत्वाट्टिलोपः स्यात्, उपदेशोत्तरमतिदेशप्रवृत्त्याऽतिदिश्यमान-कार्याणां देशाकाङ्क्षायामुपदेशदेशत्वस्य कल्पनेन, कार्याऽतिदेशेऽपि परत्व-सत्त्वादि'ति परास्तम्' इति ग. पाठः।

२ 'संज्ञापूर्वकविधेरनित्यत्वात् वृद्ध्यभावे तु 'त्वदयति' इति ख. ग. ङ.पाठः। क. कुण्डलितः।

'अस्मयती'ति 'प्रत्ययोत्तरपदयोश्चे'त्यत्र भाष्ये स्फुटम्। टिलोप इति। परत्वादिति भावः। टेरित्यस्यैवेति। एवकारेण 'नस्तद्धिते' इत्यस्य व्यावृत्तिः। तेन सह येन नाप्राप्त्यभावात्। अनन्तरत्वाऽभावाच्च।

भत्वादिति। 'इष्ठवदि'त्यतिदेशेन भत्वात् 'श्वयुवे'ति सम्प्रसारणम्। न च तत्र 'नकारग्रहणं कर्त्तव्यमि'ति वार्त्तिकात्कथमिह सम्प्रसारणमिति वाच्यम्। टिलोपस्याऽऽभीयत्वेनाऽसिद्धत्वात्। 'अन' इत्यपकृष्य भाष्ये तत्प्रत्याख्यानाच्च। तत्र लोपस्य स्थानिवद्भावेन अन्त्वम्। अन्नन्तत्वं तु आर्थसमाजग्रस्तम्। 'श्वन्'शब्दत्वन्तु 'सर्वे सर्वपदादेशा' इति न्यायेन बोध्यम्। न च 'अतद्धिते' इति निषेधः। णेस्तद्धितत्वाऽभावात्। इष्ठनि परतः पूर्वस्य कार्याऽतिदेशेऽपि, णेस्तद्धितत्वाऽनतिदेशात्। न चैवं 'नस्तद्धिते' इति टिलोपस्याऽप्यनापत्तिः, तद्धितत्वाऽभावादिति वाच्यम्। असत्यपि तत्त्वे 'ब्रह्मिष्ठ' इत्यादौ तस्य दृष्टत्वमात्रेण प्र[1]कृतेतिदे[2]शेनाऽक्षतेः।

[3]अपरे तु 'बहुश्वन्'शब्दात्स्त्रियां डापि, टिलोपे, नान्तत्वाऽभावेन सम्प्रसारणाऽभावे, 'बहुश्वे'त्येव भाव्यमि'ति डाप्सूत्रे भाष्ये उक्तम्। तत्प्रामाण्येन सम्प्रसारणेऽनित्यत्वेन आभीयाऽसिद्धत्वाऽप्रवृत्तेरावश्यकत्वेन, कथं सम्प्रसारणम्। 'अन' इत्यपकर्षेऽपि, 'अल्लोपोऽन' इत्यस्य श्रूयमाणाऽनन्ते एव प्रवृत्त्या, तत्साहचर्येण, अर्थाऽधिकाराच्च अस्याऽपि

१ 'प्रकृते इष्ठनोऽभावेपि संभावनामात्रेणाऽतिदेशेनाऽक्षतेः' इति ग. पाठः।

२ इतोऽग्रे—'न च 'दविष्ठ' इत्यादावोर्गुणस्याऽपि दृष्टत्वेन इहाऽप्यतिदेशः स्यादिति वाच्यम्। तत्र कर्त्तव्ये सम्प्रसारणटिलोपयोराभीयत्वेनाऽसिद्धत्वात्। परत्वेन, 'अतिदिष्टादुपदिष्टं बलीय' इति न्यायेन च 'अचो ञ्णितो'ति वृद्धया बाधाच्च' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

३ 'अपरे तु श्वच्छब्दादिष्ठनि तद्धितपरत्वेन सम्प्रसारणाऽभावादिहाऽपि अभावाऽतिदेशेन संप्रसारणं दुर्लभम्। किञ्च 'बहुश्वन्'शब्दात् स्त्रियां डापि' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

श्रूयमाणाऽनन्ते एव प्रवृत्तेर्न दोषः। अपि च 'षपूर्वहन्नि'तिसूत्रे प्रकृतिभावस्य 'अल्लोपोऽन' इत्येतद्बाधकताया अप्युक्तत्वेन, 'नैकाऽजि'त्येव सिद्धे, प्रकृतिग्रहणेन प्रकृतिभावविधायके न्यायाऽप्रवृत्तेर्बोधनेन च, 'नस्तद्धिते' इत्यस्याऽपि प्रकृतिभावो न्याय्य इति, टिलोपोऽपि दुर्लभः। अत एव 'कनिष्ठः' 'कनयती'त्यादौ 'नस्तद्धिते' 'अल्लोपोऽन' इति च न।

यत्तु भाष्ये 'प्रकृत्यैकाजि'तिसूत्रे 'यस्ये'त्यादौ प्रकृतिभाव' इत्युक्तम्। तत्र 'आदि'शब्दः प्रकारे[1], इति न विरोधः। प्रकाराऽन्तरेणाऽपि तद्भाष्यं भाष्यप्रदीपोद्द्योते योजितम्। एवञ्च वृद्धौ 'श्वानयति' इति प्राहुः[2]।

**शुनयतीति**। सम्प्रसारणे पूर्वरूपं बाधित्वा वार्णादाङ्गन्यायेन प्राप्तः[3] टिलोपो न। 'शुशुवतुरि'त्यादौ सम्प्रसारणे कृते, अनेन न्यायेन 'एरनेकाच' इति यणि, रूपाऽसिद्धया, पूर्वरूपविषयेऽनित्यत्वेन तन्न्यायाऽप्रवृत्तेः।

आहुरिति। अत्राऽरुचिबीजन्तु 'ब्रह्मवत्'शब्दादिष्ठनि, मतोर्लुकि, 'टेरि'त्यस्याऽप्रवृत्तौ, 'नस्तद्धिते' इत्यस्य प्रवृत्तेर्दृष्टत्वेन, 'इष्ठनि तस्याऽदृष्टत्वादि'त्यसङ्गतिः। किञ्च 'ब्रह्मिष्ठ इत्यादौ' इत्यप्यसङ्गतम्। तथा हि केवलादिष्ठनेव दुर्लभः। अगुणवचनत्वात्। मत्वन्तादिष्ठनि, मतोर्लुकि, लुका 'टेरि'त्यस्य प्रवृत्तिमात्रबाधनेन लुगुत्तरं तदप्रवृत्त्या,'परत्वादि'त्यादि-

१ 'आदिशब्दः प्रकारे। लोपत्वेन च सादृश्यमिति न विरोधः' ख.ग.ङ.पाठः।

२ इतोऽग्रे—'संज्ञापूर्वकत्वेन तदभावे तु 'श्वनयती'ति। यदि 'अभावाऽतिदेशो नाऽङ्गीक्रियते' इति विभाव्यते[1], तदाऽस्तु 'शुनयती'ति। वृद्धिपक्षेऽप्येकदेशविकृतन्यायेन अन्त्वादिति प्राहुः' इति ख. ग. ङ. पाठः।

३ 'प्राप्तष्टिलोपो न। 'अकृतव्यूह'परिभाषया, 'भ्रष्टाऽवसर'न्यायेन वेति बोध्यम्' इति ख. ग. ङ. पाठः।

1 'विभाव्यते, तदा वृद्ध्यभावपक्षमादायाऽस्तु 'शुनयती'ति। 'यदि वृद्धिर्नस्यात्संप्रसारणं स्यादि'ति संभावनासत्त्वेनाऽकृतव्यूहपरिभाषया सर्वथैव वृद्ध्यभावेन वा 'शुनयती'ति प्राहुः' इति ग. पाठः।

असङ्गतम् । किञ्च[1] 'नस्तद्धिते' इत्यस्य 'टेरि'त्यपेक्षया परत्वस्य भाष्ये उक्तत्वादिदमयुक्तमि'ति[2] । नेत्येके इति । 'टिलोपेन असो लोपे, 'वस्'त्वं दुर्लभम्, 'राजकीयमि'त्यादौ 'अन्'त्ववत् । एवञ्च सम्प्रसारणप्राप्तेरेव अभावेन, 'अङ्गवृत्त'परिभाषोपन्यासो वृथे'त्यरुचिबीजम्[3] । इदमेवाऽग्रिम-मतद्वयेऽरुचिबीजम् । रूपन्तु 'विद्वयती'त्येवे'ति वदन्ति ।

उदीचयतीति । उपसर्गस्य पृथक्करणात् 'अच्'शब्दाण्णिजिति 'प्रकृत्यै-काजि'ति प्रकृतिभावाट्टिलोपो नेत्याहुः । 'उद ईदि'तीत्त्वम् । अतिदेशेन भत्वात् । 'अच्'शब्दस्य श्रूयमाणत्वाच्च[4] । उदैचिचदिति । णिलोपस्य 'द्विर्वचनेऽची'ति स्थानिवत्त्वात् 'चि'शब्दस्य द्वित्वम् । नन्वाटो ण्यन्ताऽवय-वत्वात्, चङन्ताऽवयवत्वाद्वा, आटाऽचो व्यवहितत्वात्, 'उद ईदि'तीत्त्वं दुर्लभमिति चेन्न । अन्तरङ्गत्वात्पूर्वमेव ईत्त्वप्रवृत्तेः ।

प्रतीचयतीति । 'अच' इति अल्लोपे, 'चौ' इति दीर्घः ।

---

१ 'केचित्तु नस्तद्धिते इत्यस्य' इति ग. पाठः ।

२ 'इदमयुक्तमित्यरुचिबीजमाहुः' इति ग. पाठः ।

३ इतोऽग्रे—'अन्तरङ्गत्वात्पूर्वरूपमि'त्यप्यसङ्गतम् । वार्णादाङ्गस्य बलीयस्त्वात्' इति ख. ङ. पाठः ।

४ इतोऽग्रे—'मत्वन्तोदकशब्दादिष्ठनि, मतुब्लुकि, उक्तरीत्या टिलोपाऽभावे, इष्ठनि, 'उद ईदि'तीत्त्वस्य दृष्टत्वाच्च । नन्वाटो ण्यन्ताऽवयवत्वात्, चङन्ता-ऽवयवत्वाद्वा, आटा अचो व्यवहितत्वात्, 'उद ईदि'तीत्त्वं दुर्लभम् । न च णिलोपे एकदेशविकृतन्यायेनाऽच एवाऽङ्गत्वादच्ग्रहणं भविष्यति । एवं ह्याट एवेत्त्वापत्तिः । चङन्ताऽवयवत्वे दोषाच्चेति चेन्न । अन्तरङ्गत्वात्पूर्वमेव ईत्त्व-प्रवृत्तेः । 'अकृतव्यूह'परिभाषा त्वनित्येत्याशयः । केचित्तु 'अकृतव्यूह-परिभाषया न भवत्येव ईत्त्वम् । अपि च प्रागुक्तरीत्या धातुसंज्ञायामेव पृथक्करणात्, णिचः समुदायादेव विधानेन, टिलोपोऽपि दुर्वार' इत्याहुः । तच्चिन्त्यम्' इति ग. पाठः ।

प्रत्यच्चिचदिति । 'अच' इति अल्लोपे,'चि'शब्दात्पूर्वमटि, यणादेशः । न च अल्लोपस्याऽसिद्धत्वादाट् स्यात् । व्याश्रयत्वात् । इकोऽसवर्णे इति । 'न समासे' इति तु न । पृथक्करणेन समासनिवृत्तेरुक्तत्वात् ।

सम्यच्चिचदिति । सम्यादेशस्य स्थानिवत्त्वेन उपसर्गत्वात्, पृथक्करणम्[1] । सम्यादेशेनाऽपहारेऽपि, एकादेशेनाऽनपहारात् । पृथक्करणेन समासस्यैव निवर्त्तनात्, उत्तरपदपरत्वाऽभावेऽपि, अन्तरङ्गत्वात् जातः सम्यादेशो न निवर्त्तते । 'अकृतव्यूह'परिभाषाया अनित्यत्वात् । चकारस्याऽञ्चतित्वन्तु स्थानिवद्भावेन बोध्यं 'समीचयती'त्यादौ । अत एव 'तिर्यक्'शब्दाण्णौ, तिरसोऽनुपसर्गत्वात्पृथक्करणाऽभावेन, अनेकाच्त्वात् टिलोपेऽपि[2], अन्तरङ्गत्वात्पूर्वमेव तिर्यादेशः। तदेवाऽऽह–असिद्धत्वादिति । तत्काले, ततः पूर्वं वा अप्राप्तत्वादिति भावः ।

न च 'तिरस्तिर्यलोपे' इत्युक्तेर्लोपे कथं तिरिः । अनन्तरत्वेन 'अच' इति लोपस्यैव तत्र प्रतियोगित्वेन ग्रहणात् । स्थानिवत्त्वेन तिरेरव्ययत्वेऽपि,

---

१ 'पृथक्करणेऽपि 'समः समी'ति भवत्येव । न च पृथक्करणेन समासस्यैव निवर्त्तनादुत्तरपदपरत्वाऽभावः । ज्ञापकस्य विशेषाऽपेक्षत्वेन, धातुसंज्ञाप्रयोजके प्रत्यये, तन्निमित्तकार्ये च पृथक्करणेऽपि, सम्यादेशे पृथक्करणे मानाऽभावात् । प्रकृतिभावस्त्वटोऽकारान्न्याय्य इति न दोषः । उपजीव्यविरोधेन तस्य समानाऽवयवत्वात्प्रत्यासत्त्या इगचोः समाससम्बन्धित्वे एव 'न समासे' इत्यस्य प्रवृत्तिरिति, नाऽत्र तेन निषेधः शङ्क्यः । चकारस्य अञ्चतित्वन्तु' इति ग. पाठः ।

२ 'टिलोपेऽपि तिर्यादेशो भवत्येव । युक्त्यन्तरमप्याह—असिद्धत्वादिति । तथा च अन्तरङ्गत्वात्पूर्वमेव तिरिरिति भावः । 'अकृतव्यूह'परिभाषा तु न प्रवर्त्तते । अस्मदुक्तयुक्तेः । न च तिरसस्तिर्यलोपे' इत्युक्तेर्लोपे कथं तिरिः' इति ग. पाठः ।

*'अव्ययानां भमात्रे' इति टिलोपो न[1]। 'नस्तद्धिते' इति सूत्रे भाष्येऽस्य* पठितत्वेन, परया वृद्धया बाधात्। अत एव 'यस्ये'ति लोपोऽपि न।

अनेन सर्वटिलोपवारणेऽपि माधवोक्ताम् अभ्युच्चययुक्तिमाह—असिद्धवदिति। तदनित्यत्वेऽप्याह—अङ्गवृत्तेति। वृद्धिस्तु भवत्येव। तस्या अनित्यत्वादिति भावः। देवद्र्यञ्चमिति। 'विश्वग्देवयोरि'त्यद्र्यादेशः[2]।

आमुमुमुआयदिति। न च मुत्वस्याऽसिद्धत्वेन 'द'शब्दबुद्धया 'मु'शब्दस्य द्वित्वेऽपि, 'द'शब्दस्यैव द्विःप्रयोगः स्यादिति वाच्यम्। 'पूर्वत्राऽसिद्धीयमद्वित्वे' इति निषेधात्। स्वयतीति। 'अव्ययानामि'ति टिलोपः। अतिदेशेन भत्वात्। 'प्रकृत्यैकाजि'ति निषेधस्तु 'टेरि'त्यस्यैवे'त्युक्तम्।

---

१ 'टिलोपो न। 'टेरि'ति जातटिलोपस्याऽसिद्धत्वात्। अस्यापि 'नस्तद्धिते' इति सूत्रे भाष्ये पठितत्वेन, आभीयत्वात्। परया वृद्धया बाधाच्च। अत एव 'यस्ये'ति लोपोऽपि न। न च 'प्रातिपदिकाद्धात्वर्थे' इत्यनेन णिच्संनियोगशिष्टेष्ठवद्भावप्राप्तटिलोपस्याऽन्तरङ्गत्वात्कथं परया वृद्धया बाधः। 'बहुल'-ग्रहणेन तस्याऽसंनियोगशिष्टत्वबोधनात्। अत एव णिङि तत्प्रवृत्तिः। 'णाविष्ठवदि'ति त्वस्यैव प्रपञ्च इति बोध्यम्। न च आभीयाऽसिद्धत्वे भाष्योक्तं 'लोहिनीमाचष्टे लोहितयती'ति टिलोपोदाहरणमसङ्गतं स्यात्। कार्याऽतिदेशेन पुंवत्त्वस्याऽऽभीयत्वात्। प्राधान्येन कार्याऽतिदेशस्यैव युक्तत्वात्। एवञ्चाऽनित्यत्वादेतद्विषयेऽसिद्धत्वाऽप्रवृत्तिरावश्यकी। सूत्रकारोक्तगणसूत्राऽऽरम्भे तु आभीयत्वाऽभावात्, तदप्राप्तिरेवेत्यरुचेराह—अङ्गवृत्तेति' इति ग. पाठः।

२ इतोऽग्रे—'इह 'आचष्टे' इत्यर्थेऽपि 'आख्यानात्कृत' इत्यादि न[1]। कुल्लुक्-संनियोगशिष्टतया श्रूयमाणकृत्येव तत्प्रवृत्तेः। एतेन 'देवानञ्चयती'त्युचितमित्यपास्तम्' इति ख. ङ. पाठः।

---

1 'आख्यानात्कृत' इत्यस्य प्रवृत्तिस्तु न। कुल्लुक्साहचर्येण श्रूयमाणकृत्येव तत्प्रवृत्तेरित्याहुः' इति ग. पाठः।

'सर्वस्य प्रकृतिभाव' इति भाष्यरीत्या 'स्वरयती'त्युचितम्[1] ।

असस्वदिति । 'णौ कृतस्य टिलोपस्य स्थानिवत्त्वात् 'स्वर्'शब्दस्य द्वित्वमि'ति मतेनेदम् । वस्तुतः अज्झलादेशत्वान्न स्थानिवत्त्वम् । अतो णिच्सहितस्यैव द्वित्वम् । तदाह—असिस्वदिति ।

भावयतीति ।'इष्ठस्य यिट् चे'तीष्ठनि भूभावविधानात् बहोर्भूभावः । 'णौ' इत्युपमेये सप्तमीनिर्देशेन, इष्ठनः कार्यस्याऽनतिदेशान्न यिट् ।

ननु 'संनियोगशिष्ट'न्यायात् 'भू'भावोऽपि दुर्लभः। किञ्च 'भू च बहोरि'ति वाक्ये 'इष्ठेमेयःसु'इति न सम्बध्यते । गौरवात् । अनुवृत्तस्य लोपेऽन्वयेन, पुनर्निमित्ततयाऽन्वये मानाऽभावाच्च ।'संनियोगशिष्ट'न्यायेनैवाऽतिप्रसङ्गभङ्गात्[2] । एवञ्च तस्य इष्ठनि कार्यत्वाऽभावान्नाऽतिदेश[3] इति चेन्न । 'भू च बहोरि'त्यत्र 'बहु'ग्रहणसामर्थ्येन संनियोगशिष्टत्वाऽभावात् । प्रत्ययाऽऽदेशत्वभ्रमस्तु पृथक्निर्देशसामर्थ्यात्, व्याख्यानाच्च न । एवञ्च 'भू'आदेशविधायके 'इष्ठेमेयःसु' इत्यस्य सम्बन्ध आवश्यक एव । ध्वनितं चेदं 'टेरि'ति सूत्रे कैयटे ।

बहयतीत्यन्ये इति । अस्याऽऽशय उक्तः । 'अन्ये' इत्यरुचिग्रस्तश्च ।

---

१ 'सर्वलोपस्य 'प्रकृत्येकाजि'ति निषेध' इति सिद्धान्ते तु 'स्वरयती'त्याद्येव बोध्यम्' इति ख. ग. ङ. पाठः ।

२ 'अतिप्रसङ्गभङ्गाच्च' इति ग. पाठः ।

३ 'तस्य इष्ठनि कार्यत्वाऽभावान्नाऽतिदेशः । 'एतेन 'इष्ठवदि'ति कार्याऽतिदेशः । प्राधान्यात् । एवञ्चेदमेव 'भू'भावविधायकम् । एवञ्च संनियोगशिष्टत्वाऽभावः स्पष्ट एव । शास्त्राऽतिदेशेऽपि इष्ठनि दृष्ट'भू'भावविधायकशास्त्रमात्राऽतिदेशान्न दोष' इत्यपास्तम् । इष्ठन्रूपनिमित्तवैकल्यमात्रप्रयुक्तटिलोपाद्युपदेशाऽप्रवृत्तावतिदेशस्य चारितार्थ्येन, संनियोगशिष्टन्यायेनाऽपि बोधिताऽप्राप्तौ तद्व्यापारे मानाऽभावाच्चेति चेन्न । 'भू च बहोरि'त्यत्र' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

अत एव कैयटेन 'भावयती'ति स्वमतेनोदाहृत्य 'बह्यती'त्येकीयमतत्वेन उपन्यस्तम्। हरदत्तस्तु विपरीतं वदन् चिन्त्य एव।

स्रग्विणं स्रजयतीति। लुङि 'असस्रजदि'ति। अग्लोपित्वात्सन्वत्त्वादिकं न। अगनग्लोपेऽपि अग्लोपित्वस्य भाष्ये स्वीकृतत्वात्। 'अज्झलादेशस्तु नाऽजादेश' इति 'अचः परस्मिन्नि'त्यत्र भाष्ये।

ननु इदमयुक्तम्, 'णौ चङी'ति सूत्रे 'नाऽग्लोपी'ति प्रत्याहारग्रहणस्य 'वृद्धेर्लोपो बलीयानि'त्यर्थे ज्ञापकत्वं वदतो भाष्यकृतः प्रामाण्यात् इकारोकारोपधादौ णेरभावस्य कैयटादिभिरुक्तत्वात्। न च इकारोकाराऽन्ते लोपस्य स्थानिवत्त्वादेव ह्रस्वाऽप्राप्तौ, अक्ग्रहणवैयर्थ्याद्भाष्यं प्रौढिवाद इति वाच्यम्। चङ्परनिर्ह्रासे तन्निषेधादिति चेन्न। 'स्रग्विन्'-

---

१ 'अज्झलादेशोऽजादेशस्तु न। 'अचः परस्मिन्नि'त्यत्र 'अच' इति षष्ठ्याः स्वप्रकृत्यर्थोऽच्येवाऽन्वयात्। स्पष्टं चेदमचः परस्मिन्नित्यत्र भाष्ये' इति ग. पाठः।

२ 'तन्निषेधात्। अत एव 'स्मृति'शब्दादिभ्यो णिचि, चङि, ह्रस्वो भवत्येवेति चेन्न। एतद्भाष्यप्रामाण्येनाऽत्र सूत्रेऽग्लोपग्रहणेन लुको ग्रहणात्। अत एव 'श्रीमती'शब्दाण्णिचि, लुङि, 'अशिश्रयदि'ति वक्ष्यमाणं सङ्गच्छते।

एतेन 'तुरिष्ठेमेयःसु' 'टेरि'त्यनयोर्मध्ये 'विन्मतोरि'ति सूत्रमस्तु। योगविभागसामर्थ्याच्च नाऽऽभीयाऽसिद्धत्वम्। एतेन स्थूलवच्छब्दादिष्ठनि 'स्थविष्ठ' इत्यादौ गुणसिद्धिरि'त्यपास्तम्। न च कैयटाद्युक्तरीत्या इकारोकारोपधाण्णिजभावेनाऽत्रापि णिजभाव एवाऽस्तु। 'लोप'पदसङ्कोचेनैव ज्ञापकपरभाष्यस्य साम्राज्ये, प्रथमोपस्थितणिज्बाधे मानाऽभाव इति भावः।

किञ्च विन्नन्ताण्णिजभावे 'विन्मतोरि'तिसूत्रे विन्ग्रहणवैयर्थ्याऽऽपत्तिः। तथाहि विन्विषये मतुपोऽपि पूर्वमुपपादितत्वेन, मतुबन्तमादाय 'स्रजिष्ठ' इत्यादिसिद्धेः। न च विन्नन्तादिष्ठनि 'स्रग्विष्ठ' इत्यनिष्टाऽऽपत्तिः। 'गुणवचनादेवे'ति नियमेन विन्नन्तादिष्ठनोऽभावात्। एतज्ज्ञापकसिद्ध एव

शब्दाण्णिचि, 'विन्'लोपे, वृद्ध्यभावेन, 'नाऽग्लोपी'त्यस्य प्रवृत्तौ फलाऽभावेन, ज्ञापकस्य सुस्थत्वात्। इतो णेरभावे हि लुग्विधायके 'विन्'-ग्रहणं व्यर्थमेव स्यात्। विन्विषये मतोः सत्त्वेन, तल्लुकैव 'स्रजिष्ठ' इत्यादिसिद्धेः। विन्नन्तात्तु न इष्ठनादिः। 'अजादी गुणवचनादेवे'त्युक्तेः।

'मायाविन्''मेधाविन्'भ्यां णिचि, विनो लुकि, 'यस्ये'ति लोपे, 'माययती'त्यादीति माधवः। यद्यपि परत्वात्पुक् प्राप्नोति, तथाऽपि आगमशास्त्राऽनित्यत्वान्नेति तदाशयः। अत एव 'नाऽग्लोपी'ति अग्ग्रहणस्योक्तार्थज्ञापकता भाष्योक्ता सङ्गच्छते। पुकि हि 'अममायापदि'त्यादौ ह्रस्ववारणाय अग्ग्रहणमावश्यकमिति, सा भज्येत। मम 'तु अममायदि'त्यत्र अल्लोपेनैव तन्निर्वाहात्, प्रत्याहारग्रहणवैयर्थ्यं स्पष्टमेव।

नन्वेवं 'स्रजयती'त्यत्रोपधावृद्धिः स्यादत आह—संज्ञेति। अत एव 'टेरि'ति सूत्रे अवादेशोत्तरमुपधावृद्धिर्न कृता भाष्ये[1]। अत एव 'वृक्षव् करोती'त्याष्टमिकभाष्यप्रयोगः सङ्गच्छते। टिलोपस्य स्थानिवत्त्वं तु न।

---

तत्रेष्ठन्। न च स्रग्विमच्छब्दादिष्ठनि, णिचि, मतोर्लुगुत्तरं विनो लुगर्थं तत्। न च टिलोपस्येव विनो लुको बाधः। मतुप्लुक्प्रवृत्तिकाले टिलोपवदस्मात् मतुप्लुको बहिरङ्गाऽसिद्धत्वादप्राप्तत्वेन, तद्बाधे मानाऽभावादिति वाच्यम्। अत्रैव विन्लुकश्चारितार्थ्येन, टिलोपबाधाऽनापत्त्या, 'प्रकृत्यैकाजि'तिसूत्रस्थभाष्यविरोधाऽऽपत्तेः। तस्मान्मतुब्लुको बहिरङ्गाऽसिद्धत्वादत्र विनो लुगभावः सिद्धान्तेऽप्येष्टव्यः। विन्नन्ताण्णिचि तु टिलोपे 'स्रग्वयती'तिरूपवारणाय तत्सार्थक्यं स्पष्टमेव। अन्तरङ्गपरिभाषाबाधेन चारितार्थ्यकल्पनाऽपेक्षया, णिच्प्रवृत्तिबोधनेनैव चारितार्थ्यस्य वक्तुं युक्तत्वात्। अत एव यातीति 'याः'। तस्मान्मतुपि, तत आख्यानणिचि 'यापयति' 'अधीयपदि'-त्यादौ ह्रस्वादिसिद्धिः। मायाविन्मेधाविन्भ्यां णिचि, विनो लुकि 'यस्ये'ति-लोपे 'माययती'त्यादी'ति माधवः। अन्ये तु पुकमेवेच्छन्ति' इति ग. पाठः।

१ 'दवयती'त्यत्राऽवादेशोत्तरमित्यर्थः।

'न पदान्ते'ति निषेधात्। अन्तर्वर्त्तिविभक्त्या 'वृक्षे'त्यस्य पदत्वात्[1]। 'अङ्गवृत्तपरिभाषया न वृद्धिरि'ति तु[2] युक्तम्। तस्याऽर्थस्य भाष्येऽदर्शनात्। (अत[3] एव मतुब्लुक्यपि 'स्रजयती'त्येवेत्याहुः)। ध्वनितं चेदं 'विन्लुक् च णावतिदेशस्य प्रयोजनमि'ति वदता भाष्यकारेण[4]।

ननु 'असस्रजदि'त्यत्र णिलोपे, भत्वाऽभावेनाऽन्तर्वर्त्तिविभक्त्या पदत्वात्कुत्वं स्यादिति वाच्यम्। भत्वस्य निवृत्तौ मानाऽभावात्। न[5] च 'अकृतव्यूह'परिभाषया तन्निवृत्तिः। तस्या अनित्यत्वात्।

श्रीमतीमिति। णिचि, पुंवत्त्वे, मतोर्लुक्। अशिश्रयदिति। 'णावच आदेशो ने'ति 'श्री'शब्दस्य द्वित्वे, उत्तरखण्डे वृद्धयायादेशयोः कृतयोः, नञ्घटिताऽनित्यत्वेन निषेधाऽभावे, ह्रस्वत्वमिति भावः। एतच्च माधवा-

---

१ 'पदान्तत्वात्' इति ग. पाठः।

२ इतोऽग्रे—'केचित्तु वृद्ध्यभावकल्पनावश्यकत्वेनाऽग्लोपीतिनिषेधप्रवृत्तावत्र फलाऽभावेन अक्ग्रहणज्ञापकता सुस्थेति, लोपशब्देन लुको ग्रहणे फलाऽभावो, मानाऽभावश्च। न च मायाविमेन्धाविन्भ्यां णिचि, विन्लुकि, 'अममायापदि'त्यादौ चारितार्थ्यम्। आगमशास्त्राऽनित्यत्वेन पुगभावकल्पनेन सिद्धेः। संनिपातपरिभाषयैव ह्रस्ववारणाच्च। 'अशिश्रयदि'ति तु नञ्घटिताऽनित्यत्वेन निषेधाऽप्रवृत्त्या सुसाधमि'त्याहुः। तन्न। पुक्शास्त्रबाधकल्पनाऽपेक्षया, गुणभूतलोपपदसङ्कोचस्यैव युक्तत्वात्। संनिपातपरिभाषाऽभावे 'अजिघ्रपदि'त्यादौ ह्रस्वाऽनापत्तेश्च। तस्माद्ध्रस्वे 'अममायदि' त्येवेत्याहुः' इति ग. पाठः। ३ अयं पाठः क. नास्ति।

४ इतोऽग्रे 'पदत्वकुत्वयोः श्रूयमाणे णिचि भत्वेन बाधात्, लुप्तेऽपि अष्टाऽवसरत्वादप्रवृत्तेः। भत्वस्य निवृत्तौ मानाऽभावाच्च। न चाऽकृतव्यूहपरिभाषया तन्निवृत्तिः। तस्या अनित्यत्वात्' इति ग. पाठः।

५ 'न च' इत्यारभ्य 'अनित्यत्वात्' इत्यन्तः ख. ग. ङ. पाठः। क. कुण्डलितः।

ऽनुरोधेनोक्तम् । 'अशिश्रायदि'त्युचितम् । 'श्री'शब्दात्तु णौ 'अशिश्रयदि'ति । 'स सञ्चरिष्णुर्भुवनाऽन्तरेषु यां यदृच्छयाऽशिश्रियदाश्रयः श्रियाम्' इति माघकाव्ये 'अशिश्रयदि'ति पाठोऽयुक्तः । 'श्रीमतीमकरोदि'-त्यर्थोऽपि न समञ्जसः । 'तामाश्रितवानि'त्यर्थस्यैव सामञ्जस्येन प्रतीतेः । तत्पाठे श्रद्धाजाड्ये तु 'श्रीसदृशीमकरोदि'त्यर्थोऽस्तु । लक्ष्मीसादृश्यं शोभावत्त्वेनेत्यास्ताम् । श्रीमच्छब्दस्य नित्यसापेक्षत्वात् 'दयितां श्राययती'त्यपि भवति । अत एव 'दोग्धारं करोति दोहयति देवदत्तं यज्ञदत्त' इत्युदाहृतं माधवेन । किञ्च वृत्तौ करोत्यर्थाऽभिधायित्वेन क्रियावाचित्वसम्पत्त्या, विशेष्यीभूतकरोत्यर्थं प्रति श्रीमत्तादीनां फलत्वेन, तदाश्रयत्वात्कर्मत्वेन द्वितीया । अत एव 'व्याकरणस्य सूत्रं करोती'ति विग्रहेऽपि 'व्याकरणं सूत्रयती'त्यत्र व्याकरणस्य कर्मत्वमित्याहुः ।

पयस्विनीम्-अपपयसदित्यत्र विन्मतोर्लुकि, अग्लोपित्वात्सन्वद्भावाऽऽदिकं न[3] । गोमच्छब्दाण्णिचि, 'प्रापयती'ति भाष्योदाहरणात्-'अचो ञ्णिती'त्यस्याऽभावे मानाऽभावेन, वृद्धौ-'गावयती'ति युक्तम् । लुङि 'अजुगावत्' । 'स्रजमि'ति विग्रहे 'स्रजयति', 'असिस्रजदि'ति । एवं पय आचष्टे-'अपपयत्' । 'अपीपयदि'दिति तु पयसवयवीभूत'पय्' इत्यस्याऽनुकरणे 'पय्शब्दानाचष्टे' इत्यर्थक 'पय आचष्टे' इति विग्रहे अग्लोपित्वाऽभावाद्बोध्यम् । गामाचष्टे 'गावयति', 'अजूगवदि'ति ।

स्थवयतीति । अत्र गुणे 'अचो ञ्णिती'ति वृद्धिः, अवादेशे उपधा-

१ 'दयितां श्रययति' इति ख. ग ङ. । 'दयितामशिश्रयदित्यपि' इति ग. पाठः ।

२ 'वृत्तेः' इति ग. पाठः ।

३ 'सन्वद्भावादिकं नेति प्राञ्चः' इति ग. पाठः ।

४ 'संज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभावः' इति ग. पाठः ।

५ 'गावयती'ति युक्तमिति मतान्तरं कौस्तुभे स्पष्टम्' इति ग. पाठः ।

६ 'अचो ञ्णितीति वृद्धिः प्रसक्ता' इति ख. ग. ङ. पाठः ।

वृद्धिश्च प्रसक्ता, अङ्गवृत्तपरिभाषया न। अत एव 'दवयती'ति 'टेरि'तिसूत्रे भाष्ये उदाहृतम्। एतेन 'दुरीणो लोपश्चे'ति 'दूर'शब्दस्य साधनात्, 'दुरि'त्यस्य पृथक्करणादुक्तरूपाऽसिद्धिरि'त्यपास्तम्। उणादीनाम् अ¹व्युत्पन्नत्वात्। यवयतीति। 'स्थूलदूरे'ति यणादिलोपगुणौ। 'अङ्गवृत्त'परिभाषया सम्प्रसारणं न। अनन्तत्वाऽभावाच्च। कनयतीति। अत्रोप²धावृद्धिर्न, 'दवयती'तिवत्। नेदयतीति। नेदसाधौ उत्तरकन्साहचर्याद्वलन्तावेव। एतेन 'परत्वाट्टिलोपे, तत आदेशे, 'लक्ष्ये लक्षणस्ये'तिन्यायेन पुनष्टिलोपाऽप्रवृत्त्या, 'नेदिष्ठः' 'नेदयती'त्याद्यसिद्धिरि'ति परास्तम्। (ए³वञ्च लुङि 'अनीनिददि'त्येवेत्याहुः)। उपसर्गस्ये⁵ति। उपसर्गस्य पृथक्करणेन विशिष्टस्य प्रातिपदिकत्वाऽभावात्तत्राऽतिदेशाऽप्रवृत्तिरिति भावः।

⁴ज्यापयतीति। ज्येष्ठ' इत्यत्र अज्यादेशे अकारोच्चारणसामर्थ्याल्लोपाऽभावं वदता भाष्यकारेणाऽस्माण्णिचोऽनभिधानं ध्वनितम्। अन्यथा 'अजज्यदि'त्यत्र अभ्यासे अकारश्रवणेन तच्चारितार्थ्यं स्पष्टमेव। 'लुङि एवाऽनभिधानमि'त्यन्ये। अत्रेदं बोध्यं-'तितउमाचष्टे' इति विग्रहे 'तितउ'-शब्दाण्णिचि वृ⁶द्धिष्टिलोपश्च प्राप्तौ। तत्रोपधावृद्धेराख्यानणिचि अनङ्गी-

१ 'अव्युत्पन्नत्वाच्च' इति ग. पाठः।

२ 'अत्रोपधावृद्धिर्न। 'वृक्षवत्करोती'ति भाष्यप्रामाण्येन आख्यानणिचि उपधावृद्ध्यनङ्गीकारात्' इति ख. ग. ङ. पाठः।

३ अयं ख. ग. ङ. पाठः। क. नास्ति।

४ 'ज्यापयतीति। 'अचो ञ्णिती'ति वृद्धिः। अत एव 'टेरि'ति सूत्रे 'प्रापयती'ति भाष्ये उदाहृतम्' इति ग. पाठः।

५ इतोऽग्रे-'ऊर्णुधातुस्थमाधवोक्तमाह—वारयतीति। परं त्विदं चिन्त्यम्' इति ख. ग. ङ. पाठः।

६ 'वृद्धिष्टिलोपश्च प्राप्तौ। तत्रोभयोर्नित्ययोः परत्वाद्वृद्धिः। न च टिलोपोत्तरम् 'अचः परस्मिन्नि'त्यनेन वृद्धिप्राप्तिरिति, नैकलक्षणस्य कृताऽकृतप्रसङ्गित्वम्।

काराट्टिलोपः । ततः 'अचः परस्मिन्नि'ति टिलोपस्य स्थानिवत्त्वेन, 'अचोञ्णिती'ति वृद्ध्यभावात्, पुगभावे, शपि, णिचो गुणे, पररूपे- 'तितयती'ति । चङि तु 'तित् इ अ ति' इति स्थिते आद्गुणात्परत्वात्, आङ्गत्वाच्च णिलोपे, 'तनोतेर्डउः सन्वच्चे'तिव्युत्पत्तिपक्षे 'अनभ्यासस्ये'ति द्वित्वनिषेधे, चङा सह पररूपे, 'अतितदि'ति बोध्यम् ।अव्युत्पत्तिमाश्रित्य द्वित्वे तु 'अतितितदि'त्यादिक्रमेणोह्यम् । मतुब्लोपे टिलोपाऽभावेन, उकारस्य वृद्धौ, आवादेशे, सवर्णदीर्घे-'तितावयति', 'अतीतवदि'ति । डओर्व्यस्तोच्चारणेन येन नाप्राप्तिन्यायात् 'आद्गुण' इत्येकादेश एव वार्यते । वस्तुतस्त्वीदृशेभ्यो बहुलग्रहणेन णिजभाव एवेष्टव्य इति सिद्धमिष्टम् ।

इति नामधातुप्रक्रिया ।

---

अतिदेशेन निमित्ताऽऽरोप एव बोध्यते,कार्यं तु स्वशास्त्रेणैव । वतिघटितवाक्येन तथैव बोधनात् । ततो लोपः । ततः 'अचः परस्मिन्नि'तिटिलोपस्य स्थानिवत्त्वात् पुगभावे, शपि, णिचो गुणे, वृद्धावायादेशे 'तितायती'त्येवेति । न च शबुत्पत्तेः पूर्वम् अन्तरङ्गत्वादाद्गुणे, शपि, अयादेशे'तितयती'त्येव उचितम् । शपि गुणे सति 'वृद्धिरेची'त्यपवादविषयसम्भावनासत्त्वेन- 'अकृतव्यूह'परिभाषया तदप्रवृत्तेः । न च शपि गुणस्य 'अचः परस्मिन्नि'ति स्थानिवत्त्वान्न आद्गुणस्य निमित्तविघातः । पूर्वस्यैव विधौ स्थानिवत्त्वात् । अकृतव्यूहपरिभाषाऽनङ्गीकारे तु अस्तु 'तितयती'ति । चङि तु 'तिता णिच् चङ् तिप्' इति स्थिते, अकृतव्यूहपरिभाषया आद्गुणाऽप्रवृत्तौ, 'तनोतेर्डउः सन्वच्चे'ति व्युत्पत्तिपक्षे 'अनभ्यासस्ये'ति द्वित्वनिषेधे, टिलोपस्य चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधादुपधात्वाऽभावेन,'नाग्लोपी'ति निषेधेन वा ह्रस्वाऽभावे, णिलोपस्य स्थानिवत्त्वादसिद्धत्वाद्वाऽतो लोपाऽभावे, चङा सह सवर्णदीर्घे 'अतितादि'ति बोध्यम्। गुणपक्षे तु 'अतितदि'ति बोध्यम्। अव्युत्पत्तिमाश्रित्य द्वित्वे तु 'अतिततादि'ति क्रमेणोह्यम्' इति ग. पाठः ।

# अथ कण्ड्वादिप्रकरणम् ।

एभ्यो धातुभ्य इति । 'धातोरि'त्यनुवर्त्तते । तत्सामर्थ्यात् भ्वादिषु पाठकल्पनेन एषां धातुत्वम् । 'वे'ति निवृत्तम् । तदाह—**नित्यं यगिति** ।

धातवः, प्रातिपदिकानि चेति । धात्वभावे यकः कित्त्वं व्यर्थं स्यात् । तद्धि गुणनिषेधाऽर्थम् । यदि धातव एव स्युः, केषांचिद्दीर्घपाठो व्यर्थः स्यात् । 'अकृत्सार्वे'ति सिद्धत्वात् । प्रातिपदिकत्वे तु 'कण्डूरि'त्यादिसिद्धया दीर्घपाठः सार्थकः । न चेदं यगन्तात्क्विपि सिद्धम् । 'नैतेभ्यः क्विप् दृश्यते' इति भाष्ये उक्तत्वात् । धातुभ्यो यकि, गुणनिषेधेन कित्त्वं च चरितार्थम् । तदुक्तं भाष्ये—

'धातुप्रकरणाद्धातुः, कस्य चाऽऽसञ्जनादपि ।
आह चाऽयमिमं दीर्घं, मन्ये धातुर्विभाषितः' ।। इति ।

एतेन[2] ( कण्ड्वादयः प्रातिपदिकान्येव । तेभ्यः ) 'करणे' इत्यनुवृत्त्या कृन्नर्थे यक्[3] । ( कृन्नर्थाऽविवक्षायां च ) 'कण्डूरि'त्याद्यपि सिद्धम् । यकः कित्त्वसामर्थ्यात्, 'धातोरि'त्यनुवृत्तिसत्त्वाच्च आर्द्धधातुकत्वम् । गौणो धातुत्वव्यवहारः[4] । फलमेव च प्रकृत्यर्थ' इत्यपास्तम् । भाष्यविरोधा-

---

१ 'धातो'रित्यनुवर्त्तते । तत्सामर्थ्यात् भ्वादिपाठाऽभावेऽप्येषां धातुत्वं, बाहुलकात्, सौत्राणामिवेत्याहुः' इति ख. ग. ङ. पाठः ।

२ 'एतेन कण्ड्वादयः प्रातिपदिकान्येव । तेभ्यः 'करणे' इत्यनुवृत्त्या कृन्नर्थे यक् । कृन्नर्थाऽविवक्षायां च 'कण्डूरि'त्याद्यपि सिद्धम्' इति ख.ग. ङ. पाठः ।

३ 'कृन्नर्थे यक् । स च वैकल्पिकः । 'वे'त्यनुवृत्तेः । अतः 'कण्डूरि'त्याद्यपि सिद्धम्' इति ग. पाठः ।

४ 'धात्ववयवे च गौणो धातुत्वव्यवहारः' इति ख. ङ. पाठः । 'क्रियावाचकत्वमात्रेण च गौणो धातुत्वव्यवहारः । न चैवं 'कण्डूयती'त्यादौ कृन्नर्थे यगुत्पत्तौ, णिजन्ते इव व्यापारद्वयबोधापत्तिः । प्रकृत्यर्थव्यापारे प्रत्ययार्थव्यापारस्याऽभेदाऽन्वयात् । फलमेव वा प्रकृत्यर्थ' इत्यपास्तम्' इति ग. पाठः ।

ऽऽपत्तेः । 'यथेष्टं नामधातुषु' इत्येव सिद्धे, 'कण्ड्वादेस्तृतीयस्ये'त्यस्य नियामकत्वाऽऽपत्तौ, गौरवाऽऽपत्तेश्च । मम तु विध्यर्थत्वं स्पष्टमेवेति[1] दिक् ।

असु । केचित्तु-'असु मनस उपतापे' इति पठन्ति । तत्राऽपि 'मनस' इति षष्ठ्यन्तमुपतापविशेषणं, न तु धात्वन्तरम् । वृत्तौ अर्थनिर्देशरहितगणपाठे 'असु लेट् लोट् लेला' इत्येव पाठात् । एतेन 'पूर्वभावे' इत्यत्र 'पूर्व' इति धातुरि'त्यपास्तम् । तस्मात्पूर्वभावः = पूर्वत्वमित्यर्थनिर्देश इत्येव सारम् । 'कण्ड्वादिराकृतिगण' इति गणरत्नमहोदधौ । तेन 'रैयति' 'धवल्यती'त्यादीति सुब्धातुवृत्तौ स्पष्टम् ।

इति कण्ड्वादयः ।

## अथ प्रत्ययमाला ।

प्रथमैकाच इति । इदमुपलक्षणम्–'अजादेर्द्वितीयस्ये'त्यस्याऽपि । कण्ड्वादेरिति । 'तृतीयस्यैकाच' इत्यर्थः । 'एकाच' इत्यनुवृत्तेः । तत्र केवलं[2] कण्ड्वादीनां सर्वेषां तृतीयैकाचोऽसम्भवेन, भाष्ये 'कण्डूयियिषती'ति 'यि'-शब्दद्वित्वकरणेन च, अत्र वार्त्तिके 'धातोरि'त्यनुवृत्त्या धातुभूतानामेषां केवलानामप्रयोगेण च, कण्ड्वादिपदस्य तद्घटितसमुदाये लक्षणा[3] । कण्ड्वादिप्रातिपदिकेभ्यः क्यजादौ, ततः सनादौ तु परत्वात् 'यथेष्टं नामधातुषु' इति प्रवर्त्तते एवेति बोध्यम् ।

---

१ 'स्पष्टमेव । 'किञ्च 'कण्डूरि'त्यादौ सत्त्वभूताऽर्थाऽभिधानात्, यक्समभिव्याहारे च असत्त्वभूताऽर्थाऽभिधायित्वात्, अर्थभेदेन शब्दभेदाच्च द्वैविध्यस्यैव पर्यवसानम् । कित्त्वसामर्थ्येन आर्द्धधातुकत्वकल्पनं, धातुत्वकल्पनं वेत्यत्र विनिगमनाविरहाच्चेति दिक्' इति ख. ङ. पाठः ।

२ 'केवलम्' इति क. पाठः ।

३ इतोग्रे—'यत्तु 'नामधातुत्वात्सिद्धे इदं नियमार्थमि'ति, तदसङ्गतमिति स्पष्टमेव' इति ग. पाठः ।

नामधातुष्विति । 'नामघटितधातुष्वि'त्यर्थः । नामधातुषु विद्यमानानां त्रयाणामेकाचां यथेष्टमिति भावः । यत्तु 'नामधातुषु' इत्यत्र कर्मधारय' इति । तन्न । आचारक्विबन्तात्सनादावेव प्रवृत्त्यापत्त्या, 'पुपुत्रीयिषती'त्याद्युदाहरणपरभाष्यविरोधाऽऽपत्तेः ।

आद्यानां त्रयाणामिति । 'एकाचो द्वे''अजादेः' 'कण्डूवादेरि'त्यत्र पूर्वं त्रयाणामेवोपस्थितेः । अत एव 'न न्द्राः' इति सूत्रे 'कण्डूवादेस्तृतीयस्ये'-त्युत्तरम् इदं पठितम् । अत एव 'पुत्रीयियिषती'ति भाष्ये नोदाहृतम् । अत एवैकाच्त्रयसत्त्वे एवाऽस्य प्रवृत्तिः, न तु एकाज्द्वयवति 'अचकलदि'-त्यादौ । भाष्ये तथैवोदाहरणाच्च । न च त्रयाणां युगपत् द्वित्वाऽऽपत्तिः । पूर्वं बाध्यबाधकभावस्य निर्णीतत्वात् । तस्मान्नामघटितधातोरजादेर्द्वितीय-तृतीययोः पर्यायेण, अन्येषान्तु त्रयाणां पर्यायेण द्वित्वमिति सिद्धम् । पर्यायमेव ध्वनयितुं भाष्ये 'यथेष्टं वा नामधातूनामि'तिवचने 'वा'शब्दः पठितः । नचाऽयं 'वा'शब्दः पक्षाऽन्तरत्वबोधनाय । 'अपर आहे'त्यनेनैव तद्बोधात् । 'वा नामधातूनां तृतीयस्ये'ति पूर्ववार्त्तिकेऽपि 'वा'शब्दस्य सत्त्वाच्च । 'नामधातूनामि'त्यस्याऽनुवृत्तैकाच इत्यनेनाऽन्वयः । 'नामधातु-सम्बन्धिनामेकाचामि'त्यर्थः । एषां[1] वचनानां 'न न्द्राः' इति सूत्रे पाठेन तद्वदेवाऽधिकारत्वात्[2], अविशेषेण प्रवृत्तेः, चङि, सनि च यथाऽभिधानं प्रवृत्तिरित्याहुः[3] ।

नदराणामिति । 'तेषां मध्ये अचः परस्यैवे'त्यर्थः । द्रीशब्द-यिशब्दयोरिति । न च 'द्विर्वचनेऽची'ति अल्लोपनिषेधात्, 'य'शब्दस्य द्वित्वप्राप्त्या, 'यिशब्दे'त्यसङ्गतम् । 'नटभार्यात्रव्यञ्जनानी'तिन्यायेन,

१ 'एषां वचनानां सन्त्येव प्रवृत्तिः । तत्रैव भाष्ये उदाहरणादि'त्येके । अपरे तु 'न न्द्रा इति सूत्रे पाठेन' इति ग. पाठः ।

२ 'तद्वदेवाऽस्यापि अधिकारत्वात्' इति ग. पाठः ।

३ इतोऽग्रे—'अत्र तत्त्वं महद्भिर्निर्णेयम्' इति ग. पाठः ।

इकार-सकार-सहितयकारस्य द्वित्वप्रसक्त्या कार्याऽनुभवेन 'न हि कार्यी'ति निषेधेन[1], 'द्विर्वचनेऽची'त्यस्याऽप्रवृत्तेः[2]। न च 'यिस्'शब्दो न नामधात्ववयवः। 'नामधातुघटकवर्णसम्बन्ध्येकाचामि'त्यर्थेनाऽदोषात्[3]। 'यि'शब्द-द्वित्वेऽपि, सनवयवेकारस्य द्वित्वाऽनुभवेन, द्वित्वनिमित्तत्वाऽयोगस्तदवस्थ एवेति, अनास्थया 'यिशब्दे'त्येवोक्तम्।

**चन्दिद्रीयिषतीति**। 'अजादेर्द्वितीयस्ये'त्यस्यैवाऽयं निषेध' इति मते 'चनिन्द्रीयिषती'त्येवे'ति वदन्ति। 'यथेष्टं सुब्धातुषु' इति नोक्तम्। आचारक्विबन्ते, आख्यानणिजन्ते च दोषाऽऽपत्तेः।

**विवारयिषतीति**। माधवेन वृद्ध्यङ्गीकारात्तन्मतेनेदम्। षत्वं तु नेति। सस्य आदेशाऽवयवत्वेऽपि, आदेशरूपत्वाऽभावादिति भावः।

इति प्रत्ययमाला।

---

## अथाऽऽत्मनेपदप्रक्रिया।

**कर्त्तरि कर्म**। कर्मेह क्रिया, न कृत्रिमम्, व्याख्यानादिति[4] स्पष्टं

---

१ 'निषेधसम्भावनासत्त्वेनाऽकृतव्यूहपरिभाषया 'द्विर्वचनेऽची'त्यस्याऽप्रवृत्तेः' इति ग. पाठः।

२ इतोऽग्रे—'यत्र 'द्विर्वचनेऽची'त्यस्य प्रवृत्तावप्रवृत्तौ च न कार्याऽनुभवस्तत्र 'द्विर्वचनेऽची'त्यस्य प्रवृत्तिः। यथा 'ऊर्णुनविषती'त्यादौ। न च यिशब्दो न नामधात्ववयवः' इति ग. पाठः।

३ इतोऽग्रे 'अत एव पुत्रीयतेः सनि यिशब्दद्वित्वं भाष्ये उदाहृतम्। क्वचित्तु 'यशब्दयोरि'त्येव पाठः' इति ग. पाठः।

४ 'व्याख्यानात्। 'कर्त्तरि व्यतीहारे' इत्येवेष्टसिद्धौ, कर्मग्रहणसामर्थ्याच्च। न च करणादिव्यतीहारनिवृत्त्यर्थं तत्। 'भावकर्मणोरि'त्यनुवृत्त्येष्टसिद्धेः। कर्मग्रहणेऽपि क्रियाया अपि प्रार्थनादिक्रियये प्सिततमत्वेन कृत्रिमकर्मतया, द्वयोरपि ग्रहणस्य प्राप्तेरिति स्पष्टं भाष्ये। न च 'व्यतीहारे वर्त्तमानाद्धातो-रि'त्यर्थेनैवेष्टसिद्धौ कर्मग्रहणं व्यर्थमेवेति वाच्यम्। प्राधान्येन विधेयक्रिययैव तदन्वयौचित्यात्। तेनेह न' इति ग. पाठः।

भाष्ये। तेनेह न 'देवदत्तस्वामिकं धान्यं, द्रव्यं दत्वा लवनेन स्वीकरोती'-त्यर्थे 'देवदत्तस्य धान्यं व्यतिलुनाती'ति। अन्यकर्मणोऽन्येन करणं, परस्परकरणं वा कर्मव्यतिहारः। तत्र द्वितीयोदाहरणं—'संप्रहरन्ते राजानः'। यद्यपि प्रत्यासत्त्या यतो धातोः कर्त्रादौ लकारस्तद्धात्वर्थक्रिया-व्यतीहारग्रहणमुचितं, तथापि उपसर्गाणां द्योतकत्वान्न दोषः। भावकर्मणोः सामान्यसूत्रेणैव सिद्धया, सामर्थ्यादस्य कर्त्तर्येव प्रवृत्तिसिद्धौ, कर्तृग्रहण-मुत्तरार्थम्। व्यतिसे इति। एकदेशविकृतन्यायेन 'से' इति प्रत्ययस्य पदत्वात् 'सात्पदाद्योरि'ति षत्वनिषेधः। 'प्रत्ययस्याऽयं स' इति 'उपसर्ग-प्रादुर्भ्यामि'ति षत्वं न। 'व्यतिस्ते' इत्यत्र तु यच्परत्वाऽभावान्न षः।

न गति। एभ्यः कर्मव्यतिहारे आत्मनेपदं न। नन्वत्राऽर्थग्रहणं व्यर्थम्। 'गतिहिंसयोरि'त्येव, 'तत्र वर्त्तमानेभ्यो धातुभ्य' इत्यर्थेन, इष्ट-सिद्धेः, 'नित्यं कौटिल्ये गतौ' इतिवदिति चेन्न। तत्सामर्थ्यादितर-निरपेक्षतया, प्राधान्येन च ये गतिहिंसयोर्वर्त्तन्ते, तेषामेव ग्रहणात्।

अत एव 'व्यतिभेदयन्ते' इत्यत्र हिंसाऽर्थत्वप्रयुक्तो निषेधो ने'ति 'हेतु-मति चे'त्यत्र भाष्ये उक्तम्। 'ग्रामं गमितो देवदत्तो यज्ञदत्तेने'त्यत्र गत्य-र्थत्वमाश्रित्य कर्त्तरि क्तो ने'ति चोक्तम्। अत एव 'हरतेरप्रतिषेध' इति

१ 'तद्धातुसम्बन्धिकर्मव्यतीहारग्रहणमुचितम्' इति ग. पाठः।

२ 'व्यतिसे इति' इत्यारभ्य 'न दोषः' इत्यन्तः ख. ग. ङ. पाठः। मनोरमा-स्थत्वात् क. नास्ति।

३ 'व्यर्थम्। न च तदभावे गत्यादिशब्देन उपस्थितत्वात् गम्यादेरेव ग्रहणं स्यादिति वाच्यम्। बहुवचनवैयर्थ्यापत्तेः। स्वरूपग्रहणेनैव सिद्धे प्रत्यय-निर्देशस्य वैयर्थ्यापत्तेश्चेति चेन्न' इति ग. पाठः।

४ 'शब्दाऽन्तरनिरपेक्षतया प्राधान्येन ये गतिहिंसयोर्वर्त्तन्ते' इति ग. पाठः।

५ इतोग्रे 'अत एव 'त्वरितं भोजयती'त्यादौ नाऽऽत्मनेपदम्। भुजेः स्वतो हिंसार्थत्वाऽभावात्' इति ग. पाठः।

नाऽपूर्वम् । हरतेरुपसर्गवशेन हिंसावृत्तेरर्थग्रहणेनैव वारणात् । अत एव नीवह्यादीनां नाऽयं प्रतिषेधः । तेषां संयोगाऽनुकूलक्रियाऽनुकूलक्रियावाचित्वेन प्राधान्येन गत्यर्थत्वाऽभावात् । स्पष्टं चेदं भाष्येऽपि ।

इतरेतरा । नन्वेतैरेव कर्मव्यतिहारस्य द्योतनात् 'उक्ताऽर्थानामि'तिन्यायेन आत्मनेपदाऽप्राप्तौ, व्यर्थमेतदिति चेन्न । व्यतिभ्यां समुच्चयवत्, अनेनाऽपि समुच्चयसम्भवात् । लौकिके प्रयोगे लाघवाऽनादरेण द्योतकसमुच्चयाऽङ्गीकारात् । 'सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयमि'त्यत्र करणविनिमयेऽपि, क्रियाविनिमयाऽभावान्न तङ् ।

नेर्विशः । 'न्यविशते'त्यत्र 'लावस्थायामडि'ति पक्षे न दोषः । न[3] च स्यादीनामपि लावस्थायां प्राप्तत्वेन, अङ्गसंज्ञाद्यनपेक्षत्वेनाऽन्तरङ्गतया च पूर्वं स्यादौ, पश्चादटि, तस्य विकरणान्ताऽङ्गत्वेन, तेन निविशोऽव्यवधानाद्दोषस्तदवस्थ एवेति वाच्यम् । 'धातोरि'त्यधिकारेण, धातुसंज्ञासापेक्षत्वेन

१ अयं ग. पाठः । 'संयोगाऽनुकूलक्रियावाचित्वेन' इति तु क. पाठः । 'भारग्रामादिसंयोगानुकूल(देवदत्तादिनिष्ठ)व्यापाररूपं प्रापणं वह्याद्यर्थः । कर्त्रनुयोगिकेतर(ग्रामादि)प्रतियोगिकसंयोगाऽनुकूलव्यापारश्च गम्यर्थः । स च भाराऽजादिनिष्ठ इहाक्षेपलभ्य इति, नीवह्यादीनां न गत्यर्थत्वमि'त्यन्ये । स्पष्टं चेदं भाष्ये । 'ततः संप्रहरिष्यन्तौ' इति प्रयोगे तु, 'योत्स्यमानौ' इत्येवाऽर्थो, न तु कर्मव्यतिहार इति न दोषः' इति च ख. ङ. पाठः ।

'भार-ग्राम-संयोगाऽनुकूलो मैत्रादिनिष्ठो व्यापारो वहनम् । भारव्यापारस्त्वाक्षेपलभ्य इति न वहिर्गत्यर्थः । एवम् 'अजां ग्रामं नयती'त्यत्राऽपि अजानिष्ठो व्यापारो बोध्यः । संयोगानुकूलाऽजादिनिष्ठव्यापारे एव हि गमेः शक्तिरित्याहुः' इति ग. पाठः ।

२ 'लाघवाऽनादरात् । नेर्विशः' इति ग. पाठः ।

३ 'न च' इत्यारभ्य 'उपसर्गयोर्ग्रहणम्' इत्यन्तः ख.ङ.पाठः । क.कुण्डलितः । मनोरमादिस्थत्वात् ।

समतया, परत्वात् अडागमस्यैव प्रवृत्तेः। पक्षाऽन्तरे तु 'उपसर्गनियमे अड्व्यवाये उपसङ्ख्यानमि'ति वार्त्तिकेन निर्वाहः। किञ्च 'तिप्तस्झि' 'नेर्विश' इत्यादीनामेकवाक्यतया विधानमि'ति पक्षे विकरणात्, नियमाच्च पूर्वम्, एकपदनिमित्तत्वेन अन्तरङ्गत्वात् अट्प्रवृत्तिरिति न दोषः। धातूपसर्गकार्यस्याऽन्तरङ्गत्वे तु अत्राऽपि पक्षे वचनमेव शरणम्।

---

१ इतोऽग्रे—'यद्वा लकारविशेषाऽङ्गादिसापेक्षंबहिरङ्गाऽटं बाधित्वा, लकारमात्राऽपेक्षत्वेनाऽन्तरङ्गत्वात्तिबादिषु, 'विकरणेभ्यो नियमो बलीयानि'तिसिद्धान्ताद्विकरणात्पूर्वमेव नियमः। न चाऽत्र पदान्तराऽनिमित्तकनियमस्यैव ग्रहणम्। मानाऽभावात्। न च परत्वात्, नियमाऽपेक्षया एकपदनिमित्तत्वेनाऽन्तरङ्गत्वाच्चाऽडितिवाच्यम्। दोषाऽभावात्। न च ततोऽपि नित्यत्वाद्विकरणः। नियमप्रवृत्तेर्जागरूकत्वात्। अटोऽपि नित्यत्वाच्च। न च शब्दाऽन्तरप्राप्त्या अनित्यत्वमटः। विकरणस्याऽपि शब्दाऽन्तरात्प्राप्तत्वेनाऽनित्यत्वात्। यद्व्यक्तिसम्बन्धितया पूर्वं प्राप्तिस्तद्व्यक्तिसम्बन्धितया पुनरप्राप्तिरूपतर्कस्योभयत्राऽपि समत्वात्। अर्थनिरपेक्षत्वेनाऽटोऽन्तरङ्गत्वाच्च। अत एव 'अन्तरङ्गत्वात्स्यादय' इति भाष्यं सङ्गच्छते। किञ्च 'तिप्तस्झि' इति ग. पाठः।

२ 'अट्प्रवृत्तिः स्पष्टैव। वाक्यभेदेन 'नेर्विश' इत्यादीनां नियमत्वपक्षेऽपि, 'नेर्विश' इत्यादीनामप्रवृत्तौ 'तिप्तस्झी'ति सूत्रविहितलादेशा न प्रवर्त्तन्ते। 'अपवादविषयं परित्यज्योत्सर्गोऽभिनिविशते' इति सिद्धान्तात्। अत एव आत्मनेपद-परस्मैपदयोर्वैपरीत्यं न। निष्पन्ननिवारणस्य वचनशतेनाऽपि कर्त्तुमशक्यत्वात्। स्पष्टं चेदं 'स्थानेऽन्तरतम' इत्यत्र भाष्ये। एवञ्चैकपदनिमित्तत्वेनाऽन्तरङ्गत्वात् अट् विकरणान्नियमाच्च पूर्वम्। ततो लमात्राऽपेक्षत्वेनान्तरङ्गत्वान्नियमस्ततो विकरण इति न दोषः। अत्र पक्षद्वयेऽपि भाविसंज्ञाविज्ञानमाश्रयणीयम्। 'विहितानां नियमो बलीयानि'त्यादिर्व्यवहारः। स्पष्टं चेदं पक्षद्वयम् 'अनुदात्तङित' इति सूत्रे भाष्ये। सर्वं चेदं 'शदेः शित' इति सूत्रे भाष्यकैयटयोर्ध्वनितमित्याहुः' इति ग. पाठः।

'नेर्विश' इत्यादिभिः कर्तृविहितलस्य स्थाने आत्मनेपदं विधीयते । कर्तृत्वं च क्रियाघटितम् । क्रिया च प्रत्यासत्त्या न्यादिपूर्वकविश्यादिप्रतिपाद्यैव गृह्यते इत्युपसर्गाणामेव न्यादीनां ग्रहणम् । 'अर्थवद्ग्रहणे' इति, 'लक्षणप्रतिपदोक्तयोरि'ति परिभाषणाच्च[1] । तेन 'मधूनि विशन्ति भ्रमरा' इति सिद्धम् ।

यत्तु 'पदसंस्कारपक्षे परस्मैपदमपि' इति । तन्न । 'वा लिप्सायाम्' विभाषाऽकर्मकादि'त्यादेर्वैयर्थ्याऽऽपत्त्या, पदाऽन्तरसम्बन्धनिमित्तकार्ये पदसंस्कारपक्षाऽनाश्रयणात् । पूर्वं धातोरुपसर्गेण योगाच्च । 'भर्तुरङ्के निविशती भयादि'ति रघुश्लोके 'अङ्गानि विशतीमि'ति, 'निर्विशतीमि'ति[2] वा पाठो बोध्य इत्याहुः । 'निविशते' इति 'निविशः' । 'इगुपधे'ति कः । 'स इवाऽऽचरन्तीमित्यर्थ' इत्यन्ये ।

विपराभ्याम् । 'परा'शब्दसाहचर्यात् वि'शब्दोऽपक्ष्यर्थकः । तत्साहचर्यात्पराशब्दोऽटाबन्त इति, परस्परसाहचर्यादुपसर्गयोर्ग्रहणम् ।

आङो दो । अकर्त्रभिप्रायेऽपि आत्मनेपदाऽर्थमिदम् । आस्यविहरणे ददातेरेव प्रसिद्धत्वेन, संयोगवद्विप्रयोगस्याऽपि विशेषाऽवगतिहेतुत्वेन, तस्यैव ग्रहणमित्याशयेनाऽऽह–ददातेरिति । 'मुखं व्यादत्ते' 'सुप्त्वा व्यादत्ते' इति कर्त्रभिप्राये आत्मनेपदम् । आङो[3] ङिद्विशिष्टस्य ग्रहणान्नेह— 'प्रतीकमाददाति', 'भिक्षामाददाती'ति । अत्र स्मृतावाकार' इति हरदत्तः ।

आस्यग्रहणमिति । 'विहरण'शब्दस्य क्रीडा-पादविहरणाद्यर्थस्य ग्रहणं मा भूदिति सूत्रकृता कृतं तत् । भाष्यप्रामाण्याच्चाऽविवक्षितम् । एवञ्च 'आस्य'ग्रहणं विरहणपदस्य विकासाऽर्थत्वमात्रतात्पर्यग्राहकमिति बोध्यम् ।

---

१ 'परिभाषणाच्चेत्याहुः' इति ग. पाठः ।

२ 'निविशतीति' इति ख. ङ. पाठः ।

३ 'आङः' इत्यारभ्य 'इति हरदत्तः' इत्यन्तः ख. पाठः । मनोरमास्थत्वात् क. नास्ति ।

ण्यन्तस्येति । भाष्ये ण्यन्तस्यैवोदाहरणादिति भावः । ईदृशे विषये भाष्यप्रामाण्यादेव णिच् । मा त्वरिष्ठा इति । 'सहस्व कञ्चित्कालमि'त्यर्थः ।

शिक्षेरिति । शकिः सन्नन्तो गृह्यते, न तु 'शिक्ष'धातुः । अनुदात्तेत्त्वादेव सिद्धेः । न च नियमाऽर्थम् । विधित्वस्योचितत्वात् । 'आगमेरि'त्येतत्साहचर्येण प्रत्ययाऽन्तस्यैव ग्रहणाच्च । शिक्षते इति । 'सनि मीमे'तीस् । अत्र 'जिज्ञासायामि'त्युक्तेर्ज्ञानपदाऽध्याहारः । आत्मनेपदमत्र तात्पर्यग्राहकम् । धनुषीति वैषयिकाऽऽधारे सप्तमी । तदाह—धनुर्विषये इति । नियमार्थमिति । अनुदात्तेत्त्वन्तु 'नाथन' इति युजर्थमित्यर्थः । प्रकार इति । धर्म इत्यर्थः । ताच्छील्यं—नियततत्स्वभावता । मातुरनुहरतीति । सादृश्यमात्रमत्र विवक्षितमिति भावः । 'तद्धितार्थे'त्यत्र भाष्येऽयं प्रयोगः ।

किरतेः । कुलायम्—अत्र वासस्थानमात्रम । अत एव 'अपस्किरते श्वा आश्रयाऽर्थी'ति भाष्यं सङ्गच्छते । हर्षादयो विषया इति । 'समभिव्याहृतपदाऽन्तरगम्या' इत्यर्थः । आलेखनम्—खननम् ।

अपकिरते इति । अत्र 'कृ'धातोः खननपूर्वके धूल्यादिविक्षेपे लक्षणा । नेष्यते इति । अत एव भाष्ये अत्र वार्त्तिके ससुट्कान्येवोदाहृतानीत्याहुः ।

गजोपकिरतीति । स्वभावाऽऽख्यानमत्र । आनुते इति । अस्य 'शृगाल उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थ' इति कैयटः ।

शप उपलम्भने [2] इति । 'उपालम्भे' इति क्वचित्पाठस्तु लेखकप्रमादात् । भाष्ये 'उपलम्भने' इत्येव पाठदर्शनात् । उपलम्भनम्—

---

१ इतोऽग्रे—'केचित्तु क्रियाविषये एव शकिः । 'भोक्तुं शक्नोती'त्यादिदर्शनात् । इह च 'जिज्ञासायामि'त्युक्तेर्ज्ञानविषय एवेति तल्लाभ इत्याहुः' इति ग. पाठः ।

२ इतोऽग्रे—'मूले 'उपालम्भे' इत्यादिपाठो, व्याख्यानं च 'आक्रोशाऽर्थादि'-त्यादिवृत्त्यनुरोधेनेति बोध्यम् । 'सख्यः ! शपामी'त्यादौ 'स्वाऽऽशयं प्रकाशयामी'त्येतावदिह विवक्षितं, न तु शपथ' इति मनोरमाऽप्येवमेव' इति ख. ङ. पाठः । क. कुण्डलितः । मनोरमादिस्थत्वात् ।

प्रकाशनम् । धातोः शपथकरणकप्रकाशने लक्षणा । आत्मनेपदं तात्पर्य-ग्राहकम् । शपथश्च लोकप्रसिद्ध एव । अत एवोदाहरणे 'देवदत्ताये'त्यत्र चतुर्थ्येव भाष्ये प्रयुक्ता । 'सख्यः ! शपामि यदि किञ्चिदपि स्मरामी'-त्यादौ शपथमात्रं विवक्षितम्, न तु प्रकाशनपर्यन्तम् । प्रकाश्याऽर्था-ऽभावात्, गोपनस्यैव विवक्षितत्वाच्चेति दिक्[1] ।

प्रकाशनस्थेया । स्थेयो—विवादपदनिर्णेता । 'तिष्ठन्तेऽस्मिन्नि'ति अधिकरणे बाहुलकात् यत् ।

उदोऽनूर्ध्वे । 'उपरिदेशसंयोगाऽफलकेऽर्थे वर्त्तमानादुत्पूर्वात्तिष्ठतेरि'-त्यर्थः । '[2]अनूर्ध्वे' इत्येव क्रियावाचकत्वे लब्धेऽपि, 'कर्म'पदं परिस्पन्द-रूपधात्वर्थलाभाऽर्थमि'ति मनोरमा । ईहायामिति । ईहा—व्यापारः, कायपरिस्पन्दरूपः । 'शतमुत्तिष्ठती'त्यस्य 'उत्पद्यते' इत्यर्थः ।

उपान्मन्त्र । 'मन्त्रकरणकेऽर्थे वर्त्तमानादि'त्यर्थः । सङ्गतकरणम्—उपश्लेषः । मित्रकरणम्—अनुपश्लिष्टस्याऽपि मैत्रीसम्बन्धः ।

वा लिप्सायामिति । 'लिप्सोपसर्जनकेऽर्थे वर्त्तमानादि'त्यर्थः ।

उद्विभ्याम् । उद्विभ्यां किम् ? । 'निष्टपति' । ज्वलतीत्यर्थः । ल्यबन्तं विनैवेति । अर्थाऽध्याहारपक्षे इति भावः । विवेचितं चेदं 'ल्यब्लोपे' इत्यत्रैवेति दिक् । तुमुन्नन्ताऽध्याहारे तु न काचिच्छङ्का ।

समीपमेत्येति वेति । 'विषमविलोचनस्य समीपमेत्य, स्वं वक्ष आजघ्ने' इत्यन्वय इति भावः ।

---

१ इतोऽग्रे—'मूले उपालम्भे' इत्यादिपाठो, व्याख्यानं च 'आक्रोशाऽर्थादि'-त्यादि वृत्त्यनुरोधेनेति बोध्यम् । 'सख्यः शपामी'त्यादौ 'स्वाऽऽशयं प्रकाशयामी'त्येतावदिह विवक्षितं, न तु शपथ' इति मनोरमा-ऽप्येवमेव' इति ख. ङ. पाठः । क. कुण्डलितः । मनोरमास्थत्वात् ।

२ 'अनूर्ध्वे' इत्यारभ्य 'मनोरमा' इत्यन्तः ख. ङ. पाठः । क. नास्ति । मनोरमास्थत्वात् ।

[1]समो गम्यृच्छिभ्याम्। वृत्त्युक्तसूत्रपाठस्तु[2] भाष्यविरुद्धः। अकर्मकाभ्यामित्येवेति। इदं च 'समः क्ष्णुव' इति सूत्रे भाष्ये स्पष्टम्। 'तच्चैक्यं समगच्छते'त्यादावार्षत्वं शरणम्। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञि 'एकं समपद्यते'त्यर्थो वा बोध्यः।

वेत्तेरेवेति। व्याख्यानसहकृतेन, परस्मैपदिभ्यां साहचर्येण एका 'लुग्विकरण'परिभाषा बाध्यते इति भावः। 'अनित्यत्वादत्र लुग्विकरणपरिभाषा न प्रवर्त्तते' इति तत्त्वम्। विन्दतिः स्वरितेत्। सत्ताविचारणयोस्तु अनुदात्तेदिति बोध्यम्। अत एव भाष्ये 'संवित्ते' इत्येवोदाहृतम्। 'वेत्तेर्विभाषे'ति रुड्विधानेन वेत्तेरात्मनेपदस्याऽऽवश्यकत्वाच्च। तत्र हि-निर्देशादेव लुग्विकरणग्रहणम्। अर्त्तीतिद्वयोरिति। व्याख्यानात्, अनित्य[3]त्वेन साहचर्याऽनाश्रयणात्। सूत्रे 'ऋच्छति'ग्रहणन्तु तौदादिकऋच्छेः 'सम्'पूर्वस्य परस्मैपदव्यावृत्तये। 'समृच्छिष्यते' इत्याद्यर्थं[4] च।

अङ्गविधौ त्विति। लुप्तविकरणशासिसाहचर्यादिति भावः।

समार्त्तेति। नन्वत्र 'अध्यैष्टे'तिवत्सिचः श्रवणं स्यादिति चेन्न। 'उश्चे'ति कित्त्वाद्गुणाऽप्राप्तौ, 'आटश्चे'ति बाधित्वा परत्वात्सिज्लोपे, वृद्ध्या इष्टसिद्धेः। 'अध्यैष्टे'त्यत्र तु सिज्लोपस्याऽसिद्धत्वात्, नित्यत्वाच्च, वार्णादाङ्गस्य

१ 'समो गमि' इत्यारभ्य 'लुग्विकरणग्रहणम्' इत्यन्तः ख. ग. ङ. पाठः। मनोरमादिस्थत्वात् क. कुण्डलितः।

२ 'समो गम्यृच्छिप्रच्छिस्वरत्यर्त्तिश्रुविदिभ्यः' इति हि वृत्तिकृदुक्तः सूत्रपाठः।

३ 'अनित्यत्वेन साहचर्याऽनाश्रयणात्' इति लघुशेखरे नास्ति।

४ इतोऽग्रे—'न च 'श्रुदृशि'साहचर्यात् भ्वादेरेव ग्रहणम्। अल्पाच्तरत्वेन 'श्रु'धातोः पूर्वनिपाते कर्त्तव्ये, परनिपातकरणेनाऽत्र साहचर्याऽनाश्रयणबोधात्। एतेन भाष्ये 'मा समृत' 'मा समृषाताम्' 'मा समृषते'त्युदाहृतत्वात् भ्वादेरेव ग्रहणमि'त्यपास्तम्। अडाद्यभावयुक्तलुङि उदाहृतत्वेन, अन्यत्राऽऽत्मनेपदाऽनापत्तेश्च' इति ग. पाठः।

बलवत्त्वाच्च 'सार्वधातुकार्द्धे'ति गुणे, 'आटश्चे'ति वृद्धौ सिद्ध्यति । न च 'समार्त्ते'त्यत्राऽपि वृद्धिं प्रति सिज्लोपोऽसिद्धः । 'सिज्लोप एकादेशे' इति सिद्धकाण्डे पाठात् । अत एव तत्र एकादेशग्रहणं चरितार्थम् ।

यत्तु 'वार्णपरिभाषया पूर्वं सिज्लोपः । तत्र 'अङ्ग'पदसत्त्वेन तस्य आङ्गत्वादि'ति । तन्न । तस्या एकस्थानिके एव प्रवृत्तेः । न च 'ह्रस्वात्सिच' इत्येव सिचाऽङ्गाऽऽक्षेपेण 'अलाविष्टामि'त्यादिसिद्धेः, अङ्गग्रहणसामर्थ्येन अत्राऽतथाभूतेऽपि तत्प्रवृत्तिरिति वाच्यम् । 'आक्षेपादिक्लेशवारणाऽर्थमेव अङ्गग्रहणमि'त्यस्यैव युक्तत्वात् ।

परे तु 'लावस्थायामडि'ति पक्षे सर्वतो वृद्धेरन्तरङ्गत्वेन, तत्पक्षे सिज्लोपो दुर्लभः । तदेकवाक्यत्वाय पक्षाऽन्तरेऽपि तद्लोप एवोचितः । 'सिज्लोप

१ इतोऽग्रे—'न च 'अकृतव्यूहा' इति परिभाषया वृद्धेर्भावित्वेन, सिज्लोपो दुर्लभः । 'सिज्लोप एकादेशे' इति वार्त्तिके एकादेशग्रहणसामर्थ्येन तस्या अत्राऽप्राप्तेः' इति ख. ग. ङ. पाठः । इतोऽग्रे—

'समर्थानामि'तिसूत्रस्थ'समर्थ'ग्रहणज्ञापितायाः सपादसप्ताध्यायीस्थत्वेन, त्रिपाद्यां तदप्राप्तेश्च । यत्तु 'ह्रस्वादङ्गादि'त्यङ्गग्रहणेन आङ्गत्वाद्वार्णपरिभाषया वृद्धिं बाधित्वा सिज्लोपः । असिद्धत्वमप्यङ्गग्रहणसामर्थ्याच्च । 'सिच एव लोप' इत्यर्थस्तु 'इट ईटी'ति साहचर्यात्सिद्धः । असिद्धे अङ्गादित्यस्य वैयर्थ्याच्चे'ति । तन्न । 'अलाविष्टामि'त्यादौ लोपाऽऽपत्तेः । यदि तु 'इट ईटी'त्युक्तेस्तक्रकौण्डिन्यन्यायादिड्भिन्नस्यैव ह्रस्वस्य ग्रहणमि'त्युच्यते, यदि वा 'इट्सहिते प्रत्ययत्वादिवत्सिच्त्वमपि विशिष्टे एव, स्वाऽवयवेन च पौर्वापर्याऽभाव' इत्युच्यते, तदाऽस्तु, यदि भिन्नस्थानिके वार्णपरिभाषाप्रवृत्तिरस्ति । वस्तुतोऽत्राऽङ्गादिति स्पष्टाऽर्थमेव । 'लावस्थायामडि'ति पक्षे सर्वतो वृद्धेरन्तरङ्गत्वेन, तत्पक्षे सिज्लोपो दुर्लभः' इति ग. पाठः ।

'सिजलोप एवोचितः' इति ग. पाठः ।

एकादेशे सिद्ध' इति सिद्धत्वमपि प्रत्यासत्त्या सिज्लोपनिमित्तकैकादेशं प्रत्येवोचितं, न तु प्रकृतविषयमपि । न च 'एकादेश'पदसामर्थ्यम्[1] । सवर्णदीर्घपदाऽपेक्षया लघुत्वादित्याहुः ।

मा समरतेति । न च 'सर्त्तिशास्ती'ति सूत्रे 'परस्मैपदेषु' इत्यनुवृत्तेः अङ् दुर्लभः । अग्रे सम्बन्धेऽपि, पुषादिसूत्रेण योगविभागसामर्थ्येन अत्र तदसम्बन्धात् । '[2]भट्टिरपि प्रायुङ्क्त—'समारन्त ममाऽभीष्टाः सङ्कल्पास्त्वय्युपागते' इति । इदं च वृत्तौ स्पष्टम् ।

[3]परे तु '[4]शास इदि'ति सूत्रे 'आशास्ते' इत्यादाविस्त्ववारणाय 'यस्माच्छासेरङ् विहितस्तस्य ग्रहणमि'ति भाष्यमुपादाय कैयटेन 'सर्त्तिशास्ती'त्यत्र परस्मैपदाऽधिकारात्, न आशास्तेरङि'त्युक्तम्[5] । किञ्च 'अस्यतिवक्ती'त्यनेन 'सर्त्ती'त्यादेर्योगविभागस्य फलं निरूपयितुमशक्यमिति, न स तन्निवृत्तौ गमकः । अत एव भाष्ये प्रकृतवार्त्तिके धातुद्वयसाधारण्येन 'मा समृत' 'मा समृषातामि'त्येवोदाहृतम्, न तु लङादौ । एवं च भट्टिप्रयोगो, मूलं च चिन्त्यमेवेत्याहुः[6] ।

अकर्मकादित्येवेति । 'समो गमी'त्यत्र उपसङ्ख्यातत्वादिति[7] भावः ।

---

१ 'लघ्वेवेति चिन्त्यम्' इति ग. पाठः ।

२ 'अत एव भट्टिरपि प्रायुङ्क्त' इति ग. पाठः ।

३ 'परे तु' इत्यस्य स्थाने 'वस्तुतः' इति ग. पाठः ।

४ 'आङः शास्विति सूत्रे' इति ख. ङ. पाठः ।

५ इतोऽग्रे—'एवं चेदं चिन्त्यमेव । अत एव 'यस्माच्छासेरि'तिभाष्यं सङ्गच्छते । न च सर्त्तिसाहचर्येण परस्मैपदिन एव ग्रहणम् । एवमप्येतन्निवृत्तौ भावकर्मणोरप्यङापत्तिः । किञ्चाऽस्यतिवक्तीति सूत्रे' इति ग. पाठः ।

६ 'चिन्त्यमेवेति केचित्' इति ग. पाठः ।

७ 'समो गमीति सूत्रे उपसंख्यातत्वात्' इति ग. पाठः ।

इदं पूर्ववार्त्तिकेऽपि । 'समो गमादिषु विद्यादीनामुपसङ्ख्यानमि'ति भाष्ये 'गमादिषु' इति बहुवचनं प्रयोगभेदाऽभिप्रायेण । एतेन 'बहुवचनबलादेषां 'समः क्ष्णुवः' इत्यत्राप्युपसङ्ख्यानेन, सकर्मकेभ्योऽप्यस्य प्रवृत्तिरि'ति निरस्तम् । तेनैव[1] सिद्धे, अत्रोपसङ्ख्यानस्य[2] वैयर्थ्याऽऽपत्तेः । न हि तत्र 'सकर्मकादि'त्यस्ति[3], येनाऽकर्मकाऽर्थमिदं स्यादित्यलम् ।

**धातोरर्थान्तरे** इति । इदं च 'उद्विभ्यामि'ति सूत्रे भाष्ये स्पष्टम् । **वहतीति** । प्रापणाऽर्थस्य वहेरत्र स्यन्दने वृत्तिरिति भावः । **जीवतीति** । अत्र जीवनं कर्म धात्वर्थाऽन्तर्भूतम् । 'वर्षती'त्यादौ जलरूपं कर्म प्रसिद्धत्वान्न प्रयुज्यते । धातोरकर्मकत्वं च एतच्छास्त्रविहितकर्मसंज्ञकाऽनन्वय्यर्थकत्वम् । तच्च धातोरर्थाऽन्तरवृत्तौ स्पष्टमेव । यथा स्यन्दनाऽर्थस्य वहतेः । 'अन्वय'शब्देन पृथगुपस्थितयोः संसर्गबोधोऽत्र विवक्षितः । तेन जीवत्यादेस्तत्त्वम् । तत्र प्राणादिकर्मणां धात्वर्थात् पृथगुपस्थित्यभावात् ।

ननु 'मेघो वर्षती'त्यादौ प्रसिद्ध्या तद्वाचकपदोपादानस्याऽनावश्यकत्वेऽपि, तयैव झटित्यध्याहारेण उपस्थितस्य 'प्रविश पिण्डमि'त्यादाविवाऽन्वयसंभवः । अनुपादानमात्रेण अकर्मकत्वे तु 'प्रविश पिण्डीमि'त्यादावप्यकर्मकत्वाऽऽपत्तिः । ईदृशरीत्या अकर्मकत्वस्य भाष्ये अनुपलम्भाच्च । एतेन 'प्रसिद्धाऽतिरिक्तत्व'विशेषणदानेनाऽस्य सङ्ग्रह' इत्यपास्तम् । प्रसिद्धेरनियतत्वाच्चेति चेत् । चिन्त्यमेवैतत् ।

ननु कर्मणोऽविवक्षा नाम किम् ? । न तदन्वययोग्यफलांऽशत्यागः । 'धातोरर्थाऽन्तरे वृत्तेरि'त्यनेन गताऽर्थत्वादिति चेन्न । कर्मविशेषाऽन्वयाऽविवक्षाया एव तत्त्वात् । सा च क्वचित्सार्वदिकी । यथा मूलोदाहृते । तत्र निर्बाधं भावे लादीनां साधुत्वम् । क्वचित्तु कार्यप्रवृत्तिवेलायां तदन्वया-

---

१ 'इदं पूर्ववार्त्तिकविषयेऽपि बोध्यम् । तुल्ययुक्तेः' इति ग. पाठः ।

२ 'तत्रोपसङ्ख्यानेनैव सिद्धे' इति ग. पाठः ।

३ इतोऽग्रे—'मध्ये विच्छेदात्' इति ग. पाठः ।

ऽविवक्षा, पश्चात्तु तद्विवक्षा, यथा 'कृतपूर्वी कटमि'त्यादिवृत्तिविषये, इति निरूपितं कारके। किञ्च 'कर्मविशेषस्य फलं प्रति सम्बन्धसामान्येनाऽन्वयविवक्षा, न त्वाश्रयत्वेने'त्ययमपि 'अविवक्षा'पदार्थः। अत एव 'मातुः स्मर्यते' इत्यत्र अविवक्षितकर्मतया भावे ल उक्तः 'अधीगर्थे'त्यत्र भाष्ये। मूलोक्ते 'हितान्न यः संश्रृणुते' इत्यत्राऽयमेव प्रकारो युक्तः। 'हितात् = पुरुषात् हिताऽर्थस्य यो न जानाती'ति सम्प्रत्ययात्। एतेन 'इदमुदाहरणं प्रसिद्ध्या गतार्थमि'त्यपास्तमित्यलम्।

निवृत्तमिति। सोपसर्गोऽस्यत्यूह्योः सकर्मकत्वेन, 'अकर्मकादि'त्येतत्सम्बन्धस्य वक्तुमशक्यत्वादिति भावः। अत एव एतदुदाहरणभाष्ये क्वचित्पुस्तके कर्मप्रयोगो दृश्यते इति दिक्।

निसमुप। 'ह्व' इत्येकारान्ताऽनुकरणम्। लक्षणवशसंपन्नं चाऽऽत्त्वम्। 'एकदेशविकृत'न्यायेन आकारान्तेऽपि प्रवृत्तिः। तदाह—निह्वयते इति।

स्पर्द्धायामाङः। आह्वयतेः शब्दने एव वृत्तेः 'स्पर्द्धाविषये' इत्यर्थः। गन्धनं हिंसेति। 'गन्ध अर्दने' 'अर्द हिंसायामि'ति च चुरादौ पाठात्। सहसा वर्तते 'साहसिकः'। तत्कर्म-'साहसिक्यम्'। 'सहसा' इत्यस्य बलात्कारेण, अविचारेण वेत्यर्थः। प्रतियत्नो गुणाऽऽधानम्। उपयोगः—सद्विनियोगः।

परदारानिति। धात्वर्थोऽत्र आत्मसात्करणम्। साहसिक्यं प्रयोगोपाधिः। अतो न द्वितीयाऽनुपपत्तिः। एधो दकस्येति। एधाश्च उदकं च तत्समाहार इत्यर्थः। यद्वा 'एधांसि दकञ्चे'ति विग्रहः। 'उदक'पर्यायो 'दक'शब्दोऽपि हलायुधकोशादौ प्रसिद्धः। अभिभवे चेति। येऽपि 'अभिभवे छन्दसी'ति पठन्ति, तेषामपि 'छन्दसी'ति प्रायोवादः।

वेः शब्द। 'शब्दः कर्म कारकं यस्य ततः कृञो विपूर्वादात्मनेपदमि'त्यर्थः। प्रयोगोपाधय इति। न तु वाच्या इत्यर्थः। शास्त्रे नयते इति। नयतेः प्रापणमर्थः। शिष्यादिसंमाननं तु तत्फलतया मानसबोधविषयः

सन् प्रयोगोपाधिरित्यर्थः। **उपनयते इति** । विधिना वेदाऽध्ययनफलकम् उपनयनाख्यसंस्कारेण आत्मसमीपप्रापणं नयतेरर्थः । एवं हि सोऽध्यापक आचार्यो भवति। 'उपनीय ददद्वेदमाचार्यः स उदाहृतः' इति स्मृतेः। तत्फलं माणवकसंस्कारद्वारा आत्मन्याचार्यत्वकरणं प्राग्वत्प्रयोगोपाधिः । यद्यप्यत्र संमाननेनाऽपि सिद्धं, तथापि तदविवक्षायामप्यात्मनेपदाऽर्थमिदम्। 'विनिन्युरेनं गुरवो गुरुप्रियमि'त्यत्र आचार्यकरणस्य अविवक्षितत्वान्न न तङ् । **कर्मकरानुपनयते** इति।आत्मसमीपप्रापणं नयत्यर्थः। तच्च भृतिदानकरणकमेवेति, समभिव्याहारात् मानसबोधविषय इति, प्राग्वत्प्रयोगोपाधित्वम् ।

**कर्तृस्थे** । **कर्मणीति** । 'कर्तृस्थे कर्मकारके सती'त्यर्थः[1]। **शरीरशब्देनेति** । शरीरतादात्म्याऽऽपन्नस्यैव कर्तृत्वेन, शरीरस्य तत्स्थत्वाऽसम्भवः । अवयवानां तु सम्बन्धविशेषेण तत्स्थत्वसम्भव इति भावः।

**कर्तृस्थे किम्** ? । 'राज्ञः क्रोधं विनयती'ति । 'विध्यर्थं चेदम् अकर्तृगेऽपि क्रियाफले । 'नयन्ति पौरुषमि'ति तु प्रमाद' इत्यन्ये[2] ।

**उपपराभ्याम्** । अस्य नियमत्वं 'वृत्तिसर्गे'त्यनुवृत्त्या बोध्यम् । विधित्वे तु अनेनैव सिद्धे 'प्रोपाभ्यामि'ति सूत्रे 'उप'ग्रहणवैयर्थ्याऽऽपत्तिः। 'प्रात्प्रारम्भे' इत्येव सिद्धेरित्याहुः ।

**हर्म्यतलादिति** । भाष्ये 'हर्म्यतलमि'ति पाठः । तत्र उद्गमनपूर्विकायां व्याप्तौ क्रमिर्द्रष्टव्यः । उद्गमनमात्रेऽकर्मकत्वात् । 'नभः समाक्रामती'त्यादौ तु व्याप्तिमात्रं क्रमेरर्थो, न तूद्गमनम् । तेन तङ् न ।

**वेः पाद** । धातूनामनेकार्थत्वं बोधयितुं सूत्रे 'पादविहरणे' इत्युक्तम्। **उपक्रमते इति**। 'उपपराभ्यामि'ति तु नेह प्रवर्त्तते। वृत्त्याद्यर्थाऽभावात्।

**अनुपसर्गाद्वा** । इदं सूत्रं लिटि, आशीर्लिङि च न प्रवर्त्तते । अस्य

---

१ 'क्रियाफले इत्यर्थः । केचित्तु 'कर्तृस्थे कर्मकारके'.इत्यर्थः' इति ग. पाठः ।

२. 'इत्याहुः' इति ग. पाठः ।

'विकरणेभ्यो नियमो बलीयानि'त्यर्थज्ञापकतापरा'ऽनुदात्तङित'इति सूत्रस्थभाष्यप्रामाण्यादित्याहुः। **नित्यमेवेति**। पूर्वविप्रतिषेधेनेति भावः। वृत्त्यादिसूत्रस्याऽचारितार्थ्याच्च। न च सोपसर्गे चरितार्थम्। 'उपपराभ्यामि'ति नियमात्। इदं च 'न वे'ति सूत्रे भाष्ये ध्वनितम्।

**सम्प्रतिभ्याम्**। उत्कण्ठापूर्वकस्मरणम आध्यानम्। **योगो विभज्यते इति**। अत्र वृत्त्यादिकमेव मानम्। **भासमान इति**। शिष्यैः स्तूयमानो हि भासेत। तथा चोपर्युपरि शास्त्राऽर्थप्रतिभासात्सुष्ठूक्तिर्निर्वहति। तेजोभङ्गे तु न शक्नुयाद्वदितुमिति भावः। **ज्ञाने इति**। 'शास्त्रे वदते' इति बोधोत्तरं, तात्पर्यवशेन 'शास्त्रविषयकज्ञानवानि'ति मानसबोधादिति भावः।

यत्नः—उत्साहः। **क्षेत्रे वदते इति**। 'तद्विषयकमुत्साहमाविष्करोती'त्यर्थः। अस्य वाच्यत्वमपि वक्तुं शक्यम्।

**विवदन्ते इति**। 'वैमत्यहेतुकं नानाविधं भाषन्ते' इत्यर्थः।

**व्यक्तवाचाम्**। वदेर्व्यक्तवागर्थत्वेन 'व्यक्तवाचामि'त्युपादानसामर्थ्यात् येषां प्रसिद्धतरं व्यक्तवाक्त्वं ते एवेह गृह्यन्ते। अत एव शुक-सारिकादौ न। तदाह—**मनुष्यादीनामिति**। **समुच्चारेति** किम्?। 'क्रमेण संप्रवदन्ति'।

**अनुवदते इति**। अनुः सादृश्ये। 'कलापस्ये'ति शेषे षष्ठी।

**विभाषा**। युगपत्परस्परविरोधेन कथनं विप्रलापः। **भाष्यमिति**। एवञ्च तुदादेरेव ग्रहणमिति भावः।

**समस्तृतीया**। 'सम्'पूर्वाच्चरतेस्तृतीयान्तपदेन युक्तादात्मनेपदमि'त्यर्थः। तृतीयेत्यादि किम्?। 'उभौ लोकौ संचरसि, इमं चाऽमुञ्च देवले'ति।

**दाणश्च सा चे**। इदमशिष्टव्यवहारे, परस्परकरणरूपे कर्मव्यतिहारे चेष्यते। अत एव सहयोगे तृतीयायाः, कर्मव्यतीहारे 'कर्त्तरि कर्मे'त्यनेन आत्मनेपदस्य च सिद्धिमाश्रित्येदं प्रत्याख्यातं भाष्ये। एतज्ज्ञाप्यतृतीया-

ऽप्येवमेव । प्रकृतसूत्रस्थभाष्यप्रामाण्यात् । दास्येति । 'तस्यै दत्वा, तया सह परस्परग्रासदानपूर्वकं भुङ्क्ते' इत्यर्थः । दानपूर्वके भोगे दाण्धातुः । एतेन[1] कर्मव्यतीहारोदाहरणे 'व्यति'शब्दप्रयोग आवश्यक' इत्यपास्तम् ।

सम इति षष्ठीति । अत एव 'दास्या संप्रयच्छते' इति भाष्ये उदाहृतम् । 'ब्राह्मणीभ्यः सम्प्रयच्छती'ति च प्रत्युदाहृतम् । 'शदेरि'ति-सूत्रभाष्यात्तु सर्वत्रैव षष्ठीति लभ्यते, व्यवहिते प्रवृत्तिश्चेति बोध्यम् ।

स्वकरणं स्वीकार इति । 'च्वि'प्रत्ययस्तु सौत्रत्वात्, अनभिधानाद्वा न । वस्तुतः 'स्व'शब्दो भावप्रधानः । 'स्वत्वोत्पादने' इत्यर्थः । एवञ्च प्रकृतेः अविवक्षितत्वात्, कार्यमात्रस्य विवक्षितत्वात्, च्वेरभाव इत्याहुः ।

'पाणिग्रहणे एवेष्यते' इति वृत्तिस्तु चिन्त्या । 'इह कस्मान्न भवति-स्वशाटकान्तमुपयच्छती'ति भाष्यविरोधादित्याहुः ।

पूर्वप्रतिषेधादिति । स्पष्टं चेदं 'न वे'ति सूत्रे भाष्ये । पूर्वसूत्रस्यैवेति । तथा च सकर्मकस्यैव निषेधः । पूर्वसूत्रस्य सकर्मकविषयत्वात् । अकर्मके तु परत्वात् 'पूर्ववत्सन' इत्यात्मनेपदमिति भावः ।

प्रत्याङ्भ्याम् । प्रत्यासत्त्या[2] श्रुधात्वर्थविशेषकावेव प्रत्याङौ गृह्येते । तौ चोपसर्गावेव । तदाह—कर्मप्रवचनीयादिति । कर्मप्रवचनीया हि सम्बन्धपरिच्छेदका, न क्रियाविशेषका इति स्पष्टमेव ।

पूर्ववत्सनः । सन्नन्तादिति । प्रत्यासत्त्या, 'सन'इत्यनुवृत्त्या, आवृत्त्या वाऽवधिलाभ इति भावः । नाऽयं निमित्तो[3]ऽतिदेशः । 'अनुचिकीर्षती'त्यादावात्मनेपदाऽऽपत्तेः । नाऽपि कार्योऽतिदेशः । 'प्रचिक्रंसते' इत्यादौ क्रमेरात्मनेपदं प्रति फलोपहितनिमित्तत्वाऽभावेन 'स्नुक्रमोरि'ति नियमा-

---

१ 'एतेन' इत्यारभ्य 'अपास्तम्' इत्यन्तः ख. ग. पाठः । मनोरमास्थत्वात् क. कुण्डलितः ।

२ 'परस्परसाहचर्यात्प्रत्याङावुपसर्गावेव । तदाह' इति ग. पाठः ।

३ 'निमित्तादेरतिदेशः' इति ख. क. पाठः ।

ऽप्रवृत्त्या इडापत्तेः। किन्तु प्रकृतिगतमेव तत्सना व्यवधाने आत्मनेपदं प्रवर्त्तयतीत्येतावदेव। एतावतैव च निमित्ताऽतिदेशव्यवहार इत्याहुः। ध्वनितं चेदं भाष्ये। ननु 'शिशित्सती'त्यादौ शिदादिविषयशदादेरात्मनेपदविधानाच्छिद्विषयसन्नन्तादपि प्राप्नोतीत्यत आह—**वाक्यभेदेनेति**। **स्वराद्यन्तेति**। 'स्वराद्युपसर्गात्, स्वराऽन्तोपसर्गाच्चे'त्यर्थः।

**समः क्ष्णुवः**। 'समो गमी'त्यतो विच्छिद्य पाठः सकर्मकादपि विधानाऽर्थः[1]। तदाह—**संक्ष्णुते शस्त्रमिति**।

**भुजो**। इह 'भुज पालने'त्यादिरुधादेरेव ग्रहणम्। 'अनवने' इति प्रतिषेधात्। संयोगवद्विप्रयोगस्याऽपि विशेषाऽवगतिहेतुत्वात्, 'अवत्सा धेनुरि'तिवत्। तेन 'भुजो कौटिल्ये' इति तुदादेः परस्मैपदमेव-'विभुजति पाणिमि'ति। **इहोपभोग इति**। धातूनामनेकार्थत्वादिति भावः। इदमुपलक्षणम्-आत्मसात्करणस्याऽपि। अत एव 'भुजो भक्षणे'इति नोक्तम्।

**णेरणौ**। इह वाक्यत्रयम्-'णेरि'त्येकम्। 'अणौ यत्कर्म, णौ चेदि'ति द्वितीयम्। 'स कर्त्ते'ति तृतीयम्। तत्र 'स्यादि'त्यन्तेन आद्यं व्याख्यातम्।

द्वितीयं व्याचष्टे-**अणाविति**। यत्तदोर्नित्याऽभिसम्बन्धात्, यच्छब्देन तच्छब्दाऽऽक्षेपात् 'सैव चेदि'त्यर्थलाभः। अत्र 'कर्म'शब्दः 'कर्त्तरि कर्मव्यतीहारे' इतिवत् क्रियापरः। उत्तरवाक्ये णौ कर्मणः कर्त्तृत्वविधानात्।

ननु कर्मपदस्य क्रियापरत्वे 'कर्मवत्कर्मणे'त्यस्याऽग्रे 'णेरणावनाध्याने' इत्येव सूत्रितं स्यात्। 'अणौ कर्मस्थक्रियया तुल्यक्रिय एव कर्त्ता ण्यन्ते कर्मवदि'ति सूत्राऽर्थ इति चेन्न। चिण्वदिटोऽप्यतिदेशाऽऽपत्तेः।

---

१ इतोऽग्रे—'क्ष्णुव' इति योगविभागसामर्थ्यात्सकर्मकादपि सिद्धावत्र पाठो नियमार्थोऽपि आवृत्त्या,—'क्ष्णुव एव सन्नन्तादि'ति। अत एव 'पूर्ववत्सन' इति सूत्रे भाष्ये 'पूर्वग्रहणं योगाऽपेक्षं-'प्रागेतस्माद्योगाद्येभ्यो योगेभ्य आत्मनेपदमुक्तं तेभ्यः सन्नन्तेभ्योऽपी'ति पक्षे एतत्पूर्वोत्तरसूत्रद्वयविषयीभूतं 'बुभुक्षते' 'उपयुयुक्षते'इति न सिद्ध्यती'त्युक्तमि'ति केचित्' इति ग. पाठः।

यत्तु कैयटेन— 'कर्म'शब्दः कर्मकारकपरः। 'अणौ यत्कर्म, णौ चेत्तदेव कर्मे'ति कर्माऽन्तरनिवृत्तिरनेन क्रियते, न तु अणौ कर्मणो णौ कर्मत्वं प्रतिपाद्यते। उत्तरवाक्येन तस्य कर्त्तृत्वप्रतिपादनात्। एकस्य एकस्यां क्रियायां कर्त्तृत्व-कर्मत्वाऽसम्भवात्। न च 'दर्शयते भृत्यान् राजे'ति भाष्यविरोधः, भृत्यरूपस्य कर्मणः सत्त्वादिति वाच्यम्। अणौ ये कर्त्तृ-कर्मणी, तद्भिन्नकर्मव्युदासे तात्पर्यात्। 'कर्त्तरि कर्मे'त्यतः कर्त्तृग्रहणमनुवर्त्त्य, प्रथमया विपरिणमय्य, 'यच्च यश्च यदि'त्येकशेषेणाऽयमर्थो लब्धः। अत्र चोक्तभाष्यप्रयोग एव प्रमाणम्। एवञ्च 'स्मरयत्येनं[1] वनगुल्मः स्वयमेवे'ति कोकिलस्य कर्मत्वेऽपि, प्रत्युदाहरणं युज्यते[2]। न च कर्माऽन्तरनिवर्त्तकवाक्यस्य वैयर्थ्यम्। 'आरोहन्ति हस्तिनं हस्तिपकाः', 'आरोह्यमाणो हस्ती स्थलमारोपयति[3] मनुष्यानि'ति व्यावर्त्त्यस्य भाष्ये एवोक्तेः।

न च तत्र किमधिकं कर्म ?। न मनुष्याः। मनुष्याणाम् अणौ कर्त्तृत्वात्। कर्त्तृकर्मेतरकर्माऽभावस्यैव भवता विवक्षितत्वादिति वाच्यम्। स्थलरूपस्य[4] कर्मणोऽतिरिक्तस्य सत्त्वेनाऽक्षतेः। तस्य मूलभूता अण्यन्ताऽवस्था 'मनुष्या हस्तिनमारोहन्ती'त्येव। सौकर्याऽतिशयप्रतिपादनाय प्रेरणावृद्धिवत्, तत्प्रतिपादनायैव फलांऽशवृद्ध्या द्विकर्मकत्वकरणात्। 'स्थल'-शब्देन च गजपृष्ठस्थं काष्ठमयमुपवेशनस्थानमुच्यते। 'आरोहन्ति हस्तिनं हस्तिपका' इति तु 'आरोह्यमाण' इत्यस्यैव मूलभूता। 'आरोह्यमाण' इत्यन्तं सूत्रोदाहरणप्रदर्शनं दृष्टाऽन्ताऽर्थम्। 'हस्ती'ति मध्यमणिन्यायेन उभयान्वयि। यथा तत्राऽनेन आत्मनेपदं जायते, तथाऽत्रापि स्यादित्याशयः।

---

१ 'स्मारयत्येनम्' इति ग. पाठः।

२ 'प्रयुज्यते' इति ख. पाठः।

३ 'स्थालम्' इति, 'आरोहयति' इति च ग. पाठः।

४ 'कटेहरा' 'अम्बारी' इत्यादिनाम्ना भाषायां प्रसिद्धं राज्ञां हस्तिनां पर्याणं काष्ठ-रजत-सुवर्ण-गजदन्तादिनिर्मितमुच्यते स्थलशब्देनेति बोध्यम्।

यत्तु 'दर्शयते मासमि'ति प्रत्युदाहरणम् । न हि एतस्य अणौ कर्मत्वं सम्भवति । सकर्मकत्वादि'ति । तन्न[1] । द्वितीयकक्ष्यायामकर्मकत्वसम्भवात्[2][3] । 'प्राकृतमेवेदं कर्मे'ति भाष्ये उक्तत्वेन, सकर्मकेऽपि तेषां कर्मत्वाच्च । 'मासमभिव्याप्य ज्ञानविषयो भवती'त्यर्थे बुद्धे, 'मासं व्याप्य कश्चिदेनं पश्यती'त्यर्थस्याऽपि भानेन,अण्यन्तेऽपि तत्कर्मसम्बन्धस्याऽऽवश्यकत्वाच्च । अत एवोदाहरणीभूतकक्षया 'ज्ञानविषयो भवती'त्यर्थे बुद्धे, नियमेन 'ज्ञानविषयं करोती'त्यर्थस्याऽपि भानेनाऽनेककक्षाकल्पनम् ।

न च कर्माऽन्तरनिवर्त्तकत्वं द्वितीयवाक्यस्य दुर्लभम् , अणौ कर्मणो णौ कर्मत्वसद्भाव एव प्रतिपाद्यताम् , अणौ द्विकर्मका एवोदाहरणानि सन्त्विति वाच्यम् । 'अणौ यत्कर्म स कर्त्ते'ति वाक्ये उद्देश्यतावच्छेदकाऽवच्छेदेन विधेयाऽन्वयस्यौत्सर्गिकत्वेन, कर्मत्वाऽवच्छेदेन कर्त्तृत्वविधानेन, कर्मसत्ताप्रतिपादनस्य कर्त्तुमशक्यत्वेन, कर्माऽन्तरनिवृत्तिपरत्वात् । स्पष्टं चेदं कैयटे । एतद् ध्वनयितुमेव दृष्टान्तव्याजेन 'आरोहयमाणो हस्ती'त्युदाहरणप्रदर्शनं भाष्ये कृतम् । एवञ्चाऽध्यारोपितप्रेषण[4]द्वितीयकक्षायां भवत्येव आत्मनेपदम् । अत एव प्रत्युदाहरणे 'स्थल'पदोपादानं चरिताऽर्थम् । अत एव 'करेणुरारोहयते निषादिनमि'ति माघप्रयोग उपपद्यते' इति ।

तन्न[5] । द्वितीयप्रघट्टकविरोधात् । तत्र हि 'यद्येवं कर्मकर्त्ताऽयं भवति, तत्र कर्मकर्त्तृत्वात्सिद्धमि'ति शङ्कायां, 'यक्चिणोर्निवृत्त्यर्थं नियमोऽयमि'त्युक्तम् । त्वन्मते हि सकर्मकाणामप्युदाहरणत्वेन, तत्र 'सकर्मकाणां

---

१ 'तन्न । मासादीनां कर्मग्रहणेनाऽग्रहणात्' इति ग. पाठः ।

२ 'सम्भवाच्च' इति ग. पाठः ।

३ अत्र 'कक्षा' इति 'कक्ष्या' इति च सर्वत्र पाठान्तरं बोध्यम् ।

४ 'प्रेषणा' इति ख. ङ. पाठः ।

५ कैयटोक्तं ( १९३१-३२ पृष्ठस्थं ) खण्डयति-तन्नेति ।

प्रतिषेध' इति कर्मवद्भावनिषेधेन कर्मवद्भावाऽप्राप्त्या, तद्विरोधः स्पष्ट एव।

नन्वध्यारोपितप्रेषणतृतीयकक्ष्यायां कर्त्तुः समानधातौ कर्मस्थक्रियया तुल्यक्रियत्वाऽभावेन कर्मवद्भावाऽप्रवृत्ताविदं भाष्यमसङ्गतम्। 'कर्मवत्कर्मणे'त्यत्र प्रत्यासत्त्या यस्मिन्धातौ यस्य कर्त्तुः कर्मवद्भावस्तस्मिन्धातौ कर्मस्थक्रियया तुल्यक्रियत्वग्रहणादिति चेन्न। 'निवृत्तप्रेषणपक्षमादाय प्रवृत्तिरि'ति भाष्याऽऽशयात्। 'हस्ती न्यग्भवती'त्यर्थे बुद्धे, 'कश्चिद्धस्तिनं न्यग्भावयती'त्यस्याऽप्यर्थस्य नियततया भानेन, तदर्थबोधकशब्दमात्रोपस्थितौ,'अयमेव ग्राह्यः, अयं ने'त्यत्र विनिगमनाविरहात्। नहि पक्षद्वयमूलकः प्रयोगोऽन्यतरपक्षमादायैवोपपाद्य इत्यत्र मानमस्तीति बोध्यम्।

---

१ इतोऽग्रे—'ननु 'देवदत्तः कटं करोति', 'कटः क्रियते'। पुनर्देवदत्तव्यापारविवक्षायां णिचि 'हृक्रोरि'त्यस्य वैकल्पिकत्वेन कर्मत्वाऽभावे, 'देवदत्तः कटेन कारयती'त्यत्राऽस्य प्रवृत्त्या, भाष्यमसङ्गतमेव। न ह्यत्र कर्मवद्भावः प्राप्नोति। पक्षे कर्मत्वसत्त्वेन समानधातौ कर्मस्थक्रियया तुल्यक्रियत्वेऽपि, प्रयोज्यकर्त्तुर्लकारवाच्यत्वाऽभावेन, कर्मवद्भावाऽप्रवृत्तेः। नहि ण्यन्तात्प्रयोज्ये लकारः सम्भवति। प्रकृतिप्रत्ययार्थयोरनन्वयाऽऽपत्तेः। अन्यधात्वर्थकर्त्तरि अन्यधातोः प्रत्ययाऽनापत्तेश्चेति चेन्न। 'कर्त्तरि कर्मे'त्यतः 'कर्त्तरी'त्यनुवृत्तेरस्य कर्त्तरि प्रवृत्त्या, प्रत्यासत्तिन्यायेन 'णौ चेत्स कर्त्ते'तिवाक्योपात्तकर्त्तर्येवाऽस्य विधानेनाऽदोषात्' इति ग. पाठः।

२ इतोऽग्रे—'तत्र यदर्थकाण्णिच्, यदर्थकाद्वा निवृत्तप्रेषणत्वादिपरम्परया णिच्, तानि सर्वाणि ण्यन्तमूलानि, उदाहरणभूतण्यन्तार्थबोधे यावतामर्थानामुपस्थितिस्तदर्थकानी'ति बोधे तानीव, विनिगमनाविरहात्, प्रकृतसूत्रे ण्यन्ताऽण्यन्तयोः श्रुतत्वाच्च उभयरूपाण्यपि गृह्यन्ते। एतेन 'निवृत्तप्रेषणतृतीयकक्ष्याया, अध्यारोपितप्रेषणद्वितीयकक्ष्यायाश्चोपन्यासोऽयुक्त'इत्यपास्तम्। द्वितीय-तृतीयवाक्यव्यावर्त्यप्रदर्शनाऽर्थं तदावश्यकत्वाच्च'इति ग. पाठः।

नन्वेवमपि 'मोदक आदयते' इत्यादौ 'णेरणौ' इति सूत्रं दुर्वारम्। न हि अत्र कर्मवद्भावप्राप्तिः। 'आदिखाद्योर्ने'ति निषेधात्। तृतीयकक्षायां गत्यादिसूत्रेण प्रयोज्यस्य[1] कर्मत्वाऽभावे, चतुर्थकक्षायां समानधातौ कर्मस्थक्रियया तुल्यक्रियकर्त्तृत्वाऽभावात्।

एवं 'कस्तूरिका घ्रापयते' इत्यादौ 'दृशेश्चे'त्यनेन ज्ञानसामान्याऽर्थानामेव ग्रहणस्य ज्ञापितत्वेन, उक्तरीत्या कर्मवद्भावाऽप्रवृत्त्या, तत्रेदं सूत्रं दुर्वारमिति, भाष्यमसङ्गतमेवेति चेन्न। एतद्भाष्यप्रामाण्येन 'कर्मवत्कर्मणे'त्यत्र 'कर्मणे'ति फलाऽऽश्रयोपलक्षणमतो न दोषः।[2]

नन्वेवमपि 'यक्चिणोर्निवृत्त्यर्थमि'ति भाष्यमसङ्गतं, चिण्वदिटोऽपि निवृत्त्यर्थत्वादिति चेन्न। नियमस्य सजातीयाऽपेक्षत्वेन प्रत्ययाऽन्तरस्यैव वारणात्। अत एव यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाऽकर्मकाणामुपसङ्ख्यानेनैव सिद्धे, नियमवैयर्थ्यं भगवतोक्तम्। वार्त्तिकेन तु यथा चिण्वदिटो न निषेधस्तथा वक्ष्यते इति।

ननु 'कर्मस्थभावकादिषु कर्मवदि'ति सिद्धान्तं विहाय शङ्काभाष्यप्रवृत्तिरित्यवश्यं वाच्यम्। एवञ्च 'अकर्मकेषु कर्मवदि'त्याद्यपि विहायोक्तभाष्यप्रवृत्तिरस्त्विति चेन्न। सिद्धान्तदूषणाऽतिरिक्तदूषणवत्त्वेन पूर्वपक्षसिद्धान्तयोर्निर्दलत्वाऽऽपत्तेः। अत एव तदग्रे 'इदं तर्हि प्रयोजनम्, 'अनाध्याने' इति वक्ष्यामि'। 'स्मरति वनगुल्मस्य कोकिलः'। 'स्मरयत्येनं वनगुल्मः स्वयमेव'। 'एतदपि न प्रयोजनम्। कर्मोऽपदिष्टा विधयः कर्मस्थक्रियाणां, कर्मस्थभावकानां वा भवन्ति। कर्त्तृस्थभावकश्चाऽयम्'। 'एवं तर्हि सिद्धे सति यदनाध्याने इत्याह, तज्ज्ञापयति–भवत्येवंजातीयका-

१ 'प्रयोज्यकर्मत्वाऽभावे' इति ग. पाठः।

२ इतोऽग्रे—'अन्यथा फलाऽनाश्रयकर्मवतां, कर्मसंज्ञारहितफलाऽऽश्रयवतां च कर्मस्थक्रियकर्त्त्वाद्यभावादेवाऽतिप्रसङ्गविरहेण, तद्वैयर्थ्यं स्पष्टमेव' इति ग. पाठः।

नामात्मनेपदम्'। 'किं प्रयोजनम्'?। 'पश्यन्ति भृत्या राजानम्'। 'दर्शयते भृत्यान् राजे'ति भाष्यं सङ्गच्छते। तेन हि कर्त्तृस्थभावकाऽर्थमिदम्' इत्यर्थः स्पष्टमेवोक्तः। भाष्योक्ते 'हस्ती[1] स्थलमारोहयति मनुष्यानि'त्यादौ क्रियाऽऽधिक्यस्य स्पष्टत्वान्न तद्विरोधः[2]। उदाहरणप्रत्युदाहरणयोः कर्म-पदम् अविवक्षितमिति, न तद्विरोधः। ननु अविवक्षा चेत्तत्प्रयोगाऽनुप-पत्तिरिति चेन्न[3]। णिजन्तस्य 'स्मरणविषयो भवती'त्यर्थे लक्षणा णिजनपगमाय वाच्या। एवं तत्र णिजुत्पत्तये 'स्मरणाऽनुकूलवनगुल्मनिष्ठव्यापारविष-या प्रेरणे'ति बोधस्याऽऽवश्यकत्वेन, तदभिप्रायेण 'एनमि'त्यस्य प्रयोग इत्यदोषात्। अतो न निर्णीताऽर्थमध्यप्रघट्टकस्य संदिग्धोदाहरणपरभाष्या-ऽनुरोधेनाऽन्यथानयनमुचितम्। यद्वा प्रतियोगे द्वितीया उदाहरण-प्रत्युदाहरणयोरिति न दोषः।

नन्वेवम् 'आत्मनः कर्मत्वे प्रतिषेधः'। 'हन्त्यात्मानम्'। 'घातयत्यात्मा' इति भाष्यविरोध इति चेन्न। 'आत्मानमि'त्यस्य प्रथमोपस्थितकर्माऽऽका-ङ्क्षिते एवाऽन्वयस्य युक्तत्वेनाऽकर्मकस्यैवोदाहरणत्वेनाऽक्षतेः। 'आत्मनः कर्मत्वे प्रतिषेधो वक्तव्य' इत्यस्य च 'अणौ' इति शेषः।

---

१ 'हस्ती' इति क. नास्ति।

२ इतोऽग्रे—'स्थलमि'त्यपि नाऽधिकम्। 'स्थलमारोपयति मनुष्यानि'त्यस्यै-वोदाहरणत्वात्। 'मनुष्याः स्थलमारोहन्ती'ति च तन्मूला अण्यन्ताऽवस्था। 'हस्ती'त्यन्तं तु त्वद्वन्ममाऽपि दृष्टान्ताऽर्थमेवेति बोध्यम्' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

३ 'इति चेन्न। 'गभीरायां नद्यां घोष' इत्यादौ 'गभीर''नदी'पदार्थयोरभेद-बोधाऽनन्तरं तीरलक्षणायामपि, प्राथमिकबोधमादाय, लक्षणातात्पर्यग्राहक-त्वेन च गभीरादिपदप्रयोगवदुपपत्तेः। तथाहि—इहाऽपि णिजन्तस्य 'स्मरणविषयो भवती'त्यर्थे लक्षणा णिजनपगमाय वाच्या। यथा 'गङ्गाया-मि'त्यादौ गङ्गातीरे लक्षणायामपि स्त्रीप्रत्ययाऽनपगमः। एवञ्च तत्र णिजु-त्पत्तये' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

नन्वेवमपि 'अत्र सूत्रे अकर्मकमेवोदाहरणमि'त्यसङ्गतम्। 'हृक्रो'रिति-सूत्रस्थभाष्यविरोधात्। तथाहि—'अभिवादिदृशोरात्मनेपदे उपसङ्ख्यानम्'। 'अभिवदति गुरुं देवदत्तः'। 'अभिवादयते गुरुं[1] देवदत्तं, देवदत्तेन वा' 'पश्यन्ति भृत्या राजानम्'। 'दर्शयते भृत्यान् राजा, भृत्यैर्वा'। कथमत्र आत्मनेपदम्?। एकस्य 'णेरणावि'ति, अपरस्य 'णिचश्चे' तीति हि तत्रोक्तम्। 'एकस्य—ण्यन्तदृशेः। अपरस्य = अभि[2]वदतिप्रकृतिकण्यन्तस्ये'ति तदर्थः। नहि अत्र कर्मणोऽविवक्षा, उपपदविभक्तित्वं वा। तद्वार्त्तिकोदाहरणत्वाऽसङ्गतेरिति चेत्। उच्यते। 'एकस्य' 'अपरस्ये'त्यत्र 'मते' इत्यध्याहा[3]र्यम्। 'अपरस्ये'त्यस्य च 'स्वस्ये'त्यर्थः। तत्र 'कर्मे'त्यन्तपृथग्वाक्याऽनङ्गीकर्त्तृमते 'णेरणौ' इति, भाष्यवार्त्तिकमते तु 'णिचश्चे'ती'त्यर्थ इति न कश्चिद्विरोधः।

अन्यथा 'अणावकर्मकादि'तिसूत्रवक्ष्यमाणरीत्या 'अणौ' इति पदेन हेतुमण्ण्यन्तभिन्नाऽवस्थाया एव ग्रहणेन, अभिवादयतावपि तत्प्राप्त्या, भाष्याऽसङ्गतिरेव।

[4]यत्तु जयादित्येन—'णौ चेत्'ग्रहणं समानक्रियाऽर्थमि'त्युक्तम्। 'णिच्प्रकृत्युपात्तक्रियायामेव यथा स्यात्, प्रयोज्य-प्रयोजकभावलक्षणेऽपि क्रियाभेदे मा भूदि'त्यर्थं 'णौ चे'दि'त्यावर्त्त्य, अत्र 'अणौ यदि'त्यनुवर्त्त्य, 'अणौ यत्प्रतिपाद्यं वस्तु, णौ चेत्तदेव प्रतिपाद्यमि'ति व्याख्येयमि'ति हरदत्तेन व्याख्यातम्। ततः—'यत्''स'ग्रहणमनन्यकर्माऽर्थम्। 'आरोहन्ति हस्तिनं हस्तिपकाः'। 'आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानि'ति

१ 'गुरुर्देवदत्तम्' इति ङ. पाठः।

२ 'अपरस्य = चुराद्यभिवादयतिप्रकृतिकण्यन्तस्येति तदर्थः। तस्य नित्यण्यन्तत्वेनाऽण्यन्तावस्थाऽभाव इति तद्भावः' इति ख. ङ. पाठः।

३ 'तत्रापि धातोरित्यध्याहारस्याऽऽवश्यकत्वात्' इति ग. पाठः।

४ 'यत्तु' इत्यारभ्य 'क्रियार्थत्वादिति भावः' इत्यन्तः ख. ग. ङ. पाठः। मनोरमास्थत्वात् क. कुण्डलितः।

उक्तम् । 'अणौ यत्कर्म तत्कर्म णौ चेदि'त्यर्थे उक्तरीत्या नियामकत्वमस्य । 'कर्म व्याप्ये, क्रियायां च पुंनपुंसकयोर्मतमि'ति रुद्रकोशात्[2] कर्मशब्दः पुंस्यपि ।

ननु स्थलरूपस्य अणौ कर्मणो णौ कर्तृत्वाऽभावात्कथमत्र प्राप्तिः । न च[3] णित्त्वेनैक्यं गृहीत्वा शानच्प्रकृत्यन्तर्गतस्य णेरभावे कर्मणो हस्तिन एव तिङ्प्रकृतिभूतण्यन्ताऽर्थे कर्तृत्वमिति तदाशय इति वाच्यम्[4] । प्रत्यासत्त्यैव गताऽर्थत्वात् । द्वाविह णिचौ । तत्र आद्ये कृतमेवात्मनेपदम्–'आरोहयमाण' इति । द्वितीये तु अणौ कर्मणः स्थलस्य णौ कर्तृत्वाऽभावात् प्राप्तिरेव नास्ति । नियतोपस्थिततया उदाहरणभूतण्यन्तमूलस्यैव अण्यन्तस्य 'अणौ' इत्यनेन ग्रहीतुमुचितत्वात् । किञ्च णित्वेनैक्यं गृहीत्वा अणौ कर्मणो णौ कर्तृत्वाऽऽपादनवत्, अणौ कर्माऽतिरिक्तकर्मसत्तायाः सर्वत्र सत्त्वेन 'आरोहयमाण' इत्यत्र आत्मनेपदाऽप्रसक्तिः[5] । उक्तरीत्या भाष्यस्थैतत्प्रत्युदाहरणव्याख्यावत् वृत्तिस्थस्याऽपि व्याख्यानाददोष' इति[6] । तन्न । एवमपि समानक्रियत्वबोधकवाक्यवैयर्थ्याऽऽपत्तेः । न च तत्र वाक्ये 'क्रिया'शब्दो धातुपरः, तेन धातुभेदे प्रवृत्तिर्नेति वाच्यम् । 'कर्मवत्कर्मणे'-त्यस्येव प्रत्यासत्त्यैव धातुभेदे प्राप्त्यभावात् । धात्वन्तरघटितकक्ष्यायाः तन्मूलत्वाऽभावाच्च ।

यद्वा समानक्रियत्वबोधकवाक्येनैव सिद्धौ, कर्माऽन्तरनिवर्त्तकवाक्यं व्यर्थम् । एतेन 'आरोहन्ति हस्तिनं हस्तिपकाः, तानारोहयति हस्ती'ति हरदत्तोक्तं प्रत्युदाहरणमप्यपास्तम् । समानक्रियत्वाऽभावेनैव अतिप्रसङ्ग-

---

१ 'स कर्मा णौ चेत्' इति ग. पाठः ।

२ 'मिति रुद्रकोशः । ननु स्थलरूपस्य इति' क. पाठः ।

३ 'न च' इति क. नास्ति ।

४ 'इति वाच्यम्' इति क. नास्ति ।

५ 'आत्मनेपदाऽप्रसक्तिरिति चेन्न' इति ख. ङ. पाठः । क. तु नास्ति ।

६ इतोऽग्रे—'इति वाच्यम् । तस्मादुक्तरीत्या भाष्यस्थ' इति ग. पाठः ।

विरहात्। एतेन 'कर्त्तेति किम् ?। 'आरोहन्ति हस्तिनं हस्तिपकाः, तानारोहयति महामात्रः' इति वृत्त्युक्तमपि अपास्तमिति दिक्। तदुक्तं मनोरमायाम्—

'भृत्यादीनां परित्यागाच्छुद्धाऽभेदपरिग्रहात्।
कर्मवाक्यस्य तादर्थ्याऽऽश्रयणान्नेस्तरेत्सुधीः' ॥ इति।

भृत्यादीनाम्। 'लक्ष्यस्थकर्मरूपाणामि'त्यर्थः। शुद्धाऽभेदेति। 'द्वितीयकक्ष्यया सहे'त्यर्थः। यद्वा 'अणौ यत्कर्मे'ति वाक्ये' इति शेषः। कर्मवाक्यस्येति। कर्मशब्दस्य क्रियाऽर्थत्वादिति भावः।

तदेतत्सकलमभिसन्धायाऽऽह-अणौ या क्रियेत्यादि। न चाऽत्र सत्तैव प्रतिपाद्यताम्, किं 'सैवे'त्येवकारेण, दुर्लभश्चेति वाच्यम्। वैयर्थ्याऽऽपत्तेः। अध्यारोपितप्रेषणाद्वितीयकक्ष्यायामधिकप्रवेशेऽपि तत्सत्ताया अक्षतेः।

तृतीयं वाक्यं व्याचष्टे—अणौ यत्कर्म कारकमित्यादि। 'अणौ' इत्यादि 'चेत्'शब्दाऽन्तमिहाऽनुवर्त्तते। यद्यप्येकयोगे नाऽनुवृत्तिरिति 'इको गुणे'त्यत्र भाष्ये उक्तं,तथापि स्वरितत्वप्रतिज्ञासामर्थ्यात्, आकाङ्क्षासत्त्वाच्चाऽनुवृत्तिः। 'कर्म'शब्दश्च कारकपरः। शब्दाऽधिकारादिति भावः।

स कर्त्तेति। सर्वनाम्नां पर्यायेण उद्देश्यविधेयलिङ्गतेति स्पष्टम्। तत्र असति प्रतिबन्धके उद्देश्यताऽवच्छेदकाऽवच्छेदेन विधेयाऽन्वयस्य व्युत्पत्तिसिद्धतया, अण्यन्तावस्थास्थकर्मकारकत्वाऽवच्छेदेन णौ कर्तृत्वलाभः। तेन (१) 'देवदत्तो गां याचते यज्ञदत्तम्'। (२) 'यज्ञदत्तो गां याचते'। (३) 'देवदत्तो गां याचयति यज्ञदत्तेन'। (४) 'यज्ञदत्तो गां याचयती'त्यादौ नात्मनेपदम्। न च 'यत्कर्मे'त्याद्यनुवृत्त्या तच्छब्दाऽऽक्षेपेणैव

१ 'यत्तु जयादित्येन' ( १३३६ पृष्ठे ) इत्यादिः 'भावः' इत्यन्तः पाठः क. कुण्डलितः। मनोरमास्थत्वात्।

२ 'अध्यारोपितप्रेषणद्वितीयकक्ष्यायाम्' इति ख. ग. ङ. पाठः। 'कक्षा' ख. ङ. पाठः।

३ 'उद्देश्यविधेयाऽन्यतरलिङ्गतेति भावः' इति तु लघुशेखरपाठः।

सिद्धे, 'स' इति व्यर्थम । 'स सम्प्रदानमि'तिवत् न्यायाऽनुवादकत्वात्।

ननु 'णौ चेन्'पदं व्यर्थम् । न च तदभावे श्रुतत्वात् 'अणौ' इत्यस्यैव सम्बन्ध स्यादिति वाच्यम् । 'अणौ यत्कर्मे'त्यनुवादेन अणौ तत्सिद्धेस्तत्र विधातुमशक्यत्वात्, प्रत्यासत्त्या 'यत्राऽऽत्मनेपदं तत्र कर्त्ते'त्यर्थलाभादिति चेन्न । 'ण्यर्थं प्रति कर्त्ते'त्यर्थलाभाऽर्थं तस्याऽऽवश्यकत्वात्। तेन 'देवदत्तः कटं करोति'। 'कटः क्रियते'। ततः करोत्यर्थे णिचि 'ह्रक्रोरि'तिविकल्पात्कर्मत्वाऽभावे, 'देवदत्तः कटेन कारयती'त्यत्र निवृत्तप्रेषणतृतीयकक्ष्यायां न आत्मनेपदम् । मम तु करोत्यर्थं प्रति कटस्य कर्त्तृत्वेऽपि, ण्यर्थं प्रति तत्त्वाऽभावान्न दोषः । न च पक्षे कर्मत्वस्याऽपि सत्त्वेन कर्मस्थक्रियया तुल्यक्रियकर्त्तुः सत्त्वेन कर्मवद्भावात् अत्र आत्मनेपदं दुर्वारम्। कर्त्तुर्लकारवाच्यत्वाऽभावेन तदप्रवृत्तेः । न च 'णेरि'त्यस्य विभक्तिविपरिणामेनाऽन्वयादिष्टसिद्धिः । आवृत्तौ, विभक्तिविपरिणामे च मानाऽभावात् । यत्तच्छब्दौ स्पष्टाऽर्थावित्यलं क्लिष्टकल्पनयेति दिक् ।

**न** त्विति । प्रसज्यप्रतिषेधेऽप्यदोष इति स व्याख्यातः । पर्युदासस्तूचितः । न्याय्यत्वात् । लक्ष्यविसंवादाऽभावाच्च ।

अणावकर्मकादिति । 'यत्र काऽप्यण्यन्ताऽवस्थायाम् अकर्मकादि'त्यर्थ इति प्राप्तिरिति भावः । न चाऽत्र 'अकर्मक'पदेन अत्यन्ताऽविद्यमानकर्मकाणामेव ग्रहणं, नाऽविवक्षितकर्मणाम्, सर्वेषां तादृशत्वेन 'अकर्मक'-

१ इतोऽग्रे'ण्यन्तादात्मनेपदविधानेन तत्रैव विधातुं युक्तत्वाच्च' इति ग. पाठः।

२ 'मानाऽभावादिति दिक् । अत एव 'अणौ या क्रिये'त्यत्र ण्यन्तेनेत्येवं व्याख्याय द्वितीयवाक्ये 'स चेण्णावि'ति व्याख्यातम् । पूर्ववाक्ये तदन्तपरतया व्याख्याने दोषाऽभावेऽपि, चरमवाक्ये तथा व्याख्यानं कर्त्तुमशक्यम्, पूर्वोक्तदोषादिति तदाशयः । 'णौ' इति स्फुटं वाक्यभेदप्रतीतये' इत्यन्ये' इति ग. पाठः ।

३ 'न चाऽत्र' इत्यारभ्य 'ग्रहणाच्चेत्याहुः' (१९४१ पृ.) इत्यन्तः पाठः क. कुण्डलितः

पदवैयर्थ्याऽऽपत्तेरिति वाच्यम्। 'दर्शयते राजानं देवदत्तं यज्ञदत्त' इति व्यावृत्त्या 'अकर्मक'पदस्य चारितार्थ्यात्। न हि अस्य मूलीभूता अण्यन्ताऽवस्था अकर्मिका।

न च 'राजानं दर्शयते देवदत्तं यज्ञदत्त' इति बोधोत्तरं 'राज्ञा ज्ञानविषयो भवती'त्यर्थस्य, 'राजानं ज्ञानविषयी करोती'त्यर्थस्य च नियततया भानेन, 'राजा पश्यती'तिवाक्यं गृहीत्वा उक्तोदाहरणे 'अणावकर्मकादि'त्यस्यदुर्वारत्वेन, अकर्मक'पदवैयर्थ्यमिति वाच्यम्। उद्देश्यतावच्छेदकाऽवच्छेदनाऽन्वयस्य व्युत्पत्तिसिद्धतया, अण्यन्ताऽवस्थाऽवच्छेदेन अकर्मकत्वप्रतीतेरदोषात्। न चैवं 'निगरणचलने'ति सूत्रे अभ्यवहाराऽर्थक'निगरण'शब्देन पानाऽर्थानां ग्रहणवत्, 'चलन'शब्देन मन्दगत्यर्थ'चुप'धातोर्ग्रहणवच्च, 'चलन'शब्देन गत्यर्थकाऽऽरोहतेर्ग्रहणस्य दुर्वारत्वेन, परत्वात्

१ 'कर्मणोऽविवक्षायां 'दर्शयते राजानम्' इति ख. ग. ङ. पाठः।

२ इतोऽग्रे—'श्रुतण्यन्ताऽनुरोधेन कल्प्यमानाऽण्यन्ताऽवस्थाया असति बाधके सर्वकारकविशिष्टाया एव कल्पयितुं युक्तत्वात्। 'हेतुमति च' 'तत्प्रयोजको हेतुश्चे'ति सूत्राभ्यां हेतुमण्णिचि कारकविशिष्टक्रियाया एव निमित्तत्वलाभात्' इति ग. पाठः।

३ 'राज्ञा ज्ञानविषयो भवति' इति क. पाठः।

४ 'अकर्मकपदवैयर्थ्यमिति वाच्यम्। साक्षादुद्देश्यसमर्पकाऽकर्मकपदसंकोचकल्पनाऽपेक्षया, तद्विशेषणा'ऽणावि'तिपदे 'यदर्थकाण्णिच्सैवाऽवस्था अण्यन्तपदेन गृह्यते' इत्येवं तत्सङ्कोचकल्पनेन तस्य चारिर्थ्यादित्याहुः। अत एव 'अणावि'ति साऽर्थकमिति तत्रैव वक्ष्यते। केचित्तु अत्र 'विभाषोपपदेने'त्यादि 'अणावकर्मकादि'त्यन्तसूत्रसमुदायो ग्राह्यः। 'अनुपराभ्यामि'त्यादि 'विभाषाऽकर्मका'दि'त्यन्तसमुदायस्य तु न ग्रहणम्। ण्यन्तेऽप्राप्तेः। तेन 'बुध्यते पद्मं देवदत्तः', 'बोधयते पद्ममि'त्यादौ 'बुधयुधे'ति सूत्रं बाधित्वा 'णेरणावि'ति प्रवर्त्तते। एतेन निगरणचलने'ति सूत्रे'इति ग.पाठः।

'निगरणचलने'त्यस्य प्रवृत्तौ, 'आरोहन्ती'त्यादिभाष्यमसङ्गतमिति वाच्यम्। रुहेश्चलनाऽर्थत्वाऽभावात् । अत एव लघुभूतोऽपि 'गति'शब्दः सूत्रे नोपात्तः । 'अर्थ'ग्रहणसामर्थ्येन प्रसिद्धकम्पस्यैव ग्रहणाच्चेत्याहुः ।

पूर्वविप्रतिषेधेनेति । 'दर्शयते राजे'ति भाष्योदाहरणं तस्य मूलम् । तत्र हि निवृत्तप्रेषणत्वेन अकर्मकतया 'अणावकर्मकादि'ति परत्वात्प्राप्नोति । न च 'दर्शयते राजे'ति भाष्यप्रयोगः परगामिनि क्रियाफले, एवञ्च कर्त्तृगामिनि क्रियाफले परत्वात् 'अणावकर्मके'त्यस्य प्रवृत्तौ न किञ्चिद्बाधकमिति वाच्यम् । तदर्थमावश्यकस्य परगामिन्यपि परत्वात्प्रवृत्तेर्दुर्वारत्वात् ।

१ 'असङ्गतमित्यपास्तमित्याहुः । अन्ये तु 'रुहेश्चलनार्थत्वाऽभावान्न दोषः । अत एव' इति ग. पाठः ।

२ 'न चैवम्' (१९४०पृ.) इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः ।

३ 'पूर्वविप्रतिषेधेनेति । अत एवेह 'णेरि'ति पदं सार्थकम् । तद्धि हेतुमण्ण्यन्तमात्रे प्रवृत्त्यर्थम् । अन्यथा 'अणौ या क्रिया सा णौ चेत्तदात्मनेपदमि'त्युक्त्यैव ण्यन्तात् आत्मनेपदलाभे, तद्वैयर्थ्यं स्पष्टमेव । यथा '[1]मथुरास्थो वरो वाराणस्यामस्ति चेद्विवाहो भवती'त्युक्ते, विवाहस्य वाराणस्यधिकरणत्वप्रतीतेः । न च हेतुमण्णिचो ग्रहणाऽर्थं तत् । 'अणौ यत्कर्म णौ चेत्स कर्त्ते'ति वाक्ये उद्देश्यविधेयभावेनाऽन्वयात्[2] हेतुमण्णिच्येव प्रवृत्तिसिद्धेः । तथा च णिग्रहणं सर्वत्र प्रवृत्तिबोधनद्वारा पूर्वविप्रतिषेधबोधकम् । यद्यप्युत्तरार्थमावश्यकं तत्, तथापीह करणं तत्फलकमित्याहुः । यत्तु 'दर्शयते राजे'ति भाष्योदाहरणं तस्य मूलम् । तत्र हि' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

1 'मथुरास्थोऽश्वो' इति, 'मथुरास्थो नरो' इति च पाठान्तरम् । अयं पाठः क. पुस्तके अग्रेवर्त्तते ।

2 'अन्वयात्, उत्तरत्र 'भीस्म्योरि'त्यादौ तस्यैव संम्भवेनाऽर्थाऽधिकाराच्च' इति ग. पाठः ।

न हि 'कर्त्रभिप्राये' इति तत्राऽनुवर्त्तते, फलाऽभावादिति भावः[1]।

नन्विदं सूत्रं कर्मवद्भावेन गताऽर्थमत आह[2]—**कर्तृस्थभावका** इत्यादि। यद्यपि अन्यत्र भाव-क्रिययोः पर्यायत्वं, तथाऽपि आकरे उभयोपादानसामर्थ्यात् इह 'अपरिस्पन्दसाधनसाध्यो भावः', 'सपरिस्पन्दसाधनसाध्या क्रिये'ति भेदो बोध्यः। स्पष्टं चेदम् 'उपसर्गप्रादुर्भ्यामि'त्यादावाकरे। कर्मवद्भावश्च कर्मस्थभावक्रियेष्विति भावः। तत्राऽऽद्यमुदाहरति—**पश्यन्तीति**। ज्ञानविषयत्वाऽऽपत्त्युपसर्जनव्यापारवाची दृशिः। स[3]कर्मकाणां व्यधिकरणांऽशद्वयाऽभिधायकत्वनियमात्। अत एव 'धातूपात्तव्यापाराऽऽश्रयः कर्त्ता, व्यापारव्यधिकरणधातूपात्तफलाऽऽश्रयः कर्मे'ति सिद्धान्तः। नचैवं कर्मकर्त्तरि फलवाचकत्वेऽपि, क्रियावाचकत्वाऽभावेन, 'अणौ या क्रिये'त्यंशाऽभावेन, प्रकृतसूत्रोदाहरणत्वविरोधः। धात्वर्थस्यैव 'क्रिया'शब्देन ग्रहणात्।

---

१ 'फलाऽभावादिति। तन्न। अण्यन्ताऽवस्थात्वाऽवच्छेदेनाऽकर्मकत्वाऽभावात्। एवञ्च पूर्वविप्रतिषेधेऽपि न फलम्। अस्याऽण्यन्तसकर्मकविषयत्वात्, 'अणावि'त्यस्य अण्यन्ताऽकर्मकपरत्वात्। 'विभाषोपपदेने'त्यस्य विषयेऽस्यैव प्रवृत्तौ यदि दृढतरं मानमस्ति, तदा तद्विषयेऽस्तु स इति दिक्'इति ख. ग. ङ. पाठः।

२ 'फलाऽभावादिति दिक्। तच्च भाष्योदाहरणं सामान्याऽपेक्षं मूलम्। एतेन 'विभाषोपपदेने'ति सूत्रबाधे न किञ्चिन्मानमस्ती'ति परास्तम्। नन्विदं सूत्रं कर्मवद्भावेन गतार्थमत आह' इति ग. पाठः।

३ 'सकर्मकाणामंशद्वयाऽभिधायकत्वनियमात्। अत एव 'धातूपात्तफलाऽऽश्रयः कर्त्ता, व्यापारव्यधिकरणधातूपात्तफलाऽऽश्रयः कर्मे'ति सिद्धान्तः। यद्यपि अकर्मकाणामप्यंशद्वयाऽभिधाकत्वमन्यत्रोक्तं, तथापि तत्रोभयोरप्येकस्थत्वेन न पृथक् प्रतीतिः। अत एव न सम्यग्द्वित्वप्रतिभा। 'अंशद्वय'शब्देन व्यधिकरणांऽशद्वयस्य वाऽभिधानम्। 'अकर्मकाणां फलमात्रवाचकत्वमि'ति मते तु सम्यगेव' इति ग. पाठः।

प्रेरणेति। सौकर्यविवक्षावशाल्लक्षणयेति भावः। अत्र कर्मस्थभाव-क्रियत्वाऽभावेन कर्मकर्त्तर्यपि शबादि। उक्तञ्च[1]—

'निवृत्तप्रेषणं कर्म स्वक्रियाऽवयवे स्थितम्।
निवर्त्तमाने कर्मत्वे, स्वे कर्त्तृत्वेऽवतिष्ठते'॥ इति।

तत इति। 'फलसमानाधिकरणव्यापारवाचकादि'त्यर्थः[2]। पुनर्ण्यर्थ-स्येति। ण्यन्तस्य तद्रहिताऽर्थे लक्षणा। अत एव णिचः स्थितिरिति भावः, गङ्गादिपदस्य तीरादिलक्षणायामपि टापवत्। नन्वण्यन्तस्य तदर्थकस्य प्रयोगस्य सत्त्वे किमर्थं मृकणिञ्घटितप्रयोगाऽऽदर इति चेत्। शृणु। प्रथमं (१) विषयस्य विषयत्वाऽऽपत्तिस्वरूपयोग्यतां ज्ञात्वा, (तदापादने[3] प्रवर्त्तने। अन्यथा शिलायामङ्कुरोत्पादनायेवाऽप्रवृत्त्यापत्तेः।) ततः(२)सौकर्यविवक्षया 'अन्यव्यापारं विनैव विषयत्वाऽऽपत्तिरस्ये'ति तत्स्वातन्त्र्याऽवगाहनम्। ततो (३)विषयत्वाऽऽपत्तौ स्वत एव प्रवृत्तं दृष्ट्वा, तत्क्षेमाय द्रष्टृणां प्रवृत्तिरिति सौकर्यलक्षणविच्छित्तिविशेषाय णिजुपादानम्। (४) चतुर्थ्यान्तु क्षेमायाऽपि तद्व्यापारं नाऽपेक्षते इति सौकर्याऽतिशयविवक्षा। तस्याश्च द्वितीय-कक्ष्यायामलाभात्, लाक्षणिकणिजन्ताऽऽदर इत्याहुः।

प्रथमतृतीययोरिति। 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्। एवं 'तृतीयकक्ष्यायामि'त्यत्राऽपि। अत्र 'पुंवत्कर्मधारये'त्यपि सुवचम्। आद्ये पदसंस्कारपक्षे सामान्ये नपुंसकत्वं वा।

तुल्योऽर्थ इति। विषमयोः प्रेषणप्रतीतेः, समयोश्च एतत्त्यागादिति भावः। क्रियासाम्येऽपीति। 'प्रथमकक्ष्यया सहे'त्यर्थः।

द्वितीयामादायेति। विनिगमनाविरहेण एवकारेण न्यूनाऽऽधिक्य-योरुभयोरपि व्यवच्छेद इति भावः। वस्तुतः शब्दमर्यादयाऽधिकव्यवच्छेद एव प्रतीयते। एवकारस्याऽन्ययोगव्यवच्छेदाऽर्थकत्वात्। एवञ्च प्रथमा-

---

१ 'उक्तं च' इत्यारभ्य 'इति' इत्यन्तः पाठः क. कुण्डलितो, मनोरमास्थत्वात्।
२ 'फलमात्रवाचकादित्यर्थः' इति ग. पाठः।  ३ अयं ख. ग. ङ. पाठः।

मप्यादाय क्रियासाम्यं बोध्यम्। एवञ्च 'अण्यन्ताऽवस्था वाक्यद्वयेऽपि प्रत्यासत्त्या एकैव ग्राह्ये'तिवादिनां मतेऽपि न दोषः। न्यूनत्वमात्रव्यवच्छेदस्तु नोक्तः। असम्भवात्। अध्यारोपितप्रेषणद्वितीयकक्ष्यायां सूत्रस्य दुर्वारत्वेन व्यवच्छेदकवाक्यवैयर्थ्याऽऽपत्तेश्च[1]। कर्मत्वाऽवस्थायां कर्मनिष्ठफलव्यापारयोरुभयोरपि धातुवाच्यत्वेन, अकर्मकाणामंशद्वयो[2]ऽभिधायकत्वेऽपि नाऽऽधिक्यमिति बोध्यम्।

क[3]र्तृ[4]स्थक्रियमुदाहरति–एवमिति। अयं निवृत्तप्रेषणपक्षः। तदुक्तम्–

'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति।

अध्यारोपितप्रेषणपक्षमुपपादयति–यद्वेति। प्रेरणांऽशपरित्यागेनेव, प्रेरणाऽन्तराऽऽरोपेणाऽपि सौकर्यप्रतीतेरनुभवसिद्धत्वात्। तदुक्तं—

'निवृत्तप्रेषणं कर्म स्वस्य कर्त्तुः प्रयोजकम्।
प्रेषणाऽन्तरसम्बन्धे ण्यन्ते तेनाऽभिधीयते'॥ इति।

अत्र 'निवृत्तप्रेषणमि'ति दृष्टान्ताऽर्थम्। अत्राऽपि पक्षे क्रियासाम्यं निवृत्तप्रेषणद्वितीयकक्ष्यामादाय। तस्या अप्येतन्मूलत्वात्। आधिक्यमात्रव्यवच्छेदकत्वे तु एतत्पक्षीयप्रथमामादायाऽपि तद्बोध्यम्।

द्वितीयकक्ष्यायां न तङिति। न चैतत्समानाऽर्थाऽन्तर्भावितण्यर्थस्याऽपि वक्तुं शक्यत्वेन, तामादाय क्रियासाम्यमत्राऽप्यस्त्येवेति वाच्यम्।

---

१ इतोऽग्रे—'ननु 'अकर्मकाणां फलमात्राऽभिधायकत्वमि'तिमते प्रथमामादाय तत्सम्भवेऽपि, 'तेषामप्यंशद्वयाऽभिधायकत्वमि'ति मते चतुर्थकक्ष्यायां कर्मनिष्ठाव्यापारोपादानेन, प्रथमायां च तदभावेनाऽऽधिक्यं स्पष्टमेवेति चेन्न। कर्मत्वाऽवस्थायां कर्मनिष्ठफलव्यापारयोरुभयोरपि धातुवाच्यत्वेनाऽक्षतेः। ध्वनितं चेदमपादानमुत्तराणि कारकाणीति भाष्येणेत्याहुः' इति ग. पाठः।

२ 'अंशद्वयाऽभिधायकत्वमिति पक्षेऽपि' इति ख. पाठः।

३ 'कर्मस्थक्रियमुदाहरति' इति ख. ग. ङ. पाठः।

४ 'तदुक्तम्' इत्यादिः 'दृष्टान्तार्थम्' इत्यन्तः ख. ग. ङ. पाठः। क. कुण्डलितः।

तस्याः सत्त्वेऽपि, तन्मूलभूतत्वाऽभावात् ।

अणाविति[1] किम् ? । 'दर्शयन्ति भवं भक्ता' इत्यत्र निवृत्तप्रेषण-तृतीयकक्ष्यायां कर्मण एव हेतुत्वाऽऽरोपात् हेतुमण्ण्यन्तात् द्वितीये हेतुमण्णौ 'भवो भक्तैर्दर्शयती'त्यत्र मा[2] भूदि'ति वदन्ति ।

'वाक्याऽर्थत्रितयं सूत्रे, द्वौ च पक्षावुदाहृतौ ।
कक्ष्याश्चतस्रस्तिस्रश्च पक्षयोर्या उदाहृताः ॥
प्रथमस्य तृतीयेह तृतीयेन निवारिता ।
द्वितीयस्य द्वितीया तु द्वितीयेनेति सङ्ग्रहः' ॥

[3]**णेरिति** । अत्र स्पष्टाऽर्थम्, उत्तरार्थं च । 'अणौ यत्कर्म णौ चेत्स कर्त्ता तदात्मनेपदमि'त्युक्ते ण्यन्तादेव तत्प्रतीतेः । 'म[4]थुरास्थो नरो वाराणस्यां चेद्विवाहो भवती'त्युक्ते विवाहस्य वाराणस्यधिकरणत्वमेव, न मथुराऽधिकरणत्वं, तद्वत् । 'णेरि'त्येव सिद्धे 'णौ'ग्रहणमप्येवम् । 'ण्यन्तादात्मनेपदम्, अणौ यत्कर्म स कर्त्ता चेदि'त्युक्ते ण्यन्ते एव तस्य कर्त्तृत्वप्रतीतेः । 'अणावि'ति तु निवृत्तप्रेषणतृतीयकक्ष्यायाः कर्मणो हेतुत्वाऽऽरोपेण द्वितीयहेतुमण्णौ 'दर्शयति भवो भक्तैरि'त्यत्रैव

१ 'अणाविति किम्' इत्यारभ्य 'सङ्ग्रह' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः । मनोरमास्थत्वात् । क. अग्रेऽस्य स्वयमेव वक्ष्यमाणत्वाच्च ।

२ 'मा भूत् । कर्मनिष्ठप्रयोजकव्यापारश्च ज्ञानविषयीभवनमेव । किञ्चाऽत्रैव स्यादिति वदन्ति' इति ख. ग. ङ. पाठः ।

३ 'ननु णेरिति किमर्थम् । न चाऽणौ कर्मणः कर्त्तृत्वाऽभावेन प्रथमायां दोषाऽभावेऽपि, निवृत्तप्रेषणद्वितीयकक्ष्यायाम् 'आरोहती'त्यादौ दोषः । न च 'णौ चेदि'त्यस्य वाक्यशेषे श्रुतत्वात् ण्यन्तादेव भविष्यति, 'अणावि'त्यस्याऽपि श्रुतत्वादिति वाच्यम् । अणौ कर्मत्वाऽनुवादेन णौ कर्तृत्वविधानात्, ण्यन्तादेव सिद्धेरिति चेत् । उत्तराऽर्थम् । इह करणफलमपि प्रागुक्तम् । अणाविति किम्' इति ग. पाठः ।

४ 'मधुरास्थो नरो' इति क. पाठः ।

मा भूदिति । कर्मनिष्ठप्रयोजकव्यापारश्च ज्ञानविषयीभवनमेवेतिवदन्ति ।

'मध्वपाययत स्वच्छं सोत्पलं दयिताऽन्तिके ।
आत्मानं सुरताऽऽभोगविश्रम्भोत्पादनं मुहुः' ॥

—इति भट्टिश्लोके तु 'स मधु पिबति, मध्वपाययते'त्यर्थात् अनेनैव आत्मनेपदम् । 'आत्मानं सुरताऽऽभोगविश्रम्भोत्पादनम्' । 'दर्शयित्वे'ति शेषः । ध्वनितं चेदं जयमङ्गलायामित्याहुः ।

'करेणुरारोहयते निषादिनमि'ति तु 'णिचश्चे'त्येव सिद्धम् ।

स्मरयतीति । मित्त्वात् ह्रस्वः । [1]अपरे तु 'समानक्रियत्वस्य निमित्तत्वाऽऽश्रयणेऽपि, अध्यारोपितप्रेषणद्वितीयकक्ष्यायामस्य प्रवृत्तिर्दुर्वारा । तथाहि–(१) 'हस्ती न्यग्भवती'त्यर्थबोधे (२) 'एनं कश्चिन्न्यग्भावयती'त्यर्थस्येव, सौकर्याऽतिशयविवक्षायां (३) 'न्यग्भवने[2] स्वयमेवाऽयमात्मानं प्रवर्त्तयती'ति चाऽर्थत्रयं बुद्धावारोहति। तेष्वर्थेषु बुद्ध्यारूढेषु तद्बोधकाः शब्दा विनिगमनाविरहात् ण्यन्ता, अण्यन्ताश्चोपतिष्ठन्ते । तत्र तृतीयस्याऽर्थस्य यथा ण्यन्तरुह्धातुर्बोधकः, एवमन्तर्भावितण्यर्थः केवलोऽपीति, तमादाय तृतीयाऽर्थबोधकद्वितीयकक्ष्यायाम् अण्यन्तेन समानक्रियत्वमस्त्येव । न च सा ण्यन्तस्य न[3] मूलभूतेति वाच्यम् । एवं सति निवृत्तप्रेषण-

---

१ 'अपरे तु' इत्यस्य 'इति प्राहुः' ( १९५० पृ० ) इत्यनेनाऽन्वयः ।

२ 'स्वन्यग्भवने' इति ग. पाठः ।

३ 'न मूलभूतेति वाच्यम् । 'मूलभूतैवाऽण्यन्ताऽवस्थाग्राह्ये'त्यत्र मानाऽभावात् । न च 'यस्माण्णेः प्राक् कर्म, कर्त्ता वा विद्यते' इति भाष्ये 'प्राक्'पदोपादानेन, 'निवृत्तप्रेषणादि'त्यादौ 'निवृत्त'पददानेन हरिणा च मूलभूतैवाऽण्यन्ताऽवस्था ग्राह्येति सूचितम् । अत्र 'यस्मादि'त्यतः पूर्वं 'णौ कर्त्ते'त्यध्याहारः । 'कर्त्ते'त्यतः पूर्वम् 'अणौ कर्म णौ' इत्यध्याहारः । नित्यण्यन्तत्वाऽभिप्रायेण कैयटकृतव्याख्यानं तु प्राक्पदार्थाऽननुग्रहात्, अव्यापकत्वाच्चोपेक्ष्यमिति वाच्यम् । एवं भाष्यव्याख्यानेन 'कर्म, कर्त्ता वे'त्यनयोरन्यतरवैयर्थ्याऽऽपत्तेः । तस्मात् 'कर्तृ'पदं दृष्टान्ताऽर्थमित्येवोचितम् । नचैवमपि

चतुर्थकक्ष्यायां कर्मणः कर्तृत्वम् आद्यकक्ष्यामादायोपपाद्यते, तदसङ्गतं स्यात् । न हि आद्यकक्ष्यास्थरुहप्रकृतिकस्तत्र णिच्[1] । अन्यादृशमूलभूतत्वं तु दुर्वचम् ।

न च यदर्थकात्[2] अर्थाऽन्तरस्य वृद्धिः, त्यागो वा सा मूलभूता । अस्ति हि आद्यकक्ष्याऽपेक्षया उदाहरणभूतकक्ष्याया न्यूनता । द्वितीयकक्ष्यामूलकवृद्धेस्तस्यां त्यागाच्च तस्या अपि मूलत्वं, नैवं प्रकृते इति वाच्यम्[3] । अन्तर्भावितण्यर्थान् तृतीयाऽर्थप्रतिपादकान् रुहेर्निवृत्तप्रेषणतां कृत्वा, तत एव णिच्यपि तत्समानाऽर्थण्यन्तप्रयोगसम्भवेन तस्या अपि तन्मूलत्वाऽक्षतेः । वृद्धेस्त्यागेनेव, त्यक्तोपादानेनाऽपि मूलत्वसम्भवात् ।

किञ्च क्रियापरत्वे समानक्रियत्वप्रदर्शनाय भाष्ये द्वितीयकक्ष्याऽप्युदाहर्तुमुचिता, कर्मणः कर्त्तृत्वबोधनाय प्रथमकक्ष्यावदिति, तदनुक्त्या कारकपरत्वमेवाऽभिप्रेतं लक्ष्यते । किञ्च 'आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानि'ति भाष्योदाहरणे मनुष्यकर्मकाऽऽरोहणे शानजन्तप्रयोगस्वरसतो हस्तिनः कर्त्तृत्वं प्रतीयते । शतृ-शानजाद्यन्तानां स्वभावतः

---

'मूलभूतकक्ष्या ग्राह्ये'त्यर्थस्तु सिद्ध एवेति वाच्यम् । एवमपि निवृत्तप्रेषणचतुर्थकक्ष्ययां कर्मणः कर्त्तृत्वमाद्यकक्ष्यामादाय' इति ग. पाठः ।

१ 'आद्यकक्ष्यास्था'ऽऽरुह'प्रकृतिकः' इति ग. पाठः ।

२ 'न च तदर्थकाद्यत्राऽर्थाऽन्तरस्य वृद्धिः, त्यागो वा' इति ग. पाठः ।

३ इतोऽग्रे–'यदा (१)'हस्तिपकान् हस्ती आरोहयती'त्यर्थिका अन्तर्भावितण्यर्थेरुहि'घटिता आद्या कक्ष्या, ततः (२) सौकर्यविवक्षायां प्रेरणांऽशत्यागे 'आरोहन्ति हस्तिनं हस्तिपका' इति द्वितीयकक्ष्या, ततो (३) 'न हस्तिनं स्वत एव हस्तिपका न्यग्भावयन्ति, किन्तु हस्त्यपि तत्क्षेमाय तान् प्रवर्त्तयती'त्यर्थे ण्यन्तप्रयोगः, तदा आद्यकक्ष्याऽपेक्षया द्वितीयकक्ष्यायां त्यक्तस्य व्यापारस्य पुनरुपादानात्, आद्याया अपि तन्मूलत्वेन, तामादाय समानक्रियत्वसत्त्वेन, तत्राऽनेन आत्मनेपदप्राप्तेस्तवाऽपि दुर्वारत्वात् । तत्रेष्टाऽऽपत्तौ तु मध्यमप्रघट्टकविरोधस्तवाऽपि । किञ्च क्रियापरत्वे समानक्रियत्व' ग. पाठः ।

क्रियाऽन्तरसाकाङ्क्षत्वात् । क्रियाऽन्तरस्य चाऽनुपस्थितत्वात् । एवञ्च अणौ कर्मणो णौ कर्तृत्वाऽभावात् अप्राप्त्या, तत्राऽपि प्रत्युदाहरणाऽसङ्गतिः । 'हस्ती'त्येतस्य शुद्धदृष्टाऽन्ताऽर्थत्वे तिङन्तमेवोच्चारयेत् ।

वस्तुतः कैयटादीनामपि न कश्चिद्भाष्यविरोधः। प्रागुक्तरीत्या स्थलस्याऽधिकस्य सत्त्वेन, आद्यप्रघट्टकाऽविरोध उपपादित एव । मध्यमप्रघट्टकविरोधोऽपि न । अण्यन्ताऽवस्थास्थकर्मत्वाऽवच्छेदेन ण्यन्ते कर्तृत्वस्य, अण्यन्तकर्माऽतिरिक्तकर्माऽभावस्यैव ( च[1] ) एतत्सूत्रप्रवृत्तौ निमित्तताया यथाश्रुतवार्त्तिकभाष्याभ्यां प्रथमप्रघट्टकस्थाभ्यामुक्ततया, अकर्मकाणामेवैतदुदाहरणत्वं मन्यमानेन आचार्यदेशीयेन 'कर्मकर्तृत्वात्सिद्धमि'त्युक्ते, यक्चिणोर्निवृत्त्यर्थत्वमस्य सूत्रस्याऽऽशङ्क्य 'णिश्रिग्रन्थी'तिवार्त्तिकबलेन समाधाय, पुनः 'अणौ कर्मणो णौ कर्तृत्वे एव आत्मनेपदं यथा स्यात्, णौ तु कर्मणो णौ कर्तृत्वे माभूदि'तिनियमाऽर्थमिदमित्याशङ्क्य,'हेतुमण्णेरेवाऽत्र ग्रहणमि'ति तत्समाधाय, 'णौ अनाध्याने' इति प्रतिषेधस्य प्रतिषेध्यसमर्पणायेदं सूत्रमि'त्याशङ्क्य 'आध्यानाऽर्थकानां कर्तृस्थभावकत्वात्तत्र कर्मवद्भावस्यैवाऽप्राप्तेर्निषेधस्य फलाऽभाव' इति तत्समाध्यन्तो मध्यमप्रघट्टक इति, कस्तद्विरोधः ? ।

एतदन्तेन मध्यमप्रघट्टकेन 'कर्मवद्भावात्सिद्धे सूत्रवैयर्थ्यमि'ति आचार्यदेशीयशङ्कायां, 'यथा तत्राऽऽध्यानविषये कर्तृस्थभावकत्वात् अप्राप्तेर्निषेधवैयर्थ्यं, तथा कर्मवद्भावाऽप्राप्तियोग्यविषये आत्मनेपदाऽर्थमिदं सूत्रमि'त्याशयेन आचार्येण 'भवत्येवंजातीयकानामात्मनेपदमि'ति विध्यर्थमिदमि'त्युक्तं तृतीयप्रघट्टके ।

तत्र 'एवंजातीयकानामि'त्यस्य 'कर्तृस्थभावकजातीयानामि'त्यर्थः । तज्जातीयत्वं च कर्मवद्भावाऽप्राप्तियोग्यत्वेन[2] । एवञ्च कर्तृस्थभाव[3]क्रियवत्

१ चकारः क्वाचित्कः ।

२ इतोऽग्रे—'कर्तृस्थभावकानामि'त्यर्थकत्वे तु 'एषामि'त्येव सिद्धे, 'जातीयकानामि'त्यस्य वैयर्थ्याऽऽपत्तिः' इति ग. पाठः ।

३ 'कर्तृस्थभाववत्' इति ग. पाठः ।

सकर्मकाण्यप्यस्योदाहरणानीति ध्वनयताऽदाहृतं–'दर्शयते भृत्यान् राजे'-ति। तत्र 'कर्माऽन्तरसत्त्वात्कथं प्राप्तिरि'त्याशङ्क्य 'कर्त्तृकर्मेतरकर्माऽभावे तात्पर्यमि'त्युपाध्यायैरुक्तम्[1]। तद्व्यावर्त्त्यं च दर्शितमेवेति, न तद्विरोधोऽपि।

न च सर्वत्र प्रवृत्तौ 'णेः कर्मकर्त्तरी'त्येव सूत्रयेदिति वाच्यम्। 'यज्ञदत्तो गां याचयती'त्यादावपि प्रवृत्त्यापत्तेः। 'हृक्रोरि'तिसूत्रस्था'ऽभिवादिदृशोरि'तिवार्त्तिकोदाहरणे–'कथमत्राऽऽत्मनेपदम्'?। एकस्य 'णेरणावि'ति, अपरस्य 'णिचश्चेती'ति भाष्यस्याऽयमर्थः—'एकस्य = आद्याऽन्यस्य। दृशेरित्यर्थः। अणौ कर्त्तृकर्मेतरकर्माऽभावस्य विवक्षितत्वादिति भावः। अपरस्य = अभिवादयतेः। अणौ कर्मणो णौ कर्त्तृत्वाऽभावादिति भावः।

किञ्च 'गभीरायां नद्यामि'त्यादौ लक्षणातात्पर्यग्राहकत्वेन, गभीरनदीतीरस्यैव बोधेन च गभीरादिपदसार्थक्यवत्, इह कर्मपदस्य सार्थक्यम्, अन्वयो वा उपपादयितुं न शक्यते गुरुणाऽपि।

न च 'कर्मणिज्घटितवाक्यस्य[2] तद्रहिते स्वार्थसम्बद्धे लक्षणे'ति न दोषः, अत एव णिचः स्थितिरिति वाच्यम्। प्रेरणारूपेऽर्थे शास्त्रेण साधुतया बोधितस्य,अन्याऽर्थे लक्षणयाऽपि साधुत्वस्य वक्तुमशक्यत्वात्। तस्मात् दर्शनविषयीभवनसमानाधिकरणा प्रेरणा वास्तवी, आरोपिता वा णिजर्थ इति, णिचः साधुत्वं, कर्त्तृत्वं च स्वस्योपपन्नम्। तृतीयकक्ष्यायां विषयत्वाऽऽपत्तौ स्वत एव प्रवृत्तं दृष्ट्वा तत्क्षेमाय द्रष्टॄणां प्रवृत्तिरिति, सौकर्यलक्षणविच्छित्तिविशेषाय[3] णिजुपादानम्। चतुर्थ्यां तु क्षेमायाऽपि परव्यापारं नाऽपेक्षते, किन्तु स्वव्यापारमेवेति, सौकर्याऽतिशयविवक्षा बोध्या। एवञ्च समानक्रियत्वाऽसम्भवोऽपि द्रष्टव्यः।

'लावयति केदारो देवदत्तेने'त्यत्र कैयटे परस्मैपदं तु लेखकप्रमादः। आत्मनेपदमेवोचितम्। उत्तरत्र करिष्यमाणसिद्धान्ताऽनुसारात्।

---

१ उपाध्यायैः = कैयटोपाध्यायैरित्यर्थः। २ 'कर्मपदणिच्घटित' इति ख.ग.ङ. पाठः। ३ 'लक्षणाविच्छित्तिविशेषाय' इति क्वचित् पाठः।

वस्तुतस्तु 'कर्मवद्भावात्सिद्धमि'ति प्रतीकमुपादाय तदुक्तेस्तद्रीत्या तथोक्तिः। सिद्धान्तरीत्या त्वात्मनेपदं भवत्येव। यथा तन्मताऽनुसारेण 'स्मरयति एनमि'त्यस्योपलक्षणत्वं व्याख्याय, सिद्धान्ते उक्तं कैयटेन 'कोकिलस्य कर्मत्वेऽपि प्रत्युदाहरणत्वं युज्यते' इति। तदुक्त्या चाऽत्रापि आत्मनेपदं भवत्येवेति तुल्यन्यायादुक्तप्रायमेवेति प्राहुः।

किञ्च 'कर्त्तरि कर्मव्यतिहारे' इति सूत्रे 'क्रियाग्रहणं कर्त्तव्यमि'ति सूत्रकारशिक्षणं कुर्वतो वार्त्तिककारस्य 'कर्म'पदस्य क्रियार्थकत्वं नाऽभिप्रेतमिति लक्ष्यते। एवञ्च 'अण्यन्तस्य यत्कर्म यदा ण्यन्ते तदेव कर्म भवति,तदा आत्मनेपदमि'त्युपक्रमस्थवार्त्तिकस्थ'कर्म'शब्दस्य क्रियापरत्वेन व्याख्यानम् अयुक्तमिति, कैयटोक्तैव भाष्यवार्त्तिकसूत्रव्याख्या ज्यायसी। अत एव तद्व्याख्यानभाष्ये 'कर्म'शब्दप्रयोग एव, न 'क्रिया'शब्दप्रयोगः, नाऽपि कर्मवद्भाव इवाऽत्र सकर्मकाणां प्रतिषेधो वार्त्तिककृतोक्त इति।

एवं पूर्वविप्रतिषेधोऽपि चिन्त्यः, भाष्येऽनुक्तेः। 'दर्शयते राजे'त्यत्र 'अणावकर्मकादि'त्यस्याऽप्राप्तेः स भाष्यप्रयोगो न मानम्। 'अणावकर्मका-

१ 'तद्रीत्या तथोक्तिः। किञ्च तवाऽपि मते तदसङ्गतिः। निवृत्तप्रेषणतृतीयकक्ष्यामादाय समानधातौ कर्मस्थक्रियया तुल्यक्रियकर्त्तृत्वसद्भावात्कर्मवद्भावस्य दुर्वारत्वात्। तदि तु 'सकर्मकाणां प्रतिषेध' इत्यस्य 'व्यापारव्यधिकरणफलवाचकानाम्', 'कर्मत्वयोग्याऽर्थसाकाङ्क्षाणामि'ति वाऽर्थादत्र कर्मवद्भावनिषेध इत्युच्यते, तर्हि अत्राऽपि 'कर्म'पदस्य तादृशाऽर्थकत्वात्पूर्वपक्षिमते अस्याऽपि तत्राऽप्राप्तिरिति, न दोषः। सिद्धान्तरीत्या तु' इति ग. पाठः।

२ 'तुल्यन्यायादुक्तप्रायमेवेति वयं विभावयाम इति प्राहुरिति मात्सर्यमुत्सार्य सुधीभिर्विभाव्यम्। एवञ्च 'दर्शयते राजे'ति भाष्योदाहरणस्य पूर्वविप्रतिषेधज्ञापकता चिन्त्यैव। पूर्वविप्रतिषेधो यदि प्रामाणिकस्तर्हि 'णरि'तिपदमेव तत्तात्पर्यग्राहकमिति बोध्यम्। मिथ्या कारयते' इति ग. पाठः।

३ 'प्राहुः' इति ख. ङ. पाठः। क. नास्ति। 'अपरे तु' (१९४६ पृ०) इत्यनेन पूर्वस्थेनाऽस्य 'प्राहुः' इत्यस्य च सम्बन्धः।

दि'त्यत्र उद्देश्यताऽवच्छेदकाऽवच्छेदेनाऽन्वयस्य लोकव्युत्पत्तिसिद्धतया, अण्यन्ताऽवस्थात्वाऽवच्छेदेन अकर्मकत्वप्रतीत्या, अत्यन्ताऽविद्यमानकर्मकेष्वेव तत्प्रवृत्तेः, इदं च अण्यन्तसकर्मकेष्विति विषयभेदादिति ।

**मिथ्या कारयते** इति । कृञ उच्चरणवृत्तित्वादकर्मकत्वम् । ततो णिचि सकर्मकत्वम् । असकृदुच्चारणे लक्षणा कृञः । अत्र आत्मनेपदं तात्पर्यग्राहकम । अत एव 'नित्यवीप्सयोरि'ति द्वित्वं न ।

**समुदाङ्भ्यो** । 'आङो यमहन' इत्येव सिद्धे, आङ्पूर्वस्य वचनं सकर्मकाऽर्थमिति ध्वनयन्नुदाहरति—**वस्त्रमायच्छते** इति ।

**अनुपसर्गाज्ज्ञः** । सकर्मकार्थमिदम् । अन्यत्र 'अकर्मकाच्चे'त्येव सिद्धम् ।

**विभाषोप** । इयं प्राप्तविभाषेति 'नवे'ति भाष्ये स्पष्टम् । तदुपपत्तिश्च—अत्र 'स्वरितञित' इत्यादिपञ्चसूत्री अनुवर्त्तते । 'कर्त्रभिप्रायक्रियाफलविषये आत्मनेपदमि'ति च तदर्थः । अथाऽपि तदर्थद्योतकमात्मनेपदम्, एवमपि 'व्यतिलुनीते' इत्यादाविव इहाऽपि प्राप्नोतीति, प्राप्तविभाषैवेयमिति भाष्याऽऽशयः । 'हेतुमति चे'ति कैयटेऽपि स्फुटमेतत् । प्रकृतसूत्रे कैयटस्तु 'द्वितीयपक्षे अप्राप्तविभाषैवे'[1]त्याह ।

इत्यात्मनेपदप्रक्रिया ।



## अथ परस्मैपदप्रक्रिया ।

**कर्त्तैव यः कर्त्तेति** । इदं च 'अनुदात्तङित' इति सूत्रे भाष्ये स्पष्टम् । 'कार्याऽतिदेशेऽपि अतिदिश्यमानकार्याणाम् उत्पत्तिदेश एव देश' इति मते तत्राऽपीयं कल्पना आवश्यकीति बोध्यम् ।

**अभिप्रत्य** । अत्राऽपि 'कर्त्तरी'त्येव । एवमग्रेऽपि ।

([2]**परेर्मृषः**) । **यौजादिकस्येति** । स हि स्वरितेत् । मताऽन्तरे[3] अनुदात्तेत् । आधृषीयत्वात्पक्षे णिजभावः । **केचिदिति** । नैतद्भाष्ये दृष्टम् ।

१ 'द्वितीयपक्षोऽप्राप्तविभाषैवेति' इति क. पाठः । २. अयं पाठः क. नास्ति ।
३ शाकटायनमते इत्यर्थः ।

उपाच्च। उत्तरत्र 'उपे'त्यस्यैवाऽनुवृत्तये योगविभागः। इदं च सकर्मकविषयम्। उत्तरसूत्राऽनुरोधात्।

बुधयुध। अत्राऽकर्मकाणां यदा अन्तर्भावितण्यर्थत्वेन, सोपसर्गत्वेन वा सकर्मकत्वं तदर्थम्, अचित्तवत्कर्तृकाऽर्थं च ग्रहणम्, चित्तवत्कर्तृकाणान्तु सकर्मकाऽर्थमिति स्पष्टं भाष्ये। 'अत्र पूर्वोत्तरसाहचर्यात् जनो दिवादेः, जुहोत्यादेश्च ग्रहणमि'त्येके। 'प्रसिद्धत्वात् दैवादिकस्यैव ग्रहणमि'त्यन्ये। 'प्रीतिं भक्तजनस्य यो जनयते' इत्यत्र भावघञन्त-'जन'-शब्दात् 'तत्करोती'ति णौ,' णिचश्चे'त्यात्मनेपदं बोध्यम्। 'प्रीतिमि'त्यत्र कृद्योगलक्षणषष्ठ्यभावस्तु[1] तिङमाश्रित्य 'न लोके'ति निषेधात्, एकार्थीभावाऽङ्गीकारेण प्रधानेऽन्वयेन 'व्याकरणं सूत्रयती'तिवद्वा बोध्यः।

इह प्रुद्रुस्रूणां यदा न चलनाऽर्थत्वं, किन्तु स्यन्दनाद्यर्थत्वं[2], तदर्थं ग्रहणम्। चलने तूत्तरसूत्रेणैव सिद्धम्। न च स्यन्दनेऽपि चलनमस्त्येवेति वाच्यम्। द्रवद्रव्यजन्यताऽवच्छेदकचलनत्वव्याप्यजातिविशेषे शक्ततया तदपर्यायत्वादित्याहुः।

निगरणच। 'निगरण' शब्देन भक्षणस्येव, पानाऽर्थानामपि ग्रहणम्। यद्यपि[3] द्रवद्रव्यस्य गलाऽधःकरणं पानं, तथापि द्रवद्रव्यस्योपलक्षणत्वेन धात्वर्थत्वाऽभावान्निगरणाऽर्थत्वमस्त्येव। अत एव 'न पादमी'ति सूत्रे 'पा'ग्रहणं चरितार्थम्[4]। 'इयां किमाचामयसे न चक्षुषी चिरं चकोरस्य भवन्मुखस्पृशी' इति श्रीहर्षपद्ये आचामयतेः सादरदर्शनलाक्षणिकतया निगरणाऽर्थत्वाऽभावात् न अनेन परस्मैपदमित्याहुः।

---

१ 'षष्ठ्यभावस्तु अनित्यत्वात्, 'न लोके'ति निषेधाद्वा' इति ग. पाठः।

२ 'स्पन्दनाद्यर्थत्वम्' इति क्वचित्पाठः।

३ 'यद्यपि द्रवद्रव्यस्य गलाधःकरणं पानम्। तत्र द्रवद्रव्यस्य अधिकस्य भानेऽपि 'अधिकन्तु प्रविष्टमि'ति न्यायेन निगरणार्थत्वमस्त्येव, अर्थग्रहणसामर्थ्याच्च' इति ख. ग. ङ. पाठः।

४ इतोऽग्रे—'निगरणं भक्षणम्' इति ग. पाठः।

अदेः प्रतिषेधश्च इति । इदं च 'गतिबुद्धी'ति सूत्रे भाष्ये स्पष्टम् । 'अनन्तरस्ये'ति न्यायमाश्रित्याऽऽह—निगरणेति ।

अणावक । 'णेरि'ति वर्त्तते । णिश्च अर्थाऽधिकारात् हेतुमण्णिरेव । 'अणावि'ति निषेधोऽपि प्रत्यासत्त्या तस्यैव । तेन चुरादिण्यन्तात् हेतुमण्णौ परस्मैपदं भवत्येवे'ति भाष्ये स्पष्टम् ।

ननु 'अणावि'ति किमर्थम् ? । न च तदभावे विशेषणद्वयविशिष्टाऽण्यन्तादित्यर्थः स्यात्, तथा च मूलोक्तोदाहरणे परस्मैपदाऽनापत्तिः । तत्रैव गोपीनिष्ठव्यापाराऽविवक्षायां 'कृष्णः शाययते' इत्यत्र परस्मैपदाऽऽपत्तिश्च । 'णेरणावि'त्यस्य तु नाऽत्र प्राप्तिः, अणौ कर्मणो णौ कर्त्तृत्वाऽभावादिति वाच्यम् । बुधादिसूत्रसाहचर्येण तत्प्रकृतिकण्यन्तादित्यर्थेनाऽदोषादिति चेन्न । 'णेरणौ' इत्यस्योदाहरणात् द्वितीये णौ मा भूत्-'आरोहयमाणं प्रयुङ्क्ते आरोहयते' इति ।

चित्तवदित्यादि किम् ? । 'शुष्यन्ति व्रीहयः, तान् शोषयते' । अकर्मकात्किम् ? । 'कटं करोति, तं प्रयुङ्क्ते कटं कारयते' । इतरे इति । तत्र दमिरकर्मकोऽपि, एतत्प्रामाण्यात् । अत एव 'दमिः सकर्मक' इति दिवादिस्थग्रन्थेन अविरोधः । वासयते इति—भ्वादेर्ग्रहणम् । अदादेस्तु सकर्मकत्वेन प्राप्त्यभावात्, 'लुग्विकरण'परिभाषया च न ग्रहणम् ।

धापयेते इति । प्रत्यवसानाऽर्थत्वात् शिशोः कर्मता । समीची इति । प्रथमाद्विवचनम् । 'वा च्छन्दसी'ति पूर्वसवर्णदीर्घः । परस्मैपदं य : ( वेति । अनन्तरस्ये'तिन्यायेन योगद्वयप्रापितपरस्मैपदस्यैव निषेधादिति

---

१ इतोऽग्रे—'इहाऽकर्मकशब्देनाऽविवक्षितकर्मणामपि ग्रहणम् । विनिगमनाविरहात् । अत एव अणाविति सार्थकम्' इति ग. पाठः ।

२ 'तत्र दमेः कर्मणः कर्त्तृत्वविवक्षया अकर्मकत्वमित्याहुः । अत एव' ग. पाठः ।

भावः । पाययतीति ।' शाच्छासे'ति युक् । अत एव 'भिक्षा वासयती'ति 'हेतुमतिचे'तिसूत्रस्थभाष्यप्रयोगः सङ्गच्छते (इति परस्मैपदप्रक्रिया )।

इति पदव्यवस्था ।

## अथ भावकर्मप्रक्रिया ।

**सार्वधातुके यक्** । 'धातोरेकाच' इत्यतो 'धातोरि'ति, 'चिण्भावे'-त्यतो 'भावकर्मणोरि'ति चाऽनुवर्त्तते । कर्त्तरि शपोऽपवादत्वाद्वा लब्ध-मेतत्–भावकर्मवाचिनीति । भावो भावनेति । उत्पत्त्यर्थात् भवतेर्ण्यन्तात् णिचि 'भावः' । युचि—'भावना' । तद्ध्वनयन्नाह—उत्पादनेति । अनेन भवतेरुत्पत्त्यर्थत्वं, ण्यन्तस्य भवतेः शुद्धेन करोतिना तुल्याऽर्थत्वं च दर्शितम् । स च फलोत्पत्त्यनुकूलो व्यापारः । तत्र उत्पत्तिः सर्वत्र न धातुवाच्या । फलव्यापारयोर्जन्यजनकभावस्य[1] संसर्गमर्यादयैवा लाभादित्याहुः[2] । तदुक्तं भट्टैः—

'तेन भूतिषु कर्त्तृत्वं प्रतिपन्नस्य वस्तुनः ।
प्रयोजकक्रियामाहुर्भावनां भावनाविदः' ।। इति ।

अनेकपर्यायोपादानं चेतनाऽचेतनवृत्तीनां फूत्कारयत्नानां क्रियात्वं, धात्वर्थत्वं च बोधयितुम् । भूवादिसूत्रोक्तेन 'कथं पुनः क्रियावचनाः पचादय' इति, यदेषां करोतिना सामानाधिकरण्यम्, किं करोति ?, पचती'ति भाष्येण च अस्या धात्वर्थत्वं बोध्यम् । क्रियात्वं च धातुवाच्य-त्वसमानाधिकरणो जातिविशेषः । तद्घटकधातुत्वं च जातिविशेषः । तत्परिचायकं च भूवादिसूत्रम् । तादृशजात्यैव च तासां शक्यत्वम् । शक्तताऽवच्छेदकं च[3] धातुत्वमेव । फलांऽशस्तु तत्तद्रूपेण वाच्यः, पचित्वादि च शक्तताऽवच्छेदकम् ।

---

१ 'जन्यजनकभावेनाऽन्वयेन' इति ख. ग. ङ. पाठः ।

२ 'तल्लाभात्' इति ख. ग. ङ. पाठः । ३ चकारः ख. नास्ति ।

'फलं न वाच्यमि'ति तु न युक्तम् । सर्वधातूनां पर्यायताऽऽपत्तेः । कर्मत्वस्य निर्वक्तुमशक्यत्वाच्च । फलं च तदर्थव्यापारे अनुकूलतासंसर्गेण क्वचित्, क्वचित् निरूपकत्वादिना विशेषणम् । 'पचती'त्यतश्च 'पाकाऽनुकूला क्रिये'ति बोधः । तदाह—धातुत्वेनेत्यादी'ति प्राञ्चः ।

नव्यास्तु 'फूत्कारत्वादिनैव बोधाऽनुभवात्, तेनैव रूपेण व्यापाराणां शक्यता । प्रामाणिकत्वाच्च नानाशक्तिकल्पना न दोषाऽऽवहा । बुद्धिस्थत्वादेः शक्यताऽवच्छेदकाऽनुगमकस्य सत्त्वाच्च। पचित्वादिकमेव शक्तताऽवच्छेदकं, न तु धातुत्वम्, तदजानतोऽपि बोधात्। 'धातुत्वेने'ति हेतौ तृतीया । तस्या धात्ववाच्यत्वे क्रियावाचकत्वाऽभावेन, भूवादिसूत्राऽप्रवृत्तौ, परिचायकाऽभावेन धातुत्वव्यवहारो न स्यात् । फलत्वन्तु कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थविशेषणत्वे सति, तद्धात्वर्थत्वमि'त्याहुः ।

सकलेति । अकर्मकाणामप्यंशद्वयाऽभिधायकत्वात् । फलव्यापारयोः सामानाधिकरण्ये अकर्मकत्वम्, वैयधिकरण्ये च सकर्मकत्वं बोध्यम् । यद्यप्युक्तजातिविशेषरूपक्रियात्वं तस्याऽपि, अत एव 'तण्डुलः पच्यते स्वयमेवे'त्यादौ विक्लित्तावेव कारकाऽन्वयः, तथापि 'गोबलीवर्द'-न्यायेन व्यवहारो बोध्यः ।

धातुवाच्येति । एतेन 'तिङ्प्रत्ययवाच्या भावने'ति मीमांसकमतम् अयुक्तमिति सूचयति । तथा हि—'पक्तव्यमि'त्यादौ तिङन्तं विनाऽपि

१ इतोऽग्रे—'विनिगमनाविरहाच्च । स च तदर्थव्यापारे' इति ग. पाठः ।

२ इतोऽग्रे—'अकर्मकेष्वपि फलाऽनुकूलो व्यापारोऽस्त्येव, परन्तु फलसमानाधिकरणः' इति ग. पाठः ।

३ 'इदं चाऽकर्मकाणामपि अंशद्वयाऽभिधायकत्वमिति मते । अत्र मते फलव्यापारयोः सामानाधिकरण्ये अकर्मकत्वम्' इति ग. पाठः ।

४ 'तथाहि' इत्यारभ्य 'इति दिक्' इत्यन्तः ख. ग. ङ. पाठः क. कुण्डलितः, मनोरमाशब्दरत्नस्थितत्वात् ।

भावनाप्रतीतेः। न च विध्यर्थप्रवर्त्तनया सा आक्षिप्यते इति वाच्यम्। विध्यभावेऽपि तत्प्रतीतेः। न हि तव्यादयो विधावेवेति नियमः[1]।

किञ्च 'पक्त्वा' इत्यादौ तदप्रतीत्यापत्तिः। न च माऽस्तु तत्र तत्प्रतीतिः। कारकाऽपेक्षादर्शनात्। करोतिसामानाधिकरण्याच्च। 'किं कर्त्तव्यम्' ?, 'भोक्तव्यम्', 'किं कृतवान्' ?, 'भुक्तवान्', 'किं कृत्वा ?, पक्त्वे'त्यादिदर्शनात्। 'पक्त्वा'इत्यादेः 'पाकं कृत्वे'त्यादिविवरणाच्च। न च तत्र कर्त्तृकर्मभ्यां सा आक्षिप्यते। 'पक्वे'त्यत्र तदप्रतीतेर्दुर्वारत्वात्। किञ्च आक्षिप्तायां पदार्थोऽन्तराणामन्वयाऽनापत्तेः। अन्यथा 'धूमोऽयं ज्वलती'त्यादेरपि योग्यत्वं स्यात्। किञ्च तद्वदेवाऽऽक्षेपेण 'पचती'त्यादावपि तत्प्रतीतिसिद्धौ,अनन्यलभ्यस्य शब्दार्थतया तिङां तत्र शक्त्यनापत्तेः। न च तत्रापि प्रत्ययवाच्या भावना। तव 'काष्ठैः पाक' इत्याद्यापत्तेः। किञ्च 'पचति' 'गच्छती'त्यनयोर्भावनाविशेषप्रतीतेरनुभवसिद्धतया धातुविशेषसमभिव्याहारस्याऽवश्यं वक्तव्यं कारणत्वम्। एवञ्च लाघवाद्धातोरेव शक्तिरस्तु, 'करोति' 'कर्त्ते'त्यादौ तथा क्लृप्तत्वाच्च[2] ( इति भावः )।

यत्तु 'भावयति घटमि'तिवत् 'भवति घटमि'त्यपि परमते स्यात्। दृष्टान्ते हि कर्त्तुः कुम्भकारस्य व्यापारं णिच् आचष्टे, दार्ष्टान्तिके तु आख्यातप्रत्यय' इति। तन्न। अन्तर्भावितण्यर्थतायां तवाऽपि दुर्वारत्वात्। न च 'भवति घट' इत्यस्य तवाऽनापत्तिः। घटनिष्ठभावनाया आख्याताऽर्थत्वे तदुपपत्तेः। किञ्च शब्दशक्तिस्वाभाव्येन धात्वर्थसमानाधिकरणभावनाया एव तत्र आख्यातार्थत्वम्। भावना च व्यापारसामान्यं, न कृतिरेवेति 'रथो गच्छती' त्यादौ न दोषः। तिङ्योगे तिङर्थभावनाऽऽश्रयत्वमेव तस्य कर्त्तृत्वम्। तदर्थभावनाव्यधिकरणफलवाचकत्वं च सकर्मकत्वं

१ 'नियमः। किन्तु तत्राऽपीति। किञ्च 'पक्त्वा' इत्यादौ' इति ग. पाठः।

२ 'क्लृप्तत्वादिति भावः' इति क. पाठः। 'क्लृप्तत्वाच्च' इति ख. ङ. पाठः।

धातूनाम्, ( तत्समानाधिकरणाऽर्थवाचकत्वञ्चाऽकर्मकत्वम् ) तस्य मते इति दिक्।

किञ्च परमते 'करणे यज' इत्यादेरसङ्गतिः। प्रत्यासत्त्या 'यज्यर्थनिरूपितकरणे उपपदे, तन्निरूपितकर्त्तरि वाच्ये णिनिरि'ति तदर्थः। 'समर्थः पदविधिरि'ति परिभाषणाच्च। तस्य च तन्मतेऽसङ्गतिः स्पष्टैव। 'कर्तृरूपप्रत्ययाऽर्थस्य कारकत्वेन प्रकृत्यर्थक्रियायामन्वयेन[2] सामर्थ्यभङ्गात्। तथा च 'ज्योतिष्टोमयाजी'त्यत्र असामर्थ्यात्समासो न स्यात्। मम तु धातूपात्तां भावनां प्रति तदुपात्तांऽशाऽन्तरस्य करणत्वान्न दोषः।

यद्यप्यंशाऽन्तरं 'पचती'त्यादौ भावनां प्रति प्रायेण भाव्यतया सम्बध्यते, तथापि अत्र करणत्वेनैव। व्युत्पत्तिवैचित्र्यात्। 'ज्योतिष्टोमाऽऽख्येन यागेन स्वर्गं भावितवानि'ति प्रतीतेः[3]। अपि च 'समानकर्त्तृकयोः पूर्वकाले' इति सूत्राऽसङ्गतिः। 'समानकर्त्तृकयोरि'त्यत्र ससम्बन्धिकत्वात् क्रिया अन्यपदार्थः। 'पूर्वकाले' इति च बहुव्रीहिः। निर्धारणसप्तम्या, सजातीयत्वेन च क्रियैवाऽन्यपदार्थः। 'तत्र वर्त्तमानाद्धातोः क्त्वे'ति हि सूत्राऽर्थः।

ननु क्रियाया धात्वर्थत्वे तस्याः प्राधान्यं न स्यात्, 'प्रत्ययाऽर्थः प्रधानमि'तिन्यायविरोधात्, औपगवादौ च स क्लृप्त इतिचेन्न। 'क्रियाप्रधानमाख्यातमि'ति स्मृत्या उत्सर्गस्याऽपि तस्य इह त्यागात्। 'पाचिके' त्यादौ स्त्रीत्वस्य विशेषणत्वाऽभ्युपगमस्तु[4] टाबादीनां द्योतकत्वान्न दोषाय। अपिच तिङ्कृतोर्वैषम्यं दुर्वचम्। तिङ्शत्रोर्लादेशत्वसाम्यात्। आदेशानां

---

१ लघुशब्दरत्नपाठोऽयं योग्यत्वादत्राऽस्माभिर्योजितः।

२ 'क्रियायामनन्वयेन' इति ग. पाठः।

३ 'प्रतीतेश्च' इति ग. पाठः।

४ 'स्त्रीत्वस्य विशेषणत्वाऽभ्युपगमाच्च। एवञ्च 'यत्प्रधानं स प्रत्ययाऽर्थः'। 'यः प्रत्ययाऽर्थः स प्रधानमि'त्युभयमपि दुर्वचम्। अत एव 'प्रधानप्रत्ययार्थवचनमशिष्यमि'ति सूत्रकृतः' इति ग. पाठः।

स्थानिस्मारकत्वे, स्थान्यर्थोऽभिधायित्वे वा अर्थैक्यध्रौव्यात्। किञ्च भावलकारे कर्त्रादिकारकाऽन्वयाऽनापत्तिः। 'भावलकारेऽपि सा वाच्ये'ति तु न युक्तम्। तदन्वयिनि सङ्ख्याऽन्वयाऽङ्गीकारेण द्विवचनाद्यापत्तेः। 'अनभिहिते' इत्यादेर्भावनाऽनभिधाने इत्यर्थस्यैव त्वया वाच्यत्वेन, तत्राऽपि कर्त्तरि प्रथमाऽऽपत्तेश्चेति दिक्।

**सामानाधिकरण्येति**। असत्त्वभूतक्रियायाः सत्त्वाऽर्थकयुष्मदादिसामानाधिकरण्याऽसम्भव इति भावः। **तिङ्वाच्येति**। तिङन्तेत्यर्थः। **असत्त्वेति**। लिङ्गाद्यनन्वयित्वं, सर्वनामपरामर्शाऽयोग्यत्वं[1] वा असत्त्वम्। 'तिङ्वाच्ये'त्यनेन कृद्वाच्यायाः सत्त्वरूपतां बोधयति। तथा च यक्सूत्रे भाष्यम्—'कृदभिहितो भावो द्रववत्, न क्रियावदि'ति। 'द्रव्यधर्मान् लिङ्गसंख्यादीन् गृह्णाती'त्यर्थः। एवं च घटादिपदप्रतिपाद्यघटादिद्रव्यवत् लिङ्गादियोगहेतुना घञन्तादिप्रतिपाद्ये सत्त्वमनुमीयते[2]। अत एव 'पाकं' 'पाकेने'त्यादौ यथायथं द्वितीयादयः।

इदमपि अव्ययकृत्कृत्याऽतिरिक्तविषयम्[3]। कृत्येषु नपुंसकयोगेऽपीतरलिङ्गयोगाऽभावात्[4]।

नन्वेवं तदर्थे कारकाऽन्वयो न स्यात्, तेषाम् असत्त्वभूतक्रियाऽन्वयित्वनियमादिति चेन्न। घञन्तादावपि प्रकृतिभागस्य असत्त्वाऽऽपन्नक्रियाऽभिधायित्वाऽभ्युपगमात्। उक्तं च—

**'आख्यातशब्दे भागाभ्यां साध्यसाधनवर्त्तिता।**
**प्रकल्पिता यथा शास्त्रे, स घञादिष्वपि क्रमः॥**
**साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।**
**सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धनः'॥ इति।**

---

१ इतोऽग्रे—'उपमानत्वाऽयोग्यत्वं च' इति ग. पाठः।
२ 'सत्त्वमनुमीयते इति वदन्ति' इति ग. पाठः।
३ 'विषयः' इति क. पाठः। 'विषयम्' इति ख. ङ. पाठः।
४ 'इतरलिङ्गसंख्यायोगाऽभावात्' इति ख. ग. ङ. पाठः।

अत्र 'आख्यात'शब्देन धातुः । साध्यं–फलम् । साधनं–भावना । 'भागाभ्याम् = अवच्छेदकपचित्व-धातुत्वाभ्यामित्यर्थ' इत्येके ।

'आख्यातम्–तिङन्तम्, भागाभ्याम्–प्रकृतिप्रत्ययाभ्याम् । साध्यम्–धात्वर्थः । साधनम्–कारकं प्रत्ययाऽर्थ' इत्यन्ये ।

'भागाभ्यां = तिङन्ताभ्याम् । 'पश्य मृगो धावती'त्यादौ । 'आख्यात-शब्दे' इति बहुव्रीहिः । वाक्यम् अन्यपदाऽर्थ' इति परे ।

इयांस्तु विशेषः–'पचती'त्यादौ परस्परं साध्यसाधनभावः । 'पाक' इत्यादौ तु अन्यनिरूपितसाध्यसाधनभावः । तत्र सिद्धत्वम्—क्रिया-ऽऽकाङ्क्षोत्थापकताऽवच्छेदकरूपवत्त्वम । साध्यत्वम्—कारकाऽन्वयिता-ऽवच्छेदकरूपवत्त्वम् ।

ननु 'घञादिप्रत्ययैः सिद्धभावस्यैवोपस्थितिरि'त्यत्र मानाऽभाव इति चेन्न । 'कर्त्तरि कृदि'ति सूत्रभाष्यस्य मानत्वात् । तत्र हि—'एतत्सूत्रं भावव्यावृत्त्यर्थम् । न च भावे घञिति नियमान्नाऽन्ये कृतो भावे इति वाच्यम् । अन्यः स भावो बाह्यः प्रकृत्यर्थात् । एतद्भावे हीमे आभ्यन्तरे स्युरि'त्युक्तम् । 'पाकेन कृतमि'त्यादिव्यवहाराच्च । 'स्त्रियां क्तिन्नि'ति 'स्त्रियामि'त्यादिना भावविशेषणाच्च । एतेन 'प्रयोगसाधुत्वाऽर्थं घञादय' इत्यपास्तम् । अर्थसाधुत्वे सम्भवति शब्दमात्रसाधुत्वस्याऽन्याय्यत्वात् । एवञ्च सिद्धत्वसाध्यत्वोभयधर्मविशिष्टो धात्वर्थः पाकादिपदवाच्यः । सिद्धत्वरूपो धर्म एव घञ्वाच्य इति भाष्यादौ स्पष्टम् ।

यत्तु 'अमृतरसप्रस्यन्दमाध्वीकभूरि'तिकुसुमाञ्जलिश्लोके अमृतस्य रसः । 'रस्यमानममृतमि'ति यावत् । 'कृदभिहितो भावो द्रव्यवत्प्रकाशते'

१ इतोऽग्रे—'एकस्य धातोर्विरुद्धाऽर्थद्वयप्रकाशकत्वात् द्वित्वाऽऽरोपः' इति ग. पाठः ।

२ 'यत्तु' इत्यारभ्य 'अर्थाऽभावाच्चेति दिक्' इत्यन्तः ख. ग. ङ. पाठः । क. तु कुण्डलितः, मनोरमादिस्थत्वात् ।

इत्युक्तेरि'ति वर्द्धमानः। 'द्रव्यवदि'त्यस्य द्रव्यविशेष्यिकां प्रतीतिं जनयतीत्यर्थ'इति तदाशय' इति। तन्न। अस्याऽर्थस्य निर्मूलत्वात्। किञ्च द्रव्यपरत्वे कर्मधारयस्याऽऽवश्यकत्वेन 'रस'शब्दस्य पूर्वनिपाताऽऽपत्तिः। अपि च कर्मण्येव प्रत्ययविधानेनोपपत्तौ, भावे प्रत्ययविधायकस्य वैयर्थ्याऽऽपत्तिः। रथन्तरादिवद्रूढत्वेन प्रत्यय-प्रकृत्योरर्थाऽभावाच्चेति दिक्।

**एकवचनमेवेति**। 'उष्ट्रासिका आस्यन्ते' 'हतशायिकाः शय्यन्ते' इत्यत्र च 'सार्वधातुके यगि'तिसूत्रस्थभाष्यप्रयोगादेव बहुवचनमिति भावः। अत्र हि आसिकाशायिकयोर्भाववाचकतया 'कालभावाऽध्वगन्तव्या' इति कर्मत्वम्। कृदन्ताऽर्थस्य तिङन्ताऽर्थे सादृश्येनाऽन्वयः। 'हतशयनसदृशानि शयनानि, उष्ट्रासनसदृशान्यासनानी'त्यादिप्रकारेण बोधः। उपमानानां बहुत्वेन उपमेये तिङर्थेऽपि बहुत्वाऽऽरोपेण प्रत्ययः। अन्यथा उपमाने बहुत्वोपादानवैयर्थ्याऽऽपत्तेः। 'सर्वत्राऽऽख्यातोपात्तसङ्ख्याया आरोपितसङ्ख्याकक्रियायामेवाऽन्वय' इति केचित्। उपपादितं चेदं मतं **मञ्जूषायां** विस्तरेणेति दिक्।

ननु द्वित्वाद्यभाववदेकत्वस्याऽप्यभाव इत्यत आह—**तस्यौत्सर्गिकत्वेति**। एतत्प्रकारश्च अव्ययप्रकरणे निरूपितः। **असत्त्वभूतत्व च**—लिङ्गाऽनाधारत्वेन, क्रियाऽनाधारकारकत्वाऽयोगेन चेति निरूपितं कारके।

वस्तुतः क्रियायामेकत्वमस्त्येव। 'एका च क्रिये'तिरूपप्सूत्रस्थभाष्यात्। एवं च तस्य प्रकृत्यर्थ एवाऽन्वयः। द्वित्वादिकमपि स्वोत्तरतिङ्वाच्यगतं तत्राऽऽरोप्यते इति द्विवचनादिकं कर्त्तृकर्मतिङ्क्षु सिध्यति। तस्याऽप्यन्वयः प्रकृत्यर्थे एव। एतदपि रूपप्सूत्रभाष्यात्, ङ्याप्सूत्रभाष्याच्च लभ्यते इति **मञ्जूषायां** विस्तरेण निरूपितम्।

**स्यसिच्**। अत्र यथासङ्ख्यं न। अस्वरितत्वात्। 'उपदेशे' इति अच एव

१ 'सादृश्यद्वारा परिच्छेदकत्वेनाऽन्वयः' इति ख. ग. ङ. पाठः।

विशेषणं, नाऽन्येषाम्, अव्यभिचारात्। तदाह—उपदेशे य इति[1]। 'अजि'ति पृथक् पदं लुप्तविभक्तिकमिति भावः। इड्विधायके 'स्यादीनामि'ति विभक्तिविपरिणामः। न च अङ्गस्यैवेडस्तु, एवञ्च विपरिणामो न कार्य इति वाच्यम्। लक्ष्यविरोधात्। 'आर्द्धधातुकस्येट्' इति योगं विभज्य 'यावानिट् स आर्द्धधातुकस्यैवे'ति परिभाषणाच्च। तद्वक्ष्यति—स्यादीनामिति। चिण्वद्भावोऽत्र प्रधानशिष्टः। इट् तु चेनत त्सं नियोगशिष्टः। 'चिण्वदि'ति सप्तम्यन्ताद्वतिः। उपमेये सप्तमीदर्शनात्। तदाह—चिणीवेति[2]। तृतीयान्ताद्वतौ चित्त्वात् चिणीव[3] इटोऽपि उदात्तत्वाऽऽपत्तेः। अतिदेशेन विशेषस्वरप्राप्त्या, शेषनिघातमूलकाऽऽगमाऽनुदात्तत्वस्याऽप्राप्तेः[4]। 'स चिण्वच्चे'त्यर्थात् 'च'शब्दस्य व्यवहिताऽन्वयाऽऽपत्तिश्च। किञ्चैवं सति 'स्यादिषु' इति सप्तम्या अचारितार्थ्येन विपरिणामोऽनुचितः। पूर्ववाक्ये, उत्तरवाक्ये वा चरितार्थस्याऽन्य-

---

१ 'उपदेश य इति। द्वन्द्वसाधुत्वाय प्राथमिकबोधे समुदाये उपरञ्जकतया 'उपदेशे' इत्यस्याऽन्वयेऽपि तात्पर्यतोऽचो विशेषणमेव सफलमिति भावः। 'अजि'ति पृथक्पदं वा लुप्तविभक्तिकमिति भावः' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

२ 'चिणीवेति। यत्तु 'एभ्यः परेषां स्यादीनामिट्, स चिण्वच्चे'त्यर्थ इति। तन्न। तृतीयान्ताद्वतौ हि चित्त्वाच्चिणीवेटोऽप्युदात्तत्वाऽऽपत्तेः' इति ख. ङ. पाठः।

३ 'चिणिव इडप्युदात्तः स्यात्। तदा हि स्यादीनामिड् भवति। स च चिण्वदित्यर्थात्' इति ग. पाठः।

४ 'एतेन प्रत्ययाऽऽद्युदात्तत्वे आगमाऽविद्यमानवत्त्वस्य 'आद्युदात्तश्चे'तिसूत्रभाष्योक्तेर्न दोष' इत्यपास्तम्। 'यदागमा' इति न्यायप्राप्तप्रत्ययाद्युदात्तत्वस्य येननाप्राप्तिन्यायेनाऽविद्यमानवत्त्वबाधेऽपि• आतिदेशिकस्य तस्य बाधे मानाऽभावाच्च' इति ग. पाठः।

तरत्र विपरिणाम उचितः। तत्राऽऽद्योदाहरणं–'हरिः सेव्यस्तद्भक्ताश्चे'ति। अन्त्यस्य—'कर्तृकर्मणी, गुणश्चाऽनिर्दिष्ट' इत्यर्थवत्सूत्रस्थभाष्यप्रयोगः।

किञ्च 'क्ङित' इत्यननुवृत्तिपक्षे चिणः परस्येव इटः परस्याऽपि लुक्स्यात्। न च इड्हितस्य प्रत्ययत्वाऽभावान्न लुक्। चिणिदृष्टस्य सर्वस्यैवाऽतिदेशेन, ततः परे प्रत्ययत्वस्याऽप्यतिदेशात्। न च चिणो लुकि चिण्वदिडसिद्धः। 'चिण्वदि'त्यस्य कार्याऽतिदेशत्वेऽनेनाऽतिदिश्यमानकार्याणामाभीयत्वेन तत्रेटोऽसिद्धत्वे अतिदेशस्य निर्विषयताऽऽपत्तेः। चिण्लुक्-चिण्वदिटो-र्व्याश्रयत्वाच्च। (आभीयाऽसिद्धत्वस्याऽनित्यत्वाच्च)। अत एव 'चिण्वदि'-त्यतिदेशेन 'चिण्णमुलोरि'ति दीर्घविकल्प' इति भाष्याद्युक्तं सङ्गच्छते। एवं णिलोपाऽतिरिक्ताऽऽभीयं प्रति चिण्वदिडागमौ नाऽसिद्धौ। अत एव असिद्धवत्सूत्रप्रत्याख्यानाऽवसरे चकारेण साक्षाण्णिलोपः साधितो भगवतेति बोध्यम्।

ननु चिणि दृष्टमात्रस्याऽतिदेशे हन्-इण्-इङादेशा अपि स्युरित्यत आह—**अङ्गकार्यमि**ति। अङ्गाऽधिकारे पाठबलेन आङ्गस्यैवाऽतिदेशः। न चैतेऽङ्गाधिकारस्थाः। 'भावकर्मणोरि'त्येतत् न स्यादीनां विशेषणम्। सीयुटो भावकर्मवाचित्वेऽपि, स्यसिच्तासीनां तत्त्वाऽभावात्। नाऽपि 'भावकर्मवाचिप्रत्यये परे ये स्यादय' इति। स्यादीनां तादृक्प्रत्ययपरत्व-सम्भवेऽपि, सीयुटोऽसम्भवात्, आगमविशिष्टे एव प्रत्ययत्वाऽर्थवत्त्वा-द्यङ्गीकारात्। अतो विषयसप्तमीत्याह—**गम्यमानयोरि**ति।

**सीयुट** इति। 'सीयुट्'शब्देन तद्विशिष्टं लक्ष्यते इति भावः। व्याव-

१ इतोऽग्रे–'अतिदेशस्य निर्विषयत्वापत्त्याऽतिदेशं प्रति इडसिद्धत्वाऽभावात्। लाघवेन कार्यातिदेशस्यैवाऽत्राश्रयणात्। चिण्वद्भावं प्रति तु नान्यदाभीय-मसिद्धम्। आभीयाऽसिद्धत्वस्याऽनित्यत्वात्' इति ग. पाठः।

२ 'अत एव चिण्वदिडागमावपि नाऽसिद्धौ' इति ग. पाठः।

३ इतोऽग्रे 'चग्रहणं चिण्वत्त्वविषये इटोऽनित्यत्वाय' इति ग. पाठः।

त्यस्तु विधिलिङ् । न च तत्र 'लिङः सलोप' इति सलोपाद्वलादित्वमेव नाऽस्तीति वाच्यम् । तस्येहाऽनपेक्षणात् । अत एव 'नित्यश्चायं वल्निमित्तो विघाती'ति भाष्ये उक्तम् । न च विधिलिङि, नित्यत्वाद्यकि, तेन व्यवधानादेवाऽस्याऽप्राप्तिः । तस्याऽप्युपदेशे योऽच् तदन्ताऽङ्गत्वेनाऽदोषात् । यदि तु हनादिसाहचर्येण अजन्तधातुरूपाऽङ्गस्यैव ग्रहणं, तदाऽपि 'प्रस्नुवीते'त्यत्र कर्मकर्त्तरि 'न दुहे'ति यक्निषेधात्, चिण्वद्भावव्यावृत्त्यर्थमार्द्धधातुके इतीति 'आर्द्धधातुके' इति सूत्रे भाष्ये स्पष्टम् । 'अयमिड्वलादित्वनिरपेक्षतया नित्यः, साप्तमिकस्तु तत्सापेक्षतया अनित्य इति सेड्भ्योऽप्ययमेवेति तद्भाष्याऽर्थः । एवम् 'ऋद्धनोरि'त्यादेरपि तत्सापेक्षत्वादनित्यत्वम् । अत एव 'भाविता' इत्यादाविट्संनियोगशिष्टचिण्वत्त्वसिद्धिः, इट्द्वयश्रवणं च न । तदाह—भावितेति ।

**चिण्भावक** । 'च्लेरि'ति, 'चिण् ते' इत्यतः 'ते' इति चाऽनुवर्त्तते । पुनश्चिण्ग्रहणं तु 'न रुध' इति निषेधाऽननुवृत्तये इत्याहुः ।

**चिण्वदिट** इति । स्यादेतत् । ण्यन्तस्योपदेशाऽभावात्कथमिह चिण्वदिट् ? । ननु णेरुपदेशात्, उपदेशे योऽच् तदन्तम् अङ्गं, धातुर्वाऽस्त्येव । न च 'ण्यल्लोपावि'ति गुणं बाधित्वा णिलोपप्रवृत्त्या, अल्विधौ स्थानिवत्त्वाऽभावात् उपदेशे योऽच् तदन्तत्वं दुरुपपादम् । परत्वात् 'आर्द्धधातुकस्येडि'त्यस्य प्राप्त्या, तं नित्यत्वेन बाधित्वा चिण्वदिट एव प्रवृत्तेर्न दोष इति चेन्न । 'आरिते'त्यादौ परत्वात्, नित्यत्वाच्च गुणे, रपरत्वे, चिण्वदिडभावाऽऽपत्तेः । न हि रान्तस्य उपदेशे योऽच् तदन्तत्वमस्ति । 'भू''नी'प्रभृतीनामपि गुणे, उपदेशे योऽच्तदन्तत्वाऽभावाच्चेति चेत् । [3]अत्रोच्यते—अतो लोप' इत्यत्रेवाऽत्राऽपि 'आर्द्धधातुकोपदेशे

---

१ 'न च तत्र नित्यत्वाद्यकि' इति ग. पाठः । २ 'व्यावृत्त्यर्थं तदिति' इति ख. ङ. ।

३ 'इति चेदत्रोच्यते—उपदेशग्रहणसामर्थ्यात् आदेशद्वाराऽपि तदन्तत्वस्य विवक्षणेन 'आरिते'त्यादौ प्रवृत्तेः । यद्वा—'उपदेशे यदजन्तं, तदन्ता-

यदजन्तमि'त्यर्थेनाऽदोषात्। तत्रैवाऽत्राप्यावृत्त्या सीयुड्विशेषणत्वमपीति

ऽङ्गस्ये'त्यर्थः। 'उपदेश'ग्रहणसामर्थ्याच्छब्दरूपं विशेष्यमादाय अचा तदन्तविधिः। तेन चाऽङ्गविशेषणात्पुनस्तदन्तविधिः। इदमेव युक्तम्। 'बोभाविता' 'पापाचिता' इत्यादौ यङ्लुगन्तेऽपि सिद्धेः। आद्ये तु उपदेशे योऽच्, तदन्तत्वस्य साक्षात्, आदेशद्वारा चाऽभावात्।

वस्तुतो यङ्लुगन्तात् भावकर्मणोः प्रयोगाऽभिधाने दृढतरं मानं चिन्त्यम्। 'कारिष्यते' इत्यत्र व्यपदेशिवद्भावेन णिचोऽजन्तत्वम्, 'कर्' इत्यत्र तदन्ताऽङ्गत्वम्, उपदेशेऽजन्तत्वं वा व्यपदेशिवद्भावेन। 'आरिते'-त्यत्रोभयमपि व्यपदेशिवत्त्वेन। 'स्मारिते'त्यादावुभयमपि मुख्यमेवेति दिक्।

यत्तु 'अङ्गस्ये'ति व्यधिकरणषष्ठी। 'उपदेशे यदजन्तमि'ति चाऽर्थः। एवञ्च 'अङ्गाऽवयवस्योपदेशे अजन्तस्ये'ति फलती'ति। तन्न। वैयधिकरण्ये फलाऽभावात्।

परे तु 'अतो लोप' इत्यत्रैवाऽत्राऽपि 'आर्द्धधातुकोपदेशे यदजन्तमि'त्यर्थे न कश्चिद्दोषः। तत्रैवाऽत्राऽपि आवृत्त्या सीयुड्विशेषणत्वमपीति न दोष इत्याहुः। तदाहुः—

'चिण्वद्वृद्धिर्युक् च हन्तेश्च घत्वं,
दीर्घश्चोक्तो यो मितां वा चिणीति।
इट् चाऽसिद्धस्तेन मे लुप्यते णि-
र्नित्यश्चाऽयं, वलिनिमित्तो विघाती' ॥इति॥

चिण्वद्वृद्धिः। तत्प्रयोजनं वृद्धिरित्यर्थः। अन्त्यवृद्धिः, उपधावृद्धिश्च। इट् च—प्रयोजनम्। दृशधातौ चिण्वत्संनियोगशिष्टेट्प्रवृत्तेरेव चिण्वद्भाव-प्रवृत्तिफलत्वात्। चाऽसिद्ध इति। अत्रोपस्थितत्वादिडेव गृह्यते। बोभावितेति। न चाऽत्रोपदेशेयोऽच् यङवयवोऽकारः, तदन्तमङ्गं नास्ति। नापि तत्स्थानिकादेशाऽन्तरमिति चेन्न। 'भू'धातूकारमादाय प्राप्तेः। 'उपदेशे यदजन्तं तदन्ताऽङ्गस्ये'त्यर्थेऽदोषाच्च। न चाऽत्रपक्षे 'पापचिष्यते'

न दोषः। ऋधात्वादेः तदुपदेशे अजन्तत्वं तु व्यपदेशिवद्भावेन बोध्यम्।

नपोऽनु। चात् 'अचः कर्मकर्त्तरी'त्यतः 'कर्मकर्त्तरी'त्यनुवर्त्तते। 'चिण्ते' इतिसूत्रात् 'चिणि'ति, 'न रुध' इत्यतो 'ने'ति च वर्त्तते। भावे वा लुङित्याह—पापेनेति। 'अविचार्य कर्म कृत्वा पश्चादशोची'त्यर्थः। कर्मकर्त्तरि तूदाहरिष्यते।

आतो युक्। चिण्कृतोः किम्?। 'चौडिः'। 'बालाकिः'। बाह्वादित्वादिञ्। न च 'अचामादेरि'त्यनुवृत्त्या न दोषः। दरिद्रायके दोषाऽऽपत्तेः। अदायिषातामिति। 'स्थाघ्वोरि'ति इत्त्वं बाधित्वा परत्वाच्चिण्वदिटि, अझलादित्वात्पुनरित्त्वं न। 'इको झलि'त्यतस्तत्र झलित्यस्याऽनुवृत्तेः। वस्तुतः[2] सत्यपि इत्त्वे न क्षतिः। अनिग्लक्षणया वृद्ध्या रूपनिष्पत्तेः। स्पष्टं चेदं 'न क्त्वा सेडि'त्यत्र भाष्ये। 'अचिण्णलोरि'ति पर्युदासेन तत्सदृशे प्रत्यये तत्त्वमिति मतेऽपि न दोषः। अतिदिश्यमानधर्मविरुद्धस्वाऽऽश्रयस्याऽतिदेशस्वाभाव्येनाऽनङ्गीकारात्।

घानिष्यत इति। 'ऋद्धनोरि'ति बाधित्वा परत्वाच्चिण्वदिट्। 'वली'ति हि तत्र वर्त्तते। ननु 'आर्द्धधातुकीयाः सामान्येने'तिसिद्धान्तात् 'आर्द्धधातुके' इत्यस्य विषयसप्तमीत्वेन[3] वधादेशस्याऽन्तरङ्गत्वात्परमपि

इत्यादावपि प्राप्नोति, आद्ये तु न प्राप्नोतीति वाच्यम्। प्रत्यासत्त्या सूत्रोपात्ताऽचस्थानिकस्यैव तेनाऽतिदेशेनाऽक्षतेः। यङ्लुकश्छान्दसत्वाच्चेत्याहुः' इति ख. ग. ङ. पाठः।

१ इतोऽग्रे—'किञ्च तदभावे 'ददौ' इत्यत्रापि युगापत्तिः। औत्त्वं तु भूतपूर्वगत्या चरितार्थम्। यद्वोत्तमे णलि णित्त्वाऽभावपक्षे चरितार्थमौत्त्वं णित्वे युका बाध्येत' इति ख. ग. ङ. पाठः।

२ 'स्थाघ्वोरितीत्त्वे सत्यपीह न क्षतिः, अनिग्लक्षणया वृद्ध्या रूपनिष्पत्तेः' इति तु क. पुस्तके शोधितः पाठः।

३ 'विषयसप्तमीत्वेन च' इति ख. ग. ङ. पाठः।

चिण्वद्भावं बाधित्वा वधादेश एव स्यादत आह—आशीर्लिङीति। न तु लुङि। तत्र चिण्वत्त्ववत् 'आत्मनेपदेष्वन्यतरस्यामि'ति वधादेशस्याऽपि वैकल्पिकत्वेन, येन नाप्राप्तिन्यायाऽभावादिति भावः।

**विशेषेति**। अयं भावः–वाक्याऽर्थबोधवेलायां बाधकाऽभावेन हन्तेरपि सीयुटा सम्बन्धस्य जातत्वेन तस्य निरवकाशत्वाद्वधबाधः। न चाऽन्तरङ्गेण वधिनाऽपहारे न्याय्ये सति, असम्भवादेव हन्तेः सीयुटा असम्बन्धोऽस्तु। असञ्जातविरोधित्वन्यायसिद्धसम्बन्धाऽनुरोधेन लक्ष्यसंस्कारवलोपस्थितवधबाधस्यैव युक्तत्वात्। वधादेशस्तु तद्विषये चरितार्थ इत्याहुः।

---

१ 'अयं भावः—'स्यादिसादिसाहचर्यादार्द्धधातुकस्यैव सीयुटो ग्रहणे सिद्धे, 'आर्द्धधातुके' इत्यनुवृत्तेर्निष्फलतया, तदधिकारे पाठसामर्थ्येन तत्सम्बन्धस्याऽऽवश्यकतया तत्सामर्थ्येन पुनर्विधानं कल्प्यते, तच्च निरवकाशमिति तत्सामर्थ्याद्वधादेशबाध इति। इयं च कल्पना हन्तेः सीयुडंशे एव। व्याख्यानात्। अत एव इणः कर्मणि लकारे लुङि, 'आताम्'प्रभृतिषु 'अगायिषातामि'त्येव। अतएव भाष्ये 'सीयुटि वधभावाच्चिण्वद्विप्रतिषेधेने'त्युक्तम्। अयं च विप्रतिषेधो न न्यायसिद्धः। अन्तरङ्गत्वादादेशानाम्। 'अगायिषातामि'त्यसिद्ध्यापत्तेश्च। तस्माद्वाचनिक एव विप्रतिषेधः। उक्तरीत्या च तत्प्रत्याख्यानं 'प्रतिपदविधेर्बलीयस्त्वाच्चिण्वद्भाव'इति वदता कैयटेन ध्वनितमित्याहुः। अन्ये तु वाक्यार्थबोधवेलायाम्' इति ग. पाठः।

२ इतोऽग्रे–'नच चिण्वत्त्वमपि वधादेशे कृते चरिताऽर्थम्। अल्लोपे वृद्ध्यप्राप्त्या फलाऽभावात्। अजन्तत्वेन सिद्धेश्च। अत एव वाक्यार्थबोधकालिकं सङ्ख्यासाम्यं गृहीत्वा यथासङ्ख्यं, न लक्ष्यसंस्कारकालिकमिति 'ञमङणनमि'तिमकारप्रत्याख्यानभाष्यध्वनितं सङ्गच्छते। अन्यथा 'झभञि'ति ञकारेण 'ङमो ह्रस्वादचि ङमुडि'तिन्यासे ञकारभकारयोरुदाहरणाऽभावेन यथासङ्ख्यस्यैवाऽप्रवृत्त्यापत्तिः। मम तु यथासङ्ख्यसम्पादनेन 'प्रत्यङ्ङात्मे'-

**परे** तूभयत्राऽपि द्वन्द्वनिर्देशात्समुदायस्य समुदायेन सम्बन्धो न्याय्यो, न तु प्रत्येकं चतुर्णां सम्बन्धः शब्दाल्लभ्यते । एवञ्च न निरवकाशत्वम् । अत एव भाष्ये वाचनिको विप्रतिषेध एवोक्तः—'वधभावात्सीयुटि चिण्वत्त्वं विप्रतिषेधेने'ति । न्याय्यस्तु न, आदेशानामन्तरङ्गत्वात् । अत एव इणः कर्मणि इङि, 'आताम्'प्रभृतिषु 'अगायिषातामि'त्येवेत्याहुः ।

**अहसातामिति** । चिण्वदिटोऽभावे 'हनः सिजि'ति कित्त्वात् 'अनुदात्तोपदेशे'त्यनुनासिकलोपः ।

**अदर्शिषातामिति** । 'न दृश' इति निषेधात् च्लेः क्सो न । **सिचः कि वादिति** । 'लिङ्सिचावात्मनेपदेषु' इत्यनेने'ति शेषः ।

**लत्वम्**—'अचि विभाषे'त्यनेन । **ढत्वम्**—'विभाषेट' इत्यनेन । **द्वित्वत्रयमिति** । मस्य, ढ धयोश्च—'अनची'ति प्रतिलक्ष्यं द्वित्वद्वयम् । 'यणो मय' इति वस्येति त्रयम् । **ढवमानामिति** । 'अचो रहाभ्यां' 'यणो मयः' 'अनचि चे'त्येतैः । **न स्थानिवदिति** । आभीयाऽसिद्धत्वं तु न । व्याश्रयत्वादिति भावः । **भाष्ये त्विति** । 'न पदान्तसूत्रस्थे' इति शेषः ।

ननु ण्यन्ताण्णौ दीर्घविकल्पाऽनापत्तिः, अतिदेशेन व्यवधानादत आह—**णावितीति** । सूत्राऽर्थप्रतिपिपादयिषया प्रवृत्त'न पदान्त'सूत्रस्थ-भाष्याऽपेक्षया प्रकृतसूत्रस्थस्य 'चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चोप-सङ्ख्यानमि'तिवार्त्तिकप्रत्याख्यानपरस्य अन्यतात्पर्यकत्वेन, वार्त्तिकप्रत्या-ख्यानस्य प्रकाराऽन्तरेण कर्त्तुं शक्यत्वेन च दुर्बलत्वमित्याशयः । स्पष्टं च 'वा दान्ते'तिसूत्रे कैयटेनेदमुक्तम् । **निर्देश इति तदाशय इति** । न पदा-न्तसूत्रभाष्याऽऽशय इत्यर्थः । अत्र 'निर्देश' इत्युत्तरं 'दीर्घग्रहणं चेदं मास्त्वि'ति पठ्यते, सोऽपपाठः । 'हेडृ अनादरे' इत्यस्य अनुवादरूपात्

---

त्यादौ णकारव्यावृत्त्या तादृशसम्बन्धस्य चारितार्थ्येन तद्बाधे मानाऽभाव इत्याहुः' इति ग. पाठः ।

घटादौ पठितात् हेडेश्विणि 'अहिडि-'अहीडी'तिरूपाऽर्थं तत्सत्त्वात्। ह्रस्वविकल्पे तु पक्षे 'अहेडी'ति स्यादित्याहुः।

परे त्वेतद्भाष्यप्रामाण्यात्, साहचर्याऽनित्यत्वाच्च सपादसप्ताध्यायीस्थे दीर्घेऽपि तत्प्रवृत्तिः। 'वरेयलोपस्वरवर्जं द्विर्वचनादीनि न कार्याणी'त्यत्र वर्ज्यकोटौ दीर्घोऽप्युपलक्ष्यः। ण्याकृतिनिर्देशस्तु वक्तुमशक्यः। जातेः पौर्वापर्याऽभावेन 'चिण्णमुल्परे णावि'तिविशेषणाऽसङ्गतेः। न च व्यक्तिद्वारकं पौर्वापर्यम्। तथा सति द्वितीयाऽध्यायस्थे' 'आर्द्धधातुके' इति सूत्रे जातिनिर्देशात् जात्या पौर्वापर्याऽसम्भवेन विषयसप्तमीति भाष्याऽसङ्गत्यापत्तेः। तस्मात् 'जातिनिर्देशे व्यक्तेर्विशेषणत्वेन तद्द्वारकं पौर्वापर्यमि'ति कथाऽसङ्गतैव।

किञ्च तथा सति चिण्णमुल्परचङ्परव्यक्तिगतणित्वजाताविर्त्यर्थः स्यात्। जातिनिर्देशे 'तस्मिन्नि'तिपरिभाषाया अप्रवृत्तेर्द्वितीयाऽध्यायस्था-ऽऽर्द्धधातुके' इति सूत्रे कैयटेनोक्ततया 'णौ चङी'त्यत्राऽपि तदनुपस्थाने 'मा भवानटिटदि'त्यादौ नित्यत्वात् द्विर्वचने, ह्रस्वत्वं न स्यादित्याशङ्का-परभाष्यस्य, 'ओणेर्ऋदित्करणाज्ज्ञापकान्ने'ति समाधानपरभाष्यस्य च असङ्गत्यापत्तेः। तत्परिभाषाऽप्रवृत्तौ विषयसप्तम्येवेति ह्रस्वस्य द्वित्वादन्तरङ्गत्वात्। तथा–ह्रस्वात् वृद्ध्यादेरन्तरङ्गत्वप्रतिपादक'णौ चङी'-तिसूत्रस्थभाष्याऽसङ्गतेश्च।

अत[1] एव सन्वद्भावसूत्रे णेर्णिच्युपसङ्ख्यानमेव भगवतोक्तं, 'णौ चङी'-त्यत्र च। 'न पदान्त'सूत्रे च ण्यन्तात् णिजर्थं चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेध उक्तः। तस्य नाऽन्यत्प्रयोजनमिति ध्वनयितुमेव अत्र पुनर्णेर्णिच्युपसङ्ख्यानं कृतम्। वर्णग्रहणे जातिनिर्देशं ज्ञापकरूपयत्नेन साधयता अन्यत्र जातिग्रहणस्य यत्नं विना अ[2]लाभ इति ध्वननाच्च।

---

१ 'एवं सन्वद्भावसूत्रे' इति ख. ग. पाठः।

२ 'अलाभाच्च' इति ख. ङ. पाठः।

'अनुकरणं चे'तिसूत्रभाष्ये 'अनुकरणशब्देऽनुकरणाऽऽकृतिर्निर्दिश्यते, यथा 'ते प्राग्धातोरि'त्यादौ गत्याकृतिः। अत एव 'उपोद्धरती'त्यादावुभयोः पूर्वप्रयोग इति 'श्रौषड्वौषडिति कृत्वा निरष्ठीवदि'त्यत्रोभयोरितिपरत्वान्न गतित्वमि'त्युक्तम्। तत्तु तत्र तद्भाष्यप्रमाणकव्याख्यानेन, परग्रहणेन च जातिग्रहणं बोध्यमिति निरूपितं समासप्रकरणे। एतद्दीर्घग्रहणसामर्थ्याच्च दीर्घे स्थानिवत्त्वनिषेधः। 'हेड'धातुस्तु घटादावसाम्प्रदायिक इति घटादावेव निरूपितमित्याहुः।

शामिष्यत इति। स्यादीनां चिण्वद्भावाद्दीर्घः। विशेष इति। यङोऽल्लोपस्य स्थानिवत्त्वाण्णिच्परो नेति भावः। यङ्लुकि दीर्घो भवत्येव। न हि यङ्-यङ्लुकोरर्थे, स्वरे वा विशेष इति भाष्ययोर्न विरोधः[1]।

शम्यते मुनिनेति। अकर्मकत्वाद्भावे लः।

नोदात्तोपदेश। 'उपदेश'इत्यनेन 'शमी' 'दमी'त्यादौ घिनुणि वर्ज्यमानस्वरेण अनुदात्तत्वेऽपि निषेधः। अगामीति। 'उद्यम' इत्यादयस्तु[2] घञर्थे के बोध्याः। घञस्तु अनभिधानमिति बोध्यम्[3]। 'हरेयदकामी'ति तु निवृत्तप्रेषणात् प्राकृतेऽर्थे णिचि, ततश्चिणि बोध्यम्।

अनाचमीति। यद्यपि भाष्ये आङ्रहित एव पाठो दृश्यते, तथाऽपि 'आचाम' इत्येव भाष्ये उदाहृतत्वात् आङ्पूर्व एव पर्युदस्यते इति भावः।

विभाषा चिण्ण। 'लभेश्चे'त्यतो 'लभेरि'ति वर्त्तते। 'प्रादेरि'ति उपसर्गोपलक्षणम्, भाष्यस्वरसादित्याहुः।

१ इतोऽग्रे—'शमशब्दात् आचक्षाणणिचि, ततश्चिणि, दीर्घो न भवत्येव। 'धातोः स्वरूपग्रहणे' इति परिभाषयोक्तणिच्यप्रवृत्तेः। 'अभिव्यक्तपदार्था ये' इति न्यायेनाऽत्र मित्त्वाऽभावाच्च' इति ग. पाठः।

२ 'इत्यादयस्तु संज्ञापूर्वकत्वात् वृद्ध्यभावे, घञर्थे के वा बोध्याः' इति ख. ग. ङ. पाठः।

३ 'बोध्यमित्याहुः' इति ग. पाठः।

द्विकर्मकाणां ल-कृत्यादयः किं प्रधानकर्मणि, उत गौणे, उतोभयोरिति सन्देहे व्यवस्थामाह—द्विकर्मकाणां त्विति । अत्र भाष्यं—'**गुणकर्मणि लादिविधिः सपरे**'। **सपरे**=परेण 'गतिबुद्धी'तिसूत्रेण सहिता'ऽकथितञ्चे'ति सूत्रविषये इत्यर्थः । तत्र परसूत्रविषयीभूता बुद्धि-प्रत्यवसानाऽर्थशब्दकर्मका एव गृह्यन्ते, '**ध्रुवचेष्टितयुक्तिषु चाऽप्यगुणे**', '**तदनल्पमतेर्वचनं स्मरते**'तिवाक्यशेषात् । अत्र 'चाऽपी'ति पादपूरणाऽर्थम् । तत्र ध्रुवयुक्तयः = अकर्मकाः । **चेष्टितयुक्तयः**–गत्यर्थाः । **अगुणे** = 'प्रयोज्ये कर्मणी'त्यर्थः । अत्र चेष्टितयुक्तित्वेन न्यादयोऽपि गृह्यन्ते । इदमेव ध्वनयन्नुत्तरसूत्रविषये कञ्चिद्विशेषं वक्तुं मताऽन्तरमाह—'अपर आह—'**प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्**' । 'अजा नीयते ग्रामम्' । '**अप्रधाने दुहादीनां, ण्यन्ते कर्त्तुश्च कर्मणः**' । प्रयोज्यकर्मण इत्यर्थः । 'गम्यते देवदत्तो ग्रामं यज्ञदत्तेने'ति । एवं च बुद्धिभक्ष्याऽर्थशब्दकर्मकेषु पूर्वमते गुणकर्मणि विधानात्, 'ण्यन्ते कर्त्तुश्चे'त्यनेन च प्रधाने विधानाद्विकल्पः फलितः ।

ननु पूर्वमताऽनुरोधेन 'ण्यन्ते' इतिवाक्ये गत्यर्थाऽकर्मकाणामेव ग्रहणं युक्तम् , नाऽन्येषामिति कथं बुद्ध्यादिषु विकल्पः । 'अप्रधाने दुहादीनामि'त्यादिशब्देन च बुद्धिभक्ष्याऽर्थशब्दकर्मकाणामपि ग्रहणमिति चेन्न । 'प्रधानकर्मणी'त्यनेनैव न्यादिष्विव उत्तरसूत्रविषयीभूताऽकर्मकगत्यर्थेष्वपि पूर्वमतसंमतव्यवस्थायाः सिद्धत्वेन, 'ण्यन्ते कर्त्तुश्चे'त्यस्य वैयर्थ्याऽऽपत्तेः । तत्सामर्थ्यादत्र ण्यन्तमात्रग्रहणेन विकल्पः सिद्धः । एवञ्च 'दुहादीनामि'त्यादिशब्देन 'अकथितञ्चे'तिसूत्रविषयाणामेव न्याद्यतिरिक्तानां ग्रहणम् । पूर्वमते 'गुणकर्मणी'तिवाक्ये न्यादीनां ग्रहणे ईदृशयुक्त्यभावेन, न तेषु विकल्पः । तदेतत्सकलमभिसन्धायाऽऽह—**गौणे कर्मणीत्यादि** ।

'**प्रधान**'शब्दोऽत्र उद्देश्यपरः । 'दुह्याचि'ति पूर्वार्द्धोपात्ता **दुहादयः** । 'अकथितं चे'त्यनेन यस्य कर्मसंज्ञा तत्'**गौणम्**' । उत्तरार्द्धोपात्ता **न्यादयः**।

अन्येषाम्—गत्यर्था-ऽकर्मक-हृ-करोतीनाम् । 'इदं न्यायसिद्धमि'ति कैयटादयः । नीप्रभृतीनां प्रधानकर्मसम्बन्धोऽन्तरङ्गः । तत्तत्क्रियाफलेच्छोः प्रथमप्रवृत्तिविषयत्वात् । दुहादीनां तु विपरीतम् । तत्र पयोऽर्थिनः प्रथमं गव्येव यत्नदर्शनादिति । 'अन्तरङ्गत्वेनेव, प्रधानत्वेनाऽपि लादिव्यवस्थाऽऽपत्तेर्वाचनिकमेवेदम् । 'अन्तरङ्गादपि प्रधानकार्यं बलवदि'ति स्पष्टं 'हेतुमति चे'त्यत्र भाष्ये' इत्यपरे । न च 'ध्रुवचेष्टितयुक्तिषु चाऽप्यगुणे'इत्यत्र अपिशब्दस्य उत्तरत्राऽन्वयेन'अगुणेऽपी'त्यर्थात् अकर्मकगत्यर्थयोरपि विकल्पः स्यात् । अत एव 'अपी'ति चरितार्थमिति वाच्यम् । 'गम्यते देवदत्तो ग्रामं यज्ञदत्तेने'त्यस्यैव भाष्ये उदाहृतत्वात् । ईदृशाऽन्वये मानाऽभावाच्च । तस्मात् 'अपी'ति पादपूरणाऽर्थम्[1] ।

अकर्मकेति । 'लः कर्मणी'त्यत्र निर्णीतमेतत् ।

इति भावकर्मप्रक्रिया ।



१ इतोऽग्रे—'अकर्मक'शब्देन च कालादिकर्मका न गृह्यन्ते इति स्पष्टमाकरे' इति ग. पाठः ।

## अथ कर्मकर्तृप्रक्रिया ।

**न विवक्ष्यते** इति । तत्तत्कारकव्यापारश्च प्रधानधात्वर्थत्वेन विवक्ष्यते इत्यपि बोध्यम् । कर्मणस्त्विति । 'फलसमानाधिकरणतद्व्यापारस्यैव प्राधान्येन विवक्षणादि'त्यर्थः । प्रायेणाऽकर्मका इति । 'व्यापारव्यधिकरणफलाऽऽश्रयस्याऽभावादि'त्यर्थः । द्विकर्मकाणां कर्मणः कर्तृत्वविवक्षायामपि सकर्मकत्वात् 'प्रायेणे'त्युक्तिः । अकर्मकत्वफलमाह—**तेभ्यो भाव** इत्यादि ।

**कर्मवत्कर्मणा** । क्रियायाः कर्मणा साधनेन तुल्यत्वाऽसम्भवात् 'कर्म'शब्दस्तत्स्थक्रियालक्षकः । 'तुल्यक्रिय' इति बहुव्रीहिः । कर्तृकर्माऽवस्थाभेदेन एकरूपयोरपि क्रिययोस्तुल्यत्वमौपाधिकभेदारोपेणोपपाद्यम् । 'कर्त्तरि शबि'त्यतः 'कर्तृ'ग्रहणमनुवर्त्त्य, प्रथमया विपरिणम्यते । तदाह—कर्त्तेति । न च वत्करणं व्यर्थं, तं विनाऽपि णित्किदित्यादाविव वत्यर्थलाभादिति वाच्यम् । 'कर्मसञ्ज्ञक' इत्यर्थशङ्कावारणाय तत्सत्त्वात् । तथा सति सकर्मकत्वाद्भावे लो न स्यात् ।

कार्यातिदेश इति । शास्त्रस्याऽपि कार्याऽर्थत्वेन तस्य मुख्यत्वात् । किञ्च तत्पक्षे 'अनुपराभ्यामि'तिसूत्रमूलोक्तरीत्या शप्-परस्मैपदशास्त्रयोः परत्वेन यगात्मनेपदे न स्याताम् । अत एव 'न दुहस्नुनमां यक्चिणौ' 'कुषिरजोरि'त्यादि चरितार्थमित्याहुः । एतेन 'कार्याऽतिदेशेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति परत्वात् शप्परस्मैपदे एव स्यातामिति दोषो दुर्वार' इत्यपास्तम् । उक्तसूत्रद्वयवैयर्थ्येन तयोरप्यतिदेशात् ।

**तेन यगित्यादि** । इदं च यग्विधायके भाष्ये स्पष्टम् ।

द्वितीया स्यादिति । न च परत्वात्तृतीयाऽऽपत्तिः । कार्याऽतिदेशसत्त्वेन द्वितीयाया एव परत्वात् । यद्वा इदमुपलक्षणं कर्मणि कृत्यादेः । न च कर्मवद्भावेन भावे लो न स्यादित्येव शङ्कितुं युक्तम् । अतिदेशेन

---

१ 'वस्तुतः फलं 'कर्मस्था क्रिया, सकर्मकत्वाऽवस्थायाम् । अकर्मकत्वे तु तत्समानाधिकरणो व्यापारस्तथेति सादृश्योपपत्तिः' इति ग. पाठः ।

स्वनिष्ठाऽकर्मकत्वस्याऽनिवारणेन तत्सौलभ्यात् । तस्याऽप्युपलक्षणाच्च । लकारवाच्य इति । 'लस्थानिकाऽऽदेशवाच्य'इत्यर्थः । लग्रहणमिहाऽनुवृत्तं षष्ठ्यन्तम् । षष्ठ्यर्थश्च तत्स्थानिकोपस्थाप्यत्वमिति भावः । द्विलकारकादिति । सूत्रं, निर्देशो वा अन्यपदार्थः । अश्रवणं तु 'व्यत्ययो बहुलमि'-त्यनेन संहितया पाठे 'हलो यमामि'ति लोपात् ।

कृत्यक्तेति । इदमुपलक्षणं—'कतीह भिन्दानाः कुसूला' इत्यत्र चानशि न कर्मवद्भाव इति, न यगित्यपि बोध्यम् । क्तोऽत्र 'निष्ठे'ति सूत्रविहितः कर्माऽर्थको गृह्यते । तेन अकर्मकत्वात्कर्त्तरि क्तो भवत्येव । अत एव 'सिनोतेर्ग्रासकर्मकर्त्तकस्ये'ति सङ्गच्छते । नचैवं क्तग्रहणं व्यर्थम् । 'परशुभिन्नः कुसूल' इत्यादौ 'तृतीयान्तं पूर्वपदं कर्मवाचकक्तान्ते उत्तरपदे प्रकृतिस्वरं स्यादि'त्यर्थक—'तृतीया कर्मणी'त्येन पूर्वपदप्रकृतिस्वराऽभावस्यैव फलत्वात् । यत्तु 'भिद्यते कुसूल' इत्यादौ द्वितीया स्यादि'ति दूषणाऽन्तरं कैयटेनोक्तम् । तच्चिन्त्यम् । कर्मद्भावेऽपि अनभिहितत्वाऽभावेन तदप्राप्तेः । सामान्याऽतिदेशे विशेषाऽनतिदेशात् ।

एतेन 'सृजस्यात्मानमात्मना' इत्यादाविव औपाधिकभेदमाश्रित्य 'स्वयमि'त्यस्य आत्मनेत्यर्थात् कर्त्तृत्वेन, ओदनस्य कर्मत्वान्मुख्ये कर्मण्येव प्रत्ययोऽस्तु, किं कर्मवद्भावेने'त्यपास्तम् । क्तादीनामप्यापत्तेः । निवृत्तप्रेषणतायां 'पचत्योदन' इत्यपि स्यात्, 'साध्वसिश्छिनत्ती'तिवत्, तद्व्यावृत्त्यर्थमावश्यकत्वाच्च । 'नमते दण्ड' इत्यादौ यक्चिणोः प्रतिषेधे शप्चङोरनापत्तेश्च । क्वचित्प्रयुज्यमानं 'स्वयमेवे'ति तु कर्त्रन्तराऽभावप्रतिपादनपरमिति दिक् ।

व्यवहार इति । उपपादितमेतत्[2] । प्रत्यासत्त्या समानधातौ कर्म-

---

१ 'तेन कतीह भिन्दानाः' इति ग. पाठः ।

२ इतोऽग्रे—'फलसमानाधिकरणव्यापारस्याऽपि भानमि'ति मते तु दोषशङ्कैव नेत्याहुः' इति ग. पाठः ।

स्थया क्रियया तुल्यक्रियत्वाऽऽश्रयणात् 'पचत्योदनं देवदत्त' इत्यत्र कर्मणो 'राध्यत्योदनः' इत्यत्र कर्त्तृत्वेऽपि न कर्मवद्भाव इति स्पष्टं भाष्ये।

**करणेति**। ननु करणत्वाद्यवस्थायां वस्तुतः सन्नपि असिस्थाल्योर्व्यापारो धातुना नोपात्तः। प्रकृतसूत्रे च 'धातोरेकाच' इत्यतो 'धातोरि'त्यनुवर्त्त्य 'धातोर्वाच्यया क्रियया तुल्यक्रिय' इत्यर्थात्। एवञ्च नाऽयं दोष इत्यत आह—**किञ्चेति**। तथा च तत्सामर्थ्यात् दृश्यमानकर्मनिष्ठविशेष-प्रयोजककर्मस्थक्रिया लक्ष्यते इति भावः। तद्ध्वनयन्नाह—यत्र **कर्मणीति**। अन्यत्र तु राजादिदर्शने कर्त्तर्येव हर्षादिलक्षणविशेषदर्शनात् 'कर्त्तृस्थे'त्येव व्यवहार इति भावः।

**'विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।**
**क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता'** ॥

—इति हर्युक्तेः। 'अन्येषां = धातूनां, शब्दैः क्रियाव्यवस्था। शब्देन कर्त्तृव्यापारस्यैव प्राधान्येन अवगमात् कर्त्तस्थते'त्यर्थः। यथा दर्शनाऽऽरोहणाभ्यां विषये, न्यग्भूते च विशेषाऽनुपलम्भात्कर्त्तृस्थतेति। तदुक्तं भाष्ये 'न च कर्त्तृस्थक्रियाणां कर्मणि क्रियायाः प्रवृत्तिरस्ती'ति। विशेष-पर्यवसायिनी वृत्तिः—प्रवृत्तिरित्यर्थः। अन्येषु तु धातुषु कर्त्तर्येव तत्त-त्क्रियाकृतहर्षादिरूपविशेषात्तत्स्थैवेति बोध्यम्।

यद्वा—'अन्येषां'—मते इत्यर्थः। तथा हि—यत्र धातौ यन्निष्ठोंऽश उद्देशः, स 'तत्स्थक्रिय' इत्युच्यते। यथा 'अहं पश्येयमि'त्युद्देशो, न तु 'अयं विषयो भवत्वि'ति। एवम् 'उपरि गच्छेयमि'त्युद्देशो, न तु 'गजो

१ 'धातोः कर्मण इत्यतो धातोरिति' इति ग. पाठः।
२ इतोऽग्रे—'यद्वाऽन्येषां मते इत्यर्थः। तच्च किञ्चेत्यादिना वक्ष्यते' इति ग. पाठः।
३ इतोऽग्रे—'किञ्च यत्र धातौ यन्निष्ठोंऽश उद्देश्यः' इति ग. पाठः।
४ 'उद्देशः' इति क., ख. ङ. पाठः।
५ 'उद्देश' इति क. पाठः। 'उद्देश्य' इति क्वचित् पाठान्तरम्।

न्यग्भवत्वि'ति । आङ्पूर्वस्य रुहेर्गत्यर्थत्वात्, उपरिगमनरूपव्यापारविशेष एव हि रुहेरर्थो, न तु न्यग्भावनमात्रम् । भूमिष्ठे वृक्षस्य शाखां हस्ताभ्यामवनमयत्यपि 'आरोहती'त्यप्रयोगात् । अत एव 'यद्वितुपरमि'त्यत्र भाष्यम्—'रुहिर्गत्यर्थ' इति । अत एव च अणौ कर्त्तुर्णौ कर्मत्वम् । पचि-च्छिद्योस्तु विक्लित्त्यादिकृतो विशेषः कर्मणि दृष्टः । तदुद्देशेनैव च कारकव्यापार इति, महद्वैषम्यम् । न चैवं सोपसर्गस्य गत्यर्थत्वात्, अनुपसर्गस्य चाऽकर्मकत्वात्सिद्धे 'गत्यर्थाऽकर्मके'ति सूत्रे रुहिग्रहणं व्यर्थम् । प्रपञ्चाऽर्थत्वादिति स्पष्टं 'यद्वितुपरमि'ति सूत्रे भाष्यकैयटयोः । एवम् 'अहं ग्रामं गच्छेयमि'त्युद्देशो, न तु 'ग्रामो मत्संयुक्तो भवत्वि'ति । एवंजातीयकाः कर्त्तृस्थभावक्रियकाः । पच्यादौ तु 'तण्डुला विक्लिद्यन्तामि'त्येवोद्देशो, न तु 'अहं फूत्कारादि कुर्यामि'ति । एवंजातीयकाः कर्मस्थतत्काः ।

ननु ज्ञानेच्छयोरिव यत्नस्याऽपि कर्तृस्थत्वात्करोतेः कर्त्तुः कर्मवद्भावो न स्यादत आह—**करोतिरिति** । उत्पादना—उत्पत्त्यनुकूलो व्यापारः ।

नैतदिति । 'यतते' इतिवत्सकर्मकत्वस्याऽप्यनापत्तेश्च । 'यत्र कर्माऽऽकाङ्क्षा स सकर्मक' इति न युक्तम् । शब्दस्वभावकल्पनाऽपेक्षयाऽर्थकल्पनस्य युक्तत्वात् । किञ्च 'गच्छती'त्यादीनाम् अकर्मकताऽऽपत्तिः । तत्र हि 'क्वे'त्येवाऽऽकाङ्क्षा, न तु 'कमि'त्यनुभवसिद्धम् । तस्मात् 'एतच्छास्त्रीयकर्मसञ्ज्ञकाऽन्वय्यर्थप्रतिपादकधातुत्वं सकर्मकत्वमि'त्येव युक्तम् ।

न च उत्पत्तिफलको यत्नो वाच्यः । 'बीजेनाऽङ्कुरः कृत' इत्यनापत्तेः । 'कृतिरि'त्यत्र संज्ञायां क्तिचः सत्त्वान्नाऽतिप्रसङ्गः ।

---

१ इतोऽग्रे—'संग्राहकलाघवाऽनुरोधेन तत्फलकव्यापारमात्रे शक्तिकल्पनस्यैवौचित्याच्च' इति ग. पाठः ।

२ 'क्तिचः सत्त्वेन, रूढत्वान्नाऽतिप्रसङ्गः' इति ग. पाठः ।

**एतेनेति।** 'ज्ञानस्य कर्तृस्थत्वेने'त्यर्थः। **न त्वात्मनेपदमिति।** शानजित्यर्थः[1]। यगात्मनेपदयोस्तु 'अनुव्यवसीयमाने' इति स्यादिति भावः।

**अन्योन्यमिति।** नन्वत्र संयोग-तदनुकूलक्रिययोः कर्मत्व-कर्त्तृत्वोपयोगित्वेऽपि, उभयनिष्ठत्वेऽपि, व्यक्तिभेदोऽवश्याऽङ्गीकार्यः। अन्यथा उभयोरपि परत्वात्कर्त्तृत्वमेव स्यात्, 'इमौ गङ्गां स्पृशत' इतिवत्। भेदे तु अन्यनिष्ठां प्रति अन्यस्य कर्मत्वमुपपन्नम, एवञ्च संयोगस्य कर्मत्वोपयोगितया, तदनुकूलव्यापारस्य च कर्तृत्वोपयोगितया, कर्मत्वोपयोगिक्रियातुल्यक्रियस्य तदीयकर्त्तुरभावात्कर्मत्वाऽप्राप्तिः[2]। अत एव 'सृजस्यात्मानमात्मना' इत्यत्राऽपि न दोषः। सृजेः कर्मस्थक्रियत्वेऽपि उक्तरीत्याऽदोषात्। किञ्चाऽत्रोत्पत्तिरूपफलाऽऽश्रयत्व-तज्जनकक्रियाश्रयत्वयोर्युगपदेकस्मिन्विरुद्धतया, उपाधिभेदेन भेदस्याऽऽवश्यवक्तव्यतया, मुख्ये कर्त्तर्येवाऽयं प्रत्ययो, न तु कर्मकर्त्तरि। गमिवत्स्पृशतेः कर्त्तृस्थक्रियत्वाच्च। एतेन 'अन्योन्यमाश्लिष्यत' इति भाष्योदाहरणमपि चिन्त्यमेव। रुहिगमिभ्यां श्लिषिस्पृशयोर्वैषम्यस्य दुरुपपादत्वात्। अत[3] आह—**अजेति।** अजानिष्ठांऽशस्य उद्देश्यत्वात्कर्मस्थक्रियत्वम्। ग्रामरूपेण कर्मणा चाऽयं सकर्मक[4] इति नाऽतिदेश इति भावः।

परे तु कर्मपदेन तत्स्था क्रिया लक्ष्यते, 'मञ्चाः क्रोशन्तो'तिवत्। न तु कर्मत्वोपयोगितत्स्था क्रिया। मानाऽभावात्। एवञ्च 'अन्योन्यमि'त्यादौ उभयोः शब्दभेदेन कर्त्तृत्वकर्मत्वसत्त्वात्, यैव एकस्मिन् संयोगाऽनुकूलक्रिया, संयोगो वा, सैवाऽपरस्मिन् कर्त्तरीति, कर्मस्थक्रियातुल्यक्रियकर्त्तृसत्त्वात्प्राप्तिः। आश्रयभेदाद्भेदेन च तुल्यत्वाऽव्याघातः। कर्मणोस्तयो-

---

१ 'न शानजित्यर्थः' इति ग. पाठः।

२ 'अभावात्कर्मवद्भावाऽप्राप्तिः' इति ग. पाठः।

३ 'इत्यत आह' इति ग. पाठः।

४ 'सकर्मक इति बोध्यम्' इति ग. पाठः।

रन्योन्यसंयोगकृतहर्षादिलक्षणविशेषदर्शनात्कर्मस्थत्वं क्रियायास्तत्रेति, न रुहिगमिभ्यामविशेषः । 'अजे'त्युदाहरणं तु चिन्त्यम् । गननाऽनुकूलव्यापाररूपेण अजानिष्ठफलेन तत्र विशेषाऽदर्शनात् । नेतृव्यापारजन्यस्याऽपि तस्याऽभावाच्च । यदि ग्रामसंयोगस्तथेत्युच्यते, तर्हि ग्रामस्याऽपि पुरुषसंयोगरूपविशेषदर्शनात्तत्राऽपि कर्मस्थत्वं स्यात् । तस्मात् भाष्योदाहरणमेव सम्यगि'त्याहुः । एवं 'स्तोकं पचत्योदन' इत्यादावप्यस्य निषेधस्य[1] फलं बोध्यम् । 'कर्मवदकर्मकाणामि'ति तु नोक्तम्[2] । 'अकर्मक'-शब्दे प्रतियोगिवाचक'कर्म'पदेन कालादीनामग्रहणात् 'मासं पचत्योदनः स्वयमेवे'त्यादौ कर्मवत्त्वाऽऽपत्तेरिति दिक् ।

दुहिपच्योरिति । अनयोर्द्विकर्मकतया एकस्य कर्मणः कर्तृत्वेऽपि, अपरेण सकर्मकत्वादप्राप्ते वचनम् । द्व्यर्थत्वात्पचेः 'तण्डुलानोदनं पचती'तिवत् द्विकर्मकत्वम् । 'बहुल'ग्रहणं त्वन्याऽर्थं, न त्विहैव पक्षे परस्मैपदाऽर्थम् । तस्याऽत्राऽनिष्टत्वादिति स्पष्टं भाष्ये ।

यत्तु[3] 'पचिरत्र विषये द्विकर्मकः । वृक्षपाकमन्तरेण फलपाकाऽसम्भवात् । तत्राऽप्रधाने दुहादीनामिति वृक्षोऽकथितं कर्मेति, तत्र लकारः । कालस्तु कर्त्तेति, नाऽत्र पचिग्रहणस्योपयोग' इति । तन्न । विक्लित्यनुकूलव्यापाराऽर्थकत्वेन तस्य कर्तृत्वविवक्षायां 'पचती'त्येतद्व्यावृत्त्यर्थमावश्यकत्वात् । विकल्पेनेति[4] । 'दुहश्चे'त्यनेनेति भावः । 'कर्मकर्त्तरि तशब्दे परे दुहेश्चिण्वे'ति तदर्थः ।

गौः पय इति । पयोरूपकर्मणः कर्तृत्वविवक्षायां तु 'पयो गां दुग्धे'

---

१ 'निषेधस्य प्रयोजनं बोध्यम्' इति ग. पाठः ।

२ इतोऽग्रे—'कालादिभिन्नकर्माऽभाववतामकर्मकाणामन्यत्र ग्रहणेनाऽत्रापि तथात्वाऽऽपत्तौ 'मासं पचत्योदनः स्वयमेवे'त्यादौ कर्मवद्भावापत्तेः' इति ग. पाठः ।

३ 'यत्त्वत्र हरदत्तेनोक्तम्' इति ग. पाठः ।

४ 'विकल्पेनेष्यते' इति ग. पाठः ।

इत्यपी'त्येके। 'अप्रधाने दुहादीनामि'त्यनेन ल उक्तः[1], तस्यैव तथा विवक्षा, नाऽन्यस्ये'त्यन्ये।

अचः। 'चिण्ते' इत्यतश्चिणिति, 'दीपजने'त्यतः 'अन्यतरस्यामि'ति च वर्त्तते। उदुम्बरः फलमिति। अत्र 'तथायुक्तमि'त्यनेन उदुम्बरस्य कर्मता। वृक्षपाकं विना फलपाकाऽसम्भवात्। उक्तरीत्या 'कर्त्तुरीप्सिततममि'ति वा। कालश्चाऽत्र पूर्वाऽवस्थायां कर्त्ता[2]।

सृजियुज्योः। श्यनो नित्त्वम् आद्युदात्ताऽर्थम्। यकि तु लसार्वधातुकाऽनुदात्तत्वे[3] तस्यैवोदात्तत्वं स्यादिति बोध्यम्। यगपवाद इति। 'यका श्यनेव बाध्यते, न चिणात्मनेपदे' इति भाष्योक्तेः।

श्रद्धोपपन्ने इति। स च मुख्यकर्त्तैवेति, तत्राऽत्यन्ताऽप्राप्तकर्मवद्भावाऽर्थम्। युजेस्तु कर्मकर्त्तरि सकर्मकत्वेन प्रतिप्रसवविध्यर्थम्।

युज्यते ब्रह्मेति। 'योगो ब्रह्मचारिणं युनक्ति = सम्बध्नाती'ति पूर्वकक्षा। 'सम्बध्नाती'त्यस्य सम्बन्धाऽनुकूलव्यापारवान् भवतीत्यर्थः। ततो युजेः प्रतियोगित्वाऽवच्छिन्नसम्बन्धाऽर्थकत्वे ब्रह्मचारिणः कर्मणः कर्त्तृत्वम्। प्रतियोगिताऽऽश्रयत्वाच्च योगस्य कर्मत्वं बोध्यम्। 'बहुल'ग्रहणात्क्वचित् करणेन तुल्यक्रियेऽपि कर्मवद्भावेन आत्मनेपदम्—'परिवारयति कण्टकैर्वृक्षम्', 'परिवारयन्ते कण्टका वृक्षमि'ति स्पष्टं भाष्ये। एवं 'बहुल'-ग्रहणादेव क्वचित्कर्मवद्भावो न भवति-'स्रवति कुण्डिका उदकम्', निष्क्रामयतीत्यर्थः, 'स्रवत्युदकं कुण्डिकायाः', 'निष्क्रामती'त्यर्थ इत्यादावित्यपि ध्वनितं भाष्ये।

१ 'यत्र कर्मणि ल उक्तः, तस्यैवाऽविवक्षा' इति ग. पाठः।

२ इतोऽग्रे—'तत्र यद्यपि कालस्य कर्त्तृत्वविवक्षायां कर्मणि लेऽपीदं सिध्यति, तथाप्युदुम्बरस्य कर्तृत्वविवक्षायामुदुम्बरः फलं पचतीत्येतद्व्यावृत्तये इदमिति बोध्यम्' इति ग. पाठः।

३ 'लसार्वधातुकाऽनुदात्तत्वे कृते' इति ग. पाठः।

भूषाकर्मेति । 'कर्म'शब्दः क्रियापरः । अत्र भूषावाचिण्यन्तेषु यद्यपि 'णिश्री'त्यनेन यक्चिणोः प्रतिषेधः सिद्धः, तथापि चिण्वदिडभावाय एतत्प्रवृत्तिरावश्यकीत्याहुः।'अवकिरते''अवाऽकीर्ष्टे'ति भाष्ये उदाहरणात्, 'अन्यत्राऽऽत्मनेपदादि'त्युक्तेश्च त्रयाणामपि निषेध इत्याह—यगित्यादि ।

अवकिरत इति । कश्चित्परश्वादिना हस्तिनमवकिरतीति पूर्वकक्षा ।

किरादिरिति । ते च कृ-गृ-दृ-धृ-प्रच्छः । तत्र आद्ययोः कर्मस्थक्रियतया तद्व्यतिरिक्तनिषेधाऽर्थम् । इतरेषां तु कर्तृस्थक्रियत्वेन विध्यर्थमित्याहुः । करोतिक्रियाऽपेक्षमिति । तदर्थोत्पत्त्याश्रयत्वेन कटस्य कर्मत्वादिति भावः । विध्यर्थमिति । अयं भावः—'उपवासादीनि तपांसि तापसं तपन्ति = दुःखयन्तीत्यर्थः । एवञ्च तापसस्य कर्मत्वे तपेर्दुःखजननमर्थः । कर्तृत्वे त्वर्जनमर्थः । तापसस्तपस्तप्यते = अर्जयतीत्यर्थः । एवं च क्रियाभेदात्सकर्मकत्वाच्चाऽप्राप्ते विधिरि'ति ।

वृत्तीति । भाष्ये तु नियमाऽर्थत्वमेवोक्तम् । एवकारस्वारस्यात् । अयं भावः—'तपःपदार्थो ज्ञानजनकोपवासादिरूपः[2] शरीरसन्तापविशेषः । तपति = सन्तापयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् । सन्तापाऽनुकूलव्यापाराऽऽश्रयत्वेन तापसस्य कर्मत्वम् । स च तन्निष्ठः सन्तापविशेषस्वीकार एव । तदनुकूलव्यापाराऽऽश्रयत्वेन तपसः कर्तृत्वम् । 'तपःकर्तृकस्तापसनिष्ठसन्तापसामान्याऽनुकूलव्यापाराऽनुकूलव्यापार' इति बोधः । सन्तापविशेषरूपे तपसि स्वरूपाऽवस्थानरूप एव सः । ण्यर्थत्यागे तापसस्य कर्तृत्वम् । धात्वर्थैकदेशे सन्तापसामान्ये तपःपदार्थसन्तापस्य विशेषस्याऽभेदाऽन्वयात् क्रियाविशेषणत्वेन कर्मत्वम् । एवञ्च कर्मस्थक्रियया तुल्यक्रियत्वात्प्राप्तिः । न चैवमपि सकर्मकत्वादप्राप्तिः । 'तपेरि'ति योगो विभज्यते । 'सकर्मकस्य चेत्तपेरेवे'ति नियमः । एवञ्च 'सकर्मकाणां

१ इतोऽग्रे—'भूषाफलशोभया कर्मणि विशेषात्कर्मस्थत्वम्' इति ग. पाठः ।

२ 'उपवासादिजन्यः' इति ग. पाठः ।

प्रतिषेध' इति नाऽपूर्वम्। ततः—'तपःकर्मकस्यैवे'ति द्वितीयो नियम' इत्याशयात्। ईदृशाऽर्थे एव चैषां साधुत्वं सूत्रभाष्यबलादनुमीयते। तदुक्तं भाष्ये—'सामान्यतपेः अवयवतपिः कर्मे'ति। यथा 'गोपोषम् अपुषदि'त्यत्र सामान्यपुषेः अवयवपुपिः कर्मेति स्पष्टमस्मत्कृतभाष्यप्रदीपोद्द्योते इत्याहुः।

**प्रस्नुते** इति। प्रस्रवणाऽनुकूलोत्कण्ठोत्पादनं स्नौतेरर्थः। एतेन 'दुह्यर्थतया द्विकर्मकत्वात्सकर्मकत्वेन यक्चिणोः प्राप्तिरेव ने'त्यपास्तम्।

**प्रास्नाविष्टे**ति। चिण्वदिट्। न च चिणि निषिद्धे चिण्वदिडपि नेति वाच्यम्। 'चिण्वदि'ति चिणीव कार्यमतिदिश्यते। न हि 'चिणने'त्युक्त्या सोऽतिदेशो निषेद्धुं शक्यः। 'दुहस्नुनमां तङानौ' इत्येव सिद्धे 'न यक्चिणौ'इत्यस्य वैयर्थ्याऽऽपत्तेश्च। ध्वनितं चेदम् 'आर्द्धधातुके'इति सूत्रे षाष्ठभाष्ये। तत्रत्यकैयटस्तु चिन्त्य एवेति दिक्। **प्रास्नोष्टे**ति। 'स्नुक्रमोरि'ति नियमाद्धलादिलक्षण इण्न। केवलनमतेरकर्मकत्वादाह—**अन्तर्भावितेति**। **अचीकरतेति**। चिणि निषिद्धे'णिश्री'ति चङ्। अत एव 'अचीकरते'ति अत्र भाष्ये उदाहृतम्। **चिण्वदिट् ि**विति। उक्तबीजमेतत्।

**ब्रूते कथेति**। उच्चारणेन शब्दे प्राकट्यरूपविशेषदर्शनात्कर्मस्थक्रियत्वमस्येति बोध्यम्।

**णिश्रन्थिग्रन्थि**। अत्र कर्मकर्तृत्वं विना येऽकर्मकास्ते'आत्मनेपदाऽकर्मक'शब्देन गृह्यन्ते। कर्मकर्तृत्वेन अकर्मकत्वस्याऽव्यभिचरितत्वात्। तेषामन्तर्भावितण्यर्थत्वेन सकर्मकत्वं कृत्वा पुनः सौकर्याऽतिशयविवक्षायां कर्मकर्त्तृत्वं बोध्यम्।

**उदपुपुच्छतेति**। पुच्छमुदस्तवानित्यर्थः। यत्तु 'णेरणावि'ति सूत्रे 'उदपुपुच्छत पुच्छं स्वयमेवे'ति भाष्ये उक्तं, तत्र उत्पुच्छयतेः प्रकृत्यर्था-

---

१ इतोऽग्रे–'शब्दप्रकाशनरूपफलस्यैवोद्देश्यत्वात्कर्मस्थक्रियत्वमस्येति बोध्यम्' इति ग. पाठः।

ऽनन्तर्भावेण केवलोद्सने वृत्तिर्बोध्या। आत्मनेपदविधौ योऽकर्मकस्तमुदाहरति—विकुर्वते इति । व्यकारिष्टेति । चिणि निषिद्धे, ण्यन्तत्वविरहाच्चङभावे, सिचि, चिण्वदिटि, वृद्धिः। तदभावपक्षे त्वाह—व्यकृतेति । 'ह्रस्वादङ्गादि'ति सिचो लोपः ।

कुषिरजोः । 'न दुहे'त्यतो 'न यगि'ति वर्त्तते । किन्त्विति । तस्मिन्नेव विषये इति भावः । तेन च 'कतीह कुष्णानाः पादा' इत्यत्र ताच्छीलिके चानशि न श्यन्निति बोध्यम् । लवाच्यस्यैव कर्त्तुः कर्मवद्भावे सति, यको विषयाऽभावात् । यगविषये त्विति । प्रक्त्यभावान्निषेधाऽभावे, संनियोगशिष्टन्यायेन श्यनपरस्मैपदे अपि नेत्यर्थः । श्यनयकोर्नुमि विशेषः, 'कुष्यन्ती जङ्घे'ति । श्यनि नित्यं नुम् । स्वरेऽपि विशेष उक्तः ।

यत्तु कर्मकर्त्तरि भाष्यवृत्त्यादिषु आत्मनेत्यर्थकं 'स्वयमेवे'ति प्रयुज्यते, तत्तु 'आत्मना करणेने'ति व्याख्येयं, न तु कर्त्रेति । तथा सति कर्मण्येव लः स्यादिति 'णेरणावि'त्यत्र कैयटः ॥

इति कर्मकर्तृप्रक्रिया ॥

---

१ इतोऽग्रे—'अत्र सार्वधातुकग्रहणं, द्विलकारकनिर्देशाल्ल इति चाऽनुवर्तते । तेन सार्वधातुकविषये एव श्यन्, तत्संनियोगशिष्टं परस्मैपदं च । एवञ्च 'कतीह कुष्णानाः' इति ग. पाठः ।

२ इतोऽग्रे—'परस्मैपदाऽभावेन तत्संनियोगशिष्टः श्यन्नपि ने'त्यन्ये' इति ग. पाठः ।

## अथ लकारार्थप्रक्रिया ।

लकाराणां कालविषये उत्सर्गोऽपवादशास्त्राण्याह—**अभिज्ञाव** । 'भूते' इत्यधिकारः । 'अनद्यतने लङि'त्यतः 'अनद्यतने' इति वर्त्तते । **अभिज्ञा**—स्मृतिः । 'वचने' इति करणे ल्युट् । सा उच्यतेऽनेनेत्यर्थः । तदाह—**स्मृतिबोधिनीति** । 'पश्य मृगो धावती'तिवत् 'गोकुले' इत्यादि-वाक्याऽर्थः वासक्रिया,—'स्मरसी'त्यत्र कर्म । तेन 'गोकुलाऽधिकरणका-ऽस्मत्कर्त्तृकभूताऽनद्यतनवासकर्मकं कृष्णसम्बोध्यकं स्मरणमि'[1]ति बोधः ।

**प्रकरणादीति** । अत्र 'वचन'ग्रहणमेव मानम् । **अभुञ्ज्महीति** । 'अभि-ज्ञे'ति लटो 'न यदी'ति निषेधे, औत्सर्गिको लङ् । **साकाङ्क्ष इति** । विद्य-मानाऽऽकाङ्क्ष इत्यर्थः । तेन आकाङ्क्षानिरूपके, तदाश्रये चोभयत्राऽपीदं भवति । **वत्स्याम इति** । लक्ष्यलक्षणभावस्य विवक्षितत्वात्साकाङ्क्षता बोध्या । तत्र वासः प्रसिद्धत्वात् लक्षणम्=ज्ञापकम् । चारणं–लक्ष्यम् । सहसा बुद्ध्यनारोहाल्लक्ष्यं=ज्ञाप्यमित्यर्थः[2] । **परत्वादिति** । तेनोभयत्र विभाषे-यम् । स्पष्टं चेदं 'नवे'ति सूत्रे, प्रकृतसूत्रे च भाष्ये ।

**चित्तविक्षेपादिनेति** । आदिना स्वाप-मनोऽसंनिधानादि सङ्ग्रहः । 'व्याततेने किरणावलीमुदयन' इति तु आरोपेणोपपाद्यम् । भविष्यत्यपि अव-श्यभावित्व-शीघ्रभावित्वादिप्रतिपत्तये 'नरि नरि किरति द्राक् सायकान् पुष्पधन्वा, पुरि पुरि च निवृत्ता मानिनीमानचर्चा' इत्यादौ भूतत्वाद्या-रोपदर्शनेन अत्राऽपि तदर्थमेव तदारोपात् । स्पष्टा चैवमारोपेण प्रयोगो-पपत्तिः 'क्षिप्रवचने लडि'त्यत्र भाष्ये । तात्कालिकाऽध्येतॄन् स्वशिष्यान् अर्थप्रविवेकादिफलकममुं ग्रन्थं ज्ञातुं सोत्कान् आह्लादयितुं हि तदुक्तिः सफला । परोक्षत्वस्याऽप्यारोपस्तत्फलक एव । एवं सूक्ष्मकालेन

---

१ इतोऽग्रे—'कृष्णेति क्रियाविशेषणम्' इति ग. पाठः ।

२ 'लक्ष्यं=परिचाय्यम् । ज्ञाप्यमित्यर्थः' इति ख. ग. ङ. पाठः ।

करिष्यामि, यत्र करणकाले स्वेनाऽपि साक्षात्कर्त्तुमशक्यमित्येवं बोधनात्। अनायासेन ग्रन्थकरणमप्यस्य व्यङ्ग्यम्। सूर्योपमाऽप्येतत्पोषिकैव। यथा सूर्योऽतिविस्तृतमपि देशं क्षणेनैव प्रकाशयति, क्षणेनैव चोल्लङ्घ्य याति, सर्वजनपुण्यपापसाक्ष्यं च करोति, तथाऽहमपि क्षणेनैवेदृशमन्यैरत्यायासेन सहस्रवर्षैरप्यसाध्यं, तादृशमपि सिद्धं चेन्न भ्रमरहितम्, ईदृशं क्षणेनैव निर्दुष्टं रचयिष्यामीत्यन्येभ्यः स्वस्य व्यतिरेकोऽपि व्यङ्ग्यः। 'भाविनोऽर्थस्य प्रयोगकाले परोक्ष्यं वास्तवमेव। भूतत्वाऽनद्यतनत्वयोरेवाऽऽरोप' इति कश्चित्। 'वर्त्तमानसामीप्ये' इत्यादि तु वर्त्तमानत्वाऽप्रकारकबोधे साधुत्वाऽर्थमिति सुधियो विभावयन्तु। एवमेव 'अत्र मार्गे कूपो भविष्यति' 'अभूदि'त्यादिप्रयोगो विद्यमानेऽपि कूपे कर्त्रा स्वदर्शनादिगतभविष्यत्त्वाऽऽरोपेण क्रियते इति बोध्यम्।

अत्यन्तेति। अपह्नवः = अपलापः। अपरोक्षाऽर्थमिदम्। तद्देशगमनोत्तरकालिकवासप्रश्ने तत्कारणगमनस्यैव अपलापात्—अत्यन्ताऽपह्नवः। अबाधितपरोक्तविपरीतबोधनाय तदुपपादकाऽभावप्रतिपादनेच्छा अत्यन्ताऽपह्नवः। अयं च स्वरूप[1]न्नेव लिट्नियामकः। अत्र च कलिङ्गवासाद्युपपादकं कलिङ्गगमनादिकम्। तेन विना तदसम्भवात्। कलिङ्गो देशः। स च निन्द्यः। यदा तु गमनमेव पृष्टस्तदेवाऽपलपति, तदा लङेव।

ननू[2]त्तरवाक्ये 'नाऽहं कलिङ्गमि'त्येकवचनमयुक्तम्। जनपदवाचिनो नित्यबहुवचनाऽन्तत्वादिति चेन्न। 'नाऽहं कलिङ्गान् जगामे'त्येव पाठात्। एकवचनाऽन्तपाठस्तु लेखकप्रमादात्। अत एव भाष्येऽपि 'नो कलिङ्गान् जगामे'त्येव पाठो दृश्यते। प्रष्टव्यः प्रश्न इति। कर्मणि नङ्। आसन्नकाले इति। 'प्रश्नविषयीभूताऽऽसन्नकालिकभूताऽनद्यतनपरोक्षाऽर्थाद्धातोरि'-

१ 'स्वयमसन्नेव' इति ख. ग. ङ. पाठः।

२ 'ननु' कलिङ्गेष्ववात्सीरि'ति प्रश्नवाक्ये 'कलिङ्गेष्वि'ति बहुवचनम्, उत्तरवाक्ये 'नाऽहं कलिङ्गमि'त्येकवचनम्' इति ग. पाठः।

त्यर्थः । 'पञ्चवर्षाऽभ्यन्तरम्-आसन्नम् । तदतीतं विप्रकृष्टमि'ति हरदत्तः ।

**यजति स्मेति ।** स्मशब्दो भूतकालद्योतक इत्याहुः ।

**अपरोक्षे च ।** यद्यपि 'लट् स्मे' इत्यत्र 'परोक्षे' इत्यस्य निवृत्तिं कृत्वा इदं त्यक्तुं शक्यं, तथापि 'अनद्यतने' इत्यस्य निवृत्तिर्मा भूदितीदं कृतम् ।

**एवं स्मेति ।** 'एवं'शब्दोऽपरोक्षद्योतनाऽर्थः । **निवृत्तमिति ।** स्पष्टं चेदं 'लट् स्मे' इत्यत्र भाष्ये । 'पृष्टस्य प्रतिवचनमि'ति विग्रहः । 'पृष्ट'ग्रहणन्तु 'वचनं वचनं प्रती'त्याद्यर्थसम्भावनावारणाय । अथ 'ननु कुर्वन्तं पश्य' 'ननु कुर्वाणं पश्ये'त्यत्र शत्रादि कथम् ? । 'अनन्तरस्ये'तिन्यायेन 'वर्त्तमाने लडि'त्येतद्विहितस्यैव तयोर्विधानात् । स्पष्टं चेदमत्र, 'वर्त्तमानसामीप्ये' इत्यत्र च भाष्ये इति चेन्न । श्रमादिदर्शनेन तस्या एव क्रियाया अनुवृत्तिमारोप्य, वर्त्तमानत्वविवक्षां कृत्वा 'वर्त्तमाने लडि'ति लटि, तयोः सुलभत्वात् । सूत्रन्तु भूतत्वविवक्षायां लुङ्बाधनाऽर्थं, परोक्षाऽनद्यतनभूतत्वविवक्षायां परत्वेन लङ्लिटोर्बाधनाऽर्थं चेति सूत्रहृदयम् ।

**नन्वो ।** न-नू पर्यायावत्रेत्याहुः । 'अनयोर्योगे भूतसामान्ये पृष्टप्रतिवचने लट् वे'त्यर्थः । पक्षे लुङ् । अनद्यतने तु लङेव । **अनुवर्त्तते इति ।** 'लट् स्मे' इत्यत्र भाष्ये स्पष्टमिदम् । किञ्च यदि भूते एव स्याल्लुङ्ग्रहणमनर्थकं स्यात् । **यथाप्राप्तमिति ।** लङित्यर्थः । पारोक्ष्ये तु लिडिति बोध्यम् । **भविष्यतीति ।** 'भविष्यति गम्यादय' इति सूत्रादिति बोध्यम् ।

**यावत्पुरा ।** 'निपात'ग्रहणं लक्षणप्रतिपदोक्तपरिभाषाऽनित्यत्वज्ञापनार्थं । 'यावत्पुरे'ति सूत्रम् 'अनद्यतने 'लुडि'त्यत्राऽनुवर्त्तते । तेन तत्राऽपि लुटं बाधित्वा लडेव, 'यावत् श्वो भुङ्क्ते' इति भाष्ये स्पष्टम् ।

**कर्हि वा भुङ्क्ते भोक्ष्यते इति ।** नन्वनद्यतने र्हिल्विधानेन कर्हिशब्दस्याऽनद्यतनविषयत्वात् लुटैव भाव्यं, न लटा । न च वाऽसरूपन्यायेन सोऽपि । सारूप्यात् । अनुबन्धकृतवैरूप्यस्याऽग्रहणात् । न च लुटि

---

१ इतोऽग्रे—'एतद्योगे तक्रकौण्डिन्यन्यायाद्वर्तमाने न लट्' इति ग. पाठः ।

'आ,' लुटि 'ती'ति प्रयोग इत्यसारूप्यमस्त्येवेति वाच्यम् । आदेशकृताऽसारूप्यमादाय लकारेषु वाऽसरूपप्रवृत्तौ मानाऽभावात् । अत एव 'हशश्वतोर्लङ् चे'ति लिट्समावेशाऽर्थश्चकारः सार्थकः । स्पष्टं चेदं वाऽसरूपसूत्रे भाष्ये इति चेन्न । भविष्यत्सामान्ये 'भोक्ष्यते' इतिव्युत्पाद्य, 'कर्हि'शब्देन सम्बन्धे अदोषादित्याहुः । इदं च 'भविष्यति गम्यादय' इत्यत्र भाष्ये स्पष्टम् । तत्र हि 'श्वो ग्रामं गमी'त्यादेः साधुत्वमुक्तम् । 'व्यत्ययो बहुलमि'तिसूत्रस्थम्'श्वोऽग्नीनाधास्यमानेने'त्यादौ कालव्यत्ययपरम् 'आधाता' 'यष्टा'इति प्राप्ते' इति भाष्यन्तु वाक्यसंस्कारपक्षे योज्यम् ।

'लटः सद्वे'ति सूत्रभाष्ये तु 'अनद्यतने लुङि'त्यत्र 'अनद्यतने' इति योगं विभज्य, अनद्यतने लटः सतौ भवत इति तयोर्विधानसामर्थ्यात् अनद्यतने लृङप्यनुमीयते । तेनोक्तप्रयोगाणामुपपत्तिरुक्ता । 'कृत्यल्युट' इति सूत्रे भाष्ये तु 'बाहुलकात् लट् श्वःपदयोगे' इत्युक्तम् ।

अयमपि योगः 'अनद्यतने लुङि'त्यत्राऽनुवर्त्तते । तदाह—भोक्तेति । अन्यथा भविष्यत्सामान्यविहितो लृट्[1] अनद्यतने लुटा बाध्येतेति विकल्पोदाहृतिरसङ्गता स्यादिति बोध्यम् । एवमुत्तरमपि योगचतुष्टयं तत्राऽनुवर्त्तते इति बोध्यम् । अत एव 'यावत्पुरादिषु लृट्[2]विधिर्लुटः पूर्वविप्रतिषेधेने'ति वार्त्तिके 'आदि'ग्रहणं, बहुवचनं च चरितार्थम् । न च चतुर्थस्य 'लिङ् चोर्ध्वमौहूर्त्तिके' इत्येतस्य विषये अनद्यतनत्वाऽसम्भवः । आगामिन्या रात्रेः पूर्वार्द्धस्य चरममुहूर्त्तादुपरितनकालस्य तत्त्वसम्भवात्, 'मुहूर्त्तादुपरि कान्ता चेदागच्छेत्, आगन्ता[3] वा, अथ त्वं तां भुङ्क्ष्व' इत्याद्युदाहरणस्य च सम्भवात् । एवञ्च[4] 'योगत्रयमि'ति मनोरमा चिन्त्यैव ।

१ 'लृट्' इति ग. पाठः ।

२ लुट्' इति ग. पाठः ।

३ 'आगन्ता वा' इति ख. ग. ङ. नास्ति ।

४ 'एवञ्च' इत्यादिः 'इत्याहुः' इत्यन्तः ख. ग. ङ. पाठः । क. नास्ति ।

अत एव तत्सूत्रोदाहरणे 'आगन्ता वे'ति वक्ष्यतीत्याहुः ।

**किंवृत्ते** । किमा वृत्तं=निष्पन्नं, तस्मिन्नुपपदे इत्यर्थः । ते च 'कः' 'कतरः' 'कतम' इति त्रय एव गृह्यन्ते' इति वृत्तिः । 'यद्वृत्तान्नित्यमि'ति-सूत्रस्थभाष्यरीत्या सर्वग्रहणमि'त्यन्ये । उदाहरणे तादृशप्रश्नेन प्रष्टुर्लिप्सा गम्यते । उत्तरसूत्रोदाहरणेऽपि तादृशप्रयोगेण प्रयोक्तुर्लिप्सा गम्यते इति बोध्यम् ।

**लिप्स्यमान** । लिप्स्यमानसिद्धौ लिप्साया अपि सत्त्वेन पूर्वेण सिद्धौ, अकिंवृत्तार्ऽथमिदम् । पूर्वत्र 'किंवृत्त'ग्रहणन्तु लिप्स्यमानसिद्धिरहितायां लिप्सायाम् अकिंवृत्ते लटो निवृत्त्यर्थम् ।

**लोडर्थ** । लोडर्थप्रैषादिविषयधात्वर्थलक्षणमेव 'लोडर्थलक्षण'शब्देनो-च्यते । कृष्णश्चेदिति । कृष्णभोजनं प्रैषविषयगोचारणस्य लक्षणं बोध्यम् ।

**ऊर्ध्वं मुहूर्त्ताद्भव इति** । 'ऊर्ध्वमि'ति द्वितीयान्तम् । 'कालाऽध्वनोरि'-त्यस्य, 'अकर्मकधातुभिर्योगे' इत्यस्य वा प्रवृत्तेः । 'ऊर्ध्वमि'ति दिक्शब्द-योगे 'मुहूर्त्तादि'ति पञ्चमी । 'तद्धितार्थे'त्यत्र 'दिक्सङ्ख्ये' इत्यनु-वर्त्तनात्, समानाधिकरणाऽधिकाराच्च इह समासो दुर्लभ इत्यत आह—**निपातनादिति** । अत एव विशेष्यस्याऽप्यूर्ध्वशब्दस्य पूर्वनिपातः । भवार्थे अध्यात्मादित्वात् ठञ् । कालाट्ठञ्वा । स्वार्थे ष्यञिति । चातुर्वर्ण्या-दित्वादिति भावः । 'प्रियतद्धिता दाक्षिणात्या' इति तदुच्चारणम् ।

वत्करणलभ्यमर्थमाह—**येनोपाधिनेति** । अत एव वत्करणं सार्थकम् । अन्यथा वर्त्तमाने विहिता अन्यत्र काले धातुमात्रात्स्युः । मम तु वत्करणात् पूङ्यजोः शानन् ताभ्यामेव । ताच्छील्यादिविशिष्टकर्त्तरि 'अलम्'पूर्वात्कृञ इष्णुच् उक्तस्तस्मिन्नेवोपाधावित्यादिक्रमेण ऊह्यमिति भावः ।

**कदाऽऽगतोऽसीति** । ननु प्रश्नवाक्यं किमर्थमिति चेन्न । उदाहरणे

---

१ इतोऽग्रे—'एतन्निर्देशसिद्धाऽर्थकथनमेव तद्वार्त्तिकमित्याहुः' इति ग. पाठः ।

भूतकालाद्यभिव्यक्त्यर्थत्वात् । अयमागच्छामीति । ननु 'कदा' इति प्रश्ने 'इदानीमि'त्यादिप्रकारेणोत्तरमुचितं, न त्विदम् । किञ्च प्रश्ने सत्ता गम्यते, न तूत्तरे इत्यपि वैषम्यम् । किञ्च आगमनस्य भूतत्वात्,'अयमि'-ति प्रतिनिर्देशो न युक्तो, व्यर्थश्चेति चेन्न । 'अयमेष' इत्यादिभिरागमना-ऽविनाभूतं यद्रूपं प्रस्वेदपरिकरबन्धादियुक्तं, तत् प्रतिनिर्दिश्यते । तेन 'ईदृक्रूपदर्शनाऽव्यवहितपूर्वकाले इदानीमागत' इत्यार्थमुत्तरम्[1] । एतेन 'किञ्चे'त्यादिकमपास्तम् । एवं हि सामीप्यं द्योतितं भवति । आरोपेण उपपत्तिमाश्रित्य प्रत्याख्यातमिदमाकरे । भूतत्वप्रकारकबोधे त्वनभिधान-मिति तदाशयः ।

आशंसायाम् । अप्राप्तप्राप्तीच्छा—'आशंसा' । आशंसाया वर्त्तमान-त्वेऽपि तद्विषयस्य वर्षादेर्भविष्यत्त्वात्, 'भविष्यती'त्युक्तम् । 'आशंस्य-मानक्रियावाचकाद्धातोरि'त्यर्थः । देवश्चेदिति । वृष्टि-वापयोरुभयोरपि आशंसाविषयत्वादुभयत्राऽपि लकारः । 'वचन'ग्रहणात्पर्यायग्रहणम् । तदाह—क्षिप्रपर्याये इति । पूर्वविप्रये इति । आशंसायामित्यर्थः । तेन तदपवादोऽयम् । तद्ध्वनयन्नाह—नेतीति । न तु भूतवदिति । नाऽपि 'वर्त्तमानवदि'त्यपि बोध्यम् । अस्य 'आशंसायामि'त्येतदपवादत्वादिति भावः । आशंसे क्षिप्रमिति । क्षिप्रयोगेऽपि परत्वादिदमेवेति भावः ।

**नाऽनद्यतनवत्** । प्रबन्धः-सातत्यम् । **लङ्लुटौ नेति** । यथायथं भूता-ऽनद्यतने लङ्, भविष्यत्यनद्यतने लुट् नेति भावः। अत एव'अद्यतनवदि'ति नोक्तम् । तथा हि सति अद्यतने कस्याऽपि विशिष्य विध्यभावात्कस्या-ऽतिदेशः स्यात् । तत्रदृष्टत्वमात्रेणाऽतिदेशे लटोऽप्यतिदेशः स्यादिति स्पष्ट-माकरे । 'वत्करणादनद्यतनविशेषविहित-परोक्षे लिट् ह्शश्वतोर्लङादीना-मप्यनेन निषेध' इति कैयटः । भाष्यं तूदासीनम्, 'लङ्लुटोर्निषेध'

१ 'इत्याद्यर्थमुत्तरम्' इति तु ख. ग. ङ. पाठः । स च 'आर्थिकमुत्तरम्' इति मनोरमापाठविरुद्धः ।

इत्युपक्रमे विपरीतं चेति महद्भिर्विचार्यम्। सामीप्यं चाऽत्र कालकृतमेव। उपस्थितत्वात् । तदाह—येयं पौर्णमासीति । देशकृतमपि तद्गृह्यते। 'भविष्यति मर्यादे'ति सूत्रे 'योऽयमध्वा गन्तव्य आ पाटलिपुत्रात्, तस्य यद्वरं साकेतादि'त्यादौ 'नाऽनद्यतनवदितीष्यते' इति भाष्यात्।

भविष्यति मर्यादा। अक्रियाप्रबन्धाऽर्थम् , असामीप्याऽर्थं चेदम्। तयोस्त्वत्र विषये पूर्वसूत्रप्रवृत्तिरेवेष्यते इति भाष्ये स्पष्टम्। भविष्यति किम्?। 'योऽयमध्वाऽतिक्रान्त' इत्यादौ 'सक्तूनपिबामे'त्येव। मर्यादेति किम्?। 'योऽयमध्वा गन्तव्यो निरवधिकः, तस्य यद्वरमि'त्यादौ 'पातास्म' इत्येव। अवरस्मिन्निति किम्?। 'योऽयमध्वा आ पाटलिपुत्रात्, तस्य यत्परं कौशाम्ब्या' इत्यादौ 'पतास्म'[1] इत्येव।

कालविभागे। कालकृतमर्यादोक्तौ, अवरप्रविभागे सतीत्यर्थः। अहोरात्रसम्बन्धिनीति। 'अनहोरात्राणामि'ति शेषे षष्ठी, न कर्त्तरि, नाऽपि कर्मणीति भावः। मर्यादाऽवरयोरन्यतरस्मिन्नपि अहोरात्रसम्बन्धिनि नेति तात्पर्यम्। प्रतिषेधार्थमिति। क्रियासातत्याद्यसत्त्वे इत्यर्थः। तत्सत्त्वे तु अहोरात्रसम्बन्धिनि विभागेऽपि 'नाऽनद्यतनवदि'त्येवेष्यते इति बोध्यम्। तस्य योऽवरः पञ्चदशरात्र इति। मध्ये एतन्मासीयपञ्चदशरात्रेण व्यवधानात्सामीप्याऽभावः। 'पञ्चदशरात्र' इति बहुव्रीहिः। अतः पुंस्त्वम्। 'अच्प्रत्यन्ववे'ति योगविभागात्समासाऽन्तः।

परस्मि। कालविभागे एवेदम्। योगविभागसामर्थ्येनाऽत्र 'कालविभागे' इत्यस्य सम्बन्धात्। अन्यथा 'भविष्यति मर्यादावचनेऽवरस्मिन्ननहोरात्राणामि'[2]त्येव वदेदिति स्पष्टं भाष्ये।

वर्ज्यमिति। ण्यन्तात् कर्मणि 'अचो यत्'।

---

१ 'पातास्मेत्येव' इति क. ख. ग. ङ. पाठः।

२ 'अवरस्मिन्नहोरात्राणाम्' इति ख. ङ पाठः।

**भूते च** । **पूर्वसूत्रमिति** । अनुवृत्तपूर्वसूत्रकोऽयमधिकारः, 'समानकर्त्तृकेषु' इति यावत् । 'उताप्योरि'त्यतः पूर्वं तु 'वा'ग्रहणसम्बद्धमेतदधिक्रियते इति बोध्यम् । तत्र 'गर्हायां लडपी'ति सूत्रे नेदं सम्बध्यते । लड्विधानेन तद्विषये लिङ्निमित्ताऽभावादिति वदन्ति । एवञ्च 'भूते चे'त्यस्योदाहरणानि 'उताप्योरि'त्यतः प्रभृति बोध्यानि । ततः प्राचीनेषु उत्तरसूत्रेण विकल्पोक्तिः । तदाह—**पूर्वसूत्रं** त्विति ।

**गर्हायाम्** । अतीताऽनागतयोरपि गर्हाऽतिशयप्रतिपादनाय वर्त्तमानत्वाऽऽरोपेण लटि, 'अपि गणिकामाददानं पश्ये'ति शानजपि । सूत्रन्तु अनारोपे लुङाद्यभावायेत्याहुः । 'भविष्यती'त्यादि निवृत्तम् । तदाह—**कालत्रये इति** । **परत्वादिति** । उत्कृष्टत्वात्=अनवकाशत्वादित्यर्थः ।

अत्र **भविष्यतीति** । 'क्रियाऽतिपत्तावि'त्यपि बोध्यम् । 'कथमी'त्यस्य, गर्हायाश्च लिङ्निमित्तस्य सत्त्वादिति भावः ।

**किंवृत्ते** । 'लृङ् वे'त्येव सिद्धे 'लिङ्'ग्रहणं लटो निवृत्त्यर्थं, 'विभाषा'ग्रहणनिवृत्त्यर्थं चेत्याहुः । **लृङ् प्राग्वदिति** । भूते वा, भविष्यति नित्यमित्यर्थः । 'लिङ्निमित्त'ग्रहणेनाऽस्यापि तत्रोपस्थितिसामर्थ्यात् क्रियाऽतिपत्तौ भविष्यति एनं बाधित्वा लृङेवेति तदाशयः । एतेन 'तत्राऽपि परत्वादिदमेवोचितमि'त्यपास्तम् ।

**अनवक्लृप्त्यम** । 'एतयोर्विषयभूतयोर्लिङ्लृटौ कालत्रये भवत'इत्यर्थः । इह यथासङ्ख्यं न । स्पष्टं चेदं यथासङ्ख्यसूत्रे भाष्ये । किंवृत्ताऽनधिकारादेव सिद्धे 'अकिंवृत्तेऽपी'ति चिन्त्यप्रयोजनम् । न च पर्युदासाऽऽश्रयेण तद्भिन्नपदस्य उपपदसंज्ञाऽर्थमिदम् । 'अतिङि'तिसमासनिषेधेन फलाऽभावात् । भविष्यदधिकारविहितलृट एव शत्रादिविधानेनाऽस्य तदभावात्, न तदन्तेनाऽप्यस्य समासप्रसक्तिरिति स्पष्टं भाष्ये । **लृङ् प्राग्वदिति** ।

१ 'लिङ्निमित्ताऽभावादिति दिक्' इति ग. पाठः ।

२ 'लट वा' इति ग. पाठः ।

भविष्यति नित्यं, भूते वेत्यर्थः। **लिङोऽपवाद इति**। पूर्वसूत्रेण लिङ्लटोः प्राप्तयोर्लृङ्ग्रहणेन लिङ्निवृत्तिरिति भावः। **अस्ति भवतीति**। त्वत्कर्तृकं शूद्रीगमनमस्तीत्यादिरर्थः। **अत्र लृङ् नेति**। लिङो निवृत्तत्वेन एतद्युक्ताऽनवक्लृप्त्यादेर्लिङ्निमित्तत्वाऽभावादिति भावः। **लटोऽपवाद इति**। 'अनवक्लृप्ती'त्यनेनोभयोः सिद्धयोर्लिङ्विधानेन लटो निवृत्तेरिति भावः।

**यच्चयत्रयोः**। अयमपि लटोऽपवादः। योगविभागस्तूत्तरत्राऽनयोरेवाऽनुवृत्त्यर्थः। लृङ् प्राग्वत्। **लिङेवेति**। तेन 'विभाषा कथमी'ति लट्, 'किंवृत्ते'इति च नेत्यर्थः। परत्वादनेन तयोर्बाधादिति भावः। लृङ् प्राग्वत्।

**शेषे**। इदमपि चित्रीकरणे एव। अत्र लृङ् नेत्याहुः। **यदि सोऽधीयीतेति**। 'जातुयदोरि'त्यत्र यदायद्योरुपसङ्ख्यानाल्लिङ्। भाष्ये तु 'यदिशब्दयोगे सम्भावनस्य गम्यत्वेन,परत्वात्'सम्भावनेऽलमित्येव'लिङि लटं बाधित्वा सिद्धे, 'अयदावि'ति न वक्तव्यमि'त्युक्तम्। **भूतेपीति**। 'वा'ग्रहणस्य निवृत्तत्वाद्भविष्यतीव भूतेऽपि नित्यमित्यर्थः।

**कामप्रवेदने। स्वाभिप्रायेति**। 'शब्दशक्तिस्वाभाव्यादिष्टविषय एवाऽभिप्रायो गृह्यते' इति कश्चित्। सर्वलापवादोऽयम्। **कच्चिज्जीवतीति**। 'कामो मे' इत्यनुषञ्जनीयम्। 'कच्चिदि'ति प्रश्न एव कामप्रवेदनद्योतक' इत्यन्ये। अत्र 'इच्छार्थेषु' इति सूत्रमपि न प्रवर्त्तते। निषेधसामर्थ्यात्। संनियोगशिष्टन्यायात् लोडभावोऽपि। वक्ष्यमाणरीत्या कच्चिच्छब्दस्य इच्छाऽर्थकत्वाऽभावाच्चेति बोध्यम्। वर्त्तमाने, तत्सामीप्ये वा लट्।

**प्रौढिरिति**। पर्याप्तिः। सामर्थ्यमित्यर्थः। सम्भावनम्—योग्यताविषयोत्कटकोटिकज्ञानम्। तदुक्तं—'क्रियासु योग्यताऽध्यवसानं सम्भावनम्। तद्विषयस्य भेदनादिक्रियाविशेषस्य कृत्यसाध्यताविरह एव प्रौढिरि'ति। **विपरिणम्यते इति**। आवर्त्त्य विपरिणम्यत इत्यर्थः। सम्भावनपदस्य प्रथमया, अलंपदस्य सप्तम्येति सम्बन्धः। तदाह—**सम्भावने-**

---

१ 'अनवक्लृप्त्यादेरपि लिङ्निमित्तत्वाऽभावात्' इति ख. ङ. पाठः। अपिः क्वचिन्न।

ऽर्थे इति । तच्चेदित्यादि च । सामर्थ्यं धात्वर्थविषयमेव । प्रत्यासत्तेः । 'इममर्थमनुष्ठातुं समर्थ' इत्येवंरूपं चेत्तत्सम्भावनमिति भावः । अत्रापि लृङ् प्राग्वत् । सिद्धाऽप्रयोगे इति । यत्र तत्प्रयोगं विनाऽपि तदर्थो गम्यत इत्यर्थः ।[1]

अपि गिरिमिति । सम्भावनस्य धात्वर्थविषयसामर्थ्यविषयता-ध्वनकोऽपिशब्दः । क्वचित्प्रकरणादिकमपि तथा[2] । अलमिति किम् ? । 'प्रायेण गमिष्यति' । 'सम्भावनस्य भविष्यद्विषयत्वात्, भविष्यद्विषय-सर्वलकाराऽपवाद' इति हरदत्तः ।

संभावयामि भुञ्जीतेति । 'भोजने भवान् शक्त' इत्युत्प्रेक्षे' इत्यर्थः । यद्भुञ्जीथा इति । पूर्वेण लिङ् ।

वा स्यादिति । 'विभाषे'ति पूर्वसूत्रादनुवर्त्तते । इष्यते इति । लिङिति वर्त्तमाने पुनर्लिङ्ग्रहणादयं विशेषो लभ्यत इति भावः । हन्तीति । हननं-हेतुः । पलायनं-हेतुमत् । 'गर्हायां लडपी'त्यतो 'भविष्यती'ति निवृत्त्या कालत्रयेऽपि प्रत्ययानां सत्त्वादत्र प्राप्तिः । 'लक्षणहेत्वोरि'ति शत्रादि तु न । 'शाच्छोरि'ति सूत्रे 'इतियोगे च सद्विधिरि'ति व्यवस्थित-विभाषासु पाठादिति बोध्यम् । लृङ् प्राग्वत् ।

'उपसंवादाऽऽशङ्कयोरपि लिङ् वक्तव्यः' । उपसंवादः—कर्त्तव्ये पण-बन्धः—'यदि मे भवानिदं कुर्यादहमपि ते इदं दद्यामि'ति । इदमेवोदा-

१ इतोऽग्रे—'अलमर्थविषये संभावने' इत्यर्थः' इति ग. पाठः ।

२ इतोऽग्रे—'अत्र 'संभावने' इति योगो विभज्यते । 'तदस्य तदस्मिन्स्या-दि'त्याकरे ध्वनितमेतत् । 'प्रासाद आसामिष्टकानां स्यात्' 'सर्पिषोऽपि स्या-दि'त्याद्युदाहरणम् । यथान्यासे त्वत्र लिङ् दुर्लभः । प्रौढेरभावात् । उत्तर-सूत्रं तु 'प्रौढौ चेदलमोऽप्रयोगे एवे'ति नियमार्थमित्याहुः' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

हरणम् । आशङ्का—उत्प्रेक्षा । अनेनैव—'प्रसाद आसामिष्टकानां स्यात्' 'सर्पिषोऽपि स्यादि'त्यादेः सिद्धिः । स्पष्टं चेदम् 'उपसंवादाशङ्कयोरि'तिसूत्रे भाष्ये । उपसंवादे अवध्यवधिमद्भाव एव प्रतीयते, न हेतुहेतुमद्भाव इति न 'हेतुहेतुमतोरि'त्यनेन सिद्धिरिति बोध्यम् ।

इच्छार्थेषु । सर्वलाऽपवादः । लङ् प्राग्वत् । **कामप्रवेदने इतीति** । कामः-इच्छा, तस्याः प्रवेदनम्=प्रकाशनम् । स्वाऽभिप्रायाऽऽविष्करणमिति यावत् । तच्च प्रयोक्तुरिति बोध्यम् ।[1] इदं च वार्त्तिकं न स्वतन्त्रं विधायकं, किन्तु सूत्रशेषभूतम् , अन्यव्यावर्त्तकमेव । अत एव व्यावर्त्त्यमेव दर्शयति—**नेह, इच्छन्निति** । अत एव भाष्येऽपि व्यावर्त्त्यस्यैवोपन्यासः । सूत्रस्य च इच्छाऽर्थघटितपदे उपपदे इत्यर्थः । नन्वेवं[2] 'कामप्रे'त्यादिसूत्रं न कार्यम् । 'अकच्चिती'त्यत्रैव[3] कार्यम् । यद्वा इष्टप्रश्नाऽर्थककच्चिद्योगे इच्छार्थोपपदाऽसम्भव एवेति, न तस्याऽप्युपयोगः । 'कच्चिज्जीवती'त्युक्ते 'जीवनं प्रष्टुरिष्टमि'ति प्रतीयते, न त्वस्येच्छाऽर्थत्वमिति चेन्न । अर्थप्रकरणादिना कामप्रवेदनाऽवगतावपि यथा स्यादित्यर्थं तदारम्भात् । इदं सूत्रं तु तेन लिङि सिद्धेऽपि लोडर्थम् । लोटा च लिङो बाधा मा भूदिति लिङप्युक्तः ।

न च 'लोट् चे'त्येवोच्यताम्, चेन लिङ् भविष्यतीति वाच्यम् । चेन[4] लिङ इव तत्सम्बद्धस्य 'विभाषे'त्यस्याऽप्यनुवृत्त्यापत्तेः । तस्याऽभावे हि[5] अस्य सूत्रस्य प्रत्यासत्त्या यत्र शब्देन कामप्रवेदनाऽवगतिस्तत्रैव प्रवृत्तिः स्यात् ( —इति सूत्राऽऽशयः[6] ) ।

---

१ इतोऽग्रे—इदं सम्भवनलिङा गतार्थम्' इति ख. ग. ङ. पाठः ।

२ 'नन्वेवम्' इत्यारभ्य 'इति सूत्राशयः' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः । मनोरमाशब्दरत्नस्थत्वात् ।

३ 'अकच्चिती'त्यपि अत्रैव कार्यम्' इति ख. ग. ङ. पाठः ।

४ 'चेन लिङ् भविष्यतीति वाच्यम् । लिङ इव तत्सम्बद्धस्य' इति ग. पाठः ।

५ हिः क. नास्ति । ६ अयं पाठः क. नास्ति ।

**लिङ् च ।** 'समानकर्त्तृकेषु तुमुन्नि'त्यतः 'समाने'त्यादि वर्त्तते । 'इच्छार्थेषु' इति सूत्रप्राप्तलिङ्लोटोर्भावे अकामप्रवेदने चरितार्थेन तुमुना परत्वाद्बाधे प्राप्ते, पुनर्लिङ् विधीयते । वाऽसरूपविधिना तु लिङ्सिद्धिर्नाऽऽपाद्या । लोटोऽप्यापत्तेः । क्तल्युट्तुमुन्खलर्थेषु तन्निषेधाच्च । परत्वविषये तदभावाच्चेति हरदत्तः । (कर्त्तृकर्मणोरपि लोड्बाधनार्थमिदमिति तत्त्वम् ) । एवं चाऽयं लिङ् भावे एव । अपवादानामुत्सर्गसमानदेशताया उचितत्वात् । तुमुन्पदमनुवर्त्त्य तुमुन्विषये लिङो विधानाच्च । एतेन 'इच्छन्करोती'त्यत्राऽयं लिङ् दुर्वार' इत्यपास्तम् । ध्वनितं चेदम् 'इच्छार्थेषु' इति सूत्रे भाष्ये ।

**विधिनिम ।** 'प्रवर्त्तना-विचार-प्रार्थनाविषयार्थवाचकाद्धातोरित्यर्थः ।

प्रैषाऽतिसर्ग । अनयोर्विध्यामन्त्रणाभ्यामभेदेऽपि, अत्र विशिष्यग्रहणं निमन्त्रणादिषु कृत्यव्यावृत्तये । 'प्राप्तकाले च कृत्याश्चे'त्युक्ते हि तेष्वपि ते स्युः । सामान्यविहितकृत्यानां प्रैषादिषु लोटा बाधा मा भूदिति कृत्यविधिः। वाऽसरूपविधिश्च स्त्र्यधिकारादूर्ध्वं क्वचिन्नेति अनेनैव ज्ञाप्यते। तेन क्तल्युडादिषु वासरूपविध्यभावः सिद्धः । **लोटोऽनुकर्षणमिति** । 'लोट् चे'ति योगविभागात् लोट एवाऽनुकर्ष इति भावः । **प्राप्तकालार्थमिति** । प्रैषाऽतिसर्गयोः पूर्वसूत्रेण सिद्धत्वादित्यर्थः ।

**लिङ् चो ।** प्राप्तकाले अप्राप्तस्य लिङो विधानाऽर्थमिदम् । अन्ययोर्विध्यादिसूत्रेण सिद्धः । चात् यथाप्राप्तं लोट्, कृत्याश्च । लिङा बाधा- मा भूदिति चकारः ।

**स्मे लोट् ।** प्रैषादयोऽनुवर्त्तन्ते । 'ऊर्ध्वमौहूर्त्तिके' इति च । तदाह— **पूर्वसूत्रेति । यजतां स्मेति ।** 'स्म'शब्दोऽधिकारसूचकः । **भवानत्राऽधिकृत** इत्यर्थः ।

१ अयं ग. पाठः क. ख. ङ. नास्ति ।

**अधीष्टे च** । लिङोऽपवादः । योगविभागसामर्थ्यात् 'ऊर्ध्वमौहूर्त्तिके' इत्यस्य निवृत्तिः ।

**लिङ्यदि** । 'कालसमयवेलासु' इति वर्त्तते । **काल इति** । यद्भवान् भुञ्जीत तस्य काल इत्यर्थः । भावे तु परत्वात्तुमुनम् अयं बाधते । सर्वलाऽपवादोऽयम्[1] ।

अर्हे । अर्हतीति 'अर्हः' । 'योग्ये कर्त्तरि गम्यमाने कृत्यादय' इत्यर्थः । कृत्यतृज्विधिः प्राग्वत् ।

शकि । भावे, कर्त्तरि वा सौत्रत्वात् क्विप् । आद्ये 'शक्तिविषयवाचकाद्धातोरि'त्यर्थः । अन्त्ये 'शक्ते कर्त्तरि' इत्यर्थः । **चात्कृत्या इति** । अस्य प्रयोजनं प्राग्वत् । सर्वलाऽपवादत्वाच्छङ्कते—**कथमिति** ।

**माशब्द इति** । 'माङि'ति तु सर्वलकारविषये अडाड्रहितलुङन्तप्रयोगाऽर्थमिति बोध्यम् ।

**धातुसम्बन्धे** । नेदम् अधिकारसूत्रमेव[2] । 'प्रत्यया' इत्यस्य वैयर्थ्याऽऽपत्तेः । 'धातुसम्बन्धे' इत्युत्तरत्राऽप्यनुवर्त्तते[3] । स्वरितत्वात्[4] । सम्बन्धस्य द्विष्ठत्वात् द्विवचनाऽन्तेन समासः ।

ननु[5] धात्वोः समानकर्त्तृत्वादिवत् अर्थद्वारकः सम्बन्धो वाच्यः ।

---

१ इतोऽग्रे—केचित्तु 'प्रैषादिष्वि'ति अत्रापि सम्बध्यते । इदं तु कालादिषु, यदि च उपपदे लोट्कृत्यबाधनाऽर्थमित्याहुः' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

२ 'एव' इति ख. ग. ङ. नास्ति ।

३ 'इति तूत्तरत्राऽनुवर्त्तते' इति ख. ग. ङ. पाठः ।

४ 'स्वरितत्वादित्याहुः' इति ख. ग. ङ. पाठः ।

५ 'तत्र धात्वोः शब्दयोः सम्बन्धोऽनुपपन्नः । स्वाऽर्थस्मारणेनोपक्षीणत्वात्तदनुपस्थितेः । 'पदार्थसंसर्गः, कारकविशिष्टा क्रिया वाक्याऽर्थ' इत्यभ्युप-

'परस्परसम्बद्धार्थकाऽनेकधातुप्रयोगे प्रत्यया' इति[1] चाऽर्थः। एवं च 'गोमानासीत्', भवितेत्याद्यसिद्धिः। न हि अत्राऽस्तिः प्रयुज्यते, येनाऽर्थद्वारकोऽपि धात्वोः सम्बन्धः स्यात्। विद्यमाने एव देवदत्ते तद्गवीनामतीताऽनागतत्वप्रतिपादनायाऽयं प्रयोगः। गोधर्मस्य सम्बन्धिन्यारोपात् 'आसीत्' 'भविते'त्यतीताऽनागतव्यपदेशः। तत्फलन्तु तन्निष्ठदरिद्रत्वप्रकाशनम्। एवंच 'भूतभविष्यत्सत्ताऽऽश्रयगवविशिष्टकर्त्तृका भूतभविष्यत्सत्ते'त्यर्थे स इष्यते[2]। तच्च एतत्सूत्रप्रवृत्तिं विना दुर्लभम्। न च 'तदस्यास्ती'त्यत्र सङ्ख्यावत् वर्त्तमानकालोऽपि अविवक्षित इति वाच्यम्। भाष्यादिविरोधाऽऽपत्तेः। 'दण्डिनमानये'त्युक्ते अतीतदण्डस्याऽपि आनयनाऽऽपत्तेश्चेति[3] चेन्न।

---

गमात्। [1]न च शब्दस्य स्वविशेषणकोपस्थितेरेव कार्यत्वात्, शब्दोऽप्युपस्थित एवेति वाच्यम्। एवमपि तस्य स्वार्थं प्रत्येव प्रकारता, न तु शब्दाऽन्तरं प्रतीति, तयोः सम्बन्धो दुरुपपादः। एवञ्च साक्षात्परस्परसम्बन्धाऽसम्भवात्, उत्तरवर्त्तित्वादेश्चाऽनियतत्वात्, धात्वोः समानकर्तृकत्वादिवत् अर्थद्वारकः सम्बन्धो वाच्यः' इति ख. ग. ङ. पाठः। क. तु नास्ति। मनोरमाशब्दरत्नस्थत्वात्।

१ 'इति वाऽर्थः स्यात्' इति ख. ग. ङ. पाठः।

२ 'इष्येत' इति ग. पाठः।

३ 'अतीतदण्डस्यापि आनयनाऽऽपत्तेश्च। तस्माद्धातुशब्देन तदर्थो लक्ष्यते। अत एव प्रत्ययग्रहणं चरितार्थम्' इति ख. ग. ङ. पाठः।

---

1 'न च सम्बन्धस्योभयनिरूप्यत्वेन घटत्वाऽवच्छिन्नशक्त्यैव घटादिवत् उपस्थितः शब्दः-अर्थबोधनतात्पर्ये तद्विशेषणतया भासते, तदभावे विशेष्यतयेत्यवश्यं वाच्यम्। यद्वा श्रोत्रगृहीतः शब्दोऽर्थस्य वाचकाऽऽकांक्षायामर्थविशेषणतयाऽन्वेति, अन्यथा विशेष्यतया। 'गवित्ययमाहे'त्यादौ च विशेष्यतया। एवञ्च शब्दोऽप्युपस्थित एवेति वाच्यम्' इति ग. पाठः।

'धातु'शब्देन तदर्थलक्षणेनाऽदोषात्। अत एव 'प्रत्यय'ग्रहणं चरितार्थम्। अन्यथा प्रत्ययाऽधिकारेण—सञ्ज्ञापरेणाऽपि प्रकृते विधेयाऽनिर्देशात्संज्ञिपरेण—सिद्धे, तद्व्यर्थम्, असंनिहितप्रत्ययानां मत्वादीनां कालाऽन्तरे विधानाऽर्थं सत् 'धातु'पदस्य लक्षणायां तात्पर्यग्राहकमिति स्पष्टं भाष्ये।

'क्रियासम्बन्धे' इत्येव तु नोक्तम्। मात्रागौरवात्। नन्वेवमपि 'धातु'ग्रहणं व्यर्थम्। 'सम्बन्धे प्रत्यया' इत्येवाऽस्तु। 'कस्य सम्बन्धे' इत्याकाङ्क्षायाम् अधिकृत'धातोरि'त्यस्यैव विभक्तिविपरिणामेनाऽन्वयः, प्रत्ययानामनुवाद्यत्वेन पञ्चम्यन्ताऽनुपयोगादिति चेन्न। 'सम्बन्धेऽर्थे प्रत्यया' इत्यर्थवारणाऽर्थं तत्सत्त्वादित्यभिप्रेत्याऽऽह—धात्वर्थानामिति। विषयबहुत्वाऽपेक्षं बहुवचनम्। एकैकविषयाऽपेक्षायां तु 'धात्वर्थयोरि'ति बोध्यम्।

ननु तत्तद्विधिभिः सिद्धाः प्रत्ययाः, तत् किमनेन?। यदि तु अप्राप्तस्थले प्रापणाऽर्थमेतदित्युच्यते, तदा उपपदोपाधिप्रकृतिप्रत्ययाऽर्थानामपि सङ्करः स्यादत आह—यत्र काले इति। 'वर्त्तमानसामीप्ये' इत्यादिभिः कालाऽन्यत्वप्रतिपादनस्यैव दर्शनेन, तत्साहचर्यात् अनेनाऽपि काल एव बाध्यते इति भावः। ननु 'वसन्ददर्श'त्यादौ भूते लडिव, 'वर्त्तमाने लिट्' इत्यपि स्यादत आह—तिङन्तेति। प्रधानाऽनुरोधेन गुणसङ्कोचो न्याय्यो, न तु विपरीतमिति भावः। इतोऽपि 'प्रथमान्तविशेष्यको बोध आख्याते' इत्यपास्तम्। उक्तव्यवस्थाऽसिद्ध्यापत्तेः।

वसन्ददर्शेति। एतेन 'अस्ति-भू-जनियोगे एवेदमि'त्यपास्तम्। सङ्कोचे मानाऽभावात्। 'धातु'ग्रहणफलस्योक्तत्वाच्च। भाष्योक्तप्रत्याख्यानरीत्या सर्वत्र प्राप्त्यनुमानाच्च। ननु 'वसन् ददर्श'त्यादयः प्रयोगा

---

१ 'भाष्योक्तप्रत्याख्यानरीत्या' इत्यारभ्य 'अतीतेति' ( १९९७ पृ० ) इत्यन्तः ख. ग. ङ. पाठः, क. कुण्डलितः। मनोरमाशब्दरत्नस्थत्वात्।

'इति व्यवहृतः'[2] 'इति व्यवहरिष्यमाणः' इत्याद्यध्याहृत्य उपपाद्याः, किं सूत्रेण ?। सूत्राऽऽरम्भेऽपि 'भाविकृत्यमासीदि'त्यादिप्रयोगाणामेवमेव उपपाद्यत्वात् । अन्यथा सूत्ररीत्या भाव्यासीच्छब्दयोः पर्यायत्वात् युगपत्प्रयोगो न स्यात् । अतो 'यदेतावत्कालं भावितया व्यवहृतं, तदासी-दि'त्येवाऽर्थ इति चेन्न । क्वचिदगत्या तथा स्वीकारेऽपि, सर्वत्रा-ऽध्याहारे मानाऽभावात् । अर्थविशेषे साधुत्वाऽर्थमावश्यकत्वाच्च । तद् ध्वनयन्वक्ष्यति-**अतीते**ति ।

**भूते लडि**ति । तस्य शताऽप्यनेनैव । 'लटः शतृ' इति सूत्रे तु 'वर्त्त-माने लडि'त्यस्यैव ग्रहणमित्युक्तम् । नन्विदं सूत्रं विहितप्रत्ययानां काला-ऽन्तरे विधायकं सत् लक्ष्यसंस्कारकं वाच्यम् । कालाऽन्तरे विधानं च लाघवात्सर्वेषामेकदैव । तत्र लट्शत्रोर्युगपद्विधानमशक्यम् । स्थान्यादेश-रूपत्वात् । नाऽपि क्रमेण । अस्य सूत्रस्य पुनर्व्यापारकल्पने मानाऽभावा-दिति चेन्न । मध्ये करणसामर्थ्येन इतः प्राक्तनानां प्रयोगे श्रूयमाणा-नामेव कालाऽन्तरे विधानमनेन बोध्यते । लकाराणां क्वाऽप्यप्रयोगेण तद्विधाने फलाऽभावाच्च । अत एवैतन्न तिङां कालाऽन्तरबोधकम् । एतेन 'पपाच भवती'त्यत्र धात्वर्थयोः साक्षात्सम्बन्धे चरितार्थमिदं प्रत्ययार्थद्वारा सम्बन्धवति 'वसन्ददर्श'त्यादौ न प्रवर्त्तते'त्यपास्तम् । एवं च तथाप्रयोगो न भवत्येव, किन्तु 'पपाच बभूवे'त्येवेति तत्त्वम् । एवञ्च भूतकाल-सम्बन्धे शत्रादीनामनेन बोधिते, अर्थापत्त्या तदर्थको लडपि कल्प्यते । एवं हि 'भावि कृत्यमासीत्' 'जनिष्यमाणः पुत्र आसीदि'ति प्रयोगाऽनुप-

---

१ 'विधानेनाऽदोषात् । अत एवैतन्न न तिङां कालाऽन्तरबोधकम्' इति ख. ग. ङ. पाठः ।

२ इतोऽग्रे—'यद्वा अपूर्वः शतैव कल्प्यते । यद्वा 'प्रत्यया' इति बहुवचनेन पुनः सूत्रव्यापाराऽऽश्रयणात् क्रमेणैव लट्शत्रोः कल्पनेति बोध्यम्' इति ग. पाठः ।

पत्तिः। यद्यत्र भावि–जनिष्यमाणशब्दयोरनेन भूते प्रत्ययस्तदा आसी-च्छब्दपर्यायतया, युगपत्प्रयोगाऽनापत्तिः। ननु 'यदियन्तं कालं भावित्वेन व्यवहृतं, तदासीदि'त्यादिक्रमेणाऽन्वया, न तु सूत्रोपयोग इति चेत्। 'ज्योतिष्टोमयाजीत्येवं व्यवहरिष्यमाणो भविते'त्यत्राऽपि बोधसम्भवात्सूत्रं व्यर्थमित्याशयेन भगवता प्रत्याख्यातं सूत्रम्। 'गोमानासीदि'त्यत्राऽपि गोमद्रूपस्याऽतीतत्वाद्भूते प्रत्ययः। तत्राऽर्थात् गवामप्यतीतत्वप्रत्ययः। अत्र पक्षे 'वसन्ददर्शे'त्यादौ दर्शनकालिकं वासस्य वर्त्तमानत्वं बुद्धिस्थीकृत्य प्रत्ययः। तत्फलं च तत्समानकालत्वस्य दर्शने प्रत्ययः। शतृस्थले क्रिययोः समानकालत्वप्रतीतेः। एवमेत्र 'ननु चोत्पततैव वचनलोपं चोदिताः स्म' इति सरूपसूत्रस्थभाष्यप्रयोगोपपत्तिरिति दिक्[1]।

क्रियासमभिहारे लोट्। 'धातुसम्बन्धे' इति वर्त्तते। 'क्रियासमभिहारे' इत्येतत्प्रकृत्यर्थविशेषणम्। तद्विशिष्टक्रियावाचकाद्धातोर्लोट्। सर्वला-ऽपवादः। वाक्यत्रयमत्र। फलितमाह–द्योत्ये इति। धातुनैव तस्योक्तत्वात् द्योत्यतैवोचितेति भावः। तत्र द्वितीयवाक्ये 'लोट' इति षष्ठ्यन्तेन यदि तिङो लक्ष्यन्ते, तदा यद्यपि पदत्वं सिध्यति, 'वा च ते'त्यादिवाक्यशेषोऽपि सङ्गच्छते, तथापि तिप्-सिप्-मिपां [2]स्थाने हिः, तस्य हेः स्थानिवत्त्वेन पित्त्वात् ङित्त्वाऽभावेन 'लुनीही'त्यादावीत्त्वं न स्यात्। 'तृण्ढी'त्यादौ इमादि स्यात्। सर्वेषां च तिङां द्वावपि हि-स्वौ पर्यायेण स्याताम्, न तु पदव्यवस्थयेति मनसि निधायाऽऽह–तस्य चेति।

नन्वेवमनयोः परस्मैपदसंज्ञायां शेषादेव कर्त्तरि स्यातामत आह–तौ चेति। 'लोटो हिस्वौ' इति वाक्ये[3] पूर्ववाक्यात् लोडित्यनुवर्त्त्य 'हिस्वौ लोटौ भवत' इत्यर्थे, अभेदस्य बाधात्तद्धर्माणावित्यर्थः। तत्र साक्षाल्लोट्-

---

१ 'प्रत्यय इति दिक्' इति ख. ङ. पाठः।

२ 'स्थाने विहितस्य हेः स्थानिवत्त्वेन' इति ख. ग. ङ. पाठः।

३ 'वाक्यम्' इति ख. ङ. पाठः।

सम्बन्धिधर्मस्य स्थानिवत्त्वेन लाभात्, सामर्थ्येन स्थानिवत्त्वलब्ध-लोड्व्यपदेशतिङ्भूतहिस्वधर्मोऽतिदेशे पर्यवसानमिति भावः ।

तिङ्संज्ञौ चेति । तेन पदत्वसिद्धिः । नन्वेवं 'वा च तध्वमोरि'तिवाक्य-शेषाऽसङ्गतिः । सामान्यविहिततिङां हिस्वाभ्यां बाधेन, तध्वमोरभावा-दित्यत आह—तध्वमोर्विषये इति । असंजातविरोधित्वन्यायेन,लक्ष्यबलाच्च[1] उपक्रमेऽन्याय्यत्वेन उपसंहारस्थे 'तध्वमोरि'त्यत्र लक्षणा, विषयसप्तमीत्वं वेति भावः । अत्र 'त'शब्दो 'ध्वं'साहचर्यान्मध्यमैकवचनमेव गृह्यते ।

हिस्वविधानेति । यदि ते अपि स्यातां, तर्हि युष्मत्सामानाधिकरण्ये, एकत्वे च सति हिस्वाभ्यां भाव्यम् । तत्र च व्यर्थस्तयोर्विधिः । सिद्धत्वात् । किन्तु क्रियासमभिहारे द्वित्वमेव विधीयेतेति भावः । एतेन 'लोट्मध्यम-पुरुषैकवचनस्य 'क्रियासमभिहारे द्वे' इति वार्त्तिकात्ते स्वञ्जे स्त एवे'ति परास्तम् । 'इमौ चाऽन्यौ हिस्वौ सर्वेषां पुरुषाणां, सर्वेषां वचनानामिष्येते' इत्युत्तरभाष्येण विरोधाच्च । तस्मात्भाष्यद्वयेनौपचारिको वार्त्तिके व्यवहार इति बोध्यम् । 'ईशिष्व ईशिष्वेत्येवाऽयमीष्टे' इत्यत्र 'ईशः से' इत्यस्य प्रवृत्तिस्तु लोड्वदतिदेशेनैवेति स्पष्टम 'ईशः से' इति सूत्रे भाष्यकैयटयोः ।

हिः कर्त्तरीत्यादि । कर्त्रादयश्च कालसङ्ख्यावत् अनुप्रयोगेणैव निर्णयाः । परस्मैपदिभ्यः कर्त्रर्थकाऽनुप्रयोगे हिरेव । भावकर्मार्थकाऽनुप्रयोगे स्वः । आत्मनेपदिभ्यस्त्रिविधाऽनुप्रयोगेऽपि स्व एव । 'कर्त्तरी'त्यादेश्च कर्त्रर्थका-द्यनुप्रयोगे इत्येवाऽर्थः । एतेन 'अनयोः कर्त्राद्यर्थकत्वे 'पुनः पुनरतिशयेन वा यानं ह्यन्तस्याऽर्थ' इति मूलविरोध' इत्यपास्तम् । तदर्थकत्वाऽनुक्तेः । अनुप्रयोगेणैव सङ्ख्याकालादिवत्तस्य लाभे सिद्धे, तत्र तयोः शक्तिकल्पने मानाऽभावाच्च ।

ननु हिस्वावेवाऽनेन विधेयौ, तयोर्लोट्त्वं च, किं लोटेति चेन्न । 'लोडादेशवदि'त्यर्थोऽनापत्तेः । मम तु यथा तदर्थलाभस्तथोक्त-मिति दिक् ।

---

१ 'लक्ष्यबलाच्चोपसंहारे एव लक्षणेति भावः' इति ग. पाठः ।

समुच्चयेऽन्य। अत्र समभिहारपदरहितं पूर्वसूत्रं सम्पूर्णमनुवर्त्तते[1]। 'समुच्चये वर्त्तमानाद्धातोरि'त्यर्थान्न कारकसमुच्चयेऽस्य प्रवृत्तिः। समुच्चये धातोर्वर्त्तित्वन्तु समुच्चीयमानक्रियावृत्तित्वेन बोध्यम्। एकसाधनविषयो हि क्रियासमुच्चयः। विकल्पस्य लोटैवाऽन्वयः, न तु हिस्वाभ्याम्, व्याख्यानात्। योग[2]विभागसामर्थ्यादेव विकल्पे सिद्धे 'अन्यतरस्यामि'ति स्पष्टाऽर्थम्। किञ्च तथा सति जघन्यहिस्वयोरेव विकल्पः स्यादिति बोध्यम्। प्रागुक्तमिति। 'लोट्[4] वा, तस्य प्रसिद्धहिस्वसदृशौ हिस्वौ, तौ च तध्वमोर्विषये वेत्यर्थः[5]।

यथाविध्यनु। यद्यपि सङ्ख्याकारककालपुरुषाणां हिस्वाऽन्तादप्रतीतेः

---

१ 'अनुवर्त्तते। क्रियापदमपि। एकदेशे स्वरितत्वप्रतिज्ञानात्। अन्यथा कारकसमुच्चयेऽप्यस्य प्रवृत्त्यापत्तिः। धातोः प्रत्ययविधानेन तस्य च क्रियावाचकत्वात् क्रियासमुच्चये एव प्रवृत्तिर्वा' इति ग. पाठः।

२ इतोऽग्रे-'आगन्तूनामन्ते' इति न्यायेन 'समुच्चयेऽन्यतरस्यां लोट्, लोटो हिस्वावि'त्यानुपूर्व्या लोट एव प्रत्यासन्नत्वात्। हिस्वविधायकस्य व्यवहितत्वात्' इति ग. पाठः।

३ 'एतेन योगविभागसामर्थ्यादेव विकल्पे सिद्धे 'अन्यतरस्यां'ग्रहणं व्यर्थमित्यपास्तम्। हिस्वयोरपि विकल्पाऽऽपत्तेश्च। तध्वमोः सम्बद्धतयाऽनुवृत्तस्याऽन्यत्राऽन्वयाऽयोगाच्चेत्याहुः' इति ग. पाठः। 'योगविभागे सामर्थ्यादेव' इति तु क. पाठः।

४ 'लोट्। (तौ च ?) तस्य प्रसिद्धहिस्वसदृशौ हिस्वौ वा। (तौ च) तध्वमोर्विषये वेत्यर्थः' इति क. पाठः।

५ इतोऽग्रे-'चरमवाक्याऽर्थमात्रसम्बन्धे 'अन्यतरस्याम्'ग्रहणस्य वैयर्थ्यापत्तिः। किञ्च चरमवाक्ये पूर्ववाक्यविहितहिस्वयोर्ग्रहणेन, हिस्वविधायके च तत्पूर्ववाक्यविहितलोटो ग्रहणेनाऽर्थाऽधिकाराऽनुरोधाद्विशिष्टस्यैवाऽत्राऽनुवृत्तिः, व्याख्यानाच्चेति बोध्यम्' इति ग. पाठः।

तदभिव्यक्तिक्षमस्य न्यायतो, धातुसम्बन्धाऽधिकाराच्चाऽनुप्रयोगो लभ्यते, तथापि 'यथाविध्येवे'ति नियमाऽर्थं वचनम् ।'पूर्वस्मिन्नेवे'ति नियमस्तु न । अन्यत्र तस्याऽप्राप्त्या नियमवैयर्थ्याऽऽपत्तेः । तेन 'याहि याहीति यातीत्येव प्रयोगो, न तु 'गच्छति','करोती'ति वा । एवं च 'पूर्वस्मिन्नि'ति स्पष्टाऽर्थमेव । समुच्चये विशेषस्य वक्ष्यमाणत्वात् । न च पूर्वविषये[1] व्यवहितविपरीतप्रयोगवारणाऽर्थं तत् । भाष्येऽस्य प्रत्याख्यानेन व्यवहितादिप्रयोगस्येष्टत्वात् । अत एव 'लुनीहि लुनीहीत्येवाऽयं लुनाती'ति द्वित्वप्रकरणस्थभाष्यप्रयोगे व्यवहिताऽनुप्रयोगप्रयोगः सङ्गच्छते ।

नन्वेतत्प्रत्याख्यानं प्रौढिवादः । 'समुच्चये एव सामान्यवचनस्ये'ति-नियमेन एतद्विषये सामान्यवचनधातोरनुप्रयोगवारणेऽपि,स्वपर्यायविशेष-वाचकाऽनुप्रयोगवारणाऽर्थमस्याऽऽवश्यकत्वादिति चेन्न । 'एकस्या आकृते-रि'तिन्यायेन[2] पर्यायाद्यनुप्रयोगवारणात् । न च समुच्चयविषये पूर्वोक्त-न्यायेन विशेषवाचकतद्धातुद्वयाऽनुप्रयोगवारणायाऽस्य चारितार्थ्येन, त्वदुक्तनियमाऽनापत्तिः । सर्वविशेषाऽनुगतैकसामान्यवाचकाऽनुप्रयोगे सामान्यस्य संनिहितविशेषे पर्यवसानात्सर्वेषां कालाद्यभिव्यक्तौ सिद्धायां, विशेषवाचकनानाधातुप्रयोगे गौरवेण[3], तन्न्यायबाधात् । नचैवं तरु-द्रुमादीनामेव व्यवहारः स्यात्, न वनस्पत्यादीनामिति वाच्यम् । पर्यायेषु लाघवगौरवाऽनादरात् । इह तु अपर्यायत्वं स्पष्टमेवेति भाष्याऽऽशयः[4] ।

---

१ 'पूर्वविषये' इति ख. ग. ङ. नास्ति ।

२ 'न्यायेन अन्याऽर्थकाऽनुप्रयोगवारणवत्पर्यायाणामप्यनुप्रयोगवारणात् । उपस्थितत्वेन लोट्प्रकृतिधातोरेवाऽनुप्रयोगाच्च । अत एव न सामान्य-वाचकस्य । 'समुच्चये एव सामान्यवचनस्ये'ति नियमाच्च' इति ग. पाठः ।

३ 'गौरवात् । न चैवम्' इति ख. ग. ङ. पाठः ।

४ इतोऽग्रे 'एकस्या आकृतेरि'ति न्यायस्याऽनित्यत्वज्ञापनायेदं सूत्रमि'त्यन्ये' इति ग. पाठः ।

**समुच्चये सा**। सामान्यवचनत्वं च समुच्चिताऽर्थबोधकधात्वपेक्षयैव, उपस्थितत्वात्। तत्त्वञ्च-अनुप्रविष्टसमुच्चितधात्वर्थकाऽर्थवाचकत्वम्। अस्ति च 'अभ्यवहरती'त्यस्य प्रविष्टखादनपानादिकगलादधःकरण-रूपाऽर्थबोधकत्वम्। तेनोभयाऽर्थगतसङ्ख्यापुरुषकालाद्यभिव्यक्तिः।

**द्वे वाच्ये इति**। इदं च 'क्रियासमभिहारे' इति सूत्रविहितलोडन्त-विषयमेव। अत एव 'क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे भवत' इति वचनमत्र प्रकरणे पठितम्। तस्यैव च क्रियासमभिहारे लोट्ज्ञापकत्व-मुपन्यस्तमित्यादि निरूपितं द्विरुक्तप्रक्रियायाम्। **लवनादीति**। आदिना मोषणहरणे। **अस्वास्थ्यक्रियेति**। 'अस्वास्थ्यमि'ति प्रथमान्तं व्यापार-विशेषणमित्यर्थः। 'इत्थम्'शब्दः पूर्वोक्तक्रियाविशेषाणां सामान्यभूत-'चक्रे' इत्यर्थेऽभेदान्वयतात्पर्यग्राहक इत्याशयः। **पुनः पुनरिति**। 'लोडन्त-वाच्य'[2] इति हि तेषां व्याख्यानम्। **अननुवृत्तेरिति**। स्वरितत्वकल्पने मानाऽभावात्, भाष्यादावनुवृत्त्यप्रदर्शनाच्च, समुच्चयपदं दृष्ट्वा चकारा-ऽभावेन तन्निवृत्तेरुचितत्वाच्चेति भावः।

ननु तदननुवृत्तावपि[3] उभयविवक्षायां परत्वात् 'समुच्चये' इति सूत्रेण लोट्यपि, 'गां दोग्धी'त्यादौ परत्वात्कर्मविभक्ताववधित्वस्याऽपि भानवत्, तद्बोधो भविष्यत्येवेति चेन्न। अन्तरङ्गत्वात् 'क्रियासमभिहारे' इत्यस्यैव प्रवृत्त्यापत्तेः। समुच्चयस्याऽनेकक्रियाविषयत्वेन, समभिहारस्य

---

१ इतोऽग्रे—'अत्र सामान्यवचनं धात्वन्तरमेवेति न नियमः। 'छन्दोऽधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्वेत्येवाऽयमधीते' इत्यादावेकस्यैव दर्शना-दित्याहुः' इति ग. पाठः।

२ 'लोट्वाच्या' इति ख. ग. ङ. पाठः।

३ 'तदनुवृत्तावपि' इति ख. ग. पाठः।

एकक्रियाविषयत्वेन ततोऽन्तरङ्गत्वात् । न चेष्टाऽऽपत्तिः । तत्राऽऽह—लोडन्तद्वित्वापत्तेश्चेति[1] । 'क्रियासमभिहारे द्वे' इत्यनेनेति भावः ।

अन्ये तु 'अवस्कन्दे'त्यादिपदोपस्थापिताऽवस्कन्दनादीनाम् 'इत्थम्'पदेन आकाङ्क्षाम् उत्थाप्य 'अस्वास्थ्य'पदेनाऽभेदाऽन्वये जाते, तस्य 'चक्रे' इत्यनेन कर्मतयाऽन्वयः । एवञ्च थमो नाऽसङ्गतिः, 'इत्थमि'त्यस्याऽस्थानस्थत्वं च न । तत्र प्रकरणात् 'बली'पदेन रावणस्यैवोपादानात् कर्त्रर्थकत्वाऽवगतिः । अन्यविभक्त्यन्तकर्त्रध्याहाराऽपेक्षया उपात्ताऽन्वयस्यैवौचित्यात् । तस्याऽतीतताया लोकप्रसिद्धत्वात्तत्कर्तृकक्रियाणाम् अतीतत्वरूपोऽनद्यतनपरोक्षभूतकालोऽप्यवगतः । 'बली'त्यस्यैव कर्तृत्वात्पुरुषोऽप्यवगत इति, अनुप्रयोगस्य नाऽत्राऽपेक्षा ।

किञ्च क्रियामात्रप्रतिपादने तात्पर्यात्, तदनुपयोग एव । पौनःपुन्यमपि—'अहर्दिवमि'ति समभिव्याहारात्, रावणस्य तथाकर्मशालित्वेन प्रसिद्धत्वाच्च, व्यञ्जनयैव बुध्यते इति ।

अत एव 'तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति, जायस्व, म्रियस्वेत्येतत्तृतीयं स्थानमि'ति श्रुतौ अनुप्रयोगाऽभावेऽपि समुच्चये लोट् भवति । अत एवाऽनुप्रयोगविधायकं द्वयमपि भाष्ये प्रत्याख्यातम् । श्रुतौ पौनःपुन्यमसकृत्पदगम्यम् । क्रियामात्रस्य विवक्षणेन सङ्ख्याकालाद्यभिव्यक्तेरनुपयोगेनाऽनुप्रयोगाऽभावः । एतच्छ्रुतिसमानाऽर्थके 'आ च सत्यलोकादा चाऽवीचेर्जायस्व म्रियस्वेति विपरिवर्त्तमानमात्मानं, जीवलोकं चाऽऽलोक्याऽस्मिन् संसारेऽनित्याऽशुचिदुःखात्मकं प्रसङ्ख्यानमुपावर्त्तते' इति वाचस्पतिप्रयोगेऽप्येवमेव बोध्यम् ।

'आ चाऽवीचेरा च सत्यलोकादि'ति, 'विपरिवर्त्तमानमि'ति ( च ) 'च'पदसमभिव्याहारेण पौनःपुन्याऽवगतिः ।

---

१ 'लोडन्तस्य द्वित्वापत्तेश्च' इति तु मुद्रितकौमुदीपाठः ।

यत्तु कल्पतरुणा—'क्रियासमभिहारे' इति सूत्रेण पौनःपुन्ये लोडि'त्युक्तम्। तच्चिन्त्यम्। द्वित्वाऽऽपत्तेः।

यदि तु 'पुरीमवस्कन्दे'त्यत्र अवश्यमनुप्रयोगोऽपेक्षित इति दुराग्रहस्तदा 'चक्रे' इत्यस्य तन्त्रेणोभयाऽन्वयोऽस्त्विति वदन्ति।

**भ्रम एवेति**। पुरुषांऽशे, वचनांऽशे चेति भाव इति सकलेष्टसिद्धिः।

इति लकारार्थप्रक्रिया ॥

इति श्रीशिवभट्टसुत-सतीगर्भज-नागोजी-
भट्टकृते शब्देन्दुशेखरे
तिङन्तं समाप्तम् ॥
शुभमस्तु ॥



॥ श्रीः ॥

# बृहच्छब्देन्दुशेखरः ।

## अथ कृदन्ते कृत्यप्रक्रिया ।

**धातोरिति** । सोपसर्गाणामङ्गत्वव्यावृत्तये इदम् । ननु शबादीनां सार्वधातुकत्वादिसिद्ध्यर्थं 'धातोरेकाच' इत्यतो 'धातोरि'त्यनुवृत्तेरिदं व्यर्थम् । न च 'लूभ्यामि'त्यादौ इडादिव्यावृत्तये आर्द्धधातुकसंज्ञायाम् आश्रितशब्दव्यापाराय द्वितीयं 'धातोरि'त्यावश्यकम् । 'शमि धातोरि'ति-सूत्रात् स्वरितत्वप्रतिज्ञाबलेन तदनुवृत्तिसिद्धेः । एतेन 'निर्दिष्टपरिभाषा-बाधेन धातोर्विहितस्य लस्य आदेशाऽर्थमि'ति परास्तम् । व्याख्यानत एव तल्लाभसम्भवाच्च । न च कृदुपपदसंज्ञयोर्वाऽसरूपविधेश्च पूर्वत्र अप्रवृत्तये तत्र 'अस्मिन्धात्वधिकारे' इत्यर्थलाभाऽर्थं तदिति वाच्यम् । तेषामधिकारत्वेनाऽदोषादिति चेत् । सत्यम् । स्पष्टप्रतिपत्त्यर्थमेतत् ।

**आ तृतीयेति** । स्यादिव्यवधाने आदेशप्रवृत्तिस्तु 'धातोर्विहितलस्य आदेश' इत्यर्थादक्षता । 'लुनाती'त्यादौ लादेशव्यावृत्तये लाधिकारम् अभिव्याप्य धात्वधिकारस्याऽऽवश्यकत्वादिति भावः ।[1]

**तत्रोपपदम्** । **कृदतिङ्** । व्याख्याते ।

**वाऽसरू** । 'असरूपः' इति च्छेदः । तत्र असरूपत्वं किमपेक्षयेत्या-काङ्क्षायां यस्य स्वविषये सर्वत्र[2] प्रवृत्तिस्तदपेक्षया, उपस्थितत्वात् । स च उत्सर्ग एव, नाऽपवादः । उत्सर्गविषये सर्वत्रोऽपवादाऽप्रवृत्तेः[3] । तदुक्तं

---

१ 'तस्याऽऽवश्यकत्वात्' इति ख. ग. ङ. पाठः ।

२ 'सर्वत्र' इति ख. ग. ङ. नास्ति ।

३ इतोऽग्रे 'उत्सर्गकाले तदनुपस्थितेश्च' इति पाठान्तरमि'ति ङ. टिप्पणी ।

भाष्ये—'साऽपेक्षोऽयं निर्देशः क्रियते 'वाऽसरूप' इति। न चोत्सर्गवेलायां किञ्चिदपेक्ष्यमस्ति। अपवादवेलायां पुनरुत्सर्गोऽपेक्ष्यते' इति। '**किञ्चिदपेक्ष्यमि**'त्यस्य स्वविषये सर्वत्र प्राप्तियोग्यमित्यर्थः। किञ्चाऽपवादाऽपेक्षया असरूपत्वे उत्सर्गस्य विकल्पो बोधनीयः। एवं चाऽपवादेन उत्सर्गस्य बाधात्स विधेयो, विकल्पश्चेति गौरवम्। अत एव विप्रतिषेधविषये नाऽस्य प्रवृत्तिः। सावकाशयोस्तदङ्गीकारेण, विषयमात्रे प्राप्त्यभावात्[1]। तदाह—**असरूपोऽपवाद** इति।

यद्यप्यस्याऽधिकारत्वे तत्तत्सूत्रे उपस्थितौ 'असरूपोऽपवादो वा भवती'ति वाच्योऽर्थः। तत्र प्रत्यासत्त्या यदपेक्षया असरूपता, तदपेक्षयैव पाक्षिकता। एतेन 'अपवादेन उत्सर्गस्य निवर्त्तितत्वात्पुनरपवादविकल्पे, केवलप्रकृतेरेव प्रयोगः स्यादि'त्यपास्तम्। यत्रोत्सर्गाऽपवादौ विभाषा, तत्राऽपवादेन मुक्ते उत्सर्गाऽप्रवृत्तावपि, अन्यत्राऽपवादाऽभावे तत्प्रवृत्तौ क्षत्यभावाच्च। न चाऽत्र तथा। अत एव 'विभाषा कृवृषोरि'तिक्यबभावे 'कार्यमि'ति ण्यत् भवत्येव[2]। अत एव च 'आतोऽनुपसर्गे' इति कस्य विषये न अण्। अन्यथा 'क'विधौ 'वे'त्यस्योपस्थितौ, तदभावे ण्वुलादिवत्, अणपि स्यात्। तथाऽपि स्वरितत्वाऽकल्पनलाघवाऽनुरोधेन परिभाषात्वं[3] मूले स्वीकृतम्। परिभाषात्वे 'असरूप' इति लिङ्गम्। 'यत्राऽसरूपाऽपवादप्रत्ययविधानं तत्र 'वे'त्युपतिष्ठते' इत्यर्थः।

---

१ इतोऽग्रे—'किञ्च व्यक्तिपक्षे 'विप्रतिषेधे परमि'ति नियमाऽर्थम्। तत्रैतत्प्रवृत्तौ विरोधः स्पष्ट एव' इति ग. पाठः।

२ इतोऽग्रे—'न केवला प्रकृति'रिति निषेधाच्च' इति ग. पाठः।

३ परिभाषेति। 'प्रतिप्रसवविधौ दोषः स्यादतस्तत्' इति ङ. पुस्तके टिप्पणी।

४ 'वेतीति। 'अत्राऽपि विकल्पः प्रत्यासत्त्या सरूपोत्सर्गाऽपेक्षयैव' इति ङ. पुस्तके टिप्पणी।

५ इतोऽग्रे—'एवञ्च बाधकत्वविकल्पः फलित इत्याशयेनाऽऽह—बाधको वा स्यादिति' इति ख. ग. ङ. पाठः।

**बाधको वा स्यादिति**। 'बाधकोऽपवादो वा स्यादि'त्यन्वयः। बाधकत्वविकल्पे हि पक्षे उभयोः शप्निपोरिव समावेशः स्यादिति बोध्यम्।

'स्त्रियामि'त्यस्य स्वरितत्वादाह—**स्त्र्यधिकारोक्तं विनेति**। 'तदुक्तम् अपवादं विने'त्यर्थः। अन्यथा 'स्त्रीप्रत्ययेषु ने'त्यर्थे 'व्यावक्रोशी' 'व्यावक्रुष्टिरि'ति न सिद्ध्यति। स्वरितत्वे तु न दोषः। 'कर्मव्यतिहारे णच् स्त्रियामि'त्यस्य तदधिकारोक्तत्वाऽभावात्। अस्य विधेरपवादे एव प्रवृत्तेर्निषेधस्याऽपि तत्रैव प्रवृत्तिरिति बोध्यम्।

असारूप्यं च औपदेशिकमेव। 'वाऽसरूप' इत्यनेन एकवाक्यताऽऽपन्नवाक्यस्य लक्ष्यसंस्कारकत्वेन, तस्यामवस्थायां परिनिष्ठितरूपस्य अनुपस्थित्या औपदेशिकग्रहणस्यैवौचित्यात्। अतः क्विबादिषु न दोषः। औपदेशिकग्रहणादेव च 'श्वः पक्ते'त्यादौ न लडिति भाष्ये स्पष्टम्।

तदपि[1] 'ददातिदधात्योर्विभाषे'ति'ण'बाधक'श'स्य विकल्पनात्[2] अनुबन्धभिन्नकृतमेवेति, काऽणोर्न दोषः[3]। 'अनुबन्धा अनेकान्ता' इत्यनेन तु नेदं सिद्ध्यति। तद्बीजं हि अन्तरङ्गत्वात् इत्संज्ञालोपौ। न च प्रकृते तथा। ककारशकारयोर्वाक्याऽर्थबोधोत्तरं प्रत्ययत्वज्ञाने एव तत्प्रवृत्तेः।

किञ्च सर्वत्रोपदेशोत्तरकालमेव इत्संज्ञाप्रवृत्त्या, उपदेशे तत्सन्निधानकृतम् असारूप्यमस्त्येव। सर्वथा अनवयवत्वे तु प्रत्ययाऽऽद्यवयवत्वाऽभावादित्संज्ञैव दुर्लभा। तत्राऽऽदिशब्दः समीपमात्रवाचीति न युक्तम्। चुञ्चुप्चणपोर्यादित्वेऽपीत्त्वाऽऽपत्तेः। सामीप्याऽनपायादिति दिक्।

ण्वुलः[4] **प्रागिति**। अत एव ण्वुल्तृचोस्तव्यादिषु पाठो नाऽकारि।

---

१ 'तदपि असरूपग्रहणसामर्थ्यात् 'ददातिदधात्योर्विभाषेति' इति ख. ग. ङ. पाठः।

२ 'विकल्पनाच्च' इति ग. पाठः।

३ 'दोष इति दिक्। ण्वुलः प्रागिति' इति ग. पाठः।

४ 'ण्वुलः प्रागिति' इत्यारभ्य 'स्पष्टं भाष्ये' (२००८ पृ०) इत्यन्तः ख. ग. ङ. पाठः, क. कुण्डलितः। मनोरमास्थत्वात्।

अत एव 'अर्हे कृत्ये'ति सूत्रे 'तृज्'ग्रहणं चरितार्थमिति स्पष्टं भाष्ये ।

तयोरेव । 'तयोरि'त्यनेन 'लः कर्मणी'ति सूत्रश्रुते भावकर्मणी परामृश्येते । तत्र भावस्याऽसत्त्वभूतस्यैव निर्देशेन, अत्राऽपि तथाभूतस्यैव परामर्शात्, भावे एकवचनमेव । 'सत्त्वप्रधानानि नामानी'त्युक्तेः, 'कृदभिहितो भावो द्रव्यवदि'ति भाष्याच्च, नपुंकत्वस्य लिङ्गसर्वनामत्वाच्च क्लीबत्वमेव बोध्यम्[1] । एतेन 'लः कर्मणि चे'त्यनन्तरं 'कृत्यक्तखलर्थाः' इति न्यासे 'लः'पद'च'पदाऽघटितपूर्वसूत्राऽनुवृत्त्या च सिद्धे, 'तयोरि'ति व्यर्थमि'त्यपास्तम् । 'तयोरि'त्यनेन ईषद्वैलक्षण्यस्याऽपि बोधनात् । घञादिवाच्यभावस्तु 'स्त्रियां' 'नपुंसके' इति विशेषणात् त्रिलिङ्गः, सर्वसङ्ख्यश्चेत्यादि वक्ष्यते ।

अत्र 'क्त'ग्रहणेन नपुंसके भावे क्तोऽपि गृह्यते इति 'णेरध्ययने' इत्यत्र भाष्यकैयटयोः[2] स्पष्टम् । 'एव'कारस्तु न कर्त्तव्यावृत्तये । निर्दिष्टाऽर्थत्वेन 'कर्त्तरि कृदि'त्यस्याऽप्राप्तेः । चाऽनुकृष्टत्वात् अननुवृत्तेश्च । किन्तु 'ययोर्भावकर्मणोर्ले उक्तस्तयोरेवे'त्यर्थः । तेन 'अकर्मकेभ्य एव भावे, सकर्मकेभ्य एव कर्मणी'ति सिद्धमिति हरदत्तः । अस्याऽर्थस्य 'भावे, चाऽकर्मकेभ्य' इत्यनुवृत्त्या साधने तु एवकारः स्पष्टाऽर्थः । स्पष्टं चेदं 'कर्त्तरि कृदि'त्यत्र भाष्ये[3] ।

स्वरार्थाविति । 'तित्स्वरितम्' 'उपोत्तमं रिती'ति स्वराऽर्थावित्यर्थः ।

वसेस्तव्यत् । भाष्ये तु 'वास्तुनि भव' इत्यर्थे दिगादित्वात् यदिति सिद्धिमाश्रित्य, प्रत्याख्यातमेतत् । यद्यप्यत्र पक्षे 'प्रवास्तव्य'[4] इत्यादौ

---

१ 'क्लीबत्वं बोध्यम्' इति ख. ग. ङ पाठः ।

२ 'भाष्ये, कैयटे च' इति ख. ङ. पाठः ।

३ इतोऽग्रे 'पूर्वविप्रतिषेधेन वार्त्तिकमतेऽपि अन्तोदात्तत्वमेवेष्यत इत्यन्ये' इति ग. पाठः ।

४ 'अत्र वास्तव्य'इत्यादौ' इति ख. ग. ङ पाठः । 'अत्र प्रवास्तव्य' इति क. पाठः ।

'सुप्सुपे'ति समासे, कृदुत्तरपदप्रकृतिस्वरेण स्वरिताऽन्तत्वं न प्राप्नोति, वार्त्तिकरीत्या तु प्राप्नोति, तथापि स्वरे विशेषाऽनादरेण तथोक्तमित्याहुः। 'तादृशप्रयोगस्याऽनभिधानमेवे'त्यपरे। केलिमर इति। 'कृत्या' इति बहुवचनेनेदं सूच्यते। रेफः स्वराऽर्थः। ककारो गुणनिषेधाद्यर्थः।[1] तद्भाष्येति। तत्र 'भिदेलिमा'इत्यस्य 'भेत्तव्या'इति विवरणादिति भावः।

कृत्यचः। 'उपसर्गादि'ति वर्त्तते। 'रषाभ्यामि'ति च। तात्स्थ्यात् ताच्छब्द्यमित्याह—उपसर्गस्थादिति। 'कृती'ति-विद्यत्यध्याहारेण नस्य विशेषणम्। तदाह—कृत्स्थस्येति। अत्र च व्याख्यानमेव शरणम्।

अचः परत्वाऽभावादिति। इकारस्य नकारेण व्यवधानादिति भावः।[2] ('नकारेण[3] व्यवधानाच्चे'ति पाठे चो हेतौ बोध्यः)। 'अजपि कृत्स्थ एवे'ति तु न शक्यं वक्तुम्। 'प्रहीण' इत्यस्याऽसिद्ध्यापत्तेः।

यकेति। 'अट्कु'इत्यनेन 'रषाभ्यामि'त्यंशे प्राप्तनिर्दिष्टपरिभाषाया 'येन नाप्राप्ति'न्यायेन बाधेऽपि, 'ण्यन्तात्परस्ये'त्यंशे प्राप्ततत्परिभाषाबाधे मानाऽभाव इति भावः। भाष्ये 'ण्यन्तात्परो यः कृदि'त्यंशेऽपि 'अड्व्यवाये' इत्यस्य सम्बन्धमाश्रित्य[4] यका व्यवधाने समाहितम्।

हलश्चेजु। कृदाक्षिप्तधातोरिमे विशेषणे। तत्र इजुपधस्य हलन्तत्वाऽव्यभिचारात् 'हल' इति तदादिलक्षकमित्याह—हलादेरिति। अचः किम्?। प्रस्विन्नः।

इजादेः। हलादेरित्यर्थकं 'हल'इत्यनुवृत्तमपि इह सामर्थ्यात् हलन्तपरम्। इजादेर्हलादित्वाऽसम्भवात्। विहितविशेषणं च, नियमाऽर्थत्वसम्पत्तये। अन्यथा णिलोपे हलन्तात्परत्वेन, प्रत्ययलक्षणप्राप्त'णेर्विभाषे'

---

१ 'गुणनिषेधाऽर्थः, मृज्विषयेऽचि क्ङितीति पाक्षिकवृद्ध्यभावाय च, धातुविशेषे सम्प्रसारणाऽर्थश्च' इति ग. पाठः। 'गुणनिषेधाय'इति तु ख. पाठः।

२ 'नन्विकाररूपाऽचः परत्वमस्तीत्यत आह—नकारेति' इति ग. पाठः।

३ अयं पाठः क. नास्ति।

४ 'सम्बन्धमाश्रित्याऽपि' इति ख. ङ. पाठः।

तिबाधित्वा, नित्यत्वाऽर्थो विधिरेव स्यात्। गुरुभूतक्लेशसाध्यनियमाऽर्थत्वे च लक्ष्याऽनुसारि भाष्यमेव मानम्।

**अनुस्वारेति**। अतः 'प्रेन्वनमि'त्यादौ नेदं विध्यर्थमिति भावः। अनुस्वारश्च सर्वोऽपि गृह्यते, व्याख्यानात्। तदाह—**प्रोम्भणमिति**।

**वा निंस**। 'कृती'त्यनुवृत्तं 'निन्दामि'ति षष्ठीनिर्देशसामर्थ्यात् णत्वनिमित्तमिति बोध्यम्। ण्यन्तस्य प्रकृत्यन्तरत्वादप्राप्तेराह—**ण्यन्तभादीनामिति**। 'प्रभायमानमि'त्यादौ[1] णत्वनिषेधाय 'भादीनामि'ति विहितविशेषणम्। एवं च ण्यन्तेऽप्राप्तिरिति भावः। 'हेरचङी'ति ज्ञापकं तु कुत्वमात्रविषयमित्युक्तम्। **णत्वप्रेति**। अत्र च 'णत्वं-पर्याख्यानमि'तिख्यादेशसूत्रस्थं भाष्यं मानम्।

**कृत्यल्युटो**। बहुलग्रहणादन्येऽपि कृतोऽन्यत्र भवन्ति। तेन 'पादाभ्यां ह्रियते पादहारक' इत्यादि सिद्धम्। अत एव भगवता भाष्यकारेण कृत्यग्रहणं प्रत्याख्याय 'कृतो बहुलमि'त्येवाऽपाठि। 'अमनुष्यकर्तृके चे'ति सूत्रे भाष्येऽपि स्फुटमेतत्।

**शक्यमकर्तुमिति**। तव[2] ऋवर्णान्तादिव, मम हलन्तात् ण्यता बाधादिति भावः। न च अज्ग्रहणे कृते 'दित्स्यमि'त्यादौ सन्निपातपरिभाषया अतो लोपो न स्यात्। अत[3] एव 'ऋ'शब्दम् 'आसुयुवपी'त्यत्र पठित्वा 'ण्यदि'ति सूत्रं विधाय, लघुभूताऽज्ग्रहणेन हल्ग्रहणवैयर्थ्याऽऽपादनमेव[4] न कृतमिति वाच्यम्। ईदृशे विषये तस्या अनित्यत्वात्। अत एव 'दाक्षिरि'त्यादौ अतो लोपः। तथा न्यासस्तु साहचर्येण 'ऋ'धातोर्ग्रहणाऽऽपत्त्या न कृतः। नन्वेवम् 'अजन्तभूतपूर्वादपि

१ भावे, कर्मणि वा लटि यकि रूपमिदम्। 'प्रभापनीयम्' इति क. पाठः।

२ 'तेन ऋवर्णान्तादिव' इति ख. ङ. पाठः।

३ 'एतेन' इति ग. पाठः।

४ 'वैयर्थ्याऽऽपादनमपास्तम्' इति ख. ग. ङ. पाठः।

यथा स्यात्—'दित्स्यम्' । आर्द्धधातुके विवक्षिते अकारलोपे, यति, 'यतोऽनाव' इत्याद्युदात्तत्वम् । 'अव्यवहितपरभूताऽऽर्द्धधातुके विवक्षिते' इत्यर्थात्परनिमित्तत्वस्य सत्त्वेन 'गणयती'त्यादौ स्थानिवत्त्वेन वृद्ध्यभावः सूपपाद इति चेत् । भाष्ये स्पष्टं तथोक्त्या इष्टाऽऽपत्तेः । 'परसप्तमी'त्यभिप्रायेण तु मूलम् । अज्ग्रहणमेव तेषां विषयसप्तमीत्वे, तत्त्वेऽपि च परनिमित्तत्वे ज्ञापकमिति भाष्याऽऽशयः ।

न च[2] दरिद्रातेरातो लोपे 'दरिद्र्य' इत्यत्र य[3]दर्थं तदावश्यकम् । यदन्तस्य द्व्यच्कत्वाऽभावेन अत्र 'यतोऽनाव' इत्यस्याऽप्रवृत्त्या, य[4]त्-ण्यतोर्विशेषाऽभावादि'ति नव्याः ।

ईद्यति । 'आतो लोप' इत्यत 'आत' इति वर्त्तते । शसिर्निरनुस्वारः । साऽनुस्वारपाठे 'ईडवन्दवृशंसदुहां ण्यत' इति सूत्रविरोधः ।

स्वराऽर्थ इति । 'यतोऽनाव' इत्याद्युदात्ताऽर्थ इत्य[5]र्थः ।

---

१ 'यतोऽनाव' इत्याद्युदात्तत्वमि'ति भाष्यं विरुध्येतेति चेन्न । अङ्गत्वस्य विधानप्रतिबद्धतयाऽङ्गाधिकारे विवक्षितसप्तम्या वक्तुमयुक्तत्वेन, 'ण्यल्लोपावियङ्यणि'त्यादिपूर्वविप्रतिषेधवार्त्तिकभाष्यविरोधेन चाऽल्लोपे विषयसप्तम्यभावेनाऽस्य भाष्यस्य प्रौढिवादपरत्वात् । किञ्च 'तव्यत्तव्यानीयर्यत' इति न्यासः कार्यः । तत्राऽल्पाऽच्तरत्वेन यतः पूर्वनिपाते कर्त्तव्ये, परनिपातकरणेन क्वचित्परविषयेऽपि प्रवृत्तिः । तेन क्वचित् ण्यद्विषयेऽपि यत्सिद्धौ, योगविभागः, अज्ग्रहणं च व्यर्थमिति मूलाऽऽशयः । एतेन दरिद्रातेरातो लोपे' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

२ 'एतेन दरिद्रातेरातो लोपे दरिद्र्य' इति ख. ग. ङ. पाठः ।

३ 'यदर्थं तदावश्यकमित्याद्यपास्तम् । यदन्तस्य' इति ख. ग. ङ. पाठ ।

४ 'यत्-ण्यतोर्विशेषाऽभावाच्च' इति ख. ग. ङ. पाठः ।

५ इतोऽग्रे—'अनुबन्धानामनेकान्तत्वादिति भावः । अत एव 'ददातिदधात्योरि'ति सूत्रे विभाषाग्रहणं चरितार्थम् । अत एव प्रयोगसमवायिषु

**हनो वा** । अत्र यद्वक्तव्यं तत् 'दण्डादिभ्य' इति सूत्रे तद्धिते उक्तम् ।

**पोर(दुप)** । तपरकरणात् 'आप्यमि'त्यत्र न ।

**नानुबन्धेति** । उक्तबीजमेतत् ।

**आङो यि** । 'इदित' इत्यतो 'नुमि'ति, 'लभेश्चे'त्यतो 'लभेरि'ति च वर्त्तते । **विवक्षिते इति** । एतच्चाऽत्रैव भाष्ये स्पष्टम् ।

**ण्यदेवेति** । एवं च कृदुत्तरपदप्रकृतिस्वरेण तित्स्वर एवाऽवतिष्ठते इति भावः । यति तु 'यतोऽनाव' इत्याद्युदात्तः स्यात् ।

**उपात्प्र** । 'प्रशंसायां गम्यमानायामि'त्यर्थः । धात्वर्थस्तु प्राप्तिरेव । तेन यस्य, यस्माद्वा प्राप्तिः प्रशंसाहेतुस्तदिहोदाहरणम्, विपरीतं तु प्रत्युदाहरणम् । अत्राऽपि 'यादौ विवक्षिते' इत्येव । तेन ण्यति अन्तस्वरितत्वसिद्धिरिति बोध्यम् ।

**गदमद** । प्रत्यासत्त्या 'गदादिसम्बन्ध्युपसर्गाऽभावे सती'त्यर्थः । अव्ययीभावोऽयम् । व्यत्ययेन पञ्चम्यर्थे सप्तमी वा । 'एभ्योऽनुपसर्गेभ्यो यदि'त्यर्थः । तेन 'निगाद्यमि'त्यत्र न । 'गद्यमि'त्यत्र च भवति ।

**नियमार्थमिति** । 'पोरदुपधादि'त्येव सिद्धेरिति भावः । **नियमे साधुरिति वेति** । 'तत्र साधुरि'ति प्राग्घितीयो यत् । 'त्वये'ति तृतीया तु कर्त्तुरेव करणत्वविवक्षया बोध्या[1] । 'भाष्यप्रयोगात् निपूर्वात् कृद्यदि'ति पक्षे 'कृत्यानां कर्त्तरि वे'त्यत्र विभक्तेन 'कर्त्तरि वे'त्यनेन अनुभयप्राप्तिविषयेण विकल्पात्सिद्धम्[2] ।

**गर्हायामेवेति** । 'वदः सुपी'ति सूत्रे 'भावे' इति नाऽपकृष्यते' इति

इत्संज्ञाप्रवृत्तावपि न क्षतिः' इति ग. पाठः ।

१ 'अत एव 'त्वये'ति तृतीया । 'कर्तृकर्मणोरि'त्यस्य तद्धिताऽधिक्येऽप्रवृत्तेः । आद्ये तु तस्याऽनित्यत्वाद्बोध्या । 'ण्यत्येव संज्ञापूर्वकत्वात् वृद्ध्यभाव'इत्यन्ये' इति ग. पाठः ।

२ इतोऽग्रे 'ण्यत्येव संज्ञापूर्वकत्वाद्वृद्ध्यभाव' इत्यन्ये' इति ख. ङ. पाठः ।

मतेनेदम् । तत्पक्षे तु अप्राप्तयद्विध्यर्थम् । प्रत्युदाहरणन्तु 'अवाद्यं गुरुनामे'ति । नञोऽन्यत्र 'मा वाद्यम्' । पक्षाऽन्तरे 'मोद्यमि'ति ।

व्यवहर्त्तव्येत्यर्थ इति । निपातनसामर्थ्यात्, ('पणितव्य'ग्रहणाच्च)[1] अयं विशेषो लभ्यते । तदुक्तम्—

'धातुसाधनकालानां प्राप्त्यर्थं, नियमस्य च ।
अनुबन्धविकाराणां, रूढ्यर्थं[2] च निपातनम्' ॥ इति ।

वृङ इति । अनिरोधरूपाऽर्थस्य संभक्तिवाचिन्येव सौष्ठवादिदं लभ्यते । संभक्तिश्च स्वीकरणाऽनुकूलव्यापाररूपप्रार्थना । 'होतारं वृणीते' इत्यादौ तथैव प्रतीतेः । 'अत्र कर्मणि मम होतृकर्मकरो भवे'ति प्रार्थयते'[3] इत्यर्थः । 'वृञ् वरणे' इत्यत्र वरणं तु स्वीकार एव, तत्र च निरोध एवेति बोध्यम् । एवं च 'अनिरोध'पदाऽभावे वृञोऽपि निपातनं स्यादिति भावः ।

शतेनेति । दाने एव नियमो, न संभक्तिरूपे वरणे इत्यर्थः । शतशब्दोऽत्र अनियतपरः । वृत्येनि । 'एतिस्तु' इति वृञः क्यप् । वरणमत्र स्वीकारस्तत्र निरोधः । अत एव दीर्घाऽन्तस्य न निपातनम् । 'नौ वृ धान्ये' इत्यादौ ह्रस्वाऽन्तस्यैव सुप्रसिद्धत्वाच्च[4] । इदमुपलक्षणम् । वृङर्थे निरोधविवक्षायां 'वार्ये'त्यपि । एतेन 'एतिस्तु' इति सूत्रे वृञ एव ग्रहणस्य वक्ष्यमाणत्वेन, परत्वात्क्यपा यतो बाधेन 'वृत्ये'ति सिद्धे, इह 'अनिरोध'ग्रहणं व्यर्थमि'त्यपास्तम् । यत्तु वृत्तौ अविभक्तिकनिर्देशमाश्रित्य स्त्रियामेवेदं निपातनमुक्तम् । तन्न । मानाऽभावात् । 'सुग्रीवो मम वर्योऽसौ' इति भट्टिविरोधाच्च । तस्मात्सूत्रे कृतद्वन्द्वस्य बहुवचननिर्देशः । 'वार्या ऋत्विज' इति तु निरोधविवक्षायां वृङ एव बोध्यम् ।

---

१ अयं पाठः क. नास्ति ।

२ इतोऽग्रे 'एवं च पणितव्य-पण्यशब्दौ व्यवहर्त्तव्ये रूढौ इति बोध्यम्' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

३ 'प्रार्थयामीत्यर्थः' इति क. ग. पाठः ।

४ इतोऽग्रे 'पणिसाहचर्यान्ङिदेव गृह्यते' इति ग. पाठः ।

अर्यः स्वा। 'स्वामिन्यर्यस्याऽन्तोदात्तत्वं वक्तव्यम्'।

उपसर्या। 'काल्ये'त्यत्र 'तदस्य प्राप्तमि'त्यधिकारे 'कालाद्यत्'। प्रजनः—गर्भग्रहणम्।

अजर्यम्। 'सङ्गतमि'ति कर्त्तरि क्तः। सङ्गच्छति = प्राप्नोति पुरुषमिति सङ्गतं-मैत्री[1]। 'अजर्यमि'ति च निपातनात्कर्त्तरि। तदाह-कर्त्तरीति। अत एव 'कर्त्तरीति वक्तव्यमि'ति भाष्ये[2] उक्तम्। अध्याहार्यमिति। 'जरणाऽभावविशिष्टे सङ्गते लक्षणे'त्यन्ये। यदि तु 'अजर्य'शब्दस्यैव योगरूढिराश्रीयते, तर्हि भट्टिप्रयोगे पुनरुक्तं स्यादिति भावः। अत एव भाष्ये 'सङ्गतं चेत्कर्त्तृ' इति व्याख्यातमिति बोध्यम्।

[3]वदः सुपि। अत्र 'सुप्'ग्रहणे उपसर्गग्रहणं न। 'सत्सू' इति सूत्रे 'उपसर्गेऽपी'त्युक्तेः। तत्र हि 'सुपी'त्येव सम्बध्यते। इत्याकृष्यते इति। भुवोऽकर्मकत्वेनोत्तरत्र व्यर्थत्वात्। यद्यपि प्राप्तौ सकर्मकः, तथाऽपि प्रसिद्धत्वात् भ्वादेरेव ग्रहणमिति भावः। एके इति। अत एव 'भुवो भावे' इति सूत्रे 'उत्तराऽर्थं भावग्रहणमि'ति भाष्ये उक्तम्। सोपपदस्य कालादिकर्मयोग एव नाऽस्ति, अनभिधानादिति तदाशयः[4]।

हनस्त च। तकारस्य आदेशत्वं तु व्याख्यानात्। सुपीति किम्?। 'घातः'। ण्यत्तु न। सकर्मकत्वेन भावे तदप्राप्तेः। भावे किम्?। 'श्वघात्यो वृषलः'। अनुपसर्गे किम्?। 'प्रघातः'।

१ 'कर्त्तरि क्तः, न कर्मणि। जीर्यतेरकर्मकतया 'अजर्यं सङ्गतमि'ति सामानाधिकरण्याऽनुपपत्तेः। अत एव 'अजर्यमि'ति न भावे। निपातनाच्च। स्पष्टं चेदं भाष्ये। तदाह—कर्त्तरीति। अत एव 'कर्त्तरीति वक्तव्यमि'ति भाष्ये उक्तम्' इति ग. पाठः।

२ 'भाष्यं सङ्गच्छते' इति ख. ग. पाठः।

३ 'वदः सुपि।' गदमदे'त्यतो'ऽनुपसर्गे' इति वर्त्तते' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

४ इतोऽग्रे 'कालादिकर्मव्यावृत्त्यर्थं तत्राप्यावश्यकमित्यन्ये' इति ग. पाठः।

ननु 'हनस्तः क्यबचिण्णलोरि'ति न्यासेन क्यपि तकारादेशं विधाय, 'हन्भुवोर्भावे' इत्येवाऽस्तु, किं योगविभागेन, किञ्च 'त चे'त्यनेनेति चेत् ।

अत्राहुः—योगविभागसामर्थ्येन आवृत्त्या क्वचिदनुपपदेऽपि प्रवृत्तिः । तेन निरुपपदं 'हत्ये'त्यपि साध्विति[1] ।

**एतिस्तु** । 'सुपि' 'अनुपसर्गे' 'भावे' इति सर्वं निवृत्तम् , भाष्ये 'क्यप्विधौ वृञो ग्रहणं कर्त्तव्यम् । इह मा भूत् 'वार्या ऋत्विज' इति कर्मणि निरुपपदोदाहरणात् । यत्तु 'अनुवृत्त्यैव सिद्धे, पुनः क्यप्ग्रहणं तत्सम्बद्धनिवृत्त्यर्थमि'ति । तन्न[2] । व्याख्यानत एव 'सुपी'त्यादीनां निवृत्तिसिद्धेः । अत एव भाष्ये तस्य परण्यद्बाधनाऽर्थत्वमुक्तम् । 'उपेयमि' त्यादि तु ईङो दैवादिकाद्यति । अत एव वृद्धिर्न । प्रसिद्धत्वादिण एव ग्रहणम् । तेन 'अध्येयमि'ति सिद्धम् । **शिष्य इति** । 'शास इदङ्' 'सर्त्तिशास्ती'त्यादौ प्रसिद्धत्वात् शास्तेरेव ग्रहणं, न तु आशास्तेरित्याहुः ।

**न वृङ इति** । 'वृञो ग्रहणं कर्त्तव्यमि'ति वार्त्तिकात् , व्याख्यानाच्च[3] । केचित्तु[4] ण्यदन्त'वृ'धातोराद्युदात्तविधानाज्ज्ञापकात् अत्र वृञो ग्रहणम् । तत्र हि आत्मनेपद्यकारवद्विकरणप्रकृतिभूत—'ईड' 'वन्द'साहचर्येण तादृशाऽऽत्मनेपदिनः[5] ( क्र्यादेर्वृङः ) एव 'वृ'ग्रहणेन ण्यदन्ताऽऽद्युदात्त-विधानादिति भावः । एतेन 'पूर्वोत्तरसाहचर्यात् 'ईडे'तिसूत्रे उभयपदिनो ग्रहणमि'त्यपास्तम् । पूर्वोत्तरयोरेकैकस्य उभयपदित्वाऽभावाच्चेति[6] वदन्ति ।

१ 'निरुपपदं हत्येति त्वसाधु' इति तु लघुशेखरे पठ्यते ।

२ 'तन्न । चाऽनुकृष्टत्वेनोत्तरत्राऽनुवृत्तेर्दुर्लभत्वात् । व्याख्यानत एव सुपीत्यादीनां निवृत्तिसिद्धेश्च' इति ग. पाठः ।

३ 'व्याख्यानाच्च, ईडवन्देति ज्ञापकाच्च । आत्मनेपद्यकारवत्' इति ग. पाठः ।

४ 'केचित्तु' इत्यारभ्य 'इति वदन्ति' ( २०१६ पृ० ) इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः । मनोरमाशब्दरत्नस्थत्वात् ।

५ 'तादृशात्मनेपदिनः क्र्यादेर्वृङ एव वृग्रहणेन' इति ग. पाठः ।

६ 'उभयपदित्वाऽभावाच्चेति दिक्' इति ग. पाठः ।

वार्या इति। अत्र निरोधस्य विवक्षितत्वात्[1] न 'अवद्यपण्ये'त्यस्य प्राप्तिरिति बोध्यम्। [2]पुनरिति। न च चाऽनुकृष्टत्वात् क्यपोऽत्राऽनुवृत्त्य-नापत्तिः। तकारस्याऽऽदेशत्वेन चं विनापि पूर्वसूत्रे क्यप्सम्बन्धसंभवेन तस्य चाऽनुकृष्टत्वाऽभावात्। ण्यत इति। 'ओरावश्यके' इति प्राप्तस्य।

शंसेः सिद्धमिति। केचित्तु 'धातूनामनेकार्थत्वात् शसेर्हिंसाऽर्थात् 'तकिशसी'ति यति 'प्रशस्य'शब्दं साधुमाहुः।

आङ्पूर्वादञ्जेरिति। ण्यति तु कुत्व-नलोपाऽभाव-तित्स्वराणा-मापत्तिरिति भावः। अनित्येति। अत्र च तपरकरणमेव लिङ्गम्। ह्रस्वः सुपठ इति। न च 'इ-इ' इतीकारप्रश्लेषेण 'ये विभाषे'त्यात्त्वं बाधितुं द्वितीयेकारविधानाय दीर्घनिर्देशः। अन्यथा 'अचः कर्तृयकी'ति सूत्रस्थ-भाष्ये 'कीर्यते स्वयमेवे'त्यादिसिद्धये यगुपदेशे इत्यर्थकोपदेशग्रहणा-ऽनुवृत्तौ 'जायते स्वयमेवे'त्यादिसिद्ध्यर्थं 'ये विभाषे'त्यत्र 'ये' इत्यस्य विषय-सप्तमीत्वकथनात् अन्तरङ्गत्वेन आत्वं स्यात्। [3]ईत्वं तु क्यपा सहविधाना-द्बहिरङ्गम्। एतेन 'ये' इत्यस्य परसप्तमीत्वाऽऽश्रयेण भाष्यकृतोऽत्र दीर्घ-प्रत्याख्यानमि'ति परास्तमिति [4]वाच्यम्। 'ये विभाषे'त्यत्र 'विड्वनोरि'-

---

१ 'विवक्षितत्वात्, यन्निरूपितं ऋत्विक्त्वं तत्सेव्यत्वस्यैव तेषु संभवेन निरोधाच्च' इति ग. पाठः।

२ 'पुनरिति' इत्यारभ्य 'चानुकृष्टत्वाऽभावात्' इत्यन्तः क. पाठः ख. ग. ङ. नास्ति। अत्र 'चं विनाऽपि तत्सम्बन्धसम्भवेन' इति च क. पाठोऽत्र लघुशेखराऽनुसारेण अस्माभिः शोधितः।

३ 'इदन्तु' इति ख. ङ. पाठः।

४ 'इति वाच्यम्। आत्वे कृते एकदेशविकृतन्यायेनेत्त्वप्रत्यययोः सुलभत्वात्। विधेयस्य पूर्वनिर्देशेनाऽन्तरङ्गसवर्णदीर्घात्पूर्वमेवेत्त्वप्रवृत्त्या, आद्गुणेन रूपसिद्धेः। आत्त्वात्पूर्वमेव वा। न चाऽत्र पक्षे एकदेशविकृतन्यायेन पुनरात्त्वम्। जनादिसाहचर्येण, 'विड्वनोरि'त्यतोऽनुनासिकग्रहणाऽनुवृत्त्या च नान्तखनेरेव तत्र ग्रहात्' इति ख. ग. ङ. पाठः।

त्यतोऽनुनासिकग्रहणाऽनुवृत्त्या, जनादिसाहचर्येण च यादिप्रत्ययोत्पत्तिकाले नान्तस्यैव तेनाऽऽत्त्वविधानेन तस्याऽत्राऽप्राप्तेरित्याशयात्। न च ह्रस्वाऽऽदेशे, आह्णुणे, तस्य 'षत्वतुकोरि'त्यसिद्धत्वात्तुक् स्यात्। पदान्तपदाद्योरेकादेशस्यैव तेनाऽसिद्धत्वादिति दिक्। स्पष्टं चेदं भाष्ये। कैयटस्य तु प्रमादः। **क्यप्चेति**। अयं, स्त्र्यधिकारस्थश्च। युक्तः साम्यादित्याहुः। इदमुपलक्षणम्। 'संज्ञायां समजे'त्यस्य भावाऽधिकरणयोरेव प्रवृत्तेः, कर्मणि प्रकृते ण्यत् सुलभ इत्यपि बोध्यम्।

**मृजेर्वि**। ऋदुपधत्वात् प्राप्तविभाषेयम्।

चजोः कु। यथासङ्ख्यं तु न। 'रागादि'त्यादिनिर्देशात्। **राजसूयो** यज्ञविशेषः[1]। **यद्वेति**। 'राजानं क्रीणन्ती'त्यादौ तथा दर्शनादिति भावः।

**निपातनादिति**—पूर्वोत्तरेणाऽन्वयि। रूढ्यर्थं[2] च निपातनम्। तेन आद्यपक्षे अश्वमेधादौ, द्वितीये ज्योतिष्टोमादौ च नाऽतिप्रसङ्गः।

**उत्त्वमिति**। तस्य रपरत्वात् 'हलि चे'ति दीर्घः।

**क्यपो रुडिति**। 'निपातनादि'ति शेषः। एवमग्रेऽपि।

**नित्यं क्यबिति**। 'वदः सुपी'तिसूत्रस्थचकारप्राप्तयतो बाधनाऽर्थमित्यर्थः[3]। **रुच्यः**—निपातनात्कर्त्तरि। एवमग्रेऽपि। **धनम्**—धातुपात्रादिरूपं, न तु वस्त्रादि[4]। अप्रसिद्धेः। **कर्मकर्त्तरीति**। अयमन्तोदात्तो निपात्यते। संज्ञायामेव चाऽयमिति भाष्ये स्पष्टम्।

**क्यबिति**। 'कर्त्तरी'ति शेषः। **पूङिति**। न्यादिसाहचर्येण शप्विकरणस्यैव ग्रहणमिति भावः। 'पूञि'ति पाठोऽपि मूले क्वचित्। '**कल्कः**—पिष्ट औषधविशेषः, पापं च। 'कल्कः पापाऽऽशये, पापे, दम्भे, विट्किट्टयोरपी'ति कोशात्। तैले, घृते वौषधे प्रक्षिप्ते पाकाऽनन्तरं यत् ऋजीषं तच्च।

---

१ अपिः ख. ङ. नास्ति।

२ इतोऽग्रे 'निपातनेन रूढ्यङ्गीकारान्नाऽतिप्रसङ्गः' इति ग. पाठः।

३ 'वदः सुपीति पक्षप्राप्तयतो बाधनाऽर्थम्' इति ग. पाठः।

४ 'भ्वादि' इति क. पाठः।

सर्वत्र चेदं निपातनम्। **जित्य** इति। 'जि अभिभवे'। **काष्ठमिति**। 'हलि'शब्दवाच्यमित्यर्थः। **वक्तव्यमिति**। वृत्तिकृता तु सूत्रे प्रक्षिप्तम्। **लोके त्विति**। ण्यदेवेति भावः।

**पदास्वैरि**। 'एषु चतुर्षु ग्रहेः क्यबि'त्यर्थः। **अवगृह्यमिति**। ( पदविषये ) असन्निकर्षोऽत्र ग्रहेरर्थः। यस्याऽवग्रहः, प्रगृह्यसंज्ञा च क्रियते, तत् आभ्यां क्रमेणोच्यते। **अवग्रहः**—अवाऽन्तरपदत्वसूचनाय पदपाठकाले किञ्चित्कालमवसानम्। **प्रग्रहस्तु** प्रकृतिभावात् यणाद्यभावे परस्परम् अचोरसन्निकर्षः।

**गृह्यका** इति। अनुकम्पायां कन्। 'गृहाऽऽसक्ताः पक्षिमृगाश्छेकास्ते, गृह्यकाश्च ते' इत्यमरः। **ग्रामगृह्येति**। बहिर्भावोऽत्र ग्रहेरर्थः।

**पत्रं वाहनमिति**। पत्यन्त्यनेनेति 'दाम्नीशसे'ति करणे ष्ट्रन्। **युग्यो गौरिति**। युज्यते शकटेन, पुरुषादिना वेत्यर्थः। एतेन 'तद्वहती'त्यनेन 'युग'शब्दात् यति 'युग्यमि'त्यस्य सिद्धौ, व्यर्थमेतदि'ति हरदत्तोक्तमपास्तम्।[1]'अयुग्यमि'त्यनन्तोदात्तस्याऽपि सिद्धये अस्याऽऽवश्यकत्वात्। तद्विषये हि 'ययतोश्चाऽतदर्थे' इत्यन्तोदात्तत्वमिति भेदात्।[2] 'योग्यो गौरि'त्येतन्निवृत्त्यर्थमस्याऽऽवश्यकत्वाच्च।[3]

न च सूत्रे 'युग्यमि'ति क्लीबनिर्देशात्, 'युग्यं पत्रं च वाहनमि'तिकोशाच्च क्लीबत्वनिर्णयेन 'युग्य' इति पुंस्त्वमसङ्गतम्। 'युग्यं चे'ति चकारेण सजातीयसमुच्चायकेन लिङ्गाऽन्तरयुक्तस्याऽपि समुच्चयेनाऽदोषात्। 'पत्र-पात्र-पवित्र-[4]च्छत्राः पुंसि चे'ति सूत्रेण 'पत्र'शब्दे पुंस्त्वस्याऽपि

१ अयं लघुशेखरादिपाठ आवश्यकत्वादत्राऽपि योजितोऽस्माभिः।

२ इतोऽग्रे 'अनेन अनुदात्ताऽन्तस्य साधनात्। तेन हि स्वरिताऽन्त इति विशेषात्' इति क. कुण्डलितः पाठः।

३ 'निवृत्त्यर्थमावश्यकत्वात्' इति ख. ग. ङ. पाठः।

४ 'पवित्रसूत्रच्छत्रा' इति तु लिङ्गाऽनुशासने सूत्रपाठः।

दर्शनेन कोशस्योपलक्षणताऽऽवश्यकत्वाच्च । सूत्रे सामान्ये नपुंसकत्वस्य सत्त्वाच्च । अत एव 'युग्या युग्या इति क्रुद्धाः सारथींश्च व्यनोदयन्' इति उद्योगपर्वणि प्रयोगः सङ्गच्छते ।

**वृद्धाविति** । यदि सूत्रे तथाऽऽनुपूर्वीश्रवणात् यदन्तमेव निपातनं, तदा तदभावेऽधिकरणे ण्यत् दुर्लभः । बाहुलकात्तल्लाभेऽपि, उपपद-समासः, तत्प्रयुक्तस्वरश्च न सिध्येत् । मम तु 'अमे'ति लुप्तसप्तमीनिर्देशात् , निपातनाद्वा तत्सुलभम् । किञ्च 'अमावस्ये'ति सह्लस्वं 'यतोऽनाव' इत्याद्युदात्तं स्यात् । इष्यते तु अन्तस्वरितम् । किञ्च 'अमावास्याया वे'ति दीर्घविशिष्टाद्विहितो वुन् ह्रस्वविशिष्टान्न स्यात् । मम तु ह्रस्वस्य दीर्घविकृतित्वान्न दोषः । एतेन 'वृद्ध्यभाव एव निपात्यतामि'त्यपास्तम् ।

'अन्यतरस्यामि'ति ह्रस्वेनैव सम्बध्यते । ण्यत्तु नित्य एव । सूत्रे तकारोच्चारणं तु प्रकरणप्राप्तक्यपि सम्प्रसारणाऽभावनिपातनशङ्कावारणायेति बोध्यम् । ण्यत्प्रकरणे एव 'अमावस्येत्यन्यतरस्यामि'ति सूत्रयितुमुचितम् । वस्तुतस्तु तद्धिते 'अमावस्याया वे'ति ह्रस्वमध्यं पठित्वा, 'अत्र वृद्ध्यभावः पक्षे निपात्यते' इति वक्तुं युक्तम् ।

**ऋहलोः** । पञ्चम्यर्थे षष्ठी । 'ऋ' इति वर्णग्रहणम् , हला साहचर्यात् । तदाह—**ऋवर्णान्तादिति** । **यथोत्तरमिति** । वार्त्तिककृता प्रत्याख्यातत्वात् , भाष्यकृता च वार्त्तिकमते 'शोक' इत्यसिद्धिमाशङ्क्य सूत्रकारमते ण्यति मा भूदिति नियमाऽर्थमावश्यकेन 'शुचेर्घञो'ति वचनेन साधिततया, वार्त्तिकस्यैवाऽभ्यनुज्ञानाच्च । ऋषिद्वयस्य अज्ञानकल्पनाऽपेक्षया सूत्रकृत एकस्यैव तत्कल्पनमुचितमिति भावः ।

**भुजन्युब्जौ** । भुजेः अगुणत्वं निपातनात् । बाहौ तु 'भुज' इति लाक्षणिकं बोध्यम् । **न्युब्जन्तीति** । 'चेष्टारहिता अवाङ्मुखाः शेरते' इत्यर्थः । अत एव निपातनात् 'स्तोः श्चुने'त्यस्याऽनन्तरम् 'उद्जेर्बे' इति वचनं त्रिपाद्यां कल्प्यते । तत्र 'तोः श्चुने'ति वर्त्तते । तस्य चाऽसिद्ध-

त्वात् 'न्युब्जिजिषती'त्यादौ 'न न्द्रा' इति निषेधः। श्रुना योगे तद्विधानात् 'समुद्र' इत्यादौ कुत्वविषये पदसंस्कारपक्षेऽसिद्धत्वान्न बकारः। स्पष्टं चेदं 'हयवरट्'सूत्रे भाष्ये। यद्यपि 'न्युब्जयती'ति अचि रोगे न्युब्जः सिद्ध्यति, तथापि प्रागुक्ताऽर्थलाभाऽर्थं, घञि 'न्युद्र' इत्येतद्व्यावृत्त्यर्थं च 'न्युब्ज'ग्रहणमिति सूत्रहृदयम्। अवश्यपाच्यमिति। 'आवश्यकाऽधमर्ण्ययोरि'त्यनुवर्त्तमाने 'कृत्याश्चे'ति ण्यत्।

**प्रवाच्यं ग्रन्थविशेष इति**। इदं च वृत्त्यनुरोधेन। भाष्ये तु 'प्रवाच्य'शब्दः अशब्दसंज्ञायामेव वर्त्तते इति 'वचोऽशब्दे'त्येव सिद्धिरिति, अत्र 'प्रवचि'ग्रहणं प्रत्याख्यातम्। द्वादशाहेऽभितो द्विरात्रः, मध्ये दशरात्रः, तस्य दशरात्राख्यस्य यज्ञविशेषस्य दशमेऽह्नि 'अविवाक्यमि'ति प्रयुज्यते, यत्र ऋत्विजो विरुद्धनानावाक्यानि न भाषन्ते, तत्र पृषोदरादित्वात्कुत्वम्। अन्यत्र 'अविवाच्यमि'त्येव। एतेन 'प्रवचिग्रहणं नियमाऽर्थं, सोपसर्गस्य चेत् प्रपूर्वस्यैवे'ति निरस्तम्।

**भाष्यमिति**। 'पूज्यमि'ति तु ण्यन्तस्य पूजेर्यति बोध्यम्। 'पूजेर्नित्यण्यन्तत्वात् तद्ग्रहे फलाऽभाव' इत्यन्ये।

**भोज्यं भ**। भक्ष्यमत्र सर्वं, न तु खरविशदमेव, व्याख्यानात्। **लपीत्यादि**। 'पोरदुपधादि'ति यतोऽपवादः। **वृत्तौ** तु 'आसुयुवपी'तिसूत्रे लपिं रपेरुपरि प्रक्षिप्य, अनुक्तसमुच्चयाऽर्थेन चेन दम्भेः सङ्ग्रह उक्तः। तद्भाष्यविरुद्धम्।

**ओराव**। अवश्यं भाव 'आवश्यकम्'। मनोज्ञादित्वाद्वुञि 'अव्ययानामि'ति टिलोपः। **द्योत्ये इति**। 'अवश्यलाव्यमि'त्यत्र मयूरव्यंसकादित्वात् समासः। तत्रैव निपातनात्कृदुत्तरपदप्रकृतिस्वर इति भाष्ये स्पष्टम्। अन्यथा उपपदत्वाऽभावादुभयमपि दुर्लभम्।

---

१ 'कुत्वविषयेऽकृतव्यूहपरिभाषया न बकारः' इति ख. ग. ङ. पाठः।
२ 'न्युद्ज' इति क्वचित्पाठः।

लौकिके प्रयोगे लाघवाऽनादरात् द्योतिताऽर्थकस्याऽपि क्वचित्प्रयोगः ।

**आसुयु । षुञिति** । 'सुनोतेरि'त्यादौ व्यवहृतत्वेन प्रसिद्धत्वादिति भावः । एतेन 'सानुबन्धकत्वादस्य ग्रहणमनुचितमि'त्यपास्तम् । युगपत् द्वयोरुपस्थितावेव तस्य प्रवृत्तेः । **यु मिश्रणे इति** । न च 'लुग्विकरण'परिभाषया अस्य ग्रहणमनुचितम् । 'साऽनुबन्धक'परिभाषा-'लुग्विकरण'परिभाषाभ्याम् उभयोर्ग्रहणाऽऽपत्तिर्वेति वाच्यम् । 'उदि श्रयतियौती'त्यादौ अष्टाध्याय्यां व्यवहृतत्वेन प्रसिद्धत्वात् यौतेरेव ग्रहणं, न 'युञ् बन्धने' इत्यस्येत्याशयात् । **'आचाम्यमि'ति** पाठः अन्यथा वृद्धिर्न स्यात् ।

**विशेष** इति । यो गार्हपत्यादानीयते दक्षिणाऽग्निस्तत्रेत्यर्थः । तद्भ्रनयन्नाह— वैश्येत्यादि । वित्तवद्वैश्येत्यर्थः । 'आदिना भ्राष्ट्रसङ्ग्रहः ।

**प्रणाय्यो । कर्मव्यापार** इति । वस्तुतः संमतिः—प्रीतिः । सा यत्र चोरादौ लोकानां नास्ति सः—असंमतिः । यस्य वा विषयेषु संमतिर्नास्ति सोऽपि । 'असंमतौ' इति च बहुव्रीहिः । तदाह—**प्रणाय्यश्चोर इति** । **आतो युगिति** । 'मीनाती'त्यात्त्वे कृते इति भावः । माङो वा । **हविर्विशेष** इति । ऐन्द्रं पयो,दधि वेत्यर्थः । हविर्मात्रे प्रयोगस्तु लक्षणया ।

**धाय्या ऋगिति** । सामिधेनीनां मध्ये कस्याश्चित् ऋचः संज्ञेयम् । अन्यत्र प्रयोगस्तु लक्षणया । **कुण्डपाय्य इति** । अत्र यत्, युक् च निपातनात् । तेन 'यतोऽनाव' इत्याद्युदात्तत्वम् । ण्यति तु तित्स्वरः स्यादिति बोध्यम् । ततः कृदुत्तरपदप्रकृतिस्वरः । **सञ्चाय्ये–ण्यदायौ** । **क्रतौ** किम् ? । 'कुण्डपानम्' । 'सञ्चेयः' । **स्थलविशेष इति** । सूत्रेऽग्निपदं स्वधारणाऽर्थे इष्टकाचयनेन निर्मिते स्थलविशेषे लाक्षणिकमिति भावः ।

---

१ 'युगपत् द्वयोरुपस्थितावेव च' इति ङ. पाठः ।

२ 'आदिना वित्तवद्भ्राष्ट्रसङ्ग्रहः' इति ख. ग. ङ. पाठः ।

चिनोतेर्ण्यदायौ निपात्येते। समो वहेर्ण्यत्, सम्प्रसारणं, दीर्घश्च। 'वहिसमानार्थोहेर्ण्यता सिद्धे इदं व्यर्थमि'ति भाष्यम्।

**चित्याग्नि**। 'चिनोतेः कर्मणि चित्ये क्यप्,निपातनादेव। आद्योऽग्नौ, द्वितीयो भावे। तत्राऽन्तोदात्तत्वं चे'ति भाष्यम्। **क्वचिन्नेति**। न च सामान्यत एव ज्ञाप्यताम्। क्त्वाप्रत्ययेन तुमुनो नित्यबाधाऽऽपत्तेः। एवं च 'आस्यते भोक्तुमि'त्यर्थे 'आसित्वा भुङ्क्ते' इत्येव स्यादिति भावः।

**क्तल्युडिति**। 'हसितं, हसनं छात्रस्य'। अत्र क्तल्युटोर्विषये नपुंसके भावे घञ् न। 'ईषत्पानः'। 'आतो युच्'। अत्र खल् न। तुमुन्ग्रहणमत्र व्यर्थम्। न च 'इच्छति भोक्तुमि'त्यत्र पक्षे 'इच्छार्थेषु' इति[1] लोटो निवृत्त्यर्थम्। 'लिङ् चे'त्यनेन लिङो विशेषविधानेनैव लोटो बाधसिद्धेः। लिङ् तु तस्माद्वचनादिष्यते एव सर्वैरित्याहुः।

**कर्त्तरि वेति**। 'कर्त्तरि कृदि'त्यतः 'कर्त्तरी'त्यनुवर्त्तते। **लाघवादिति**। इह हि चकारमात्रेण वाऽऽसरूपविधेरनित्यता ज्ञापयितुं शक्या। अनित्यत्वमात्रज्ञापने शक्ति लिङो विषये कृत्याऽप्रवृत्तिशङ्कायां चः सार्थकः। प्रैषाद्यर्हादिसूत्रविषये च अप्रवृत्तेः काचित्कत्वात् वाऽसरूप-प्रवृत्तिरिति भावः। ध्वनितं चेदं 'वाऽसरूप'सूत्रे भाष्ये।

'आवश्यकाऽऽधमर्ण्ययोरि'त्यनुवर्त्तमाने **'कृत्याश्चे'ति** सूत्रम्। तच्च भव्याद्यर्थम्।

**कृत्यतृचोर्ग्रहणं चेति**। 'ण्वुलः प्राक् 'कृत्या' इत्यधिकार' इत्यर्थस्तु व्याख्यानादेव सिद्ध इति भावः।

**इति कृदन्ते कृत्यप्रक्रिया।**



---

1 'लिङ्लोटोर्निवृत्त्यर्थम्' इति ख. ङ. पाठः।

# अथ पूर्वकृदन्तप्रकरणम् ।

**ण्वुल्तृचौ** । चकारः 'तुरिष्ठे' इत्यादौ सामान्यग्रहणाय । ण्वुल्तृचोर्वर्त्तमानकालात् अन्यत्र अप्रयोगः, अनभिधानादिति अत्रैव भाष्ये ध्वनितम् । **वोढेति** । अनुदात्तत्वादिडभावे, धत्वढत्वष्टुत्वढलोपेषु 'सहिवहोरि'त्योत्त्वम् । **विज इडिति** । 'ङिदि'ति अत्र वर्त्तते । **वध हिंसायामिति** । अत एव 'जनिवध्योरि'त्यत्र 'वधी'ति चरितार्थम् । वधादेशे तु अल्लोपस्य स्थानिवत्त्वादेव वृद्ध्यभावसिद्धिः । एतेन 'अस्य आर्द्धधातुके न प्रयोग' इत्यपास्तम् । **नेट्यलिटीति** । 'रधिजभोरि'ति प्राप्तनुमो निषेधोऽयम् । **नंष्टेति** । रधादित्वाद्वेट् । '**रभेरि**'ति, '**लभेश्चे**'ति च नुम्विधायके ।

**क्रमेः कर्त्तरीति**—'स्नुक्रमो'रित्यत्र वार्त्तिकम् । **प्रक्रन्तेति** । 'प्रोपाभ्यां समर्थाभ्यामि'ति क्रमेरात्मनेपदविषयता । **अनन्यभाव इति** । अत एव भाष्ये सोपसर्गमेवोदाहृतम् । **केचिदिति** । कैयटस्वरसस्त्वत्र पक्षे दृश्यते ।

**तङानयोरभावमिति** । फलोपहिततङाननिमित्तत्वाऽभावं लक्षयतीत्यर्थः । **पापाचक इति** । यङ्लुकोऽत्राऽनैमित्तिकत्वान्न 'न धातुलोप' इत्यस्य प्रवृत्तिः । तत्र 'इक' इत्यनुवृत्तेश्च ।

**मधुसूदने**–'सात्पदाद्योरि'ति षत्वनिषेधः । अत एव 'विषयी'त्यत्र निपातनात्षत्वं वक्ष्यति । **स्थायीति** । आदन्तलक्षणे णे 'स्थायो'ऽपि । के प्रस्थादिरपि । **नन्दन-वाशन-मदन-दूषण-साधन-वर्द्धन-शोभन-रोचना-ण्यन्त-प्रकृतिकाः** । संज्ञायां **सहन-तपन-दमनाश्च** । **जल्पन-रमण-दर्पण-संक्रन्दन-संकर्षण-संहर्षण-पवन[1]-वित्तनाशन-कुलदमनाः** ।

**—इति नन्द्यादिः** ।

उत्साही, उद्दाही, उद्भासी, सम्मर्दी, निरक्षी, निश्रावी, निवापी, निशायी, अपाची, अव्याहारी, असंव्याहारी, अव्राजी, अवादी, अवासी । '**नञः पराणामजन्तानामचित्तवत्कर्त्तृकाणाम्**' । तत्र 'नञ' इति

---

1 'यवनः' इति क्वचित्पाठः ।

प्रतिषेधाऽर्थानामुपलक्षणम्। 'अभिभावी भूते'। अपराधी, उपरोधी।

इति ग्रहादिः।

**आकृतीति**। तथा च भाष्यम्—'अजपि सर्वधातुभ्य' इति। प्राऽत्तीति-'प्रघसः'। 'अच्यदेर्घस्लृ' इति वार्त्तिकात्। **बाधकेति**। तेन मेष-सेव-देवादयः सिद्धाः। जारं बिभर्त्तीति 'जारभरा'।

**श्वपाकोऽपीति**। कर्मण्यणपि पक्षे भवतीति भावः।

**चेक्रिय इति**। संयोगपूर्वकत्वान्न यण्। **लोलुव इति**। यण् तु न। 'ओः सुपी'त्युक्तेः। इह सुबभावात्। उवङ्।

**आगमस्येति**। न च दीर्घोच्चारणं सवर्णदीर्घबाधाऽर्थं स्यात्, अत एव 'अभ्यासस्य यदुच्यते तदनची'त्यर्थकम् 'अभ्यासस्याऽनची'ति 'अत्र लोप' इति सूत्रे पठितमिति वाच्यम्। आदेशेनैव दीर्घेण सिद्धे, आगमत्वकरणस्य ज्ञापकत्वात्। एवं च तद्वचनमपि न कार्यमिति लाघवम्। यद्यपि 'चरिचली'त्यादिषु भाष्ये 'वे'ति न दृश्यते, तथापि 'रात्रिञ्चर' इत्यादिप्रयोगदर्शनात् वृत्तौ पठितम्। 'तत्र ट' इत्यन्ये। **घत्वं चेति**। चात् द्वित्वम्, आगागमश्च। **णिलुक् चेति**। चात् द्वित्वम्। लुक्करणम् अवृद्ध्यर्थम्। ज्ञे—'आतो लोपः'। **प्रिये**-इयङ्। **किरे**—'ॠत इत्'। सूत्रे समाहारद्वन्द्वे सौत्रत्वात् ह्रस्वाऽभावः। अन्यत्र वा तत एकवचनम्।

**आतश्चो**। **प्रज्ञ इति**। परत्वादिदमेव न्याय्यमिति भावः। न चेदम् उपसर्गनिमित्ततया बहिरङ्गम्। अत्र प्रकरणे अनित्यत्वेन बहिरङ्गपरिभाषाया अप्रवृत्तेः। अत एव 'अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेने'-ति भाष्ये उक्तम्। अत एव **कुड्यलेपे** शं बाधित्वा परत्वादण्। क्वचित्तु '**प्रस्थ**' इति पाठः।

**पाघ्रा**। 'धयैरामोदमुत्तममि'त्यादिप्रयोगदर्शनात् अत्र 'उपसर्गे' इति नाऽनुवर्त्तते। तदाह—**पिब इति**। अत्र घ्रादिसाहचर्यात्, अलुग्विकरणत्वाच्च पिबतेरेव ग्रहणम्। अयं बाहुलकात्पदेरपि। अत एव 'सम्पद्यकर्त्तरी'ति निर्देशः सङ्गच्छते।

**अनुपसर्गात्** । अत्र 'लिम्पविन्दे'ति भाविना नुमा निर्देशात् तौदादिकस्यैव विदेर्ग्रहणम् । **लिम्पो विन्द इति** । 'शे मुचादीनामि'ति नुम् । **धार्यादयो**–हेतुमण्ण्यन्ताः । तेभ्यः शे, शपि, गुणाऽयादेशौ । **वेदीति** । 'विद चेतने'त्यादि चुरादेः, हेतुमण्ण्यन्तानाम् अन्येषां च ग्रहणमाहुः ।

**धारय इति** । धृञ्धृङोर्ण्यन्तयोर्ग्रहणम् । 'न मह्यमत्रोत्तरधारयस्य[1] ते' इति श्रीहर्षप्रयोगे यद्यपि परत्वादण् प्राप्नोति, तथापि कर्मणः शेषत्वविवक्षायाम्[2] अणोऽप्राप्त्या, शे कृते, शेषषष्ठ्यन्तेन समासो बोध्यः ।

**अरविन्दमिति** । कर्मण्यण्बाधनायेदम् । चक्रस्य नाभिनेम्योः अन्तरालकाष्ठानि 'अराः', तत्सदृशानि दलानि विन्दति=लभते इत्यर्थः । भाष्ये 'अरविन्द' इति पुँल्लिङ्गं पठ्यते ।

**ददातिदधा** । यद्यपि दद-दधाभ्याम् अचि 'दद' इत्यादि सिद्धं, दाधोश्च णे 'दाय' इत्यादि, तथापि 'अदद' इत्यादौ अव्ययपूर्वपदप्रकृतिस्वर इष्यते । अचि तु 'अच्कावशक्तौ'इति अन्तोदात्तत्वं स्यात्, इतीदमारब्धम् ।

**इहेति** । वार्त्तिके इत्यर्थः । 'अवतान' इति भाष्योदाहरणादिति भावः । **नित्यमिति** । उत्तरसूत्रे 'अनुपसर्ग' इत्युक्तेः 'अनुपसर्गादि'त्यस्य निवृत्तौ, तत्सम्बद्धं 'विभाषे'त्यपि निवर्त्तते इति भावः । व्याख्यानात् 'श्या-आदि'ति च्छेदः । आस्रु-संस्रू दन्त्यादी । 'स्रु गतौ' इति धातुः । तालव्यादिपाठस्तु 'वचने स्थित आस्राव'[3] इत्यमरादिविरुद्धः ।

**दव इति** । 'दवदावौ वनाऽरण्यवह्नी' ।

**तेन जलचरे इति** । इदं 'शाच्छोरि'ति सूत्रे भाष्ये स्पष्टम् ।

**गेहे कः** । 'गेहे उपपदे' इति नाऽर्थः । 'गृहपतिने'ति निर्देशात् । तदाह– **गेहे कर्त्तरीति** । **'नृतिखनी'**ति-वार्त्तिकम् । **एवेति** । तेन वेञो

१ 'धारणस्ये'ति क. पुस्तके हरिताललेपेन शोधितः पाठः ।

२ 'विवक्षायां शो बोध्यः' इति ग. पाठः ।

३ 'आश्रव' इति पाठो मसीलेपेन 'आस्राव' इति शोधितः क. पुस्तके ।

वायकः सिद्धः। **भाष्येति**। तथा च षष्ठे—'कित एते औणादिका' इति 'रजकरजनरजःसूपसङ्ख्यानमि'ति नलोपविधायकवार्त्तिकं प्रत्याख्यातम्। एवं च तत[1]तो ण्वुल्ल्युटोरनभिधानं[2] बोध्यम्। नन्वत्र पक्षे 'रजकी'त्यनुपपन्नमत आह—**पुंयोगे त्विति**। तत्रैवेत्यर्थः। 'रजनी'त्यत्र[3] क्युप्रत्ययेऽपि गौरादित्वान्ङीष् बोध्यः।

'गाथक'शब्दस्य[4]–गायत्यर्थविषयकशिल्पवति गानकर्त्तर्येव रूढेराह–**गायतेरिति**। एतेन 'गामादाग्रहणेष्वविशेषात् गाङ् गतावित्यस्मादप्ययमि'ति निरस्तम्। **जहात्युदकमिति**। ततोऽधिकं वर्द्धनादित्यर्थः।

**लक्ष्यते इति**। भूयः सहचारात्। यो हि यां क्रियां पुनः पुनरनुतिष्ठति, स तत्र प्रायेण कौशलं लभते। तेन सकृदपि यः सुष्ठु करोति, तत्र वुन्, बहुशोऽपि दुष्टं कुर्वति नेति भावः। ध्वनितं चेदं भाष्ये।

**नन्दक इति**। आशास्यमाननन्दनक्रियाकर्त्तेति बोधः। **इत्यादाविति**। आदिना 'शृणोति' 'गच्छती'ति। स्पष्टं चेदं भाष्ये। काष्ठभेदादौ तु 'इगुपधे'त्यादि बाधित्वा परत्वादण्। 'मांसशीले'त्यादौ पूर्वपदप्रकृतिस्वरत्वं वाच्यमिति स्पष्टमाकरे।

**कर्मणः शेषत्वविवक्षयेति**। कर्मनिरपेक्षधात्वर्थविवक्षायाम् अचि सत्यपि सिद्ध्यतीति बोध्यम्। अनया रीत्या ओदनपचादयोऽपि प्राप्नुवन्ति। यदि नेष्यन्ते, तर्हि अनभिधानमाश्रयणीयमित्याहुः।

**ह्वावा**। ह्वेञ्साहचर्यात्सानुबन्धकवेञ एव ग्रहणम्। कैयटस्तु 'वा गती'त्यस्याऽकर्मकत्वात् अग्रहणमि'त्याह। तन्मते 'वाता वान्ति दिशो दशे'त्यस्याऽसङ्गतिः।

१ 'तत' इति ख. ग. ङ. नास्ति।

२ 'ण्वुल्-ल्युटोरपि अनभिधानं बोध्यम्' इति ग. ङ. पाठः।

३ 'रजनी'त्यत्र क्यप् बोध्यः' इति ख. ङ. पाठः।

४ 'गाथकशब्दस्य गानकर्त्तर्येव' इति ग. पाठः।

**काऽपवाद इति**। 'आतोऽनुपे'ति प्राप्तिः। सोपसर्गे तु पूर्वेणैव सिद्धमिति भावः। न च तत्राऽपि 'सुपी'ति योगविभागेन 'क'प्राप्तिः। 'आतोऽनुपे'तिसूत्राऽऽरम्भसामर्थ्येन तस्य कर्मण्युपपदेऽप्रवृत्तेः। माङ्मेङोरिह ग्रहणम्, न तु 'मा माने' इत्यस्य, अकर्मकत्वादिति बोध्यम्।

**आतोऽनुपसर्गे**। अत्र 'अनुपसर्ग'ग्रहणं न कर्मणो विशेषणम्, उपसर्गस्य कर्मणोऽसम्भवात्। तदाह—**अनुपसर्गादिति**। इदं फलिताऽर्थकथनम्। 'उपसर्गाऽभावे सती'ति वाच्योऽर्थः। **गोसन्दाय इति**[1]। अत्र उक्तयुक्तेः 'सुपी'ति को न। 'सत्सू' इति सूत्रे 'उपसर्गेऽपी'त्यनेनाऽत्र प्रकरणे 'सुप्'-पदेन उपसर्गाऽग्रहणबोधनान्न 'सुपी'ति क' इति **परे**।

अत्र उपसर्गाणाम् अव्यवहितप्राक्प्रयोगात्, विशिष्टक्रियायां कर्मकारकाऽन्वयाच्च गतिसमासगर्भोपपदसमासः।

**आह्व इति**। नन्वत्र केऽपि आलोपं बाधित्वा नित्यत्वात्सम्प्रसारणे, ततो 'वार्णादि'ति न्यायेन पूर्वत्वं बाधित्वा लोपे, तस्य स्थानिवत्त्वादुवङोऽप्राप्तौ, यणि 'आह्व' इति सिद्धम्। न च सम्प्रसारणेऽपि आलोपप्रवृत्तेः सोऽपि नित्यः, एवं च परत्वाल्लोपे सम्प्रसारणमिति, उकारस्य स्थानिभूतादचः पूर्वत्वाऽभावेन न स्थानिवत्त्वमिति वाच्यम्। एवमपि आभीयाऽसिद्धत्वस्य दुर्वारत्वादिति चेन्न। अनया रीत्या 'जुहुवतुरि'त्यस्याऽप्यसिद्ध्यापत्तेः। तस्मात् आभीयाऽसिद्धत्वाऽनित्यत्वे, 'वार्णादि'तिन्यायाऽनित्यत्वे वा इदं ज्ञापकम्। तेन 'जुहुवतुरि'त्यपि सिद्धं, न च कश्चिद्दोष इति दिक्।

**सुपीति योग इति**। इदं केवलोपसर्गे न प्रवर्त्तते। 'आतश्चोपसर्गे' इत्यनेनैव सिद्धेः। 'अनुपसर्गे' इत्यनुवृत्तेश्च। कर्मण्युपपदे च न। उक्तयुक्तेः। तदाह—**द्वाभ्यामिति**।

**ततः स्थ इति**। इदमपि पूर्वसाहचर्यात् कर्मण्युपपदे न।

---

१ 'गोसन्दाय इत्यत्र' इति ग. पाठः।

**आरम्भेति**। 'सुपी'त्येव सिद्धे 'स्थ' इति आरम्भसामर्थ्यात्कर्त्तुरपकृष्टः,[1] अर्थान्तराऽनिर्देशात् स्वाऽर्थे = भावे इति भावः। अत एवाऽस्य नित्यैकवचनाऽन्तत्वं, न तु पाकादिवत् द्विवचनाद्यपि। लिङ्गं तु लोकात्।[2] यद्यपि घञर्थे केनेदं सिद्धं, तथाऽपि नित्यसमासा[3]ऽर्थमिदम्। उपपदसमासो[4] नित्याऽधिकारस्थत्वान्नित्यः। 'घञर्थे' इति वार्त्तिके 'स्था-स्ना-पा-हनि-व्यधि-युध्यर्थमि'ति तु अकर्त्तृकारका[5]ऽर्थम्। अत एव 'प्रतिष्ठन्तेऽस्मिन् धान्यानीति प्रस्थ' इति भगवता व्याख्यातमिति दिक्।

**आखूत्थ इति**। '**ल्युः कर्त्तरीमनिज् भावे कः किर्घोः प्रादितोऽन्यतः**' इत्यमरेण भावे कस्य पुंस्त्वविधानादिति भावः। **प्रष्ठो गौरिति**। 'आतश्चोपसर्गे' इति कः। अग्रगामित्वेन मुख्यत्वं लक्ष्यते इत्याहुः। **कप्रत्ययान्तस्येति**। तेन 'गोस्थानमि'त्यादौ न[6]। 'परमेष्ठी' 'सव्येष्ठा' इत्यादिसिद्ध्यर्थं 'स्था-स्थिन्-स्थृणामि'ति वचनं कर्त्तव्यमिति बोध्यम्।

---

१ 'कर्त्तरि कृदि'त्यस्याऽसम्बन्धेन कर्त्तुः अपकृष्टः = दूरीकृतः सन्, स्वार्थे = धात्वर्थे एव भवतीत्यर्थः' इति ख. ङ. पाठः।

२ इतोऽग्रे—'स्व'शब्देन 'भावे' इत्यस्याऽनुपादानात्सामर्थ्याच्च भावलाभात् कर्त्रर्थकत्वं तक्रकौण्डिन्यन्यायोऽत्र बाधते इति बोध्यम्' इति ख. ग. पाठः।

३ इतोऽग्रे—'न च कारकत्वादेव नित्यसमासः। कारकेण समासस्य नित्यत्वे मानाऽभावात्। 'कर्त्तृकरणे' इति शास्त्रेण विकल्पस्यैव प्रतीतेश्च। अत एव चरेष्टादीनां सार्थक्यम्। अत एव कारकाणां कृदन्तसमभिव्याहारे असमस्तप्रयोगः सङ्गच्छते' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

४ 'उपपदसमासस्तु' इति ख. ग. ङ. पाठः।

५ इतोऽग्रे—'सत्सूद्विषे'ति सूत्रवक्ष्यमाणरीत्याऽनेनैव वा' इति ग. पाठः।

६ इतोऽग्रे—'कश्च प्रतिपदोक्तत्वात् 'सुपि स्थ' इति विहित एव गृह्यते। तेन 'प्रस्थ' इत्यत्र न षत्वम्' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

**द्वयमपीति** । ननु सजातीयाऽधिकारेण सजातीयपूर्वाऽधिकारनिवृत्तेरन्यत्र दर्शनात् 'सुपी'त्येतत् दृष्ट्वा 'कर्मणी'त्यस्य निवृत्तिरेवोचितेति चेन्न । 'चरेष्ट' इतिसूत्रे 'कर्मणी'त्यपि वर्त्तते' इतिभाष्यदर्शनेन 'कर्मणी'तिपदे स्वरितत्वद्वयकल्पनया, अधिकाराऽन्तरदर्शनेऽपि तदनिवृत्तेः कल्पनात् । तत्फलं 'तुन्दशोकयोरि'त्यादीनां कर्मण्येव प्रवृत्तिः । 'सुपी'त्येतत् अकर्मकेषु सावकाशमिति दिक् । **आलस्येति** । 'तयोर्गम्यमानयोरि'त्यर्थः । तत्र सामर्थ्यात् अलस-सुखाऽऽहर्त्रोः कर्त्रोरिति भावः ।

**तुन्दपरिमृज इति** । 'अचि क्ङिति वे'ति वृद्धिपक्षे-परिमार्जोऽपि । तदाह—**अलसादन्यत्रेत्यादि** । 'व्यवस्थितविभाषया पाक्षिक्यपि वृद्धिर्ने'त्येके । **मूलविभुजादिभ्य इति** । तादर्थ्ये चतुर्थी ।

प्रेदा । 'ज्ञ' इति जनेर्न निर्देशः । 'खनो घ च' 'हन' इत्यादौ धातुनिर्देशे अल्लोपाऽकरणात् । **अनुपसर्ग इत्युक्तेरिति** । अनुवृत्तेरित्यर्थः ।

**प्रादन्यस्मिन्निति** । प्रस्य सूत्रे विशिष्योपात्तत्वादिति भावः ।

**गोसङ्ख्य इति** । चक्षिङः ख्याञादेशः । 'ख्याधातोस्तु 'सम्'पूर्वस्य न प्रयोगः, आर्द्धधातुके च न प्रयोग' इत्युक्तम् ।

**गापोष्टक्** । अत्र गायतेरेव ग्रहणम्[2], न तु 'गाङ् गतौ', 'गा स्तुतौ' इत्यनयोः । अनभिधानात् । 'पा'धातुश्च[3] लुग्विकरणपरिभाषया, लाक्षणिकत्वेन, सकर्मकत्वेन च पिबतिरेव गृह्यते, न तु पाति-पायती[4] ।

---

१ 'अकर्मकेषु सावकाशस्य 'सुपी'त्यस्य सकर्मकस्थले 'कर्मणी'त्यस्य स्वरितत्वप्रतिज्ञाद्वयसामर्थ्येनैवाऽबाधकल्पनात्' इति ग. पाठः ।

२ इतोऽग्रे—'गायतेरेव ग्रहणम् । अभिधानात् । निरनुबन्धकाऽलुप्तविकरण-'पा'साहचर्याच्च' इति ख. ग. ङ. पाठः ।

३ 'स च' इति ख. ग. ङ. पाठः ।

४ इतोऽग्रे—'गामादे'ति वचनं साहचर्यस्य न बाधकम्, बहिरङ्गत्वात्, धर्मिग्राहकमानाच्चेत्याहुः ।' इति ख. ग. ङ. पाठः ।

**हरतेर**। 'उत्क्षेपणादन्यस्मिन्नर्थे वर्त्तमानादि'त्यर्थः। केचित्तु 'कर्मणि ल्युट्, बाहुलकात्। तेनोत्क्षिप्यमाणात् अन्यस्मिन् उपपदे इत्यर्थ' इत्याहुः।

**शक्तिलाङ्गलेति**। उद्यमनाऽर्थ आरम्भः। शक्तिः—शस्त्रविशेषः।

**सूत्रे चेति**। 'धार्येऽर्थे गम्यमाने सति, सूत्रशब्दे उपपदे' इत्यर्थः। **कवचेति**। कवचोद्यमनं क्रियमाणं, संभाव्यमानं वा वयो गमयतीत्याहुः। तेन असत्यपि कवचग्रहणे 'कवचहर' इति भवत्येव।

**आङि ताच्छील्ये**। फलनिरपेक्षा प्रवृत्तिः–ताच्छील्यम्।

**स्तम्बकर्णयोः**। रमिजपी अकर्मकौ। **हस्तीति**। अन्यत्र ण्वुल्तृचौ।

**शमि**। शम्युपपदे धातुमात्रादच्। **टो मा भूदिति**। परत्वादिति भावः। **शङ्करा नामेति**। केचित्तु 'शं गृणाती'ति पृषोदरादित्वात् गस्य ककारे-'शङ्करा'। अत एव 'शङ्करे'त्यपि तस्यां प्रयुज्यते। एवं च 'धातु'-ग्रहणं व्यर्थमित्याहुः। अत्राऽपि पक्षे शम्युपपदे क्विपो बाधनाऽर्थमिद-मावश्यकमिति स्पष्टं 'स्थः क चे'त्यत्र भाष्ये।

**अधिकरणे शेतेः**। 'इत उत्तरम् 'अधिकरणे' इति, 'सुपी'ति, 'कर्मणी'ति चाऽनुवर्त्तते। यथायोग्यं सम्बन्ध' इति 'चरेष्ट' इत्यत्र भाष्ये स्पष्टम्।

**उत्तानादिष्विति**। 'कर्त्तृभूतेषु उत्तानादिषूपपदेष्वि'त्यर्थः। '**दिग्धसह-पूर्वाच्चेति वक्तव्यम्**'। दिग्धेन सह शेते इति 'दिग्धसहशयः'। मयूर-व्यंसकादित्वात्समासः। **गिरौ ड इति**। लोके 'गिरिश'[2]शब्दसाधुत्वोपाय-माह—**गिरिरिति**। स्पष्टं चेदं भाष्ये।

**चरेष्टः**। चरेः सकर्मकत्वेऽप्ययं कर्मण्युपपदे न। 'भिक्षासेने'ति-सूत्रे 'भिक्षा'ग्रहणादिति स्पष्टं भाष्ये। तदाह—**अधिकरणे** इति।

---

१ इतोऽग्रे—'अनुपसर्गे' इत्यनुवृत्तेः सोपसर्गे न' इति क. कुण्डलितः ख. ग. ङ. पाठः।

२ 'लोके 'गिरिश'शब्दस्तु 'छान्दसा अपि क्वचिद्भाषायामि'ति समाधेयः। प्रकारान्तरमप्याह—गिरिरिति' इति ग. पाठः।

**भिक्षां चरतीति**। 'भक्षयती'त्यर्थः। चरणेन अर्जयतीत्यर्थो वा। **सेनाचर इति**। सेनायां भ्रमति, सेनां वा प्रविशतीत्यर्थः। **आदायचर इति**। गृहीत्वा गच्छतीत्यर्थः।**पचादिष्विति**। 'ट'विधानन्तु नित्यसमासाऽर्थम्[1]।

**अग्रमग्रेणेति**। न च सर्व्वैः कर्मण्युपपदे एव प्रत्ययः स्यादिति वाच्यम्। पुरोऽग्रतःशब्दयोरव्ययत्वेन कर्मत्वाऽसम्भवात्तत्र तदसम्बन्धे, तत्साहचर्येण अग्रशब्देऽपि तदसम्बन्धादिति भावः। **एदन्तत्वमपीति**। अजाद्यदन्ताऽग्रशब्दस्य परनिपातकरणादिति भावः।

**हरदत्त इति**। पुरस्शब्दस्य लघ्वक्षरत्वेन तस्यैव पूर्वनिपातो युक्त इति,—अत्राऽरुचिः। 'अग्रेसर' इति तु अलुका सिद्धमित्याहुः।

**कृञो हेतु**। हेतुरिह[2] कारणमात्रम्। **आनुलोम्यम्**—आराध्यचित्ताऽनुवर्त्तनम्। **एषु द्योत्येष्विति**। 'उपपदानि तु न। 'शमि धातोरि'ति-'धातु'ग्रहणं हेत्वादिषु टबाधनार्थमि'ति भाष्योक्तेः।

**दिवाविभा**। 'अत्र 'कर्मणी'ति सम्बद्ध्यते। 'दिवा'शब्दस्याऽपि 'दिवामन्ये'त्यादौ वृत्तिविषये कर्मत्वदर्शनात्। केचित्तु 'दिवा = दिवसे प्राणिनः चेष्टायुक्तान् करोती'त्यर्थः। अधिकरणशक्तिप्रधानत्वाच्च 'दिवा'-शब्दांऽशे 'सुपी'त्येव सम्बध्यते इत्याहुः।

**अहेत्वादावपीति**। हेत्वादिग्रहणाऽननुवृत्तेरिति भावः।

'अत' इति तपरकरणात् 'अतः कृ' इत्यस्याऽप्राप्तेराह—**कस्कादित्वादिति**। नञि जहातेरुत्पन्नत्वेन उत्तरपदस्थत्वात् 'अतः कृ' इत्यस्याऽप्राप्तेराह—**कस्केति**। 'अव्युत्पत्तिपक्षे तु 'अतः कृ' इत्येव बोध्यम्।

**नित्यं समासे इति**। यद्यपि अस्याऽसिद्धत्वात् 'इदुदुपधस्ये'त्युचितं, तथापि 'प्रत्यया[3]ऽवयवभिन्नसस्ये'त्यर्थेन तदप्राप्तेरिदमेवोपन्यस्तम्। यद्यपि

१ इतोऽग्रे 'भिक्षासेने'ति तु कर्मण्यण्बाधनाऽर्थमपीति बोध्यम्'इति ग पाठः।

२ 'ऐकान्तिकं कारणमात्रम्' इति ग पाठः।

३ 'प्रत्ययाऽवयवभिन्नस्येत्यर्थेऽपि षत्वाऽर्थमिदमेवोपन्यस्तम्' इति ग. पाठः।

'अन्तकर'शब्देन नञ्समासे 'अनन्तकरः' सिद्ध्यति, तथापि कृदुत्तरपदप्रकृतिस्वराऽर्थम 'अनन्त'ग्रहणम। अन्यथा सतिशिष्टत्वात् अव्ययपूर्वपदप्रकृतिस्वरः स्यात्। अर्थभेदाच्चेत्याहुः। **वार्त्तिकमिति**। इदं कैयटाद्यनुरोधेन। 'इष्टिरियमि'ति तु **माधवः**। **परत्वादिति**। अच् अहेत्वादौ चरिताऽर्थ इति भावः। सूत्रे च किमादिग्रहणं प्रत्याख्येयमिति तात्पर्यम्। 'सूत्रस्थकिमादिग्रहणस्य भाष्येऽप्रत्याख्यानेन, हेत्वादिग्रहणस्य सूत्रे एव निवृत्तेश्च, एषु कृञः प्रत्ययद्वयमपी'त्यन्ये। एतन्मूलकमेव कैश्चित् 'अच् वा' इति पठितम्।

**कर्मणि भृ**। 'कर्मणी'त्यनुवृत्तेः 'कर्म'ग्रहणं स्वरूपपरम्। तदाह— **कर्मशब्दे इति**। 'कर्मणी'ति चाऽस्य विशेषणम्। तेन करणादौ नाऽतिप्रसङ्गः। **पशाविति**। कर्त्तृविशेषणं पशुः। अत्र पशुः प्रत्ययोपाधिः। तत्त्वं च प्रत्ययाऽन्तशब्दवाच्यत्वेन। अत एवाऽयं न प्रयोगोपाधिरित्याहुः। एवं च प्रकृत्यर्थविशेष्ये कर्त्तरि समुदायशक्त्या उपस्थितः पशुर्विशेष्य इति बोध्यम्। एवं सर्वत्र व्रीहिवत्सादिषु द्रष्टव्यम्।

**फलेग्रहिरिति**। 'स्यादवन्ध्यः फलेग्रहिः'। भट्टिस्तु फलग्राहकमात्रे प्रायुङ्क्त—'फलेग्रहीन् हंसि वनस्पतीनामि'ति। **चादिति**। अत एव'कुक्ष्यात्मनोर्मुम् वे'ति वार्त्तिकं नाऽपूर्वम्। देवापि-वाताप्यादयोऽप्यनेनैव चेन साध्याः। **ण्यन्तादिति**। खशः शित्त्वाण्ण्यन्तैजतेर्लाभः। न हि केवलस्य शित्त्वप्रयुक्तशबादिकृतविशेषोऽस्ति। इहाऽर्थत्वेऽपि सम्भवति उत्तराऽर्थत्वमात्रस्याऽन्याय्यत्वात्।

**अरुर्द्विषत्**। इह'ह्रस्व'इत्यनुवर्त्त्य षष्ठ्या विपरिणाम्य, अनन्तरत्वाच्च

---

१ 'स्वरः स्यादित्याहुः' इति ख. ग. पाठः।

२ 'अरुर्द्विष। उत्तरपदाऽऽक्षिप्तपूर्वपदस्याऽचा विशेषणात्तदन्तविधिलाभे, अन्तग्रहणं 'शुनिन्धय' इत्यादौ ह्रस्वे कृते मुमर्थम्' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

'खितीति सूत्रविहितह्रस्वाऽन्तस्य मुमि'ति व्याख्येयम् । अन्यथा परत्वात् मुमि, अनजन्तत्वान्न स्यात् ह्रस्वः । एवं च स्वतो ह्रस्वेऽपि मुम्सिद्धये पूर्वं 'खिती'ति ह्रस्वः कार्यः । अत एव दिवामन्यादौ अव्ययानां न मुम् । ह्रस्वाऽभावात् । 'उपकुम्भंमन्य' इत्यादावव्ययीभावे ह्रस्व-मुमौ भवत एव । अव्ययीभावाऽव्ययत्वस्याऽनित्यत्वात् । स्पष्टं चेदम् 'अव्ययीभावश्चे'ति-सूत्र-प्रकृतसूत्रभाष्ययोः । शर्धनं 'शर्धः' । 'शृधु शब्दकुत्सायाम्' । घञ् । शर्द्धः-अपानशब्दः । माषा इति । भाष्ये तु 'मृगा' इति पाठः । मुख्याऽर्थ एवाऽत्र जहातिः । 'गर्धंपु' इति भाष्ये पाठाऽन्तरम् । तत्तु माधवादि-विरुद्धम् ।

**वार्त्तिकमिति** । तेन यथासङ्ख्यं नेति भावः[2] । **स्तनन्धयीति** । टित्त्वस्याऽवयवे अचारिताऽर्थ्यादिति भावः । 'खश्येव ङीप्, नाऽन्यत्रे'ति **वर्द्धमान-क्षीरस्वामि-हरदत्तादयः** । सम्प्रदाय एवाऽत्र शरणम् । तेन 'पाघ्रे'ति 'श'प्रत्यये, 'आतोऽनुपसर्गे' इति 'क'प्रत्यये, अन्यत्र च टाबेव ।

यद्यपि 'नाडीमुष्टयोश्चे'ति वार्त्तिकमि'ति 'नासिके'तिसूत्रस्थभाष्यात् आपाततः प्रतीयते, तथापि यथासङ्ख्यसूत्रस्थभाष्यस्वरसात् सूत्रमेवेद-मिति बोध्यम् ।

**यथासङ्ख्यं नेति** । इदं चाऽत्रैव भाष्ये स्पष्टम् । एतद्विरोधात् 'यथासङ्ख्य'सूत्रस्थं भाष्यं प्रौढिवाद इति बोध्यम्[3] । 'घटीखारी'ति-वार्त्तिके 'खरी'ति पाठाऽन्तरम् । **वृत्तौ** 'वातन्धम' इत्युदाहृतम्, तत्तु भाष्ये न दृष्टम् । इदं वार्त्तिकं 'नाडीमुष्टयोश्चे'ति चेन लब्धम् ।

---

१ इतोऽग्रे—'तत्र ह्यन्तशब्दःसमीपवाची । कर्मधारयः । समीपश्च 'खितीति'-ह्रस्वविधायकविहितः अच् । उपस्थितत्वात्' इति क. कुण्डलितः, ख. ग. ङ. पाठः ।

२ इतोऽग्रे—'अत एव स्तनशब्दस्य परनिपातः' इति ग. पाठः ।

३ इतोऽग्रे—'एतदर्थमेव घ्यन्तस्य मुष्टिशब्दस्य परनिपातः' इति ख. ग. ङ. पाठः ।

**उदि कूले**। 'अत्र न उदिरुपपदं, किन्तु विशेषणं रुजिवहोः, तेन यथासङ्ख्यं ने'ति यथासङ्ख्यसूत्रे भाष्ये स्पष्टम्। अत एव'उत्कूलयोरि'ति नाऽसूत्रि। 'उदि सति, कूले उपपदे, रुजिवहोरनन्तरः प्रत्यय' इत्यर्थः। 'ते प्राग्धातोरि'ति नियमात् नाऽतिप्रसङ्गः। तत्फलितमाह—**उत्पूर्वाभ्यामिति**। 'उदि' इति, 'रुजिवहोरि'ति च पञ्चम्याः स्थाने सप्तमी-षष्ठ्यौ' इति तु यथासङ्ख्यसूत्रे कैयटः। **अरुन्तुद इति**। 'मर्मस्पृगि'त्यर्थः।

**असूर्य**। यथासङ्ख्यम् अत्र। **असूर्यम्पश्या इति**। गुप्तिपरं चेदम्-यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति। तेन सत्यपि सूर्यदर्शने प्रयोगो भवत्येव। यदा तु सूर्येतरदर्शनं विवक्ष्यते,तदा खश् न। अनभिधानात्। यदाऽपि सूर्यदर्शनाऽभावमात्रं, न गुप्तिस्तदाऽपि न। तत एव। ध्वनितं चेदं 'सुडि'ति सूत्रे भाष्ये। 'असूर्य'शब्दस्याऽनर्थकत्वेऽपि 'उपपदमि'ति महासंज्ञया सुबन्तस्यैव उपपदत्वेन सुबुत्पत्तिः। स च द्वितीयैव। प्रकृत्येकदेशस्य कर्मत्वेन, अन्याऽपेक्षया युक्तत्वात्[1], 'ललाट'साहचर्याच्चेति बोध्यम्।

**प्रियवशे**। खचश्चित्त्वं चिन्त्यफलम्। न च 'खचि ह्रस्व' इत्यादौ विशेषणाऽर्थम्। 'खे' इत्येव खशो व्यावृत्तेः। 'कुलीन' इत्यादौ च 'णौ' इत्यनुवृत्त्या न दोषः। न च निरनुबन्धकत्वादस्यैव ग्रहणं स्यात्,'णौ'इति च निवर्त्तेतेति वाच्यम्। येनाऽनुबन्धेन सानुबन्धकत्वं, तदनुच्चारणे एव धर्मिग्राहकमानेन अस्याः प्रवृत्तेरित्याहुः। खशि प्रकृते भिन्नप्रत्ययकरणम् उत्तराऽर्थम् 'द्विषन्तप'इत्यादौ ह्रस्व-णिलोपौ यथा स्यातां, शप् माभूदिति। इह करणम् अन्यतोऽपि विधानाऽर्थम्। तद्वार्त्तिकमुखेनाऽऽह—**गमेरिति**।

**असंज्ञाऽर्थमिति**। संज्ञायां तु 'गमश्चे'ति सूत्रेण सिद्धमिति भावः।

**मितङ्गम इति**। **वृत्तौ** 'मतङ्गम' इति पाठः। 'खच्च डिद्वे'-त्यनेन 'गमेः सुपी'ति वार्त्तिकविषयेऽपि क्वचित् डित्त्वम्। 'विहायस'

---

१ 'अन्याऽपेक्षाया अयुक्तत्वात्' इति क्वचित् शोधितः पाठः।

इत्यनेन योगविभागात् । तदाह—**भुजङ्ग इति** । 'भुजाभ्यां गच्छती'ति विग्रहः । रूढोऽयम् । अत एव वार्त्तिके 'कर्मणी'ति प्रकृते, 'सुपी'त्युक्तम् ।

**नाण्पेरिति** । 'चुरादेः, हेतुमण्ण्यन्तभ्वादेश्च ग्रहणमि'ति वृत्तिः । **अनित्येति** । अत एव 'उपपदविधावेषा ने'ति ङ्याप्सूत्रभाष्ये उक्तम् ।

**वाचि** । 'वाक्शब्दे कर्मणो'त्यर्थः । शास्त्रबोधितः सङ्कल्पविशेषो व्रतम् ।

**वाचंयमपु** । अत्र 'वाचंयमो व्रते', 'पुरन्दरः', 'सर्वे सहः' इत्येव सूत्र्यतां, किं 'वाचंयमे'त्युत्तरपदाऽधिकारे अमन्तत्वनिपातनेने'ति चिन्त्यमि'ति **हरदत्तः** ।

**पूःसर्व** । 'दॄ विदारणे', अस्यैव ग्रहणम् । न तु 'दॄ भये', 'दृङ् आदरे' इत्येताविति सम्प्रदायः[2] । **भयशब्देनेति** । 'येन विधिरि'त्यत्र भाष्ये स्पष्टमेतत् । भाष्यवार्त्तिकप्रामाण्यात् शब्दरूपं विशेष्यमादायाऽपि तदन्तविधिरत्रेति बोध्यम् । **क्षेमङ्कर इति** । 'क्षेमङ्करी'त्यत्र गौरादित्वान्ङीष् ।

**आशिते भुवः**[3] । 'अश भोजने' इत्यतो ण्यन्तात्प्रयोज्ये कर्मणि क्तः । उत्तरसूत्रात् 'संज्ञायामि'त्याकृष्यते । तेन असंज्ञायां न । अत एव 'ध्रौव्यगती'त्यादिना भावकर्माऽधिकरणेषु यः क्तस्तदन्तो न गृह्यते[4] । सोपसर्गस्य, प्राप्त्यर्थस्य वा भुवः सकर्मकत्वेऽपि, 'कर्मणी'ति न सम्बध्यते, व्याख्यानात्, 'संज्ञायामि'त्यपकर्षाच्च । तदाह—**आशितो भवतीति** । यावता ओदनेन अतिथ्यादिर्भोजितो भवति, स एवमुच्यते ।

१ 'अयमेव गृह्यते' इति मनोरमापाठः ।

२ इतोऽग्रे—'बाहुलकेनेति । 'पुरन्दर' इत्यत्र निपातनेनैव सिद्धे, 'पूःसर्वयोरि'ति सूत्रकरणेनाऽन्यत्राऽप्युपपदे दारेः खचो ज्ञापनात् इदं सिद्धमि'त्यन्ये । इति ख. ग. ङ. पाठः ।

३ इतोऽग्रे—'अश भोजने'इत्यत आङ्पूर्वात् अविवक्षिते कर्मणि, कर्त्तरि क्तः । यद्वा केवलादेव क्तः । यद्वा अशेर्ण्यन्तात्प्रयोज्ये कर्मणि क्तः' इति ग. पाठः ।

४ इतोऽग्रे—'आशितः कर्त्ते'ति सूत्रे प्रसिद्धस्यैव ग्रहणाच्च' इति ग. पाठः ।

इह 'वाऽसरूप'न्यायात् ल्युडपि,—'आशितभवनः' । 'आशितभवनम्' । 'क्तल्युडि'ति तु यत्र ल्युटोऽपवादत्वं, तद्विषयमि'त्युक्तं प्राक् ।

**संज्ञायां भृ** । 'विश्वम्भरः कैटभजित्', 'रसा विश्वम्भरा स्थिरे'–त्यमरः । **व्युत्पत्तिमात्रमिति** । तत्फलं स्वराऽवग्रहौ । अत एव 'रथन्तरमाजभारे'त्यादौ कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तमधीयते । 'रथमि'त्यवगृह्णन्ति च । अखण्डत्वे तु 'नब्विषयस्ये'त्याद्युदात्तः स्यात् । निरवग्रहता च स्यात् । **इत्युक्तमिति** । माधवाद्यनुरोधेनेत्यर्थः ।

**मतान्तरेति** । 'चित्तेन्द्रिययोर्व्यापारोपरमे शम-दमौ' इति वेदान्तग्रन्थाऽनुसारि-हरदत्तादिमते त्वित्यर्थः ।

**गमश्च** । अत्र 'संज्ञायामि'ति वर्त्तते । चकारेण जीवञ्जीवक-शिवङ्कर-शुभङ्करादयः साधवः । योगविभाग उत्तराऽर्थः । **सुग इति** । मार्ग इत्यर्थः । कर्मणि खजेव, 'सुगमः' । **'निसो देशे डो वाच्यः'** । 'निर्गो देशः' । **ग्रामग इति** । 'गुरुतल्पगः' 'स्व्यगारग' इत्यादेरनेनैव सिद्धिः । अनेनैव सर्वसिद्धौ 'सर्वत्रे'त्यादि प्रपञ्चाऽर्थम् । 'सप्तम्यां जनेरि'ति प्रकरणस्था'ऽन्येष्वपि दृश्यते' इति सूत्रेणैव सिद्धे, इदं 'भूतकालं विनाऽपि यथा स्यादि'त्येवमर्थम् । वस्तुतस्तत्सूत्रस्थाऽपिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वादिदं वार्त्तिकं तेनैव गताऽर्थम् । ध्वनितं चेदम् 'इको गुणे'तिसूत्रे जनेर्ड प्रक्रम्य 'गमेरप्ययं डो वक्तव्य'इति वदता भाष्यकारेणेत्याहुः ।

**अण् अन्त्यस्य चेति** । 'अन्त्य'ग्रहणं निष्फलम् । **'दारौ' इति**—शब्दाऽपेक्षया पुँस्त्वम् । **चारौ वेति** । टस्यैव विकल्पो, व्याख्यानात् ।

**कुमारशी**[2] । शिरसः शीर्षभावः, अत एव निपातनादिति 'भूते' इति-

१ 'ल्युडपि । क्तोऽपि' इति ग. पाठः ।

२ 'कुमारशी । अत्र 'कर्मणी'ति सम्बध्यते । 'सुप्यजातौ' इति सिद्धे अताच्छील्याऽर्थं, शिरसः शीर्षभावाऽर्थं च वचनमि'ति हरदत्तः । नच शिरस्शब्दो जातिवचनः । स्वाङ्गलक्षणेन जातिलक्षणस्य बाधादिति तदाशयः ।

सूत्रे भाष्ये स्पष्टम् । **लक्षणेति।** सूत्रे लक्षणशब्द अर्श आद्यजन्त इति भाष्ये स्पष्टम्। **जायाघ्न** इति। जायामरणसूचकपाणिरेखाविशेषादिलक्षणवति गौणो हन्तृत्वव्यपदेशः । 'गमहने'त्युपधालोपः । स्त्रियां टित्त्वान्ङीप् ।

**शक्तौ हस्ति** । शक्ताविति किम् । विषेण हस्तिनं हन्तीति 'हस्तिघातः' । शक्तिग्रहणसामर्थ्याद्धि प्रकर्षो विज्ञायते, 'स्वबलेनैव हन्तुं या शक्ति'रिति ।

**कपाटघ्न इति**। कं शिरः पाटयति कपाटम्। 'कवाटे'ति पाठे तु बाहुलकात् कोः आटजिति बोध्यम्। 'अटतेः पचाद्यचि 'कवं चोष्णे' इति योगविभागात्कोः कवादेश' इति **हरदत्तः**।

**पाणिघ**। 'शिल्पिनि कर्त्तरी'त्यर्थः। **भाष्येति**। तत्र हि एवमुक्तम्-'ल्युट्ख्युनोर्न रूपे, स्वरे वा विशेषः। लिन्नित्स्वराभ्यां धातोरेव उदात्तत्वात्। ङीबपि ख्युन उपसङ्ख्यानात्, टित्त्वाच्च तुल्यः। उपपदसमासो गतिसमासेन तुल्यः । च्व्यन्तस्य गतित्वात् । मुमूह्रस्वौ तु'अनव्ययस्ये'ति ख्युन्यपि निषिद्धौ। तस्मात् उत्तराऽर्थं तदि'ति। 'इह किं चित्रपो' इति-न्यायस्तु अनित्य इति तदाशयः। च्व्यर्थे किम्?। 'आढ्यङ्कुर्वन्त्यनेन'।

**कर्त्तरि भुवः**। अच्व्यन्तेषु किम्। 'आढ्यीभविता'। इष्णुच् तु न। गतिसंज्ञकपूर्वेभ्यो बहुधा ताच्छीलिकाऽप्रवृत्तेरिति पूर्वसूत्रे भाष्ये स्पष्टम्।

'कर्त्तृ'ग्रहणं करणाऽनुवृत्तिभ्रमनिरासाऽर्थमि'ति प्राञ्चः। यत्तु कर्त्तृग्रहणं कर्त्तृप्रचयाऽर्थम्-'कर्मण्युपपदे एकः कर्त्ता, अन्यत्र चाऽपर'इति। न च

आकडाराऽतिरिक्ते संज्ञानां समावेशदर्शनादिदं चिन्त्यम् । [1]अनयोरुपपदयोर्हन्तेः 'कर्मणि हन' इत्यनेन प्राप्तोऽपि भूतेऽपि णिनिर्नेति 'भूते' इति सूत्रे भाष्ये स्पष्टम्' इति ख. ग. ङ. पाठः ।

१ 'लित्खित्स्वराभ्याम्' इति ग. पाठः ।

1 'इदं सूत्रं भूते न प्रवर्त्तते । तक्रकौण्डिन्यन्यायात् । 'कर्मणि हन' इत्यनेन एतदतिरिक्तकर्मण्युपपदे भूते काले णिनिविधानेन, तत एवं न्यायादिति 'भूते' इति सूत्रे भाष्ये स्पष्टम्' इति ग. ङ. पाठः । क. कुण्डलितः ।

भुवोऽकर्मकत्वात् 'कर्मणी'स्यस्याऽसम्बन्धे, उक्ताऽर्थे फलाऽभावः, अर्थाऽन्तरे सकर्मकत्वेऽप्याढ्यादीनां च्व्यर्थत्वाऽसम्भव इति वाच्यम्। अन्तर्भावितण्यर्थस्य करोतिपर्यायत्वेन, तद्योगे कर्मत्वस्य, च्व्यर्थयोगस्य च संभवात् तत्रैव सूत्रं प्रवर्त्तेत। 'कर्मणी'त्यस्य निवृत्तौ मानाऽभावात्। कर्त्तृग्रहणाच्च सर्वत्र प्रवृत्तिरि'ति। तन्न। भुवोऽन्तर्भावितण्यर्थकस्याऽप्रसिद्धत्वेन अत्र ग्रहणाऽभावात्। ध्वनितं चेदं 'भुवो भावे' इति सूत्रे भाष्ये। रमि-जपोरप्यन्तर्भावितण्यर्थत्वसम्भवेन 'स्तम्बेरम' इत्यसिद्धेश्च। न हि तत्राऽपि 'कर्त्तृ'ग्रहणमस्तीत्याहुः।

खिष्णुचः खकारो मुमर्थः। अस्य इकारो व्यर्थः[1]। इटा सिद्धेः। न च इकाराऽभावे खस्य चर्त्त्वं स्यात्। व्याख्यानेन निर्णयस्य कर्त्तुं शक्यत्वेनाऽक्षतेः। न च 'कृत्योकेष्णुच्चार्वादय' इति सूत्रे अस्य ग्रहणं न स्यात्। लाक्षणिकत्वात्, षत्व-णत्वयोरसिद्धत्वेन 'इष्णु' इति रूपाऽभावाच्चेति वाच्यम्। तदनुबन्धकपरिभाषया अलंकृञादीष्णुच एव तत्र ग्रहणादिति केचित्[2]। तन्न। इकारोच्चारणसामर्थ्येन तद्बाधात्। न च प्रत्ययस्वरेण सिद्धे, चकारोच्चारणसामर्थ्यात् लक्षणपरिभाषाऽसिद्धत्वयोस्तदनुबन्धकपरिभाषायाश्च बाधेनैव स्वरः सिद्धः, खुष्णुचः करणे तु असिद्धत्वशङ्कैव नेति वाच्यम्। भाष्ये प्रत्याख्यातत्वेन इष्टाऽपत्तेः। निरूपितं चेदं भाष्यप्रदीपोद्द्योते।

'षत्वणत्वोच्चारणसामर्थ्यादस्य ग्रहणमि'ति हरदत्तोक्तं तु न न्याय्यम्। तदुच्चारणस्य प्रक्रियालाघवाऽर्थत्वेन सामर्थ्याऽयोगात्।

१ 'खिष्णुच इकारो व्यर्थः' इति ग. पाठः।

२ 'एव तत्र ग्रहणात्। इकारोच्चारणसामर्थ्यादेव परिभाषाद्वयबाधेन स्वरसिद्धौ, तद्वैयर्थ्यमेव। यद्वा खुष्णुजेव कार्यः, असिद्धत्वस्य प्राप्तेरेवाऽभाव इति दिक्। यत्त्विकारोच्चारणादन्यतः अनुदकेऽपि खिष्णुजिति। तन्न। भाष्यविरोधात्' इति ग. पाठः।

**स्पृशो । कर्मणीति निवृत्तमिति ।** 'कर्त्तरी'ति वर्त्तते । तच्च अस्वरितत्वादेव 'करणे' इत्यस्य निवृत्तौ, पूर्वत्र व्यर्थं सत् अत्र कर्तृप्रचयाऽर्थम् । 'तत्सामर्थ्यात् अस्य निवृत्तिरि'ति वृत्त्युक्तेरिति भावः । वस्तुत इदं चिन्त्यम् । मन्त्रस्पृगादेः क्विपाऽपि सिद्धत्वात् । न च यङ्लुङन्ते स्वरे विशेषः । नकारप्रत्याख्यानपरप्रकृतसूत्रस्थभाष्यप्रामाण्येन स्पृशेर्यङ्लुगभावस्य ध्वनितत्वात् । 'क्विन्प्रत्ययस्ये'ति बहुव्रीहिबलात् कुत्वस्याऽपि[1] सिद्धेः । अत एव 'सत्सूद्विषे'तिसूत्रे 'सदादिषु[2] सुपग्रहणं कर्त्तव्यमि'तिभाष्यं सङ्गच्छते । 'इदं सूत्रम् उपसर्गे न प्रवर्त्तते । 'अनुपसर्गे' इत्यनुवृत्तेः । 'अनुदके' इति पर्युदासेन सत्त्ववाचकस्यैव ग्रहाच्चे'ति केचित् । सोपसर्गेऽपि क्विपो दुर्वारत्वेन फलं चिन्त्यम् ।

अनुदके किम् ? । 'उदकस्पर्शः' । 'अनुदके' इत्येतत्सामर्थ्यात्क्विबपि नेत्याहुः । ( **सद्दगिति** । कर्मकर्त्तरि[3] प्रत्ययः । स्थ्यर्थाऽनुगुणत्वात् ) ।

**द्युसदिति** । सप्तम्यन्तेतरत् पूर्वपदम् । सप्तम्यन्तत्वे 'हृद्द्युभ्या'मित्यलुगापत्तिः[4] । अत एव 'आदितेया दिविषद' इति सङ्गच्छते । 'पूर्वपदादि'ति षत्वं न । 'छन्दसी'त्यनुवृत्तेः । दिविषदि सुषामादित्वात्तद्बोध्यम् ।

**उपनिषदिति** । 'सदिरप्रतेरि'ति षः । **अण्डसूरिति** । 'द्विषा साहचर्यात्

---

१ 'कुत्वस्याऽपि सिद्धेः । अत एव ऋत्विगादिसूत्रे अञ्चेः सुपि क्विन्निपातनैः सह निर्देशेन अत्राऽपि तत्प्रयुक्तकार्यदर्शना'दिति वृत्तिः सङ्गच्छते । अन्यथा पूर्वत्रैव 'कर्मणी'त्यस्य निवृत्तौ, न्यायेनैव सिद्धे, अत्राऽर्थे साहचर्याऽऽश्रयणवैयर्थ्याऽऽपत्तेः' इति ख. ग. ङ पाठः । क. कुण्डलितः ।

२ 'सदादिषु सुब्ग्रहणं कर्त्तव्य'मिति भाष्यात् । तत्र 'कर्मणी'त्यस्य निवृत्तेर्व्याख्यानतोऽवश्याश्रयणीयत्वेन, मध्येऽप्यनुपयोगान्मूलकृताऽत्रैव तन्निवृत्तमित्युक्तम् । भाष्ये त्वत्राऽनुवृत्तावपि क्षत्यभावं बोधयितुं तन्नोक्तमिति दिक्' इति ग. ङ पाठः ।

३ अयं पाठः क. कुण्डलितः ।

४ 'अलुगापत्तिमाहुः' इति ख. ग. पाठः ।

अदादेरेव ग्रहणं, न तु सुवति-सूयत्योरि'ति वृत्तिः । 'अनुपसर्गे' इत्यस्य निवृत्त्यैव सिद्धेः, 'उपसर्गेऽपी'ति 'अन्यत्र सुप्ग्रहणे उपसर्गग्रहणं ने'ति-ज्ञापनाऽर्थम् । तेन 'वदः सुपी'ति उपसर्गे न । अत्रत्योपसर्गग्रहण-ज्ञापकतापरभाष्यप्रामाण्यात् 'गदमदे'त्यत्र 'अनुपसर्गे' इत्यस्याऽस्वरित-त्वमेव । मध्येऽसम्बन्धात् । अत एव 'प्रगह्यमि'त्यादिसिद्धिः । 'गोसन्दाय' इत्यादौ तु 'क'व्यावृत्तिज्ञापकादेव[1] । प्रष्ठस्य 'आतश्चोपसर्गे' इत्यनेन सिद्धिरिति दिक् ।

वेदविदिति । 'लाभाऽर्थव्यतिरिक्तानां सर्वेषां ग्रहणम् , अकारस्य विवक्षितत्वादि'ति वृत्तिः । अग्रग्रामाभ्यामिति । 'स एषां ग्रामणीरि'ति-निर्देशज्ञापितमेतत् । अत एव नीरूप-धातुप्रकृतिक-प्रत्यये 'ग्रामणाय' इत्यादौ प्रवर्त्तते । 'अय-पये'त्यादिदण्डकपठितनयतेः 'ग्रामनाय' एव ।

१ इतोऽग्रे—'निरनुबन्धकत्वात्, अलुग्विकरणत्वात्, सत्साहचर्याच्च सुवतेरेव ग्रहणमित्यन्ये' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

२ 'उपसर्गेऽपीति स्पष्टाऽर्थम् । यत्तु 'अन्यत्र सुप्ग्रहणे उपसर्गग्रहणं ने'ति ज्ञापनार्थम् । तेन 'वदः सुपी'ति उपसर्गे ने'ति भाष्यम् । तत्प्रौढ्या । तत्र 'गदमदे'त्यतोऽनुपसर्गग्रहणाऽनुवृत्त्यैव सिद्धेः । यदपि कैयटेन 'स्पृश' इत्यस्य सोपसर्गेऽप्रवृत्तिः फलमुक्तम् । तन्न । क्विपो दुर्वारत्वात् । वस्तुतो-ऽत्रत्योपसर्गग्रहणज्ञापकतापरभाष्यप्रामाण्यात्' इति ख. ग. ङ. पाठः ।

३ 'गोसन्दाय'इत्यादौ [1]'क'व्यावृत्तिर्भाष्योक्तरीत्या ज्ञापकादेव । ज्ञापकसिद्ध-स्याऽसार्वत्रिकत्वात् 'प्रष्ठ' इत्यादिसिद्धिः, 'आतश्चोपसर्गे'[2] इत्यनेन वा तत्सिद्धिरिति दिक्' इति ख. ग. ङ. पाठः ।

४ कः = 'सुपि स्थ' इत्यत्र 'सुपी'ति विभक्तसूत्रादिविहितः 'क' प्रत्ययः ।

५ 'अत एव' इत्यारभ्य 'बहुश्रुतैः कार्यः' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः । मनोरमाशब्दरत्नस्थत्वात् ।

1 'टग्व्यावृत्तिः' इति सर्वत्र पाठः ।

2 'न च प्रष्ठः 'आतश्चोपसर्गे' इत्यनेन सिद्धः । 'तक्रकौण्डिन्य'न्यायेन स्थाधातौ तदप्रवृत्त्यापत्तेरिति दिक्' इति ग. पाठः ।

एतेन 'क्विब्विषयमिदमि'ति परास्तम् । ध्वनितं चेदं 'वाऽसरूप'सूत्रे भाष्ये 'ग्रामणाय' इति णत्वसहितप्रयोगेण । क्वचित्पुस्तके भाष्ये दन्त्यपाठो दृश्यते, तदा 'नी'रूपो यः प्रत्ययः = क्विप्, तद्विषयतैव । अत्र पाठ-निर्णयो बहुश्रुतैः कार्यः ।

**भजो ण्विः** । 'सुपि', 'उपसर्गेऽपी'ति च वर्त्तते ।

**अदोऽनन्ने** । 'जनसनखनक्रमगमो विट्' इत्यतो 'विडि'ति वर्त्तते ।[1] (तत्तु छान्दसत्वादत्र नोक्तम्)।[2] **उपपदस्येति** । 'क्रव्ये चे'ति सूत्रं तु आम-मांसभक्षके 'क्रव्याद्' इत्येतद्व्यावृत्त्यर्थमिति भावः । **छन्दसीति निवृत्त-मिति** । 'आतो मनिन्नि'ति सूत्रे 'विजुपे' इत्यतोऽनुवर्त्तमानमित्यर्थः । दृशिग्रहणादुपपदस्याऽपि व्यभिचारः । वनिपस्तु 'शर्वरी'त्युदाहरणम् ।

**सुशर्मेति** । 'सुष्ठु शृणाती'ति, 'प्रातरेती'ति चाऽर्थः ।

**रोट् रेडिति** । 'रुष रिष हिंसायाम् ।'

**क्विप् च** । अत्राऽपि 'दृशि'ग्रहणमनुवर्त्तते । 'क्विप् चाऽन्येभ्योऽपि दृश्यते' इति ताच्छीलिकप्रकरणे भाष्योक्तेः । **वाहभ्रडिति**। वाहोऽश्वः, ततो भ्रश्यतीति विग्रहः । 'वहाभ्रडि'ति पाठे-वहः = स्कन्धः । 'अन्येषा-मपी'ति दीर्घः । **मित्रशीरिति** । अत्र यथा इत्त्वं तथा प्रत्ययलक्षणसूत्रे निरूपितम् ।

**आशास इति** । 'शास इदङ्'ति तु यस्माच्छासेरङ् तत्रैव । अङ् च 'सर्त्तिशास्ती'ति सूत्रे 'परस्मैपदे' इत्यनुवृत्तेः, अर्त्तिसर्त्तिभ्यां परस्मैपदि-भ्यां साहचर्याच्च परस्मैपदिन एवेति भावः । 'आशिषि लिङि'त्यादि-निर्देशसिद्धमिदम् ।

---

१ 'जनसने'त्यतो विडिति' इति क. ख. ङ. पाठः ।

२ अयं ख. ग. ङ. पाठः । क. कुण्डलितः । तत्र तत्तु = 'जनसनक्रमगमो विट' इति सूत्रन्तु । अत्र = कृत्प्रकरणे इत्यर्थः ।

**इस्मन्**। 'खचि ह्रस्व' इत्यतो 'ह्रस्व' इति, 'छादेर्घे' इत्यतः 'छादेरि'ति[1] चाऽनुवर्त्तते। **सुम्वाविति**। 'ओः सुपी'ति यण्। **लोपश्चेति**। अनुनासिक-लोप इत्यर्थः। **संस्था इति**। अत्र यथा ईत्त्वं न तथा 'वनो र चे'त्यत्र व्युदपादि। अत्र तिष्ठतेरन्तर्भावितण्यर्थत्वे 'शम्'इत्यस्य कर्मत्वम्, अन्यथा तु न कर्मत्वम्, उभयथाऽपि 'सुपी'त्यस्यैव सम्बन्धात्प्रत्ययो भवत्येव।

ननु 'आतोऽनुपसर्गे' इत्यनेन,'सुपी'ति विभक्तेन वा कस्य,'क्विप् चे'-त्यनेन क्विपश्च सिद्धाविदं व्यर्थमत आह—**शमीति**। धातुग्रहणसाम-र्थ्यात् धातुमात्राद्भवन् अच् यद्यपि[2] असरूपत्वात् ण्वुलादीन्न बाधते, तथापि यथा हेत्वादिषु कृञष्टं बाधते-'शङ्करोति तच्छीला शङ्करा परिव्राजि-के'त्यत्र,-तथा तिष्ठतेः क-क्विपावपि बाधेत। न च कस्य परत्वाद्बाधेन, सरूपतया च वाऽसरूपाऽप्रवृत्त्या, नित्यबाधेऽपि, क्विप् तेन न्यायेन पक्षे सुलभ इति वाच्यम्। 'धातु'ग्रहणाद्विध्यन्तरकल्पनेन, तत्सामर्थ्यात् हेत्वादिषु प्राप्तस्य परस्य टस्येव, वाऽसरूपन्यायेन पक्षप्राप्तक्विपोऽप्यत्र बाधाऽऽपत्तेः। न च 'पुरस्तादपवाद'न्यायेन टस्यैव स बाधको, न क्विप इति वाच्यम्। 'येन नाऽप्राप्ति'न्यायेन क्विप एव बाध' इत्यस्याऽपि वक्तुं शक्यत्वात्। तस्माद्बाध्यसामान्यचिन्तया उभयोरपि स बाधकः। तस्मात् 'स्थः क चे'ति बाधकबाधनाऽर्थम्। न चैवं 'स्थः क चे'त्यत्र चो व्यर्थः, वाऽसरूपन्यायेन कस्याऽभावे क्विपः सिद्धेरिति वाच्यम्। अस्य धातुग्रहणप्राप्ताऽजपवादत्वेऽपि, क्विबपवादत्वाऽभावेन, धातुग्रहण-बाधितक्विपः चं विना साधयितुमशक्यत्वादिति स्पष्टं भाष्ये।

ननु 'शमि धातोः' इत्यनन्तरमेव 'स्थः क चे'त्यस्तु। चेन अचि, सवर्ण-दीर्घेण रूपसिद्धेः[3]। अन्तवद्भावेन धातुत्वात् 'शंस्थः' इत्यादौ 'आतो धातो-

१ 'छादेरि'ति चाऽनुवर्त्तते। योगविभागसामर्थ्यात् अद्युपसर्गेऽप्येतत्' इति ग. पाठः। २ 'यद्यपि विजातीयत्वात्' इति ग. पाठः।
३ 'रूपसिद्धिः' इति ग. पाठः।

रि’ति लोपसिद्धिः । स्थानिवत्त्वं तु न । अपूर्वविधित्वात् । एवं च धातुग्रहणसामर्थ्यात्क्विपोऽप्राप्तेः, ईत्त्वाऽभावार्थं च न यतनीयमिति चेन्न । पूर्वधर्माऽवच्छिन्नोद्देश्यकविधिसत्त्वेन ‘कृदतिङ्’सूत्रस्थभाष्यरीत्या स्थानिवत्त्वस्य दुर्वारत्वात् । ‘धियौ’ इत्यादावनया रीत्या इयङि न पूर्वरूपस्य स्थानिवत्त्वम् । इयङ आकारात्पूर्ववृत्तिधर्माऽवच्छिन्नोद्देश्यकत्वाऽभावात् । इवर्णाऽन्तधातोर्हि सः । एतेन ‘जुहुवतुरित्याद्यसिद्धिरत्रे’त्यपास्तम् । ‘धियौ’ इत्यत्र एकादेशस्थाने ‘हल’ इति दीर्घप्रवृत्तेश्च । ‘भी ई भिय’ इतिस्थानिवत्सूत्रस्थभाष्ये तु सौत्रत्वादियङ् । लोके त्वीदृशरीत्या प्रयोगोऽसाधुरेव । ‘परनिमित्त’ इत्यत्र ‘परः अस्थानीभूत एव गृह्यते’ इत्यत्र न मानम् । भाष्यप्रामाण्येन अत्र ‘तक्रकौण्डिन्य’न्यायाऽनित्यत्वाऽऽश्रयणात् । ‘तक्रकौण्डिन्य’न्यायस्य अपवादविषयत्वेन ईदृशे विषये तदप्रवृत्तेः असकृदुपपादितत्वाच्च । किञ्च अन्तर्भावितण्यर्थत्वे ‘अशंस्था’ इत्यत्र नञ्समासे, ‘शम्’शब्दस्य कर्मत्वेन कृद्ग्रहणपरिभाषया ‘शंस्था’ इत्यस्य अजन्तत्वेन, ‘अच्कावशक्तौ’ इति उत्तरपदाऽन्तोदात्तत्वाऽऽपत्तेः । क्विबन्तेन नञ्समासे पूर्वपदप्रकृतिस्वर इति दिक् ।

**आमन्त्रयितेति** । ताच्छील्यस्य विवक्षितत्वात् तृन् । अत एव ‘ब्राह्मणानि’ति कर्मणि षष्ठी न कृता ।

**उपसर्गभिन्नेति** । ‘सुपी’ति वर्त्तमाने, पुनः सुप्ग्रहणेन ‘उपसर्गेऽपी’त्यस्य निवृत्तेरिति भावः । **भाष्येति** । ‘सुप्’ इति वर्त्तमाने सुप्ग्रहणम् उपसर्गेऽपि यथा स्या’दिति हि तत्रोक्तम् । अत एव ‘उपसर्गादृती’तिसूत्रे ‘सुचायी’ति भाष्यप्रयोगः, ‘अनुगादिनः’ ‘विसारिण’ इति सौत्रप्रयोगाश्च[3] सङ्गच्छन्ते । अत्र[4] प्रकरणे मनोरमायाम् ‘उपसर्गाऽन्तर’शब्दो-

---

१ ‘क्विपोऽप्राप्तावीत्त्वाऽभावाऽर्थं च न यतनीयम्’ इति ग. पाठः ।

२ इतोऽग्रे-‘पूर्वमालोपे, ततः संप्रसारणे, दोषाऽभावाच्च’इति ख. ग. ङ. पाठः ।

३ ‘प्रयोगश्च सङ्गच्छते’ इति ग. पाठः ।

४ ‘अत्र’ इत्यारभ्य ‘बोध्यः’ इत्यन्तः ख. ग. ङ. पाठः । क. नास्ति ।

ऽस्ति। तत्र 'अन्तर'शब्दो भिन्नवाची बोध्यः।

**साधुकारिणीति**। करोतिरत्र सर्वधात्वर्थाऽनुवादकः। तदुदाहरति–**साधुदायीति**। 'आ क्वेरि'ति सूत्रे तच्छीलात्पृथक् साधुकारी गृह्यते। तच्च ताच्छील्यं विनाऽपि अत्र णिनौ सत्येव सङ्गच्छते। तदाह—**अताच्छील्यार्थमिति**। कैयटादौ स्पष्टमेतत्।

**कर्त्तर्युप**। 'कर्त्तृवाचकोपमाने उपपदे' इत्यर्थः।

**व्रते**। 'सुप्युपपदे व्रते गम्ये णिनिरि'त्यर्थः। **स्थण्डिलेति**। 'स्थण्डिले एव शेते' इत्येवं रूपं व्रतं समुदायेन गम्यते। 'स्थण्डिले शेते एवे'त्यत्र तु न। शास्त्रबोधितत्वाऽभावेन व्रतत्वाऽभावात्। तादृशव्रताऽप्रसिद्धेश्च।

**बहुलमाभीक्ष्ण्ये**। 'बहुल'ग्रहणेन आभीक्ष्ण्याऽभावेऽपि, ताच्छील्याऽऽदिविषयेऽपि, उपपदाऽभावेऽपि 'स्थायी' 'यायी' 'हारी'त्यादौ णिनिः। ध्वनितं चेदं 'व्रते' इति सूत्रे भाष्ये इत्याहुः।

**मनः**। अत्र व्याख्यानात् मन्यतेरेव ग्रहणम्। 'बहुल'पदाऽनुवृत्तेश्च। अत एव 'आत्ममाने' इति सूत्रे 'यगर्थं कर्मकर्त्तृग्रहणमि'ति वार्त्तिकं श्यनैव सिद्धिमाश्रित्य ( भाष्ये ) प्रत्याख्यातम्। अन्यथा तनादेरुप्रत्ययवारणाय वार्त्तिकमावश्यकमेव स्यात्।

**स्वकर्मके इति**। **मननं**–मानः। 'आत्म'शब्दः स्वपरः। कर्मषष्ठ्या समास इति भावः। कर्त्तृषष्ठ्या तु न समासः। 'आत्म'ग्रहणसामर्थ्यात्। 'स्वश'ब्देन च प्रत्ययाऽर्थतया सन्निहितः कर्त्ता उच्यते। **चाण्णिनिरिति**। यद्यपि वाऽसरूपन्यायेनाऽस्य सिद्धिः, तथाऽप्यविच्छेदाय समुच्चीयते। तेन 'करणे यज' इत्यादौ णिनिरेवाऽनुवर्त्तते, न खशिति बोध्यम्।

**पण्डितंमन्य इति**। एकस्याऽप्यात्मनः स्वरूपेण कर्त्तृत्वं, पण्डितत्वविशिष्टरूपेण च कर्मत्वं बोध्यम्। अत्र श्यनि सति ( तासेः परलसार्वधातुकाऽनुदात्तत्वविधानज्ञापकसिद्धेन— ) 'सतिशिष्टोऽपि विकरणस्वरो

१ अयं ग. पाठः।

लसार्वधातुकस्वरं न बाधते' इति न्यायेन खशूस्वर एव, न तु नित्स्वर' इति भाष्ये स्पष्टम् । आत्ममाने इति किम् ? । 'दर्शनीयमानी देवदत्तो यज्ञदत्तस्ये'ति ।

**कालिंमन्येति** । 'स्त्रिया' इति पुंवत्त्वं बाधित्वा, परत्वात् ह्रस्वः । अत्र अभेदेनाऽन्वयाऽभावेऽपि, पूर्वपदाऽर्थस्यैव उत्तरपदेनाऽभिधानात्, वस्तुतः सामानाधिकरण्यमस्त्येव । एकविशेष्यकप्रतीतिजनकत्वस्यैव सामानाधिकरण्यपदाऽर्थत्वात् । अत एव च्व्यन्ते 'महद्भूते'त्यादौ प्रकृतेः कर्त्तृत्वेऽपि अमहदर्थस्यैव महच्छब्देनाऽभिधानात् वस्तुतः[2] सामानाधिकरण्यमादायैव पुंवत्त्वसिद्धिः[1] । न चाऽत्र 'पुंवत्कर्मधारये'ति प्राप्तिः । कर्मधारयत्वाऽभावात् । 'प्रतिपदोक्त'परिभाषया 'समानाधिकरण'पदम् उच्चार्य विहिततत्पुरुषस्यैव कर्मधारयत्वा[3]दिति वदन्ति । **दिवामन्येति** । अधिकरणशक्तिप्रधानस्याऽव्ययस्य वृत्तौ स्वभावात्कर्मत्वं बोध्यम् ।

**स च स्वादीति** । 'अम्'ग्रहणमावर्त्तते । 'अम् भवति, स च स्वाद्यम्वदि'त्यर्थः । तत्र अन्यस्य अमः प्रत्ययस्य अतिदेशयोग्यकार्याऽभावात् स्वाद्यमेव गृह्यते इति भावः । अत एव अमो मस्य नेत्त्वम् । मुमह्रस्वौ अयं बाधते।अयं प्रत्ययवद्भावादेव पर इति बोध्यम् । मुमा सिद्धे अजादित्वनिबन्धनेयङाद्यर्थम् अमागमः ।

**भाष्येति** । यथा 'पुंयोगादि'तिसूत्रबलात्प्रष्ठादीनां स्वलिङ्गत्यागेन स्त्रियां वृत्तिः–'प्रष्ठी गणिके'त्यादौ, एवमत्राऽपि भाष्यप्रामाण्यात् 'श्री'शब्दस्त्यक्तस्वलिङ्गः क्लीबः सन् कुले वर्त्तते इति, क्लीबत्वप्रयुक्तोऽमः 'स्वमोर्नपुंसकादि'ति लुक्, ह्रस्वश्च । मुम् तु न । अपवादेन

१ इतोऽग्रे—'न चेदृशे सामानाधिकरण्ये पुंवत्त्वप्रवृत्तौ मानाऽभावः । 'अपूरणीप्रियादिष्वि'ति पर्युदासेन स्त्रीत्वे लब्धे, 'स्त्रियामि'त्यस्यैव मानत्वात् । तच्च स्त्रीलिङ्गमात्रे प्रवृत्त्यर्थम्' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

२ 'वस्तुत' इति क. नास्ति ।

३ 'कर्मधारयत्वादिति दिक्' इति ग. पाठः ।

अमा बाधात्। न च 'सुपो धात्वि'तिलुग्वत् अस्याऽपि अमृविधि-सामर्थ्याद्बाधः[2]। समाससंज्ञा-प्रातिपदिकसंज्ञोत्तरं मध्ये जातस्य तन्मध्य-पतितत्वात्तद्ग्रहणेन ग्रहणेऽपि, तदवयवत्वाऽभावज्ञापनेन 'सुपो धात्वि'-त्यस्याऽप्राप्तिः। इदं च 'इत्थम्भूतलक्षणे' इति सूत्रे कैयटे स्पष्टम्। तथा 'स्वमोरि'त्यत्र अर्थवदमो ग्रहणज्ञापनद्वारा तस्याऽप्यप्राप्तिरिति वाच्यम्।

येननाऽप्राप्त्या, मध्येपवादन्यायेन च तदप्रवृत्तिनिमित्ताऽर्थज्ञापने-ऽपि, 'स्वमोरि'त्येतदप्रवृत्तिनिमित्ताऽर्थज्ञापने प्रमाणाऽभावात्। अर्थ-वत्परिभाषा त्वत्र सूत्रेऽनित्यत्वान्न प्रवर्त्तते। न चाऽन्तरङ्गे लुकि अम् असिद्धः। उत्तरपदाऽधिकारे 'अन्तरङ्ग'परिभाषाया अप्रवृत्तेः। अन्यथा 'परन्तप' इत्यादावनुस्वारो न स्यादिति स्पष्टं भाष्ये। यत्र प्रातिपदिक-स्यैव लक्षणा, तत्र स्वलिङ्गत्यागः, यत्र तु पदस्य लक्षणा, तत्र स्वलिङ्गा-ऽत्याग इति मर्यादेति तत्त्वम्[3]।

**भूते**। धात्वर्थविशेषणमिदम्। 'भूतेऽर्थे वर्त्तमानाद्धातोरि'त्यर्थः। **सोमेनेति**। 'सोमेन = लताविशेषण यागं कृतवानि'त्यर्थः।

**अग्निष्टोमेति**। 'अग्निष्टोमसंस्थाकयागेन अपूर्वं भावितवानि'त्यर्थः। यजेश्च त्यागकरणकव्यापारे शक्तिः। तत्र व्यापाररूपभावनाया भाव्या-काङ्क्षायां धात्वर्थस्य त्यागस्य करणत्वेनैवोपस्थितेः, स्वतः पुरुषाऽर्थत्वा-ऽभावाच्च, साक्षात्सुखसाधनमपूर्वं, तज्जन्यः स्वर्गो वा भाव्यत्वेनाऽन्वेति। त्यागस्य करणत्वं च भावनाभाव्यभावकत्वमेव[4]। सर्वत्र करणानाम् ईदृशमेव करणत्वम्। संस्थावचनस्याऽपि 'ज्योतिष्टोम'शब्दस्य तद्वति

१ 'सुपूधात्विति' इति सर्वत्र पाठः।

२ इतोऽग्रे—'येन नाऽप्राप्त्या, मध्येऽपवादन्यायेन च तस्यैव बाधात्' इति ख. ग. ङ. पाठः।

३ इतोऽग्रे—'तदेतदाह–मुममोरभावश्चेति' इति ग. पाठः।

४ 'भावना' इति क. नास्ति। लघुशेखरे तु वर्त्तते एव।

लक्षणया त्यागसामानाधिकरण्यात्करणत्वम्। स्वर्गादेः कर्मत्वमपि भाव्यत्वरूपमेव[1]। न तु फलाऽऽश्रयत्वरूपम्। अत एव ईदृशानां कामाऽन्तपदेनैवोल्लेख इत्याहुः।

**कर्मणि**। 'तत्रोपपदे भूताऽर्थाद्धन्तेर्णिनिरि'त्यर्थः। इदं च शब्दशक्तिस्वाभाव्यात्कुत्सायामेव। तेन 'चोरं हतवानि'त्यादौ नेत्याहुः। 'कुमारशीर्षयोरि'ति सूत्रमपि कुत्सायां प्रवर्त्तते इति 'भूते' इति सूत्रे भाष्ये ध्वनितम्।

**चतुर्विध इति**। अयमाशयः—'इह सूत्रे श्रुतत्वात्पूर्वं ब्रह्मादय उद्देश्याः (१)। ततोऽनन्तरं प्रकृतित्वात् हन्तिः (२)। ततो 'भूते' इति (३)। तस्याऽपि[2] उद्देश्यत्वेन क्विपः पूर्वमेव निवेशात्। क्विप्तु सर्वाऽन्ते, विधेयत्वात् (४)। तदेषा वचनव्यक्तिः,-'ब्रह्मादिषु उपपदेषु हन्तेर्भूते क्विबि'ति। एवं स्थिते च 'यत्रैवकारस्ततोऽन्यत्र नियम' इतिन्यायेन नियमोऽत्र भवन् अनन्तरे भवति। ततश्च

(१) 'ब्रह्मादिष्वेव'[3] इति नियमे हन्तेस्तदनन्तरनिर्दिष्टत्वात् उपपदाऽन्तरसम्बन्धनिवृत्तिफलो नियमो[4] भवति।

(२) 'ब्रह्मादिषु हन्तेरेव भूते' इति तु नियमे अनन्तरत्वाऽविशेषेऽपि प्राथम्यात् उपपदनियमः।

(३) 'ब्रह्मादिषु हन्तेर्भूते एव क्विबि'ति नियमे तु आनन्तर्ये क्विप्हन्त्योः-अविशिष्टेऽपि, प्राधान्यात्प्रत्ययनियमः।

(४) 'ब्रह्मादिषु हन्तेर्भूते क्विबेवे'ति नियमे आनन्तर्यात् काल-

१ 'भाव्यरूपम्' इति ग. पाठः।

२ तस्याऽपि = 'भूते' इत्यस्याऽपीत्यर्थः।

३ 'ब्रह्मादिष्वेव भूतार्थाद्धन्तेः' इति ग. पाठः।

४ 'धातुनियमो भवति' इति ग. पाठः।

५ 'हन्तेरेव' इत्यस्य 'ब्रह्मादिषु' इति उपपदं, 'भूते' इति च, उभयमपि हि

नियमः । सोऽयं प्रकृत्यु-पपद-प्रत्यय-कालनियमानां विवेकः। अगृह्यमाण-विशेषत्वात्तु चतुर्विधस्याऽपीह ग्रहणम् । तत्र—

( १ ) 'ब्रह्मादिष्वेव हन्तेरि'ति प्रकृतिनियमे 'भूते' इत्याश्रयणात्, कालाऽन्तरे, उपपदाऽन्तरेऽपि भवत्येव, 'पुरुषं हन्ति, हनिष्यति वा—पुरुषहा' । ( २ ) 'ब्रह्मादिषु हन्तेरेवे'त्युपपदनियमेऽपि 'भूते' इत्याश्रयणात्कालाऽन्तरे धात्वन्तरादपि भवत्येव, 'वृत्रं जयति, जेष्यति वा—वृत्रजित्' । ( ३ ) 'भूते एव क्विबि'ति प्रत्ययनियमेऽपि 'ब्रह्मादिषु' इत्युक्तेः 'पुरुषहा' 'अरिहे'ति प्राग्वत् । ( ४ ) 'भूते क्विबेवे'ति कालनियमेऽपि, उपपदाऽन्तरे भूतेऽपि प्रत्ययाऽन्तरं भवत्येव, 'पितृव्यं हतवान् पितृव्यघाती'ति । सोपपदश्च प्रत्ययो नियमेन व्यावर्त्त्यते । निष्ठा तु भवत्येव 'वृत्रं हतवानिती'ति ।

**भाष्यमिति** । तथा च भाष्यम्—'उभयतो नियमोऽयं 'ब्रह्मादिष्वेव', 'क्विबेव चे'ति । युक्तं चैतत् । श्रुत्युपस्थापितोपपदप्रत्यययोरुपरोधाऽपेक्षया प्रकरणलक्षण-जघन्यप्रमाणो-पस्थितधातु-कालयोरेवोपरोधो न्याय्यः । एवं च तद्विरोधान् वृत्तिरयुक्तेति भावः ।

**त्रिविध इति** । धातुनियमस्त्विह नेष्यते इति तद्भावः । **काशिकेति**। अत्राऽपि पूर्वोक्तन्यायेन द्वैविध्यमेवोचितम्–'सुकर्मादिष्वेव' 'कृञ एवे'ति चेत्याहुः । एवं 'सोमे सुञ' इत्यादावपि । **श्येनचिदिति** । समुदायोऽयम् आहवनीयधारणाऽर्थे इष्टकानिर्मिते स्थलविशेषे रूढः ।

**कुत्सितेति** । इदं च पुनः 'कर्म'ग्रहणाल्लभ्यते । 'यत्कर्म क्रियया सम्बध्यमानं कर्त्तुः कुत्सामावहति तत्रे'त्यर्थः । सोमादयश्च विक्रीय-माणाः शास्त्रनिषिद्धत्वात्तदावहाः । तेनेह न—'धान्यविक्रायः' ।

---

अनन्तरम् । पूर्वोत्तरत्वादिति भावः ।

१ 'अयमाशयः' ( २०४७ पृ० ) इति पूर्वोक्ताऽऽशयसमाप्तिसूचनायाऽयम् 'इतिः' ।

२ 'प्रकरणलक्षण' इति पाठः ख. ङ. नास्ति ।

दृशेः । 'अन्येभ्योऽपी'त्येव सिद्धे नियमोऽयम्—'क्वनिबेवे'ति । स च सहनिर्दिष्टमनिनादेः, अणादेश्च निवर्त्तकः, न निष्ठायाः । मध्येऽपवादन्यायात् । तेन 'पारं दृष्टवानि'ति भवति । कालनियमस्तु व्याख्यानात् नेत्याहुः । एवं च 'पारं पश्यती'ति विग्रहेऽपि 'पारदृश्वा' इति भवत्येव ।

वस्तुतो दृशिग्रहणेन निर्वाहस्य अगतिकगतिकत्वाद्विधायकत्वमेवैषाम् । भाष्यं तूदासीनमिति कौस्तुभे स्पष्टम् । निवृत्तमिति । असत्त्ववचनत्वेन इहाऽनन्वयात्, उत्तरत्राऽनुपयोगाच्च । मन्दुरा—वाजिशाला । पुमनुजेति । अत्राऽनुरोधविशिष्ट-जननवृत्तित्वाज्जनिः सकर्मकः । सर्वोपाधीति । अत एव भाष्ये 'अन्येभ्योऽपि दृश्यते' इति पठितम् ,'परिखे'त्युदाहृतं च ।

क्तक्त । न च कार्याऽर्थमनुबन्धा उपादीयन्ते, लुप्तत्वाच्च न प्रयोगे तेषां सत्तेति, 'लोतमि'त्यादौ 'क्त'समानाऽऽकारे 'त'शब्दे निष्ठाकार्याऽऽपत्तिरिति वाच्यम् । अध्रुवेणाऽप्यनुबन्धेन 'क्तक्तवतू' इत्यादावुच्चारितेन, तदनुबन्धनियतसन्निधानाः सङ्ख्यादीतर-काल-कारकादिरूप-भूत-कर्मादयो लक्ष्यन्ते । एवं च यत्र प्रयोगे तेषाम् अन्यतमदर्शनं तत्र तैः अनुबन्धस्मृतौ, तत्र निष्ठादिसंज्ञाम् , तत्प्रयुक्तकार्याणि चाऽध्यवस्यतीति न दोषः । अत एव नपुंसके भावे क्तस्य, 'क्तिच्क्तौ चे'ति क्तस्य, 'ञीतः क्त' इत्यस्य च निष्ठात्वसिद्धिः । 'प्राऽभित्त पट' इत्यादावेकत्वाद्यवगमात् लुङन्तमेतदिति निर्णयान्न दोषः । अत एव 'उपलक्षणम् अनुबन्धा' इत्युच्यते । अन्यज्ञानद्वारा इतरभेदकं हि उपलक्षणम् । यथा काक उत्तृणत्वादिज्ञानद्वारा इतरभेदक इति स्पष्टमत्रैव भाष्ये ।

ण्यदर्थौ भावेति । 'तयोरेवे'त्यनेन साक्षात् तयोरेव तस्य विधानादिति भावः । एतेन 'करणादावपि[1] 'याज्या ऋगि'त्यादौ ण्यतः सत्त्वात् इदमयुक्तमि'त्यपास्तम् ।

क्षियो । यद्यपि इयङैव दीर्घग्रहणं निर्णीतम् , अन्यथा गुणः

1 'एतेन अन्यत्राऽपि याज्या ऋगित्यादौ' इति ख. ङ. पाठः ।

स्यात्, तथापि 'क्षियो निष्ठायामण्यदर्थे' इत्यत्रेव[1] धातोः 'चिक्षियतुरि'-त्यादावजादौ यद्रूपं, तदनुकरणसत्त्वादत्र दीर्घग्रहणम्। अत एव दीर्घ-विधायकवृत्तावपि 'क्षिय' इति प्रयुक्तम्। किञ्च दीर्घनिर्देशे प्रतिपदोक्त-त्वात् 'क्षी हिंसायामि'त्यस्यैव ग्रहणाऽऽपत्तिः। 'दीर्घ'ग्रहणे तु तत्सामर्थ्यात् उभयोर्ग्रहणम्। ध्वनितं चेदं भाष्ये। दीर्घविधायके 'क्षि क्षये' 'क्षि निवासगत्योरि'ति द्वयोरपि ग्रहणम्। **क्षित इति**। भावे तु 'क्षितं कामेने'ति बोध्यम्। अन्तर्भावितण्यर्थत्वे कर्मणि।

**रदाभ्याम्**। इह रदाभ्यां तकारो विशेष्यते, न निष्ठा, एकदेश-त्वात्। तेन 'चरितमि'त्यादौ नाऽतिप्रसङ्गः। तदाह—**निष्ठातस्येति**। चो वाक्यभेदाऽर्थः। तदाह—निष्ठेति[2]। पूर्वग्रहणं स्पष्टाऽर्थम्।

**संयोगादेः**। निष्ठया धातोराक्षेपे सिद्धे, 'धातोरि'ति 'संयोगादे-रि'त्यस्य धातुविशेषणत्वाऽर्थम्। अन्यथा श्रुतत्वात् आत एव स्यात्। तथा च 'निर्यात' इत्यादावतिव्याप्तिरिति भावः।

**एकविंशतेरिति**। यद्यपि 'गॄ' 'धॄ' इत्येतावपि दृश्येते, तथापि एकीयमतं तदिति भावः। 'रदाभ्यामि'त्यनेन तत्र सिद्धिरि'त्यन्ये।

**जीने** सिद्धत्वात्, नित्यत्वाच्च सम्प्रसारणे, 'संयोगादेरि'त्यस्याऽप्राप्तिः।

**गूनः**। 'गु पुरीषोत्सर्गे'। **विनष्टा इति**। धातूनामनेकार्थत्वात् पूञो विनाशे वृत्तिः। **सिनो ग्रास इति**। पिण्डीक्रियमाणो ग्रासो यदा दध्या-दिव्यञ्जनवशाद्बन्धनेऽनुकूलो भवति, तदा कर्मण एव कर्तृत्वं बोध्यम्।

**ओदितश्च**। 'अस्मात्परस्य निष्ठातस्य न' इत्यर्थः। **स्वादय इति**। दिवाद्यन्तर्गणा इत्यर्थः। **शीतं जलमिति**। अनेन सूत्रे 'स्पर्श'शब्देन गुण

---

१ 'इत्यत्रेव सौत्र इयङ् स्यादतो दीर्घग्रहणम्' इति ख. ग. ङ. पाठः।

२ 'निष्ठेति। पूर्वग्रहणं परस्य मा भूदित्येतदर्थम्। तदभावे हि प्रत्यासत्त्या, पञ्चमीनिर्देशाच्च 'भिन्नवद्भ्यामि'त्यादौ निष्ठासम्बन्धिन एव परस्य स्यात्। प्रतिपदोक्तपरिभाषा तु न वर्णग्रहणे इत्याहुः' इति ख. ग. ङ. पाठः।

एव, प्रसिद्धत्वात्, व्याख्यानाच्च, न रोग इति ध्वनितम्। अत एव 'प्रतेश्चे'ति सार्थकम्। तद्विषये नत्वं चेत्याहुः।

**विभाषाऽभ्य**। 'पूर्व'ग्रहणम् 'अभिसंशीन' इत्यर्थम्।

**न त्वपादाने इति**। 'चेत्तदीयम् अपादानं न प्रयुज्यते' इत्यर्थः।

**यस्य वि**। 'यस्ये'त्यस्य 'यदीयस्य आर्द्धधातुकस्ये'त्यर्थः। 'आर्द्धधातुकस्ये'त्यनुवृत्तेः। 'इड्विहित' इति तु वाक्यस्य अपूर्णत्ववारणायाऽध्याह्रियते।

नचैवं 'यस्ये'त्यस्याऽप्यध्याहारेणैव लाभे, तदुपादानं व्यर्थम्। स्पष्टाऽर्थत्वात्। अत्र 'एकाच' इति वर्त्तते। तेन 'दरिद्रित' इत्यादौ न।

**समक्त इति**। 'व्यक्तमि'ति तु अञ्जेः प्रकाशाऽर्थस्य रूपम्। अस्मात्तु तत्र अनभिधानान्निष्ठाऽभावो, भाष्यप्रामाण्यादित्याहुः।

**उदक्तमिति**। उद्धृतमित्यर्थः। 'उत्थितमित्यर्थ' इत्यन्ये।

**निष्ठादेश इति**। स्वर-प्रत्यययोरुदाहरणम् 'क्षीबः' क्षैबिकः'। अत्र 'निष्ठा' च द्व्यजनादि'ति निष्ठाऽन्तस्य द्व्यचो विधीयमानमाद्युदात्तत्वं न प्राप्नोति। 'नौद्व्यच' इति ष्ठन् च न प्राप्नोति। इदं च 'इट्सहितस्य निष्ठातस्य लोपो निपात्यते' इति पक्षे। यदा तु 'तमात्रस्य लोपो निपात्यते' इति मतं, तदा नेदं प्रयोजनमिति व्यर्थं तयोर्ग्रहणम्। तन्मते क्षीबे, उल्लाघे च इट्व्यावृत्तये 'इड्विधि'ग्रहणम्। एवं च 'लस्जी' इत्यस्य 'लग्न' इत्यत्र नस्य सिद्धत्वात् 'वरमनादौ' इति परिगणनात् 'नेड्वशी'ति निषेधे सिद्धे, 'श्वीदित' इति ईदिद्ग्रहणम् 'उत्त' इत्यादौ नत्वाऽभावे ईडभावाय आवश्यकम्।

१ इतोऽग्रे—[1]यदुपाधिविशिष्टधातोरार्द्धधातुकस्य इड्विकल्पस्तदुपाधिविशिष्टात् निष्ठाया इण्निषेध' इत्यर्थलाभाऽर्थं तदित्याहुः' इति ख. ग. पाठः। क. कुण्डलितः।

२ 'ईदित्'ग्रहणं न कार्यमित्येके' इति ख. ग. ङ. पाठः।

३ 'इडभावाय आवश्यकमित्यन्ये' इति ख. ग. ङ. पाठः।

1 'व्यर्थम्। स्पष्टाऽर्थत्वात्। केचित्तु यदुपाधिविशिष्टधातोः' इति क. पाठः।

**परिस्कन्दः प्रा**। 'अत्रैव निपातनान्निष्ठायां तलोप' इति मतेऽस्यात्रोपन्यासः। वस्तुतः षत्वाऽभावनिपातनम् अच्प्रत्ययाऽन्ते षत्वाऽभावाये'त्यन्ये। **द्यून इति**। क्षीण इत्यर्थः। **द्यूतमिति**। जिगीषया तत्प्रवृत्तेस्तत्र जिगीषा गम्यते इति बोध्यम्।

**वातश्चेदिति**। इदं च वृत्तिरीत्या। एतन्मते 'निर्वाणोऽग्निर्वातेने'तिप्रयोगो वातस्य करणत्वे बोध्यः। भावे तु 'निर्वातं वातेने'त्येव।

भाष्ये तु 'अवाताऽभिधाने इति वक्तव्यम्। निर्वाणोऽग्निर्वातेने'त्युक्तम्। अत्र भावे 'निर्वाणं वातेने'त्येवेति बोध्यम्।

**क्षाम इति**। 'क्षै क्षये' इत्यस्य 'आदेच' इत्यात्त्वम्।

**स्त्यः प्रपूर्व**। **प्रस्त्यो**। 'अत्रोभयत्राऽपि 'स्त्यै' 'ष्ट्यै' इत्युभयोर्ग्रहणमि'ति वृत्तिः। 'स्त्यः प्रे'त्यत्र पूर्वग्रहणं 'प्रसंस्तीत' इत्यर्थम्। मत्वं तु न।

**लत्वमिति**। उत्वं तु 'चरफलोरि'त्यनुवर्त्तमाने 'ति चे'त्येव सिद्धम्। न च तत्रैकाऽनुबन्धकपरिभाषया 'फल निष्पत्तौ' इत्यस्यैव ग्रहणेन, 'ञिफले'त्यस्य उत्त्वं दुर्लभमिति वाच्यम्। तस्या असार्वत्रिकत्वेन इहाऽप्रवृत्तेः। 'फल निष्पत्तौ' इत्यस्य तु नाऽत्र निपातनम्। इडभावस्याऽपि निपातनाऽऽपत्त्या गौरवाऽऽपत्तेः। ध्वनितं चेदं भाष्ये। एतेन 'फुल्ल विकसने' इत्यस्यैव निष्ठातलोपो निपात्यते' इत्यपास्तम्। 'फलेर्लत्वे' इत्यादिभाष्यविरोधाच्च।

**इष्यते इति**। 'वृत्तिकारैरि'ति शेषः। **इटोऽभावश्चेति**। सिद्धत्ववार्त्तिके इड्विधिग्रहणम् एतन्निपातनसिद्धाऽर्थाऽनुवाद इति बोध्यम्।

'क्षीबृ मदे' 'कृश तनुत्वे' आभ्याम्, उत्पूर्वात् लाघेश्च क्तः।

**आदितश्च**। न च 'विभाषा भावे'त्यनेन संयुज्यैवेदं पठनीयम्,

---

१ इतोऽग्रे—'लक्षणप्रतिपदोक्तपरिभाषया आद्यस्यैव ग्रहणम्। यद्यप्याकारांशे उभयोरपि लाक्षणिकत्वं, तथापि सकारांशेऽपि द्वितीयस्य लाक्षणिकत्वादित्यन्ये' इति ग. पाठः।

अन्यत्र निषेधस्य 'यस्य विभाषे'त्यनेनैव सिद्धेरिति वाच्यम्। 'यदुपाधे-र्विभाषा, तदुपाधेरेव निषेध' इति ज्ञापनाऽर्थत्वात्। एवं चाऽन्यत्र निषेधाय योगविभागः। ज्ञापनफलं तु 'श'विकरणस्य विदेः 'विभाषा गमहने'ति विकल्पेऽपि, लुग्विकरणस्य न निषेध इति स्पष्टं भाष्ये। न चैवम् 'उदितो वे'त्यनेन भावक्त्वो विकल्पविधानात् भावनिष्ठाया एव निषेधः स्यादिति वाच्यम्। 'तेन निर्वृत्तमि'त्यादिनिर्देशैः शब्दाऽनुपात्त-प्रत्ययाऽर्थस्य भेदकत्वेनाऽत्राऽनाश्रयणादित्याहुः।

**पचाद्यजिति**। नन्वेवं फुल्लोल्लाघ्योः पचाद्यचि, कृशेः, क्षीबेश्च इगुपधलक्षणे के, घञर्थके च फुल्लादिसिद्धौ, सूत्रं व्यर्थमत आह—**सूत्रन्त्विति**। वृत्तिकारेष्ट्या 'फुल्लवानि'ति रूपस्य, 'निष्ठा च द्व्यजि'ति-स्वरस्य च सिद्ध्यर्थमित्यपि बोध्यम्। ('परिकृश' इति तु 'कृश'शब्देन भावनिष्ठाऽन्तेन 'परिगतः कृशमि'ति समासे बोध्यम्)।

**नुदविदोन्द**। मण्डूकप्लुत्या 'रदाभ्यामि'त्यतो 'न' इति वर्त्तते। ह्रियोऽप्राप्ते, अन्येषां प्राप्ते, विभाषेयम्।

**वेत्तेस्त्विति**। तथा च 'वित्तो भोगे'ति सूत्रे भाष्यं—

**'वेत्तेस्तु विदितो निष्ठा, विद्यतेर्विन्न इष्यते।**
**विन्तेर्विन्नश्च वित्तश्च, भोगे वित्तश्च विन्दतेः'** ॥ इति।

व्याख्यानादेवाऽत्र रौधादिकस्य ग्रहणम्। यत्तु 'परसाहचर्यस्य बलवत्त्वेन उन्दिसाहचर्यात् रौधादिकस्यैव ग्रहण'मिति। तन्न। पूर्व-साहचर्यस्याऽन्तरङ्गत्वेन, परादपि बलवत्त्वात्।

**ख्यात इति**। आदेशस्य खशादित्वात्, स्वतन्त्रस्य आर्द्धधातुके प्रयोगाऽभावात्, अत्र 'ख्या'ग्रहणं व्यर्थमिति ध्वनितं 'चक्षिङि'ति सूत्रे भाष्ये। **पूर्त्त इति**। 'श्र्युक' इति नेट्। **मूर्त्त इति**। 'आदितश्चे'ति नेट्।

---

१ 'एवञ्च अनादिकर्मनिषेधाय' इति ग. पाठः।

२ अयं ख. ग. ङ. पाठः। क. कुण्डलितः।

**मत्त** इति। 'श्वीदित' इति नेट्। **भोग्य** इति। 'भोगप्रत्यये'त्यत्र कर्मणि घञ्, अञ्चेति भावः।

**विभाषा गमेति**। 'एकाच' इति निषेधाच्चेत्यपि बोध्यम्।

**भित्तं शकलम्**। शकलत्वजातिविशिष्टे रूढोऽयम्। तत्र यदा 'भिन्नमि'ति सामान्येन व्युत्पाद्यते, ततो विशेषजिज्ञासा, तदा 'भिन्नं' 'भित्तमि'ति सह प्रयोगोपपत्तिरिति स्पष्टं भाष्ये। भिदेः क्ते नत्वाऽभावो निपात्यते। 'भित्तं शकल-खण्डे' इत्यमरः। **भिन्नमन्यदिति**। विदीर्णमित्यर्थः। **व्यवहार**[1] इति। अधमं = दुःखप्रदम् ऋणमस्य सः-'अधमर्णः'। तस्य भाव 'आधमर्ण्यम्'। तच्च तद्व्यवहारे लाक्षणिकम्। तेन उत्तमर्णोऽपि सिद्ध्यति। **स्फीत** इति। 'स्फीतिकाम' इति तु आख्यानण्यन्तात्, 'अच इरि'ति 'इ'प्रत्यये बोध्यम्।

**इण् निष्ठायाम्**। 'इडि'ति वर्त्तमाने पुनरिड्ग्रहणम् अस्य नित्यत्वाय। 'निष्ठायामि'त्येतावत्तु 'यस्य विभाषे'ति निषेधबाधनाऽर्थं स्यात्।

**यस्येति**। 'निरः कुषः' इति विकल्पितेट्त्वादिति भावः। 'निरः कुषोऽनिष्ठायामि'ति तु न सूत्रितम्, 'पर्युदासेन कृत्येव विकल्प' इति शङ्कावारणाऽर्थम्। अत एव 'वेः स्कन्देरनिष्ठायामि'ति सूत्रे कृत्त्वेनैव सादृश्यग्रहणम्।

**वसतिक्षुधोः**। अत्राऽपि इट्ग्रहणं नित्याऽर्थम्।

**उषिते**—यजादित्वात् सम्प्रसारणम्। 'शासिवसी'ति षः।

'**क्षुधित**' इत्यादि तु क्षुधेर्भावे क्विपि तारकादित्वादितचि बोध्यम्।

**अञ्चेः पू**। उदित्त्वात् क्त्वा-निष्ठयोर्विकल्प-निषेधयोः प्राप्तयोरिदम्। **पूजार्थादिति**। 'पूजाविषयादि'त्यर्थः।

**अञ्चित इति**। 'नागाश्चाऽञ्चितगामिन' इत्यत्र समाधानेन गम्यते पूजेति भाष्ये स्पष्टम्। 'नाऽञ्चेः पूजायामि'ति नलोपनिषेधः।

---

१ 'व्यवहार इति। 'आधमर्ण्य'पदं तद्व्यवहारे' इति ख. ग. ङ. पाठः।

लुभोऽवि । 'तीषसहे'ति क्त्वायां विकल्पे, निष्ठायां निषेधे प्राप्ते इदम्। न तु गार्ध्ये इति । गार्ध्योऽर्थस्य दैवादिकस्य सूत्रे न ग्रहणमित्यर्थः। किन्तु विमोहनार्थस्य तौदादिकस्यैव । विमोहने किम् ? । 'लुब्धो वृषलः'। धनाद्याकाङ्क्षावानित्यर्थः । उदाहरणे 'प्राप्तमोह' इत्यर्थः । 'तीषसहे'त्यत्र च उभयोर्ग्रहणम् ।

पूङश्च । 'श्र्युकः किती'ति निषेधे प्राप्ते वचनम् ।

पूङः क्त्वा च । ङकारोच्चारणं स्पष्टाऽर्थम् । इड्विधौ ङकारनिर्देशेनाऽपि पूञ्‌निवृत्तिसिद्धेः । 'न क्त्वे'त्येव सिद्धे, 'त्क्वा'ग्रहणमुत्तराऽर्थम् । इह 'सेडि'ति निवर्त्त्य, अनिट एव कित्त्वविकल्पं विधाय, कित्त्वे 'श्र्युक' इति निषेधे, तदभावे इटि च रूपद्वयसिद्धौ, 'पूङश्चे'ति वा इड्विधायकं न कार्यमिति स्पष्टं भाष्ये । क्त्वैवेति । निष्ठा तु चाऽनुकृष्टत्वान्नोत्तरत्र सम्बध्यते इति भावः । शेश्यित इति । 'एरनेकाच' इति यण् ।

आदिकर्मणीति । इदं भूते, वर्त्तमाने च । तत्र यदा संपूर्णस्तत्तत्फलाऽनुकूलो व्यापारो धात्वर्थः, तदा वर्त्तमानत्वे । संपूर्णक्रियासमाप्तावेव भूतत्वव्यवहारात् । अत एवेदं चरिताऽर्थम् । यदा तु भूततत्तद्व्यापार एव धात्वर्थः, तदा भूते इति स्पष्टं भाष्ये ।

चादिति । अन्यथा विशेषेण सामान्यबाधः स्यादिति भावः ।

विभाषा । 'आदितश्चे'ति निषेधे प्राप्ते इदम् ।

भ्वादिः । स्नेहनमोचनयोः पठितः । स्विद्यतिः—गात्रप्रक्षरणे पठितः ।

---

१ 'ङकारोच्चारणं न पूञ्‌निवृत्त्यर्थम् । इड्विधौ ङकारनिर्देशात् । किन्तु यङ्लुक्‌निवृत्त्यर्थम् । तत्र हि सामान्यसूत्रेणेट् । 'श्र्युकः किती'त्यत्र तु 'एकाच' इति वर्त्तते । तेन' 'योयुवित' इत्यत्रेट्सिद्ध इति वाच्यम् । तस्योत्तरार्थत्वात्। 'इह किञ्चित् त्रपो'इति न्यायस्तु लक्ष्यानुरोधाद्भाष्यप्रामाण्याच्च नेहाश्रीयते ।' इति ग. पाठः ।

२ 'वा इड्विधायकम्, उत्तरत्र वाग्रहणं च' इति ग. पाठः ।

स तु न ञीत् । हरदत्तविरोधादिति भावः । 'तस्याऽपि ञीत्त्वात्स्वेदितमित्येवे'त्यन्ये । 'मिदि'साहचर्यात् 'ञिक्ष्विदा' दिवादिरेवे'ति **हरदत्तः** । तन्न । भ्वादावपि मिदेः पाठ्यमानत्वात् । तदाह—**भ्वादी चेति** । स्विदादीनाम् 'आदितश्चे'ति निषेधात् सेट्निष्ठा दुर्लभेत्यत आदिकर्मणि निष्ठा उदाहृता ।

**मृषस्ति** । अत्र मृषिः सर्वोऽपि गृह्यते इत्याहुः । **अविस्पष्टमिति** । इदमेव 'तितिक्षा'ग्रहणं धातूनाम् अर्थनिर्देशस्य उपलक्षणत्वे प्रमाणम् । 'सेट्'ग्रहणन्तु उपरञ्जकमात्रम् । अस्य अनिटोऽभावादित्याहुः ।

**श्वीदित इतीति** । ननु सम्प्रसारणे, पूर्वत्वे च उगन्तत्वात् 'श्र्युक' इति निषेधे, अकृतव्यूहन्यायेन च पूर्वमपि इटोऽप्राप्तेः, किमिह'श्वि'-ग्रहणेनेति चेन्न । 'श्र्युकः' इत्यत्र 'उपदेशे' इत्यनुवृत्तेः । अत एव 'स्तीर्वे'-त्यादिसिद्धिः । 'जागरित'सिद्ध्यर्थं च 'एकाच' इत्यपि वर्त्तते इति स्पष्टं भाष्ये । **शून इति** । अल्विधित्वेऽपि 'हल' इत्यादिसामर्थ्यात्पूर्वरूपस्य सम्प्रसारणत्वम् । अत एव 'कृदतिङ्'सूत्रस्थभाष्यरीत्या 'अचः परस्मिन्नि'ति स्थानिवत्त्वं नेत्याहुः । **वतः, तत इति** । 'अनुदात्तोपदेशे'ति अनुनासिकलोपः । **दरिद्रित इति** । 'तनिपती'ति सनि वेट्कत्वात्प्राप्तिः ।

यदि 'मन्थादिसाधने धात्वर्थे क्षुब्धादयो निपात्यन्ते' इत्यर्थः स्यात्, तदा 'क्षुभितं मन्थेने'त्यपि न स्यादत आह—**स्तम्भनार्थेति** । अन्यत्र प्रयोगस्तु सादृश्याद्बोध्यः । प्रकाराऽन्तरमपि मूले वक्ष्यति । 'स्वान्तशब्देन बाह्यविषयेषु अविक्षिप्तम् , अनाकुलं मन उच्यते' इति **कैयटः** ।

**अनायाससाध्य इति** । क्षुण्णम् औषधजातम् उष्णोदके क्षिप्त्वा, सद्योऽभिषुत्य, पूत्वा, यत्पीयते तत् फाण्टमि'त्याहुः ।

अन्यत्र = मन्थादेरवाच्यत्वे । **वाहितमिति** । 'बाहृ प्रयत्ने' ।

विरुद्धं यातो वियातः = अविनीतः । तस्य भावो-वैयात्यम् । तदाह—**अविनये इति** । 'ञिधृषा', 'शसु हिंसायामि'त्यनयोः 'आदितश्च' 'यस्य

विभाषे'त्याभ्यां सिद्धे, नियमोऽयमित्याह—**एवेति** । ननु धृषेरादित्त्वात् विकल्पे प्राप्ते, तदंशे नित्याऽर्थो विधिः स्यात् । ततश्च भावादिकर्मभ्यामन्यत्र वैयात्याऽभावेऽपि 'आदितश्चे'ति निषेध एव स्यादत आह—**भावादीति** । तत्र मानमाह—**अत एवेति** । **हरदत्त इति** । अत्राऽरुचिबीजन्तु 'अवैयात्ये भावाऽऽदिकर्मणोरनभिधाने मानाऽभाव' इति, तत्राऽऽदित्त्वं सफलमि'ति । तदेवाऽऽह—**माधवस्त्विति** । आदित्त्वसामर्थ्यादिति तदाशयः ।

**बलवतीति** । सूत्रे अर्श आद्यजन्तो 'बल'शब्द इति भावः । **इदितो नलोपश्चेति** । अनिदितस्तु नलोपवर्जमिति भावः । इदं च **वृत्तिरीत्या** । भाष्ये तु 'इदित एव निपातनम् । अनिदितस्तु दृहितमित्येवेत्युक्तमि'ति निरूपितं 'ढ्लोप'सूत्रे । परिवृढेऽपि एवम । ननु घत्वाऽभाव एव निपात्यताम , ढत्व-ष्टुत्व-ढलोपास्तु भविष्यन्त्येव, किं तकारस्थानिकढत्वहलोपयोर्निपातनेनेति चेन्न । 'परिदृढय्ये'त्यादौ 'ल्यपि लघु' इत्ययादेशाऽनापत्तेरित्यादि स्पष्टं भाष्ये ।

**कृच्छ्रग** । कृच्छम—दुःखं, तत्कारणं च गृह्यते । कषतिर्हिंसाऽर्थः ।

**कष्टो मोह इति** । 'दुःखहेतुरि'त्यर्थः ।

**घुषिर** । शब्देनाऽभिप्रायप्रकाशनं विशब्दनम् ।

**अमेश्चा** । 'अविदूरस्य भाव' इत्यर्थे ब्राह्मणादित्वात् ष्यञ् । अस्मादेव निपातनात् 'न नञ्पूर्वादि'ति निषेधो नेत्याहुः । नाऽतिदूरसङ्ग्रहाय 'सामीप्ये' इति नोक्तम् । **णिलुक् चेति** । तेन उपधागुणो न ।

**अधीयमाने इति** । 'अधीयमानेऽर्थे चेत् क्तान्तं वर्त्तते' इत्यर्थः । 'अध्ययने' इति बाहुलकात्कर्मणि ल्युडिति भावः । **वृत्तं छन्द इति** ।

---

१ इतोऽग्रे—'बृह बृहीति । 'बृहू उद्यमने' इत्यस्याऽपि 'बृढ'इत्येव । किन्तु तेन 'परि'शब्दादेः समासे, णेरयादेशादि भवत्येवेत्याहुः' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

कर्मणि क्तः। 'वृत्तं छन्दस' इति प्रयोगस्तु केवलाद्वृतेरकर्मकाद्भावे बोध्यः। तत्र हि 'यस्य विभाषे'तीट्प्रतिषेधः। ण्यन्तात्तु भावे क्तो दुर्लभः। 'नपुंसके भावे' इत्यस्याऽपि अकर्मकेभ्य एव विधानादिति स्पष्टं भाष्यादौ। यद्यपि निवृत्तप्रेषणतायाम् अकर्मकत्वं सम्भवति, तथापि भाष्य-प्रामाण्यात् अनभिधानं द्रष्टव्यम[1]। इदं सूत्रं न 'वृत्तं छन्द' इति साधनाऽर्थम्। अन्तर्भावितण्यर्थे केवलस्याऽपि तत्सिद्धेः। अपि तु ण्यन्तस्याऽनिष्टप्रयोगव्यावृत्त्यर्थम्।

केवलः श्रातिः कर्मव्यापारे वर्त्तते। ततोऽकर्मकत्वात्कर्त्तरि क्तः। तदाह—**स्वयमेवेति**। ततो णिचि पचिना समानाऽर्थात्कर्मणि। तदाह—**पक्वमिति**। पाकोऽपि द्विविधः—विक्लित्तिः, विक्लेदना च। न तु पाचना। मानाऽभावात्। ण्यन्तस्य 'पाक'शब्दाऽसम्भवाच्च। तेन श्रपयतेर्णिचि 'शृ'भावो न। व्यवस्थितविभाषालभ्य-वार्त्तिक-सिद्धाऽर्थकथनम्—**क्षीरे-त्यादि**। 'क्षीराऽऽज्यहविषां शृतमि'ति अमरस्य तु प्रमादः।

**वा दान्तशान्त**। दान्त-शान्तयोर्णिलोपः, इडभावश्च, निपातनात्। 'अनुनासिकस्ये'ति दीर्घः। अपरनिमित्तकत्वान्न स्थानिवत्त्वम्। दस्त-स्पष्ट-च्छन्नेषु णिलुगिडभावौ। ज्ञप्ते णिलोपेडभावौ। 'निष्ठायां सेट्ये'ति-नियमात् 'णेरनिटी'त्यस्याऽप्राप्तिः। 'ज्ञप मिच्चे'त्यस्यैवेदं निपातनं, न तु मारणादिषु 'ज्ञा'प्रकृतिकस्य, प्रकृतिभागस्याऽपि लाक्षणिकत्वादि'ति 'निष्ठायां सेटी'त्यत्र कैयटः। 'भरज्ञपी'ति सूत्रे भरादिसाहचर्येण अचुरादेरेव ग्रहणमिति तदाशयः। अत एव सेट्ग्रहणमनिटि प्रतिषेधार्थम्, 'संज्ञपितः पशुरि'ति तत्रत्यं भाष्यं सङ्गच्छते। 'मित्संनिधौ पाठे कर्त्तव्ये, अग्रे पाठेन 'वा दान्ते'ति सूत्रे अमित एव ग्रहणम्। 'ज्ञप्त' इत्यत्र णिलुकोऽपि निपातनान्न वृद्धिः। एवं च पक्षे 'ज्ञापित' इति। एवञ्च 'भरज्ञपी'त्यत्रोभयोः,

---

1 इतोऽग्रे—'प्रयोज्यप्रयोजकयोर्भेदे एव णिच् प्रवृत्तिरि'त्यकर्मकेभ्यो निवृत्त-प्रेषणेभ्यो णिजेव न, एतद्भाष्यप्रामाण्यादि'त्यन्ये' इति ख. ग. ङ. पाठः।

प्रतिपदोक्तश्नपेरेव वा ग्रहणेऽपि न दोष' इति तत्रैव **नारायणः**। '**छन्न** **इति** तु अमित एव निपातनमि'ति भाष्ये एव स्पष्टम्।

**रुष्यम**। 'रुष रोषे'। अस्य 'तीषसहे'ति वेट्त्वात् 'यस्य विभाषे'ति-निषेधे प्राप्ते, विकल्पो विधीयते। **आन्त इति**। 'अम गत्यादिषु'। 'अम रोगे' इति चौरादिकस्तु न गृह्यते। 'एकाच' इत्यधिकारादित्याहुः। 'संघुषाऽऽस्वनोर्विषये उभयत्र विभाषे'ति 'नवे'ति सूत्रे भाष्ये स्पष्टम्।

**तूर्ण इति**। 'ञित्वरा संभ्रमे'। 'ज्वरत्वरे'त्यूठ्। 'आदितश्चे'ति-निषेधे प्राप्ते विकल्पः।

**मन्दमिति**। आत्मनेपदस्याऽनुबन्धाऽन्तरेणैव सिद्धेरिति भावः। केचित्तु 'अस्य आदित्त्वम् अस्य सूत्रस्य भावादिकर्मणोरप्रवृत्तिज्ञापनाऽर्थम्। तथा च विकल्पप्रवृत्त्या तच्चरिताऽर्थम्। तेनाऽन्येषां तयोर्विकल्पो ने'त्याहुः। संघुषेः अविशब्दनेऽपि परत्वादिदमेव। एवम् आस्वनो मनोऽभिधानेऽपि विकल्प एवेति बोध्यम्। **लोमस्विति**। कर्त्तृष्वित्यर्थः। इदम् 'अर्जयमि'त्यत्र भाष्ये स्पष्टम्। केशानामपि लोमत्वात्तत्राऽपि विकल्पः। **अन्यत्र त्विति**। अर्थभेदेन रूपद्वयम्। अर्थैक्येऽपीदृशे विषये द्वैरूप्याय सूत्रमित्याहुः।

**अपचिते**—चायः चिभावः, इडभावश्च निपात्यते। '**क्तिनि नित्यं चिर्वाच्यः**'। 'अपचितिः'। **व्यवस्थितेति**। तेन 'आङ्पूर्वात् अन्धूधसोरेव'। नेह-'आप्यानश्चन्द्रः'। 'अन्धूधसोराङ्पूर्वादेवे'ति च। नेह—'प्रप्यानः अन्धुः'। अनेन उपसर्गाऽन्तरस्यैव व्यावृत्तेः केवलादपि अन्धूधसोः, आङाश्रयनियमद्वयवशाच्च केवलस्य अनन्धूधसोरपि, 'पीनं पुण्यम्' 'पीनं मुखमि'ति स्पष्टं भाष्ये। तत्राऽपि क्वचित् वृत्तिपुस्तके पठ्यमानं विशेषमाह—**अन्यत्र प्यान इति**।

**प्रह्लन्न इति**। 'ह्लादी सुखे'। ईदित्त्वान्नेट्।

**द्यतिस्यतिमा**। 'दो-सो-मा-स्थे'ति सिद्धे श्तिप्निर्देश 'उपसर्गात्

१ 'दोसोमास्थेति सिद्धे श्तिप्निर्देशो यङ्लुग्निवृत्त्यर्थः। तत्सामर्थ्याच्च तत्र

सुनोती'त्यादिवत्। **ईत्त्वेत्यादि**। तत्त्वं[1] तु स्वविषये परत्वादस्य बाधकमिति बोध्यम्। **मा माङिति**। गामादाग्रहणेष्वविशेषादिति भावः।

**दधातेरिति**। श्तिपा निर्देशो[2] घेटो निवृत्त्यर्थः। **दथ् इति**।

**'तान्ते दोषो 'दस्ती'ति स्यात्, दान्ते दोषो निष्ठानत्वम्।**

**धान्ते दोषो धत्वप्राप्तिस्थान्तेऽदोषस्तस्मात् थान्तः'॥**

—इति भाष्यादिति भावः। **तकारादाविति**। 'यस्मिन्विधिरि'तिन्यायात् अयमेवाऽर्थो, न तु 'तान्ते दाधातौ' इति भावः। **स्वशास्त्रपठिता**ऽसिद्धशास्त्रबाधाऽपेक्षया, व्याकरणाऽन्तरपठितस्य 'यस्मिन्विधिरि'त्यादेरेव बाधेन 'तान्तदाधातुघटितोत्तरपदे' इत्येवाऽर्थ उचित इति तु भाष्याऽऽशयः।

**सन्निपातेति**। न च नत्व-धत्वयोरसिद्धत्वात् अस्या अप्रवृत्तिरिति वाच्यम्। असिद्धस्याऽपि तद्विघातकविधेरनया वारणात्। ध्वनितं चेदं 'कृन्मेजन्त' इति सूत्रे भाष्ये इति निरूपितम् अष्टन्शब्दे। 'जग्धमि'त्यादावपि धत्वाऽनापत्त्या ईदृशे विषये सन्निपातपरिभाषाया अनित्यत्वाऽऽश्रयणम् आवश्यकमिति तु भाष्याऽऽशयः।

**अच उपसर्गा**। 'अच' इति आवर्त्तते। तत्रैकं पञ्चम्यन्तम् उपसर्गविशेषणम्। अपरं षष्ठ्यन्तं स्थानिलाभाय। तदाह–**अजन्तादिति**। **अच इति च**। एतेन 'आदेः परस्ये'ति आदेः तः स्यादि'त्यपास्तम्। यद्वा द्वितकारकोऽयमादेशः। तेनाऽनेकाल्त्वात्सर्वाऽऽदेशः। 'अच' इति पञ्चम्यन्तमेव। 'अपो भी'त्यत्र तु 'अच' इत्यनुवर्त्त्य अचः परस्य पकारस्य तद्द्वयात्मके आदेशे, अन्त्यस्य संयोगाऽन्तलोपे, पूर्वस्य जश्त्वे, रूपसिद्धेः।

---

इडभावोऽपि। तथा च तत्र इत्त्वाऽभावे, 'दो दद्'ति सर्वाऽऽदेशे, 'दत्त' इत्येव रूपमित्याहुः। 'उपसर्गात्सुनोती'त्यादिवत् अयमपि श्तिपा निर्देश' इत्यन्ये' इति ख. ग. ङ. पाठः।

1 तत्त्वम् = 'अच उपसर्गा'दिति तकारादेश इत्यर्थः।

2 'श्तिपा निर्देशः प्राग्वत्। 'घेटो निवृत्त्यर्थ' इत्यन्ये' इति ख. ग. ङ. पाठः।

'उपसर्गाः क्रिये'त्यत्र 'मरुत उपसङ्ख्यानम्' । 'मरुद्त्तो मरुत्त' इति 'अचः उपसर्गादि'ति तत्वमि'त्युक्तम । 'अनेन[1] उपसर्गत्वमेव, न निपातत्वम् । तत्वे एव चेदम । सामर्थ्यात् अनजन्तत्वेऽपि प्रवृत्तिरि'ति कैयटः ।

**अवदत्तमित्यादि** । 'आदिकर्मणी'त्येतत् प्रदत्तस्यैव विशेषणमि'ति **कैयटः** । **चादि**ति । अत एव प्रकृतसूत्रस्थं 'प्रत्तम' 'अवत्तमि'त्यवकाश' इति भाष्यम, 'दस्ती'ति सूत्रस्थं 'नीत्ता, वीत्ते'त्युदाहरणपरं च भाष्यं सङ्गच्छते । 'सु'पूर्वस्य तु न । 'गतिश्चे'त्यत्र भाष्ये सोस्तत्वे उपसर्गत्व-प्रतिषेधादित्याहुः ।

'**नीत्तमि**'त्युत्तरं '**वीत्तमि**'त्येव पाठः । 'सूत्तमि'ति त्वपपाठः ।

**प्रकृत इति** । 'कटं कर्तुमारब्धवानि'त्यर्थः । **प्रकृतः कट इति** । कर्मणि क्तः । प्राद्यभावेऽपि प्रकरणादिना आदित्वाऽवगतावपि भवत्येव ।

**वाऽऽक्रोश** । अत्राऽपि 'अण्यदर्थे' इति वर्त्तते । लगिकम्प्योस्तु–'निष्ठायां लङ्गिकम्प्योरुपतापशरीरविकारयोरि'ति नलोपः । 'विलगितः','विकपितः'। गत्यर्थत्वात्कर्त्तरि क्तः । कृच्छ्रप्राप्तिरत्रोपतापो, न रोगः । 'शरीरविकारे' इत्येव सिद्धेः । स च व्याधिरेव, न स्थौल्यादि । कम्पेरतद्विषयत्वात् । इदित्त्वादप्राप्तिः । अन्यत्र नकारश्रवणमेव ।

**निनदीभ्याम्** । निपूर्वस्नातेः[2] कौशलेऽर्थे निष्ठाऽन्तस्यैव प्रचुरप्रयोग-दर्शनात् इदमत्रोपन्यस्तम् । **नदीष्णः** । 'नदीस्नाने कुशल' इत्यर्थः ।

**कपिष्ठलो** । गोत्रमिह पारिभाषिकमेव । अस्याऽसिद्धतया एत-द्विषये राजन्य-मनुष्यग्रहणज्ञापिताऽर्थस्याऽप्रवृत्तेः । गोत्रसंज्ञासूत्रन्तु कार्य-कालत्वात् प्रवर्त्तते एवेति भाष्यस्वरसः । 'गोत्रप्रत्ययप्रकृतित्वेन दृष्टो यः कपिष्ठलशब्द' इति व्याख्येयम् । अस्याऽत्रोपन्यासः प्रासङ्गिकः । एवं '**विकुशमी**'त्यस्याऽपि ।

---

१ अनेन = मरुत उपसङ्ख्यानमिति वार्त्तिकेन, मरुत उपसर्गत्वमेवेत्यर्थः ।

२ 'निपूर्वात् स्नातेः' इति ख. ग. ङ. पाठः ।

**गत्यर्थाऽकर्मक**। 'आदिकर्मणि चे'ति सूत्रात् 'क्तः' 'कर्त्तरि चे'ति वर्त्तते। तदाह—**एभ्य इति**। प्राप्तिरपीह गतिः। 'प्राप्ताऽऽपन्ने चे'ति-सूत्रं चेह मानम्। तदाह—**गङ्गां प्राप्त इति**। **उपोषिते**—'वसतिक्षुधो-रि'तीट्। 'शासिवसी'ति षः। 'अत्र चकारोऽनुक्तसमुच्चयाऽर्थः। तेन सुवतेः 'सूत' इत्यत्र कर्त्तरि क्त' इति 'अजेर्वी'तिसूत्रे कैयटः। 'रुहिग्रहण-मत्र व्यर्थमि'ति 'यद्धितुपरम्' 'अधिकमि'तिसूत्रस्थभाष्यस्वरसः[1]।

[2]**क्तोऽधिकरणे**। **ध्रौव्यं स्थैर्यमिति**। तदर्थाश्च अकर्मका एव प्रायेण। आसितम्=आसनम्। यातम्=मार्गः। भुक्तम्=भोजन-पात्रम्। 'अधिकरणवाचिनश्चे'ति षष्ठी। **मत्वर्थीयोऽजिति**। एवं 'पीता गाव' इत्यपि बोध्यम्। अत्र **केचित्**—'गत्यर्थे'त्यनेन सकर्म-केभ्योऽपि भावे क्तः। विशेष[3]विधानात्। अत एव 'अन्यपदार्थे चे'ति-सूत्रे 'मत्वर्थे बहुव्रीहिरिति वक्तव्यम्'। इह मा भूत्-कष्टं श्रितमनेने'ति भाष्ये उक्तम्। अत्र हि भावे क्तो, न कर्त्तरि, कर्मणि वा। तथा हि सति 'कर्तृकर्मवाचकेनाऽप्रथमाया' इत्युत्तरवार्त्तिकेन तत्र समासो दुर्वार एव स्यात्। अत एव 'श्रान्तं देशम्' 'गतं तिरश्चीनमनूरुसारथेरि'त्या[4]दि सिद्धम्। 'अजर्यं सङ्गतमि'त्यत्र भाष्यकैयटयोः स्फुटमेतदिति वदन्ति।

---

१ इतोऽग्रे—'केचित्तु सम्बद्धार्थो रुहिः। 'अध्यारूढो द्रोणः खारीमि'ति यथे-त्याहुः'इति ग. पाठः। 'अध्यारूढो द्रोणः खारीमि'त्यत्र कृतक्तस्य सम्बद्धे-ऽर्थे लक्षणेति तत्तात्पर्यम्' इति ख. ङ. पाठः।

२ 'क्तोऽधिकरणे। नचेदं'क्त'पदरहितं 'दाशगोघ्नौ' इत्यतः पूर्वमेव कर्तुं युक्तम्। तत्सामर्थ्यात् अपादानेऽप्येतत्प्रवृत्तेः। चेन व्याख्यानात् 'कर्त्तरि चे'ति व्यवहितस्याऽप्यनुकर्षः। ध्रौव्यार्था इत्यकर्मका उच्यन्ते' इति ग. पाठः।

३ 'विशेषविधानात्। एवम् 'आदिकर्मणी'त्यनेनाऽपि' इति ग. पाठः।

४ 'इत्यादि सिद्धम्। अत एव 'तयोरेव कृत्यक्तखलर्थाः' 'क्त आदिकर्मणि कर्त्तरि चे'ति नाऽसूत्रि। पूर्वसूत्रोपात्तक्तापेक्षयाऽस्य क्तस्य वैलक्षण्यबोधनाय पुनः क्तस्योक्तिः। तच्चोक्तरूपमेवेति वदन्ति' इति ख. ग. ङ. पाठः।

'क्तोऽधिकरणे चे'त्यनेन तु न । व्यवहितपाठेन तत्र 'कर्त्तरि' 'भावकर्मणो'रित्यननुवृत्तेः । अत एव 'पीताः ब्राह्मणा' इत्यादिसिद्धये कर्मक्तान्तात् अर्श आद्यजन्तता आश्रिता भगवता, कैयटेन च । अत एव 'ओदनं भुक्तमि'त्याद्यसाध्वेव । अत एवाऽत्र 'चाद्यथाप्राप्त'मित्येव व्याख्यातमिति दिक् ।

ञीतः[1] क्तः । अत्र 'कर्त्तरि चर्षी'ति सूत्रात् 'कर्त्तरी'ति च वर्त्तते । 'करणे' इति तु न । चाऽनुकृष्टत्वात् । तेन ञीद्भ्यो[2] भावकर्मणोर्भूते निष्ठा भवत्येवे'ति कश्चित् ।

क्ष्विण्ण, इद्ध इति । 'आदितश्चे'ति, 'श्वीदित' इति च नेट् ।

इष्ट[3] इति । 'तीषसहे'ति वेट्कत्वात्'यस्य विभाषे'ति नेट् । इत्यादीति ।

'रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ।
हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ ॥
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत्स्मृताः ॥'

—इति भाष्योक्ता 'आदि'ग्राह्याः । रुषेः[4]—'रुष्यमत्वरे'तीट् वा । 'कष्ट'शब्दो भविष्यत्काले । अमृताः पूर्ववत् = 'न म्रियन्ते' इति वर्त्तमाने इत्यर्थः । अत एव 'सुवतेः सूत' इत्यत्र 'वर्त्तमाने क्त' इति 'अजेर्वी'तिसूत्रे कैयटेनोक्तम् ।

निष्ठाप्रसङ्गादागतं सर्वं समाप्य प्रकृतं व्याचष्टे—सुयजोरिति ।

---

१ 'ञीतः क्तः' इत्यारभ्य 'इति कश्चित्' इत्यन्तः ख. ग. ङ. पाठः । क. नास्ति ।

२ 'ञीतो' इति ग. पाठः ।

३ इतः पूर्वं—'मतिबुद्धि । अत्र 'कर्त्तरी'ति न सम्बध्यते । योगविभागसामर्थ्यात् । अत एव 'क्तेन च पूजायामि'ति कर्तरि षष्ठीविधानं चरितार्थम्' इति ग. पाठः ।

४ 'रुषः' इति ग. पाठः ।

**सुनोतेरिति**। 'सु गतौ' 'षु प्रसवैश्वर्ययोरि'त्यनयोस्तु न ग्रहणम्। अनभिधानात्। उभयपदिना साहचर्याद्वा। **सुत्वेति**। ङित्त्वान्न गुणः। पित्त्वात्तुक्। **जीर्ण इति**। 'जीनो जीर्णो जरन्नपी'त्यमरः।

**छन्दसि लिट्**। 'छन्दसि लुङ्लङ्लिट' इत्येव सिद्धे, इदम् अधातुसम्बन्धाऽर्थम्। न चाऽनेनैव सिद्धे तत्र लिट्ग्रहणं व्यर्थम्। लुङ्लङ्भ्यां बाधाऽऽपत्तेः। अनुबन्धाऽतिरिक्तकृतौपदेशिकाऽसरूपत्वस्यैव 'वाऽसरूप'सूत्रे ग्रहणेन तस्येहाऽप्रवृत्तेः। अत एव लिटा लुङ् बाध्यते। निरूपितं चेदं 'विभाषा कदे'ति सूत्रे।

'छन्दसि लिडि'त्यस्याऽर्थमाह—**भूतसामान्ये इति**। **तस्येति**। 'अनन्तरस्ये'ति न्यायेन 'लिटः कानज्वे'त्यत्र पूर्वलिट एव ग्रहणात्। सूत्रे 'लिट' इति तु क्वसुकानचोः प्रत्ययाऽन्तरत्वशङ्काव्यावृत्त्यर्थम्। योगविभागस्तूत्तरत्र क्वसोरेव सम्बन्धाऽर्थः। ननु 'कानज्वे'ति 'वा'ग्रहणं व्यर्थम्। न च पक्षे तिङः श्रवणाऽर्थम्। वाऽसरूपन्यायेन सिद्धेः। न च लादेशेषु वाऽसरूपविधिर्नास्तीति वाच्यम्। फलाऽभावात्। इति चेन्न। सदादिभ्यो भूतसामान्ये लिटः पक्षे तिङामश्रवणस्य फलस्य सत्त्वात्। शतृविषये यथा तिङस्तथा वक्ष्यते। मानं त्वत्र इदमेव 'वा'ग्रहणम्। स्पष्टं चेदं 'लटः शतृ' 'तौ सदि'त्यादिसूत्रेषु भाष्ये। एवं च अधातुसम्बन्धेऽपि पक्षे तिङर्थं 'वा'ग्रहणम्। 'तदेतत्तिष्ठतु तावत्सांन्यासिकमि'ति भाष्यस्याऽयमेवाऽऽशयः।

कानचश्चित्त्वं स्वराऽर्थम्। 'असंयोगादि'ति कित्त्वे सिद्धे, कित्त्वं तु 'आजिवानि'त्यादौ नलोपाय। न च 'छन्दस्युभयथे'ति सार्वधातुकत्वस्याऽपि सत्त्वात् 'सार्वधातुकमपिदि'ति ङित्त्वेनैव तत्सिद्धिः। एवं तर्हि 'तिस्तिराणः' 'तितीर्वानि'त्यत्र'ऋच्छत्यृतामि'ति निषेधविषयगुणबाधनाऽर्थं तत्। 'आरिवानि'त्यादौ गुणस्तु'ऋच्छत्यृतामि'त्यत्र ऋकाराऽन्तरप्रश्लेषेण 'ऋ'धातोः पुनर्विधानाद्बोध्य इति दिक्।

**छान्दसाविति**। 'छन्दसी'ति प्रक्रम्य विधानादिति भावः। **केचित्त**

'विभाषा पूर्वाह्णे'ति सूत्रे 'पपुष आगतं पपिवद्रूप्यमि'ति भाष्ये लौकिकविग्रहवाक्येऽपि क्वसुप्रयोगदर्शनात् क्वचिल्लोकेऽपि क्वसुर्भवतीति नोक्तप्रयोगेषु दोषः। उक्तभाष्यप्रामाण्यात् 'संयोगाऽन्तेभ्यः परं छन्दस्येवे'ति कल्प्यम्। कानच्च च्छन्दस्येव। उत्तरसूत्रन्तु 'तेभ्योऽन्यत्र क्वचिदेवे'त्यर्थज्ञापनाऽर्थमित्याहुः[1]।

वस्वेकाजात्। ननु 'एकाच्'ग्रहणं व्यर्थम्। अनेकाच्सु लिटि आमो दुर्वारत्वात्। मन्त्रे तथा प्रयोगाऽभावाच्च। न च 'उपविदे'त्यामोऽभावे जागर्त्तिर्व्यावर्त्त्यः। 'न चैकमुदाहरणमि'ति न्यायात्। न च दरिद्रातिर्व्यावर्त्त्यः। आद्ग्रहणेन तत्र सिद्धेः, तस्य व्यावर्त्त्यताया वक्तुमशक्यत्वात्। कृतद्वित्वानामित्यर्थाऽभावे आद्ग्रहणं भूतपूर्वाऽऽकारान्तग्रहणेन दरिद्रात्यर्थमेवेति चेन्न। तत्सामर्थ्येन कृतद्वित्वैकाऽचामित्यर्थात्। तदाह—कृतद्वित्वेति। 'द्वित्वोत्तरवर्त्त्यभ्यासादिकार्येषु कृतेष्वेकाचामि'त्यर्थः। एवं च साम्प्रतिकग्रहणेन आत्पदस्य चारितार्थ्यात् दरिद्रातौ न भवत्येवेडिति बोध्यम्। नन्वेवं 'घसि'ग्रहणं व्यर्थमिति चेन्न। द्वित्वात्परत्वात्, नित्यत्वाच्च 'घसिभसोर्हलि चे'ति लोपे अनच्कत्वेन द्वित्वस्यैवाऽभावात्। द्वित्वनिमित्ताऽजिनमित्तत्वाऽभावेन 'द्विर्वचनेऽची'त्यस्याऽप्राप्तेः। घसिग्रहणे तु इट्लोपयोरुभयोरपि नित्यत्वेन, परत्वादिटि, ततो लोपे, 'द्विर्वचनेऽची'ति सिद्धमिष्टम्। नान्येषामिति। क्रादिनियमात्प्राप्तस्य नियमोऽयमिति

१　'इत्यर्थज्ञापनाऽर्थम्। 'अत एव 'दाश्वान्साह्वान्मीढ्वांश्चे'ति द्वित्वाऽभावेडभाव-दीर्घ-ढत्वानां निपातनं छन्दसि, भाषायां चाऽविशेषेण प्रवर्त्तते' इति वृत्तिकृतः। क्वसोस्तु तेन न निपातनम्। गौरवात्। तत्प्रकरणेऽपाठाच्च। 'साह्वान्विश्वा' इति मन्त्रे पदपाठे 'सह्वानि'ति पठ्यमाने ह्रस्वे, द्वित्वाऽभावे च उपायाऽन्तरकल्पना[1] सर्वेषामावश्यकीत्याहुः' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

1　'उपायाऽन्तरकल्पना = पृषोदरादित्वकल्पना' इति लघुशब्दरत्नम्।

भावः। न च[1] 'पपिवानि'त्यादौ[2] सन्निपातपरिभाषया आलोपो न स्यादि'ति वाच्यम्[3]। तस्या अनित्यत्वात्[4]। स्पष्टं चेदं 'कृन्मेजन्त'सूत्रे भाष्ये। अत एव भाष्ये उक्तम्—'वयं तु ब्रूमो नियमाऽर्थमि'ति।

लिड्वेति। व्याख्यानात् 'वा'ग्रहणं लिटैव सम्बध्यते। स चाऽनेनैव[5]। तत्फलं पक्षे लुङादिसिद्धिः। एतेन 'प्रसिद्धलिडनुवादेनैव क्वसुर्विधेय' इति परास्तम्।

ननु अस्वरितत्वादेव 'छन्दसी'त्यस्य अननुवृत्तौ, 'भाषायामि'ति व्यर्थम्। 'लिटः कानज्वे'त्यस्य च्छान्दसत्वन्तु 'अनन्तरस्ये'ति न्यायेन पूर्वलिडादेशत्वादेवेति चेन्न। भाषामात्रे प्रवृत्त्यर्थं तत्। तेन 'अनद्यतने लङ्' 'परोक्षे लिडि'ति सूत्रद्वयविषयेऽप्यस्य प्रवृत्तिः। अस्य लिटो वैकल्पिकत्वात्, पक्षे तयोः प्रवृत्तौ, तिङां श्रवणमिति स्पष्टं भाष्ये। एतेन 'लुङोऽपवादोऽयं लिट्, लङ्लिटौ च, तत्र उभयप्रसङ्गे परत्वाल्लङ्लिटौ स्याताम। न च भूतमात्रनिमित्तकत्वेन अन्तरङ्गत्वात्पूर्व एव विधिः। प्रकृतिविशेषाऽपेक्षत्वेन समत्वादि'त्यपास्तम्।

तस्य नित्यमिति। अस्य बीजं तूक्तम्। लिटो वैकल्पिकत्वात् पक्षे 'आसदत्' 'आसीदत्' 'ससादे'त्यादि भवति।

इडिति। वलादिलक्षण इट् 'नेड्वशी'ति, 'एकाच उपदेशे' इति वा निषिद्धोऽपि, क्रादिनियमाद्भवतीति भावः। न च 'वस्वेके'ति नियमात्

१ इतोऽग्रे—'नियमस्य निषेधमुखेन प्रवृत्तौ 'वसौ आकाराऽन्तभिन्नादिट् ने'-त्याकारः। एतेन पपिवानित्यादौ' इति ख. ग. ङ. पाठः।

२ 'एतेन पपिवानित्यादौ' इति ख. ग. पाठः।

३ 'दित्यपास्तम्। 'आर्द्धधातुकस्येड्व'स्येवेटः सत्त्वेन आकारस्येडनिमित्तत्वात्' इति ख. ग. ङ. पाठः।

४ 'संनिपातपरिभाषाया अनित्यत्वात्' इति ख. ङ. ङ. पाठः।

५ 'अनेनैव विधेय' इति ख. ङ. पाठः। 'अनेनैव कल्प्यः' इति ग. पाठः।

अप्राप्तिः, द्वित्वे अनेकाच्त्वादिति वाच्यम् । सवर्णदीर्घे एकाऽच्त्वात् । न च 'दीर्घ इण' इत्येतत्सामर्थ्यात् सवर्णदीर्घाऽभावः । 'ईयतुरि'त्यादौ यणादेशे, तस्य सावकाशत्वात् । 'अचः परस्मिन्नि'ति तु पूर्वस्यैव विधौ, नाऽन्यत्र । एवं च सवर्णदीर्घे इटि, कृतदीर्घस्य ईयादेशो, निपातनात् । अत एव निपातनं चरितार्थम्[1] ।

**अविवक्षितमिति** । अत्र च व्याख्यानमेव शरणम् । अत एव 'एकादिष्टस्य ईय् भवती'ति भाष्ये दीर्घोच्चारणम्, असन्धिश्चेत्याहुः । **अश्नातेरिति** । अत एव न नुड् । **वचेः कर्त्तरीति** । न तु भावकर्मणोः । एतदपि निपातनाल्लब्धम् । स्पष्टं चेदं भाष्ये । **साहचर्यादिति** । 'लुग्विकरणपरिभाषासहकृतादि'त्यर्थः । एतेन 'हनिसाहचर्यात् वेत्तेरपि ग्रहणं स्यादि'त्यपास्तम् । स्पष्टं चेदं 'यस्य विभाषे'त्यत्र भाष्ये ।

**दृशेश्च** । वार्त्तिकमेतत् ।

**लटः शतृशानचौ** । 'अनन्तरस्ये'ति न्यायेन 'वर्त्तमाने लडि'ति-विहितस्यैव इमाविति 'वर्त्तमानसामीप्ये' इति सूत्रे, 'ननौ पृष्टप्रतिवचने' इति सूत्रे च भाष्ये स्पष्टम् ।

**सामानाधिकरण्ये इति** । यद्यपि तिङन्तोपस्थाप्ययोः कर्त्तृकर्मणोः अप्रथमान्तेन सामानाधिकरण्यं नाऽस्त्येव, तथापि कृदन्तोपस्थाप्ययोः तद्दर्शनात्, कृत्स्थानित्वेन कल्प्यमानो लकारः प्रकृत्यर्थं प्रति प्रधानभूतकर्त्तृकर्माऽभिधायक एव कल्प्यते इति भावः । लकारवाच्यांऽशस्य

१ इतोऽग्रे[1]—'यद्वाऽस्य द्विर्वचने कृतेऽपि, सवर्णदीर्घे इटः प्राप्त्या, उभयोर्नित्ययोरिट्द्वित्वयोः परत्वादिटि, द्वित्वे, उत्तरखण्डे यणि, पूर्वखण्डे 'दीर्घ इण'इति दीर्घे, सिद्धम् 'ईयिवानि'ति । अत एव 'उपेयुष'इति सम्प्रसारणविषये नेट् । निपातनन्तु प्रपञ्चाऽर्थम्' इति ख. ङ. पाठः । क. कुण्डलितः ।

1 'यद्वा सवर्णदीर्घे एकाच्त्वसम्भावनया नियमाऽप्रवृत्तौ परत्वादिटि' इति ग. पाठः ।

तिङ्कृतोरविशेषेऽपि, गुणप्रधानभावेन वैलक्षण्यमिति फलितम्। एवं च प्रक्रियानिर्वाहाय कल्प्यमानलस्य काल्पनिकाऽप्रथमान्तेन काल्पनिकं सामानाधिकरण्यमनुमीयते। शत्रन्ते तस्य दर्शनात्। अन्यथा तदनुवादेन विध्यनुपपत्तेः। एतेन 'लस्य क्वाऽपि प्रयोगाऽभावेन लटोऽप्रथमाऽन्तेन सामानाधिकरण्यं कथमि'त्यपास्तम्।[1]

**आने मुक्**। 'अतो येय' इत्यतः 'अत'इत्यनुवर्त्तते। तच्च 'आने' इति सप्तम्या अचरितार्थया पूर्वसूत्रे चरिताऽर्थं पञ्चम्यन्तं षष्ठ्या विपरिणम्यते। तदाह—**अङ्गस्याऽत इति**। 'पचमान' इत्यत्र 'आतो ङित' इति तु न। 'सत्यपि सम्भवे बाधनं भवती'ति 'येन नाऽप्राप्ति'न्यायेन मुक इयपवादत्वात्[2]। 'अत' इति तपरकरणान्ने'ति तु चिन्त्यम्। विधित्वे 'तपरः तत्कालसवर्णस्य ग्राहक' इत्यर्थो, न तु अन्यनिवर्त्तकमेतत्। नियमत्वेऽपि अतत्कालसवर्णग्रहणमेव व्यावर्त्तयेत्, न तु 'यदागमा' इत्येतल्लब्धमिति वदन्ति।

अत एव अदुपदेशप्रयुक्तस्वरसिद्धिः। किञ्च 'अङ्गकार्ये' इति निषेधान्न इय्। क्वचिद्वर्णग्रहणे 'यदागमा' इत्यस्याऽप्रवृत्तेश्च। यत्तु 'अदन्ताऽङ्गस्ये'ति व्याख्यानम्। तन्न। 'अदुपदेशादि'ति लसार्वधातुकस्वराऽनापत्तेः। तव हि समुदायभक्तोऽसौ समुदायमेव न व्यवदध्यात्, अवयवम् अकारं तु व्यवदध्यादेव। स्वरोद्देश्यकविधेरभावात्, हल्स्वरप्राप्तेरभावाच्च, न व्यञ्जनस्याऽविद्यमानवत्त्वम्। न च स्वरे बहिरङ्गो मुक्[3] असिद्धः। 'नाऽजानन्तर्ये' इति निषेधादिति दिक्।

---

१ इतोऽग्रे—'पचती'ति विग्रहस्त्वीषत्साम्येन' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

२ 'इयपवादत्वात् पूर्वम् अप्रवृत्तेः। ततः पश्चादपि भ्रष्टावसरन्यायादप्रवृत्तेः' इति ग. पाठः।

३ 'मुम् असिद्धः' इति सर्वत्र पाठः।

**अनुवर्त्तमाने इति**। तस्य च व्याख्यानात्षष्ठ्या विपरिणाम इति भावः। **पुनरिति**। एवं हि पुनर्विधिः सम्पद्यते। स च प्रथमेनाऽप्राप्तेऽपि[1] क्वचित्प्रवृत्त्यर्थ इति भावः। इदं च **वृत्त्यनुरोधेन**। वस्तुतस्तदभावे प्रत्ययाऽन्तरत्वमेव स्यात्। एवं च कर्मणि शानच् न स्यात्। अतो 'लटः शतृशानचौ' इति योगविभागेनाऽयमर्थः साध्य इति भाष्ये स्पष्टम्। उत्तरं तु पूर्वस्य काचित्कत्वज्ञापनाऽर्थम्। तदाह—**क्वचिदिति**। 'कदाचिदि'त्यपि बोध्यम्। तेन 'पचति ब्राह्मणोऽस्ति' 'सन् वा ब्राह्मण' इति सिद्धम्। यत्त्विदं वाऽसरूपन्यायेन सिद्धम्। न चाऽनयोर्न तिङपवादत्वम्, भिन्नाऽर्थत्वात्, तिङि सङ्ख्यायुष्मदाद्यर्थोऽपि भासते, न कृतीति वाच्यम्। युष्मदाद्यर्थस्य समभिव्याहृतपदेन, अर्थाऽध्याहारमात्रेण वा बोधात्। सङ्ख्यायाश्च कृदुत्तरं सुबावश्यकत्वेन, तेन प्रतीतेरि'ति। तन्न। आदेशेषु वाऽसरूपविध्यभावात्।

'**अप्रथमे**'त्यादेः—'प्रथमान्तेन सामानाधिकरण्याऽभावे' इत्यर्थः। तेन 'कौर्वत' इत्यादि सिद्धम्। एवं च 'लक्षणहेत्वोः' 'सम्बोधने चे'तिसूत्रे अपि प्रथमासमानाधिकरणाऽर्थे इति बोध्यम्।

**शयाना इति**। शयनं भुज्यर्थपरिचायकम्। तदुपलक्षितभुज्यर्थेन च यवनाः परिचाय्यन्ते इत्यन्यत्। अर्जनं वासफलम्[2]। हरिदर्शनं मोक्षसाधनम्[3]। इह लक्षणत्वादि द्योत्यम्। शत्राद्यर्थस्तु[4] कर्त्रादिरेव। 'परिचायकशयनाऽऽश्रययवनरूपाऽनेकाश्रयनिष्ठा वर्त्तमाना भुजिक्रिया, 'फलीभूताऽर्जनाऽऽश्रयकर्त्तृको वासः', 'जनकहरिदर्शनाऽऽश्रयनिष्ठोमोक्ष' इति बोधः। क्रियाया इति किमर्थम्?। 'यः कम्पते सोऽश्वत्थः'

---

१ 'प्रथमेनाऽप्राप्तस्य' इति ग. पाठः।

२ 'वासस्य फलम्' इति ख. ग. ङ. पाठः।

३ 'मोक्षस्य साधनम्' इति ख. ग. ङ. पाठः।

४ 'लडर्थस्तु' इति ख. ग. ङ. पाठः।

इत्यादौ मा भूदि'ति वृत्तिः। इदं सूत्रं 'हन्तीति पलायते' इत्यादौ न। 'नन्वोर्विभाषा'इत्यतो 'विभाषा'पदाऽनुवृत्त्या व्यवस्थितविभाषाऽऽश्रयणादिति 'हेतुहेतुमतोरि'त्यत्र भाष्ये स्पष्टम्।

**वेत्तेरिति**। सत्ता-विचाराऽर्थयोरात्मनेपदित्वात्तयोः शतुरसम्भवः। लाभाऽर्थस्य तु विकरणेन व्यवधानम्, अतो ज्ञानाऽर्थस्य ग्रहणमिति भावः। स्थानिवत्त्वादेव सिद्धे, वसोः उगित्त्वं 'वसु'ग्रहणे क्वसोरपि सामान्यग्रहणाऽर्थम्। एकाऽनुबन्धकादिपरिभाषाऽपि तत्सामर्थ्यात् न प्रवर्त्तते इति बोध्यम्।

**तौ सत्**। अनुवृत्त्यैव सिद्धे 'तौ'ग्रहणं कालाऽन्तरे विहितस्य, 'द्विषोऽमित्रे' इति विहितस्य च शत्रादेः संज्ञाऽर्थम्। तच्छब्दसामर्थ्यात् लट्स्थानिकत्वादिरूपविशेषाऽविशिष्टौ शतृशानचौ 'तौ'शब्देन परामृश्येते। अत एव 'वर्त्तमाने' इत्यस्याऽत्राऽसम्बन्धः[1]। तेन 'विप्रस्य द्विषन्', 'द्वेक्ष्यमाण' इत्यादावपि 'पूरणगुणे'ति निषेध इत्याहुः।

**क्वचिदिति**। 'कदा चिदि'त्यपि बोध्यम्। तदाह—**करिष्यति, करिष्यन्निति**। 'लटः सद्वे'त्यस्याऽपि भविष्यदधिकारविहित'लट्-शेषे चे'ति लट्येव प्रवृत्तिरि'ति'अनवक्लृप्त्यमर्षयोरि'त्यत्र भाष्ये स्पष्टम्।

**पूङ्यजोः**। 'लट' इति निवृत्तम्। तेन इत आरभ्य प्रत्ययाऽन्तरत्वमेव। भावकर्मणोश्च न भवन्तीति 'तौ सदि'त्यत्र भाष्ये स्पष्टम्। 'न लोके'ति सूत्रे'तृन्'इति प्रत्याहारात् अलादेशत्वेऽप्येतद्योगे षष्ठीनिषेधः।

**ताच्छील्य**। अलादेशत्वात् अयं परस्मैपदिभ्योऽपि। तदाह—**निघ्नान इति**। **अकृच्छ्रिणीति**। 'अनायासेन क्रियानिर्वर्त्तके' इत्यर्थः।

**द्विषोऽमि**। अमित्रे किम्?। 'द्वेष्टि पतिं भार्या'।

**सुञो**। 'अतः शतृ स्यात्, यज्ञेन संयुज्यमाने कर्त्तरि शत्रन्तस्य

---

[1] 'न च 'लटः सद्वे'त्यारम्भसामर्थ्यादेव तस्य संज्ञासिद्धिः। 'सत्संज्ञकसद्दशावि'त्यर्थेनाऽप्युपपत्तेः, तयोः सत्संज्ञा तु न स्यात्' इति ग. पाठः।

वृत्तिश्चेदि'त्यर्थः । 'संयोगग्रहणात् प्रधानकर्त्तरि यजमाने एवेदम्। अन्यथा 'यज्ञे' इत्येव 'यज्ञविषयश्चेत्सुनोत्यर्थ' इति व्याख्ययैव सुरासुतो व्यावृत्तौ, तद्वैयर्थ्यं स्पष्टमेव। तेन ऋत्विक्षु 'लटः शतृ' इत्यपि न, संयोगग्रहणसामर्थ्यादि'ति हरदत्तः। 'यः सुन्वन्तमवैती'त्यादौ एकवचनान्तानां यजमानरूपाऽधिकारिपरत्वं निर्विवादमेव । बहुवचनान्तानान्तु स्थलविशेषे एव सम्भवतीति दर्शयितुमाह—**सर्वे सुन्वन्त इति** ।

तद्व्याचष्टे—**सर्वे इति**। सत्रिणः सर्वे यजमानाः । 'एवमुच्यन्ते' इति शेषः। **अर्हन्निति**। 'इह भवान्' 'विद्यामि'ति वा शेषः । प्रेत्यादि किम्? । 'अर्हति वधं चोरः' ।

**आ क्वे**। 'भ्राजभासे'ति क्विपम् आ इत्यर्थः । 'ताच्छीलिकाः प्रायेण सोपसर्गेभ्यो न भवन्ती'ति 'आढ्ये'त्यादिसूत्रे भाष्ये स्पष्टम्। 'तच्छीले'-त्यादौ तच्छब्दैः प्रकृतिभूतधात्वर्थः परामृश्यते। **तच्छीलः**—फलनिरपेक्षः। **तद्धर्मा**—'स्वधर्मो ममाऽयमि'ति यः प्रवर्त्तते । **साधुकारी**—तौ विनाऽपि यो धात्वर्थं साधु करोति सः ।

**अभिव्याप्येति**। इदं च'अन्येभ्योऽपि दृश्यते' इति सूत्रे भाष्ये स्पष्टम्।

**तृन्**। **कर्त्ता कटानिति**। 'न लोके'ति षष्ठीनिषेधः। **तद्धर्मे**—'मुण्डयितारः श्राविष्ठायना भवन्ति वधूमूढाम्'। **तत्साधुकारिणि**—'कर्त्ता आखेटमि'ति ।

**अलङ्कृञ्निरा** । 'कृञि'ति करोतेरेव ग्रहणम्, प्रसिद्धत्वात्, न हिंसाऽर्थस्य । 'उदः पचपतमद' इति पृथक्सूत्रेणैव सिद्धे, पचादीनां त्रयाणां प्रत्येकम् उत्पूर्वपाठ उपसर्गाऽन्तरनिवृत्त्यर्थः । तेन 'समुत्पतिष्णुः' 'उदापतिष्णुरि'ति नेत्याहुः । एवं 'संपृचे'त्यत्राऽपि बोध्यम्। 'उत्पते'त्यत्र 'उत्पदे'ति पाठाऽन्तरम्। तत्र तान्तपाठो बहुसंमतः ।

**पारयिष्णव इति**। 'अयामन्ते'त्ययू[2]।

---

१　सत्ररूपे स्थले इत्यर्थः ।　　२　'आयः' इति ख. ग. ङ. पाठः ।

**भुवश्च** । योगविभाग उत्तराऽर्थः । **नैतदिति** । छान्दसत्वम् , अनुक्तसंग्राहकत्वं चेत्यर्थः । अत एव 'आढ्यसुभगे'त्यत्र 'आढ्यी भविते'त्यत्र ताच्छीलिकमिष्णुचमाशङ्क्य 'ताच्छीलिका रूढिशब्दाः, न च रूढिशब्दा गतिभिर्विशेष्यन्ते' इति समाहितं, न तु छन्दस्त्वाऽभावादिति समाहितमि'त्यन्ये । **न त्विति** । सूत्रे ककारश्रवणं चर्त्वेन बोध्यम् । सर्वं चेदं भाष्ये स्पष्टम् । **गकारप्रश्लेषादिति** । सौत्रत्वात् 'हशि चे'त्युत्वं न ।

**त्रस्नुरिति** । 'नेड्वशी'ति नेट् ।

**शमित्य** । 'वृत्'शब्देन निर्वाहे 'अष्टानामि'त्युक्त्या प्रत्येकं व्यापारबोधनात् 'उन्मादी'त्यत्र घिनुणिति बोध्यम् । उपायाऽन्तरमपि वक्ष्यति मूले । 'इति'शब्द आद्यर्थः । **शमिनीतरेति** । 'संज्ञापूरण्योश्चे'ति निषेधात् पक्षेऽपि पुंवत्त्वं नेति निरूपितम् । **झल्ग्रहणमिति** ।'युवोरनाकौ'इति सूत्रे भाष्ये स्पष्टमेतत् । घिनुण् सकर्मकेभ्यो न, अनभिधानादिति स्पष्टं भाष्ये । घित्त्वं सम्पर्च्यादौ कुत्वाऽर्थम्

**परिदेवीति** । देवतेरिदम् । ण्यन्तस्य दीव्यतेस्तु न । लाक्षणिकत्वात् । अण्यन्तसाहचर्याच्च । सकर्मकत्वाच्च । 'घिनुण् अकर्मकाणामि'तिभाष्योक्तेः ।

**रागीति** । अत्र 'रजे'ति निपातनात् नलोप इति 'अनिदितामि'त्यत्र भाष्ये स्पष्टम् । **प्रवासीति** । वसतेरिदम् । अलुग्विकरणत्वात् ।

**निन्दहिंस** । 'विनाशे'ति विपूर्वनशेर्ण्यन्तस्य भाविना णिलोपेन निर्देशः । अकार उच्चारणाऽर्थः । **केचित्तु** 'विनाशी'ति ण्यन्तमेव पठन्ति । 'परिवादी'ति वदेर्ण्यन्तस्य पाठो निर्विवाद एव । निन्दादीनाम् असूयाऽन्तानां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । असूयतिः कण्ड्वादियगन्तः ।

**ण्वुला सिद्धे इति** । असूयतिव्यतिरिक्तेभ्य इत्यर्थः । तत्र हि स्वरे

१ 'योगविभाग उत्तराऽर्थः । एतदर्थमेव छान्दसमपि अत्राऽलेखि' इति ख. ग. ङ. पाठः । ' २ 'हशि चे'ति न' इति क. पाठः ।

विशेषात् वुञ् सार्थकः । न च तच्छीलादिषु तृन् बाधकः । वाऽसरूपन्यायेन सिद्धेरिति भावः । **तृजादयो नेति** । न केवलं ण्वुल्विषयमेव ज्ञापकं, किन्तु प्रत्ययमात्रविषयकमिति भावः ।

**देविक्रुशो** । 'देवी'ति दीव्यतेर्ण्यन्तस्य, 'दिवु कूजने' इति चुरादिण्यन्तस्य च ग्रहणं, पूर्वसूत्रस्थप्रत्ययाऽन्तसाहचर्यात्, न तु देवतेरित्याहुः ।

**शब्दने इति** । 'शब्द शब्दने' चुरादिः ।

**अनुदात्तेतः** । 'आदि'पदाऽभावे हलन्तादित्यर्थः स्यात् । तथा च एधादिभ्यो युच् स्यात् । तत्र हि अवयवे अचरितार्थस्याऽनुबन्धस्य 'णि'विशिष्टे कार्यमात्रप्रवर्त्तकत्वात् । किञ्च 'जुगुप्सनः' 'मीमांसन' इत्यसिद्धिः । अस्ति च इहाऽनुदात्तेत्त्वम् । गुपादिष्ववयवेषु अचरितार्थस्याऽनुबन्धस्य समुदायविशेषकत्वात् । यद्यपि तत्र 'तितिक्षुरि'त्यादिवत्परत्वात् 'सनाशंसे'ति उः प्राप्नोति, तथापि चकारेणाऽनुक्तसमुच्चयार्थेन पुनर्विधानात् युजेवेत्याहुः । (हलादेः किम् ? । 'एधिता') ।

**जुचंक्रम्य** । क्रमि-द्रमी यङन्तौ । **पूर्वेणेति** । न च पदिग्रहणं सोपसर्गे, अन्तर्भावितण्यर्थे वा सकर्मकाऽर्थम् । भाष्यप्रामाण्येन अनभिधानात्तत्र युचोऽभावात् । ननु वाऽसरूपन्यायेन युजपीत्यत आह—**तेनेति** । 'ज्ञाप्यते' इति शेषः । निन्दादिसूत्रे हि 'तच्छीलादिषु वाऽसरूपविधिना तृजादयो ने'ति ज्ञापितम् । इह तु 'ताच्छीलिकेषु परस्परं वाऽसरूपविधिर्ने'ति ज्ञाप्यते इति विवेकः ।

**न यः** । 'अय पये'ति दण्डकपठितनयतेर्नेह ग्रहणम् । अनुदात्तेत्त्वादेव युचः सिद्धेः । किन्तु 'ने'ति पृथक्पदम् । तदाह—**यकारान्तादिति** ।

**क्नूयितेति** । तृन् अयम् । **ताच्छीलिकेष्विति** । परस्परमिति भावः ।

---

१ इतोऽग्रे—'किञ्च चुरादेर्वदेरनुदात्तेतः, सङ्ग्रामेत्यतश्च न स्यात्' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

२ 'किञ्च' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः ।

यद्यपि भाष्ये 'भवति रेण युचः समावेश' इत्येवोक्तं,तथापि प्रायिकत्वे एव तत् तात्पर्यम्। तेन 'गन्ता' 'गामुक' इत्यादि सिद्धमित्याहुः। **अव्यथीति**। निपातनान्नञो धातुना समासे, नलोपे, ततः प्रत्ययः। **प्रसवीति**। 'षू प्रेरणे'। सूति-सूयत्योस्तु सानुबन्धकत्वान्न ग्रहणम्। 'जिद्दक्षी'त्यत्रैव प्रजुं पठित्वा, पूर्वसूत्रं त्यक्तुं शक्यम्। **तत्पूर्व इति**। समासोऽपि निपातनादेव। **शयालुरिति**। कृपालु-स्पर्द्धालू-कृपां, स्पर्द्धां लातीति विग्रहे मृगय्वादित्वात् कौ बोध्यौ। 'लुश्'प्रत्यये, प्रयोजनाऽभावात् लस्येत्त्वाऽभावे, शपा, अतो दीर्घेण च स्पृहयाल्वादौ [1]सिद्धे, निपातनादेव 'श्रत्'शब्दस्य 'धा'शब्देन समासे 'श्रद्धा'शब्दाल्लुशि, धातोर्विधानाऽभावेन सार्वधातुकत्वाऽभावात् शपोऽभावेन श्लोरभावेन श्रद्धालौ च सिद्धे, आलुच्विधानमन्यतोऽपि विधानाऽर्थम्, तेन इदं सिद्धमिति भाष्ये स्पष्टम्।

**दाधेट्**। अत्र 'दा'रूपाणां डुदाञ्-दो-देङां सर्वेषां ग्रहणम्।

**घस्मरे** घसिः प्रकृत्यन्तरम्। **भङ्गुरः**-कर्मकर्त्तर्येव। घित्वात्कुत्वम्।

**विदिभिदि**। अत्र तच्छीलादीनां त्रयाणामनुवर्त्तनेऽपि यथासङ्ख्यं नेष्यते इति यथासङ्ख्यसूत्रे भाष्ये स्पष्टम्। घुरचः कित्त्वाऽतिदेशेनैव सिद्धे प्रत्ययाऽन्तरकरणम् आतिदेशिकाऽनित्यत्वज्ञापनाय। तेन 'धवित्रमि'ति सिद्धमित्याहुः। इदं भाष्ये नास्ति।

धू कुटादिः। विदेर्ज्ञानाऽर्थस्यैव ग्रहणम्। व्याख्यानात्। 'रूढिप्रकारास्ताच्छीलिका' इति 'आढ्ये'तिसूत्रे भाष्योक्तेः।

**छिदुरमिति**। 'कर्मकर्त्तरी'ति वृत्तिः। नैतद्भाष्ये दृष्टम्।

'जागुरि'ति पञ्चम्यन्तम्। तदाह—**जागर्त्तेरिति**। 'जागरूक' इति सिद्धरूपमेव न निपातितम्। उत्तरत्र ऊकस्याऽननुवृत्त्यापत्तेः। **भाविनेति**। तत्फलं दंशेर्यङ्लुगन्तात् न ऊकः। वावदूकस्तु उलूकादित्वात्साधुः।

1 इतोऽग्रे—'दधातेः संज्ञापूर्वकविधेरनित्यत्वात् श्लोरभावेन श्रद्धालौ च सिद्धे' इति ख. ग. ङ. पाठः।

'कुर्वादिगणे 'वावदूके'ति पाठादेव यङन्तात् वदेरूक' इति **माधवः**। 'जपजभदहदशभञ्जपशां चे'ति नुक्।

**अजस्रमिति**। निपातनात् धातुना नञः समासे कृते रः।

**सनाशंस**। प्रत्ययाऽप्रत्यययोरि'ति परिभाषया 'षण'धातोर्न ग्रहणम्, किन्तु प्रत्ययस्य। तेन तदन्तग्रहणम्। इच्छाऽर्थाऽऽशंसेर्ग्रहणम्, न तु स्तुत्यर्थशंसेः। आङा सह निर्देशादिति बोध्यम्।

**विन्दुरिति**। 'वेत्तेरि'ति ज्ञानाऽर्थस्यैव ग्रहणम्, न इतरेषाम्। इषेरपि इच्छाऽर्थस्य, न तु इष्णातीष्यत्योः। अनभिधानात्, निपातनाद्वेति भावः। पवर्गीयादिस्तु 'बिदि अवयवे' इत्यतो मृगय्वादित्वात् कौ बोध्यः। एतेन अनसूयु-तुरण्यु-भुरण्यवो व्याख्याताः।

**क्याच्छन्दसि**। छान्दसे अपि इमे 'भाषायामि'त्यादिवार्त्तिकलेखाय इहैव व्याख्याते। 'कित् यो य' इतिव्याख्यानात् कण्ड्वादियगन्तादपि अनेन उरि'त्यन्ये।

**सुम्नयुरिति**। 'न छन्दस्यपुत्रस्ये'ति निषेधात् क्यचि ईत्त्वं, दीर्घश्च न।

आदृ। 'लिड्वत्' इत्यस्य लिडादेशतिङ्वदित्यर्थः। 'असंयोगादि'त्येव कित्त्वे सिद्धे, पुनः कित्त्वं 'जगुरिः' 'ततुरिरि'त्यादौ 'ऋच्छत्यृतामि'ति-गुणप्रतिषेधाऽर्थम्। 'आदृ' इति दकारो मुखसुखाऽर्थः। तेन तात्परत्वाऽभावात् 'ऋ' इत्यनेन दीर्घस्याऽपि ग्रहणम्। तेन 'ततुरिरि'त्यादि। 'बहुलं छन्दसी'त्युत्त्वम्। वस्तुतस्तु अत्र 'आदृगमहने'त्युदाहरणमात्रम्। 'सेदिः' रेमिरि'त्यादावपि दर्शनात्। स्पष्टं चेदं भाष्ये। **बभ्रिर्वज्रमिति**। 'न लोके'ति षष्ठीनिषेधः। तिङस्तु न। 'लिड्वदि'त्यतिदेशेन स्वरूपाऽबाधेनैव कार्याऽतिदेशात्। अन्ये तु 'किकिनोर्विधानसामर्थ्यादि'त्याहुः। न च लिड्वदतिदेशाद्भावकर्मणोरप्येतौ स्याताम्। उत्पन्नयोः कार्यातिदेशात्।

---

१ 'गर्गादिषु 'जिगीषु'शब्दपाठात्षणधातोर्न ग्रहणम्' इति ख. ग. ङ. पाठः।

उत्पत्तिश्च 'कर्त्तरि कृदि'त्येकवाक्यतया कर्त्र्यर्थेवेति बोध्यम्। 'वर्त्तमाने' इत्यधिकारेण भूतकालोऽपि नाऽतिदिश्यते इति बोध्यम्।

**भाषायां धाञ्कृ**। अत्र गमिः भाष्ये संप्रत्यदृश्यमानोऽपि **वृत्त्यादौ** दर्शनादुक्तः। 'भाषायामि'ति 'छन्दसी'त्यस्याऽसम्बन्धमात्राय, न तु 'भाषायामेवे'त्यर्थः। अत एव 'उग्रं पृतनासु सासहिमि'ति वैदिकप्रयोगः सङ्गच्छते। **नीगभावश्चेति**। 'नीग्वञ्चु' इत्यनेन प्राप्तस्य नीकोऽभाव इत्यर्थः। **काशिकेति**। भाष्ये तु नेत्यर्थः।

**ईश्वर इति**। 'ईश्वरी'ति तु पुंयोगे। प्रकाराऽन्तरमपि उणादिशेषे वक्ष्यते। **विभ्राडिति**। 'व्रश्चे'ति षत्वम्। **धूरिति**। 'राल्लोप' इति वलोपः।

**तृनेति**। वाऽसरूपविधिस्तु ताच्छीलिकेषु निषिद्ध इति भावः। **वार्त्तिके इति**। 'अन्येभ्योऽपि दृश्यते' इति सूत्रमप्येवमेवेत्यपि बोध्यम्।

**श्रयति हरिमिति**। 'श्रीयते जनैरि'ति कर्मव्युत्पत्तिप्रदर्शनं त्वयुक्तम्। 'कर्त्तरि कृदि'ति सूत्रविरोधात्। 'जुहोति जुहूरि'ति भाष्ये करणस्य कर्त्तृत्वविवक्षा बोध्या। **दिद्युदिति**। 'द्युतिस्वाप्योरि'ति सम्प्रसारणम्।

**जगदिति**। 'गमः क्वौ' इति मलोपे तुक्। **दीर्यतीति**। 'दीर्यतेर्वा दृदृदि'ति भाष्यात् दिवादावप्ययमिति भावः।

**भुवः संज्ञाम्**। इदं 'संज्ञाऽन्तरयोः क्विबेवे'ति नियमाऽर्थम्। विपरीतनियमस्तु न। विधेयसङ्कोचाऽऽपत्तेः।

**धनिकेति**। अभिधानस्वाभाव्यात्, दृशिग्रहणाऽनुवृत्त्या वा लब्धमेतत्। न च संज्ञात्वमस्येति वाच्यम्। यावद्द्रव्यभावित्वाऽभावात्। ऋणप्रतिनिर्यातने तन्निवृत्तेः। (अत्र चोऽन्तरग्रहणमेव मानम्)। तेन ग्रामयोरन्तरे स्थातरि नेति भावः। **मितद्रुरिति**। क्विपि तुक् स्यात्, 'मितद्रव' इत्यत्र उवङ् च स्यात्। **धेटो धाञश्चेति**। उभयोर्ग्रहणम्। तथा प्रयोगदर्शनात्। तदाह—**धात्रीत्यादि**। अत्र 'कर्मणी'ति नोपपदम्। तथात्वे हि

१ 'जुहोतीति जुहूरिस्ति' इति ग. पाठः। २ अयं पाठः क. नास्ति।

'कर्मण्यणि'त्यनन्तरमेव 'धः ष्ट्रन्नि'ति वदेत्। 'दाम्नी'ति सूत्रे पुनः ष्ट्रन्ग्रहणेऽपि लाघवमस्त्येव। स्पष्टं चेदं 'कर्त्तरि कृदि'त्यत्र।

**दाम्नी**।'दशे'ति शपा निर्देशः।'दंशसंजे'ति नलोपः। तेन यङ्लुकि न। स्पष्टं चेदम् 'अनिदितामि'ति सूत्रे भाष्ये। एतेन 'दशे'ति नलोपनिर्देशो ज्ञापयति—'क्वचित् अक्ङित्यपि नलोपः'। तेन 'दशना दन्ता' इत्यादि सिद्धम्। 'दंष्ट्रा' इत्यत्र तु 'शुनो दन्तदंष्ट्रे'तिनिर्देशात्, 'शौवादंष्ट्रो मणिरि'ति भाष्यप्रयोगाच्च न नलोपः। एतेन 'सन्निधानात् ष्ट्रन्येव नलोपः स्यादित्यपास्तमि'ति वृत्त्याद्युक्तमपास्तम्। 'दशना' इत्यादि तु पृषोदरादित्वात्साधु। अत एव 'तनुत्रं वर्म दंशनमि'त्यमरः सङ्गच्छते।

**दंष्ट्रेति**। अजादित्वाट्टाप्। **नध्रीति**। 'नहो धः'। षित्त्वान्ङीष्। 'करणे' इत्यस्य नोपपदत्वम्[1]। 'धः कर्मणी'ति साहचर्यात्।

**हलसूकरयोः**। अनयोरुपपदत्वं, वाच्यत्वं च न। व्याख्यानात्। तदाह—**तच्चेदिति**। 'पू' अनेकार्थत्वात् खननाऽर्थोऽत्र। **मुखमित्यर्थ इति**। तत्रैव रूढेरिति भावः।

**अर्त्तिलू**। 'धू' कुटादिरेव। निरनुबन्धकत्वात्। तदाह-**धुवित्रमिति**[2]। 'गाङ्कुटे'तिनिषेधात् गुणनिषेधे उवङ्।'धवित्रमि'त्यन्ये। तदुपपत्तिरुक्ता। अत एव 'सू' इति—'षू प्रेरणे' इत्येवेत्याहुः।

**कर्त्तरि चर्षि**। वृत्तिरीत्या यथासङ्ख्यमभिप्रेत्याऽऽह—**ऋषौ करणे इति**। वस्तुतः 'कर्त्तरि कृदि'ति सूत्रस्थभाष्यविरुद्धमिदम्। किञ्च चकारोपस्थितकरणस्य पश्चादुपस्थित्या, प्रथमोपस्थितऋषिणाऽन्वयोऽनुचितः। तस्मात् उभयोरपि उभयत्र इत्येवोचितम्। किञ्च 'देवदत्तयज्ञदत्तौ पचति पठती'त्याद्यदर्शनेन ईदृशे विषये द्वन्द्वोऽसाधुरित्याहुः।

**पवित्रमिति**। 'पावमान्यादिसूक्तमि'त्यर्थः। समेति। 'मामि'त्यर्थः।

**( इति पूर्वकृदन्तप्रकरणम् )॥**

---

१ 'शुनो दन्तदंष्ट्रे'ति निर्देशादिना 'करणे' इत्यस्य नोपपदत्वम्। 'धः कर्मणी'ति साहचर्याच्च' इति ख. ग. ङ. पाठः। २ अयं पाठः क्वापि नास्ति।

# अथोणादयः ।

( तत्र प्रथमः पादः ) ।

उणादिसूत्रेषु लाघवगौरवचिन्ता न कार्या, बाहुलकप्रपञ्चत्वादिति 'अयामन्ते'ति सूत्रे भाष्ये ध्वनितम् । प्राय उणादिप्रत्ययाऽन्ता रूढिशब्दाः, अवयवाऽर्थशून्याः, असन्तमपि अवयवाऽर्थमाश्रित्य व्युत्पाद्यन्ते । तत्राऽपि प्रायः कर्त्तरि । बाहुलकात् अन्यत्राऽपीति द्रष्टव्यम् । 'तत्राऽपि प्रायो वर्त्तमानकाले एवे'ति 'भूते' इति सूत्रे भाष्ये स्पष्टम् । **कारुरित्यादि** । आद्ये योगरूढिः । द्वितीये तु योगमात्रम् । अत एव द्वितीये धात्वर्थं प्रति कारकाऽन्वयो भवत्येव । **पायुर्गुदमिति** । रक्षकोऽपि । **मायुः पित्तमिति** । शब्दोऽपि । **आशु शीघ्रमिति** । तद्विशिष्टपरत्वे त्रिलिङ्गः ।

**छन्दसीणः** । 'वायुना जगदायुना' इत्यादौ लोके तु असाध्वेव । **अनुबन्धद्वयेति** । स्वराऽर्थं ञित्त्वमेवाऽस्त्विति भावः ।

**चाद्विति** । पुंस्यप्ययम् । बाहुलकात् रहेरपि । तेन राहुः ।

**बाणश्चेति** । कङ्कपक्षी चेत्यपि बोध्यम् ।

**त्रोरश्च** । **केचित्तु** 'त्रोरि'ति द्विवचनम् । 'तृधातोः, ऋधातोश्चे'त्यर्थः । तेना 'आलुः' सिद्धः । 'अरुई' इति प्रसिद्धः । 'आलुः'गलन्तिका च । झरणाख्यं लोहमयं भाषायां, तत्रापि । **हरश्चेति** । स्वर्णमपि । 'चरुर्भाण्डे च,

---

'वायुना जगदायुना' इत्यादौ लोके तु याधातोर्मृगय्वादित्वात्कुर्बोध्यः । एवं चेदं सूत्रं व्यर्थम् । उण्-क्वोः स्वरे, रूपे च विशेषाऽभावात्' इति क. कुण्डलितः पाठः ॥ 'वायुना जगदायुना' इत्यादौ लोके तु छान्दसानामपि क्वचिद्भाषायां प्रयोगदर्शनान्न दोषः' इति च ख. ग. ङ. पाठः ।

हव्याऽन्ने' । भाण्डं चरुस्थाल्येव । 'हव्याऽन्नं च अनवस्त्राविताऽन्तरूष्मपक्व ओदन' इति **याज्ञिकाः**। अत एव 'हव्यपाके चरुः पुमानि'त्यमरग्रन्थे 'कर्माऽर्थघञन्तेन कर्मधारयः, अधिकरणघञन्तेन षष्ठीतत्पुरुषश्चे'ति **तद्व्याख्यातारः** । **तनु स्वल्पमिति** । 'तनुः काये त्वचि स्त्री स्यात्रिष्वल्पे विरले कृशे' इत्यन्यत्र । **शस्त्रविशेषे इति** । राशिविशेषे च, भाषया 'चिरौञ्जी'त्याख्ये प्रियालद्रौ च । सान्तधनुःशब्दः पुंक्लीबयोः । **मयुरिति** । बाहुलकान्मीनातीत्यात्त्वं न । **कटुरिति** । लताविशेष-कटुकी-राजिकास्वयं स्त्री । पापे क्लीबः । रसे पुमान् । **वटुरिति** । दन्त्योष्ठ्यादिः । वटुर्द्विज-सुतः । 'नटवटुरि'ति तु उपचारात् । [1]**अभिव्याप्येति** । अत एव 'पिबतं सोम्यं मध्वि'त्यादौ 'मधु'शब्द आद्युदात्तो दृश्यते । यद्यपि तस्य 'नब्वि-षयस्ये'त्याद्युदात्तत्वं सिद्धं, तथापि पुंस्यपि आद्युदात्ताऽर्थं तथैव युक्तम् । 'वोतो गुणे'ति सूत्रे **हरदत्तेनाऽभि**व्याप्येति स्पष्टमभिधानाच्चेति भावः ।

**त्रपु** सीसं, रङ्गं च । **हनुरिति** । 'हनुः पुमान्परो गण्डात्' । तत्र[2] क्लीबो-ऽप्ययम् । 'हनुर्हट्टविलासिन्यां, मृत्यावस्त्रगदेऽस्त्रियाम्' । **हट्टविलासिनी**–औषधिविशेषः । **'हनूमानि'त्यत्र** 'अन्येषामपी'ति पक्षे दीर्घः ।

**मनुः**–आदिराजो, मन्त्रश्च । **बिन्दुः** पवर्गीयादिः । **स्यन्देरिति** । चात् धोऽन्तादेशः । 'कन्दुर्भोगस्थानमि'त्येके । 'क्लीबेऽम्बरीषं भ्राष्टो ना **कन्दुर्वा, स्वेदनी स्त्रियाम्'** । कन्दुर्वा पुमानित्यर्थः । **स्वेदनी** कटाहो, भर्जन-मृत्पात्रं च । **रज्जुरिति** । धातुसकारस्य लोपः । आगमसस्य श्चुत्वेन शः । जश्त्वेन जः । गुणे, वेण्यां चाऽयं स्त्री ।

**तर्कुरिति** । कृत्यतेऽनेनेति विग्रहः । 'तर्कुटी सूत्रला तर्कुः' ।

---

१ 'अभिव्याप्येति' इत्यारभ्य 'इति भावः' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः । मनोरमास्थत्वात् ।

२ अत्र 'स्त्रीलिङ्गोऽप्ययम्' इति मनोरमापाठः 'मृत्यावस्त्रगदे स्त्रियाम्' इति मेदिनीकोशपाठाऽभिप्रायेण । 'अस्त्रियामि'ति शेखरपाठस्तु 'मृत्यावस्त्रगदे-ऽस्त्रियाम्' इति मेदिनीपाठाऽभिप्रायेणेति ध्येयम् । *

**फलिपाटि**। एकाऽपि षष्ठी विषयभेदाद्भिद्यते, कुगागमे अवयवषष्ठी, पस्त्याद्यादेशविधौ पास्त्यादिभ्यः स्थानषष्ठी। साऽपि ध-तयोर्विधौ अन्त्ये अलि उपसंह्रियते इति बोध्यम्। सौत्रत्वाच्च साधुत्वम्।

**फल्गुः** तुच्छे त्रिलिङ्गः, नदीविशेषे, वृक्षविशेषे च स्त्री। **वल्गुः** दन्त्योष्ठ्यादिः। 'पवर्गीयादिरि'ति उज्ज्वलदत्तस्य भ्रमः। वल्गु[1] वो गृहे' इत्यादौ दन्त्योष्ठ्यपाठस्य निर्विवादत्वात्। ('कण्ड्वादि[2]पठितप्रातिपदिकेनैव सिद्धे इदं व्यर्थमि'त्यन्ये)। बवयोरैक्यात् 'बल्गु'। बल्गु सुन्दरम्।

**शः किदिति**। 'शः कुः सन्वदि'त्येव सुवचम्। एवं चोत्तरत्र कुग्रहणं न कार्यम्। **पिङ्गलाविति**। अग्नौ, शिवे, विस्तीर्णे च बभ्रुः। **अन्यतोऽपीति**। चकारादिति भावः।

**पृभिदि**। 'द्रु' इति निवृत्तम्। '**पुरुः** प्राज्ये देवलोके नृपभेद-परागयोः'। तत्र प्राज्ये त्रिलिङ्गः। **परागः**—कुसुमरजः, स्नानीयादिरजश्च। बाहुलकात्—'हृषुः'। हर्ष-सूर्या-ऽग्नि-शनि-राहवो हृषवः। 'कुरुर्नृपाऽन्तरे, भक्ते, पुमान् पुंभूम्नि नीवृति'। नीवृत्—जनपदः।

**सुषामादीति**। यत्तु 'स्थास्थिन्स्थुरस्थृणामि'ति वार्त्तिकेन षत्वमि'ति। तन्न। 'स्थु'ग्रहणस्य भाष्येऽनुपलम्भात्। **प्रतिकूलमिति**। पुंसि बालेऽप्ययम्। **पशुरिति**। दृश्यर्थं, सम्यगर्थं च 'पशु' इत्यव्ययमपि। **कन्तुः**—कामः।

**सम्बसूकरेति**। 'सस्यसूकरे'ति पाठान्तरम्। **बाहुरिति**। अकाराऽन्तोऽपि। '**बाहो**ऽश्व-भुजयोः पुमानि'ति दामोदरकोशात्। 'बाहा भुजे पुमान् मानभेदेऽश्ववृषवायुषु' इति मेदिन्यां टाबन्तोऽपि। **पृथुः** महति, कृष्णजीरा-ऽग्नि-राजविशेषेषु च। **मृदु** कोमलम्। **भृगुः** शुक्र-हर-तट-जमदग्निषु। **लघु** क्लीबं कृष्णाऽगुरुणि। शीघ्रे, निःसारे च त्रिलिङ्गम्। पृक्कानामौषध्यां स्त्री। म[3]नोज्ञे पुमान्। **बहुस्तु**[4] त्र्यादिसंख्यासु, विपुले च'।

---

१ 'अयं नाभा वदति वल्गु वो गृहे' इति मनोरमापाठः।
२ अयं पाठः क. नास्ति। ३ 'मनोजे' इति क. ग. ख. पाठः।
४ 'बहुः संख्यायाम्' इति ख. ग. ङ. पाठः। 'बहु तु' इति क. पाठः।

**ऊरुः सक्थीति** । 'जङ्घा तु प्रसृता' । 'सक्थि क्लीबे पुमानूरुः' ।

**आङिति** । 'आङ्-पर-शब्दयोरुपपदयोरि'त्यर्थः । हरिद्रुर्वृक्षो, दारुहरिद्रा च । **द्रुम इति** । 'घुदुभ्यामि'ति मः । **अश्वश्चेति** । दन्त-हर-गर्वेष्वपि । श्वेते त्रिलिङ्गः । पतिंवरकन्यायाञ्च । **शङ्कुरिति** । विष-शस्त्र-सङ्ख्याविशेष-यादोभेद-पाप-स्थाणु-'सखुवा'ऽऽख्यवृक्षेष्वयम् । '**पीयुः** काले रवौ घूके' । **क्रिमिविशेष इति** । भाषया '**सोनकीडा**' इत्याख्यः । **नीलङ्गुः** पुष्पे, भम्भराल्यां च । **भम्भराली**-भाषया '**बरैं**' इत्युच्यते । **लिगु** चित्ते क्लीबम । **मृगयुरिति** । गोमायु-परमेष्ठिनोरप्ययम् । **आकृतीति** । तेन **पीलुः** सिद्धः । '**पीलुर्द्रुमे** गजे बाणे परमाणु-प्रसूनयोः' । **भाट्टास्तु** 'पीलु'शब्दस्य वृक्षे आर्यप्रसिद्धिः, गजे तु म्लेच्छप्रसिद्धिरि'त्याहुः ।

**वाशुरो** गर्दभः । '**स्त्री**-करिण्योऽश्व वाशुरा' । **रथे इति** । वृक्षे च । **अङ्कुरो** रुधिर-लोम-जल-नववृक्षेषु । **अङ्कूरोपीति** । एवं बाहुलकात्, मयतेः उरचि **मयुरः** । खर्जूरादित्वात् **मयूरोऽपीति** बोध्यम् ।

**व्यथेरिति** । बाहुलकात् व्यधेरपीदम् । तेन 'विधुरोऽनग्निक' इति सिद्धम् । यद्वा 'धुरो विगत' इति प्रादिसमासः । इदं च 'समासान्ता' इति सूत्रे **वृत्त्यादौ** स्पष्टम् । **केचित्तु** 'व्यथेरेव धकारोऽन्तादेशो बाहुलकात् । तदभावे थमध्योऽपी'त्याहुः । **मकुरो दर्पण इति** । बकुलवृक्षः कुलालदण्डश्च । **मङ्केरुरच्** , **नलोपः** । पक्षे उपधाया उकारः ।

'**कर्वुरः** श्वेत-रक्षसोः' । जल-स्वर्णयोः **कर्वुरम्** । पापे पुमान् । भाषया पाडल्याख्ये कृष्णवृन्तसंज्ञके वृक्षे **स्त्री** । शबले त्रिलिङ्गः । **मसूरेति** । शीतलारोगे मसूरी । उपधाने मसूरः । **अविषो** राजा, समुद्रश्च । **महिषो** महान्, पशुविशेषश्च । **महिषी** राजपत्नी । **रौहिषा इति** । तृणं च रौहिषम् ।

---

१ 'फीलखाना' 'फीलवान' इत्यादिषु हस्तिनि पीलुशब्दः ( फील ) प्रसिद्धो यवनानाम् । २ विधुरो 'मृतपत्नीक' इति लोके प्रसिद्धः ।

**तवेति सौत्र इति।** 'तु' इति सौत्रात्प्रत्ययो, णिद्वे'त्यन्ये। **स्वर्गे चेति।** '**तविषः** शोभनाऽऽकारे भेले स्वर्गे च निश्चये'। भेलो जलतरणद्रव्यम्।

**बलमिति।** वैदिकनिघण्टौ तत्पर्यायेषु पाठादिति भावः। **किल्बिषं** पाप-रोगा-ऽपराधेषु। **इषिरोऽग्निरिति।** 'आहार' इत्यन्ये। **छिदिरः** अग्नि-रज्जु-खड्गेषु च। **गृहमिति।** नगरं च। **मन्दिरः** समुद्रः। **सूर्य इति।** बुद्रश्च। '**मुहिरः** कामि-मूर्खयोः'। **रुधिरो** भौमः। **रुधिरं** केसरं, रक्तं च। **छिद्रमिति।** वंशादिवाद्यं च। **शुषिरो** मूषकः। नल्योषधी च **शुषिरा**। छिद्रयुते शुषिरस्त्रिलिङ्गः। **रक्षसोरिति।** सूर्ये च। **अङ्गणमिति।** अङ्गेर्ल्युटि बाहुलकाण्णत्वम्। तेन तदभावे अङ्गनमपि। शरीर-भेक-वायु-देशेषु च **अजिरम्**। **शीतले इति।** जडे इत्यर्थः। **टिलोप इति।** तत्र स्थाधातोः 'आतो लोप' इत्यनेन, अन्यस्य निपातनादिति बोध्यम्।

**खदिरो** वृक्षविशेषश्चन्द्रश्च। **खदिरी** शाकविशेषः। **शिविरमिति।** 'निवेशः शिविरं शण्ढमि'त्यमरः। **कलिलो** मिश्रो, गहनश्च। **महिला-** प्रियङ्गौ, स्त्रियां च।

**कमेः पश्च।** 'अन्यतो ङीषि'ति सूत्रे **हरदत्तस्तु** 'कपेश्चे'ति पठित्वा कपिः सौत्रो धातुरि'त्याह। **कपिलोऽग्नि-विष्णु-ऋषिविशेष-शुनकेषु।** वर्णे त्रिलिङ्गः। **कपिला**-गोविशेषे, रेणुकालतायां, शिंशपावृक्षे, पुण्डरीका-ऽऽख्यदिग्गजभार्यायां च। **नुम्नेति।** कुठेरिदित्पाठात्प्राप्तिः। **पक्षीति।** पक्षिसामान्यं, पारावत-चित्रकण्ठाख्यौ तद्विशेषौ च। 'कपोत' इति-मध्योदात्तन्तु छान्दसत्वाद्बोध्यम्। **कठोरः** कठिणः, पूर्णश्च। **किशोरः** अश्वकुमारः, तरुणाऽवस्थो, रविश्च, औषधिविशेषश्च।

**कपिगण्डि।** बाहुलकात्कडेरपि। **कण्डोलवीणा**-भाषया 'किङ्गरी'-त्याख्या। कल्लेरपि। **कल्लोलो** हर्ष-स्थूलतरङ्गयोः। '**पटोलं** पट्टवस्त्रे नौषध्यां ज्यौत्स्न्यां तु योषिति'। **मयूर इति।** बाहुलकादुरनि **मयुरोऽपि**। '**सिन्दूरस्तरुभेदे** स्यात्सिन्दूरं रक्तचूर्णके। **सिन्दूरी** रोचना-रक्तवेल्लिका-धातकीषु च'। **धातकी**=धवः। **रक्तवेल्लिका**=पुष्पविशेषः।

'**धातुः** इन्द्रिय-पृथ्व्यादिपञ्चभूत-तद्गुण-मनःशिलादिश्लेष्मादिगैरिकाऽस्थिषु । 'क्रियावाचिभ्वादिष्वपि धातुरि'ति केचित्[1] । तदुक्तं 'शब्दयोनिश्च धातव' इत्यमरेण । वस्तुतः कोशस्य लौकिकनामलिङ्गाऽनुशासनत्वेन व्याकरणशास्त्रस्थसंज्ञासंज्ञिनोर्ग्रहणमयुक्तम् । अन्यथा गुणादिप्रस्तावे व्याकरणशास्त्रस्थाऽर्थानां कथनप्रसङ्गः । वस्तुतः 'को धातुः, किं प्रातिपदिकमि'ति श्रौतव्यवहारात् अस्याऽपि लौकिकत्वमित्याहुः ।

**अर्त्तेश्च तुः** । तुनि प्रकृते 'तु'विधानम् अन्तोदात्तत्वाय । **ऋतुः** वर्षादिषट्सु, आर्त्तवे, मासि च ।

**कमिमनि** । अनेनैव कन्तोः सिद्धौ 'अर्जिदृशी'ति सूत्रे 'कमि'ग्रहणं व्यर्थम् । **अपराध इति** । मनुष्य-प्रजापति-ज्ञानेषु च । **गातुः** सक्रोधेऽपि । **भानुः** किरणेऽपि । **केतुः** ग्रहेऽपि । रोग-शत्रू-त्पात-चिह्नेषु च केतुः । **शरीरमिति** । अभिलषिताऽर्थश्च । **यज्ञ इति** । मुनिश्च । **अनड्वानिति** । पथिकश्च । **कर्षूर्नद्यामिति** । कुल्या-ऽल्पखातयोश्चाऽयं स्त्री ।

**वणिगिति** । विद्युत्-स्वर्ग-विधु-रुद्रेषु च । **पामेति** । कीटविशेषे, खर्जूरवृक्षे च । **पामा** कण्डूः । **मर्जूः** शुद्धौ स्त्री । **वधूरिति** । पृक्कौषधि-नवोढास्त्रियोश्च ।

**कासूः शक्तिरिति** । शस्त्रविशेषः । '**कासूर्विकलवाचि** स्याद्रोगे बुद्धौ तथा मतः'। **तर्दूरिति** । बाहुलकात् इडभावः । दुकागमे तु धातोर्गुणो दुर्लभः । **दर्द्रूरिति** । बाहुलकाद्रेफस्याऽपि लोपे-'दर्दूः' । आद्यरेफस्य लोपे दद्रूरपि । मृगय्वादित्वाद्दर्द्रुरपि । **अन्दूर्निगडे**, भूषणभेदे च । '**अन्दुको** हस्तिनिगडे' । संज्ञायां कनि 'केऽण' इति ह्रस्वः । 'अन्दूर्बुद्धिरि'**त्यन्ये** । दृन्भूर्ग्रन्थकर्त्ता । 'कथक'**इत्यन्ये** । अस्य रूपाणि हूहूवत् । **माधवस्तु** दृढाऽर्थके'दृन्' इत्युपपदे भुवः कूः । दृन्भूः तरुसर्पः, कपिर्वा । 'दृन्करे'ति यणि वर्षाभूवद्रूपमि'त्याह । तत्र क्विपा सिद्धे निपातनं व्यर्थम् । लाक्षणिकत्वा-

---

१ 'इति केचित्' इति क्वचिन्नास्ति ।

दस्य भुवस्तत्राऽग्रहणं चेति–'इको यणची'त्युचितमित्याहुः ।

**केचित्त्विति** । अत्राऽरुचिः **कैयटमाधवादि**ग्रन्थविरोधः ।

**मरुदिति** । प्रज्ञाद्यणि '**मारुतः**' । 'मरुत' इत्यप्यव्युत्पन्नं वायुवाचि । **गरुदिति** । यवादिरयम् । तेन–**गरुत्मान्** । 'गर्मुत्'शब्दः प्रत्ययस्वरेणाऽन्तोदात्तः । अत एव 'गार्मुतमि'त्यत्र 'अनुदात्तादेश्चे'त्यञ् । क्वचिदाद्युदात्तपाठस्तु छान्दसत्वात् । **स्त्रीति** । लताविशेषश्च । **रोहित्** अर्के पुमान् । **शण्ढः** क्लीब-सूर्या-ऽऽकृष्टाऽण्ड-वर्षवरेषु । 'शण्ठ' इति टवर्गद्वितीयमध्योऽपि । **कमठः** कच्छपे । भाण्डभेदे[1] तु-कच्छपम् । जरठः कठिण-पाण्डु-कर्कश-जीर्णेषु । **शङ्खो**-निधि-ललाटाऽस्थि-नख-कम्बुषु । कम्बौ अस्त्री । अन्यत्र पुमान् । '**कण्ठो** गले, संनिधाने[2], ध्वनौ, मदनपादपे' । '**तृफला** त्रिफला च से'ति विश्वः ।

**वृषादिभ्यश्चित्** । '**वृषलस्तुरगे** शूद्रे' । **पललं** तिलचूर्ण-पङ्क-मांसेषु । **पललो** राक्षसे । **सरलोऽवक्रो**-दार-पूतिकाष्ठेषु । **कमेर्बुगिति** । 'बाहुलकादि'त्यपकृष्यते । **कम्बलो** नागराज-सास्ना-प्रावारेषु पुमान् । कृम्युत्तराऽऽसङ्ग-सलिलेषु क्लीबम् । **मुसलम्** अयोऽग्रे पुमानपि । तालमूली-आखुपर्णी–गृहगोधिकासु च । मुषल-मुशले अपि । **लाङ्गलं**—ताल-हल-पुष्पविशेष-गृहदारुषु । **लाङ्गली** जलपिप्पल्याम् । **कुद्मलं** नरकविशेषः । मुकुले पुमान् । '**कोमलं** मृदुले, जले' । बाहुलकात् कोसलः, कोशलश्च देशविशेषः । 'वृद्धेत्कोसले'ति सूत्रे दन्त्यपाठ एव साम्प्रदायिकः । एवं सम्बल-शम्बले । उभावपि कुल-पाथेय-मत्सरेषु च । एवं कन्देः कलः । नलोपः । गौरादित्वान्ङीष् । 'कदली' । अजादित्वात् कदलाऽपि । **कदली** रम्भावृक्ष-पताका-मृगभेदेषु । डिम्बिका-शाल्मल्योः **कदला** ।

**पिञ्जेः कलः** । न्यङ्क्वादित्वात्कुत्वम् । **पिङ्गलो** नागविशेष-रुद्र-

१ **भाण्डभेदे = भाषायां 'कचोला' 'कटोरा' 'कटोरी'त्याख्ये पानपात्रे इत्यर्थः ।**

२ **संनिधानम् = 'निकट' 'कन्न' 'पास' इति भाषायाम् ।**

सूर्यपारिपार्श्विक-निधिविशेष-कण्य-म्रिपु । कपिलवर्णे च । **'पिङ्गला'** वेश्याविशेषः, । कुमुदस्य करिणी चेति **मेदिनी**। 'वामनस्य करिणी चे'-त्यमरः। कुशः कले-**कुशलः** शिक्षिते त्रिलिङ्गः । क्षेम-सुकृत-पर्याप्तिषु क्लीबम्। 'कुशान् लातीति कुशल' इत्यन्ये। धावेर्बाहुलकात् ह्रस्वत्वे **धवला** गवि । वृषश्रेष्ठे पुमान्। शुक्ल-सुन्दरयोस्त्रिलिङ्गः । कमेः **कमलम्**, सलिल-ताम्र-जल-व्योम-भेषजेपु। मृगविशेषे-**कमलः**। **'कमला** श्री-वर-स्त्रियोः'। मण्डे**मण्डलं** परिधि-कोठ-द्वादशराजक-देशेपु। निवह-बिम्ब-योस्त्रिपु। **मण्डलः** श्वा च। **कोठो** मण्डलकम्। कुण्डेः—**कुण्डलं** कर्णभूषण-पाश-वलयेपु। एवं पटल-छलाऽऽदय ऊह्याः। **मलमिति**। **'मलो**ऽस्त्री पाप-विट्किट्टे कृपणे त्वभिधेयवत्'। चपलं शीघ्रम्। **चपलः** पारद-मीन-चोर-पाषाणविशेपेपु । **'चपला** कमला-विद्यु-पुंश्चली-पिप्पलीपु च'। तरल-चपलयोर्विशेष्यनिघ्नः। **शकलं** खण्डे, रोहितादीनां त्वचि, रागवस्तुनि, वल्कले च। 'शमलं शकृदेनसोः'। **छगलः** छागः, **छगलं**-नीलवस्त्रम्। वृद्ध-दारकेऽयम् अस्त्री। **दण्डो**-लगुडम्। 'सैन्या-ऽर्कपार्श्वगौ **दण्डौ**'। **रण्डा** मूषिकपर्णी, विधवा च । **खण्डः** शकले-क्षुविकार-मणिविशेषेपु । **मण्डः** पञ्चाऽङ्गुल-शाकभेदयोः। **मण्डं**-मस्तु। **वण्ड** इति। **वण्डा** पांसुला। **अण्डो** मुष्के च, पेश्यां च। **'षण्डं** पद्मादिसङ्घाते'। **षण्डः** सूर्यः। **गण्डः** खड्गी, योगविशेषश्च। **'चण्डो** ना तिन्तिणीवृक्षे, यमकिङ्कर-दैत्ययोः । **'चण्डी** कात्यायनीदेव्यां, हिंस्रा-कोपनयोषितोः। **चण्डा** धनहरीशङ्खपुष्प्यो-स्त्रिष्वतिकोपने'। फणेर्डे बाहुलकाद्दीर्घे **फाण्डम्**[1] = उदरम्।

**क्वादिभ्यः किदिति**। कित्त्वविशिष्टप्रत्ययविधिः। कित्त्वमात्रविधौ गुणो डो न स्यादिति बोध्यम्।

**'कुण्डमग्न्यालये**, मानभेदे, देवजलाऽऽशये। **कुण्डी** कमण्डलौ, जारात्पतिवत्नीसुते पुमान्। बाहुलकाद्दीर्घाऽभावः। 'कुण्डी कुण्डं च

1 फांडा = 'फांडे में' 'कमर में' 'टेंट में' इति भाषायां प्रसिद्धः।

पिठरे'। कमेः 'अनुनासिकस्ये'ति दीर्घे–**काण्डम्**। '**काण्डो**ऽस्त्री दण्ड-बाणा-ऽर्व-वर्गा-ऽवसर-वारिषु'। अर्वाऽत्र कुत्सितः। तथा स्तम्ब-तरुस्कन्ध-बाण-नीर-वरद-रहस्सु च **काण्डम्**। वृक्षविशेषे, नाडीसमूहे च।

**गुडः** स्याद्गोलके, हस्तिसन्नाहे-क्षुविकारयोः। **गुडा** स्नुह्यां च कथिता, गुडिकायां च योषिति'। गुडा स्नुही, तद्वत्केशा यस्य स **गुडाकेशः**-शिवः। जटाधारित्वात्।

**स्थाचति**। आलच आकारश्चित्त्वप्रयुक्ताऽन्तोदात्तत्वं बाधित्वा पक्षे आद्युदात्तत्वाय। **स्थालं**–भाजनविशेषः। '**स्थाली** पाटलो-खयोः'। **चात्वालो** यज्ञकुण्डं, दर्भश्च। **बिडाल इति**। शूद्र-कायशोधनयोरप्ययम्। **पातालं**-विवर-नागलोक-वडवाऽग्निषु। **चण्डाले** चडेरदुपधत्वा-ऽभावान्न वृद्धिः।

**एके इति**। अत्राऽरुचिबीजन्तु 'कुलालवरुडकर्मारनिषादमित्राऽमि-त्रेभ्यश्छन्दसी'ति स्वार्थेऽणुविधायकवार्त्तिकतद्भाष्यविरोधः। **तमिविशि**। कपेर्निर्देशान्नलोपः। **तमालः** तापिच्छ-तिलक-वरुणवृक्ष-खड्गेषु।

**विशाल इति**। इन्द्रवारुण्यु-ज्जयिन्योः **विशाला**। नृपविशेष-वृक्ष-भेदयोः **विशालः**। विस्तीर्णे त्रिलिङ्गः। **बिडालो** नेत्रपिण्ड-मार्जारयोः।

'**मृणालं** नलदे बिसे'। पुंसि च। '**कुलालः** ककुभे, कुम्भकारे, स्त्री त्वञ्जनाऽन्तरे'। **कपालः** शिरोऽस्थ्नि, घटादेः शकले च।

**पञ्चाला** देशविशेषः। '**पञ्चाली** पुत्रिका-गीत्योः'। बाहुलकात् श्यतेः **शाला**। '**शाला** द्रुस्कन्ध-शाखायां-गृह-गेहैकदेशयोः। ना झषे।

'शलेर्घञि-शाला। 'छायाशालानिशानामि'ति निपातनात् स्त्रीत्वमि'-त्यन्ये। **पक्षिणीति**। बाहुलकादन्यत्राऽपि। शलभ-शालिविशेष-पारद-सूर्येषु। **तरङ्ग**स्तुरगाद्युत्फालो, वस्त्रभङ्गश्च। '**विडङ्गः** कृमिसंघट्टने, **विडङ्गो** नागरेऽन्यवत्'। **नागरः** अभिज्ञः। '**मृदङ्गः** पटहे, घोषे'। **सारङ्गो** हरिण-चातक-गजेषु। शबले त्रिलिङ्गः। बाहुलकात् नृधातोः

नारङ्गः । **नारङ्गः**, पिप्पलीरसे, यमजप्राणिनि, विटे, नागरङ्गद्रुमेऽपि च ।

**गन् गमीति** । बाहुलकात्—**अङ्गं** गात्रो-पाय-प्रतीका-ऽप्रधानेषु । **अङ्गा** देशः । 'अङ्ग' सम्बोधनेऽव्ययम् । अङ्गवत्यन्तिके चाऽङ्गं त्रिषु । '**पूगः** क्रमुक-वृन्दयोः' । '**खड्गो** गण्डक-शृङ्गा-ऽसि–बुद्धभेदेषु गण्डके' ।

**भृञः** । किद्ग्रहणं स्पष्टाऽर्थम् । **भृङ्गा इति** । भृङ्गराजेऽपि । **भृङ्गं** गुडत्वचि । **शृङ्गं** प्रभुत्व-शिखर-विषाणो-त्कर्षचिह्न-जलयन्त्रेषु । 'शृङ्गः स्यात्कूर्चशीर्षकम्' । मीनौ-षधि-स्वर्णानां भेदे **शृङ्गी** । '**करण्डो** मधु-कोशा-ऽसि-कारण्डेषु दलाटके' । **मुखरोग इति** । समूहः, अन्तरं, वेदिश्च[1] । बाहुलकात् '**सरण्डो** बडिशी-सूत्रबद्धकाष्ठादिके प्लवे' । **शरत्** ऋतु-वत्सरयोः । **दरत् हृदयेति** । भय-पर्वतयोश्च । **जघनमिति** । योनिश्च । भास्वरश्च[2] । **दृषत्** पेषणशिला-प्रस्तरयोः । **भिषगिति** । केचित् भिषज्यतेः क्विपि 'भिषक्'शब्दमाहुः । **सोमः** चन्द्र-वानर-कुबेर-यम-वायु-वसुविशेष-कर्पूर-जल-सोमलतासु च । **धर्मः** पुण्य-यम-न्याय-स्वभावा-ऽऽचार-यज्ञो-पमा-ऽहिंसो-पनिष-द्धनुः-सोमपेषु । **क्षौमं** पट्टज-वल्कल-शणजा-ऽतसिजवस्त्रेषु । अट्टालिकायां च ।

**आदित्य इति** । क्रोधो, दीप्तिश्च । **यामः** प्रहर-संयमयोः । **वामो** हर-काम-पयोधरेषु । **वामं**-धने । सुन्दर-प्रतीप-सव्य-मूढेषु **वामं** त्रिषु । **वामा** स्त्री । शृगाली-वडवा-रासभी-करभीषु **वामी** । '**पद्मोऽस्त्री** पद्मके व्यूह-निधि-संख्याऽन्तरे-ऽम्बुजे । ना नागे' । **यक्ष्मोऽन्तस्थादिः** । मनिनि नान्तोऽपि । 'नेमः कीलेऽवधौ, गर्त्ते, प्राकारे, कैतवेऽपि च' । नेमोऽर्धेऽपि । **जिह्म इति** । **जिह्मं** तगरद्रौ ।

**ओमिति**–प्रश्ना-ऽङ्गीकार-रोषेषु । केचित्तु 'अश्च उश्च म् चेति–**ओम्** । अस्याऽपि स्वरादित्वादव्ययत्वमि'त्याहुः । 'ग्रामः स्वरे, संवसथे' । सपूर्वः समूहे । यथा 'गुणग्राम' इत्यादि । 'सम्'पूर्वो युद्धे । **रश्मिरिति** ।

---

१ 'वेद्यन्तरम्' इति ख. ङ. पाठः । 'वरण्डोऽप्यन्तरावेदौ' इति विश्वकोशश्च ।

२ 'भास्कर' इति क्वचित् पाठान्तरम् ।

सूत्रतन्तुश्च । **शुष्ममग्नीति** । **शुष्मः**–सूर्यः, शुष्म बलम् । **युध्मः शर इति** । 'युध्मो धनुषि, संयुगे' । **दस्मो** यजमान-चोरा-ऽग्नि-दर्शनीयेषु ।

'**श्यामो** हरित्कृष्णयोः' । एवं प्रयागवट-मेघ-वृद्धदारक-पिक-मरिच-कृष्णलवण-सैन्धवेषु । **श्यामा** शारिवा-प्रियङ्गु-अप्रसूताऽङ्गना-यमुना-रात्रि-नीलिकासु । बाहुलकात् जनेः **जन्मम्** । '**रुक्मं** काञ्चन-लोहयोः' ।

**हिमं** तुषार-चन्दनयोः । शीतले त्रिलिङ्गः । '**भीष्मो** गाङ्गेय-घोरयोः' । **भीमो**ऽम्लवेतस-घोर-शम्भु-कौन्तेयेषु । **घर्मो** ग्रीष्मर्त्तु-उष्णा-ऽऽतप-स्वेदेषु[1] ।

'अश्वः पुंभेद-वाजिनोः' । **फलं चेति** । करञ्जभेदा-ऽवद्ययोश्च । **कण्वं** पापं, मुनिश्च । '**किण्वं** बीजा-ऽघ-शीधुषु' । **विश्वं** जगत् । **विश्वा**-अतिविषा-शुण्ठ्योः । देवताविशेषश्च **विश्वः** । '**शेवं** सुखमि'ति **वेदभाष्यम्** ।

**शर्वनिघृष्व** । अतन्त्र इति व्याचष्टे—**अकर्त्तरीति** । '**ह्रस्वो** न्यक्खर्वयोस्त्रिषु' । 'इणःशीभ्यामि'त्येव सिद्धे 'शेवे'ति व्यर्थमत आह—**अन्तोदात्तेति** । 'यह्वो महानि'ति **निघण्टौ** । **मीवेति** । **केचित्तु** 'अमीवे'ति-निपातनमाहुः । '**युवा** स्यात्तरुणे, श्रेष्ठे, निसर्गबलशालिनि' । '**वृषा** कर्ण-महेन्द्रयोः' । '**तक्षा** तु वर्द्धकिस्त्वष्टा रथकारश्च काष्टतट्' । **राजा** प्रभु-नृप-क्षत्रिय-चन्द्र-यक्ष-शक्रेषु । धवेः सौत्रस्य **धन्व** शरासनम् । मरुदेशश्च **धन्वा** । **धन्व** स्थलं च । **दिवस इति** । 'कितव' **इत्यन्ये** ।

**कनिप्रत्ययेति** । अयं नित् न । 'श्वे'त्यत्र इकारलोपो निपातनात् । **पूषा**–'पूष वृद्धौ' । **क्लेदा** ओषधि–शशाङ्कयोः'[2] । '**ऊष्मया साऽर्द्धमूष्माऽपि, मज्जोक्ता मज्जया सह**' । 'अर्यमा तु पुमान् सूर्ये पितृदेवाऽन्तरेऽपि च' । 'परिज्मा' आद्युदात्तो निपात्यते । अग्निश्च । परितो गन्ता च ।

**मातरिश्वनि** सप्तम्या अलुगुदात्तत्वं च निपात्यते इत्यपि बोध्यम् । 'श्वयुवे'त्यत्र तु नाऽस्य ग्रहणम् । निरर्थकत्वात् । सूत्राऽन्ते 'इति'-शब्द आद्यर्थः । तेनाऽन्येभ्योऽपि यथादर्शनं कनिर्बोध्य इत्याहुः ।

**इति उणादिषु[3] प्रथमः पादः ।**

---

१ 'उष्णाऽऽतपखेदेषु' इति क्वचित्पाठः । २ 'क्लिदे'ति सर्वत्र पाठः ।
३ 'उणादौ' इति क. पाठः ।

# अथ उणादिषु द्वितीयः पादः ।

**करेणु**र्गजकरिण्योः । **गन्धेति** । कलायश्च, कुलत्थी च । **कुष्ठं** रोगः । कुष्ठ ओषधिविशेषश्च । **नीथो** नेता, स्तोता च । 'नीथ'शब्दस्य क्वचि-दन्तोदात्तत्वं तु बाहुलकाद्बोध्यम् । '**रथः** स्यात्स्यन्दने, काये, चरणे, वेत-सेऽपि च' । **काष्ठं**-दारु । **काष्ठा**-दिक्-दारुहरिद्रा-प्रकर्षेषु । अष्टादश निमे-षाश्च **काष्ठाः** । स्थानमात्रे च । '**कोष्ठः** कुसूले, आत्मीये, मध्ये कुक्षेर्गृहस्य च' । **गाथा** श्लोके, संस्कृताऽन्यभाषायां च । '**अर्थो**ऽभिधेयरैवस्तुप्रयोजन-निवृत्तिषु' । विषय-प्रार्थना-कारणेषु च । शब्दाऽभिधेये च । **सार्थो** वणिक्समूहः, समूहमात्रं च । **मांसमिति** । असुरविशेषश्च ।

**वरूथं** कवच-रथगुप्ति-वेश्म-रथेषु । **तुत्थो**ऽग्निः । **तुत्थम्** अञ्जनभेदः । **तुत्था** नीली-सूक्ष्मैलयोः । **सिक्थं** मधूच्छिष्टम् । **सिक्थो** भक्तपुलाकः ।

**सामेति** । 'हिंसे'त्यन्ये । **तीर्थमिति** । सोमपानं च । **अवगथे** गाङो ह्रस्वत्वं, निपातनात् । **सङ्गतं चेति** । सङ्ग्रामश्च । **पृष्ठं** चरमे, देहाऽवयव-स्तोत्रविशेषयोश्च । **गूथ-यूथयो**र्निपातनाद्दीर्घः । **यूथं** तिर्यक्समूहे, समूहे च । **यूथी** पुष्पविशेष-पिप्पली-कुरण्टकेषु । **प्रोथे** निपातनात् गुणः । **प्रोथो** हयघोणा, अध्वगश्च । **स्फारे** 'नेड्वशी'ति नेट् । वलि यलोपः । **स्फारो** विकटे, करकादि-बुद्बुदे च । **वक्रो** जटिल-क्रूर-शनैश्चरेषु । **पुटभेदे वक्रम्** । अधस्तनजलस्याऽकस्मादुपरि निर्गमः **पुटभेदः** । **शक्र** इन्द्रे, कुटजा-ऽर्जुनवृक्षयोश्च । **क्षुद्रो**ऽधम-क्रूर-कृपणा-ऽल्पेषु । **क्षुद्रा** व्यङ्गा नटी-कण्टकारिका-सरघासु च । 'चाङ्गेरी-वेश्ययोर्हिंस्रा मक्षिका-मात्रयोरपि' । '**सरघा** मधुमक्षिका' । **तृप्रम्** आज्यं, काष्ठं, दुःखं च । **दस्रः** स्ववैद्यः, स्वरश्च । **भूयो**ऽभिप्रायेति । **माधवस्तु** वृत्ति-स्वरसमनुरुध्य '**उस्रे**'त्यत्र बाहुलकात्षत्वं ने'त्याह । **रश्मिरिति** । वृषश्च । **उस्रा** मूषिकपर्णी । **दिवस इति** । रासभः, पक्षी च ।

**मन्दिरमिति** । चतुष्पथश्च । **वाश्रा** शब्दयुक्ता, प्रस्नुतस्तना धेनुः ।

**शुभ्रम्**–अभ्रकम् । उद्दीप्त-शुक्लयोः शुभ्रस्त्रिषु । **चुक्रोऽम्लवेतसः**, अम्लद्रव्यं च । **चुक्रं** वृक्षाऽम्लम् । **चुक्री** चाङ्गेरिका । **निद्रे** ति । निपूर्वक-द्राधातोः 'आतश्चे'ति केऽपि '**निद्रा**' । **आर्द्रा** नक्षत्रम् । **आर्द्रो** जलक्लिन्ने त्रिलिङ्गः । **शूद्र इति** । शोकवत्त्वमात्रेण यौगिकोऽप्ययम् । 'शुचं राती'ति शूद्रः । 'आतोऽनुपसर्गे' इति कः । 'पृषोदरादित्वाद्वर्णव्यत्यय' **इत्यन्ये** । **कृतेश्छः** । 'ऊ'आदेशेनैव सिद्धे 'क्रू'आदेशविधानं प्रक्रिया-लाघवाय । **कृच्छ्रं** पाप-दुःख-सान्तपनादिषु । **क्रूरः** कठिण-घोर-नृशंसेषु त्रिलिङ्गः ।

**बहुलमन्यत्रापि** । तेन बृंहयति = वर्द्धयति प्रजा इति **ब्रह्मा** । शं भावयतीति **शम्भुः** । शोषयतीति-**शुष्मे**त्यादि । बाहुलकात् असंज्ञा-च्छन्दसोरपीत्याशयेनाऽऽह–**पर्णशुष इति** । **जीरः** खड्गे, औषधे, जरणे च ।

**ज्यश्चेति** । 'न धातु' इतिसूत्रे भाष्ये स्पष्टमिदम् । **सुरो** देवः, **सुरा** मद्यं, तत्पानपात्रं च । **सूरः**-सूर्यः । '**धीरो** धैर्याऽन्विते, स्वैरे, बुधे, क्लीबं तु केसरे' । **गृध्रः** पक्षी, लुब्धश्च । **शूरः** सूर्य-भट-यादवेषु । **सीरोऽर्क**-हलयोः । **चीरं** गोस्तन-वस्त्रभेद-रेखा-लेखनभेद-सीसक-चूडासु । **चीरी** झिल्ल्यां, कृच्छ्राटिकायां च । विकटदेशप्रेषितपत्त्रं '**कृच्छ्राऽटिका**'[1] । **वप्रः** पितरि, केदारे, तटे, वेणौ च, प्राकार-रोधसोश्च[2] । **नायक इति** । गतिमांश्च । **इन्द्रः** शचीपत्या-दित्य-योगा-ऽन्तरा-ऽऽत्मसु । '**अग्रं** पुरस्तादुपरि, परिमाणे पलस्य च । आलम्बने, समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च, प्रधाने च, प्रथमे चाऽभिधेयवत्' । **क्षुरः** छेदनद्रव्य-तालमखाणा-गोक्षुरेषु । '**खुरः** कोलदले शफे' । **कोलो** बदरी । **भद्रः** शिव-खञ्जरीट-वृष-मेरु-कदम्ब-गजजातिविशेषेषु । मङ्गल-मुस्ता-काञ्चनेषु क्लीबम् । **रास्ना**–पिप्पली-आकाशगङ्गा-दूर्वा-कट्फल-करणविशेषेषु स्त्रियाम् । श्रेष्ठ-साध्वोस्त्रिषु ।

---

१ कृच्छ्राटिका = 'चिट्ठी' इति भाषायाम् । २ वप्रः = 'बाप' इति भाषा ।

'उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिषूत्कटे । स्त्री वचा-क्षुद्रयोः' । 'भेलः प्लवे, मणौ, भीरावज्ञे, मुनिविशेषके' । शुक्रो भार्गव-ज्येष्ठा-ऽग्निषु । शुक्रं रेतो-ऽक्षिरुजोः । शुक्लो योगविशेष-शुभ्रयोः । शुक्लं रजते । सिते पीते इति । श्वेतसर्षप-चन्द्रयोश्च । विशुद्धे त्रिलिङ्गः । पद्मकेशरे क्लीबः ।

'गौरी त्वसञ्जातरजःकन्या-शङ्करभार्ययोः । हरिद्रा-रोचना-पिङ्गा-प्रियङ्गु-वसुधासु च' । नदीविशेषे, वरुणपत्न्यां च । ('गौरः[1] शुद्धाऽऽचार' इति भाष्यम्) ।

'अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते ।
सा गौरी, तत्सुतो यस्तु स गौरः परिकीर्त्तितः' ॥

—इति ब्रह्माण्डवचः श्राद्धकाण्डे हेमाद्रौ ।

वारिणीति । भू–वाचोरपि इरा । 'मालं क्षेत्रे, जने[2] मालो, माला पुष्पादिदामनि' । मालम् उन्नतभूतलम् । 'मणिमाला स्मृता हारे, स्त्रीणां दन्तक्षतेऽपि च' ।

बाहुलकात्तिजेरन्, दीर्घो, जस्य वः । तीव्रा कटुकी-राजिका-गण्ड-दूर्वासु । उग्रे अतिशये, कटौ च त्रिषु । 'तीवेः रप्रत्यये तीव्रमि'त्यन्ये ।

भियः क्रुः । अताच्छील्यार्थमिदम् । क्रुन् शि । अपिना सोपपद-स्याऽपि । अर्थद्वारकसम्बन्धे षष्ठी । प्रकृतिप्रत्ययाऽर्थयोः क्रियाकारक-भावात् । आनन्तर्यसम्बन्धे वा । रजको धावक-शुकयोः । 'चषकोऽस्त्री सुरापात्रे, मद्य-मद्यप्रभेदयोः' । लमको ऋषिविशेषः । कार्षकः कृषीवलः । कृषकस्तत्र फाले च । प्रपञ्चेति । 'क्रुन् शिल्पी'त्येव सिद्धमिति भावः ।

आङि पणि । 'प्राडी'त्यत्र पणिग्रहणमुपसर्गाऽन्तरव्यावृत्त्यर्थम् । '[3]आपणेन व्यवहरती'त्यर्थे 'तेन दीव्यती'ति ठकि, अन्तोदात्तोऽप्ययम् ।

१ अयं पाठः क. नास्ति ।

२ 'जिने' इति पाठान्तरम् ।

३ 'आपणे व्यवहरतीत्यर्थे' इति ख. ङ. पाठः ।

'**श्येनः** पत्त्रिणि, पाण्डरे'।

'**स्त्येनश्चोरः**। स्तेन चौर्ये' अस्मात्पचाद्यचि **स्तेनो**ऽपि।

**हरिणः** सारङ्गे, विशदे च। **हरिणीति**। हरिता-नारीविशेष-छन्दो-विशेष-स्वर्णप्रतिमासु। '**वृजिनं** कल्मषे क्लीबं, केशे ना कुटिलेऽन्यवत्'। 'अजिनं चर्म कृत्तिः स्त्री'।

**कठिणं** निष्ठुर-स्तब्धयोः। **कठिणी** खटिका। **कठिणा** '**मिश्री**'त्याख्या खण्डशर्करा। '**मलिनं** दूषिते कृच्छ्रे ऋतुमत्यां तु योषिति'। **कुण्डिनं** नगरम्। **कुण्डिन** ऋषिः। तस्याऽपत्यं **कौण्डिन्यः**[1]। 'आगस्त्यकौण्डिन्ययो-रि'ति सूत्रे तु एतत्पर्यायनान्त'कुण्डिन्'शब्दात्तस्य भार्येत्यर्थे ङीपि, ततो गर्गादियञि 'भस्याऽढे' इति पुंवत्त्वे, निपातनात् टिलोपो नेति बोध्यम्।

**यत्परुषि दिनमिति** तैत्तिरीयश्रुतिः। 'परुषि = पर्वणि दिनं खण्डित-मि'ति तदर्थः। '**द्रविणं** न द्वयोर्वित्ते, काञ्चने च, पराक्रमे'। '**दक्षिणः** सरलो-दार-परच्छन्दाऽनुवर्त्तिषु। त्रिष्ववामेऽद्भुते, यज्ञदाने, दिशि च स्त्रियाम्। प्रतिष्ठायां च।

**शून्यमिति**। ऊषरश्च। **तुहिनमिति**। तुहेर्गुणे ह्रस्वः। 'कित्त्वात् अगुणत्वमि'त्यन्ये। **तुच्छेऽपीति**। स्वच्छेऽपि। **माहिनं**-पूजनीयम्।

**क्विब्वचीति**। 'अनसि वहेः क्विप् डश्चाऽनसः' इतिवचनेन अनडुच्छब्द' इति 'वस्त्रोक्षे'ति सूत्रे **हरदत्तः**। एवं 'कं = वातं स्कुभ्नातीति ककुप्'। क्विपि पृषोदरादित्वात्सलोप इति बोध्यम्। **प्राडिति**। 'छ्वोः शूडि'ति शः। 'व्रश्चे'ति षः। '**श्री**र्वेषरचना-शोभा-भारती-सरलद्रुमे। लक्ष्म्यां, त्रिवर्ग-संपत्ति-विधो-पकरणेषु[2] च'। विभूतौ च मन्तौ च स्त्री'। अत्र 'कृदिकारा-

---

१ इतोऽग्रे—'आगस्त्यकौण्डिन्ययोरि'ति सूत्रे कुण्डमस्या अस्ति कुण्डिनीति इन्नन्तान्ङीपि, ततो गर्गादियञि, 'भस्याऽढे' इति पुंवत्त्वे, निपातनाट्टि-लोपो नेति बोध्यम्' इति ख. ग. ङ. पाठः।

२ 'विद्योपकरणेषु' इति क्वचित्पाठः।

दि'ति न ङीष् । 'कृत् य इकार' इति व्याख्यानात् । **केचित्तु** ङीष-मिच्छन्ति ।

**हुवः** । चात् क्विप्दीर्घौ । **चिक् चेति** । 'स्रुव' इत्येव ।

**तनोतेः** । 'व' इति सङ्घातग्रहणम् । **स्त्री त्विति** । 'स्त्री सौरभेयी-दृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च' । **द्यौरिति** । कर्त्तरि, अधिकरणे वा प्रत्ययः । **द्रोरिति** । त्रिलिङ्गः । **जसुरिर्वज्रमिति** । श्रान्तः, क्षुधितश्च । **सहुरिः** सहनशीलः ।

**सवन इति** । '**सवनं** त्वध्वरे, स्नाने, सोम[1]निर्दलनेऽपि च' । **कोकिल इति** । शब्दनः, खरश्च । '**वरण**स्तिक्तशाकेऽपि प्राकारे वरणं वृतौ' ।

**अशे रश च** । 'रशे रशना-राशि-रश्मिरि'ति तृज्वत्सूत्रे भाष्यम् ।

**वाचि त्विति** । रसेः 'ण्यासश्रन्थे'ति युचि, नन्द्यादित्वात् ल्यौ वा साधुः । '**रसनं** स्वदने, ध्वनौ । जिह्वायान्तु न पुंसि स्याज्जिह्वायां **रसना** स्त्रियाम्' । वस्तुतः सर्वत्र द्वावपि साधू । 'तालव्या अपि, दन्त्याश्च सम्ब-सूकर-पांसवः । रसनाऽपि च जिह्वायामि'त्यादिकोशादिति बोध्यम् । **ओदनोऽन्नम्** । ओदनी बला । बाहुलकात् स्यन्देः । '**स्यन्दनं** तु स्तुतौ, नीरे, तिनिशे ना, रथेऽस्त्रियाम्' । **तिनिशो** वृक्षविशेषः । एवं '**रोचना** रक्तकह्लारे, गोपित्त-वरयोषितोः' । **रोचनः** कूटशाल्मल्याम् । रोचके त्रिषु । कूटशाल्मली = यमद्वार[2]शाल्मली । **चन्दनं**–मलयजं, भद्र-काल्यौषधी च । **चन्दनः** कपिभेदः । **चन्दनी** नदी । **असनं**–क्षेपणे । विजयसारः-असनः । तथा **राजातनः** क्षीरिणी–किंशुक-पियालेषु ।

**रञ्जेः क्युन्** । 'रजनी'ति गौरादित्वान्ङीषि । **केचित्** क्युन्येव बाहुलकात् टित्त्वमिच्छन्ति । **केचित्तु** 'ल्युटि टित्त्वान्ङीपि रजनी'। 'रजकरजनरजःसूपसंख्यानमि'ति 'न्' लोपः । बाहुलकात् **कृपणः** ।

**भुवनं**–विष्टप-सलिलाऽऽकाश-जनेषु । '**निधनं** कुल-नाशयोः' ।

**पृषन्ति**–बिन्दवः । **पृषन् मृगः** । श्वेतबिन्दुयुक्ते पृषन् त्रिलिङ्गः ।

१ 'सौम' इति ख. ङ. पाठः । २ यमद्वारं = श्मशानम्

**बृहत्** विपुलम् । '**बृहती** क्षुद्रवार्त्ताक्यां कण्टकार्यां च वाचि च । जलपात्रे महत्यां च, छन्दो-वसनभेदयोः' । '**महती** वल्लकीभेदे, राज्ये तु स्यान्नपुंसकम् । तत्त्वभेदे पुमान्, श्रेष्ठे वाच्यवत्' । **महती**–नारदवीणा । 'विश्वावसोस्तु बृहती, तुम्बुरोस्तु कलावती । महती नारदस्य स्यात्, सरस्वत्यास्तु कच्छपी'ति । '**जगत्**स्याद्विष्टपे क्लीबं, वायौ ना, जङ्गमे त्रिषु । जगती भुवने, क्ष्मायां छन्दोभेदे, जनेऽपि च' ।

**सञ्चिनोतेरिति** । **कश्चित्तु** संश्वयतेः 'संश्वदि'त्याह । **छत्रमिति** । 'चन्द्र' इत्यन्ये । **ऋञ्जिवृधि** । अत्र 'अर्त्तेः सुट् च वृधेः किदि'त्येव सुवचम् । वृधावेव हि कित्त्वं सफलम् । ऋज्यादयः पूर्वसूत्रे एव पाठ्याः । **अग्निरिति** । शत्रुः हिंसकश्च ।

**युधिबुधि** । बाहुलकात् **कृपाणः** खङ्गः । श्वितेः सन्नन्तात् प्रत्ययः । सनो लुक् । तस्य दः । कित्त्वान्न गुणः । '**शिश्विदानः** पुण्यकर्मा' । 'पापकर्मे'त्यन्ये ।

**तृन्तृचौ शंसि** । 'शास्तिक्षदादिभ्य' इति पाठाऽन्तरम् । '**शास्ता** समन्तभद्रे ना शासके पुनरन्यवत्' । मूलपाठे तु क्षदादित्वादयं[1] साधुः ।

**क्षत्ता स्यादिति** । 'भुजिष्यातनयेऽपि स्यान्नियुक्त[2]वेधसोः पुमान्' । **वैश्यायामिति** । अमरस्तु 'क्षत्रियायां च शूद्रजे' इत्याह ।

**नप्तेति** । नञ् प्रकृत्या । पतेः अच्छब्दलोपः । '**त्वष्टा** पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि' । **देवा देवर इति** । पतिभ्राता । **सव्येष्ठेति** । 'तत्पुरुषे कृती'ति सप्तम्या अलुक् । **अग्नेर्योनिरिति** । शमीवृक्षो, निर्मन्थ्यदारु च । '**सरणिः** पङ्क्तिमार्गयोः' । शरणिरप्यत्रैव । हिंसा च शरणिः । **धमनि**र्वेश्या-नाड्योः । '**अशनि**र्वज्र-विद्युतोः' । **तरणिः** सूर्यो, घृतकुमारी, नौका च । **रजनी**-रात्रि-हरिद्रा-जतुषु । रात्रिचरे भाषया 'चामचिडी'त्याख्ये पक्षिणि । धृषेर्बाहुलकात् अनौ **धर्षणिः** बन्धकी । **वर्त्तनिः** मार्गः । स एव '**वर्त्मनिः**' । ङीपि '**वर्त्तनी**' । **अर्चि**र्ज्वाला-कान्त्योः । '**छदिः**

१ 'अयं = शास्तृशब्दः । २ नियुक्तः = राजपुरुषः ( अफसर ) ।

**स्त्रियामि**'ति लिङ्गाऽनुशासनम् । **ज्योतिरग्नि-सूर्य-दृष्टि-नक्षत्र-प्रकाशेषु** ।

**वसौ रुचेरिति** । बाहुलकात्केवलादपि । **अरुः** मर्म । 'व्रण' इत्यन्ये । **वपुः** शरीरं, सुन्दराऽऽकृतिश्च । '**धनुः** पियाले ना, न स्त्री राशिभेदे, शरासने' । धनुर्धरे त्रिषु । अयम् उकारान्तोऽपि । चक्षेः शित्त्वात्सार्वधातुकत्वेन ख्याञ् न । '**बर्बरः** पामरे, केशविन्यासे, नीवृदन्तरे । बर्बरः फञ्जिकायां च, बर्बरा शाकपुष्पयोः' । '**चत्वरं** स्थण्डिलेऽङ्गने' । **जम्बाल इति** । स्मरः, पङ्कश्च ।

इति उणादिषु द्वितीयः पादः ।



## अथ उणादिषु तृतीयः पादः ।

**धूर्त्त इति** । छेदनद्रव्य-वैरिणोश्च । **स्थूल इति** । कच्छपश्च । जातिविशेषो व्याधः । समुद्रेऽप्ययम् । वाणिजक-वास्तवयोरपि '**नीवरः**' । कुत्सित-तक्रयोरपि **कट्वरम्** । बाहुलकात् उपपूर्वात् जुहोतेरुकारलोपे उपह्वरम् । '**उपह्वरं** समीपे स्यादेकान्तेऽपि नपुंसकम्' । **उपह्वरो** रथः ।

**जिनोऽर्हन्निति** । बुद्धो, जित्वरश्च । '**दीना** मूषिकयोषायां, दुर्गते, कातरेऽन्यवत्' । **उष्णो** ग्रीष्मे पुमान् । दक्षाऽशीतयोस्त्रिलिङ्गः । **मीनो** राश्यन्तर-मत्स्ययोः । '**कृष्णो** व्यासे केशवे च वायसेचाऽर्जुने मतः । **कृष्णा** स्याद् द्रौपदी नीली-कणा-द्राक्षासु योषिति । श्यामे तु वाच्यलिङ्गः स्यात्, क्लीबे मरीच-लोहयोः' । एवं च सूत्रे 'वर्ण'ग्रहणं व्यर्थम् । **ब्रध्नः**- सूर्यः । बुध्नः शिफायां, रुद्रे च । शिफा[१] मूलम् । **भृष्ट्यवे इति** । धान्याके, अभिनवोद्भिदि च । वेतने वस्नं क्लीबम् । **वेनो** लुण्टाकः, प्रजापतिः, पृथुपिता च । **लक्ष्मणा** ओषधिविशेषः । सश्रीकेऽभिधेयवत् ।

**स्यून इति** । ऊकाराऽऽदेशविधानेनैव सिद्धे 'यू'करणं स्पष्टाऽर्थम् । **स्योन**

१ 'शिफा मूलः' इति क. पाठः ।

इति। व्याश्रयत्वात्,अनित्यत्वाच्च 'वार्णे'त्यस्या अप्रवृत्तेर्नोपधागुणः। 'ऊठि बाहुलकात् यणादेश' इत्यन्ये। '**स्योनः** किरण-सूर्ययोः'। '**कर्णः** पार्श्वे,स्वर्णपङ्क्तौ, श्रवणे च। '**वर्णो** द्विजादि-शुक्लादि-यशो-गुणकथासु च। स्तुतौ ना, न स्त्रियां भेदरूपाऽक्षरविलेखने'। '**जर्णो**-जीर्ण-द्रुमे-न्दुषु'। **द्रोण** आढकतच्चतुष्टय-पाण्डवगुरु-कृष्णकाकेषु। देशविशेष-काष्ठाऽम्बुवाहिनी-गवादनीषु **द्रोणी**। **निद्रेति**। निद्रितस्य ज्ञानं च। **सिन्धुः** नदः, समुद्रश्च। **धेना** नदी, वाक् च। '**तृष्णा** लिप्सा-पिपासयोः'। **सूना** वधस्थाना-ऽधोजिह्वयोः। '**सूनं** प्रसव-पुष्पयोः। **रत्नं** स्वजातिश्रेष्ठे, मणौ च। **रास्ना** सर्पाक्ष्येलापर्ण्योः। **स्थूणा** लोहप्रतिमा-गृहस्तम्भयोः। **वीणा**-वल्लकी-विद्युतोः।

**गायन** इति। नटश्च। **दातेति**। दुर्दमश्च। '**कृत्स्नं** सर्वाऽम्बुकुक्षिषु'। '**तीक्ष्णं** सामुद्रलवण-विष-लोहा-ऽऽजिमुष्कके'। **आजिमुष्कको** वृक्षविशेषः। 'क्लीवं यवाऽग्रके पुंसि, तिग्मा-ऽऽत्मत्यागिनोस्त्रिषु'। **तस्कर इति**। रिपुश्च। **शरीरीति**। अग्निर्धाता च। **मृत्युर्यम-मरणयोः**। **वृक्षविशेष इति**। कदम्ब-बन्धूक-नीलाऽशोकरूपाः। **च्युवः किच्चेति**। बाहुलकात् चुपेरपि। **चुप्पो**-मन्दगन्ता। '**सूपो** व्यञ्जन-सूदयोः'। **सूर्पमिति**। बाहुलकादुत्त्वम्। तत एव सृधातोः **सूर्पम्**। '**कूपः** कूपक-मृन्मानगर्त्ता-ऽन्धु-गुणवृक्षके'। **कूपकः**—शुष्कनद्यादौ जलाऽर्थकृतगर्त्तः। **मृन्मानम्**—मृत्तिकाकृतमानपात्रम्। नौकादौ गुणाऽऽख्यरज्जुबन्धनाऽर्थकाष्ठं '**गुणवृक्षकः**'। '**खप्पः**-क्रोधे, बलात्कृतौ'।

**रूपमिति**। **रूपं** केश-नाटक-ग्रन्थवृत्ति-पशु-शब्दाऽऽकार-श्लोकेषु (न) पुमान्। **तल्पमिति**। मद-कलत्रयोश्च। **स्तनयित्नुर्मेघः**। स्तनिते क्लीबम्। **हर्षयित्नुर्हेम**-सुतयोः। 'पोषयित्नुः पिके द्विजे'। **गदयित्नुः** काल-कामकामुक-बहुभाषिषु। **मदयित्नुर्मदिरा**, कामश्च। मेघे क्लीबम्। **शास्त्रं चेति**।

---

१ 'सर्पः' इति ग. पाठः। २ 'मानगर्त्तः' इति ख. ग. पाठः।

३ न पुमान् = नपुंसकम्। 'पुमानि'त्येव तु सर्वत्र पाठः।

चात् हन्ता । बाहुलकात् क्नौ 'कृणुः', 'हनुरि'त्यादि । हनौ बाहुलकात् नलोपः । गमेः क्त्नौ, सन्वद्भावे[1], मलोपे—'जिगत्नुरि'ति । ध्वनितं चेदं दशपादीवृत्तौ । हन्तेरपि सन्वत्, क्त्नुश्च । तेन 'जिघत्नुः' । दातेति । शूरो, वीरश्च ।

भानुः—रश्मिर्दिवाकरश्च । वग्नुर्वक्ता । 'धेनुर्नवसूतिका' । जह्नुर्विष्णुः, राजर्षिश्च । वर्णुर्नदेति । 'वेणुर्नृपाऽन्तरे वंशे' । रेणुः पुमान् पर्पटे । 'कर्कः कर्के च वह्नौ च शुक्लाऽश्वे दर्पणे घटे' । राकेति । नदीभेद-नवजातरजःस्त्री-पूर्णेन्दु-कच्छूपु[2] च । 'दाका' इत्यादौ 'केऽण' इति न । बाहुलकात् । 'न कपी'ति साहचर्यात्कस्तद्धित एव तत्रे'त्यन्ये' । 'अर्कोऽर्कवृक्षे, स्फटिके, रवौ, ताम्रे, शचीपतौ' । बिभीतक-तिलतैलादिशेषोऽपि कल्कः । पिष्टौषधविशेपश्च । बाहुलकात् 'रङ्कः'। 'रङ्कः कृपण-मन्दयोः'। कपिलकादित्वाल्लत्वे-'लङ्का' । 'लङ्कारक्षः पुरी-शाखा-शाकिनी-कुलटासु च' । सृको बाणे, मरणशीले च । भूकं छिद्रं, कालश्च ।

मुष्कोऽण्डमिति । मोक्षकवृक्ष-लङ्घयोरपि । शुको व्याससुत-रावण-मन्त्रि-कीर-शिरीषतरुपु पुमान् । ग्रन्थिपर्णे शुकम् । वल्कं शल्के च । 'उल्का ज्वाला-विभावस्वोः' । काको वायस-वृक्षभेद-पङ्गुपु । शिरोऽवक्षालन-मानभेद-द्वीपभेदपु च 'काकः' । 'काकं सुरत-बन्धे च, काकानामपि संहतौ' । काका-काकनासा-काकोली-काकजङ्घा-काकमाची-गुञ्जासु । पाकः परिणतौ, शिशौ च । शल्कन्तु शकले वल्के काष्ठखण्डे च । 'मर्च शब्दे, चौरादिक' इति 'मिदचोऽन्त्यात्'सूत्रे कैयटः । बाहुलकात् श्यतेः । शाको द्वीपविशेषे, शक्तौ, शिग्रौ च । निहाका-गोधिका । 'निष्कमस्त्री साऽष्ट-हेमशते, दीनार-कर्षयोः । वक्षोऽलङ्करणे, हेममात्रे[3], हेमपलेऽपि च' । पलं-

1 'क्त्नावपि सन्वद्भावे' इति ख. ग. ङ. पाठः ।

2 'कच्छुषु' इति ख. ग. ङ. पाठः ।

3 'हेमपात्रे' इति क. पाठः ।

कर्षचतुष्टयम् । '**स्यमीका** नीलिकायां स्त्री, वल्मीके च पुमान्मतः' ।

**अजियुधू** । दीर्घसामर्थ्याद्गुणाऽभावः । **शकेरुनोन्तो** । चत्वारोऽपि पक्षिसामान्ये । **शकुनः** पक्षिविशेषे । **शकुनं**–शुभशंसि निमित्तम् । **शकुन्तः** कीटविशेषे, भासपक्षिणि च । **शकुनिः** सौबले, करणविशेषे च ।

बाहुलकात्कमेरुन्तौ, टिलोपे–'**कुन्तिः**' । 'कृदिकारादि'ति ङीष् । 'कुन्ती पाण्डुप्रियायां च, शल्लक्यां, गुग्गुलुद्रुमे' ।

**वसन्त इति** । देहः, सुरभिश्च । '**भुवन्युरग्नि-चन्द्रयोः**' । '**करुणो** रस-वृक्षयोः' । **वरुणस्तरु**-जल-जलेश-रविषु । **दारुणं** भयकृत् । **दारुणो** रसभेदश्च । **तरुणः** कुब्जपुष्पे, रुचके च । '**पिशुनं** कुङ्कुमे स्मृतम् । कपिवक्त्रे च, काके ना, सूचक-क्रूरयोस्त्रिषु । पृक्कायां **पिशुना** स्त्री स्यात्' । **मिथुनं** युग्मे, राशिभेदे च ।

'**फल्गुनस्तु** गुडाकेशे, नदीजाऽर्जुनभूरुहे । तपस्यसंज्ञमासे, तत्पूर्णिमायां च **फाल्गुनी**' । **अण्चेति** । प्रज्ञादित्वादित्यर्थः । अर्जेर्णिलोपेन सिद्धे लुग्विधानं व्यर्थम् । '**अर्जुनः** ककुभे, पार्थे, कार्त्तवीर्य-मयूरयोः । मातुरेकसुतेऽपि स्याद्धवले पुनरन्यवत् । नपुंसकं तृणे, नेत्ररोगे, चाऽप्य**र्जुनी** गवि । उखायां, बाहुदानद्यां, कुट्टन्यामपि च क्वचित्' ।

**अरुणोऽ**व्यक्तराग-सन्ध्याराग-सूर्य-तत्सारथि-निःशब्द-कपिल-कुष्ठभेदेषु । गुणिनि त्रिषु । '**अरुणा**ऽतिविषा-श्यामा-मञ्जिष्ठा-त्रिवृतासु च' । **वयुनं** प्रज्ञानं, प्रशस्यं च । **वर्समिति** । बाहुलकात् षत्वाऽभावः । 'तितुत्रे'ति नेट् । पक्षे षत्वमपि,-'वर्षं तर्षमि'ति । एतच्च 'आदेशप्रत्यययोः' 'एरजि'-त्यत्र चाऽऽकरे स्पष्टम् । '**वर्षो**ऽस्त्री भारतादौ स्याज्जम्बूद्वीपा-ऽब्द-वृष्टिषु' । प्रावृषि स्त्रियां भूम्नि । **तर्षो** लिप्सो-दन्ययोः । 'पुत्रादौ, तर्णके, वर्षे, **वत्सः** क्लीबन्तु वक्षसि' । '**हंसः** स्यान्मानसौकसि' । निर्लोभ-विष्णु-अर्क-नृप-परमात्म-मत्सर-योगभेद-मन्त्रभेद--शरीरवायुविशेषा-ऽश्व-

१ 'तर्णके वत्सः' इति ख. ङ. पाठः ।

भेदेषु । **कंसो** दैत्य-कांस्य-तत्पात्र-परिमाणविशेष-तैजसद्रव्या-ऽसुरेषु ।

'**कक्षा** स्यादन्तरीयस्य पश्चादञ्चलपल्लवे । स्पर्द्धायां, ना तु दोर्मूल-कच्छ-वीरु-त्तृणेषु च'। **प्लक्षो** द्वीप-पर्कटि-गर्दभाण्ड-पिप्पल-गृहद्वार-पार्श्वेषु। 'मांसं स्यादामिषे क्लीबम्'। जटामांस्यां, कक्कोल्यां च स्त्री। **कक्कोली**-फलकर्पूरः । **अक्ष** इन्द्रिय-द्यूताऽङ्ग-कर्ष-चक्र-व्यवहार-बिभीतक-ज्ञाना-ऽऽत्म-शकट-रुद्राक्षे-न्द्राक्ष-सर्प-तुत्थ-सौवर्चलेषु । **ऋक्षोऽद्रीति** । कटु-कोशातकी-नक्षत्र-कृतच्छिद्रेषु । **गुत्सः** स्तबक-स्तम्ब-हारविशेषो-त्तम-भूषणेषु । ग्रन्थिपर्णे च । गुच्छो, गुलुच्छश्चैतेषु ।

**गृधि** । गृधेश्चर्त्त्वेन सिद्धे भष्भावनिवृत्तये 'द'विधिः । '**पक्षो** मासाऽर्द्धके, पार्श्वे, ग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे, बले, सखि-सहाययोः । चुल्लीरन्ध्रे, पतत्रे च, राजकुञ्जर-पार्श्वयोः' ।

**अक्षरं** मोक्ष-ब्रह्म-वर्णेषु । 'असेः सरन्नि'ति त्वपपाठः । 'अश्नोतेर्वा सरोऽक्षरमि'ति प्रत्याहाराऽऽह्निकान्ते भाष्यात् । नित्स्वराऽनुपलम्भाच्च ।

**सपूर्वादिति** । विद्यमानपूर्वादित्यर्थः । तेन इद्वत्सरपरिवत्सरौ सिद्धौ । 'धूसरी किन्नरीभेदे, ना खरे, त्रिषु पाण्डरे'। **मत्सरो** मात्सर्य-क्रोधयोः । 'असह्यपरसंपत्तौ कृपणे चाऽभिधेयवत्' । मत्सरोऽन्यशुभद्वेषः । तद्वांश्च । **मत्सरा**–मक्षिका[2] । 'मत्सरो हर्षहेतुरि'ति **वेदभाष्यम्** । **ऋक्षरा** तोयधारा । ऋक्षरः कण्टकश्च ।

**पीयुकणिभ्याम्** । बाहुलकात् भञ्जेः । न्यङ्क्वादित्वात्कुत्वम् । नलोपः । '**भगालं** नरमस्तकम्' । **सूर्यश्चेति** । कपिः, परदुःखदश्च । **सृदाकुः**–अग्नि-चक्र-सूर्य-प्रतिबिम्ब-वातेषु । **वार्त्ताकुर्वृन्ताकम्** । तदेव **वार्त्ताकम्** । **सरण्युः** शीघ्रगामी च । **वचक्नुर्ऋषिभेदेऽपि** । **भयानको** व्याघ्र-रस-राहु-

१ प्लक्षः = वृक्षकण्टकादिनिर्मितं गृहद्वारं 'फलसा' इति मरुदेशभाषायां प्रसिद्धम् ।

२ मक्षिका–'मच्छर' इति प्रसिद्धा ।

भयङ्करेषु । **नासिकामले इति** । लोहमल-काचपात्र-फेन-पिच्छिल-नक्ररेतस्सु च । **ह्रियः** । कुक् प्रत्ययः । ककारो गुणप्रतिषेधाऽर्थः ।

'**हस्तः** करे, करिकरे, सप्रकोष्ठकरेऽपि च'। नक्षत्रे। केशात्परो व्राते । **मर्त्तो** भूलोकः । '**गर्त्त**स्त्रिगर्त्तदेशे स्यादवटे च, ककुन्दरे' । **एतः** कर्बुरः, आगन्तुश्च । '**अन्तं** स्वरूपे, नाशे ना, न स्त्री शेषेऽन्तिके त्रिषु' । '**दन्तो**ऽद्रिकटके, कुञ्जे, दशने चौपधौ स्त्रियाम्' । **लोतम**श्रुणि, चोरिते, मेषे च । **धूर्त्तः** खण्डलवण-धुस्तूर-शठेषु । **ततं** व्याप्त-विस्तृत-वीणादि-वाद्येषु । **ततो** वायुः । **मृतं**-याचिते, मृत्यौ, तद्वति च । **अक्तं** परिच्छिन्नम् । '**घृत**माज्ये, जले क्लीबं, प्रदीप्ते त्वभिधेयवत्' । **सितं**-धवलम् । **सिता**-शर्करा । बाहुलकात् 'ऋ'धातोः । **ऋतम्** उञ्छ-शिल-जलेषु । सत्ये, दीप्ते, पूजिते च । **दूतः** । गौरादिङीषि-'**दूती**' । दूङः क्तिचि दूतिरपि । '**तातो**ऽनुकम्प्ये जनके'। बाहुलकात् शीङः। **शीता** देवसरित्, रामजाया, हलपद्धतिश्च । **शीतं**-हिमम् । तद्वति त्रिषु । **शीतो**ऽलसो, बहुवारतरुश्च । एषु **सीता** दन्त्यादिरपि । '**जीमूतो**ऽद्रौ, भृतिकरे, देवताडे, पयोधरे' । **देवताडो** वृक्षभेदः । शक्रे, घोषके च । इदं सूत्रमनाकरम् । अत एव पृषोदरादौ जीमूत उदाहृत **आकरे** ।

**लोष्टं** पुंसि च । तृज्वत्सूत्रे 'लुशेर्लोष्टमि'ति भाष्यम् । 'समलोष्टाऽश्मकाञ्चन' इत्यत्रोभयोरुपादानं 'गोबलीवर्द'न्यायेन । 'लोष्टरूपाऽश्मकाञ्चनयोरि'ति वाऽर्थः । लोष्टतुल्यत्वेन अत्यादरणीयेऽप्यादराऽभावध्वननाऽर्थं तदित्याहुः। 'लोष्टुः शण्ढेऽपि लोष्टः स्यादि'ति। '**पलितं** शैलजे, तापे, केशपाके च, कर्दमे' । **हरिता** दूर्वा । **मत्स्ययोरिति** । कुङ्कुम-रक्त-ऋजुइन्द्रधनु-वृक्षविशेषेष्वपि **रोहितः** । **लोहितं** रक्त-गोरोचन-केसर-रक्तचन्दन-ब्रह्मपुत्राख्यनद-मङ्गल-रक्तपर्णेषु । **मांसमिति** । जटामांस्यां

---

१ जीमूतः = 'मुटिया' 'मजूरा' । मूतम् = मोटरी, गांठ ।

२ 'लेष्टुः शण्डेऽपि' इति क्वचित्पाठः । ३ 'ताप्ये' इति पाठान्तरम् ।

**पिशिता । यज्ञपशुरिति** । श्रवणीयश्च ।'दधिषाय्य' इतिपाठस्तु लक्ष्यवि-संवादी। 'धा'धातोरन्त्यस्येत्त्वं, ततो द्वित्वं बोध्यम् । स्तुपेय्यं–स्तोतव्यम् । **पुरुवर्चसं**-बहुरूपम् । 'स्तुवः केय्य' इतिपाठस्तु लक्ष्यविसंवादी । **'पर्जन्यो** मेघशब्देऽपि ध्वनदम्बुद-शक्रयोः' । **नक्षत्रमिति** । क्षदेः सौत्रात् त्रनि, नञः प्रकृतिभावेन 'नभ्राडि'तिसूत्रे व्युत्पादितम् । **यजत्रो** यष्टव्यदेवता । 'कलत्रं श्रोणि-भार्ययोः' । **कृन्तत्रं** कर्त्तनीयम् । 'अरण्यमि'**त्यन्ये । भरतो** रामाऽनुजे, दौष्यन्तौ, नटे, नाट्यशास्त्रमुनौ च ।

**ऋत्विगिति**। 'यष्टव्य' इत्यन्ये। **पर्वतः** पादपाऽद्रिशाकमत्स्यभेदऋषि-भेदेषु । **हर्यतोऽश्व इति** । सर्वस्पृहणीयश्च । **बिन्दुश्चेति** । स्थानत्रये श्वेत-बिन्दुयुक्तश्च । **रजतं** रूप्य-हार-**शुभ्रेषु । शमथो** मन्त्री च । **दमथो** दण्डश्च । **विदथो** योगि-कृतिनोः । बाहुलकाद्रौतेः **रुवथम्** । **उपसर्गे वसेः** । इदं गाङ्कुटादिसूत्रे कैयटे स्पष्टम् । **अतस इति** । गौरादित्वान्ङीषि **'अतसी** स्यादुमा क्षुमा' । **चमस इति । चमसी**-माषपिष्टम् । **कण्टकिफलमिति** । कण्टके, वानरविशेषे च । **पनसी** रोगभेदः । **करभो** मणिबन्धादिकनिष्ठान्ते, उष्ट्रे, तत्सुते च । **शरभः** पशुविशेषो, वानरविशेषः, करभश्च । **शलभः**-पतङ्गः । '**कलभः** करिशावकः' । **गर्दभः** श्वेतकुमुद-गन्धविशेष-रासभेषु । **ऋषभ** औषधविशेष-स्वरभेद-कर्णरन्ध्र-गर्दभपुच्छेषु । 'उत्तरस्थः स्मृतः श्रेष्ठे, स्त्री नराकारयोषिति । शूकशिम्ब्यां शिरालायां, विधवायां क्वचिन्मता' । **'वृषभः** श्रेष्ठ-वृषयोः' । **रासभ इति । रासभी** क्षुद्रजन्तु-रोगविशेषयोः । **'वल्लभो** दयितेऽध्यक्षे, सुलक्षणतुरङ्गमे' । कुकपूर्वात् कोर्बाहुलकाद्भचि **'कुकुभो** वनकुक्कुटः' ।

**जविशिभ्यां** । बाहुलकात् अर्हतेरपि । **'अर्हन्तः** क्षपणो, जिनः' । **'जर्जरं** शैवले, शक्रध्वजे, त्रिपु जरत्तरे' । **'झर्झरः** स्यात्कलियुगे, वाद्यभेदे, नदीऽन्तरे' । **अररं** छन्दश्च । **'भ्रमरः** कामुके, भृङ्गे' । **'चमरं** चामरे,

१ 'पुरुवर्पसम्' इति क. पाठः । २ 'केवांचे च सिरालायाम्' इति क. पाठः ।
३ नदान्तरे = 'घाघरा' इति प्रसिद्धे नदे ।

स्त्री तु मञ्जरी-मृगभेदयोः' । बहुलकाद्वाशेरपि,-वाशारः–कोकिलः । 'अङ्गार उल्मुक-भौमयोः । मन्दारः पारिजात-पारिभद्रा-ऽर्कपर्ण-हस्ति-धूर्त्तेषु । बाहुलकादारौ-मन्दारुरण्येषु । 'कडारः कपिले, दासे' । शृङ्गारः सुरत-रस-गजभूषणेषु । शृङ्गारं लवङ्ग-सिन्दूर-पटवासेषु। कनकालुका स्वर्णजल-पात्रम् । भृङ्गारी झिल्लिका ।

मयूर इति । जरठ[1]-सूर्य-वारण-मुनि-ब्रह्मसु च कञ्जारः। मार्जारः ओतु-खट्वाङ्गयोः । 'कुमारः स्याच्छुके, स्कन्दे, युवराजे-ऽश्ववारके । बालके, वरुणाऽद्रौ ना, न द्वयोर्जात्यकाञ्चने । कुमारी शैलतनया वनमालयोर्नदी-भिदि च । 'सहा-ऽपराजिता-कन्या–जम्बूद्वीपेषु च स्त्रियाम्' । सहा–घृत-कुमारी । 'तुषारस्तुहिनं हिमम्' । 'कासारः सरसी सरः' । कुणपः पूतिगन्ध-शवयोः । 'विटपो न स्त्रियां स्तम्ब-शाखाविस्तार-पल्लवे' । विटा-ऽधिपे च' । आदेः प इति । अन्ये तु सूत्रे 'विष्टपे'ति दन्त्योष्ठ्यादिमेव पठन्ति । उलपो लतायां, तृणभेदे च ।

वर्त्तिकेति । शकुनौ प्राचां मते 'वर्त्तके'त्यर्थम्, उदीचां मते 'वर्त्तिके'-त्येव रूपाऽर्थं 'वर्त्तका शकुनौ प्राचामि'तीत्त्वप्रकरणस्थं वचनं बोध्यम् ।

इष्टकेति । 'इष्टकेपीके'तिनिर्देशात् 'प्रत्ययस्थादि'तीत्त्वं न । 'गर्भो भ्रूणेऽर्भके, कुक्षौ, सन्धौ, पनसकण्टके' । अस्थीति । क्थिनो नित्त्वं चिन्त्यम् । नविषयत्वेनाऽऽद्युदात्तत्वसिद्धेः । ध्वनितं चेदम् 'ई च द्विवचने' इत्यत्र भाष्ये । 'भिन्नकर्तृकत्वान्न वैयर्थ्यमि'त्यन्ये । लक्ष्मीः सम्पत्ति-शोभा-ऋद्ध्यौषधि-पद्मा-वृद्धिनामौषधि-फलिनीषु ।

इति उणादिषु तृतीयः पादः ॥

---

१ 'सरट' इति ख. ङ. पाठः । 'मठर' इति क. पाठः । 'जरठे' इति तु विश्व-मेदिनीकोशसंमतः पाठः ।

# अथ उणादिषु चतुर्थः पादः ।

**वातप्रमीः** । अत्र 'कृदिकारादि'ति पक्षे ङीष् । एवं 'लक्ष्मी'शब्देऽपि । न हि 'कार'ग्रहणे उच्चारितसमकालस्य ग्रहणमि'ति मुनित्रयेण परिभाषितमस्ति । **रात्रिश्चेति** । शब्दो, मेघः, अशनिश्चेत्यपि बोध्यम् । **अञ्जलिर्हस्त**-सम्पुट-कुडवयोः । **अञ्जिष्ठ इति** । बाहुलकादिष्ठुचि अञ्जिष्ठुरपि । इष्णुचि अञ्जिष्णुरपि । **मत्स्यो** मीनः, देशश्च 'मत्स्या'इति बहुवचनान्तः । **अतिथिः** कुशपुत्रा-ऽऽगन्तुकयोः । **अङ्गुलिः** करशाखायां, गजशुण्डाऽग्रे च ।

**कवसः** संनाहः, कङ्कटश्च । '**कवचो** गर्दभाण्डे च, संनाहे, पर्पटेऽपि च' । **शर्करा** खण्डविकृतौ, पाषाणांऽशे, कर्परांऽशे, शर्कराऽऽचितदेशे, रोगविशेषे, शकले च । '**पुष्करं** खे-ऽम्बु-पद्मयोः । तूर्यवक्त्रे, खड्गफले, हस्तिहस्ता-ऽग्रकाण्डयोः । कुष्ठौषध-द्वीप-तीर्थविशेषे च नपुंसकम्' । ना रोग-नाग-विहग-नृपभेदेषु, वारुणौ । '**पुष्कलं** पूर्ण-श्रेष्ठयोः' । '**मन्था** मन्थन-दण्डेऽपि, वाते, वज्रेऽपि च स्मृतः' ।

बाहुलकादर्त्तेर्भुक्षिनचि—ऋभुक्षाः । 'ऋभुपूर्वात्क्षयतेः 'अन्येभ्योऽपी'ति डः । **ऋभुक्षः** स्वर्गे, वज्रे च । ततो मत्वर्थे इनिरि'त्यन्ये । **बलाका** बकपङ्क्ति-बिसकण्ठिका-कामुकीषु । **बलाको** बकः । '**शलाका** शल्य-मदनशारिका-शल्लकीषु च' । **पताका** वैजयन्त्यां च, सौभाग्ये, ध्वजे, नाटकाऽङ्के च । '**पिनाकः** पांसुवर्षे च' । पिषेः षस्य णत्वं, युगागमो निपातनात्—**पिण्याकं** तिलकल्क-हिङ्गु-केसर-लोहबाणेषु । **दूषीकेति** । 'दूषिके'ति ह्रस्वमध्योऽप्यत्र । **दूषिका** तूलिकायामपि । '**अनीको** गण-सैन्ययोः' । '**हृषीकं** विषयी-न्द्रियम्' । **वृक्षेति** । 'तिन्तिडीक'शब्दोऽप्येतद्वाचकः । '**पुण्डरीकं** सिता-ऽम्भोजं, सितच्छत्रं च, भेषजम्' । **दिग्गजश्चेति** । कोशश्च ।

**इषीकेति** । बाहुलकाद्ध्रस्वाऽभावे ईषीकाऽपि । **अलीकमप्रिये**, भाले, वितथे, दिवि, असत्ये च । **व्यलीकमप्रियेऽकार्ये**, विस्मयाऽन्विते

---

१ 'नागरा नागविहग' इति सर्वत्र पाठः ।

च । बाहुलकाद्वलतेर्मुकि-**वल्मीकम्** । वहेर्वृद्धावीकनि-**वाहीकः** । सुप्रपूर्वादिणस्तुटि '**सुप्रतीकः**' । शाम्यतेः **शमीको** ऋषिविशेषः । 'गूथं **पुरीषं** वर्चस्कमस्त्री विष्ठा-विषौ स्त्रियाम्' । **ऋजीषमिति** । उद्धृतरससोमलताशेषोऽपि **ऋजीषम्** । **भ्राष्ट्रमिति** । रणेऽपि-**अम्बरीषम्** । राजविशेष-नरकविशेष-किशोर-सूर्या-ऽनुतापा-ऽऽम्रातकेषु **अम्बरीषः** । **किशोरो**ऽश्वकुमारः । 'एकादशमारभ्य आपञ्चदशं किशोर' इत्यन्ये ।

**वंशाङ्कुर इति** । वृक्षविशेष-घटयोश्च । '**करीरो**[1] चीरिकायां च दन्तमूले च दन्तिनाम्' । बाहुलकात्[2] हिण्डेः । **हिण्डीरः** फेनः । **हिण्डिरोऽपि** । आदेर्डत्वे **डिण्डीरः** फेनः । एवं किर्मीर-जम्बीर-तूणीरादयो बोध्याः । **उशीरं** वीरणमूलम् । **कुरीरमिति** । कपिलकादित्वाल्लत्वे '**कुलीरः**' । '**क्षीरं** दुग्धे च, नीरे च' । 'निम्नं गभीर-गम्भीरे' । **मद्यमिति** । मैरेयाख्यस्तद्विशेष इत्यर्थः । **स्वभाव इति** । सद्वृत्तं च । **शैवलं**-पद्मकाष्ठेऽपि । '**शम्बूको** गजकुम्भाऽन्ते, स्याद् घोङ्के, शूद्रतापसे' । बाहुलकादुकप्रत्यये **शम्बुकोऽपि** । जम्बूक-बन्धूकादयोऽप्यत्रैव । **जम्बूकः** फेरव-नीच-वरुणेषु । **बन्धूको** बन्धुजीव-पीतसारयोः । **कन्दविशेष इति** । कमलकैरवादीनां कन्द इत्यर्थः । '**नेमिर्ना** तिनिशे कूपत्रिका-चक्राऽन्तयोः स्त्रियाम्' । **कूपत्रिका** 'गराडी'[3]ति प्रसिद्धा । बाहुलकात् यातेः-**यामिः** । '**यामिः** स्वसृ-कुलस्त्रियोः' । चवर्गतृतीयादिः जामिरप्यनयोः । '**ऊर्मिः** स्त्रीपुंसयोर्वीच्यां, प्रकाशे, वेग-भङ्गयोः । वस्त्रसङ्कोचरेखायां, वेदना-पीडयोरपि' । **भूमिः** पृथिव्यां, स्थानमात्रे च ।

**रश्मिरिति** । पक्ष्मश्च । **वेणिरिति** । नद्यन्तर-देवताडयोरप्ययम् । ज्यानिर्हानि-स्रवन्त्योः । **जूर्णिः** स्त्रीरोगः । बाहुलकादाङ्पूर्वात् कृतेरपि । **आर्तिः** धनुःकोटिः । ङीपि'**आर्ती**'त्यपि । '**आर्त्तिः** पीडाधनुःकोट्योरि'त्यार्तिशब्दस्तु ऋतेः क्तिनि बोध्यः । अयं ह्रस्वादिरपि । '**वृष्णिः** पाखण्ड-चण्डयोः' ।

---

१ 'करीरी' इति तु कोशे पाठः ।

२ 'हिण्डेरपि' इति ख. ङ. पाठः ।

३ कूपत्रिका = 'गडारी' 'भूण' इति भाषायां प्रसिद्धा ।

'अग्निर्वह्नौ, चित्रके च' । **श्रेणिः**–पङ्क्तिः, समानशिल्पिसंहतिश्च । **श्रोणिः** कटिः । **योनिः** आकर-स्मरमन्दिरयोः । **घृणिरंशु**-ज्वाला-तरङ्गेषु । **पादपृष्ठमिति** । सैन्यपृष्ठं च । **धरणीति** । पोषकश्च । **दीदिविर्बृहस्पत्यन्नयोरपि** । द्योतमानश्च **दीदिविः** । **घृष्विर्वराहः**, कामवर्षकश्च । **दीप्तिरिति** । शोभा-च । '**पतिर्धवे** ना, त्रिष्वीशे' । '**अमतिश्चन्द्र**-कालयोः' ।

**पवन इति** । मन्त्री, गौश्च । **अञ्जेः को** वेति । अत्र 'चिदि'त्यनुवृत्त्याऽन्तोदात्तः । मध्योदात्तोऽपि, बाहुलकात् ।

**दानमिति** । 'द्वेषप्रयुक्ताऽभिचाराद्यङ्गभूतदानमि'त्यर्थः । 'मा नः समस्य दूढ्य' इति मन्त्रव्याख्याऽवसरे **वेदभाष्ये** तथैवोक्तत्वात् । 'सर्वस्य दुर्बुद्धेरंहतिर्नोऽस्मान्मा वधीदि'ति तृतीयचरणस्थेनाऽन्वयः । 'मानो गर्व' इति व्याख्यानं त्वयुक्तमेव । पदद्वयस्याऽध्यापकसम्प्रदायासिद्धत्वात् । वाक्यशेषविरोधाच्च । **रमतिर्नाक**-नायकयोः । **सूरिरिति** । बाहुलकात् 'क्रिनि'प्रत्यये सूरी, सूरिणावित्यादि बोध्यम् । '**अद्रयो** द्रुम-शैला-ऽर्काः' ।

'**भूरिर्ना** वासुदेवे च, हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च, प्राज्ये स्याद्वाच्यलिङ्गकः' । '**प्राज्यं** तु बहुलं बहु' । **तन्द्रिः** । 'कृदिकारादि'ति ङीषि '**तन्द्री**' । '**तन्द्री** निद्रा-प्रमीलयोः' । तन्द्रिरपि अनयोः । **तन्द्राऽपि** ।

**प्रमीला** आलस्यम् । **शत्रिः** मेघ–जिष्णु-राजर्षिषु । **अत्री**, अत्रिर्भक्षक-ऋषिविशेषयोः । **पतत्रिरिति** । पक्षवाचक'**पतत्र**'शब्दान्मत्वर्थेनौ पतत्री, पतत्रिणावित्यादि । **मरीचिः** कृपण-दीप्ति-ऋषिविशेष-किरणेषु । मिदचोऽन्त्यात्सूत्रभाष्ये 'मर्चेण्यन्तादच्च इः, ईमागम' इत्युक्तम् । **कणीचिः** शकट-गुञ्जा-पुष्पितलतासु च । **वीचिः** स्वल्पतरङ्गा-ऽवकाश-सुखेषु । **परुषम्** एत-राक्षस-रूक्ष-निष्ठुरोक्तिषु । **नहुषो** राज-नागविशेषयोः । वृषादित्वादाद्युदात्तोऽयम । '**कलुषं** मलिने, पापे' ।

**अभिनवमिति** । सम्प्रदिनाऽवधीत्यर्थः । अमृतेऽप्ययम् । मुखपूर्त्तिभपुष्कर-प्रसृतैतत्त्रयमितजलादौ **गण्डूषः** । '**करटो** गजगण्डे स्यात्कुसुम्भे,

---

१ एतेति । कर्बुरेत्यर्थः ।

निन्द्यजीविनि । एकादशाऽहश्राद्धे च, दुर्दुरूटेऽपि, वायसे' ।

**करम्बमिति**। 'करम्भो दधिसक्तव' इति भान्तोऽपि । **कडम्ब इति** । डलयोरैक्यात्—**कलम्बोऽपि** कदम्ब-शरयोः । **कलम्बी** शाकविशेषः । **कलहंस इति** । सायकश्च। **कलमो** लेखनी-शालि-पटच्चरेषु । बाहुलकाद्लेः किन्दचि-अलिन्दः । **निषङ्गथिः**-रथयुगन्धरः । युगन्धरः =कूबरः । '**खर्जूरः** कीट-वृक्षयोः' । रूप्यफलयोः **खर्जूरम्** । एवं **शाल्गूर-मण्डूरादयः** । '**लाङ्गूलं** पुच्छ-शिश्नयोः' । **ताम्बूलादयोऽप्यत्र** । '**ताम्बूली** नागवल्ल्यां स्त्री, क्रमुके तु नपुंसकम्' । **शार्दूलो** व्याघ्र-शरभ-राक्षसेषु । उत्तरस्थितः सत्तमे । 'राजशार्दूल' इत्यादि । दु-कुभ्याम् ऊलचि कुगागमे-**दुकूलं** श्लक्ष्ण-वस्त्र-क्षौमयोः । **कुकूलं** शङ्कुसङ्कीर्णे, श्वभ्रे च । तुषाऽग्नौ पुमान् ।

**कुवश्चडिति**। दीर्घविधानसामर्थ्यान्न गुणः । **कूचः** = स्तनः । बाहुलकात् अदीर्घत्वे **कुचोऽपि** । टित्त्वान्ङीपि—'**कूची**' ।

**समीणः** । 'चट् दीर्घश्चे'ति वर्त्तते । **सूच इति** । '**सूची** तु सीवनद्रव्ये, आङ्गिकाऽभिनयाऽन्तरे'। अत्र आङ्गिको रोमाञ्चः। **मुसलमिति**। तदग्रलोहं, वज्रं च । शुभाऽन्वितश्च **शम्बः** । '**शुल्बं** ताम्रे, यज्ञकर्मण्याचारे, जल-संनिधौ' । **बिम्बं** फलविशेषः । **बिम्बः** प्रतिबिम्ब-मण्डल-कृकलासेषु । '**स्तम्बो** गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च' । **अप्रकाण्डो**–मूलहीनः ।

**जम्बालेति** । कर्दमेत्यर्थः । **अब्दो** वर्ष-मेघ-मुस्तासु । **कुन्दः** पुष्प-विशेषेऽस्त्री, मुकुन्द-भ्रमि-निध्यन्तरेषु ना । '**वलयः** कण्ठरोगे ना, कङ्कणे पुंनपुंसकम्' । **मलयः** पर्वतविशेष-पर्वतांऽसदेश[1]-वाटिकासु । **मलया** त्रिवृता । **जत्रुणी**–स्कन्धसन्धी । '**रुरुर्दैत्ये**, मृगेऽपि च' ।

**षण्ढ इति** । शण्ढः प्रागुक्तः । कैयटस्तु 'ठस्येक' इतिसूत्रे 'शण्ठ'इति प्रतीकमुपादाय 'जनिदाच्युसृ' इत्यनेन 'ठ' प्रत्यय' इति । **नटः** शैलूषः, अशोकश्च । **नटी** नीलौषधी ।

'**कुसुम्भं** हेमनि, महारजने, ना कमण्डलौ । **कुसुम्भं** स्त्रीरजो-

१ 'पर्वतांऽशदेश' इति क्वचित्पाठः ।

नेत्ररोगयोः, फल-पुष्पयोः'। '**कुसीदं** वृद्धिजीवनम्'। 'वृद्धिजीवे **कुसीदकः**'। बाहुलकात्कुसेरिदप्रत्यये कुसिदमपि। **वृञ** इति। बाहुलकात् धृञोऽपि। तेन **धर्णसिः** लोकपालः। '**तण्डुलः** स्याद्विडङ्गे च, धान्यादिनिकरे पुमान्'। **चषालः**। चित्पाठस्तु लक्ष्यविसंवादी। 'चषालं येऽश्वयूपाय तक्षती'त्यादौ चित्स्वराऽदर्शनात्।

**इल्वल** इति। 'इल स्वप्ने'। अतो वलच्-गुणाऽभावौ। '**इल्वला** तारका-राजभेदे ना दैत्य-मत्स्ययोः'। मृगसमीपस्थतारका इल्वलाः। 'इन्वका' इत्यपि। **अमरे** पाठद्वयस्याऽपि दर्शनात्। पिबतेर्वलच् लुगागमो, ह्रस्वत्वं च-**पल्वलम्**। **इकार** इति। रपरत्वाऽभावो, ण्यप्रत्ययश्चेत्यपि बोध्यम्। **धिष्ण्यं** स्थान-गृह-शक्ति-नक्षत्रा-ऽग्निषु। तत्राऽग्नौ पुमान्।

**शङ्कुनेति**। 'क्लीबं क्ष्वेडपुतोमरे। मदनद्रु-श्वाविधोर्ना'। **मूलं** शिफाऽऽद्यमूल-वित्ता-ऽन्तिकेषु। **अम्ब्लो रस इति**। **अम्ब्ली** चाङ्गेरिका। '**माया** स्याच्छाम्बरी-बुद्ध्योर्मायः पीताम्बरेऽसुरे'। '**छाया** स्यादातपाऽभावे, प्रतिबिम्बा-ऽर्कयोषितोः। पालनो-त्कोचयोः कान्ति-सच्छोभा-पङ्क्तिषु स्त्रियाम्'। 'वृक्षादीनां फलं सस्यम्'[1]। **वामयोरिति**। प्रतीपे च।

**जन्यं युद्धमिति**। हट्ट-परीवादयोश्च। **जन्या** मातृवयस्या। **जन्यो** जनकः। नवोढा-ज्ञातिभृत्ययोश्च। वरेण सह ये विवाहे गच्छन्ति तयोरित्यर्थः। कार्यकारणयोश्चाऽयं त्रिषु। **जन्यो** वरस्निग्धे च।

**अघ्न्यादयश्च**। 'कौतेर्डुक् यक् च। कुड्यम्। 'यतोऽनाव' इत्याद्युदात्त' इति तु चिन्त्यम्। 'यगन्ता निपात्यन्ते' इत्युक्तेः। **अघ्न्या माहेयीति**। गौरित्यर्थः। **अघ्न्यः** प्रजापतिः, पर्वतश्च। संपूर्वाद्धाञो यक्। आतो लोपः।'**सन्ध्या** पितृप्रसू-नद्योश्चिन्तामर्यादयोरपि। प्रतिज्ञायां च, सन्धाने, सन्ध्यायां, कुसुमाऽन्तरे'। '**सन्ध्या** च युगसन्धिषु'। '**कन्या** कुमारिका-नार्योरोषधी-राशिभेदयोः'। वन्ध्योऽफलः। **वन्ध्या** अप्रजा। '**पर्व** क्लीबं महे,

---

१ 'सस्यः' इति क. पाठः।

ग्रन्थौ, प्रस्तावे, लक्षणाऽन्तरे। दर्शप्रतिपदोः सन्धौ, विषुवत्प्रभृतिष्वपि'। **अङ्गुलिरिति**। '**शक्करी-छन्दसो भेदे, नदी-मेखलयोरपि**'।

**प्रेत्वरीति**। 'यदागमा' इतिन्यायेन वन्ग्रहणेन तुड्विशिष्टस्य ग्रहणात् ङीप्-रौ। न च हशन्ताद्विहितत्वेन 'वनो न हश' इति निषेधाऽऽपत्तिः। 'कथं चाऽत्र तुक्, छान्दसत्वादि'ति 'वनो र चे'ति सूत्रभाष्येणाऽस्य च्छान्दसत्वबोधनेन, तत एव ङीप्सिद्धेः।[1] 'प्र ईरशदोस्तुट् चे'त्युणादिसूत्रम् अनपेक्ष्येदमि'ति कैयटः। तुक्-तुटोर्विशेषाऽभावात् अत्र 'तुड् वे'त्येव पठितम्। '**यतिः स्त्री पाठविच्छेदे, निकार-यतिनोः पुमान्**'।

'**कोटिः स्त्री धनुषोऽग्रेऽश्रौ, सङ्ख्याभेद-प्रकर्षयोः। बोधिः समाधिभेदा-ऽश्वत्थयोः। नन्दिर्द्यूताऽङ्गे, आनन्दे, नन्दिकेश्वरे च। 'कलिः स्त्री** कलिकायां ना शूराऽऽजि-कलहे, युगे'।

**हृपिषि**। इगुपधानां कित्त्वे,[2] हृ-कीर्त्योः 'अच इरि'ति च प्राप्ते वचनम्। **हरिरिति**। शुक-हरा-ऽजा-ऽंशु-लोकाऽन्तरेषु च। पिङ्ग-हरितोस्त्रिलिङ्गो हरिः। '**वर्त्तिर्भेपजनिर्माणे, नयनाऽञ्जन-लेखयोः। गात्राऽनुलेपनी-दीपदशा-दीपेषु योषिति**'। **वेदिः** पण्डितः। **स्त्रियामङ्गुलिमुद्रा-परिष्कृतभूतलयोः**।

**कीर्त्तिः** प्रसाद-यशोविकार-कर्दमेषु। **कृषिरिति**। आद्युदात्तः। 'इक् कृष्यादिभ्य' इतीगन्तोऽन्तोदात्तोऽपि। 'तित्ति'शब्दं रातीति 'तित्तिरि-रि'त्यपि कृष्यादित्वादेव सिद्धम्। '**तित्तिरिः** पक्षिणि, मुनौ'। 'तरतेर्द्वित्वं तुक्चाऽभ्यासस्ये'ति 'प्राणिरजतादिभ्य' इति सूत्रे **हरदत्तः**।

**ऋषिर्वेद-वसिष्ठादि-किरणेषु**। '**शुचिर्ग्रीष्मा-ऽग्नि-शृङ्गारेष्वाषाढे, शुद्धमन्त्रिणि**'। **भृमिर्वात इति**। दारिद्र्येण भ्रमणशीलोऽपि। **सम्प्र-सारणेति**। तथा च 'पारतं पारदं, वास्रो वासरः, कृमिवत् क्रिमिः'। कीट-लाक्षा-कृमिल-खरेषु चाऽयम्। **मेचकः** कृष्णः। **शितिर्भूर्जेऽपि**।

---

१ 'तत एव तदप्रवृत्तेः ( = निषेधाऽप्रवृत्तेः) इति तु लघुशेखरपाठः।

२ 'इगुपधात्किदि'ति ( ५५९ उणादि ) सूत्रेण किति इकारे इत्यर्थः।

'**मुनिः** पुंसि वसिष्ठादौ, वङ्गसेनतरौ, जिने' । **वङ्गसेनतरुः**–अगस्तिवृक्षः ।

**वर्णिः सौत्र इति** । 'ण्यन्तस्य वर्णेः समुदायस्य बलिरादेश' इत्यपि शक्यं वक्तुम् । **मूलन्तु उज्ज्वलदत्ताद्यनुसारेण** । वस्तुतो 'बल प्राणने' इत्यस्य बलौ सिद्धे, वर्णेरादेशविधानं व्यर्थम् । **बलिर्दैत्य-राजकरो-पदा-चामरदण्डेपु** । जरया श्लथचर्मणि स्त्री । गृहदारुप्रभेदे च, जठरा-ऽवयवे च 'बलिः' । '**राजिः** स्त्री पङ्क्ति-रेखयोः' ।

**वाशिरग्निरिति** । छेदनसाधनं च । दन्त्याऽन्तोऽप्ययम् । सूत्रे 'वादी'ति ण्यन्तो निर्दिष्टः । बाहुलकात् अण्यन्तादपि । एतच्च भूवादिसूत्रे **आकरे** । '**वारिर्वाग्**-गजबन्धन्योः स्त्री, क्लीबेऽम्बुनि बालके' । '**वारिर्घटी**-सरस्वत्योर्वारि ह्रीबेर-नीरयोः' । 'कृदिकारादि'ति ङीषि **वारी** । '**हारिः** पथिकसन्ताने, द्यूतादिभङ्ग-गजबन्धयोः (स्त्रियाम्)'। एवं 'खाटिः'। 'खाटि-स्त्वसद्ग्रहेऽपि स्यात्किणे, शवरथे स्त्रियाम्' । '**नाभिर्मुख्यनृपे**, चक्रमध्य-क्षत्रिययोः पुमान् ।द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे' ।

'**शारिर्नाऽक्षोपकरणे**, स्त्रियां शकुनिकाऽन्तरे । युद्धाऽर्थगजपर्याणे, व्यवहाराऽन्तरेऽपि च' । कपिलकादित्वाल्लत्वे **शालिः** कलमादौ, गन्ध-मार्जारे च । **कारिः** शिल्पी, क्रिया च ।

**जनिरिति** । ङीषि-'**जनी** सीमन्तिनी-वध्वोरुत्पत्तावोपधीभिदि' । **केचित्तु** 'घसि'स्थाने सहिं, वदिं वा पठन्ति । **पादे च** । पादे उपपदे-अज्यतिभ्यामिण् । 'पादस्य पदाजी'ति पदादेशः । अत एव निर्देशादजेः वी न । '**राशिर्मेषादि**-पुञ्जयोः । **वस्त्रग्रन्थाविति** । 'स्त्रीकटीवस्त्रग्रन्था-वि'त्यर्थः । 'स चे'ति व्याचष्टे – **स इत्यादेश इति** । **अश्रीति** । 'चतुरस्र-मि'ति 'तु अस्रः कोणे, कचे पुंसि, क्लीबमश्रुणि, शोणिते' इति कोश-सिद्धाऽस्रशब्देन विग्रहे बोध्यम् । **कविर्वाल्मीकि**-शुक्र-पण्डित-काव्य-कृत्सु पुमान् । खलीने स्त्रियाम् । **खनिः** स्त्रियामाकरे । ण्यन्तात् 'अच

---

१ हारिः = 'हार' 'पराजय' इति भाषायाम् । २ 'स्त्रियाम्' इति क. नास्ति ।

इः' इति 'इ'प्रत्यये **खानिरपि**। '**ग्रन्थिस्तु** ग्रन्थिपर्णे ना बन्धे, रुग्भेद-पर्वणोः'। **वर्त्तिरिति**। अयं लोकेऽपि। 'हृपिषी'त्यनेन इना आद्युदात्तस्य सिद्धत्वेऽपि, अन्तोदात्तार्थमिदम्।

**किरिर्वराह इति**। 'इगुपधे'ति के **किरोऽपि**। '**कुटिः** कोटे पुमानस्त्री घटे, स्त्रीपुंसयोर्गृहे'। '**कुटी** स्यात्कुम्भदास्यां च, सुरायां, चित्रगुच्छके'।

**कपिः** सिह्लक-वानर-विष्णुषु। '**कर्म** व्याप्ये, क्रियायां च'। '**चर्म** कृत्तौ च, फलके'। '**ब्रह्म** तत्त्वं, तपो, वेदे न द्वयोः, पुंसि वेधसि। ऋत्विग्योगभिदोर्विप्रे' इति। **अश्मेति**। भाषायामप्ययम्। '**छन्दसी**'ति शकिनैवाऽन्वेतीत्याहुः।

**हरिमेति**। 'हरिमाणं च नाशये'ति प्रयोगः। '**हृभृधृसृ**' '**जनिमृङ्भ्यामि**'तिसूत्रयोश्छन्दसीति वर्त्तते। तदुत्तरसूत्रे 'सर्वत्र'ग्रहणात्। बाहुलकादेभ्यः, सूधातोश्च[1] ईमनिन्, दीर्घादिर्निच्च। अत एव 'पिपृतां नो भरीमभिरि'त्यादिवैदिकप्रयोगाः सङ्गच्छन्ते। 'म्ना'धातोर्मनिनि धातोर्मलोपे **नाम**। **सीमेति**। 'सीम-सीमे स्त्रियामुभे'। पिबतेः पुगागमे **पाप्मा**। बाहुलकात् यक्षेर्**यक्ष्मा** राजरोगः। सूतेः **सोमा** चन्द्रः। धाञो '**धाम** देहे गृहे रश्मौ स्थाने जन्म-प्रभावयोः'[2]। '**साम** क्लीबमुपायस्य भेदे, वेदाऽन्तरेऽपि च'। '**आत्मा** पुंसि स्वभावेऽपि, प्रयत्न-मनसोरपि। धृतावपि, मनीषायां, शरीर-ब्रह्मणोरपि'। **कवरः** पाठकः। वबयोरैक्यात्**कबरी** केशविन्यासः। अन्यत्र **कबरा**। '**अस्त्रं** प्रहरणे, चापे, करवाले नपुंसकम्। '**पत्रं** तु वाहने, पर्णे स्यात्पक्षे शर-पक्षिणोः'। पिबतेः **पात्रम्**।' '**पात्र्यमत्रे** त्रिपु, क्लीबं स्रुवादौ, राजमन्त्रिणि। तीरद्वयाऽन्तरे, योग्ये'। **वैष्ट्रं**-विष्टपम्।

**सिविमुच्योः**। सूत्रिमूत्रिभ्यां ण्यन्ताभ्यामेरचा सिद्धे स्वरार्थमिदम्। न च घञा सिद्धिः। अचा घञो बाधात्। '**सूत्रन्तु** सूचनाग्रन्थे, सूत्रं

---

१ 'सृधातोश्च' इति पाठान्तरम्।

२ 'धाम रश्मौ गृहे देहे' इति पाठान्तरम्।

तन्तु-व्यवस्थयोः' । आन्त्रे 'अनुनासिकस्य क्वी'ति दीर्घः । '**चित्राऽऽखुपर्णी-गोतुम्बा-सुभद्रा-दन्तिकासु च । मायायां सर्प-नक्षत्र-नदीभेदेषु च स्त्रियाम् । तिलका-ऽऽलेख्ययोः क्लीबं, कर्बुरा-ऽद्भुतयोरपि**' । तद्युक्तयोः त्रिलिङ्गम् । **मित्रं**-सुहृत् । **मित्रः**-सूर्यः । '**शस्त्रं** लोहा-ऽस्त्रयोः क्लीबं, छुरिकायां च योषिति' । पुनातीति **पुत्रः** । ह्रस्वः । पुतो नरकात्त्रायते इति व्युत्पत्त्यन्तरम् । **स्त्रीति** । डित्त्वाट्टिलोपः । वलि लोपः । टित्त्वान्ङीप् । '**गोत्रा** भू-गव्ययोर्**गोत्रः** शैले, **गोत्रं** कुला-ऽऽख्ययोः । सम्भावनीय-बोधे च कानन-क्षेत्र-वर्त्मसु' । **गव्यं** गोसङ्घः । '**सत्रमाच्छादने, यज्ञे,** सदादाने च, कैतवे' । अरण्ये च ।

**होत्रं**-हविः । **होत्रा** स्त्रियां ऋत्विक्षु । '**यात्रा तु** यातनेऽपि स्याद्गमनोत्सवयोः **स्त्रियाम्**' । '**मात्रा** कर्णविभूषायां, वित्ते, माने, परिच्छदे । अक्षराऽवयवे, स्वल्पे, क्लीबं कार्त्स्न्येऽवधारणे' । '**भस्त्रा** चर्मप्रसेविका' । '**गात्र**-मङ्गे, कलेवरे । स्तम्बेरमाऽग्रजङ्घादिविभागेऽपि' । **धरित्री** । गौरादित्वात् ङीष् । 'अमेरि'त्यत्र इत्र एवाऽनुवर्त्तते । **आः समिणिति**[1] । बाहुलकात् दुषेः-**दोषा** । दिवेर्गुणाऽभावश्च-**दिवा** । स्वदेर्धः । **स्वधे**त्यादि । **सूक्ष्ममिति** । णिलोपे कुत्वादि । '**सूक्ष्मं** स्यात्कण्टकेऽध्यात्मे, पुंस्यणौ, त्रिपु चाऽल्पके' ।

**पातेर्डुमिति** । 'सूतेः सस्य पः । ह्रस्वः क्सुन्प्रत्यय' इति भाष्ये । '**भुजिष्यस्तु**[2] स्वतन्त्रे च हस्तसूत्रक-दासयोः । स्त्रियां दासी-गणिकयोः' ।

'**अगस्तिः** कुम्भयोनौ च, वृक्षे च' । ( अगस्तिशब्दे[3] 'क्तिच्क्तौ चे'ति क्तिजि'त्यन्ये ) । एतत्समानार्थोऽगस्त्यशब्दोऽपि । द्वयोरप्यपत्ये ऋष्यणि यकाररहितम् 'आगस्त' इत्याद्यस्य । 'आगस्त्य' इति द्वितीयस्य । आद्यस्य बहुत्वे 'आगस्ता' इति । द्वितीयस्य 'अगस्तयः' । 'आगस्त्यकौण्डी'त्यगस्त्या-

१ 'आः समिण' इति पाठः सर्वत्र ।

२ 'भुजिष्यस्त्वस्वतन्त्रे च' इति पाठः स्यात् ।

३ क. कुण्डलितः पाठोऽयम् ।

देशः। अगं स्त्यायतीत्यातोऽनुपसर्गे इति क इत्याहुः। अङ्गुष्ठे सकनिष्ठे **वितस्तिः**। '**दृतिश्चर्मपुटे, मत्स्ये**'। '**किरीटं मुकुटे न स्त्री**'। '**कृपीट**-मुदरे, नीरे'। '**तिरीटः** कूलवृक्षेऽपि'। '**उचितं** तु भवेन्न्यस्ते, मिते, जाते, समञ्जसे'। **कुड्मलो** मुकुल-नरकभेदयोः। **कुष्मलं** छादनम्। **सर इति**। गौरादित्वान्ङीषि **सरसी** महत्सरः।

**वर्चे**र्वर्चः रूप-विष्ठा-तेजस्सु। पुंसि चन्द्रस्य पुत्रे। एवं 'नभं तु नभसा सार्द्धं, तपं तु तपसा सह। सहं च सहसा सार्धं, महं च महसा सह। तमेन च तमः प्रोक्तं, रजेनापि रजः समम्'। अत्र नभादयोऽसुनि सान्ताः। अच्-कयोरदन्ताः। **तपो** लोकभेदे, चान्द्रायणादिषु। शिशिर-माघयोस्तपाः पुमान्। '**सहो** बले, ज्योतिषि च, पुंसि हेमन्त-मार्गयोः'। '**मह** उत्सव-तेजसोः'। '**तमः** क्लीबं गुणे, शोके, राहावन्धकारे च। **रुदे रोदः**। '**रोदश्च रोदसी** चाऽपि दिवि भूमौ पृथक्पृथक्। सहप्रयोगोऽप्यनयो रोदस्यावपि रोदसी'। 'वी'त्यस्य **वयः**। '**वयः** पक्षिणि, बाल्यादौ, यौवने च नपुंसकम्'। अने**रनः**। अनो भक्तं, तत्स्थानं च। '**ओजो** दीप्तावष्टम्भे, प्रकाश-बलयोरपि'।

**शिरसी इति**। शृणातेर्घञर्थे के 'शिर'इत्यदन्तोऽपि। 'निचकर्त्त शिरान् द्रौणिरि'ति प्रयोगः। '**उरो** वत्सं च वक्षश्च'।

**चन इति**। 'चण' इति तु लक्ष्यविसंवादि। एवं 'रेक्ण' इत्यस्य स्थाने 'रेक' इति साधयन्तोऽपि लक्ष्यविसंवादिनः।

**शेपो गुह्यमिति**। 'शेपः स्याद्वृषणं, पेलम्'। '**शेप**' इत्यदन्तोऽपि। '**स्रोतो**ऽम्बुवेगे-न्द्रिययोः'। '**रेतः** शुक्रे, पारदे च'। **पाज इति**। तथा च मन्त्रः–'पृथुपाजा अमर्त्यमि'ति। **आपः कर्मे**ति। धातोर्ह्रस्वः, नुट् तु प्रत्ययस्य वा बोध्यः। '**नभो** व्योम्नि, नभो मेघे, श्रावणे च, पतद्ग्रहे। घ्राणे, मृणालसूत्रे च, वर्षासु च नभाः स्मृतः'। **पतद्ग्रहो** भाषया 'पिकदानी'-

१ 'पिकदानी' इति ह्रस्वेकारघटित एव सर्वत्र पाठः।

ति प्रसिद्धम् । अदन्तोऽप्ययम् । **अंहो** दुरितम् । **रंहो** वेगः । अहि-रहि-भ्याम् असुना सिद्धे, इदं च वचनद्वयं नियमाऽर्थम् 'अकार-रेफादिभ्यश्चेत् अमि-रह्योरेवे'ति । तेन अंघि-रंघि-अणि-रणिप्रभृतिभ्यो ने'ति । तन्न । 'अमः' 'रम' इति प्रयोगवारणाय सूत्रस्याऽऽवश्यकत्वात् । एवञ्च 'अङ्घः' 'रङ्घ' इत्यपि साध्वेव । 'रहस्तत्त्वे, रते, गुह्ये' । उच्चेरसुनि कुत्वे **ओकः** । 'ओक आश्रयमात्रेऽपि, मन्दिरेऽपि नपुंसकम्' ।

**भूरञ्जिभ्याम्** । 'शृ-रञ्जिभ्यामि'ति पाठ' इत्यनिदितामिति सूत्रे **हरदत्तः** । 'पू-रञ्जिभ्यामि'ति **कैयटः** ।

**भुवः**–अन्तरिक्षम् । 'षष्ठ्यन्तप्रतिरूपकमव्ययमि'त्यन्ये । **रजो** रेणु-गुणयोः । 'आर्त्तवे च, परागे च, रेणुमात्रे च दृश्यते' । घञर्थ-के अद-न्तोऽपि । 'छन्दः पद्यप्रभेदेऽपि, स्वैराऽऽचारा-ऽभिलाषयोः' । अदन्तोऽपि । **पक्षश्छदिः**, संवत्सराऽर्द्धं चे'ति **माधवः** । **प्राञ्च इति** । अत्राऽरुचिस्तु नैते प्रयोगा लोके दृश्यन्ते । 'छन्दसी'त्यधिकाराच्च । वेदे तु विपरीतमेव दृश्यते इत्याह—**वस्त्विति** । **मिथुनेऽसिः** । 'सुपयाः' 'सुस्रोता' इत्युदाह-रणम । 'मिथुने' इत्यस्य 'धातूपपदयोगे' इत्यर्थः । 'उरुव्यचा' इत्यपि अस्यैवोदाहरणमिति 'ग्रहिज्ये'तिसूत्रस्थ-कैयट-स्वरसः । **'वेधाः** पुंसि हृषीकेशे, बुधे च, परमेष्ठिनि' । **नोधा** ऋषिः । 'नवं दधाती'ति **नैरुक्ताः** ।

**गतिकारकेति** । कृदुत्तरपदप्रकृतिस्वराऽपवादोऽयम् । **चन्द्रे मो** । 'चन्द्रं = रजतम्, अमृतं वा, तदिव मीयते, 'चन्द्र' इति वा मीयते इति चन्द्रमाः' इति दासीभारादिव्युत्पादने **हरदत्तः** । **दीर्घ इति** । बाहुलका-त्तदभावे 'पुरुरवा' अपि । **पुरूरवा** बुधसुतो, राजर्षिः ।

**शिच्चेति** । शित्त्वेन सार्वधातुकत्वात्ख्याञ् न । **उषः कित्** । 'वसः किदि'ति पाठः 'अपो भी'त्यत्र **हरदत्तादिग्रन्थे** । **दमुनाः शुक्र इति** ।

---

१ 'अणिरणिप्रभृतिभ्यो मा भूदिति' इति ख. ङ. पाठः ।

२ 'पु' इति 'यु' इति वा ह्रस्वान्तपाठ एव सर्वत्र दृश्यते ।

'अन्येषामपी'ति दीर्घे 'दमूना' अपि । **प्रायेणेति**। तेन 'अप्सराः' इत्येकवचनाऽन्तमपि । ध्वनितं चेदं वर्णद्वित्वप्रकरणे भाष्ये ।

**विश्ववेदा इति**। 'विश्वं वेत्ति, विन्दति = भुङ्क्ते' इति विग्रहः । यत्तु 'विश्वेवेदाः, 'विश्वेभोजा' इत्युदाहृत्य 'सप्तम्या अलुगि'त्युक्तम् । तन्न । स्मिन्नादेशप्रसङ्गात् । वेदे सुपूलुक एव दर्शनाच्च । **विश्ववेदा**-अग्निः । **विश्वभोजा** इन्द्रः । **उशना** भार्गवः ।

इति उणादिषु चतुर्थः पादः ॥

## अथ उणादिषु पञ्चमः पादः ।

**अदीति**। 'अत्' इत्यव्यये आकस्मिकाऽर्थे उपपदे'इत्यर्थः । '**गोधूमो** नागरङ्गे स्यादोषधि-व्रीहिभेदयोः' । **मनुष्य इति** । स्थिरश्च । **तण्डुला इति**। 'सानसिधर्णसी'त्यत्र व्युत्पादितस्तण्डुलशब्दो मध्योदात्तः । अयन्तु अन्तोदात्तः । **न आदिति** । 'नकारस्ये'त्यर्थः । 'दासः शूद्रे, दानपात्रे, भृत्य-धीवरयोरपि' । **पुण्यं** सुन्दर-सुकृत-धर्मेषु । '**मुखं** निस्सरणे, वक्त्रे, प्रारम्भो-पाययोरपि । सन्ध्यन्तरे नाटकाऽऽदेः, शब्देऽपि च नपुंसकम्' । **निःसरणे** = ग्रामादेर्निस्सरणमार्गे। अंसः स्कन्धो, विभागश्च। अंशोऽप्यत्र। '**नखः** कररुहे, शण्डे[1], गन्धद्रव्ये नखं, नखी' । **नखी** शुक्तिश्च ।

शीङो । अत्र 'डित्खनेरि'त्यत 'उदात्त'ग्रहणमनुवर्त्तते । तच्च शीङो विशेषणम् । तेन आद्युदात्तोऽयम् । ह्रस्वविधिसामर्थ्यात् गुणो न । '**शिखा** शाखा, बर्हिचूडा, लाङ्गलिक्य-प्रमात्रके । चूडामात्रे, शिफायां च, ज्वालायां, प्रपदेऽपि च' । **मयूख**स्त्विट्-कर-ज्वालासु । '**पार्श्वं** कक्षाऽधरे, चक्रोपान्ते, पशुगणेऽपि च' । पुरुषमुखस्थरोमवृद्धौ **श्मश्रु** । **लोप इति** । 'अलो-

1 'शण्ठे' 'षण्डे' 'षण्ढे' 'शण्डे' इति पाठाऽन्तरम् ।

ऽन्त्यस्य'। 'जटा लग्नकचे, मूले, मांस्यां, प्लक्षे पुनर्जटी'। (हन्तेर्जङ्घेत्यन्ये)।

द्वे चेति। अभ्यासकार्यमपि बोध्यम्। जघनं स्त्रियाः श्रोणिपुरोभागे, कटावपि। केशः स्यात्पुंसि वरुणे, ह्रीबेरे, कुन्तलेऽपि च'। 'पलितं शैलजे, तापे[2], केशपाके च, कर्दमे'। 'करकस्तु पुमान् पक्षिविशेषे, दाडिमेऽपि च। द्वयोर्मेघोपले, न स्त्री करङ्के च, कमण्डलौ'। नरको निरयो, देवाऽरातिभेदश्च। नरकस्य क्लीबत्वं चिन्त्यम्। 'सरकोऽस्त्री सीधुपात्रे, शीधुपाने-क्षुशीधुनोः'। 'कोरकोऽस्त्री कुड्मले स्यात्कक्कोलक-मृणालयोः'। अपवरकादयोऽपीहैव बोध्याः। 'कीचको दैत्यभिद्-वाताऽऽहतसस्वनवंशयोः'। 'पेचको गजलाङ्गूलमूलोपाऽन्ते च, कौशिके'। 'मेचकस्तु मयूरस्य चन्द्रके, श्यामले पुमान्'। तद्युक्ते वाच्यवत्स्रोतोऽञ्जनाऽन्धकारयोः क्लीबम्। जठरं कुक्षौ, कठिणे[3] च। जठरो न स्त्रियाम्। 'वठरः कुक्कुटे, वण्ठे'। हिरण्यं तेजसि, द्रव्ये, शातकुम्भ-वराटयोः। अक्षये, मानभेदे स्यादकुप्ये च नपुंसकम्'।

जनेः। जनेस्तुप्रत्ययो, रेफश्चाऽन्तादेशः। 'ऊर्णा मेषादिलोम्नि स्यादावर्त्ते चाऽन्तरा भ्रुवोः'। धान्यं व्रीहि-धान्याकयोः। तितउश्चालनी। तितउ क्लीबमपि। 'अर्भकः कथितो बाले, मूर्खेऽपि च, कृशेऽपि च'। 'पृथुकः पुंसि चिपिटे, शिशौ स्यादभिधेयवत्'। 'पाकः परिणतौ, शिशौ। केशस्य जरसा शौक्ल्ये, स्थाल्यादौ पचनेऽपि च'। अर्वा तुरग-कुत्सितयोः। रेफो रवर्णे, कुत्सिते च। 'लिप्तं विषाऽक्ते, भुक्ते च, वाच्यवत्स्याद्विलेपिते'। 'कीनाशः कर्षक-क्षुद्रो-पांशुघाति-यमेषु च'। ईश्वर इति। टित्त्वान्ङीपि ईश्वरी मध्योदात्ता। वनिबन्ते ङीब्रयोराद्युदात्ता। पुंयोगङीषि अन्तोदात्ता। वरजन्ताट्टापि-ईश्वरा। 'ईश्वरो मन्मथे, शम्भौ, पतौ, स्वामिनि

---

१ अयं पाठः क. नास्ति।

२ 'ताप्ये' इति पाठान्तरम्।

३ 'कठिने' इति ख. ङ. पाठः।

वाच्यवत्'। 'तत्पत्न्यामीश्वरीश्वरा'[1] । बाहुलकात् हन्तेरन्, घश्च। घरो गृहम्।

'नगो महीरुहे, शैले, भास्करे, पवनाऽशने'। 'सिंहः कण्ठीरवे, राशौ, सत्तमे चोत्तरस्थितः। 'सिंही क्षुद्रबृहत्योः स्याद्वासके, राहुमातरि'। 'व्याघ्रः स्यात्पुंसि शार्दूले, रक्तैरण्ड-करञ्जयोः। श्रेष्ठे नराद्युत्तरस्थः, कण्टकार्यां च योषिति'। घोरं भीमे। हरे च घोर। 'प्रथमस्तु भवेदादौ, प्रधानेऽपि च वाच्यवत्'। 'मङ्गला सितदूर्वायामुमायां, पुंसि भूमिजे। नपुंसके तु कल्याणे, सर्वाऽर्थरक्षणेऽपि च'। भावे ष्यञि माङ्गल्यम्। 'तत्र साधुरि'ति यति-'मङ्गल्यं स्यात्त्रायमाणा-ऽश्वत्थ-बिल्व-मसूरके। स्त्रियां शम्यामधःपुष्पी-मसि-शुक्लवचासु च। रोचनायामथो दध्नि क्लीबं, शिवकरे त्रिषु'। इति सर्वेष्टसिद्धिः।

इति उणादिषु पञ्चमः पादः॥



१ 'ईश्वरः शङ्करेऽधीशे, तत्पत्न्यामीश्वरीश्वरा' इति बोपालितकोशस्य एकदेशोऽयम्।

# अथ उत्तरकृदन्तप्रकरणम् ।

**उणादयो** । 'वर्त्तमाने लडि'त्यतो 'वर्त्तमाने' इति, 'पुवः संज्ञाया-मि'त्यतः संज्ञाग्रहणं चाऽनुवर्त्तते । तदाह—**एते इति** । 'बहुल'ग्रहणफल-माह—**केचिदिति** । यथा हृषेरुलच् उक्तः शङ्केरपि ऊह्यते-'शङ्कुले'ति । यथा च फिड-फिड्डौ क्वाऽपि न विहितौ, अर्त्तेरुह्येते-'ऋफिड' 'ऋफिड्ड' इति ।

**संज्ञास्विति** । अनादिप्रयुक्तास्वित्यर्थः । **कार्यात्** = गुणनिषेधादिकात् । यथा फिडादेः कित्त्वम् । '**अनूबन्धमि**'त्यत्र 'उपसर्गस्य घञी'ति दीर्घः । एतदुणादिषु **शास्त्रम्** = शासितव्यम् । एतेन 'उणादय' इत्येव सूत्रमस्तु । 'यत्र विहितास्ततोऽन्यत्राऽपी'त्यर्थेन शङ्कुलादेः सिद्धिरि'ति परास्तम् ।

अत्र उणादिशब्देन पूर्वोक्तपञ्चपाद्युक्ता एव, नाऽष्टाध्यायीस्थाः[1] । तथा सति 'कृत्यल्युट' इति सूत्रे, 'रोगाख्यायामि'त्यत्र च 'बहुल'ग्रहण-वैयर्थ्याऽऽपत्तिः । एवञ्चाऽत्र निर्णीतत्वात् 'ताभ्यामन्यत्रे'त्यत्राऽपि सूत्रे पञ्चपाद्युक्तानामेव ग्रहणम् ।

'बहुल'ग्रहणप्रपञ्चभूतानि सूत्राणि व्याचष्टे-**भूतेऽपीत्यादि** । यद्यपि 'वर्त्तमाने' इति निवर्त्त्य इदं सूत्रद्वयं त्यक्तुं शक्यम् , तथापि 'बाहुल्येन वर्त्तमाने एव, क्वचिदेव त्वनयोरि'त्यर्थबोधनाऽर्थं तदारम्भः ।

**तुमुन्ण्वुलौ** । 'भविष्यती'त्यनुवर्त्तते । 'क्रिया अर्थः = प्रयोजनं यस्याः सा क्रियाऽर्था' । तस्यामित्यर्थः । क्रिया चाऽत्र तिङन्तोपस्थाप्या, कृदन्तो-पस्थाप्या च । 'भोक्तुं पचति' 'भोक्तुं पाक' इत्युभयविधप्रयोगदर्शनात् ।

ननु 'भोजनोद्देश्यकपाकक्रियाऽऽश्रय' इत्यर्थे 'भोक्तुं पाचक' इति दुर्वारमिति चेन्न । क्रियाग्रहणेन इतराऽविशेषणीभूतक्रियावाचकस्यैव ग्रहणात् । अत्र च तस्याः कृदर्थं प्रति गुणत्वं स्पष्टमेव ।

न च 'भोक्तुं पचति, पश्ये'त्यपि न स्यादिति वाच्यम् । अन्तरङ्गत्वेन

---

१ 'नाऽष्टाध्यायीस्था इति प्रपञ्चितमुपदेशेऽजित्यत्र । एवञ्चाऽत्र निर्णीतत्वात्' इति ख. ङ. पाठः ।

पदार्थोपस्थितिकालिकप्राधान्यस्यैव ग्रहणात्। 'उपपदमतिङि'तिसूत्रस्थ-भाष्यस्वरसोऽप्येवमेव। तत्रत्यकैयटस्तु प्रामादिक इति तत्रैव निरूपितम्। 'श्वो भोक्तुं व्रजिष्यति' 'श्वो भोजको व्रजिष्यती'त्यत्र भविष्यति प्रत्ययः। अनद्यतनत्वन्तु 'श्वः'पदमहिम्ना गम्यते। स्पष्टं चेदं पूर्वसूत्रे भाष्यादौ।

अत्र तुमुन्ण्वुलोः कृत्त्वाऽविशेषेऽपि 'अव्ययकृतो भावे' इति वचनात् तुमुन् भावे। अत एव 'तुमर्थे सेसेनि'ति सूत्रे 'तुमुर्थे' इति चरिताऽर्थम्। अत्र च भावोऽसत्त्वभूत एव। अव्ययाऽर्थे लिङ्गाद्यभावेन प्रत्ययाऽर्थे वैलक्षण्याऽननुभवात्। 'भाववचनाश्चे'त्यनेन सत्त्वभूते भावे घञादीना-मेव विधानाच्च। ण्वुल् तु कर्त्तरि। उभयत्राऽपि प्रकृत्यर्थस्योद्देश्यत्वं प्रत्ययद्योत्यम्। प्रकृत्युपपदार्थयोः समानकर्तृक[1]त्वमिह प्रयोगोपाधिः।

तत्र तुमुनप्रकृत्यर्थः उपपदाऽर्थं प्रति विशेषणम्। ण्वुलि—[2]प्रकृत्यर्थो ण्वुलर्थे। स, ( [3]प्रकृत्यर्थश्च ) उपपदाऽर्थं। '[4]सामानाधिकरण्या-द्देश्यत्वे संसर्ग' इत्यन्ये।

**कृष्णं द्रष्टुमिति**। 'कृष्णकर्मकभविष्यद्दर्शनोद्देश्यकं, तत्कर्तृकर्तृकं यानमि'ति, 'कृष्णकर्मकभविष्यद्दर्शनकर्तृकर्तृकं, तद्दर्शनोद्देश्यकं च यान-मि'ति क्रमेण बोधः। ननु 'यावत्पुरे'तिसूत्रम् 'अनद्यतने लङि'त्यत्राऽनु-वर्त्तते' इति 'यावत्पुरे'तिसूत्रे भाष्ये स्पष्टम्। एवञ्च 'तुमुन्ण्वुलौ' इत्यत्रा-ऽपि सम्बन्धाऽऽपत्तौ, यावत्पुरायोगे क्रियार्थायां क्रियायां लडे[5]व स्यादिति चेन्न। 'विभाषा कदाकर्ह्योरि'त्यादौ मध्ये अयोग्यत्वात् विच्छेदस्य आवश्यकत्वेन, मण्डूकप्लुतेरेव न्याय्यत्वेन, अत्राऽप्यसम्बन्धात्। अत एव भाष्ये 'अनद्यतने इत्यत्रे'ति विशिष्योक्तम्। क्रियायां किम्?।

१ 'समानकर्तृकत्वमपीहाऽभिधानबललभ्यः प्रयोगोपाधिः' इति ख.ङ. पाठः।
२ 'ण्वुलि—प्रकृत्यर्थो ण्वुलर्थे। स च (=ण्वुलर्थस्तु, कारकद्वारा) उपपदार्थे' इति क. पाठः। मनोरमायामपि एवमेव पाठः। ३ अयं ख. ङ. पाठः।
४ 'इत्यन्ये' इत्यन्तोऽयं ख. ङ. पाठः। ५ 'लडेव' इति पाठान्तरम्।

'भिक्षिष्ये इत्यस्य जटाः'। इह भिक्षाऽर्था जटाः । परन्तु द्रव्यम्[1]। 'भिक्षितुं जटा' इति तु 'धारयती'त्यध्याहारेण बोध्यम् । क्रियार्थायां किम् ? । 'धावन पतिष्यति' । अत्र धावनक्रिया न पाताऽर्था, तदुद्देश्यत्वाऽभावात्[2] ।

**पुनर्ण्वुलिति** । 'भविष्यदधिकारस्थस्ये'ति व्याख्याने न फलम् 'अकेनोरि'त्यत्रेति तत्रैवोक्तम् । अत्र ण्वुल्करणे तु तत्सामर्थ्यादेव वाऽसरूपाऽप्रवृत्तिरित्याहुः । तेन तृजादयो न । लट् तु सामर्थ्यात्प्रवर्त्तते । 'क्तल्युट्तुमुनखलर्थेषु' इत्यत्र तुमुन तु स्त्र्यधिकारात्परस्थ एव गृह्यते इति 'वाऽसरूप'सूत्रे भाष्ये स्पष्टम् ।

**अक्रियार्थेति** । 'भोक्तुमिच्छती'त्यत्र हि भोजनविषयेच्छा प्रतीयते, न तु भोजनाऽर्था । तदुद्देशेनाऽनुष्ठीयमानत्वं हि तादर्थ्यम् । उद्देशश्च इच्छा । न च भोजनेच्छाऽपि तयैवाऽनुष्ठीयते, आत्माऽऽश्रयादिति भावः । यद्यपि पूर्वतुमुन्वदयमपि शब्दशक्तिस्वाभाव्यात् समानकर्तृकत्वे एव भविष्यतीति, व्यर्थं 'समानकर्त्तृकेषु' इति, तथाऽपि स्पष्टाऽर्थं तत्[3] ।

यत्तु 'इच्छन् करोती'त्यर्थे अनभिधानात्तुमुन् ने'ति । तन्न । तुमुनो भावाऽर्थकत्वेन, 'करोती'त्यस्य कर्त्रर्थकत्वेन, तत्र तस्याऽप्राप्तेः । किञ्च 'करोती'त्यत्र अकर्मकाणामपि[4] भावे ल इतिपक्षे 'इच्छता क्रियते' इत्यत्र च वर्त्तमानत्वं प्रतीयते, तुमुनि तु तत्प्रकृत्यर्थे समभिव्याहृतक्रियाऽपेक्षया भविष्यत्त्वं प्रतीयते, अतोऽपि तदप्राप्तिः । अपि[5] चाऽस्तीति-

---

१ जटा हि द्रव्यं, न तु क्रियेति भावः ।

२ इतोऽग्रे—'प्रत्यासत्तिन्यायाच्च' इति ग. पाठः ।

३ 'तथापि 'इच्छार्थेषु लिङि'त्यादिपूर्वसूत्रे प्रत्यासत्तिन्यायाऽग्रहणज्ञापनार्थं तत्' इति ग. पाठः ।

४ 'अविवक्षितकर्मकाणामपि' इति ख. ग. ङ. पाठः ।

५ 'अपि च' इत्यारभ्य 'मानाऽभावात्' इत्यन्तः ख. ग. ङ. पाठः । क. कुण्डलितः ।

अध्याहारे 'कर्त्तुमिच्छन्नस्ती'त्यर्थे 'इच्छन्कर्त्तुमि'ति प्रयोगो वारयितु-मशक्यः । 'अस्येच्छाप्राधान्ये एव प्रवृत्तिरि'त्यर्थे मानाऽभावात् ।

ननु तुमुन्प्रकृत्यर्थस्य उपपदाऽर्थं प्रति विशेष्यताऽपि स्यादिति चेन्न । आपादकाऽभावात् । अव्ययकृत्प्रकृत्यर्थानां क्रियाऽन्तरं प्रति विशेषणत्वे एव व्युत्पत्तेश्च । इच्छासन्नन्तस्य विग्रहे सर्वत्राऽयमेव तुमुन् । कर्मत्व-समानकर्त्तृकत्वयोरिच्छाप्राधान्यस्य च सन्नन्ते दृष्टस्य इहाऽपि तुल्यत्वात् । वृत्तिसमानाऽर्थकवाक्यस्य न्याय्यत्वात् । अत एव 'पिपठिषती'त्यादेः 'पठनमिच्छती'ति न विग्रहः । समानाऽर्थकस्य लाभेन अन्यग्रहणस्य अनुचितत्वात् । स्पष्टं चेदं सन्विधायके भाष्ये ।

**शकधृष** । इदमपि अक्रियार्थोपपदाऽर्थम् । अत एव 'अयं स्वार्थिक' इति भूवादिसूत्रे **कैयटः** । 'भोक्तुं शक्नोती'त्यादौ भुज्यर्थो विषयतया अन्वेति । प्रावीण्यं च गम्यते । 'ग्लायती'ति अशक्तिः । 'घटते' इति योग्यता । 'आरभते' इति भुजेराद्याऽवस्था । 'लभते' इति अप्रत्या-ख्यानम् । 'अस्ती'ति सम्भवमात्रम् । **अनन्तरत्वादिति** । केषांचित्पर्यायाणां पृथगुपादानात्, द्वयन्तत्वेऽपि पूर्वनिपाताऽकरणाच्चेत्यपि बोध्यम् । अत्र धात्वर्थमात्रं विवक्षितं, न वर्त्तमानत्वादीति प्राप्तिरिति भावः ।

**भाववचनाश्च** । क्रियाऽर्थोपपदे विशेषविहितेन तुमुना स्वविषये घञादीनां बाधे प्राप्ते वचनम् । यद्यप्ययं भावोऽसत्त्वभूतो, घञादि-वाच्यस्तु सत्त्वभूतः, तथापि अस्यैव विषयविभागस्य स्फुटं बोधनायेदम् ।

---

१ 'अपि चाऽस्तीत्यध्याहारस्याऽऽवश्यकत्वेन 'शकधृषे'ति तुमुनो दुर्वारतया, 'कर्त्तुमिच्छन्नस्ती'त्यर्थे' इति ग. पाठः ।

२ इतोऽग्रे—'कालः पचतीति । 'इच्छन् करोती'तिवदस्य वारणं कर्त्तुं शक्य-मिति चिन्त्यम् । प्रैषाद्यनुवृत्त्या तु भाष्ये वारितम्' इति ख. ङ. पाठः ।

३ 'तथापि तक्रकौण्डिन्यन्यायेन क्रियार्थक्रियोपपदविषये च अस्मिन् भावे तुमुनो विधानेन, तद्विषयें सत्त्वभूतभावसम्बन्धस्य बाधः स्यादितीदं वचनम्' इति ग., पाठः ।

**भाववचना इति** । बाहुलकात्कर्मणि ल्युट् । भावाऽधिकारविहिता एव **भाववचनाः** । नच 'वचन'ग्रहणं व्यर्थम्, 'भावे' इत्येतावतैव 'भावे ये विहितास्तेऽत्रापि भवन्ती'त्येव इष्टसिद्धेरिति वाच्यम् । 'याभ्यः प्रकृतिभ्यो, येन विशेषेण, भावे प्रत्यया विहिताः, ताभ्यः, तेनैव विशेषेण, ते भवन्तु' इत्यर्थं तत्सत्त्वात् । तदाह–**भावे इत्यधिकृत्येति** ।

**यागायेति** । यष्टुं यातीत्यर्थः । 'तुमुर्थाच्च भाववचनादि'ति चतुर्थी ।

**अण्कर्मणि च** । चात् 'क्रियाऽर्थायामि'त्याद्याकृष्यते । उपपदसंनियोगश्च क्रियते । उपपदत्वं तु प्रत्येकमेव, प्रत्येकं सप्तमीनिर्देशात्, समुदाये पदत्वाऽभावाच्च । इदं सूत्रं 'ण्वुला अणो बाधा माभूदि'ति । न च वाऽसरूपन्यायेन निर्वाहः । पुनर्ण्वुल्विधानेन एतद्विषये तन्न्यायाऽप्रवृत्तेः । अत एव एतद्विषये तृजचौ न । कृते चाऽस्मिन् वाऽसरूपन्यायेन ण्वुलपि । तदाह–**ण्वुलोऽपवाद इति** । एवञ्च प्रतिप्रसवविधिरयम् । पुनरनुवादेन ज्ञापकसिद्धवाऽसरूपनिषेधाऽप्रवृत्तिमात्रम । अत एव अपूर्वविध्यपेक्षया लाघवम् ।

नन्वेवं 'कम्बलदाय' इत्यादौ अण् न स्यात् । अनेन ण्वुला प्राप्तबाधस्य निवर्त्तनेऽपि, केन बाधस्य दुर्वारत्वादत आह–**परत्वादिति** । न चैवम्

१ 'कर्त्तरि, कर्मणि वा ल्युट्' इति ग. पाठः ।

२ इतोऽग्रे—'तत्र हि अणो ण्वुलबाध्यत्वमात्रविधाने तात्पर्यम् । एवञ्च धर्मिकल्पनाया अभावेनाऽपूर्वविध्यपेक्षया लाघवम् । तत्र ण्वुल्निरूपितबाधकत्वं येननाप्राप्तिन्यायेन, अनन्तरस्येतिन्यायेन च । नन्वेवं 'कम्बलदाय' इत्यादावनेन ण्वुल्निरूपितबाध्यत्वस्याऽणि निवर्त्तनेऽपि, स दुर्लभः, केन बाधादिति चेन्न । 'क'प्रत्ययनिरूपितबाधकत्वबोधकत्वान्न दोषः । अत एव 'तुमुन्ण्वुल्कर्मण्यणः क्रियायामि'त्येव न सूत्रितम् । मम तु कर्ममात्रे प्रवृत्तिबोधनद्वारा, परत्वेन कादिनिरूपितबाधकत्वस्याऽपि बोधनेन, पृथग्गुरुभूतसूत्रकरणस्य चरितार्थ्यं स्पष्टमेवेति दिक्' इति ग. पाठः ।

अपूर्वविधित्वाऽऽपत्तिः। 'वचन'ग्रहणाऽनुवृत्त्या 'लोकप्रसिद्धवाचकत्ववानण् भवती'त्यर्थेनैव कर्मोपपदस्य साधुत्वं सिद्धम्। तादृशस्यैव लोकप्रसिद्धवाचकत्वात्। एवञ्च 'कर्मणी'ति कर्ममात्रे अस्य साधुत्वबोधकं सत्, 'क'प्रत्ययनिरूपितमपि प्रतिप्रसवविधित्वं बोधयतीति स्पष्टं भाष्ये।

**पदरुज**। 'एरच्' इत्यतः प्राक् 'घञ्' इति अधिकारः। अयं कर्त्तरि। तदाह—**पद्यतेऽसाविति**। करणस्याऽत्र कर्त्तृत्वविवक्षा बोध्या।

**स्पर्श इति**। 'रोगविशेष' इत्यर्थः। 'स्पृश उपतापे' इति वार्त्तिकात्। अन्यत्र पचाद्यजेव। स्वरे विशेषः।

**सर्त्तेरिति**। भ्वादेः, ह्लादेश्च ग्रहणम्। **स्थिरे कर्त्तरीति**। 'न तूपपदे' इत्यर्थः। अत एव अर्धर्चादिषु केवल 'सार' शब्दः पठितः।

**व्याधीत्यादि**। अस्थिराऽर्थमिदम्। **विसार इति**। 'विवधं सरती'त्यर्थः। **सारो बलमिति**। अत्र अन्तर्भावितण्यर्थो धातुः। 'सारयति = चेष्टयती'ति व्युत्पत्तेरित्यर्थः। बलवान् हि चेष्टते। भाष्ये तु 'बले' इत्युक्त्वा 'खदिरसार' इत्युदाहृतम्।[1]

**सिद्धावस्थेति**। अत एवाऽस्य 'क्रियामि'ति विशेषणम्। स्पष्टं चेदं 'सार्वधातुके यक्' 'कर्त्तरि कृदि'ति सूत्रयोर्भाष्ये। **इगन्तस्यैवेति**। 'उपसर्गस्य घञी'ति सिद्धे नियमोऽयम्। यत्तु 'काशशब्दस्य पचाद्यजन्तत्वे इदं विध्यर्थमेवे'ति। तन्न। 'घञी'त्यस्याऽत्राऽनुवृत्तेः। एतेन 'उपसर्गस्य घञी'ति सूत्रम् 'इको वहे' इत्यतः पूर्वं पठित्वा, 'इकः काशे' इत्यत्र 'इक'इति न वक्तव्यम्, अनुवृत्त्यैव सिद्धेरि'ति परास्तम्। **अपाणिनीयमिति**। शुद्धात् श्रमेर्घञीति भावः। यदि तु 'मितां ह्रस्व' इत्यत्र 'वे'त्यनुवर्त्त्य व्यवस्थितविभाषया 'धुर्यान्विश्रामयन्नि'त्यत्रेव 'मितां ह्रस्व' इत्यस्याऽप्रवृत्तौ, ण्यन्तादेरच् क्रियते, तदा रूपं सिध्यति, परन्त्वर्थो भिद्यते इत्याशयः। 'निवृत्तप्रेषणात् णिचि तु अर्थभेदोऽपि नास्ति' इत्यन्ये।

---

१ इतोऽग्रे—'खदिरं सारयति = चेष्टयतीत्यर्थः' इति ख. ग. ङ. पाठः।

**अवोद इति** । उन्देः अवपूर्वात् घञ् । 'न'लोपश्च निपात्यते । **एध इति** । इन्धेर्घञि नलोप-गुणौ निपात्येते । अन्यथा 'न धातु' इति प्रतिषेधाऽऽपत्तिः । **ओद्म इति** । उन्देरौणादिको मन् । नलोप-गुणौ ।

**श्रन्थेर्नलोप इति** । 'प्र-हिमा-ऽन्यतरपूर्वस्य घञी'ति शेषः ।

**अकर्त्तरि च** । चकारः 'संज्ञायामि'त्युत्तरं योज्यः । तेन असञ्ज्ञायामपि क्वचित् । तदाह—**प्रायिकमिति** ।

**परिमाणाख्यायाम्** । **परिमाणं**—परिच्छित्तिः । इयत्ता । **आख्या** = उक्तिः । 'प्रत्ययाऽर्थस्य परिच्छित्तेरुक्तौ सत्यामि'त्यर्थः । सा च उदाहरणेषु एकादिशब्दैः स्पष्टैव । **निश्चाय इति** । 'ग्रहवृद्द' इत्यपं बाधित्वा घञ् । 'निःशेषतश्चीयते = राशी[2] क्रियते' इत्यर्थः । 'ग्रहवृद्द' इति सूत्रन्तु अपरिमाणाख्यायां चरितार्थम्[3] । क्वचित्तु 'निचाय' इति पाठः । तत्र एरचोऽपवादः । 'तण्डुल'पदेन कर्मधारयः । अत्र राश्येकत्वेन[4], प्रत्ययाऽर्थस्य समुदायिनः तण्डुलपदार्थस्य एकराशिविषयत्वेन परिच्छित्तिर्गम्यते । निष्पूयते = शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः स 'निष्पावः' । 'शूर्पेण'ति करणतृतीयाऽन्तेन समासः । अत्र शूर्पसङ्ख्यया तण्डुलादेः परिच्छित्तिर्गम्यते । शूर्पद्वित्वं, राश्येकत्वं च आर्थिकं, न तु शाब्दम् । यद्यपि 'निरभ्योरि'ति घञ् सिद्धस्तथापि 'सर्व'ग्रहणबलात् अनेनाऽपि भवितुमर्हतीति भावः । मुख्योदाहरणमाह—**द्वौ काराविति** । 'कॄ विक्षेपे' । कर्मणि घञ् । विक्षिप्तो धान्यादिराशिः 'कारः' । इह प्रकृत्याश्रय एवाऽपवादो

१ 'मन्-'न्'लोप-गुणाः' इति ख. ग. ङ. पाठः ।

२ 'राशित्वं प्राप्यते' इति ख. ङ. पाठः ।

३ इतोऽग्रे—'एवञ्च निश्चायो राशिः । 'तण्डुलानां निश्चाय' इति षष्ठीतत्पुरुषः । 'भावेऽत्र घञित्यन्ये' इति ख. ङ. पाठः ।

४ 'अत्र राशेरेकत्वेन' इति ख. ग. ङ. पाठः । 'अन्नै राश्येकत्वेन' इति क्वचित्पाठः ।

बाध्यते, न त्वर्थाऽऽश्रयः। 'सर्वेभ्य' इति पञ्चमीनिर्देशात्। तेनेह न 'एका तिलोच्छ्रितिः'। भावे क्तिन्। ऊर्ध्वीकृतो राशिरित्यर्थः।

दारजारौ। यद्यपि दारयतेः पचाद्यचाऽपि सिद्धम्, 'कर्षाऽत्वत' इति घञि अपि अन्तोदात्तत्वात्, तथापि 'अच्कावशक्तौ' इति स्वरं वारयितुमिदम्। णिलुक् चेति। लोपे हि तस्य स्थानिवत्त्वात् घञाश्रया वृद्धिर्न स्यात्। णिज्निमित्ता तु न। 'जार'शब्दे 'मितां ह्रस्व' इति ह्रस्वाऽऽपत्तेः। लुकि तु तस्य अपरनिमित्तकत्वात्, 'क्लुगि'ति निषेधाच्च स्थानिवत्त्वाऽप्रवृत्तेर्न दोषः। क्र्यादि'जॄ'धातोर्ण्यन्तात्कर्त्तरि घञि, तस्य अमित्त्वात् णिलोपेनैव सिद्धे, णिलुग्विधानं चिन्त्यप्रयोजनम्। 'एतद्वार्त्तिकभाष्यप्रामाण्यात्तदभावोऽपी'त्यन्ये।

अत्र 'णिलुक् चे'ति भाष्ये प्रत्याख्यातम्। 'कर्त्तरी'त्यस्य स्थाने 'करणे' इति वाच्यम्। 'दीर्यते, जीर्यते यैः करणैरि'त्यर्थे 'पुंसि संज्ञायामि'ति घे प्राप्ते, तदपवादो घञ् अण्यन्तादेव विधेय इति तदाशयः। यत्तु 'अण्यन्तात्करणे घञः सिद्धत्वात् इदं वचनमेव व्यर्थमि'ति। तन्न।

---

'भावे क्तिन्। ऊर्ध्वीकृतो राशिरित्यर्थः। 'यत्तु कर्मणी'ति। तन्न। 'अकर्त्तरिचे'तिसूत्रे पर्युदासेनैव कारकलाभे, पुनस्तद्ग्रहणं 'परिमाणाख्यायामि'त्यस्य कारके एव प्रवृत्तिर्न तु भावे इत्यर्थम्। तेनेह न 'एका तिलोच्छ्रितिः'। 'द्वे प्रसृती'। 'घञनुक्रमणमजब्विषये, अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानमि'तितत्सूत्रस्थवार्त्तिकं न कार्यमि'ति भाष्यविरोधात्। अत्र कर्मणि क्तिनो बाधाय तद्वचनस्याऽऽवश्यकत्वेन भाष्याऽसङ्गतिः स्पष्टैव। तस्मात्परिमाणाख्यायां भावे एव क्तिन्, न कारके, अनभिधानादित्यावश्यकमित्याहुः' इति ख. ङ. पाठः। क. कुण्डलितः।

'कर्मणि, भावे वा क्तिन्। यद्यप्यकर्तरि चेतिसूत्रे पर्युदासेनैव कारकलाभे पुनस्तद्ग्रहणं 'परिमाणाख्यायामि'त्यस्य कारके एव प्रवृत्तिर्न तु भावे इत्येव। तथाप्याख्याग्रहणादिह सङ्ख्यादि गृह्यते इत्याहुः' इति तु ग. पाठः।

'ऋदोरप्' इत्यपो, ल्युट्-घञन्यतरस्य च प्राप्त्या विनावचनं तदसिद्धेः ।

**इङश्च** । अयमपि प्रकृत्याश्रयस्यैव बाधको, न त्वर्थाश्रयस्य क्तिनः । अर्थाऽधिकारात्, 'सर्वेभ्य' इत्यनुवृत्तेश्च, 'घञनुक्रमणमजपोर्विषये' इति-वार्त्तिकाच्च, अपादाने स्त्रियामुपसङ्ख्यानाच्चेति बोध्यम् ।

**उपाध्यायेति** । या स्वयमध्यापयति तस्यामिदम् । पुंयोगे तु ङीपेव । आनुगागमश्च पाक्षिक इत्युक्तम् ।

**शॄ वायुवर्ण** । 'प्रदक्षिण-प्रसव्यगामिनां शाराणामि'ति वार्त्तिक-प्रयोगात् अक्षकरणकद्यूतसाधनेष्वपि शृणातेर्घञ् ।

**नीशार इति** । 'उपसर्गस्य 'घञी'ति दीर्घः ।

**अभिनिसः स्तनः** । 'अभिनिस' इति सङ्घातग्रहणम् । व्याख्यानात् । तदाह—**अस्मादिति** । 'उन्नय' इत्यस्य पर्यायः—**उत्प्रेक्षेति** ।

**निरभ्योः** । अत्र उपसर्गाभ्यां धात्वोर्यथासङ्ख्यम् , अर्थयोस्तु नेति स्पष्टं 'यथासङ्ख्य'सूत्रे भाष्ये ।

**धान्येति** । 'धान्यविषयकविक्षेपाऽर्थप्रतिपादकात् 'कॄ'धातोरि'त्यर्थः ।

**यज्ञे समीति** । 'यज्ञविषयकेऽर्थे वर्त्तमानात्स्तुव' इत्यर्थः । अधिकरणे ल्युटोऽपवादो घञ् । **विस्तार इति** । 'तिर्यगायतिरि'त्यर्थः ।

**छन्दोनाम्नि च** । शब्दविषयत्वात्पूर्वेणाऽप्राप्ते वचनम् । अत्र **केचित्** 'वौ' इति नाऽनुवर्त्तयन्ति । तेन 'प्रस्तारपङ्क्तिरि'त्यादि सिद्धम् ।

**उदि ग्रहः** । अयं घञ् 'ग्रहवृद' इति प्राप्तस्य अपोऽपवादः ।

**समि मुष्टौ** । 'मुष्टिविषयकाऽर्थवृत्तेर्ग्रह' इत्यर्थः ।

**परिन्योः** । 'द्यूताऽभ्रेषविषयकाऽर्थकाद्धातोरि'त्यर्थः । पदार्थानाम् अनपचारो, यथाप्राप्तस्य च करणम् 'अभ्रेषः' ।

**परावनुपा** । 'परेर्नियो द्यूते' 'इणोऽनुपात्यये' 'नावभ्रेषे' इति न्यासः कर्त्तुमुचित इति चिन्त्यम् ।

---

१ इतोऽग्रे 'निगार इति । भक्षणमित्यर्थः' इति ख. ग. ङ. पाठः ।

**व्युपयोः शेतेः**। अनुपाऽत्यये 'पर्याय'शब्दस्य पूर्वसूत्रे व्युत्पादनात्, तदनुवृत्त्यैव सिद्धे, 'पर्याय'पदं पुनर्विधानार्थम्। तेन अभिविधिविवक्षायां परमपि इनुणं बाधित्वा अयमेव घञ्। [1]**राजोपशाय इति**। 'राजसमीपे समन्तात् शयनस्य पर्याय' इत्यर्थ इत्याहुः।

**हस्तादाने**। 'निश्रे: अयमेव वक्ष्यमाणाऽपः[2] पूर्वविप्रतिषेधेन इष्यते' इति तत्र भाष्ये ध्वनितम्। **काशी निकाय इति**। काशी[3] निवासदेश इत्यर्थः। **आकायमिति**। श्रुतिरियम्। 'आचीयन्तेऽस्मिन् इष्टका, अग्निर्वा इति आकायम्, अग्निम् = अग्न्याधारस्थलं, चिन्वीत = चयनेन निष्पादयेदि'त्यर्थः। **गोमयनिकाये**—भावे घञ्।

**सङ्घे चा**। उत्तरे च अधरे च—उत्तराऽधराः। तेषां भाव **औत्तराधर्यम्**। **सूकरेति**। स्तनपानाय यदा उत्तराऽधरभावेन सूकराः शेरते, तदेदं प्रत्युदाहरणम्। यदा तु भिक्षुकवत् पृथगेवाऽवतिष्ठन्ते, तदा अत्रापि भवत्येव घञ्।

**कर्मव्यतिहारे**। 'अत्र वर्त्तमानाद्धातोरि'त्यर्थः। **भावे इति**। कर्तृभिन्नकारके तु न। अनभिधानादिति भावः।

**व्यावक्रोशीति**। कृद्ग्रहणपरिभाषया सोपसर्गादञ्[4]। तद्धितत्वात् आदिवृद्धिः। 'न य्वाभ्यामि'ति तु 'न कर्मव्यतिहारे'इति निषिद्धम्। ननु 'क्तिन' प्रकरणे एवेदं कार्यम्, किं'स्त्रियामि'त्यनेनेति चेन्न। वाऽसरूपविधि-

---

१ 'राजोपशाय इति। राजसमीपशयनस्य पर्याय इत्यर्थः' इति ख. ङ. ग. पाठः।

२ 'ग्रहवृद' इति सूत्रेण विहितस्य अप इत्यर्थः।

३ 'काशीसम्बन्धी ग्रामादिः' इति ख. ग. ङ. पाठः।

४ इतोऽग्रे—'एकार्थीभावाऽऽपन्नत्वाच्चाऽवयवार्थस्य पृथक् निष्कर्षाऽभावेन, तन्मात्रगतस्याऽर्थस्य प्रत्ययेन प्रतिपिपादयिषायाः कर्त्तुमशक्यत्वात् न अवयवादण्' इति ग. पाठः।

पर्युदासाऽऽपत्तेः । इष्यते हि 'व्यवक्रुष्टिरि'ति क्तिनपि । ध्वनितं चेदं 'वाऽसरूप'सूत्रे भाष्ये । प्रकृतसूत्रस्थभाष्यन्तु न्यायाऽनुगृहीततद्भाष्य-विरोधात् एकदेश्युक्तिः । नन्वेवं क्तिनोऽपवादो णच्, युजादयश्च । तत्र 'व्यावचोरी'त्यादौ अपवादविप्रतिषेधात् युजेव प्राप्नोति, णजेवेष्यते इति चेन्न । बाहुलकात्सिद्धेः । एवं 'व्यात्युक्षी'त्यत्र 'गुरोश्चे'ति बाधित्वा यदि णजेव इष्टः, तदा सोऽपि बाहुलकादेव । णचश्चकारो 'णचः स्त्रियामि'त्यादौ विशेषणाऽर्थः ।

**अभिविधौ** । पूर्वसूत्रे इव अस्याऽपि शब्दशक्तिस्वभावादेव कारके अप्रवृत्तिसिद्धौ, 'भावे' इति नपुंसके भावे क्तस्य, घञश्च 'वाऽसरूपे'ति-प्राप्तस्य, वाऽसरूपबाधद्वारा बाधाऽर्थम् । नपुंसके' इत्युत्तरमेव त्विदं न कृतम् । तथा सति खलर्थविषये भावे खलादयो मा भूवन्निति । अत एव भाष्ये उक्तं--'ये क्तस्य बाधकास्तदर्थं पृथक्करणमि'ति । ल्युट् तु इष्यते एव—'संरवणमि'ति, स बाहुलकाद्बोध्यः ।

**सांराविणमिति** । 'समन्ताच्छब्द' इत्यर्थः । संशब्दोऽभिविधि-द्योतकः । पूर्ववत्सगतिकादण् । स्वभावतश्च एतदन्तं क्लीबम् ।

**आक्रोशे** । 'ग्रहवृद' इति अपोऽपवादोऽयम् । अनन्तरोऽपि इनुण् न सम्बध्यते । अस्वरितत्वात् । **अवग्रह इति** । 'ग्रहवृद' इत्यप् । छेदविशेष-

१ 'प्रौढिवादः' इति ख. ग. ङ. पाठः ।

२ 'बाधाऽर्थमिति केचित् । बाध्यसामान्यचिन्तया उभयोर्बाधे सिद्धे, भावग्रहणं वाऽसरूपबाधार्थमिति स्पष्टं भाष्ये' इति ख. पाठः ।
'बाधाऽर्थमिति स्पष्टं भाष्ये । अत एव नपुंसके' इति ग. पाठः ।

३ इतोऽग्रे—'वाऽसरूप'न्यायेन क्तस्याऽप्यापत्तेः । ल्युट् त्विष्यते एव' इति ग. पाठः ।

४ इतोऽग्रे–'केचित्तु तत्रेदं न कृतम् । वाऽसरूपन्यायेन क्तस्याऽप्यापत्तेरित्याहुः । तत्तु भाष्याऽक्षरस्वारस्याऽननुगुणम् । भावग्रहणेनैव तदर्थसिद्धेश्च' । इति ख. ङ. पाठो, ग. पाठखण्डनपरः ।

इत्यर्थः । **निग्रहो** निरोधः । **पात्रप्रग्राहेणेति** । भिक्षापात्रं गृहीत्वेति फलिताऽर्थः । लिप्सायां किम् ? । 'प्रग्रहो देवदत्तस्य' । 'प्रकृष्टोऽभिनिवेश' इत्यर्थः । **निवरेति** । कर्मणि 'ग्रहवृद' इत्यप् । ननु स्त्रीत्वविशिष्टे कर्मणि परत्वात् क्तिना भाव्यम्, 'अजब्भ्यां स्त्रीखलना' इत्युक्तेरत आह— **क्तिन्विषयेऽपीति** । 'घञजपाः पुंसी'ति प्रायिकमिति भावः ।

**रश्मौ च** । रथ-शकटादिसम्बद्धा रज्जू **रश्मिः**, न रज्जुमात्रम् ।

**वृणोतेः** । 'समुदायेन आच्छादने गम्ये' इत्यर्थः । आच्छेति किम ? । 'प्रवरा गौः' । **क्तादीति** । परत्वाद्धि क्त-ल्युटौ प्राप्तौ । एवं च पूर्वविप्रतिषेधोऽयं फलितः । वाऽसरूपन्यायस्तु अनपवादत्वान्नास्तीति बोध्यम् ।

**वर्षमिति** । 'वृषभो वर्षणादि'ति भाष्यप्रयोगात् ल्युडपी'ति कैयटः । 'कल्प्यादिभ्य एरज् नेति वाच्यम्' । कल्प्यादयो ण्यन्ताः । 'कल्पः' । 'अर्थः' । 'मन्त्र' इति अत्र घञेव । 'एरच् अण्यन्तानामि'ति तु अनार्षम् । अचश्चकारः 'थाथे'तिसूत्रे विशेषणाऽर्थः ।

**ऋदो** । नाऽयं तकारः । किन्तर्हि ? । दकारः । 'निरभ्योः पूल्वोरि'-त्यारम्भादिति दीर्घाऽन्तमुदाहरति—**लव इति** । **निश्चय इति** । नन्वचैव सिद्धम् । 'अन्तः' 'थाथघञि'त्यस्य प्रवृत्त्या स्वरे विशेषाऽभावात् । न च 'हस्तादाने चेरि'ति घञो बाधनाऽर्थम् । अस्तेये अस्मादपोऽनिष्टेरिति चेन्न । सामर्थ्येन थाथादिस्वराऽप्रवृत्तेः । एवञ्चोत्तरपदप्रकृतिस्वरेण मध्योदात्तमेतदित्याहुः । **वशिरण्योरिति** । घञि प्राप्ते वचनम् । वशनं **वशः** । रणन्ति = शब्दायन्तेऽस्मिन्निति **रणः** = सङ्ग्रामः ।

**घञर्थे इति** । 'स्था-स्ना-पा-हनि-व्यधि-युध्यर्थमि'त्युदाहरणमात्रं, न तु परिगणनमिति बोध्यम् । **प्रस्थ इति** । अधिकरणे कः । एवं विहन्यन्तेऽस्मिन्निति **विघ्नम्** । व्यद्यते इति **विघसो** वैश्वदेवशिष्टमन्नम् ।

**व्यधजपोर** । 'उपसर्गे सति ने'त्यर्थः, न तु 'अनुपसर्गे उपपदे' इत्यर्थः । तदाह—**व्यध इति** । **उपजापो** मन्त्रभेदः । **अनुपसर्गे चेति** । 'उपसर्गाऽभावे चे'त्यर्थः । तेन केवलादपीति भावः ।

**नित्यं पणः** । 'अनुपसर्गे' इति निवृत्तम् ।

**मदोऽनुप** । 'उपसर्गभिन्ने उपपदे' इत्यर्थः । **ग्लह इति** । अत्र अप् प्रत्ययो, लत्वं च निपात्यते । '**व्यात्युक्षीमभिसरणे**'ति—**माघप्रयोगः** ।

**प्रजने स** । 'प्रजन'शब्दे भावे घञ् । 'जनिवृध्योरि'ति वृद्धिनिषेधः । 'प्र'शब्दो धात्वर्थं विपरीतयति । यथा 'प्रतिष्ठते' इति । 'अत्र च प्रादुर्भावस्य वैपरीत्यं गर्भग्रहणम् । तच्च प्रथममेवे'ति **वृत्तिः** । 'द्वितीयादिकम् अपी'**त्यन्ये** ।

**हनश्च वधः** । चकारो 'वध' इत्यनन्तरं प्रत्ययसमुच्चायको, न तु पूर्वप्रक्रान्त'ह्वयति'रूपप्रकृत्यन्तरसमुच्चायकः, व्याख्यानादित्याहुः ।

अत्र वधादेशोऽन्तोदात्तो निपात्यते । तथा च उदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वम् । अत्र च अकारोच्चारणं मानम् । एतेन 'स्वतन्त्रवधेर्घञि 'वध' इत्यस्य सिद्धत्वेन, इदं व्यर्थम् । स च 'जनिवध्योरि'तिवृद्धिनिषेधेनाऽनुमीयते । हनादेशवधेरदन्तत्वेन वृद्धिप्राप्त्यभावात् । 'वध्यादेशे वृद्धितत्वप्रतिषेध' इति वार्त्तिकेन स्थानिवत्त्वप्रतिषेधाच्चे'त्यपास्तम् ।

'स्वतन्त्रवधेर्घञर्थे के सिद्धे, इदं किमर्थमि'ति तु चिन्त्यम् । 'अनुपसर्गादि'ति विशेषं वक्तुं चेत् । बाहुलकान्न भविष्यती'ति **कश्चित्** । **घनशब्दश्चेति** । अयमपि अन्तोदात्तः । **धर्मो लक्ष्यते इति** । 'अभ्रघन' इत्यादौ 'पूरणगुणे'ति षष्ठीसमासनिषेधस्तु न । अनित्यत्वादित्याहुः ।

**अन्तर्घनो** । अयमपि तथा । प्रघण-प्रघाणो-द्घना-ऽपघनेष्वप्येवम् । 'हन' इति सर्वत्र सम्बध्यते । स्पष्टं चेदं 'स्तम्बे क चे'त्यत्र भाष्ये ।

**पाठाऽन्तरमिति** । 'अन्तघन' इत्यपि पाठाऽन्तरम् । **स्तम्बघ्न इति** । यदा इषीकया स्तम्बो हन्यते तदा 'स्तम्बघ्ना','स्तम्बहे'ति, 'स्तम्बहननी'ति त्रितयमपी'ति भाष्ये स्पष्टम् । बाहुलकात्त्रितयमपि साध्वित्याहुः ।

---

१ 'घञ्प्रत्ययसमुच्चायकः' इति ख. ग. ङ. पाठः ।

२ इतोऽग्रे—'तृतीयमेव साधु' इत्यन्ये' इति ग. पाठः ।

**परेश्च घाङ्क**। 'योगे चेति वक्तव्यम्'। 'परियोगः'। 'पलियोगः'। **अयमिति**। अत एव 'पाकेन निर्वृत्तमि'ति विगृह्यते, न तु 'पक्केने'ति। **नित्येति**। इदं च तद्धिते व्याख्यातम्।

**उपसर्गे घोः किः**। 'बाहुलकात्कर्त्तर्यपी'ति **माधवः**। अत एव 'उप = समीपे स्वधर्ममादधातीति उपाधिरि'ति व्याचक्षते। वस्तुतस्तत्र करणे प्रत्ययः सुवचः। तदाह—**उपाधीयतेऽनेनेति**। न च परत्वात् ल्युटा बाधाऽऽपत्तिः। बाहुलकेन तद्प्रवृत्तेः।[1] अत एव 'घञर्थे क' इत्यस्यो-दाहरणे 'प्रतिष्ठन्तेऽस्मिन्धान्यानी'ति विग्रहः प्रदर्शितो भाष्ये। 'विभक्तिः', 'व्यञ्जना', 'व्यक्तिः', 'लक्षणा' इत्यादयः करणे क्तिन्-युजाद्यन्ताः प्रयोगा बाहुलकेनैव निर्वाह्याः।[2] ईश्वरवाचिविधिशब्दोऽपि 'विध विधाने' इत्यत 'इगुपधात्किन् (५५९ उणादिसू०) इत्यनेन सिद्ध इति बोध्यम्।

**कर्मण्यधि**। पृथक् सप्तमीनिर्देशात् द्वयोर्नोपपदत्वम्। तत्र व्याख्यानात् कर्म उपपदम्। अधिकरणम् अर्थः। 'अधिकरणग्रहणम् अर्थाऽन्तरनिरासाऽर्थमि'ति **वृत्तिः**।

**स्त्रियांक्तिन्**। **स्त्रीलिङ्गभावादाविति**। तत्र यथाऽभिधानं व्यवस्था बोध्या।[3]

---

१ इतोऽग्रे—'अजब्भ्यामि'ति परविप्रतिषेधवार्त्तिके अजपोरेवोपादानादन्य-प्रत्यये क्वचित्पूर्वविप्रतिषेधस्य ध्वनितत्वेनाऽदोषात्। अत एव'इति ग. पाठः।

२ इतोऽग्रे—'बाहुलकात् ल्युडभाव' इत्यन्ये। बाहुलकादेव क्वचित्कर्त्तरि अप्ययम्। तेन ईश्वरे 'विधिरि'ति सिद्धम्। 'विध विधाने' इत्यत 'इगुपधा-त्किदि'त्यनेन 'विधिः' सिद्ध इति परे' इति ग. पाठः।

३ इतोऽग्रे—'न चाऽकर्त्तरीतिसूत्रे कारकग्रहणं 'परिमाणाख्यायामि'त्यत्र भावा-ऽसम्बन्धाऽर्थम्। तेन 'तिलोच्छ्रितिरेके'त्यादौ न। एवं च 'परिमाणाख्या-यामि'त्ययं घञ् अजब्विषये। अन्यथा स्त्रीप्रत्ययानामप्यपवादः स्यादि'ति भाष्ये उक्तम्। एवञ्चैतत्प्रभृतिसूत्राणां भावे एव प्रवृत्तिर्लभ्यते इति भावा-दावित्यसङ्गतमिति वाच्यम्। 'स्त्रियाः खलनौ विप्रतिषेधेने'ति वार्त्तिकेन,

'अयमनेकाज्भ्यो ने'त्याद्यन्तवत्सूत्रस्थकैयटाल्लभ्यते । 'भाष्यस्य अन्यथा व्याख्यातुं शक्यत्वेन तेभ्योऽपि भवत्येवे'ति बहवः । घञोऽपवाद इति । 'अधिकः कारः अधिकार' इति तु पुंस्त्वविशिष्टभावस्य वाच्यत्वात् घञन्तं साध्विति बोध्यम् । अजपौ त्विति । तथा च वार्त्तिकम्–'अजपूभ्यां स्त्रीखलना' इति । तयोरवकाशः–पुँल्लिङ्गो भावः । क्तिनोऽवकाशः–'कृति-रि'त्यादि ॥ 'स्त्रियामि'त्यधिकारः 'कृत्यल्युट' इति यावत् ।

श्रुयजि । परत्वात् ल्युटि प्राप्ते वचनम् । श्रुतिः = श्रोत्रम् । प्रह्लत्ति-[2]रिति । भाष्ये तु नैतद् दृष्टम् । चायतेः क्तिनीति । इदं च 'अपचितश्चे'ति-सूत्रे भाष्ये । संपदादिभ्य इति । इदं 'रोगाख्यायामि'ति सूत्रे भाष्ये ।

क्तिन्नपीति । 'अस्त्रियामि'ति प्रतिषेधात् 'वाऽसरूपे'त्यस्याऽभावात् इदमुक्तम् । इष्यते इति । बाहुलकादिति भावः ।

स्थागापा । अङ इति । स्थादिभ्य 'आतश्चोपसर्गे' इति, पचेस्तु 'षिद्भिदे'ति प्राप्तस्येत्यर्थः । पुरस्तादपवादन्यायेनेति भावः । तेन ण्वुलिञोः 'स्थायिकाम्' 'स्थायिमि'ति सिध्यति । अत्र 'ग्ला-ज्या-हाभ्यो निरि'ति भाष्ये । तेन ग्लान्यादिसिद्धिः । ज्ञापकादिति । तेन बाहुलकादङपीति भावः । उदात्त इति । 'मन्त्रे वृषे'ति सूत्रादिति भावः । इत्त्वाऽभाव इति । 'द्यतिस्यती'ति प्राप्तिः । हन्तेरिति । इदं 'स्तम्बे क चे'ति सूत्रस्थ-भाष्याल्लभ्यते । हन्तेर्नस्येत्त्वं, हिनोतेर्वा गुणः । कीर्त्तिरिति । कीर्त्ते-र्ण्यन्तत्वात् 'ण्यासश्रन्थ' इति युचि प्राप्ते, क्तिन् निपात्यते, उदात्तत्वं च ।

व्रजयजोः । अत्र 'उदात्त' इति वर्त्तते । पित्त्वन्तु उत्तरत्र तुगर्थम् ।

तद्भाष्येण च विरोधादकर्त्तरीतिसूत्रस्थभाष्यस्य प्रौढिवादत्वेनाऽदोषात्' इति ग. पाठः ।

१ 'अयमनेकाज्भ्यो नेति यद्यप्याद्यन्तवत्सूत्रस्थकैयटाल्लभ्यते, तथापि भाष्यस्य अन्यथा' इति ग. पाठः ।

२ 'प्रह्लत्तिरिति' इति ग. पाठः ।

इदं 'ण्यासे'तिसूत्रे भाष्ये स्पष्टम्। **भावादाविति**। क्यप्विधौ 'अधिकरणे चे'ति वार्त्तिकादिति भावः। तत्र चेन करणसङ्ग्रहः। तदाह—**मन्यतेऽनयेति**। **गलपार्श्वेति**। तया हि क्रुद्धो ज्ञायते इति भावः। **भृत्येति**। भरणमित्यर्थः। जीविकेति यावत्। अस्मादयं भावे एवेति 'भृञोऽसंज्ञायामि'ति सूत्रस्थभाष्यस्वरसः। 'कुमारभृत्या गर्भिण्याः परिचर्याऽभिधीयते'। संज्ञायां किम्?। 'मतिः'।

**क्रियेति**। भाव-कर्मणोः शे, यकि, रिङादेशः। सम्प्रदानादिषु यगभावेऽपि शे परतो रिङि, इयङ्। 'ताभ्यामन्यत्रे'त्यस्य तु नाऽत्र विषय इत्युक्तम। अत एव 'अपादाने उपाध्याय' इति 'इङश्चे'त्यत्र भाष्ये ध्वनितम। करणा-ऽधिकरणयोस्तु न शः। ल्युटा बाधादिति दिक्।

**इच्छा**। **भावे इति**। न त्वकर्त्तरि कारकेऽपीत्यर्थः। **परिचर्येत्यादि**। भावे शो निपात्यते। यक् तु सिद्ध एव। यत्तु 'यक् निपात्यते' इति। तच्चिन्त्यम्। अकर्त्तृकारकविषयं वा तत्, यद्यभिधानमस्ति।

**परिसर्येति**। 'चर्या', 'सर्या', 'आस्ये'त्यादि तु बाहुलकात्साधु। यत्तु 'चर्या' 'सर्ये'त्यत्र वाऽसरूपविधिना 'गदमद'ति, 'अचो यदि'ति च यत्। 'आस्ये'त्यत्र हलन्तत्वाण्ण्यत्। वाऽसरूपविधिनिषेधस्तु स्त्रीप्रकरणविषयोत्सर्गापवादस्यैवे'ति। तन्न। तत्राऽपि भावाऽर्थकेषु स्त्रीत्वाय बाहुलकाऽऽश्रयणस्याऽऽवश्यकत्वात्। किञ्चाऽत्र पक्षे घञादयोऽपि स्त्रियां स्युः। एवञ्च 'घञजपाः पुंसी'ति सिद्धान्तो व्याकुप्येत। अतः 'अपवादमात्रस्य स्त्र्यधिकारस्थत्वेऽपि वाऽसरूपविधिर्ने'त्येव न्याय्यम्। किञ्च वाऽसरूपसूत्रे 'असरूप'पदेन अपवादस्यैव ग्रहणेन 'अस्त्रियामि'त्यस्यापि तद्विशेषणताया एव न्याय्यत्वमिति दिक्। **मृगयेति**। णिनिमित्ताऽजन्तलक्षणवृद्ध्यभावः, 'अत्कसार्वे'ति दीर्घाऽभावश्च निपातनादिति बोध्यम्।

**यकारनिवृत्तिरिति**। हलादिःशेषस्तु न। षाष्ठद्वित्वे एव अभ्यास-

---

१ 'यत्तु सर्ये यक् निपात्यते' इति ग. पाठः।

संज्ञास्वीकारादिति भावः। **अटाट्येति** । यङन्तात् 'अ'प्रत्यये 'अटाटे'-त्यपि । **जागर्येति** । यकि 'जाग्र' इति गुणः ।

**गुरोश्च** । गुरुत्वस्य अज्मात्रधर्मत्वात् धातुविशेषणाय मतोः सौत्रो लुगित्याह—**गुरुमत इति** । धातोर्हला विशेषणात् तदन्तविधिः ।

ननु विपरीतमस्तु-'**गुर्वन्ताद्धल्वत**' इति चेन्न । 'चेष्टायाम्' 'आशंसाया-मि'त्यादिनिर्देशविरोधाऽऽपत्तेः । ननु शंसेरकारो दुर्लभः, 'निष्ठायां सेटोऽकारो वक्तव्य' इति क्तिन्विधायके भाष्ये उक्तत्वादिति चेन्न । 'आशंसा-यामि'त्यादिनिर्देशेन तस्य अनित्यत्वस्वीकारात् । 'क्तिन्नाबादिभ्य' इति वचने यद्यपि आबादिराकृतिगणः, तथापि 'निष्ठायां सेट' इति वचनेन तत्प्रत्याख्यानात्तस्याऽप्येतत्समानविषयतैव बोध्यते । अत एव 'कण्डूतिरि'त्यत्र 'कण्डूये'ति भवितव्यम् । एवं तर्हि क्तिजि'ति 'न पदान्त'-सूत्रे भाष्ये उक्तम् । एवं च 'लब्धिः' 'उपलब्धिः' 'ज्ञप्तिः' 'उपास्तिरि'त्या-दयः षित्त्वेनाऽङि, 'ण्यासे'ति युचि प्राप्ते बाहुलकादेव साध्याः । तथा च 'भृञोऽसंज्ञायामि'ति सूत्रे भाष्ये 'भिदेरङि प्राप्ते भित्तिरिति बाहुलकात् साधु' इत्युक्तम् ।

**षिद्भिदा** । '**भिदा छिदा द्वैधीकरणे**' । 'विदा' । 'क्षिपा' । '**गुहा गिर्येवयवौषध्योः**'[1] । श्रद्धा । मेधा । गोधा । हारा । भारा । कारा । क्षिया[2] । तारा । '**धारा प्रपाते**' । रेखा । लेखा । चूडा । पीडा । वपा । वसा । मृजा । कृपा । '**आरा शस्त्र्याम्**' । '**आरा प्रतोद**' इत्यन्ये । वृत्[3] ।

एवंपठितानां समुदायानां प्रकृतिभागो 'भिदादिभ्य' इति निर्दिष्टः । गणे विशिष्टपाठस्तु लोकप्रसिद्धाऽर्थविशेषस्य, कचिदलाक्षणिककार्यस्य च सङ्ग्रहाऽर्थः । तच्च कारा-तारा-आरा-हारा-धारासु वृद्धिः । **केचित्तु** 'ऋदृश' इति गुणे दीर्घो निपात्यते' इत्याहुः । लिखेर्गुणः । पक्षे रेफश्च । चुद-

---

१　'मत्वर्थलक्षणेत्याह—गुरुमत इति । सौत्रो मतोर्लुगित्याशयः' ख.ग.ङ. पाठः ।

२　'क्षिया' इति पाठाऽन्तरम् ।　　　३　'जम्भा' इति पाठाऽन्तरम् ।

रन्त्यस्य डो, दीर्घश्च। भजेश्चुरादिण्यन्तात् अङि 'भाजा'शब्दोऽप्यत्र बोध्यः। मृजेः पाक्षिकवृद्ध्यभावः। क्रपेः कृपा। संप्रसारणम्।

**चिन्तिपूजि**। 'चोऽनुक्तसमुच्चयाऽर्थः, तेन तोलयतेः तुला' इति हरदत्तः। **श्रदन्तरोरिति**। अत्र श्रतः अङ्विधावेव। 'अन्तः'शब्दस्य अङ्-किविधि-णत्वेष्विति बोध्यम्। एतच्च 'प्रादयः' 'अन्तरपरिग्रहे' इत्यनयोर्भाष्ये स्पष्टम्। आद्यं 'प्रज्ञाश्रद्धे'ति निर्देशसिद्धम्।

**घट्टिवन्दि**। सकर्मका-ऽकारविकरण'वन्दि'साहचर्यात् विदिर्लाभाऽर्थ एव। व्याख्यानाच्च। ज्ञानाऽर्थस्य तु 'वित्तिः'। चुरादेर्विदेर्ज्ञानेऽपि 'वेदने'ति बोध्यम्। **प्रच्छर्दिकेति**। 'छर्द वमने'। **प्रवाहिका** ग्रहणी। **विचर्चिका**-पामा। **शिरोऽर्त्तिः**-शिरःपीडा। 'अर्द हिंसायाम्'। 'तितुत्रे'ति नेट्। **आसिकेत्यादि**। आसनं, शयनमित्यर्थः।

**धातुनिर्देश इति**। धात्वनुकरणे इत्यर्थः। 'बहुलमि'त्यनुवृत्तेर्धात्वर्थ-निर्देशेऽपि। अत एव 'ईक्षतेर्नाऽशब्दमि'ति**व्याससूत्रं** सङ्गच्छते। अत एव च 'आहौ प्रभूतादिभ्यः' 'पृच्छतौ सुस्नातादिभ्यः' 'गच्छतौ परदारादिभ्य' इति वार्त्तिकप्रयोगाः सङ्गच्छन्ते। अत एव क्वचिन्न-'गुप्तिज्किद्भ्य' इति।

**पचतिरिति**। 'उपसर्गात्सुनोती'त्यादिनिर्देशात् अकर्त्रादिवाचिन्यपि अस्मिन् शबादयः। यत्तु 'लोयतरि'ति सूत्रे 'शित्त्वसामर्थ्यात् यगादय' इति **कैयटः**। तन्न। 'पिबति' 'ग्लायती'त्यादौ पिबाद्यादेशप्रवृत्त्या, आत्त्वनिवृत्त्या च शित्त्वस्य चारितार्थ्यात्। इट् तु 'तितुत्रे'ति निषेधेना-ऽपि वारयितुं शक्यः। न च इकः कित्त्वात्, 'वचिस्वपी'त्यादौ सम्प्रसार-णाऽऽपत्तिः। प्रसिद्धत्वेन शब्दाऽतिरिक्ताऽर्थपरेष्वेव तत्प्रवृत्तेः। 'इक्' इत्यत्र चर्त्वभूतो गकार एव निर्दिष्ट' इत्यन्ये।

**वर्णादिति**। प्रत्यासत्त्या, 'निर्देशे' इत्यनुवृत्तेश्च वर्णस्यैव यत्र प्रतिपादनं, तत्रैवाऽयम्। 'निर्देश'शब्दस्य प्रतिपादनाऽर्थत्वात्। 'ककार'

---

१ 'दद्रूः' इति ख. ग. ङ. पाठः।

इत्यादावपि वर्णप्रतिपादने एव तात्पर्यम् । अकारस्य उच्चारणाऽर्थत्वात् ।

अस्य अधिकारात्, बाहुलकाद्वा कृत्संज्ञा । बाहुलकादेव क्वचित्सङ्गाता-दपि–'एवकारः' 'चकार' इति । क्वचिन्न-'अस्य च्वौ' इति । प्रयोजना-ऽभावात् न एतत्ककारस्येत्त्वम् । आर्द्धधातुकत्वाऽभावात् न इट् । न च 'करणं कारः', 'क्रियते वा कारः' । 'अस्य कारः अकारः' इति, 'अश्चाऽसौ कार' इति वा समासेन सिद्धाविदं व्यर्थमिति वाच्यम् । 'उक्तं चकार-करणस्य प्रयोजनमि'ति 'विभाषा वृक्षे'ति सूत्रस्थभाष्यप्रयोगाऽसङ्गत्यापत्तेः।

रेफ इति । 'वाऽसरूपविधिना कारप्रत्ययोऽपी'त्यन्ये[1] । 'रेफ' इत्येव सिद्धे गुरुसूत्रकरणं 'रादि'ति योगविभागाऽर्थम् । तेन 'रकार' इति परे । रादिति निर्देशादेव पक्षे प्रत्ययसामान्याऽभावोऽपीति दिक् ।

अकारलोप इति । अभत्वात्[2] 'यस्ये'तिलोपाऽप्राप्तेः । प्रातिपदिकत्वन्तु कृदन्तत्वात्पूर्ववद्बोध्यम् । बाहुलकादिह न–'तसौ मत्वर्थे' इति । 'मतु'शब्देन मत्वर्थो लक्ष्यते । ततो बहुव्रीहिः । स्वार्थे छः । बाहुलकादेव 'मतुबर्थ'शब्दादपि,—'शैषिकान्मतुबर्थीयादि'त्यादि । केचित्तु 'मतोरर्थो मत्वर्थः । 'तत्र भव' इति गहादित्वाच्छे सिद्धम् । एवमेव 'मतुबर्थीय' इत्यादि सिद्धमि'त्याहुः ।

इणजादिभ्यः । धात्वर्थनिर्देशे ण्वुलपवादोऽयम् । एवमग्रेऽपि । आजिरिति । बाहुलकात् अजेर्वी न । 'आदिरि'त्यपि ।

वासिरिति । वादिरपि । गिरिरिति । किरिरित्यपि ।

संज्ञायाम् । 'धात्वर्थनिर्देशे ण्वुलि'त्येव सिद्धे, अधिकरणे ण्वुलर्थ-मिदम् । उद्दालकः–श्लेष्मातकः । तस्य पुष्पाणि भज्यन्ते यस्यां क्रीडायां, सा तथा । 'नित्यं क्रीडे'ति समासः ।

---

१ 'पूर्वोक्तसमासरीत्या 'रकार'इत्यपि । वासरूपविधिना कारप्रत्ययोऽपीत्यन्ये' इति ग. पाठः ।

२ अतद्धितपरत्वेन, अभत्वाच्च' इति ख. ग. ङ. पाठः ।'

**विभाषाख्यान** । सूत्रे अल्पाऽच्तरत्वेन पूर्वनिपातेऽपि, प्रश्नपूर्वकत्वात् आख्यानस्य, आर्थक्रमाऽनुसारेणाऽऽह–**परिप्रश्न इत्यादि** ।

**परिपाटीति** । परिपूर्वात्पटेः 'इणजादिभ्य' इति इणि, 'कृदिकारादि'ति ङीषि सिद्धमिदम् ।

**आक्रोशे नञि** । आक्रोशः–शपनम् ।

**कृत्यल्युटो बहुलम्** । यत्तु 'ल्युट उणादित्वादेव बाहुलके सिद्धे, ल्युड्ग्रहणं व्यर्थम् । उणादिशब्देन चाष्टाध्यायीतार्त्तीयिकतृतीयचतुर्थचरणोक्ता अपि गृह्यन्ते, विनिगमकाऽभावादि'ति । तन्न । 'भीमादयोऽपादाने' 'दाशगोघ्नौ संप्रदाने' 'ताभ्यामन्यत्रोणादय' इत्युक्तेः 'उपेत्याऽधीयतेऽस्मात् इति उपाध्याय' इति 'परिमाणाख्याया'मिति सूत्रस्थभाष्याऽसङ्गत्यापत्तेः ।

**नपुंसके भावे क्तः** । अयं परत्वात् घञजपां बाधकः । नन्वेवमिह विशिष्याऽर्थनिर्देशेन 'तयोरेव कृत्यक्त'त्यस्याऽप्रवृत्तौ, 'भावे चाऽकर्मकेभ्य' इत्यस्य असंनिधानात्सकर्मकेभ्योऽप्ययं स्यात्, घञादिवदितिचेत् । इष्टाऽऽपत्तेः । 'गतं तिरश्चीनमि'त्यादिदर्शनात् ।

न चैवं कृद्योगषष्ठ्या 'न लोके'ति निषेधात्, तद्योगे कर्मणि द्वितीया स्यात्, तथा च 'घटं कृतमि'त्यादि प्रसज्येतेति वाच्यम् । नपुंसके भावे क्तस्य योगे षष्ठ्या उपसङ्ख्यातत्वात् । ननु शेषत्वविवक्षामाश्रित्य तत्प्रत्याख्यातमाकरे इति चेत् । तर्हि तत्प्रामाण्यात्तत्र प्रायेण शेषत्वविवक्षेत्येवाऽस्तु । क्वचित्तु द्वितीयाऽपि दृश्यते-'भ्रान्तं देशमनेकमि'ति यथे'ति **केचित्** ।

वस्तुतस्तु एवं सति 'कृतपूर्वी कटमि'त्यत्र भावे क्तसिद्धये अविवक्षितकर्मकत्वाऽऽश्रयणं भाष्यकृतो व्यर्थं स्यात् । तस्मादत्राऽपि 'तयोरेवे'त्यस्य प्रवृत्तिरस्ति । 'निष्ठा' 'ञीतः क्त' इतिवत् अस्याऽपि पूर्वमुपस्थितत्वात् । तस्य च 'भावे एव' 'तत्र च अकर्मकेभ्य एवे'त्यर्थद्वये तात्पर्यात् । अत्र 'भाव'ग्रहणन्तु 'अकर्त्तृकारकव्यावृत्त्यर्थम् । 'भ्रान्तं देशमि'त्यादौ तु

प्रकाराऽन्तरमुक्तं[1] प्रागित्याहुः ।

**कर्मणि च येन** । 'कर्त्तरि'ति 'संस्पर्शादि'त्यपेक्षया षष्ठी । कर्त्तृत्वं च प्रत्यासत्त्या विधेयप्रत्ययप्रकृत्यर्थनिरूपितम् । 'उभयप्राप्तौ' इति-नियमात् 'येने'ति कर्त्तरि तृतीया । **शरीरस्य सुखमिति** । अर्थात्स्पर्श-[2]कर्त्तुः शरीरस्वास्थ्यजनकं सुखमित्यर्थः । **ल्युडिति** । नपुंसके भावे इति बोध्यम् । तद् ध्वनयन्नाह—**पूर्वेणेति** । **किन्तु कर्मेति** । णिजर्थं प्रतीति भावः । कर्मणि किम् ?। 'तूलिकाया उत्थानं सुखम्' । स्पर्शादिति किम् ? । 'अग्निकुण्डस्य उपासनं सुखम्' । शरीरेति किम् ? । 'पुत्रस्य परिष्वञ्जनं[3] सुखम्' । मानसी प्रीतिरत्र ।

**वा यौ** । अत्रत्यनिष्कर्षः 'अजेर्वी'त्यत्रोक्तः । भाष्ये तु 'अजेर्यौ परतो 'वा' इत्यादेशः । वायुरि'ति व्याख्यातम् ।

**करणाधिकरणयोः** । घञोऽपवादः । अजपौ, स्त्रीप्रत्ययांश्च परत्वाद्बाधते ।

**छादेर्घे** । अत्र 'उपधाया' इत्यनुवर्त्तमानमपि न सम्बध्यते । घे परतोऽङ्गस्य ण्यन्तस्योपधाया दकारस्य ह्रस्वभावित्वाऽभावादित्याहुः । अन्ये तु 'णौ' इत्यनुवर्त्त्य 'घपरणौ अङ्गस्य छादे[4]रुपधाया आकारस्य ह्रस्व' इत्याहुः । इदमेव युक्तम् । अन्यथा णेरेव ह्रस्वः स्यात् । तत्सामर्थ्याच्च णिलोपो न स्यादिति बोध्यम् । **आकुर्वन्त्यस्मिन्निति** । 'व्यवहारमि'ति शेषः । 'एत्य कुर्वन्ति व्यवहारमस्मिन्नि'ति आकरः—उत्पत्तिस्थानम् ।

**गोचरो देश इति** । विषयवाच्ययम् । 'उपादानगोचरं ज्ञानमि'ति यथा । **संचरन्त इति** । 'समस्तृतीये'त्यात्मनेपदम् ।

---

१ 'प्रकाराऽन्तरमप्युक्तं प्रागित्याहुः' इति ख. ग. ङ. पाठः ।

२ 'स्पर्शकर्मकर्त्तुः' इति ख. ग. ङ. पाठः ।

३ 'परिष्वजनम्' इति सर्वत्र पाठः ।

४ 'छादेः' इति लघुशेखरात्पूरितमस्माभिः ।

**अवे तॄस्त्रोः**। 'करणाऽधिकरणयोरि'त्यनुवृत्तावपि यथासङ्ख्यं नेष्यते' इति यथासङ्ख्यसूत्रे भाष्ये स्पष्टम्।

**हलश्च**। अत्राऽपि 'प्रायेणे'ति वर्त्तते इति 'गोचरसंचरे'ति सूत्रे भाष्ये स्पष्टम्। **अवहारेति**। एते त्रयोऽप्यधिकरणसाधनाः। **वृत्तिकार**स्तु आधारा-ऽऽवायशब्दौ सूत्रे प्रक्षिप्य, चेन 'अवहार'शब्दं संजग्राह। तत्र वैरूप्यं निर्मूलम्।

**उदङ्कोऽनु**। 'अनुदकविषयकाऽर्थप्रतिपादकाऽञ्चेः 'उदङ्क' इति निपात्यते' इत्यर्थः। 'हलश्चे'ति सिद्धे उदकप्रतिषेधाऽर्थं वचनम्। **घृतोदङ्क इति**। 'वाऽसरूप'न्यायेन ल्युटि 'घृतोदञ्चनोऽपी'ति **कश्चित्**। **उदकोदञ्चन इति**। ननु घञभावेऽपि पक्षे घे सति 'उदकोदङ्क' इत्यस्य दुर्वारत्वेन 'अनुदके' इति व्यर्थम्। न च स्वरे विशेषः। घे कृदुत्तरपदप्रकृतिस्वरेण, घञि थाथादिस्वरेण अन्तोदात्तत्वादिति चेन्न। अत एव प्रतिषेधात् घो नेत्याहुः। 'गोदोहनम्' 'प्रसाधनमि'त्यादौ बाहुलकात् 'हलश्चे'ति घञ्, घश्च ने'ति-अत्र भाष्ये ध्वनितम्।

**जालमा**[1]। **'आनाय'** इति निपात्यते जालं चेद्वाच्यमि'त्यर्थः। 'जाल'शब्दस्तु 'जल घातने' इति धातोः 'ज्वलिती'ति णाऽन्तः। **घित्करणमिति**। न हि खनः 'चजोरि'ति कुत्वयोग्यः कश्चिदवयवोऽस्ति, येन घित्करणमिहोपयुज्येतेत्यर्थः। **'भगः पदमि'ति**-क्वचित्प्रयोगः। **एते इति**। आखनादयः षडित्यर्थः।

**ईषद्दुःसुषु**। इह सामान्योक्तावपि योग्यताबलादयं विषयविभागो लभ्यते-'कृच्छ्राऽर्थे दुरि, अकृच्छ्रे इतरयोरि'ति। तद्दर्शयति–**कृच्छ्र इत्यादिना**। **भवतेति**। 'न लोके'ति षष्ठीनिषेधात्कर्त्तरि तृतीया। कृच्छ्रेत्यादि किम्?। 'ईषत्कार्यम्'। अल्पमित्यर्थः। खित्त्वमुत्तराऽर्थम्। लकारः स्वराऽर्थः। **निमिमीलियामिति**। 'मीनातिमिनोति' 'विभाषा लीयतेरि'ति-

---

१ 'जालमा' इति 'कुत्राप्यादर्शे नास्ति।

प्राप्तमात्त्वं निषिध्यते । 'विभाषा लीयतेरि'त्यतो 'विभाषा'ग्रहणं 'मीनाती'-त्यत्राऽपकृष्यते । सा च व्यवस्थितविभाषा । तेन उभयोरपि क्वचिदप्रवृत्ते-रिदं सिद्धमि'ति **कश्चित्** । **खलचोरिति** । पचाद्यच्, एरच्च गृह्यते इत्याहुः ।

**उपसर्गात्** । 'लभेश्चे'त्येव सिद्धे नियमोऽयमित्याह—**उपसर्गा-देवेति** । 'खलघञोरेवे'ति नियमस्तु न । व्याख्यानात् ।

**न सुदुर्भ्याम्** । तृतीया, पञ्चमी चेयम् । आद्ये प्रत्युदाहरति—**सुप्रलम्भ इति** । द्वितीये आह—**अतिदुर्लम्भमिति** । अत्र 'केवल'शब्देन सूत्रोपस्थिताऽतिरिक्तं सजातीयं व्यावर्त्यते, न कर्मप्रवचनीयः, इतरः शब्दो वा । तद् ध्वनयन्नाह—**यदा स्वती इति** । 'सूत्रोपात्ताऽतिरिक्त'ति-विशेषणात् 'सुदुर्लभमि'ति सिध्यती'ति **कैयटः** । यस्तु सुदुरोरुपसर्गत्व-निषेधो नुम्विधौ वार्त्तिककृता पठितः, स केवलसुदुर्विषय एव । 'अति-सुलभमि'ति-अत्रैव भाष्यप्रयोगात्, 'गतिश्चे'तिसूत्रभाष्ये एव 'न सुदुर्भ्या-मि'त्यनेन निषेधसिद्धिमाश्रित्य तत्प्रत्याख्यानाच्चेति दिक् ।

**कर्त्तृकर्मणोश्च भू** । अयं नाऽर्थनिर्देशः । तत्त्वे ईषदादीनामेवोपपद-त्वात् खलः खित्त्वस्य वैयर्थ्याऽऽपत्तेः । मुमर्थं हि तत् । मुम् तु अनव्य-यस्य । तस्मात् उपपदमेवेति ध्वनितं भाष्ये । तदाह—**ईषदादिषु चेति** । चः संनियोगाऽर्थः । तेन अनयोः, ईषदादीनां च युगपत्प्रयोगे एव प्रत्ययः । **नेष्यते इति** । एतच्च यथासङ्ख्यसूत्रे भाष्ये स्पष्टम् ।

**धातोरव्यवधानेनेति** । नन्वयं नियमो न लभ्यते । 'ते प्राग्धातो-रि'ति वचनेन सुदुरोः प्राक्त्वस्योचितत्वात् । 'ते प्रागि'ति सूत्रे 'व्यव-हिताश्चे'ति सूत्राऽऽरम्भेण उत्तराऽङ्गविकल—'तस्मादित्युत्तरस्ये'त्यस्य

---

१ 'विभाषा' इत्यारभ्य 'कश्चित्' इत्यन्तः ख. ग. ङ. पाठः, क. कुण्डलितः ।

२ 'तृतीया, पञ्चमी चेयम्' इति ख. ग. ङ. पाठः ।

३ 'अतिदुर्लम्भ' इति तु मूले पाठः, लघुशेखरे च ।

४ 'सजातीयमुपसर्गाऽन्तरम्' इति ख. ग. ङ. पाठः ।

प्रवृत्त्या च अव्यवहितप्राक्त्वस्यैव ग्रहणात्। खलः खित्त्वन्तु 'कूलमुद्रुज' इत्यादिवद्व्यवहितेऽपि कृद्ग्रहणपरिभाषया मुम्प्रवर्त्तकतया चरितार्थम्, 'ईषदाढ्यम्भव' इत्यादौ च चरितार्थमिति चेन्न। 'बहुल'ग्रहणाऽनुवृत्त्या,'दुराढ्यम्भवमि'त्याद्यत्रत्यभाष्योदाहरणेन च इष्टव्यवस्थासिद्धेः।

केचित्तु[1] 'छन्दसि ने'त्येव सिद्धौ, 'परेऽपी'त्यादिगुरुन्यासेन आवृत्त्या,'व्यवहिताश्चे'ति योगविभागात्, तत्र'च्छन्दसी'त्यननुवृत्त्या वा, लोकेऽपि क्वचिद्व्यवहितप्रयोगज्ञापनान्न दोषः। अत एव संज्ञानियम-प्रयोगनियमपक्षयोर्न फलभेद इत्याहुः।

**च्व्यर्थे इति**। अत्रैव भाष्ये स्पष्टमेतत्। ननु भवतेरकर्मकत्वात्, प्राप्त्यनुभवादिषु सकर्मकत्वेऽपि च्व्यर्थाऽसम्भवात्, कर्मोपपदेऽस्याऽप्राप्तिः। एवं करोतेरपि कर्त्तरि न, च्व्यर्थाऽसम्भवादिति यथासङ्ख्य-निराकरणं वृथेति चेन्न। अन्तर्भावितण्यर्थस्य भवतेः करोतिना, कर्मकर्त्तृ-विषयकरोतेश्च भवतिना तुल्याऽर्थतया, भवतेः कर्मणि, करोतेः कर्त्तरि च खल्सम्भवात्। भवतेः कर्त्तर्युदाहरति–**अनाढ्येनेति**। कर्मणि तु 'अनाढ्य आढ्यो भूयते' इति विग्रहः। 'भाव्यते' इति तदर्थः। एवमग्रेऽपि विग्रह-द्वयमुन्नेयम्। प्रत्युदाहरणे 'ते प्राग्धातोरि'ति निर्बाधमेवेत्याशयेनाऽऽह— **आढ्येन सुभूयते इति**। इत्यर्थे न खल्, किन्तु तव्यादय एवेति भावः। 'आढ्येन सुभवितव्यमि'ति तु वक्तुमुचितमि[2]त्यन्ये।

**आतो युच्**। ईषदादयोऽनुवर्त्तन्ते, न तु 'कर्त्तृकर्मणोरि'ति। तत्-

---

१ 'केचित्तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. ग. ङ. पाठः। क. कुण्डलितः। लघुशब्दरत्नधृतत्वात्।

२ इतोऽग्रे—'एतेन कालाऽप्रतिपादकत्वकखलो वर्त्तमानकालप्रतिपादकलडर्थेऽप्रवृत्तेरिदंप्रत्युदाहरणं चिन्त्यम्। 'आढ्येन सुभवितव्यमि'ति तु वक्तुमुचित-मित्यपास्तम्। 'पचतीति, पाचयतीति पाचक' इति विवरणवदुपपत्तेरिति दिक्' इति ग. पाठः।

उदाहरति—**ईषदिति** । **दुष्पान इति** । 'इदुदुपधस्ये'ति षः ।

**षात्पदान्ता** । 'कृत्यच' इति, 'भावकरणयोरि'ति च प्राप्तं निषिध्यते । **पदे अन्त इति** । अत्र च 'अन्त'ग्रहणमेव मानम् ।

**क्तिच्क्तौ च** । 'क्तिच्-कृतौ चे'ति पाठस्तु आकरविरुद्धः । 'चो 'न क्तिची'ति विशेषणाऽर्थ' इति वृत्तिः । तन्न । 'एकाऽनुबन्धक'परिभाषयैव क्तिनो व्यावृत्तिसिद्धेः । 'तितुत्रे'त्यत्र सामान्यग्रहणाऽविघातार्थः चकार' इत्यपि न । तत्राऽनुबन्धाऽनुच्चारणेन तत्परिभाषाविषयाऽभावात् । 'क्तिचा बाधा मा भूदि'ति पुनः क्तविधिः । **तितुत्रेति** । इदमुपलक्षणम् , 'भूतिरि'त्यत्र परत्वात् 'श्युक' इत्यस्य प्रवृत्तेः ।

**न क्तिचि** । 'अनुदात्तोपदेशवनती'त्याद्यनुवर्त्तते । **दीर्घेति** । 'अनुनासिकस्ये'ति प्राप्तिः । **यन्तिरित्यादि** । यम-रम-वनु-तनवो धातवः । **वन्तिः तन्तिरिति** । एतद्विषये 'तितुत्रे'ति नेडिति बोध्यम् ।

**सनः क्तिचि** । अस्य विकल्पत्वात् द्वयोर्ग्रहणे फलाऽभावं मत्वाऽऽह—**सनोतेरिति** ।

**अलंखल्वोः** । 'छन्दसि' 'भावलक्षणे' इति निवृत्तम् । **पूजार्थमिति** । 'अलं रुदित्वा' 'अलं रोदनेने'ति प्रयोगद्वयस्य वाऽसरूपविधिना सिद्धत्वात् । 'क्तल्युडि'ति तु यत्र ल्युटोऽपवादत्वं तत्रैव । स्त्र्यधिकारादूर्ध्वं क्वचिद्वाऽसरूपविध्यभावेऽपि, इह तदभ्युपगमे बाधकाऽभावादिति भावः । अव्ययकृत्त्वाद्भावः क्त्वाऽर्थः । स चाऽसत्त्वभूत एव । पक्षे ल्युडादौ तु स सत्त्वभूत इत्यन्यत् । **अलं दत्त्वेति** । 'अपात्रे न देयमि'त्यर्थः । **अलङ्कार इति** । भावे घञ् ।

---

१ 'बाधकाऽभावादिति दिक् । 'अलं रोदनेने'त्यादौ प्रकृत्यादित्वात्तृतीया । एवञ्च पक्षे स्वविषये घञ्क्तिनादयोपि भवन्त्येव-'यदीदं नारभ्येत घञादयोपि प्राप्नुवन्ती'त्येतावता तदपवादत्वस्याऽपि युक्तत्वात् । अनभिधानात् परं क्वचिन्न भवन्तीत्यन्यदेतत्' इति ग. पाठः ।

**उदीचाम्**। 'माङ' इति मेङः कृताऽऽत्त्वस्य अयं निर्देशो, न माङ' इति घुसंज्ञासूत्रे भाष्ये स्पष्टम्। माङो व्यतीहारे नित्यमवर्त्तनाच्च। मेङस्तु 'प्रणिदाने' इत्युक्त्या व्यतीहाराऽर्थकत्वम्। ङकारोच्चारणं 'नाऽनुबन्धकृतमनेजन्तत्वमि'ति ज्ञापनाऽर्थम्। तेन घुसंज्ञायां दैपोऽपि 'अदाप्' इति प्रतिषेधः सिध्यति। 'समानकर्त्तृकयोरि'त्यनेन सिद्धिम् आशङ्क्याऽऽह—**अपूर्वेति**। 'पूर्वं हि असौ याचित्वा, पश्चात् अपमयते =वस्त्रादि परिवर्त्तयती'त्यर्थो विवक्षितः। '[1]अनेन मयतेः क्त्व कृते, याचेस्तेन न। अनभिधानादि[2]'ति **हरदत्तः**। **अपमित्येति**। गतिसमासे 'समासेऽनञ्पूर्वे'ति वक्ष्यमाणेन क्त्वो ल्यप्।

**परावर**। 'अवर'शब्दोऽत्र पूर्ववाची। पराऽवरशब्दयोः सम्बन्धिशब्दत्वात् यदपेक्षं पराऽवरत्वं गम्यते, तयोः पूर्वपरयोरेव पराऽवराभ्यां योगो विवक्षित इत्याह—**परेणेत्यादिना**। योगश्चाऽत्र क्रियाद्वार[3]कोऽन्येन, साक्षाद्वा क्रियया, स सर्वोऽपि गृह्यते। तत्र 'यस्य यत्क्रियाद्वारकः सम्बन्धो, यत्क्रियया वा, तद्वाचकात् क्त्वे'त्यर्थः। तत्र आद्ये परयोगमुदाहरति—[4]**अप्राप्येति**। पूर्वत्वादिकं च तत्तत्पुरुष-तत्तदवधिभेदेन भिन्नम्। तत्र दक्षिणदेशस्थानाम् अप्राप्य गङ्गां विन्ध्यः प्राप्य इत्यर्थः। तत्र 'अप्राप्ये'त्यस्य दक्षिणदेशस्थपुरुषकर्त्तृकनदीकर्मकप्राप्तिप्रागभावोऽर्थः। स च सामानाधिकरण्यसम्बन्धेन पर्वतकर्मकप्राप्तावन्वेति। एवं च 'विन्ध्यात्परा गङ्गे'ति फलति। अत्र परभूतनद्या 'अप्राप्ये'त्येतद्द्वारकः सम्बन्धः पर्वते गम्यते।

आद्ये एव अवरयोगमुदाहरति—**अतिक्रम्येति**। 'दक्षिणदेशस्थपुरुष-

१ 'तक्रकौण्डिन्यन्यायाच्च अनेन मयतेः क्त्व कृते' इति ग. पाठः।

२ 'अनभिधानाद्वेति हरदत्तः' इति ग. ङ. पाठः।

३ 'क्रियाद्वारकः, साक्षाद्वा, स सर्वोपि' इति ग. पाठः।

४ इतोऽग्रे–'अत्राऽस्तीत्यध्याहारः' इति ग. पाठः।

कर्तृक-पर्वतकर्मक-प्राप्तिध्वंससमानाधिकरणा या प्राप्तिः, तदाश्रयीभूता नदी'त्यर्थः । द्वितीये उदाहरणम्-'अवेर्मांसमि'ति विगृह्य 'अविक'शब्दा-दुत्पत्तिरि'ति । विग्रहो विभिन्नत्वेन ज्ञानम् । 'तत्समानाधिकरणा, तदुत्तरकालिकी वा प्रत्ययकर्तृकोत्पत्तिरि'त्यर्थः । परावरत्वं चाऽत्र तादृश-ज्ञानोत्तरकालिकत्वात्प्रत्ययोत्पत्तेर्लोकव्यवहारात् वैवक्षिकम् । स्पष्टं चेदं 'खलयवे'ति सूत्रे कैयटे । एवञ्च इदं सूत्रम् असमानकर्तृकाऽर्थम्, अपूर्व-कालाऽर्थं चेति पर्यवसन्नम् । 'अलंखल्वोरि'ति तु द्वितीयक्रियाऽभावा-ऽर्थम्, अपूर्वकालाऽर्थं च । एवञ्च 'अलंखल्वोरि'त्यत्र अधिकृतमपि 'धातुसम्बन्धे' इत्येतत् न सम्बध्यते इत्याहुः ।

**समानकर्तृकयोः पूर्वं** । 'समान'शब्द एकवाची । यद्वा तत्तन्निरूपित-शक्तेर्भेदात् विशिष्टभेदेन सादृश्यम् । एवञ्च एककर्तृकत्वं फलति । इह धात्वधिकारेऽपि समानकर्तृकत्वं क्रिययोरेव सम्भवतीत्याशयेनाऽऽह— **धात्वर्थयोरिति** । निर्धारणे षष्ठी, सप्तमी वा । 'पूर्वकाले' इति बहुव्रीहिः । अर्थोऽन्यपदार्थः ।

'तुमर्थे' इत्यनुवृत्त्या एषां कर्त्रर्थत्वाऽभावे बोधिते, विशिष्याऽर्था-ऽनिर्देशात्स्वार्थे एते । स्वार्थश्च भावः । 'कर्तरि कृदि'ति कर्त्रर्थकत्वे प्रसक्ते, 'तुमर्थे' इत्युक्त्या तुमर्थो न कर्त्रेति स्थिते, उक्तन्यायेन तुमर्थस्याऽपि भावत्वं लब्धम् । अत एव एषां न घञादिवत्सिद्धभाववाचित्वम् । अत एव 'भावे' इत्युपेक्ष्य 'तुमर्थे' इत्युक्तम् । न च धातुनैव अर्थस्य लब्धतया क्त्वा निरर्थकः । क्रियाऽन्तरे सामानाधिकरण्यो-त्तरकालिकत्वसंसर्गा-भ्यामन्वये तात्पर्यग्राहकत्वात् । धातुसम्बन्धाऽधिकारेण क्रियान्तरा-ऽन्वये एवाऽस्य साधुत्वात् । 'विशेष्यनिष्ठः संसर्ग' इतिमते उत्तरकालिकत्वं

---

१ इतोऽग्रे-'विशेष्यांऽशमादाय क्रिययोरेककर्तृकत्वम् । अन्यथा तत्तन्निरूपित-शक्तेर्भेदाद्विशिष्टभेदेनैकत्वाऽनुपपत्तिः' इति ग. पाठः ।

संसर्गः । 'विशेषणनिष्ठः स' इति मते तु पूर्वकालत्वं संसर्ग इति बोध्यम् ।

अत्र 'समानकर्त्तृकयोरि'ति सूत्रांऽशेन सामानाधिकरण्यम् उपनिबद्धम् । स च बहुव्रीहिः । 'क'प्रत्ययदर्शनात् । धातूपात्तव्यापाराश्रयस्य कर्त्तृत्वेन सामानाधिकरण्ये पर्यवसानात् । निर्द्धारणविभक्त्या च द्योत्यत्वं स्फुटीकृतम् । अन्यथा 'समाने कर्त्तरी'त्येव वदेत् । निर्द्धारणविभक्तिबलादेव च 'पूर्वकाले' इत्यस्य बहुव्रीहित्वम् । व्यापारश्चाऽन्यपदार्थः । निर्द्धारणस्य सजातीयविषयत्वेन निर्द्धार्यमाणस्य क्रियात्वलाभात् । अत एव 'तत्र विद्यमानादि'ति व्याख्यायते ।

एतेन 'पूर्वकाले' इति कर्मधारयः । एवं च स वाच्य' इति परास्तम् । 'भोजनपूर्वकालिकं व्रजनमि'ति तद्विशेष्यकबोधाऽऽपत्तेश्च । न चेष्टाऽऽपत्तिः । क्रियाप्राधान्यविरहेण आभीक्ष्ण्ये द्वित्वाऽनापत्तेः । गुणभूतक्रियामाश्रित्य तु न द्वित्वम् । पाचकादावतिप्रसङ्गात् ।

किंच तद्विशेष्यकबोधे इष्टाऽऽपत्तौ 'धातुसम्बन्धे' इत्यस्य बाधाऽऽपत्तिः । न च परम्परासम्बन्धस्तस्याऽर्थः । अधिकृतस्य 'क्रियासमभिहारे' इत्यादौ साक्षात्सम्बन्धपरताया एव दृष्टत्वात् । तथात्वे लाघवाच्च । परम्परयाऽन्वये प्रत्ययस्य इतरत्राऽन्वयाय सम्बन्धाऽन्तरकल्पनागौरवम् । अत एवाऽत्र वाक्याऽर्थस्थानाऽऽपन्नसम्बन्ध एव द्योत्यो, न तु पदार्थभूत इति कर्मप्रवचनीयाद्वैलक्षण्यम् । किञ्च[2] पूर्वत्र क्त्वाप्रत्ययस्य कालो न वाच्य इति, तदैक्यरूप्याय इहाऽपि तथैवोचितम् । नहि सप्तमीनिर्देशमात्रेण वाच्यत्वं लभ्यते । 'उदोऽनूर्ध्वकर्मणि' 'प्रथने वावशब्दे' इत्यादौ व्यभिचारात् । तत्राऽनुशासनज्ञस्य तद्विशेषाऽवगतिराक्षेपादेव

१ 'पूर्वकालतानिरूपकत्वं संसर्ग इति बोध्यम् । धातुसम्बन्धाऽधिकारेण क्रियाऽन्तराऽन्वये एवाऽस्य साधुत्वात्' इति ख. ग. ङ. पाठः ।

२ अत्र 'किञ्च पूर्वत्र' इति ख. ग. ङ. पाठः, मनोरमापाठश्च । 'पूर्वक्त्वाप्रत्ययस्य' इति तु क. पाठः ।

[1]भवतीत्यन्यलभ्यत्वं यदि, तर्हि इहाऽपि तुल्यम् । यद्यपि 'प्रत्ययाऽर्थस्य प्राधान्यमि'ति न नियमः, [2]आख्याते व्यभिचारात्, तथाऽपि 'पूर्वकाले' इत्यस्य कर्मधारयत्वे वैयर्थ्यम् । 'भूते' इत्येव सिद्धेः । भूतत्वं च समभिव्याहृतक्रियाऽपेक्षं, तव पूर्वकालत्ववत् ।

[3]परे तु 'पूर्वकाले' इति तद्गुणसंविज्ञानो बहुव्रीहिः । एवञ्च पूर्वकालप्रकारको बोधः । 'पूर्वकालविशिष्टक्रियावाचकाद्धातोरि'त्यर्थः । वर्त्तमानकालादेर्लडादिवत्तस्य क्त्वा द्योतकः । अत एव 'इह कस्मान्न भवति— 'पूर्वं भुङ्क्ते, पश्चाद्व्रजती'ति, '[4]स्वशब्देनोक्तत्वान्ने'ति भाष्यं, 'पौर्वकाल्ये द्योत्ये क्त्वा, न तु विषयभावे' इति कैयटश्च सङ्गच्छते[5] । 'पश्चाच्छब्देन उत्तरकालिकत्वस्योक्तत्वमि'ति भाष्याऽऽशयात् । 'पौर्वकाल्य'शब्देन च 'पूर्वः कालो यस्मात्, तद्भाव' इत्यर्थकेन उत्तर[6]कालत्वमेवोच्यते । '[7]समानकर्तृकत्वं तु न क्त्वाऽर्थः । सामानाधिकरण्यसंसर्गणाऽन्वये तस्य

१ 'भविष्यति' इति ख. ङ. पाठः ।

२ 'स्त्रीप्रत्यये, आख्याते च' इति ख. ग. पाठः ।

३ 'एतेन बहुव्रीहिस्तद्गुणसंविज्ञानः' इति ख. ग. ङ. पाठः ।
'परे तु बहुव्रीहिस्तद्गुणसंविज्ञानः' इति क. पाठः ।

४ 'स्वशब्देनोक्तत्वान्नेति' इति ख. ग. ङ. पाठः । क. नास्ति ।

५ 'सङ्गच्छते' इति परास्तम्' इति ख. ग. ङ. पाठः ।

६ 'उत्तरकालत्वमेवोच्यते इति न कैयटाऽसङ्गतिः । 'तस्य संसर्गत एव लाभेन तत्र शक्तिकल्पनाऽनौचित्याच्च । 'संसर्गो विशेषणनिष्ठ' इति पक्षे तु पूर्वकालकत्वस्य संसर्गस्य द्योत्यस्य पूर्वादिशब्दैर्द्योतितत्वेन, क्त्वाऽभाव इति भाष्याऽऽशयात् । द्योतकविषयेऽपि क्वचिदुक्तार्थानामितिन्यायाऽङ्गीकारात्' इति ख. ङ. पाठः । क. कुण्डलितः ।

७ 'एतेन 'समानकर्तृकत्वं क्त्वाऽर्थ' इत्यपास्तम् । सामानाधिकरण्यसम्बन्धेनाऽन्वये' इति ख. ग. ङ. पाठः ।

अर्थात् लाभेनाऽन्यलभ्यत्वात्। 'अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वाऽन्येभ्यो व्रजितृभ्योऽनन्तरं व्रजती'त्यर्थे तु 'पूर्वं भुक्त्वा, पश्चाद्व्रजती'त्युचितमेव। 'भुक्त्वैव तृप्तो, न पीत्वा' 'अधीत्य तिष्ठती'त्यादौ क्वचिद्व्याप्यत्वादिभानेऽपि मानाऽन्तरगम्यत्वान्न क्त्वाद्योत्यतेति दिक्।

द्वित्वमिति। पूर्वत्वस्य, समानकर्त्तृकत्वस्य च भेदघटितत्वेन अनेकक्रियालाभेऽपि, प्रथमाऽतिक्रमे कारणाऽभावेन द्विवचननिर्देश इति भावः।

अयमाशयः—आख्यातवाच्यक्रियायाः प्राधान्यात् तां प्रति क्त्वाऽन्तोपस्थिताः सर्वा एव विशेषणम्। न तु तासां परस्परं सम्बन्धः। 'गुणानां च पराऽर्थत्वादि'ति न्यायात्। एतेन 'अमीषां पूर्वमानये'त्युक्ते यथा मध्यमो नाऽऽनीयते, एवम् अत्राऽपि बहुक्रियासमभिव्याहारे मध्यमक्रियावाचकात्प्रत्ययो न स्यात्' इत्यपास्तम्। अत एवाऽनियतः प्रयोगः—'स्नात्वा, भुक्त्वा, पीत्वा व्रजति'। 'पीत्वा, भुक्त्वे'त्यादि च।

'आवाह्य षोडशोपचारैः पूजयेदि'त्यादौ तु उक्तसम्बन्धेन आवाहनवति पूजने विशिष्टे 'षोडशोपचारैरि'त्यस्य करणत्वेनाऽन्वयः। तेन आवाहनस्य षोडशोपचाराऽन्तर्गतत्वेऽपि न दोष इति बोध्यम्।

उत्तरकालत्वं चाऽत्र न अव्यवहितम्। किन्तु व्यवहितमपि। व्यवधानस्य च तात्पर्यबलेनैव व्यवस्था। अत एव 'भुक्त्वा व्रजति' 'अद्य भुक्त्वा श्वो व्रजिते'[3]त्यादिसिद्धिः।

---

१ इतोऽग्रे—'केचित्तु 'समानकर्त्तृकयोः पूर्वस्यामि'त्येव सिद्धे,'काल'ग्रहणात् पूर्वमात्रग्रहणम्। तेन प्रत्येकाऽऽनन्तर्यविवक्षायामपि क्त्वा साधुः। अत एव 'समानकर्त्तृकयोरनन्त्याया' इति वार्त्तिकेन एकवाक्यता। भाष्यमपि मुनिद्वयैकवाक्यतया भङ्क्त्वा व्याख्येयमित्याहुः' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

२ 'श्वो व्रजिष्यति' इति लघुशब्देन्दुशेखरे पाठः।

३ 'इतोऽग्रे—'आस्यते भोक्तुमि'त्यत्र भुजेर्न क्त्वा। अपूर्वकालत्वात्। आसे-

**केचित्तु** 'धातुसम्बन्धे' इत्यधिकारात्, 'समानकर्तृकयोरि'त्युक्त्या च क्रियाऽन्तरसम्बन्धे एवाऽस्य साधुत्वम् । तच्च क्रियाऽन्तरं प्रधानन्यायेन प्रधानमेव गृह्यते' इत्याहुः । तन्न । 'तृज्वत्क्रोष्टुरि'तिसूत्रस्थे 'आहृत्य तृचो यच्छास्त्रमि'ति भाष्यप्रयोगे 'शास्त्रशब्दप्रतिपाद्य-शास्त्रकरणक-शासनक्रियाऽपेक्षपौर्वकाल्याऽऽश्रयः प्रत्यय' इति **कैयटेन** व्याख्याना-दि'त्यन्ये । अत एव 'भुक्त्वा गत' इत्यादिप्रयोगोपपत्तिः ।

'स्वरतिसूती'ति विकल्पप्राप्तेराह—**स्वरत्यादेरिति** । **पूर्वविप्रति-षेधेनेति** । पुरस्तात्प्रतिषेधकाण्डारऽऽम्भसामर्थ्यादित्यर्थः । **स्कन्त्वेति** । 'एकाच' इति नेट् ।

**न क्त्वा सेट्** । यद्यपि 'मृडमृदवसः क्त्वे'ति योगं विभज्य 'एभ्य एव सेट् क्त्वा कित्, नाऽन्येभ्य' इति नियममाश्रित्य भाष्ये इदं प्रत्या-ख्यातं, तथाऽपि 'एभ्यः क्त्वैवे'ति विपरीतनियमोऽपि स्यादिति सूत्रा-ऽऽरम्भः । क्त्वेति किम् ? । 'निगृहीतिः' । 'निगृहीतम्' । अनेन कित्कार्यं निषिध्यते, तत्र कर्त्तव्ये आहार्या तदभावबुद्धिर्वा क्रियते । अन्यथा कित्त्वनिषेधे ककारश्रवणं स्यात् । स्पष्टं चेदं 'तस्य लोप' इत्यत्र भाष्ये । एवमन्यत्राऽप्यूह्यम् ।

**मृडमृद** । क्लिश दिवादिः, क्र्यादिश्च । **उषित्वेति** । 'वसती'ति इट् । यजादित्वात् सम्प्रसारणम् । 'शासिवसी'ति षः ।

**नोपधा** । 'अन्त'ग्रहणं स्पष्टाऽर्थम् । **कोथित्वेत्यादि** । 'नोपध'ग्रहण-सामर्थ्यात् 'रलो व्युपधादि'ति कित्त्वविकल्पोऽपि न । न च 'ऋफ, ऋम्फे'त्यत्र आद्यव्यावृत्त्यर्थं 'नोपध'ग्रहणं चरितार्थमिति वाच्यम् ।

स्तु वाऽसरूपन्यायेन लट् । यदा आसेः क्त्वा, तदा भुजेस्तुमुन् न । अन-भिधानादि'ति कैयटः' इति ख. ग. ङ. पाठः । क. कुण्डलितः ।

१ 'ऋप' इति ख. ग. पाठः । २ 'इति चेन्न' इति सर्वत्र पाठः । तत्र तु आदौ 'न च' इत्यत्र 'ननु' इति पाठः कल्प्यः ।

'नोपध'ग्रहणे कृतेऽपि 'न क्त्वे'ति निषेधेन'अर्फित्वे'त्यस्य आद्येन दुर्वारतया, द्वितीयस्य अनेन विकल्पेन 'ऋफित्वे'त्यस्य दुर्वारतया च विशेषाऽभावात्। न च चुरादीनाम् अनित्यण्यन्ततया णिजभावे 'पृथ प्रक्षेपे' इति व्यावृत्त्या चरिताऽर्थमिति वाच्यम्। सर्वेषाम् अनित्यण्यन्तत्वे मानाऽभावात्। **ऋतित्वेति**। ऋतिः सौत्रः। तस्य आर्द्धधातुकविषये ईयङो विकल्पनात्, तदभावे कित्त्वमनेन विकल्प्यते।

**तृषिमृषि**। 'काश्यप'ग्रहणं पूजाऽर्थम्। 'वे'त्यनुवृत्त्यैव सिद्धेः। 'उदितो वे'ति विकल्पे प्राप्ते आह—**अञ्चेः पूजायामितीति**। **अञ्चित्वेति**। 'न क्त्वा सेडि'ति अकित्त्वात् नलोपो न।

**जॄव्रश्च्योः**। जॄः 'श्र्युकः किती'ति निषेधे, व्रश्चेरूदित्त्वाद्विकल्पे प्राप्ते वचनम्। **झलादाविति**। 'अनुनासिकस्य क्वी'त्यतो 'झली'ति वर्त्तते।

**झलादावितीति**। 'अनिदितामि'त्यतः 'क्ङिती'त्यनुवर्त्त्य 'किति क्त्वि' इति व्याख्येयमित्यर्थः। सेट् क्त्वा च न किदिति भावः।

**खात्वेति**। 'उदितो वे'ति वेट्। **जग्ध्वेति**। 'झरो झरी'ति पाक्षिको लोपः।

**समासे**। 'अनञि'ति पर्युदासः। तेन 'नञ्सदृशाऽव्ययपूर्वपदके, प्रत्यासत्त्या 'क्त्वाऽन्तोत्तरपदके' इत्यर्थः। तेन 'स्नात्वाकालक' इत्यादौ मयूरव्यंसकादिसमासे न दोषः। 'परमकृत्वे'त्यादौ च न दोषः।

न चैवम् 'अनञ' इत्येव सिद्धे 'पूर्व'ग्रहणं व्यर्थम्। इष्टाऽऽपत्तेः। ध्वनितं चेदम् 'अनञो वा परस्ये'ति भाष्येण। **प्रकृत्येति**। 'प्र'शब्दः

१ इतोऽग्रे—'तृषिमृषिकृषेरि'ति सूत्रे 'काश्यपस्ये'ति योगं विभज्य, 'तृषी'त्याद्यनुवर्त्त्य, 'ऋदुपधानां चेत्तृष्यादीनामेवे'ति नियममाश्रित्य 'नोपधे'त्यस्य वारयितुं शक्यत्वाच्च' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

२ इतोऽग्रे—'अव्ययं च तक्रकौण्डिन्यन्यायात् क्त्वान्तभिन्नमेव' इति ग. पाठः।

क्त्वाप्रकृत्यर्थगतं प्रकर्षं द्योतयन् 'कुगती'ति क्त्वाऽन्तेन नित्यं समस्यते इति बोध्यम् ।

**कोऽसिचदिति** । 'एङः पदान्तादि'त्येकादेशस्य परादिवत्त्वेन 'ओसिचदि'त्यस्य पदत्वात्, सस्य अपदादित्वेन, 'सात्पदाद्योरि'त्यस्य अप्राप्त्या, प्राप्तं षत्वम् एकादेशस्याऽसिद्धत्वेन अकारव्यवधानान्नेत्याशयः । प्रासङ्गिकं[1] षत्वमुदाहृत्य, प्रकृतं ल्यपि कार्यं तुकमुदाहरति— **अधीत्येति** । न चाऽत्र तुक् दुर्लभः । ( 'अकृतव्यूह'परिभाषया दीर्घात्पूर्वं तदप्राप्तेः । न च दीर्घोत्तरमनेनाऽसिद्धत्वात्सः )[2] । पदान्तपदाद्योरेकाऽऽदेशस्यैव असिद्धताया भाष्ये उक्तत्वात् । अत्र च 'गतिकारके'तिपरिभाषया उत्तरखण्डे सुबुत्पत्तेः पूर्वमेव समासादिति वाच्यम् । तत्र 'पद'शब्देनाऽर्थवत उपलक्षणात् । बहिरङ्गपरिभाषयैव सिद्धे, इदं 'नाऽजानन्तर्ये' इत्यस्य ज्ञापनाऽर्थमित्यादि निरूपितम् अच्सन्धौ ।

**तेन मान्तेति** । इदं च 'अनुदात्तोपदेशे'ति सूत्रे भाष्ये स्पष्टम् । **नान्तानिटामिति** । प्रयोगाऽभिप्रायेण बहुवचनम् । **आत्त्वेत्त्वेति** । यद्यपि भाष्ये ईत्त्वमपि पठितं, तथाऽपि आरम्भसामर्थ्येन 'न ल्यपी'त्यनेनैव सिद्धिं मत्वा तदुपेक्षितम् । इदमेवाऽभिप्रेत्य भाष्ये अनुनासिकलोपो नोक्तः । 'वा ल्यपी'त्यारम्भसामर्थ्येनैव तत्सिद्धेः । **विधायेति**[3] । क्रमेण 'दधातेर्हिः', 'दो दत् घोः', 'जनसने'त्यात्त्वम्, 'द्यतिस्यती'तीत्त्वम्, 'अनुनासिकस्ये'ति, 'क्रमश्च क्त्वी'ति वा दीर्घत्वं,'च्छ्वोः शूडि'ति शूट्त्वं च न । एवमेव 'प्रशाये'त्यादौ 'शाच्छोरि'तीत्त्वाऽभावोऽपि बोध्यः । तादिकित्त्वाऽभावेन ल्यपि कृते तदप्राप्तिः । ल्यपः पूर्वमपि न । 'अन्तरङ्गानपी'ति-

१ 'प्रासङ्गिकषत्वम्' इति क. पाठः ।

२ अयं ख. ग. ङ. पाठः । क. कुण्डलितः ।

३ 'प्रधायेति' इति ग. पाठः ।

न्यायात्[1]। इडभावस्तु 'प्रदीव्य', 'प्रखन्ये'त्यादौ बोध्यः। ( जेनेक्ति[2] ? )।

**न ल्यपि**। 'निपीये'ति प्रयोगस्तु'पीङ् पाने' इति दैवादिकस्य बोध्यः। **विगणय्येति**। अल्लोपस्य स्थानिवत्त्वम्,असिद्धत्वं च न। अपूर्वविधित्वात्, व्याश्रयत्वाच्च। पञ्चमीसमासस्याऽनित्यत्वाच्च[3]। ननु 'लघुपूर्वादि'ति 'लघुः पूर्वो यस्मादि'ति बहुव्रीहिः। तत्र अवध्यवधिमतोः साजात्यात् वर्णस्य अन्यपदार्थत्वेन, वर्णग्रहणे च जातिग्रहणात् 'प्रचिकीर्ष्ये'त्यादौ दोष इति चेन्न। जातिग्रहेण अनेकग्रहणेऽपि[4] प्रकृते वर्णद्वयस्यैव ग्रहणेनाऽदोषात्।

अत एव 'सनि मीमे'त्युत्तरं'दम्भ इच्च' 'आप्ज्ञप्यृधामि'ति दम्भेरपि इस्-ईत्त्वाभ्यां, नलोप-संयोगादिलोपाभ्यां सिद्धे, 'दम्भ इच्चे'ति इत्त्व-विधानं चरितार्थम्। इस्भावे हि'सुन्भे'ति वर्णत्रयसत्त्वेन कित्त्वाऽनापत्तेः। 'अ-इ-उ अपेही'त्यादावपि द्वयोरेव प्रगृह्यत्वाऽऽपत्तौ आकरतात्पर्यम्।

**प्रणमय्येति**। 'मितां ह्रस्वः'। **प्रबेभिदय्येति**। भिदेर्यङन्तात् णिचि, अल्लोपे, 'यस्य हल' इति यलोपः। ह्रस्व-यलोपा-ऽल्लोपानाम् आभीयाऽसिद्धत्वं तु न[5]। व्याश्रयत्वात्—'णौ ह्रस्वादयो, णेरयादेशस्तु ल्यपी'ति।

**आप्नोतेरिति**। इङादेशस्य तु लाक्षणिकत्वान्न ग्रहणमिति भावः। **कथमिति**। स्वाप-हासोत्तरं, तत्समकालं वा व्यादान-निमीलनयोः सत्त्वेन क्त्वैव दुर्लभ इति प्रश्नः। **तदंशेति**। एतेन 'सर्वं व्याप्य ईश्वरस्तिष्ठति' 'ज्ञात्वा तिष्ठती'त्याद्यपि व्याख्यातम्। 'श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते' इत्यत्र 'स्थितस्ये'त्याद्यध्याहृत्य समानकर्त्तृकता निर्वाह्येत्याहुः।

---

१ इतोऽग्रे—'अकृतव्यूहा' इति परिभाषणाच्च' इति ग. पाठः।

२ अयं क. पाठः ?।

३ 'अनित्यत्वात्, अभावाच्च' इति ख. ग. पाठः।

४ 'अनेकग्रहणेऽपि, प्रथमाऽतिक्रमे कारणाऽभावेन वर्णद्वयस्यैव' इति ख. ग. ङ. पाठः।

५ 'ह्रस्व-यलोपयोराभीयाऽसिद्धत्वं तु न' इति ग. पाठः।

**आभीक्ष्ण्ये** । यद्यपि वाऽसरूपन्यायेन क्त्वा सिद्धस्तथापि 'विभाषाऽग्रे'-इति सूत्रेण उभयोर्विधानाय चकारः । तत्र सूत्रे साधनाऽन्तरजन्य-स्वसजातीयक्रियाऽपेक्ष-पौर्वकाल्यरूप-साधनपौर्वकाल्य-विषयाऽग्रादीनामेव ग्रहणेन,तद्विषये समानादिसूत्रेण क्त्वा तेन न्यायेन दुर्लभः । समानकर्त्तृकयोः पूर्वकालत्वाऽभावात् । नाऽप्यनेन, आभीक्ष्ण्ये पूर्वविप्रतिषेधेन अस्यैव इष्टत्वेन, अनाभीक्ष्ण्ये एव तत्प्रवृत्तेः ।

**द्वित्वमिति** । 'नित्यवीप्सयोरि'ति, 'आभीक्ष्ण्ये द्वे' इति वा । यद्यपि आभीक्ष्ण्यं णमुला, क्त्वा च द्योतितं, तथापि अर्थाऽन्तरेऽपि तयोर्विधानात्, द्वित्वरहितयोर्न तद्द्योतने सामर्थ्यमिति भावः ।

**पाय्यं पाय्यमिति** । 'आतो युक्' । **वा दीर्घ इति** । गमेर्ण्यन्तात् णमुलि, मितां ह्रस्वे च कृते, वा दीर्घ इत्यर्थः । **ण्यन्तस्यापीति** । 'जागर्त्तेश्चिण्-णमुलोर्वा वृद्धिरि'ति तु अपाणिनीयमिति भावः ।

**न यद्य** । न च 'यद्याकाङ्क्षे' इत्येव 'यच्छब्दयोगे चेत् आकाङ्क्षे एवे'ति नियमेन सिद्धमिति वाच्यम् । विपरीतनियमाऽऽपत्तेः । 'अनाकाङ्क्षे' इति पचाद्यजन्तेन नञ्समास इत्याशयेनाऽऽह—**नाकाङ्क्षते चेदिति** । क्त्वा-प्रकृत्यर्थक्रियाया यद्यपि सर्वत्रैव आकाङ्क्षा, तथापि आख्यातोपात्तक्रियाया आकाङ्क्षा निषेधविषयः । **चेदिति** । 'नाऽऽकाङ्क्षतश्चे'दि'ति युक्तः पाठः ।

**इह क्त्वाणमुलाविति** । 'पूर्वकाले यत्प्राप्तं तन्ने'ति वचनव्यक्त्या प्रकरणाऽपेक्षयैव प्रतिषेधाऽभ्युपगमात् । एतेन 'अनन्तरस्ये'तिन्यायेन आभीक्ष्ण्ये पूर्वसूत्रविहितक्त्वा-णमुलोर्निषेधेऽपि, व्यवहितसूत्रेण क्त्वा स्यादेवे'ति निरस्तम् ।

**विभाषाऽग्रे** । 'अत्र साधनपौर्वकाल्यविषयाणामेव अग्रादीनां ग्रहण-

---

१ 'समानादिसूत्रेण क्त्वस्तेन न्यायेन दुर्लभत्वात्' इति ख पाठः । लघुशेखरे च ।

२ 'आकाङ्क्षते इति कर्मव्यतिहारे तङ्'इति ग. पाठः ।

३ इतोऽग्रे—'क्वचित्तु परस्मैपदमेव पठ्यते' इति ग. पाठः ।

मि'ति 'समानकर्त्तृकयो'रि'त्यत्र भाष्य-कैयटयोः। **नाऽनुवर्त्तते इति।** एवञ्चाऽप्राप्तविभाषेयम्। यद्यपि अग्रशब्दो देशविशेषवाच्यस्ति—'प्रभोरग्रे गच्छती'त्यादौ, तथापि 'प्रथम'साहचर्यात् कालविशेषवाच्येव इह गृह्यते। 'अग्रे' इति सप्तम्यन्ताऽनुकरणम्। अत एव विभक्तेर्लुक् न, 'अस्यवामीय'मितिवत्।

**अग्रेभोजमिति।** 'अमा च, अन्येन च तुल्यविधानमेतदि'ति उपपद-समासाऽभावः। 'अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वे'त्यर्थः। यदा तु अग्रे-प्रभृतिभिर्व्रजनाऽऽदिक्रियाऽपेक्षं भुज्यादेः पौर्वकाल्यमुच्यते, तदा क्त्वा-णमुलौ न। ताभ्यां द्योत्यस्य भुज्याद्यपेक्षव्रजनादिनिष्ठोत्तरकालिकत्वस्य 'अग्रे'शब्दादिभिरेव द्योतितत्वादित्याहुः। **पक्षे लडादय इति।** यद्यपि वाऽसरूपन्यायेन सिद्धास्ते, तथापि क्त्वा-णमुलोः सह विधाने तदभाव-ज्ञापनाऽर्थं 'विभाषा'ग्रहणम्। एवञ्च पूर्वसूत्रविषये लडादयो[1] न।

**पूर्वविप्रतिषेधेनेति।** कर्त्तृपौर्वकाल्येऽपि पूर्वसूत्रं प्रवर्त्तते इति भावः। इदं च प्रकृतसूत्रे, 'नवे'तिसूत्रे च भाष्ये स्पष्टम्।

'स्वादुमी'त्यर्थग्रहम्। व्याख्यानात्। तदाह—**स्वाद्वर्थेष्विति। मान्तत्व-मिति।** ननु खमुञम् अनुवर्त्त्य णमुल्ग्रहणं, मान्तत्वनिपातनं च त्यज्यताम्, 'अरुर्द्विषदि'त्येव मुम्सिद्धेरिति चेन्न। च्व्यन्तस्याऽव्ययत्वेन 'अनव्य-यस्ये'ति निषेधात् मुमनापत्तेः। तथा च 'स्वादुङ्कारमि'त्यत्र 'च्वौ चे'ति दीर्घः स्यात्। सम्पन्नादिषु 'अस्य च्वौ' इतीत्त्वं स्यात्। किञ्च स्त्रियां 'वोतो गुणे'[2]ति ङीषि, 'खिती'ति ह्रस्वे 'स्वाद्विङ्कारमि'ति स्यात्। एतेन 'मुमेव विधीयतां स्वादुशब्दस्ये'त्यपास्तम्। च्व्यन्ते दीर्घादौ कृते, मुमापत्तेः। स्त्रियां दोषाच्च।

---

१ 'लडादयो नेति वदन्ति' इति ख. ङ. पाठः। इतोऽग्रे च—'ज्ञापकविषयतां संपादयितुमेव 'णमुल् चे'ति चकार' इति कैयटः' इति ग. पाठः।

२ 'वोतो गुण'इति ङीषि 'स्वाद्वीङ्कारमि'ति स्यात्। 'खिती'ति ह्रस्वे 'स्वाद्विङ्कारमि'ति स्यात्' इति ख. ङ. पाठः।

न च प्रत्ययसंनियोगेन मुमो विधानात्, अन्तरङ्गत्वेन पूर्वं प्रवृत्तौ, नैते दोषाः। सुबन्तस्य उपपदत्वेन, सुपः प्रागेव च ङ्यापोः प्रवृत्त्या दोषात्। स्वार्थ-द्रव्य-लिङ्ग-सङ्ख्यानां क्रमिकत्वात्-'प्रियकुत्सनादिषु ततः प्रवर्त्ततेऽसौ विभक्त्यन्तः' इति भाष्योक्तरीत्या पदान्तराऽन्वयात्पूर्वमेव ङ्यापोः प्रवृत्तेः। मम तु 'स्वादुमि'ति विशिष्टरूपनिपातनान्न दोषः।

ननु निपातनमाश्रित्य खमुञेव विधीयतां, किं णमुलेति चेन्न। 'खमुञि अव्ययाऽर्थमेव निपातनं स्यादिति ङीष्[1]बाधाऽनापत्तेः। णमुलि तु अपूर्वं विधीयमानं मान्तत्वं सर्वाऽर्थम्, उत्तराऽर्थं च णमुलि'ति **कैयटादयः**।

**वाऽसरूपेणेति**। 'विभाषाऽग्रे' इतिज्ञापकं तु क्त्वाणमुलोः सह विधानविषयकमिति भावः। **स्वादुङ्कृत्वेति**। 'एतत्प्रकरणस्थभावप्रत्ययमात्रविषयकं निपातनमि'ति **हरदत्ताद्युक्तेरि**ति भावः। वस्तुतो णमुल्विषयमेव निपातनम्। अत एव 'अस्वाद्वीं स्वाद्वीं कृत्वे'त्यादि भाष्यं सङ्गच्छते। अन्यथा 'साक्षात्प्रभृतिषु' इति सूत्रभाष्योक्तरीत्या 'मान्तत्वनिपातनमि'-त्यस्य 'स्वादुशब्दस्य स्वादुमादेश'इत्यर्थे लिङ्गविशिष्टपरिभाषया तस्याऽपि तदादेशापत्तौ, असङ्गतिः स्पष्टैव। भाष्यविरोधात् **हरदत्तोक्तिरप्रामाणिक्येव**। 'स्वादुङ्कृत्वे'[2]त्यस्य-'स्वादुमन्नं कृत्वे'त्यर्थः। 'उपपदत्वाऽभावात् असमास' **इत्यन्ये**। **एवम्भूतश्चेदिति**। पञ्चम्यन्त'कृञ' इत्यस्य प्रथमया विपरिणाम इत्यर्थः। **व्यर्थत्वादिति**। अनतिप्रयोजनत्वादित्यर्थः। शाब्दबोधे वैलक्षण्यमस्त्येव। क्रियासामान्यवाचकः करोतिः। तदीयश्च प्रकारः 'अन्यथा'ऽऽदिशब्दचतुष्टयेन बोध्यते। एवञ्च प्रकारविशेषविशिष्टा क्रिया णमुलन्ताऽर्थः। सा च भुज्युपात्तफलविशिष्टक्रियां प्रति अभेदेन विशेषणम्। एकस्या अपि क्रियाया विशेषणोपरागकृतभेदमाश्रित्य विशेषण-विशेष्यभावसम्भवात्। फलिताऽर्थे विशेषाऽभावात्तु

१ 'ङीप्' इति सर्वत्र पाठो दृश्यते।

२ 'मूलस्थस्य स्वादुङ्कृत्वेत्यस्य' इति ग. पाठः।

'अनतिप्रयोजनत्वादि'त्युक्तम् । तद् ध्वनयन् व्याचष्टे–**इत्थम्भुङ्क्ते इत्यर्थ इति**। फलिताऽर्थकथनमेतत्। 'सर्वथा निरर्थकत्वमि'ति तु न भ्रमितव्यम्। भेदनिबन्धनपौर्वकाल्य-समानकर्तृकत्वयोरभावे णमुल एव दुर्लभत्वात्। धातुसम्बन्धाऽधिकारबाधाऽऽपत्तेश्चेति दिक्।

यत्तु 'वचनसामर्थ्यात् णमुल्। अपार्थकमेव णमुलन्तं प्रयुज्यतामि'ति। तन्न। अर्थवत्त्वे सम्भवति, तथा कल्पनाया असम्भवात्। अत एव वाऽसरूपविधिना क्त्वाऽपि। अत एव 'अन्यथाकृत्वा चोदितम्', 'कथंकृत्वा परिहार' इत्यादिभाष्यप्रयोगाः सङ्गच्छन्ते। एतेन एषां भाष्यप्रयोगाणां प्रामादिकत्वं वदन्तो **मीमांसावार्त्तिककाराः** परास्ता' इत्याहुः।

**शिरोऽन्यथेति**। करोतेरभावे भुजिक्रियागत एव प्रकारो गम्यते, न तु शिरसोऽन्यथाकरणम्, अत आवश्यकः करोतिरिति भावः।

**यथाकारमिति**। प्रष्टुमनर्हः सन् यः पृच्छति तत्प्रश्ने इदमुत्तरम्। वाऽसरूपन्यायेन पक्षे 'क्त्वा'। 'असूयया प्रतिवचने' इति तृतीयातत्पुरुषः।

**कन्यादर्शमिति**। अत्र दर्शनविषयीभूतानां सर्वासां कन्यानां वाक्यार्थेऽन्वयात्साकल्यं बोध्यम्।

**सर्वा इति**। दर्शनविषयीभूताः सर्वा इत्यर्थः। साकल्यमपि तदपेक्षयैव। अतिशयप्रतिपादनपरं चैतत्। **जानातीत्यादि**। सत्ताऽर्थस्य विदेरकर्मकत्वान्नेह ग्रहणमिति भावः।

**यावति**। 'विन्दे'ति नुम्विशिष्टोच्चारणात् लाभाऽर्थस्यैव ग्रहणम्। तदाह—**यावल्लभते इति**। असाकल्यमनेन दर्शयति। साकल्ये हि पूर्वेणैव सिद्धमित्यर्थः।

**चर्मोदरयोः**। **कर्मणीत्येवेति**। एवञ्च 'पूरेरि'ति ण्यन्तस्य निर्देशो, न तु केवलस्य, अकर्मकत्वादिति भावः। **उदरमिति**। 'उदरपूरणविशिष्टा भुजिक्रिये'त्यर्थः। इह 'पूर्वकाले' इति न सम्बध्यते, असम्भवात्, अप्रतीतेश्चेति बोध्यम्। एवम् अन्यत्राऽपि यथासम्भवं बोध्यम्।

**वर्षप्रमाणे** । **वर्षो**—वृष्टिः । अत्र भाष्ये 'ऊलोपश्चे'त्यादि प्रत्याख्यातम् । प्रातेः के 'गोष्पदप्रमि'त्यादेः सिद्धत्वात् । एवञ्च 'गोष्पदप्रेणे'ति, तरबादौ 'गोष्पदप्रतरमि'त्यादि च सिद्ध्यति । 'गोष्पदप्रक्लृप्तमि'त्यादि तु अनभिधानान्न । न च पूरेर्घञि 'गोष्पदपूरमि'त्यस्याऽपि सिद्धौ, सूत्रं व्यर्थम् । 'गोष्पदपूरेणे'त्याद्यापत्तेः । 'गोष्पदपूरन्तरामि'त्याद्यनापत्तेश्च ।

**चेले क्नो** । 'चेले'त्यर्थग्रहणम् , व्याख्यानात् । तदाह—**चेलार्थेष्विति** । **चेलक्नोपमिति** । 'यथा वृष्टौ चेलानि शब्दायन्ते तथा वृष्ट' इत्यर्थः । 'धातूनामनेकार्थत्वात् आर्द्रीकरणं क्नोपेरर्थ' इत्यन्ये ।

**निमूलसमू** । निगतमूलं, मूलसहितं चेत्यर्थः । **सामान्यविशेषेति** । यद्यपि णमुल्प्रकृत्या, अनुप्रयुज्यमानधातुना च एक एवाऽर्थ उपस्थितः, तथाऽपि उपपदाऽर्थविशिष्टो णमुल्प्रकृत्यर्थः अनुप्रयोगाऽर्थं प्रति विशेषणमिति भावः । अत्र प्रकरणे शाब्दबोधमात्रीयं किञ्चिद्वैलक्षण्यमाश्रित्य णमुलन्तानामनुशासनबलात्साधुत्वं बोध्यम् ।

**समूलाकृत** । यथासङ्ख्यमत्रेष्यते ।

**करणे ह** । 'हिंसार्थानां च समाने'ति सिद्धे, अहिंसाऽर्थं वचनम् , हिंसायां नित्यसमासाऽर्थं च[1] । तेन प्रत्यये तु 'तृतीयाप्रभृतीनी'ति विकल्पेन स स्यात् । स्पष्टं चेदं भाष्ये । तदाह—**यथाविधीति** ।

**स्नेहने पिषः** । 'शुष्कचूर्णे'ति सूत्रे एव न स्नेहनग्रहणं कृतम् । तत्र हि 'कर्मणि दृशिविदोरि'ति सूत्रात् 'कर्मणी'ति वर्त्तते । इह तु 'करणे' इति । तदाह—**करणे इति** । **हस्तार्थे इति** । व्याख्यानात् अर्थग्रहणम् ।

**अधिकरणे बन्धः** । अत्राऽपि 'संज्ञायामि'त्याकृष्यते । तेन 'ग्रामे बद्ध' इत्यर्थे 'ग्रामबन्धं बद्ध' इति नेति स्पष्टं भाष्ये ।

---

१ इतोऽग्रे—'हिंसायां यथाविध्यनुप्रयोगे पूर्वविप्रतिषेधेनाऽस्यैव प्राप्तेः' इति ग. पाठः ।

**संज्ञायाम्**। अनधिकरणाऽर्थमिदम्। 'संज्ञायामि'ति पूर्वसूत्रेण एकम्, एतत्साध्यरूपाणि तु 'उपमाने कर्मणि चे'त्यनेन साध्यानी'ति भाष्यकृतः।

**कषादिषु। स एवेति**। स चाऽविशेषात्कृदन्तः, तिङन्तश्चेत्याहुः।

**मूलकोपदंशमिति**। अयमर्थः-'मूलकेन भुङ्क्ते'। 'किं कृत्वा'। 'उपदश्य'। 'किमुपदश्य'?। अर्थात्-'मूलकमि'ति।

**वचनेति**[1]। यदि हि[2] तृतीयान्तेन शब्दे अन्वये सत्येव प्रत्ययो भवेत्तर्हि 'करणे' इत्येव वदेत् 'करणे हन' इतिवदिति भावः। एतेन 'दशनैरुपदश्य भुङ्क्ते' इत्यादौ वचनं चरिताऽर्थमि'ति परास्तम्[3]। न[4] च 'दध्ना सह सक्तून् भुङ्क्ते' इत्यर्थे 'दध्युपदंशं सक्तून् भुङ्क्ते' इत्येतत्सिद्ध्यर्थं[5] तृतीयाग्रहणं चरिताऽर्थम्। तादृशे विषये उपदंशननिरूपिताऽऽर्थकर्मत्वस्याऽपि सत्त्वेन 'उपपदविभक्तेरि'ति न्यायेन तृतीयाया दुर्लभत्वात्। न च वचनसामर्थ्यात्समासप्रत्ययाद्युपपत्तावपि, 'मूलकेनोपदंशमि'त्यत्र समासाऽभावपक्षे कृद्ग्रहणपरिभाषया विशिष्टे प्रातिपदिकसंज्ञाऽऽपादनं, समासग्रहणकृतनियमेन वारणं चाऽसङ्गतं स्यात्, प्रत्यासत्त्या प्रकृत्यर्थनिरूपितकारकत्वस्यैव ग्रहादिति वाच्यम्[6]। उपदंशे कर्मत्वेनाऽपि आर्थोऽन्वय-

---

१ 'वचनेति। प्रत्यासत्तिन्यायेन तृतीयान्तस्योपदश्यमानसमर्पकस्यैव ग्रहणादिति भावः' इति ग. पाठः।

२ 'अत्र केचित्—यदि हि तृतीयान्तेन' इति ख. ग. ङ. पाठः।

३ 'इत्यपास्तम्' इति ख. ग. ङ. पाठः।

४ 'यत्तु 'तृतीयान्तेन शब्देऽन्वये एव सूत्रप्रवृत्तौ 'करणे' इत्येव सिद्धे 'तृतीयायामि'ति व्यर्थं स्यादि'ति। तन्न। दध्ना सह सक्तून् भुङ्क्ते इत्यर्थे' इति ग. पाठः।

५ 'इत्येतत्सिद्ध्यर्थं तदावश्यकत्वात्। दंशनमत्र दन्तसंयोग एव' इति ग.पाठः।

६ 'इति वाच्यमि'ति ग. नास्ति।

सत्त्वात्तन्निरूपितकारकत्वाऽक्षतेः । विभक्तिस्तु प्रधानाऽनुरोधिनी[1] तृतीयैव, परत्वाच्चेति[2] बोध्यम् । **कालयतीति** । 'कल विक्षेपे' । चुरादिः ।

**दण्डताडमिति** । 'तड आघाते' । चुरादिरेव ।

**सप्तम्यां चो** । पीडादीनां समाहारद्वन्द्वे उपपूर्वः पीडादिरिति मध्यमपदलोपी समासः । पुंस्त्वं सौत्रम् । पञ्चम्यर्थे प्रथमा । 'कर्षे'ति शपा निर्देशः । कृतोपधागुणस्योच्चारणात् । तत्फलं तुदादिव्युदासः । यद्यपि सोऽपि विलेखने एव, तथापि क्षेत्र विषय एव । 'पञ्चभिर्हलैः कृषती'ति दर्शनात् । एवञ्च कृषतेः क्त्वैव, 'क्षेत्रे उपकृष्ये'त्यादि, न त्विह णमुलित्याकरः । 'धनुररिभिरसह्यं मुष्टिपीडं दधाने' इति भट्टिप्रयोगे तु न णमुलन्तम्, किन्तु घञन्तम् । क्रियाविशेषणत्वाच्च द्वितीयेति बोध्यम् ।

**केशग्राहमिति** । संनिकर्षप्रतिपादनपरमेतत्, केशेषु ग्रहणं भवतु मा वा भूत् । **द्व्यङ्गुलेति** । अङ्गुलिद्वयसमाहारेण उत्कृष्य परिच्छिद्येत्यर्थः । 'ह्रस्वः खण्डः खण्डिके'ति **हरदत्तः**[3] । **शय्येति** । एवं हि नाम त्वरा, यत् आवश्यकं मुखक्षालनादि अकृत्वैव धावन्तीत्यर्थः । **यष्टिग्राहमिति** । समासाऽभावे 'यष्टिं ग्राहमि'ति । यच्छत्रमपि न प्रतीक्षन्ते इति त्वराऽवगतिः । 'पदमेकवर्जमि'त्यत्राऽपि 'उदात्तस्वरितसमकालमेव शिष्टमनुदात्तं कर्त्तव्यमि'त्यर्थात् अस्त्येव त्वरेत्यग्रे निरूपयिष्यामः । 'सौत्रत्वात् णमुलि'-त्यन्ये । **येन विनेति** । एवञ्च येन विना जीवनं, तदध्रुवमिति फलितम् ।

**यद्यपीति** । न च क्त्वानिवृत्तिः फलम् । तस्या अनिष्टत्वात् । **उपपदेति** । द्वितीयाऽन्तस्योपपदत्वाऽर्थमित्यर्थः । तेन पाक्षिकोपपदसमाससिद्धिः । **गेहस्येति** । व्याप्यमानतया द्रव्यस्य द्वित्वम् ।

**णमुलन्तस्येति** । आसेव्यमानत्वेन क्रियावचनस्येत्यर्थः । तदुक्तं—'सुप्सु

१ 'प्रधानाऽनुरोधिकरणत्वकृता' इति ग. पाठः ।

२ 'इति न दोषः' इति ग. पाठः ।

३ इतोऽग्रे—'उत्कृष्येत्यस्य गृहीत्वेत्यर्थ इत्यन्ये' इति ख. ग. ङ. पाठः ।

वीप्सा, तिङ्‌ नित्यते'ति । **द्वित्वमिति** । व्याप्यमानत्वाऽऽसेव्यमानत्वयोः केवलेन णमुला समासाऽभावे द्वित्वं विना वक्तुमशक्यत्वमिति भावः ।

**अस्यतितृषोः** । अनयोः किम् ? । 'व्यहमुपोष्य भुङ्क्ते' । क्रियाऽन्तरेति किम् ? । 'अहः अत्यस्य इषून् गतः' । न गतिर्व्यवधीयते । कालेषु किम् ? । 'योजनमत्यस्य गाः पाययति' । इह योजनकर्मकाऽत्यसनं व्यवधायकं, न कालकर्मकमिति भावः ।

**नाम्न्या दि** । 'नामशब्दे उपपदे आङ्पूर्वाद्दिशेर्ग्रहेश्च णमुलि'त्यर्थः ।

**अव्यये** । 'अयथाऽभिप्रेत'शब्द आख्यानक्रियाविशेषणम् । 'अभिमतं यथा न भवति तथा आख्याने' इत्यर्थः । तदाह—**अयथेत्यादि** ।

**नीचैः कृत्येति** । यद्यपि प्रियाऽऽख्यानमभिप्रेतमेव, तथापि तत्प्रकारस्य नीचैस्त्वस्याऽनभिप्रेतत्वमित्युदाहरणम् । अत एव 'अप्रियाख्याने' इति नाऽसूत्रि । इह वाऽसरूपेण सिद्धे क्त्वाग्रहणं 'तृतीयाप्रभृतीनि' 'क्त्वा चे'त्युपपदसमासविकल्पाय । णमुलोऽधिकारे पुनस्तद्ग्रहणम् उभयोः समप्राधान्याय । तेन उत्तरत्र उभयोरपि अनुवृत्तिः सिद्धेत्याहुः ।

**तिर्यच्य** । 'अयुक्तोऽयं निर्देशः । 'तिरश्ची'ति भवितव्यम् । सौत्रो निर्देश' इति **भाष्यम्** । 'प्रकृतिवदि'त्यतिदेशोऽत एवाऽनित्य इति तद्भावः । 'तिर्यक्कृत्ये'त्ययं समुदायोऽपवर्गे वर्त्तते । तदाह—**समाप्य गत इति** ।

**तिर्यक्कृत्वेति**[1] । 'अनृजु कृत्वा = अग्रतः स्थितं काष्ठं पार्श्वे क्षिप्त्वा, गत' इत्यर्थः ।

**स्वाङ्गे** । 'तस्प्रत्यये' इति कर्मधारयेन 'स्वाङ्गे' इत्यस्य विशेषणात् तदन्तविधिः । एवञ्च 'तस्प्रत्ययाऽन्ते स्वाङ्गे उपपदे' इत्यर्थः । 'तस्प्रत्यये परतो यत्स्वाङ्गं, तस्मिन्नुपपदे इत्यर्थ' इति **प्राञ्चः** । तत्र 'तस्मिन्नि'त्येतत् प्रकृति-प्रत्ययसमुदायपरम् । अन्यथा स्वाऽङ्गमात्रस्य उपपदत्वाऽभावात् असङ्गतिः स्पष्टैव । इह प्रत्यययोः, प्रकृत्योश्च यथासङ्ख्यं नेष्यते ।

---

१ 'तिर्यक्कृत्य' 'तिर्यक्कृत्वा' इति ग. पाठः ।

२ 'अनृजुं कृत्वा' इति ख. ग. पाठः ।

यथासङ्ख्यसूत्रभाष्यप्रमाण्यादित्याशयेनाऽऽह—**मुखतःकारमिति**। आद्यादित्वात् सप्तम्यर्थे तसिः ।

प्रत्ययेति किम् ? । 'मुखे तस्यति मुखतः' । 'अधातोरि'त्युक्तेः 'अत्वसन्तस्ये'ति न दीर्घः ।

**मुखतः कृत्वा गत इति** । 'प्रत्ययाऽप्रत्यययोरि'ति सिद्धे 'प्रत्यय'ग्रहणं तदनित्यत्वज्ञापनाय । तेन 'सनः क्तिची'त्यादौ 'सन्'धातोर्ग्रहणमित्याहुः ।

**नाधार्थ । नाऽर्थौ**—ना-नाञौ । **धाऽर्थाः**—धमुञादयः । 'द्वैधङ्कृत्य', 'द्वैधङ्कृत्वे'त्यादि । **यथासङ्ख्यमत्र नेष्यते** ।

ननु धमुञादिविधौ 'एकाद्ध' इत्यतो 'ध' इति वर्त्तते । एवञ्च तेषामादेशत्वात्स्थानिवत्त्वेन सिद्धमिति, न धांऽशे अर्थग्रहणस्योपयोगः । 'निरनुबन्धक'परिभाषाऽनित्यत्वे तु 'नां'ऽशेऽपि नोपयोग इति चेन्न । 'धमुञन्तात्स्वार्थे डदर्शनमि'ति 'ड'प्रत्ययाऽन्तसङ्ग्रहाऽर्थं तदावश्यकत्वात्—'द्वैधीकृत्ये'त्यादि ।

**तूष्णीमि** । कृञो निवृत्त्यर्थं 'भू'ग्रहणम । अत एव 'च्व्यर्थे' इति नाऽनुवर्त्तते ।

**अन्वच्या** । 'तिर्यची'तिवत् अस्याऽप्यनुकरणत्वेन साधुत्वं बोध्यम् । 'प्रकृतिवदि'त्यतिदेशस्तु वैकल्पिकः । **आनुलोम्यम्**—आनुकूल्यम् । तच्च परचित्ताऽनुसरणम् । **अग्रत इत्यादि** । 'अन्वक्'शब्दस्य आनुकूल्यमात्रे विश्रान्तेर्देशविशेषे प्रमाणं नास्तीति सूचयितुमिदम् ।

**पृष्ठतो भूत्वेति**। इहाऽनुकूलोऽननुकूलो वेति शब्देन न स्पृश्यते । 'अन्वक्'शब्दस्य देशविशेषमात्रे पर्यवसानात् । प्रमाणाऽन्तरेण क्वचिदानुकूल्यलाभेऽपि, 'अन्वक्'शब्दस्य तत्समर्पणे व्यापारविरहात् णमुल् न । किन्तु क्त्वैव । नाऽपि उपपदसमास इति व्यवस्थेति सर्वेष्टसिद्धिः ।

( इति उत्तरकृदन्तप्रकरणम् ) ।

---

इति श्री—उपाध्यायोपनामकशिवभट्टसुतसती-
गर्भजनागेशभट्टकृते शब्देन्दुशेखरे
सिद्धान्तकौमुदीव्याख्यायां
कृदन्तं समाप्तम् ।
श्रीरस्तु । वृद्धिरस्तु ।

श्रीगणेशाय नमः ।

# बृहच्छब्देन्दुशेखरः

## अथ वैदिकप्रक्रिया ।

( तत्र प्रथमोऽध्यायः ) ।

अथ वैदिकेषु विशेषमाह्—**छन्दसि पुनः**। पुनर्वस्वोर्द्वे तारे। अदितिर्देवता। लोके उद्भूताऽवयवसमुदाये निरूढत्वात् द्विवचनमेव। 'गां गताविव दिवः पुनर्वसू'। तदाह्—**लोके त्विति**। एवं विशाखयोरपि द्वे तारे। तेन लोके द्विवचनमेव। **अमरस्तु** 'राधा विशाखे'ति प्रयुञ्जानो द्विवचननियमं नेच्छति। योगविभागः 'छन्दसी'त्यस्य उत्तरत्र निवृत्त्यर्थः। योगविभागे हि चाऽनुकृष्टत्वात्तस्योत्तरत्र नाऽनुवृत्तिः। **वतीति**। 'वत्प्रत्यये परे' इत्यर्थः। **मनेरपीति**। 'आदेशप्रत्यययोरि'ति षत्वम् ।

**वृषन्निति**। 'कनिन्युवृषी'ति कनिन्नन्तस्य 'वृषन्'शब्दस्य भत्वम् उपसङ्ख्यायते। **अनङ्गत्वात्**। भसञ्ज्ञानिमित्तवसुशब्दनिरूपिताऽङ्गत्वाऽभावादिति भावः। 'अङ्गस्य' 'भस्ये'ति च तत्राऽधिकारात्। प्रत्यासत्त्या च अङ्गभसञ्ज्ञानिमित्तयोरेकत्वाऽऽश्रयणादिति तात्पर्यम्। 'एतद्वार्त्तिकद्वयं छन्दोविषयमि'ति **कैयटः**।

**संज्ञाद्वयमिति**। 'संज्ञाद्वयप्रयुक्तं कार्यमि'त्यर्थः। **उभयेति**। अयस्मयादिषु 'ऋक्वता' इत्यादयः प्रकृति-प्रत्ययसमुदायाः पठ्यन्ते। तेन 'जश्त्वमस्तु, कुत्वं मा भूदि'ति वैपरीत्यं न प्रसज्यते इति बोध्यम्।

'अयस्मयमि'त्यत्र अयसो विकार इत्यर्थे '**द्व्यचश्छन्दसी**'ति मयट्। वाचाम् इनाः—**वाजिनाः**।

**ते प्राग्धातोरिति**—अनुवृत्तिप्रदर्शनाऽर्थमुपात्तम्। 'ते प्रागि'ति सूत्रं

प्रयोगनियमाऽर्थम् । तदपवादः 'छन्दसी'त्यादिसूत्रद्वयम् । अत्र पक्षे 'ते गत्युपसर्गसञ्ज्ञा' इत्यत्र जातिपरत्वेन 'व्याहृतमि'त्यादौ न दोषः[1] । अत एव 'गतिरनन्तर' इत्यत्र 'अनन्तर'ग्रहणं चरिताऽर्थम् । न च 'छन्दसि ने'त्येव सूत्र्यताम्, अनेन 'ते प्रागि'त्यस्य निषेधे, यथेष्टसिद्धेरिति वाच्यम् । तन्त्रादिना क्वचिल्लोकेऽपि व्यवहितप्रयोगाऽर्थं 'व्यवहिताश्चे'-त्यस्याऽऽवश्यकत्वात् । 'वारुणीमदविशङ्कमथाऽऽविश्चक्षुषोऽभवदसाविव रागः' इति यथा । 'सुकटङ्कराणी'ति भाष्यप्रयोगश्च । 'स्वाढ्येन भूयते' इति वृत्तिप्रयोगश्च । 'भवति प्रे'त्यादि तु नाऽऽपादनीयम् । अनभिधानात् । त्वयाऽपि 'च घट' इत्यादीनामनभिधानेनैव वारणीयत्वात् । भाष्ये 'ते' इत्यनेन प्रादीन् उपनिषत्पर्यन्तान् स्वरूपेण परामृश्य, धातोः प्राक् प्रयुक्तानामेषां तत्तत्सूत्रैकवाक्यतया संज्ञाविधानमाश्रित्य, संज्ञानियमपक्षं दर्शयित्वा, एतत्सूत्रद्वयं प्रत्याख्यातम्, 'अनुकरणं चे'ति सूत्रे 'अनिति-पर'ग्रहणं च । अत्र पक्षे 'वारुणीमदे'त्यादिप्रयोगेषु[2] दोषशङ्कैव न । 'इन्धि-भवतिभ्यां चे'त्यस्य क्रमप्राप्तप्रथमोपन्यासत्यागे[3] बीजमाह—इन्धेरिति ।

इति[4] वैदिकप्रक्रियायां प्रथमोऽध्यायः ॥

अथ द्वितीयोऽध्यायः ।

**हविषि वर्त्तते इति** । हूयते तत् होत्रम् । 'अग्नये होत्रमि'ति 'चतुर्थी'-ति योगविभागात्समासः । 'सुप्सुपे'ति वा । 'हूयते' इति त्वर्थप्रदर्शनम् । यद्वा षष्ठीतत्पुरुषः । 'यवाग्वे'ति वाक्ये जुहोतिस्त्यागपूर्वके प्रक्षेपे । तदाह—**यवाग्वाख्यमिति** । अत्रेव प्रयोगे 'यवागू'शब्दात्तृतीया । 'अग्निहोत्र'-शब्दात् द्वितीया । विरुद्धाऽर्थकविभक्त्यनवरुद्धत्वात् नामाऽर्थयोरभेदा-ऽन्वयः । यद्यपि लोके वैकल्पिकविभक्तिविषयेऽपि विशेष्यविशेषणयोः

---

१ 'जातिपरत्वेन 'अनुव्यचलदि'त्यादौ न दोषः' इति ख. पाठः ।

२ 'इत्यादिप्रयोगः साधुरेव' इति ख. ङ. पाठः ।

३ 'प्राप्तोपन्यासत्यागे' इति ख. ङ. पाठः ।

४ 'इति प्रथमः' इति लिखितेषु पाठः ।

एकविभक्तिकत्वनियमो दृष्टः, 'एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भवती'ति 'कृञ्चाऽनुप्रयुज्यते' इति सूत्रस्थभाष्याच्च, तथाऽपि वेदे न तथा नियम इति बोध्यम्। भाष्ये तु इदं सूत्रं प्रत्याख्यातम्,—'अग्निहोत्र'शब्दो ज्योतिष्यपि वर्त्तते। 'अग्निहोत्रं प्रज्वलितमि'ति दर्शनात्। 'हूयतेऽस्मिन्नि'ति व्युत्पत्तेश्च। जुहोतिश्च प्रीणने। तद्यदा 'यवागू'शब्दात्तृतीया, तदा 'यवाग्वाऽग्निं प्रीयणती'त्यर्थः। यदा तु द्वितीया, तदा प्रागुक्तोऽर्थ' इति।

**मीमांसकास्तु**-'अग्निहोत्र'शब्दः कर्म नामधेयम्। 'तत्प्रख्यं चाऽन्यशास्त्रमि'ति न्यायात्। दृश्यते च-'स एष यज्ञः पञ्चविधोऽग्निहोत्रं, दर्शपौर्णमासावि'त्यादि। कर्मनामधेयस्थजुहोतिस्त्यागाऽर्थः। हूयते = त्यज्यतेऽस्मिन्निति होत्रम। ततोऽग्निपदेन चतुर्थी समासः, षष्ठीतत्पुरुषो वा। अतः केषां चिदन्तोदात्तपाठेऽपि न क्षतिः। व्यधिकरणबहुव्रीहौ तद्विरुध्येत। शास्त्राऽविहितत्वं च। नामधेयस्थजुहोतेरर्थाऽन्तरपरत्वं तूभयोः समानम्। एवञ्च 'भावाऽर्थाऽधिकरण'न्यायेन करणभूते होमे सामानाधिकरण्याऽऽपन्नस्य अग्निहोत्रस्य करणत्वात्तृतीयायां प्राप्तायां, पक्षे करणे द्वितीयाऽर्थमिदमि'ति वदन्ति। तन्न सूत्राऽनुगुणम्, 'कर्मणी'त्यनुवृत्तेः, न वा प्रागुक्तभाष्याद्यनुगुणमित्युपेक्ष्यम्।

**द्वितीया ब्राह्मणे**। सोपसर्गस्य च्छन्दसि 'विभाषोपसर्ग' इतिव्यवस्थितविभाषयाऽपि सिद्धेर्निरुपसर्गाऽर्थोऽयमारम्भः।

**पुरुषमृगश्चन्द्रमसे इति**। 'बहुल'ग्रहणाच्चन्द्रमसश्चतुर्थी। इदं सूत्रम्, उत्तरवार्त्तिकञ्च व्यत्ययवचनात्सिद्धम्।

**हेमन्तशिशिरा**। **अत्र केचित्**-'हेमन्तः शिशिरोऽस्त्रियामि'**त्यमरोक्तेः**, 'चक्रवज्राऽन्धकारे'ति लिङ्गाऽनुशासनसूत्रे 'तिमिरशिशिराणि नपुंसके चे'ति ( ९२ लिङ्गानु. सू. ) पाणिन्युक्तेश्च अत्र सूत्रे 'हेमन्तशिशिरौ' इति न कर्त्तव्यमि'त्याहुः।

**अहोरात्रे इति**। 'रात्राह्नाहा' इति पुंस्त्वं प्राप्तम्। **द्वित्वमतन्त्रम्**।

'अहोरात्राणि विदधत्' । न च समाहारद्वन्द्वे एकशेषादिदं सिद्धम् । समाहारद्वन्द्वेऽपि 'रात्राह्णाहा' इति पुंस्त्वप्राप्तेः । छन्दसि वक्ष्यमाणलिङ्गव्यत्ययस्यैवाऽयं प्रपञ्चः ।

**बहुलं छन्दसि** । **अडभाव इति** । 'बहुलं छन्दस्यमाङ्योगेऽपी'त्युक्तेः । **सग्धिरिति** । क्तिनि 'घसिभसोर्हलि चे'त्युपधालोपः । 'समानस्य च्छन्दसी'ति सभावः । न च भवति,[1]–'अत्ता' । 'प्रकृत्यन्तरेण सिद्धे, सूत्रप्रयोजनं मृग्यमि'ति केचित्[2] । **हनति शयते इति** । हन्ति, शेते इत्यर्थः । **त्राध्वम्** । त्रायध्वमित्यर्थः । [3]**दाति** । ददातीत्यर्थः ।

**विवष्टीति** । सप्तमाऽन्ते वक्ष्यमाणेन 'बहुलं छन्दसी'ति सूत्रेण अभ्यासस्य इकारः । 'वष्टी'ति प्राप्तम् ।

**मन्त्रे घस** । 'ह्वृ कौटिल्ये' इत्यस्य कृतगुणस्याऽनुकरणं–'ह्वरे'ति । अकारस्तूच्चारणाऽर्थः । **घस्लादेशस्येति** । 'लुङ्सनोर्घस्लृ'ति विहितस्य ।

**कुत्वमिति** । तदभावे 'व्रश्चे'ति षत्वेन 'नडि'ति रूपं बोध्यम् । 'वृ' इति वृङ्वृञोः सामान्येन ग्रहणम् । **आप्रेति** । 'प्रा पूरणे' । आङ्पूर्वः । वृजेः परापूर्वस्य–**परावर्गिति** । कृञः—**अक्रन्निति** । गमेः-**अनुग्मन्** । 'गमहने'त्युपधालोपः । ननु 'अज्ञत वे'त्यस्य **ऐतरेयब्राह्मणे** हरिश्चन्द्रवरुणसंवादे सत्त्वात्कथं 'मन्त्रे घसे'त्यस्य प्राप्तिरत आह–**मन्त्रग्रहणमिति** । **अज्ञतेति** । अजनिषतेत्यर्थः ।

**विभाषेति** । एतेनेह सूत्रे 'सिच' इत्यनुवर्त्त्य 'सिचः स्थानिभूतो यो लिरि'ति व्याख्यानात् लिङ्लिटोर्ने'ति **हरदत्तोक्तमपास्तम्** । लोपस्य वैकल्पिकतया, छन्दसि च रूपाऽन्तरस्याऽनापाद्यतया सिजनुवृत्तेर्वैफल्यात् । एवञ्च 'लि'ग्रहणमपि व्यर्थम् । 'सिच'इत्यनुवर्त्त्य तस्यैव लुका सिद्धेः ।

---

१ 'बहुलं छन्दसी'ति घस्लादेशः 'अत्ता' इत्यादौ क्वचिन्नैव भवति, बाहुलकादेवेत्यर्थः ।

२ प्रकृत्यन्तरं तु सार्वधातुकमात्रविषयमित्यरुचिः केचिदित्यनेन सूचिता ।

३ 'दाति' इत्यस्य ददातीत्यर्थ' इति ङ. पाठः ।

'आदिः सिच' इत्यस्य वैकल्पिकत्वेन, रूपाऽन्तरस्याऽनापाद्यत्वेन च तदप्रवृत्त्यर्थं 'लि'ग्रहणमित्यपि न शङ्क्यमिति दिक्[1]।

इति द्वितीयोऽध्यायः ॥

अथ तृतीयोऽध्यायः ।

**चतुर्ष्विति**। तत्राऽपि सदिजनिरमिभ्यो ण्यन्तेभ्य आम्, चिनोतेस्तु शुद्धादिति बोध्यम्। **अकरिति**। कृञो लुङि तिपि 'मन्त्रे घसे'ति च्लेर्लुकि, तिपो हल्ङ्यादिलोपे रूपम्। **लोके इति**। वेदेऽपि पाक्षिकमिदम्। 'विदाङ्कुर्वन्त्वि'ति पूर्वसूत्रात् 'अन्यतरस्याम्'ग्रहणाऽनुवृत्तेः।

**पावयामिति**। पवतेः, पुनातेर्वा ण्यन्तादाशीर्लिङि आम्। 'क्रियादि'-ति अनुप्रयोगः। **विदामिति**। विदेर्लुङि आम्। लुङन्तकरोते-रनुप्रयोगः। 'मन्त्रे घसे'ति लेर्लुक्। 'झोऽन्तः'।

**गुपेश्छ**। आयप्रत्ययाऽभावे एवेदम्। सूत्रे केवलस्योच्चारणात्। **अजूगुपतमिति**। 'गुपेर्लुङि थसस्तम्। तुजादित्वात् अभ्यासस्य दीर्घ' इति **हरदत्तः**। कल्पसूत्रे तु ह्रस्व एव प्रायेण पठ्यते। **अगौप्तमिति**। ऊदित्त्वादिडभावे'वदव्रजे'ति वृद्धिः। 'झलो झली'ति सलोपः। इट्पक्षे'नेटी'ति-वृद्धिप्रतिषेधः। गुणः। 'अगोपिष्टम्'। 'आय'पक्षे 'अगोपायिष्टम्'। इत्थं चत्वारि रूपाणि च्छन्दसि। भाषायां चङन्तं वर्जयित्वा त्रीणीति विवेकः।

'**त्वायतः** = त्वामिच्छतः। **जरितुः** = स्तोतुः मम, **कामम्** = अभिलाषं **मा ऊनयीः** = ऊनं मा कार्षीरि'त्यर्थः। 'मा ऊनन' इति भाषायाम्। ऊनयतेश्चुरादावदन्ताण्णिचि चङि,णौ कृतस्य अल्लोपस्य स्थानिवत्त्वान्नशब्दस्य द्वित्वम्। अग्लोपित्वान्न सन्वद्भाव-दीर्घो-पधाह्रस्वत्वानि। 'ध्वन शब्दे'। चुरादिरदन्तः, घटादिर्नान्तश्च। भाषायां तु 'अदध्वनत्','अदिध्वनत्' वा। 'इल प्रेरणे'। चुरादिः। 'ऐलयीत्'। 'ऐलिलदि'ति भाषायाम्। 'अर्द गतौ, याचने, हिंसायां च'। हेतुमण्ण्यन्तः। 'आर्दयीत्'। भाषायाम्'आर्दिदत्'।

यत्तु 'इदं सूत्रं लोक-वेदसाधारणम्। 'छन्दसी'ति नाऽनुवर्त्तते।

---

1 'लिग्रहणमपि न शङ्क्यमिति दिक्' इति ख. ङ. पाठः।

'विभाषे'ति चाऽनुवर्त्तते' इति । तन्न । सूत्रे नञो वैयर्थ्याऽऽपत्तेः । 'छन्दसी'त्यनुवृत्तेर्वृत्त्यादिसंमतत्वाच्चेति दिक् । **अमरदिति** । व्यत्ययेन परस्मैपदम् ।

**यत्सानोरिति** । यत्तु 'एतादृग्व्याख्याने रुहेर्लेङि शपि संज्ञापूर्वकविधेः अनित्यत्वाद्गुणाऽभाव' इत्युक्तम् । तदुपायाऽन्तरमिति बोध्यम् । लोके तु 'अकार्षीत्' । 'अमृत' । 'अदारीत्' । 'अरुक्षदि'ति । 'दॄ' इति दीर्घपाठश्च सूत्रे । ह्रस्वपाठे तु 'अदृते'ति बोध्यम् ।

**छन्दसि निष्टर्क्य** । **क्यपीति** । ऋदुपधत्वादिति भावः । अत्र प्रत्ययव्यत्ययो, वर्णव्यत्ययश्च[1] 'व्यत्ययो बहुलमि'त्येव सिद्धः, षत्वमात्राऽर्थन्तु निपातनमिति बोध्यम् । **दीर्घश्चेति** । अत एव तुगभावः ।

**शिषेरिति** । 'शासेरि'त्यन्ये । 'ध्वृ हूर्च्छने' । **यजेर्य इति** । 'देवशब्दे उपपदे' इत्यादिः । प्रत्ययस्वरेणाऽन्तोदात्तत्वे, कृदुत्तरपदप्रकृतिस्वरः । स्त्रीलिङ्गे एवेदं निपातनम् । **पृच्छेः** । 'प्रच्छ ज्ञीप्सायामि'त्यतः । **सीव्यतेरिति** । 'प्रतिपूर्वादि'त्यादिः ।

**ब्रह्मणीति** । उपपदे इत्यर्थः । न च यत्येव दीर्घो निपात्यताम् । 'यतोऽनाव' इत्याद्युदात्ताऽऽपत्तेः । 'ब्रह्मोद्यं वदन्ती'त्यादौ तु कृद्व्यत्ययेन क्यप् बोध्यः । अन्यथा छन्दसि ण्यता क्यपो बाधाऽऽपत्तिरिति बोध्यम् ।

**छन्दसि वनसन** । 'वन षण संभक्तौ' इति भ्वादिगणे सहनिर्दिष्टावेव गृह्येते, न तु 'वनु याचने' 'षणु दाने इति तानादिकौ । साऽनुबन्धकत्वात् । सहपठितयोरेव ग्रहणस्य न्याय्यत्वाच्च । अकारविशिष्टयोरेव सूत्रे पाठाच्च । **ब्रह्मवनिमिति** । 'ब्रह्म वनति','क्षत्त्रं वनति','गां सनती'तिविग्रहः । सुषामादित्वात्षत्वम् । 'पन्थानं रक्षन्ति', 'हविर्मन्थन्ती'ति विग्रहः ।

**छन्दसि सहः** । लोके 'तुरासाहमि'त्यादयः प्रयोगास्तु सहतेः अभिभवाऽर्थान्निवृत्तप्रेषणात्प्राकृतेऽर्थे णिचि क्विपा साध्याः । 'चिन्त्या एवे'ति तु हरदत्तः । 'छान्दसा अपि क्वचिद्भाषायामि'त्याश्रित्ये'त्यन्ये ।

---

१ 'अत्र प्रत्ययाऽत्ययो, वर्णव्यत्ययश्च' इति शोधितः ख. पाठः ।

**वहश्च** । 'अस्य लोकेऽपि प्रवृत्तिं केचिदिच्छन्ती'ति मतं हलन्तप्रकरणे उपपादितम् ।

**हव्येऽनन्तः** । 'हव्यशब्दे उपपदे वहेर्ञ्युट् पादान्ते' । 'अनन्तःपाद-मि'त्यस्य 'पादमध्यस्थे ने'त्यर्थः । तदाह–**पादमध्ये त्विति** । **हव्यवाळ-ग्निरिति** । वस्तुत आद्यपादादावपि एतत्प्राप्तेः 'पादाऽन्ते' इति चिन्त्यम् । 'न तु पादयोर्मध्यस्थे' इति वक्तुमुचितम् ।

**जनसन** । 'उपसर्गे, सुपि चोपपदे छन्दसि विट् स्यात्' । 'वेरपृक्तस्ये'-त्यादौ सामान्यग्रहणाऽविघाताऽर्थष्टकारः, 'विड्वनोरि'त्यादौ विशेषणा-ऽर्थश्च । 'जन जनने', 'जनी प्रादुर्भावे', 'षणु दाने', 'षण संभक्तौ', —द्वयोरपि ग्रहणम् , व्याख्यानादित्याहुः । 'जनी-षण्वोः सानुबन्धकत्वात् न ग्रहणमि'त्यन्ये । 'अप्सु उत्पद्यते','गोषु उत्पद्यते', 'गाः सनती'ति, 'नॄन् सनती'ति, 'बिसानि खनती'ति, 'दधि क्रामती'ति, 'अग्रे गच्छती'ति चाऽर्थः । सर्वत्र 'विड्वनोरि'त्यात्त्वम् । **अग्रेगा इति** । सप्तम्या अलुक् ।

**मन्त्रे श्वेत** । 'श्वेतादिपूर्वेभ्यो वहादिभ्यो ण्विन् मन्त्रे' । धातूपपद-समुदाया इह निपात्यन्ते, अलाक्षणिककार्याऽर्थम् । प्रत्ययस्तु विधीयते । तत्र 'श्वेत'शब्दे कर्तृवाचिन्युपपदे वहेः कर्मणि प्रत्ययः । श्वेतैरुह्यते इति **श्वेतवा इन्द्रः** । उक्थे कर्मणि, करणे वा उपपदे शंसतेः प्रत्ययः, नलोपश्च । उक्थानि, उक्थैर्वा शंसति उक्थशाः । 'दाशृ दाने' । अस्य पुरस्-पूर्वस्य आदेर्डत्वम् , कर्मणि च प्रत्ययः । पुरो दाश्यन्ते पुरोडाशः ।

**ण्विनोऽपवाद इति** । एवञ्चाऽपदान्तविषये एव सूत्रोक्तो ण्विनिरुदा-हार्यः । **चादुक्थशा इति** । एतच्च पाक्षिकम् । 'उक्थशा' इत्यपि सम्बुद्ध्यर्थं निपातनं कार्यम्, यदि मन्त्रे दर्शनमस्ती'ति **कैयटोक्तेः** । अत्र यद्वक्तव्यं, तत् हलन्तप्रकरणे उक्तम् ।

**अवे यज इति**—योगविभाग उत्तराऽर्थः ।

**विजुपे** । छन्दोग्रहणं ब्राह्मणाऽर्थम् । अन्यथा 'मन्त्रे' इत्यनेनैव भाषा-व्यावृत्तौ, किं तेन ? । मन्त्रव्यतिरिक्तो वेदभागो **ब्राह्मणम्** । **सुधीवा,**

सुपीवेति । अत्र 'घुमास्थे'तीत्त्वम् । वनिपि तु नेत्त्वम् । कित्त्वाऽभावात् । 'ईत्त्वमवकारादौ' इति तु नाऽस्तीति स्त्रीप्रत्ययप्रकरणे निरूपितम् ।

उपपदान्तरे इति । 'ब्रह्मभ्रूणे'त्यादिनियमात् अप्राप्तः क्विप् प्रतिप्रसूयते इति भावः । 'बहुल'ग्रहणात्क्वचिन्न-'पितृघातः' ।

छन्दसि लिट् । 'छन्दसि लुङ्-लङ्-लिट' इति तु 'धातुसम्बन्धे' इत्यधिकृत्य विहितमिति, न तेन सिद्धिः । वा स्त इति । 'क्वसुश्च' इति योगविभाग उत्तराऽर्थः । छन्दसि लिड्विधिसामर्थ्यादेव कानजादेः विकल्पे सिद्धे, 'वा'वचनमुत्तराऽर्थम् । अनन्तरस्यैव हि लिटोऽयमादेशः । 'लिट' इति तु प्रत्ययाऽन्तरत्वाऽभावाय। कानचश्चित्त्वं स्वराऽर्थम् । क्वसोरुकार उगित्कार्योऽर्थः, 'वसोः सम्प्रसारणमि'त्यादौ सामान्यग्रहणाऽर्थश्च ।

अथ कित्त्वं किमर्थम् ? । 'ईजान' इत्यादौ लिटः कित्त्वादेव सम्प्रसारणादिसिद्धेः । न च संयोगान्तबन्धेः 'बद्धधान' इत्यादौ 'अनिदितामि'ति नलोपाऽर्थम् , अभ्यासधकारस्य हलादिःशेषो न, छान्दसत्वात् , एवम अञ्जेः 'आजिवानि'त्यादौ नलोपः प्रयोजनमिति वाच्यम् । छान्दसावेवैतौ । लिट् छन्दसि सार्वधातुकमपि, 'छन्दस्युभयथे'त्युक्तेः, तत्र 'सार्वधातुकमपिदि'ति ङित्त्वादेव सिद्धेरिति चेन्न । 'ऋच्छत्यृतामि'ति प्रतिषेधविषये आरभ्यमाणस्य गुणस्य 'तरतुरि'त्यादाविव 'तितिराणः', 'तितीर्वानि'त्यादावपि प्रवृत्तेर्वारणाय कित्त्वस्य सत्त्वात् । न चैवम् 'आरिवानि'त्यादावपि गुणो न स्यात् । ऋकाराऽन्तरप्रश्लेषेण 'ऋ'धातोः पुनर्विधानादिति दिक् । एतच्च भाष्ये स्पष्टम् ।

अररिवानिति । 'रा दाने' । लिटः क्वसुः । 'वस्वेकाजादि'तीट् । नञ्तत्पुरुषे अव्ययपूर्वपदप्रकृतिस्वरः । 'दीर्घादटी'ति नकारस्य रुत्वम् । 'आतोऽटि नित्यमि'ति रोः पूर्वस्य आतो नित्यमनुनासिकः । भविषये तु वसोः सम्प्रसारणे कृते क्लादित्वाऽभावात् इडभावः । तेन 'मा नः शंसो

१ 'हव्यवाळग्निः' इति ग. नास्ति ।

अररुषः' इत्यादि सिद्धम्। प्रसङ्गात् अघायौ उप्रत्ययप्रकृतिं साधयति- छन्दसीति। 'आत्मन' इति विशेषणात् अप्राप्तिः। 'अश्वाघस्याऽऽदि'ति वक्ष्यमाणेन आकाराऽऽदेशः।

**क्याच्छन्दसि**[1]। 'कित् यो य' इति, 'क् सहितो य' इति वा व्याख्यानात् कण्ड्वादियगन्तादपि—'यमस्य योनौ शकुनं भुरण्युमि'-त्यादौ। लोके 'अनसूयव' इत्यादि मृगय्वादित्वात्साध्यम्।

**जवसवौ**। जुसूभ्याम् ऋदोरपोऽपवादोऽच् स्वराऽर्थं विधीयते। एवञ्च वृषादौ 'जवसवौ छन्दसी'त्यस्य पाठः प्रामादिकः।

**मन्त्रे वृषेष**। सूत्रे पञ्चम्यर्थे प्रथमा। तदाह—**वृषादिभ्य इति**। 'वृषु सेचने'। 'इषु इच्छायाम्'। 'मन ज्ञाने', 'मनु अवबोधने'—द्वयोरपि ग्रहणम्। विदादीनामपि यथादर्शनम्। वृषादिभ्यः क्तौ विधातव्ये उदात्त-वचनं 'प्रमतिरि'त्यादौ 'तादौ च निति कृत्यतौ' इति पूर्वपदप्रकृति-स्वराऽर्थम्। उत्तराऽर्थं च,—'व्रजयजोर्भावे क्यप् उदात्तो यथा स्यादि'ति।

**लोडर्थे इति**— पूर्वपराऽन्वयि। **अकरमिति**। 'कृमृदृरुहिभ्यश्छन्द-सी'ति च्लेरङ्। 'ऋदृशोऽङि गुणः'। उदाहरणेषु धातुसम्बन्धो मृग्यः।

**सिब्बहुलम्**। अयं विकरणः। 'यासिसीष्ठा' इत्यादौ सिपा व्यव-धानात् इट्निषेधाऽभावः। विहितविशेषणेऽपि च्छान्दसत्वात्तदभावः। छान्दसत्वादेव लसार्वधातुकाऽनुदात्तत्वमिति बोध्यम्। 'वैतोऽन्यत्रे'-त्यतो 'वे'ति वर्त्तते। तदाह—**लोपो वा स्यादिति**। 'परस्मैपदेषु' इति षष्ठ्यर्थे सप्तमी। 'परस्मैपदतिङामिकारान्तानामि'त्यर्थः।

**आगमौ स्त इति**। तौ च पर्यायेण, न तु यौगपद्येन। अड्विधि-सामर्थ्यात्। अन्यथा सवर्णदीर्घे कृते विशेषाऽभावः।

'आडुत्तमस्ये'त्यतो मण्डूकप्लुत्या 'पिच्चे'ति वर्त्तते। तदाह—**तौ च पिताविति**। तत्फलन्तु 'उर्वरासु ब्रवैते' इत्यादौ गुणः। **वृत्तौ** तु पिद्ग्रहणं

---

[1] **'क्याच्छन्दसीति' इति ख. ङ. पाठः।**

नाऽनुवर्त्तितम् । अत एव 'करवैते' इत्यत्र 'च्छन्दस्युभयथे'ति सार्वधातुकत्वाद्विकरणः, आर्द्धधातुकत्वाच्च ङित्त्वाऽभावे विकरणस्य गुणः, करोतेश्चोत्त्वाऽभावः । एवम् 'अश्नवैथे' इत्यादी'ति **हरदत्तः** । क्वचित्तु न गुणः । 'तनूरुचा तरुषि यत्कृण्वैते' इति । **तारिषदिति** । तिप इकारलोपः । सिप इट् । **जोषिषदिति** । 'जुषी प्रीतिसेवनयोः' । अनुदात्तेत् । व्यत्ययेन परस्मैपदम् । तिपोऽट् । सिप इट् । **पतातीति** । 'पत्लृ गतौ' । तिप आट् ।

**करवावेति** । कृञो लेटो वस् । उः । गुणः । रपरः । वस आट् । अङित्त्वाद्विकरणस्य गुणः, करोतेरुत्त्वाऽभावश्च ।

इह 'वस्मसोरि'त्येव सूत्रमुचितम्, 'अलोऽन्त्यस्ये'त्यनेन सलोपसिद्धेः । यदाऽपि पुरुषाऽन्तरस्थाने वस्-मसौ, यदा वा तयोः सकारान्तं पुरुषाऽन्तरं, तदापि 'वा'ग्रहणेनैव यथादर्शनं लोपाऽलोपव्यवस्थासिद्धेरिति दिक् ।

**मादयैते इति** । 'मदी हर्षे' । णिजन्ताल्लेट् । **आकारस्येति** । 'प्रथमस्ये'त्यर्थः । द्वितीयस्य तु 'टित आत्मनेपदानामि'त्येत्त्वमेव । नित्यत्वात् । न च शब्दाऽन्तरप्राप्त्या अनित्यत्वम् । कृताऽकृतप्रसङ्गित्वमात्रेणाऽपि क्वचिन्नित्यताऽङ्गीकारात् । उत्तरसूत्रे 'अन्यत्रे'ति लिङ्गाच्च ।

**वैतो** । 'अन्यत्वं किमपेक्षमि'त्याकाङ्क्षायां संनिधानात्पूर्वसूत्रविषयादिति लभ्यते । तदाह—**आत इत्यादि** । **ईशै इति** । 'ईश ऐश्वर्ये' । उत्तमैकवचनम् इट् । इतश्च लोपो नास्ति, 'परस्मैपदेषु' इत्युक्तेः । टेरेत्त्वे तस्य 'ऐ' । **गृह्यान्तै इति** । ग्रहेः कर्मणि लेट् । तस्य आट् । यक् । सम्प्रसारणम् । 'झोऽन्तः' । **पणबन्ध इति** । 'यदि मे भवानिदं कुर्यात्, तर्हीदमहं दास्यामी'ति समयकरणं **पणबन्धः** । **आशङ्का** सम्भावना ।

**अहमेवेति** । त्रिपुरविजये देवैः प्रार्थितस्य रुद्रस्येदं वचः । **पशवः**= संसारिणः । **नेदिति** । इच्छब्द आशङ्कां द्योतयति । 'जिह्माऽऽचरणेन नरकपातः संभाव्यते, स मा भूदि'त्यर्थः । **जिह्मं**-कुटिलम् । पापम् । 'छन्दसि परेच्छायामि'ति क्यच् । 'अश्वाघस्याऽऽदि'ति योगविभागेन

आत्वम्। 'अन्यस्य पापेच्छये'त्यर्थः। इदमेव जिह्माऽऽचरणं नाम।

अन्ये तु आचारे एव,उपमानादन्यत्राऽपि,च्छान्दसत्वेन क्यचमाहुः।

**अपिशब्दाच्छानजिति**। एवम् 'अ-हौ'[1] इत्यपि बोध्यम्। 'यो अस्कभायदुत्तरं सधस्थम्'। 'अस्कभ्नादि'त्यर्थः।

**व्यत्ययो**[2]। व्यत्ययो व्यतिक्रम्य गमनम्[3]। व्यतिपूर्वादिणो भावे णच्। स च क्वचित् अन्यविषयाऽवगाहनं, क्वचित् द्वौ, क्वचित्त्रय इत्यादिः।

**द्वौ विकरणाविति**। तत्र शप् न्याय्यः। सिप् बाहुलकात्। **तरुषेमेति**। उप्रत्ययाऽन्तस्य सिपं प्रति अङ्गत्वात् 'सार्वधातुकार्द्धधातुकयोरि'ति गुणः, सिबन्तस्य शपि लघूपधगुणश्च प्राप्तो, बाहुलकान्न भवति।

**लिङिति**। तस्य मस्। धातोर्गुणः। 'नित्यं ङित' इति सलोपः। 'तरुष-म' इति स्थिते यासुट्। 'अतो येयः'। यलोपः। 'आद्गुणः'।

विकरणप्रकरणे 'व्यत्यय' इत्येव सिद्धे 'बहुल'ग्रहणं सर्वविधिव्यभिचाराऽर्थम्। तदाह—**सुप्तिङिति**। 'दक्षिणाया' इत्यत्र च्छान्दसत्वात् स्याडाद्यभावः। **तक्षन्तीति प्राप्ते इति**। श्नुप्रत्ययस्य वैकल्पिकत्वादिति भावः। बहुवचनस्थाने तिङेकवचनम्। **परस्मैपदात्मनेपदे इति**। लादेशव्यङ्ग्यं स्वार्थत्व-परार्थत्वादि 'उपग्रह'शब्दवाच्यम्। तत्प्रतीतिनिमित्तपरस्मैपदाऽऽत्मनेपदयोश्च लक्षणया 'उपग्रह'शब्दो वर्त्तते इति बोध्यम्। **मधुन इति प्राप्ते इति**। यद्यपि मकरन्द-मद्य-माक्षिकवाचकस्याऽर्द्धर्चादित्वात्पुंनपुंसकत्वं; तथाऽप्यमृतक्षीरादिवाचिनो नित्यनपुंसकत्वमिति भावः। **वियूयादिति**। 'यु मिश्रणे'। विपूर्वः। आशिषि लिङ्।

**अदुक्षदिति**। 'धस्थाने 'द' इति हल्व्यत्ययः। 'मित्र वयमि'त्यत्र दीर्घस्थाने ह्रस्व इति अच्-व्यत्ययः।

**तद्धितेति**। 'तेन दीव्यती'त्यादौ विधीयमानानां ठगादीनां देवनादि-

१ अहौ = 'हि'परत्वाऽभावेऽपि, श्नः शायजित्यर्थः।

२ 'व्यत्ययो' इति क्वचिदपि नास्ति।

३ 'व्यतिगमनम्' इति सर्वादर्शेषु पाठः। 'व्यतिक्रम्य गमनम्' इतिलघुशेखरपाठः।

कर्तृवाचकत्वादेवमुक्तम्, न त्विह कारकवाचित्वेऽप्याग्रहः। कृत्तद्धित-मात्रे तात्पर्यात्। तथा च किमो विहितो डतिर्यच्छब्दादपि भवति, 'त्वं वेत्थ यति ते जातवेद' इति। **विषये इति**। अचि 'अन्न-अदाये'ति अवग्रहः। अणि-'आदाये'ति स्यात्। बहूनर्थान् लातीति 'बहुलम्'। तस्य भावो **बाहुलकम्**। मनोज्ञादित्वाद्वुञ्।

**लिङ्थ्या**। स्था-गा-गमि-वचि-विदि-शकि-रुहिष्वेव अयमङ् विकरणः प्रायेण दृश्यते।

**आदृग**। आदिति दकारः। तेन ऋग्रहणेन दीर्घाऽन्तस्यापि 'तॄ' 'गॄ'-इत्यादेर्ग्रहणम्। **लिड्वद्भावादिति**। 'असंयोगाल्लिट् किदि'ति कित्त्वं सिद्ध-मिति भावः। **ऋच्छत्यॄतामितीति**। प्रतिषेधविषये प्रतिप्रसूतमित्यर्थः।[1]

ननु 'छन्दसि सर्वेभ्यः किकिनौ वाच्यौ' इत्युक्ते स्रंसु-ध्वंसुप्रभृतिभ्यः किकिनोः संयोगात्परत्वेन कित्त्वं सार्थकमिति चेन्न। तादृशलक्ष्यस्य आकरे अनुदाहृतत्वात्। यदि तु तादृशं लक्ष्यमस्ति तदा 'छन्दस्युभयथे'ति लिटः सार्वधातुकत्वस्याऽपि सत्त्वेन 'सार्वधातुकमपिदि'ति ङित्त्वात्सिद्धमिति भावः। स्वरूपाऽबाधेनाऽतिदेशप्रवृत्तेस्तिबादयो न। ननु 'ततुरिरि'-त्यादौ 'ॠत इद्धातोरि'तीत्त्वं स्यादत आह-**बहुलं छन्दसीति**। गुणस्तु न। कित्त्वात्। 'द्विर्वचनेऽची'ति 'तॄ' 'गॄ' इत्यनयोर्द्वित्वम्। तत उत्तरदले उत्त्वेऽपि, अभ्यासे उरदत्त्वं निर्बाधम्।

**तुमर्थे से**। **तुमर्थो** भावः। 'अव्ययकृतो भावे' इत्युक्तेः। 'भावे' इत्येव वाच्ये 'तुमर्थे' इत्युक्तेः साध्याऽवस्थभावस्याऽत्र ग्रहणमित्याहुः। पञ्चदश प्रत्यया विधीयन्ते। तत्र दशसु द्वयोर्द्वयो रूपाऽविशेषेऽपि, स्वरे विशेषः। इतरेषु पञ्चसु रूपे एव विशेषः स्पष्टः। **वक्षे इति**। वचः से। कुत्वम्। षत्वम्। **एषे इति**। इणो गुणः। नित्त्वादाद्युदात्तः। **प्रेषे इति**। प्रपूर्वादिणः क्से, कित्त्वाद् गुणाऽभावे 'आद्गुणः'। **श्रियसे इति**। श्रिय इयङ्। नित्त्वा-दाद्युदात्तत्वम्। इह मन्त्रे मध्योदात्तपाठस्तु बाहुलकात्प्रत्ययस्वरेण बोध्यः।

---

1 अत्र 'प्रतिप्रसूतेत्यर्थ' इत्येवोचितः पाठः। गुणविशेषणत्वात्।

**केचित्तु** 'यगभाववद्बाहुलकादेव पिबाद्यादेश-कित्त्वप्रयुक्तकार्यं स्वीकृत्य 'कध्यै' 'कध्यैन्' 'शध्यै' 'शध्यैनि'ति प्रत्ययचतुष्टयं व्यर्थम्। 'छन्दस्युभयथे'-त्यनेनाऽशितोऽपि सार्वधातुकत्वसिद्धेरि'त्याहुः। तद् ध्वनयन्नुदाहरति— **पृणध्यै इति**। **आहुवध्यै इति**। ह्वेञः सम्प्रसारणे उवङि रूपम्। **मादयध्यै इति**। ण्यन्तान्मदेः 'शध्यै'। तस्य भाववाचिसार्वधातुकत्वात् यकः प्रसङ्गे व्यत्ययेन शप्। गुणाऽयादेशौ। प्रत्ययस्वरः। **पिबध्यै इति**। अत्र बाहुलकाद्यगभावः। नित्स्वरः। एतेन यको 'बहुलं छन्दसी'ति लुगि'ति **हरदत्तो**, 'व्यत्ययेन यक्प्रसङ्गे शबि'ति प्राचामुक्तिश्च, 'मादयध्यै' इत्यत्र यको लुक्, शप् चे'ति च परास्तम्। **सूतवे इति**। ङित्त्वान्न गुणः। 'दशमे मासि सूतवे'[1] इत्यत्र आद्युदात्तपाठस्तु स्वरव्यत्ययात्। यद्वा तवेन्प्रत्यये नित्स्वरः। गुणाऽभावस्तु बाहुलकात्, 'छन्दस्युभयथे'ति सार्वधातुकत्वेन ङित्त्वाद्वा। एवञ्च 'तवेङ्' व्यर्थ इत्याहुः।

**प्रयै**। प्रपूर्वात् यातेः 'कै'प्रत्ययः। रुहेः इष्यै। नञ्पूर्वात् व्यथेश्च।

**दृशे विख्ये चेति**। योगविभागश्चिन्त्यप्रयोजनः। 'के'प्रत्ययः। कित्त्वात् दृशेः अगुणः। ख्यातेः आलोपः। 'कृन्मेजन्त' इत्यव्ययत्वम्।

**विलिखे**[2] **इति**। कित्त्वादगुणत्वम्। 'क्त्वातोसुन्कसुन' इत्यव्ययत्वम्। 'न लुमते'ति निषेधात् 'अत्वसन्तस्ये'ति दीर्घो न।

**कृत्यार्थे**। तदर्थो भावकर्मणी। यद्यपि भव्यादौ कर्त्ता, वह्ये करणम्, 'स्नानीयं चूर्णमि'त्यत्र च, 'दानीयो विप्र' इत्यत्र सम्प्रदानं च कृत्यानामर्थः, तथापि कृत्यत्वेन स्वरूपेण न कर्त्रादिषु विधिरस्ति, किन्तु विशिष्यैव, बाहुलकाद्वा। कृत्यत्वेन तु भावकर्मणोरेव। 'तयोरेवे'ति सूत्रात्। अतः प्रतिपदोक्तस्यैव कृत्याऽर्थस्येह ग्रहणं न्याय्यम्।

**न म्लेच्छितवै इति**। 'न म्लेच्छितव्यमि'त्यर्थे 'तवै'प्रत्ययः। **अवगाहे इति**। अत्र 'केन्'। दृशेः सन्नन्तात् 'केन्यः'। अतो लोपः। कृञः 'त्वन्'।

---

१ 'सूतवै' इति ख. पाठः।

२ 'विलिखे कित्त्वात्' इति ख. ङ. पाठः।

'कृत्यमि'त्यर्थः । कृञो विचि, गुणे, रपरत्वे, ततो भावे त्वप्रत्यये तु[1] रेफस्य विसर्ग-सत्वयोः 'कस्त्वमि'ति रूपं न्याय्यम् ।

**अवचक्षे** । चक्षिङ 'एश्'प्रत्ययः । शित्त्वात्सार्वधातुकत्वम् । तेन ख्याञादेशो न ।

**भावलक्षणे** । 'भावस्य लक्षणत्वे गम्ये' इत्यर्थः । संस्थादीनामवधित्वेन लक्षणत्वम् । संपूर्णस्तिष्ठतिः समाप्तौ रूढः । 'संतिष्ठते पितृयज्ञ' इत्यादौ तथा दर्शनात् । 'तमु ग्लानौ' । **आविजनितोः** । 'आ प्रसवादि'त्यर्थः ।

**विसृप इति** । 'गमनादि'त्यर्थः । 'सृप्लृ गतौ' । 'उतृदिर् हिंसाऽनादरयोः' । आतृदः = आतर्दनात् । 'जेत्रु[2]देशाऽवधिकरुधिरनिःसरणात्पूर्वमेव तु सन्धानद्रव्यं विनैव यम् इन्द्रः सन्धिं सन्धाता = योजयिते'ति तद्घटितमन्त्राऽर्थः । एतेन 'विसर्पितुमित्यर्थ' इति परास्तम् । सृतेरनिट्त्वाच्च । 'भावलक्षणे' इत्यनुवृत्तेश्च ।

इति तृतीयोऽध्यायः ॥

अथ चतुर्थोऽध्यायः ।

**रात्रेश्चा** । **अजसादिष्विति** । 'रात्रिं रात्रिं सहोषित्वा' । अजसाविति किम् ? । 'यास्ता रात्रयः' । इदं सूत्रं संज्ञाविषये लोकेऽपि । 'सञ्ज्ञाच्छन्दसोरि'त्यस्य **वृत्तावनुवृत्तेः** । मूलकृता तु लोके स्वराऽनादरणात्, ङीषन्तप्रयोगेणैव सिद्धिरिति मत्वा, वैदिक्यामेवाऽलेखि । तदाह— **लोके त्विति** । 'राशदिभ्यां त्रिबि'ति त्रिबन्त आद्युदात्तो 'रात्रि'शब्दः । तेन लोके 'रात्रिः', 'रात्री'ति च । **नित्यग्रहणमिति** । आरम्भसामर्थ्यात् नित्यत्वसिद्धेरिति भावः । **उ[3]त्तराऽर्थम्** = 'भुवश्चे'त्यर्थम् । **डुप्रत्ययान्तमिति** । तेन क्विबन्तान्न ङीष् । 'स्वयम्भूः' । 'भेकी वर्षाभ्वी'**त्यमरस्य** तु प्रमाद इत्याहुः । **केचित्तु** 'मितद्र्वादेराकृतिगणत्वाद्भवतेर्डुप्रत्ययान्तात्

---

१ 'तु' इति ख. ङ. नास्ति । ग. पाठः ।

२ 'जत्रु' इत्यत आरभ्य 'अनुवृत्तेश्च' इत्यन्तः पाठः ख. ङ. नास्ति ।

३ 'उत्तरम् = भुवश्चेति' इति ख. ग. ङ. पाठः ।

नित्यस्त्रीलिङ्गात् ङीष्। सूत्रन्तु लोक-वेदसाधारणमिच्छन्ति। भेक्यां 'वर्षाभूरि'त्यपि रूपं निर्विवादम्। 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानि'ति **यादवकोशात्**—इति[2] **प्राञ्चः**। अत्र यद्वाच्यं तदजन्तस्त्रीलिङ्गे उक्तम्। नन्वेवं 'भोरि'ति स्यादत आह—**उवङिति**। 'कृतगुणस्यैव स्थानेऽयमि'ति **हरदत्तः**। **लित्स्वर इति**। आनुगाकारस्य उदात्तत्वमित्यर्थः। लोके तु 'मुद्गली'। तथा च क्षुद्रत्वाद्रकि 'मौद्गलेर' इत्यपत्यप्रकरणे भाष्यम्। **ङीष्विधीयते इति**। 'संज्ञायामि'ति शेषः। गुग्गुलु-मधु-जतूनां छन्दसि व्यत्ययेन स्त्रीत्वम्। 'पतयालुः' विशेष्यलिङ्गः। **आविष्ट्य इति**। 'आविर्भूत' इत्यर्थः।

**शौनकादिभ्यश्छन्दसीति**। अस्याऽत्र लेखो लेखकप्रमादात्। 'छन्दस्यभिधेये' इति तदर्थात्। अत एव 'शौनकीया शिक्षे'ति तत्प्रत्युदाहरणमाकरे।

**द्व्यचः**। 'मयड्वैतयोर्भाषायामि'त्युक्तेरप्राप्तो विधीयते।

**नोत्वत्**। 'द्व्यच' इति प्राप्तस्य निषेधः। मौञ्जादावौत्सर्गिकोऽण्। वृधेः 'वृधिवपिभ्यां रन्'—**वर्ध्रमिति**। 'वध्री'ति तु वधेरौणादिके ष्ट्रनि बोध्यम्। 'वध्रिकाः पश्य।' 'वाध्र्यश्वस्य **नामे**'ति भाष्य-वेदयोः प्रयोगात्।

**ढश्छन्दसि**। 'सभाशब्दात्सप्तम्यन्तात् ढः स्यात्साधुरि'त्यर्थे।

**मेध्यायेति**। 'यतोऽनाव' इत्याद्युदात्तत्वं प्राप्नोति, अन्तस्वरितश्च अधीयते' इति **हरदत्तः**। **पाथसीति**। 'पाथोऽन्तरिक्षमि'ति **वृत्तिः**। 'पाति भूतान्यवकाशदानेने'ति व्युत्पत्तेः। यद्यपि 'पातेर्बले जुट् च' (६४२ उणादिसू.) 'उदके थुट् च' 'अन्ने च' इति (६४४ उणादिसू.) अन्नोदकयोः 'पाथः'शब्दो व्युत्पादितस्तथापि बाहुलकादन्तरिक्षेऽपी'ति **हरदत्तः**। **वैशन्तीभ्य इति**। **वेशन्तः**—पल्वलम्। विशेर्झच्। तत्र भवा आपो 'वैशन्त्यः'।

१ गौरादिषु अस्य पाठकल्पनान्नित्यं ङीषित्यर्थः।

२ 'इति प्राञ्चः' इति ग. पाठः। ख. ङ. नास्ति।

**स्रोतः**—नदीप्रवाहः । ततो भवार्थे इति । **यन्**—नित् । **यदपीति** । छान्दसत्वात् ।

**अग्राद्यत्** । 'भवे छन्दसी'त्येव सिद्धे घञादिभिर्बाधा मा भूदिति यत् विधीयते । **चाद्धनिति** । यतः पूर्वेणैव सिद्धेर्व्यवहितस्याऽपि घनः समुच्चय इति भावः । **अग्रिय इति** । घच्-घनोरुदाहरणम् अन्तोदात्तम्, आद्युदात्तं च । लोके तु 'अग्रिम'इत्येव । 'एतच्छुभं विजानीहि ब्राह्मणाऽग्र्यस्य लक्षणमि'ति तु 'च्छन्दोवद्दषयः कुर्वन्ती'ति नेयम् । 'अग्रादि'त्येव प्राकरणिकयद्विधिना सिद्धे, 'यत्'ग्रहणं चिन्त्यप्रयोजनम् ।

**समुद्राभ्रात्** । पूर्वनिपातप्रकरणाऽनित्यत्वे इदमपि लिङ्गम् ।

**बर्हिषि दत्तम्** । 'भवे' इति निवृत्तम् । 'बर्हिः कुश-हुताशयोः' ।

**दूतस्य** । **कर्म**—क्रिया । तत्र भागे 'तस्येदमि'त्यणि, कर्मणि 'दूतवणिग्भ्यामि'ति ये प्राप्ते वचनम् ।

**रक्षोया** । 'षष्ठीबहुवचनान्ताभ्यां रक्षस्-यातुशब्दाभ्यां हननकरणीभूतेत्यर्थे यत्, छन्दसि' । कृद्योगे कर्मणि षष्ठी । 'रक्षसां, यातूनां हननी'ति विग्रहः । बहुवचनाऽन्ताद्विधानं स्तुत्यर्थम् । बहूनां तेषां हननेन हि स्तुतिर्भवति । यातु-रक्षसी पर्यायौ । सूत्रे 'विरूपाणामि'-त्येकशेषो न । शब्दस्वरूपपरत्वात् । शैषिकाऽण्-छयोरपवादः ।

**प्रशस्ये इति**—बाहुलकाद्भावे क्यप्, तद्योगे कर्मणि षष्ठी । तदाह—**रेवत्यादीनामित्यादि** । रयिरस्त्यस्या 'रेवती' । 'रयेर्मतौ बहुलमि'ति सम्प्रसारणम् । हविषे हिता—'हविष्या' । 'उगवादिभ्यो यत्' । 'यस्ये'ति लोपे 'हलो यमां यमी'ति लोपः । 'तस्याः प्रशंसनं हविष्यमि'त्यर्थः[3] ।

**असुरस्येति** । अणोऽपवादः ।

**मायायामिति** । पूर्वसूत्राऽपवादः । **असुरस्य**=सुरप्रतिपक्षस्य माया—आसुरी । **माया**-असदर्थप्रकाशनशक्तिः ।

---

१ 'यदपि—छान्दसत्वात्' इति ख. पाठः ।

२ 'एतच्छुभे विजानीहि' इति वा पाठो भवेत् । ३ अयं ग. पाठः ।

**तद्वानासामु**। 'मत्वन्तप्रकृतिकात्प्रथमान्तादुपधानकरणीभूतमन्त्रार्थकादासामिष्टकानामितीष्टकारूपे सम्बन्धिनि यत्, मतोश्च लुगि'त्यर्थः। वर्चःशब्दोऽस्त्यस्मिन्स **वर्चस्वान्** 'देवस्य त्वा सवितुरि'त्यादिको मन्त्रः। उपधीयन्तेऽनेनेति 'उपधानः'। यद्यपि तत्र मन्त्रे पदाऽन्तराणि सन्ति, तथापि तत्प्रकृतिकमतुबन्तात्प्रत्ययो न। छन्दसि सिद्धस्यैवाऽनुशासनात्, न तु काव्यादिवदपूर्वोत्प्रेक्षासम्भवः। एवञ्च 'इति'शब्दः स्पष्टाऽर्थ एव।

अथ कथं 'भृष्टीरुपदधाति'[1] 'प्राणभृत उपदधाती'त्यादिः, 'भृष्टया:'[2], 'प्राणभृत्या' इति प्राप्नोतीति चेन्न। 'भृष्ट्यादिशब्दानां तद्वन्मन्त्रोपधेयासु इष्टकासु उपचारात् प्रयोग' इत्येके।

अन्ये तु 'तद्वानासामुपधानो मन्त्र इतीष्टकास्वि'त्येकं सूत्रं यद्विधायकम्। 'लुक् चे'ति द्वितीयं, तस्यैव लुगर्थम्। चात् पक्षे लुगभावः। न च विधानसामर्थ्यादेव तद्विकल्पसिद्धौ चो व्यर्थः। 'इति'शब्दवदिष्टाऽऽपत्तेः। ततो 'मतोरि'ति तृतीयम्। अत्र 'लुगि'ति वर्त्तते। अयं लुक् प्रत्यय–तल्लुक्–उभयसंनियोगशिष्टः। एवञ्च तद्धिताऽन्तपरतया प्रतीयमानाः पूर्वोत्तरमीमांसाग्रन्था व्याख्याता' इत्याहुः।

**अश्विमानण्**। 'अश्विमत्'शब्दादुक्तेऽर्थेऽण्, यतोऽपवादः, मतोर्लुक् च'। **आश्विनीरिति**। 'अश्विन्'शब्दवान्मन्त्र उपधानो यासां ता इत्यर्थः। 'इनण्यनपत्ये' इति प्रकृतिभावः। यद्यपि बहवो मन्त्रा अश्विमन्तस्तथापि सामान्याऽपेक्षयैकवचनम्। **मूर्द्धन्वतीरिति**। 'अनो नुडि'ति नुट्। यद्यपि मूर्द्धावयः प्रजापतिश्छन्द' इत्यन्तिममन्त्रे एव 'मूर्द्धन्'-शब्दोऽस्ति, तथापि तत्साहचर्याच्छत्रिन्यायेन'विष्टम्भो वय'इत्यादयश्चत्वारोऽपि मन्त्रा 'मूर्द्धन्वन्त' उच्यन्ते। वयस्यास्विति किम्?। 'अग्ने यशस्विन् यशसे समर्पय अयं मूर्द्धा परमेष्ठी'ति केवलमूर्द्धशब्दवता, वयः-शब्दरहितेन

---

१ 'सृष्टीरुपदधाति' इति ख. ङ. पाठः।

२ 'सृष्टया' इति ख. ङ. पाठः।

मन्त्रेणोपधेयासु मा भूदि'ति। ननु सूत्रे 'वयस्यासु' इत्यनुपपन्नम्, 'तद्वानासामि'ति प्रत्ययस्य च्छन्दस्येव विहितत्वादिति चेन्न। 'छान्दसा अपि क्वचिद्भाषायां भवन्ती'ति ज्ञापनाऽर्थत्वात्। 'छन्दोवत्सूत्राणी'तिभाष्यकारेष्टेर्ज्ञापकमि'त्यन्ये। 'वयस्या'शब्देन च्छन्दसि व्यवहृतासु' इत्यर्थ' इति परे। वयःशब्दाऽघटितमूर्द्धन्वत् मन्त्रोपधेयासु 'मूर्द्धन्वतीरि'ति प्रयोगस्तु लक्षणया नेयश्छान्दसः।

**मत्वर्थे मा**। 'मत्वर्थे यत्स्याच्छन्दसि, मासतन्वोर्वाच्ययोः'। मासतन्वोः किम्?। 'स्वध्वरासो मधुमन्तोऽग्नयः'। 'सूत्रे तनूशब्दो दीर्घाऽन्तो, न तु ह्रस्वाऽन्तः, 'द्वन्द्वे घी'ति पूर्वनिपाताऽऽपत्तेरि'ति हरदत्तः।

अत्र वार्त्तिकम्–**'अनन्तराऽर्थे च'**। मधु अनन्तरम् अस्मिन् मधव्यो (माधवो) मासः। **'लुगकारेकाररेफाश्च'**। लुक्—मधुः। तपः। नभः। तपो-नभसोः क्लीबत्वं छान्दसम्। अकारः–इषः। ऊर्जः। इट्-अन्नम्। उर्क्–बलम्। इकारः—आतपाऽऽधिक्ये देहशोषरूपा शुक् अस्मिन्नस्ति शुचिः। रेफः–'र'शब्दः। शुक्रः। अयस्मयादित्वाज्जश्त्वं न।

**ओजसो**। 'ओजस्' शब्दान्मत्वर्थे यत्खौ स्तोऽहनि वाच्ये'।

**वेशोयशः**। 'वेशो-यशःशब्दावादी यस्य तादृशात् भगशब्दाद्यल्, ख एतौ स्तः'। **कर्मधारय इति**। 'भगः श्री-काम-माहात्म्य-वीर्य-यत्ना-ऽर्क-कीर्त्तिषु'। **नेष्यते इति**। 'स्वरितत्वाऽभावादि'ति यथासङ्ख्यसूत्रे भाष्यात्। एतेन 'ख चे'ति पृथक्सूत्रपाठो वृत्तिकृतां प्रामादिकः।

**पूर्वैः कृत**। 'मत्वर्थे' इति निवृत्तम्। 'पूर्वशब्दात्तृतीयाबहुवचनाऽन्तात् कृतमित्यर्थे 'इन' 'य' इत्येतौ प्रत्ययौ स्तः'। चात्खः। 'यल् तु नाऽनुवर्त्तते, पूर्वसूत्रे योगविभागादि'ति वृत्तिः। भाष्यपाठे तु यलोऽप्यनुवृत्तौ न दोषो, यदि वेदे लित्स्वरविशिष्टः प्रयोगोऽस्ति। नो चेत् एकदेशाऽनुवृत्तिर्बोध्या। **अप्यम्**। 'अद्भिः संस्कृतमि'त्यर्थे यत्।

**सहस्रेण संमितौ घः**। 'समितौ' इति पाठाऽन्तरम्। 'सहस्रेण तुल्य इत्यर्थे घ' इत्यर्थः पाठद्वयेऽपि।

**मतौ च** । 'तपःसहस्राभ्यां विनीनी' इत्यस्याऽपवादः ।

**सोममर्हं** । 'सोमशब्दात् द्वितीयान्तादर्हतीत्यर्थे य-प्रत्ययः' । कथं तर्हि 'प्रीताऽस्मि ते सोम्य ! चिराय जीवे'ति **रघुः**, छन्दोऽधिकारात् । उच्यते । 'सोमः कर्पूर-चन्द्रयोः' । सोम इव सोम्यः । शाखादित्वाद्यत् । 'तत्र साधुरि'ति यत् वा । 'सौम्ये'ति वृद्धिपाठे तु चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । **मयडर्थे इति** । आगत-विकारा-ऽवयव-प्रकृता **मयडर्थाः** । तत्र आगते पञ्चम्यन्तात्, विकाराऽवयवयोः षष्ठ्यन्तात्, प्रकृते प्रथमाऽन्तात् ।

**मधोः** । 'य' इति निवृत्तम् ।

**वसोः स** । 'वसोरि'ति योगविभागात्स्वार्थेऽपि यत् । 'अग्निरीशे वसव्यस्य' । 'हस्तौ पृणस्व बहुभिर्वसव्यैः' । पृणतिः पूरणकर्मा ।

वस्तुतस्तु 'तद्धिता' इति बहुवचनात् स्वार्थे यत् छन्दसि अन्यत्राऽपीति बोध्यम् । स्पष्टं चेदं स्वार्थिकप्रकरणे भाष्ये । '**सप्तदशाऽक्षरः** = तदात्मकः, **छन्दस्यः** = अक्षरसमूहः[1], **प्रजापतिः** = तेन दृष्टः—यज्ञम् अनु विहित' इत्यर्थः । **स्वार्थे इति** । 'समूहे' इति निवृत्तमिति भावः ।

**सर्वदेवा** । 'सर्व-देवशब्दाभ्यां तातिल्स्वार्थे छन्दसि' । **पत्राद्यजिति** । एवञ्च कृद्योगलक्षणा षष्ठी समर्थविभक्तिः । फलितमाह—**शिवमिति** । शिव-शम्-अरिष्टाः प्रकृतयः । भाषायां त्वेषां प्रयोगो[2] यथा, तथा 'वयस्यास्वि'त्यत्रोपपादितम् । चिन्त्य एव वा ।

**इति चतुर्थोऽध्यायः[3] ॥**

अथ पञ्चमोऽध्यायः ।

**सामानीति** । छान्दसं क्लीबत्वम् । **वर्गः**–प्राण्यप्राणिविषयः । **विंशिन इति** । 'आङ्गिरस'-'अयास्य'-'गार्ग्य'-'गौतमे'त्यादिप्रवर-भेदभिन्नानि

१ 'अक्षरसमुदायः' इति ग. पाठः ।

२ 'एषां प्रयोगश्चिन्त्य एव' इति ग. पाठः ।

३ 'इति चतुर्थः' इति ख. पाठः ।

विंशतिः अवाऽन्तरगोत्राणि परिमाणमेषामि'त्यर्थः। **त्वावत इति** । त्वमिव 'त्वावान्', तस्य । 'प्रत्ययोत्तरपदयोश्चे'ति त्वाऽऽदेशः । 'आ सर्वनाम्न' इत्यात्वम् । एवं **'मावत'** इत्यपि । **सादन्यमिति** । सदनमर्हति । 'अन्येषामपी'ति दीर्घः । **इद्वत्सरे-दावत्सरशब्दौ** पञ्चवर्षे युगे द्वयोर्वर्षयोः संज्ञे । एवं संवत्सर-परिवत्सरावपि ।

**छन्दसि घस्** । सकारः 'सिति चे'ति पदत्वाऽर्थः । तेन भत्वाऽभावात् ओर्गुणो न । पक्षे 'इकोऽसवर्णे' इति तु न । छन्दसि दृष्टस्यैव अनुविधानात् । सिति तत्प्रतिषेधाच्च । 'उपसर्गाद्धातौ' इत्येव, शब्दे कार्यस्याऽसम्भवात्तदर्थपरिग्रहे सिद्धे, 'अर्थ'ग्रहणं बहुव्रीह्यर्थम् । तत्र धातुशब्देन तद्वाच्या क्रिया लक्ष्यते । सोऽर्थः प्रयोजनं यस्य तस्मिन्नित्यर्थः । तदाह-**धात्वर्थविशिष्टे इत्यादि** । उपसर्गा हि यत्र क्रियाश्रवणं तत्र तद्विशेषकाः । यथा-'आगच्छती'ति । यत्र सा न श्रूयते, तत्र क्रियाविशिष्टं साधनमाहुः । यथा 'निष्कौशाम्बिरि'ति । तत्र यत्र क्रियापदाऽश्रवणं तत्रैव यथा स्यादित्यर्थ-'धात्वर्थे' इत्युक्तम् ।

**उद्वत इत्यादि** । 'यद्यप्यत्र वनानां विशेष्यत्वं, तथापि च्छान्दसं पुंस्त्वमि'ति **वृत्तिः** । देशानामेव विशेष्यत्वमिति मूलाऽभिप्रायः । 'साधन'शब्देन शक्तिमद्द्रव्योक्तेः लिङ्गसङ्ख्यायोगात् अन्वर्था अव्ययसंज्ञा न भवति ।

**थट् च** । चात् पक्षे मट् । थुक् तु अत्रैव न कृतः । नलोपाऽनापत्तेः ।

**छन्दसि परि** । 'पर्यवस्थातृशब्दात्स्वार्थे इनिः प्रत्ययः', 'अवस्थातृ'-शब्दस्य 'पन्थि' 'परि' इत्यादेशौ च निपात्येते' । **छन्दोविन्प्रकरणे इति** । द्वय-उभय-हृदयानां दीर्घत्वं बोध्यम् । अन्येषां स्वत एव दीर्घत्वात् । अशेः ष्ट्रनि दंष्ट्रापर्यायः 'अष्ट्रा'शब्दोऽयं छन्दोविषयः ।

**छन्दसीवनिपौ च**[1] । चाद्वः । 'अन्यतरस्याम्'ग्रहणाऽनुवृत्तेर्मतुप् च । रथोऽस्या अस्तीति 'रथीः' । सुमङ्गलमस्या अस्तीति 'सुमङ्गलीः' ।

---

१ 'छन्दसीवनिपौ चेति' इति ख. ङ. पाठः ।

'लाघवाद्बहुव्रीहिणैव भाव्यमि'ति न्यायस्तु च्छान्दसत्वान्नाश्रितः। मघं = धनमस्याऽस्तीति **मघवा**। 'उद्गतसम्बन्धिनी'त्यर्थे 'उद्वा' 'उद्वती'-ति व-मतुपोरुदाहरणे।

'तयोरि'ति व्याचष्टे—**इदंतदोरिति**। आनन्तर्ययोगे षष्ठी। **कथेति**। 'कुतो हेतोः, केन प्रकारेण चे'त्यर्थः।

**तुश्छन्दसि**। 'अजादी गुणवचनादेवे'ति नियमबाधेन प्रकृत्य-न्तराऽभ्यनुज्ञामात्रमत्र क्रियते, न त्वपूर्वो विधिः। तेन उपाधिसङ्करो न।

**करिष्ठ इति**। 'कर्त्तृ'शब्दात्तृन्नन्तादिष्ठन्। अत एव कर्मणि द्वितीया। तृजन्तादेव वा। 'कृतपूर्वी कटमि'तिवत् द्वितीये'ति **हरदत्तः**। 'तुरिष्ठेमेयःसु' इति लोपः। 'दोग्ध्री'शब्दे 'सिद्धश्च प्रत्ययविधौ' इति वचनात् 'भस्याऽढे' इति पुंवत्त्वेन पूर्वं ङीपि निवृत्ते, 'दोग्धृ'शब्दात्प्रत्यये, तृचो लोपे, घत्व-जश्त्वयोरपि निवृत्तिः।

**प्रत्नपूर्व**। 'इम'शब्द इदमा समानाऽर्थः प्रकृत्यन्तरम्। **प्रतरमिति**। प्रकर्षप्रकर्षे तरप्। प्रकृष्टतर इत्यर्थः। उदित्त्वम् 'इच एकाचोऽम्प्रत्ययव-दि'त्यत्राऽस्य ग्रहणं मा भूदिति। तेन 'स्त्रियंमन्य' इत्यादौ 'यस्येति' लोपो न। **स्वार्थे इति**। 'प्राशस्त्यविशिष्टे स्वार्थे' इत्यर्थः। 'सत्नौ प्रशंसाया-मि'त्यतस्तदनुवृत्तेः।

**अनसं**। 'ब्रह्मणः साम', 'देवस्य च्छन्दांसी'ति विग्रहः। **बहुप्रजा इति**। बहुव्रीहिः।

## इति पञ्चमोऽध्यायः[1]॥

### अथ षष्ठोऽध्यायः।

**तुजादीनाम्**। छन्दसि सर्वविधीनां वैकल्पिकत्वात्—'ममहान' इत्यपि। 'पूरुषः' 'नारक' इति अन्यत्राऽपि दीर्घदर्शनादिदं सूत्रं त्यक्तुंशक्यम्।

१ 'इति पञ्चमः' इति ख. ङ. पाठः।

आहुवे[1] इति । आङ्पूर्वात् ह्वयतेर्लटि, आत्मनेपदोत्तमैकवचने, 'बहुलं छन्दसी'ति शपो लुकि, सम्प्रसारणे, उवङ् । न च भवति,-'ह्वयामि मरुतः शिवानि'ति ।

रेवानिति । यस्य संप्रसारणे, इकारेण पूर्वरूपे, आद्गुणे, 'छन्दसीर' इति वत्वम् । तत्र विहितविशेषणाऽऽश्रयणात् ।

चायः की । 'चायतेश्छन्दसि बहुलं 'की'त्यादेशः' । स्पर्द्धेर्लङीति । अत्र केचित्—'द्विर्वचनं, रेफस्य सम्प्रसारणम्, अकारलोपश्च निपात्यते । 'अस्पर्द्धेथामि'ति भाषायाम् । 'अपस्पृधेथामि'त्येकं पदं, 'तिङ्ङतिङ' इति निघातस्य 'यद्वृत्तान्नित्यमि'ति प्रतिषेधे, आद्युदात्तमि'त्याहुः ।

अपर आह–'स्पर्द्धेरपपूर्वस्य लङि, आथामि, सम्प्रसारणम्, अकारलोपश्च । 'बहुलं छन्दसी'ति अडभावः । द्वे पदे–'अपे'ति, 'स्पृधेथामि'ति । अत्राऽप्युक्तेन निघाते प्रतिषिद्धे, 'तास्यनुदात्तेदि'ति लसार्वधातुकाऽनुदात्तत्वे, धातुस्वरेण 'स्पृधेथामि'त्याद्युदात्ते, 'अप'शब्दः 'तिङि चोदात्तवती'ति निहतः । 'अपास्पर्द्धेथामि'ति भाषायाम्' इति । उभयथाऽपि वेदे दर्शनादुभयोरपीदं निपातनम् । अर्चेः, अर्हेश्च लिटि, उसि सम्प्रसारणाऽकारलोपौ निपात्येते । 'आनर्चुः' 'आनर्हुरि'ति भाषायाम् ।

थासीति । अभ्यासस्य सम्प्रसारणम्, अनिट्त्वं च निपातनात् । 'थासः से' । षत्वम् । 'चिच्युविषे' इति भाषायाम् । णलीति । अभ्यासस्य सम्प्रसारणं निपातनात् । 'तत्याजे'ति भाषायाम् । निष्ठायामिति[2] । आद्ये 'श्रा'भावः अन्त्ये ह्रस्वः, निपातनात् । बहुषु सोमेषु 'श्रा'भावः, अन्यत्र ह्रस्व एव । सोमादन्यत्र क्वचिदेकस्मिन्नपि 'श्रा'भावः–'यदि श्रातो जुहोतने'त्यादौ । सूत्रे 'श्राता' इति बहुत्वम् अविवक्षितम् । सोमे तु बहुत्व एवेति भाष्ये स्पष्टम् । निष्ठायां चेति । शिरादेशो, निष्ठाया नत्वाऽभावश्च, निपातनात् ।

---

१ 'माहुवे इति' इति ख. ङ. पाठः ।

२ 'निष्ठायाः' इति लघुशेखरे पाठः । 'निष्ठायाम्' इति ख. ग. ङ. पाठः ।

**आत्स्यादिति**। 'वे'त्यनुवर्त्तते । **चखादेति**। अनुदात्तेत्त्वलक्षणाऽऽत्मनेपदस्याऽनित्यत्वात्परस्मैपदम्। 'व्यत्ययेने'ति **हरदत्तः**। आत्त्वस्य अनैमित्तिकत्वेन 'द्विर्वचनेऽची'त्यस्याऽभावात्, अभ्यासे अवर्णान्तता।

**शीर्ष्ण इति**। छन्दसि सर्वविधीनां वैकल्पिकत्वात् 'शिरस्'शब्दस्याऽपि वेदे प्रयोगो न विरुद्धः। **वाराहीति**। 'वराहस्य विकार' इत्यञन्तान्ङीप्। द्विवचने पूर्वसवर्णदीर्घः। उपानहौ विशेष्ये। **मानुषीरिति**। जसि पूर्वसवर्णदीर्घः। **शम्यं चेति**। पूर्वत्वाऽभावे विकल्पविधानसामर्थ्यात्पूर्वसवर्णदीर्घोऽपि न। तयोरत्र विषये विशेषाऽभावात्। **या ते इति**। 'यानि ते' इत्यर्थः। शेर्लोपे, प्रत्ययलक्षणेन नुमि, 'सर्वनामस्थाने चे'तिदीर्घे, नलोपः। शेः 'सुपां सुलुगि'ति आकारे, छान्दसत्वान्नुमभावे, 'प्रथमयोरि'ति पूर्वसवर्णदीर्घेण सिद्धेरिदं सूत्रं व्यर्थम्। **'त्वा एमन्'**, **'त्वा ओम्नि'**ति स्थितिः। **हृदय्या इति**। अकारस्य अयादेशः।

**प्रकृत्याऽन्तः**। अयं पाठः शाकल्यसूत्रे 'चेन प्रकृत्येत्यनुकृष्यते' इतिभाष्यदर्शनादवसीयते। 'इको गुणवृद्धी' इति सूत्रे 'नान्तः पादमि'तिपाठः। अत्र पाठे 'एङः पदान्तादि'ति पूर्वरूपं निषिध्यते। तत्र च निषिद्धे अयादे[२]शोऽपि न। बाधके निषिद्धे, भ्रष्टाऽवसरत्वाद्बाध्यमपि क्वचिन्नेति स्वीकारात्।

प्रकृतसूत्रे भाष्ये तु 'पदान्तादेङोऽती'त्यनुवर्त्त्य 'पदान्तस्य एङः अति यत्प्राप्नोति, तस्य सर्वस्याऽयं निषेध' इति व्याख्यातम्। 'भ्रष्टाऽवसर'न्यायश्च नाऽस्त्येव, 'तौ सदि'त्यादिनिर्देशादिति तदाशयः। पादश्चेह न श्लोकस्य,'वा च्छन्दसी'त्यतो मण्डूकप्लुत्या 'छन्दसी'त्यनुवृत्तेः। तदाह—**ऋक्पादेति**। 'एङः पदान्तादि'ति सूत्रात् 'एङ' इति पञ्चम्यन्तम अनुवृत्तं, प्रथमया विपरिणम्यते। 'अती'ति चाऽनुवर्त्तते। तदाह–**एङित्यादि**। **प्रकृतिः** = स्वभावः। **प्रकृत्येति**। 'न विकारमापद्यते'इत्यर्थः।

---

१ 'ते' इति लघुशब्देन्दुशेखरात्पूरितम्।

२ 'अयोऽपि न' इति ग. पाठः।

**अन्तःपादं किमिति** । 'ऋची'त्येव किं नोक्तमि'ति प्रश्नः ।

**एतेऽर्चन्तीति** । अत्र एङ् पूर्वपादाऽन्ते, अकारः परपादाऽऽदौ, अतो निमित्त-निमित्तिनोः पादमध्यस्थत्वाऽभावः ।

**अव्यादिति** । अवेः आशीर्लिङ् । **अवद्यादिति**—पञ्चम्यन्तम् । 'अव'पूर्वस्य क्रमेर्लिटि, उसि, 'च्छन्दसि वे'ति द्वित्वाऽभावे –**अवक्रमुरिति** । 'अवचक्रमुरि'ति पाठो लक्ष्यविसंवादी ।

**अव्रतेति** । वृङ्वृञोः 'मन्त्रे घसे'ति च्लेर्लुकि, झस्य अदादेशे, यण् । **अयमिति** । इदमः सौ । अवतेर्लोटि—**अवन्तु** । तस्मादेव असुन्नन्तान् क्यचि 'क्याच्छन्दसी'ति 'उ' प्रत्यये-**अवस्युरिति** ।

**आपोजु** । 'आपो' 'जुषाणो' 'वृष्णो' 'वर्षिष्ठे' इत्येते शब्दाः,'अम्बिके'-शब्दात्पूर्वौ 'अम्बे' 'अम्बाले' इत्येतौ च यजुषि स्थितावति प्रकृत्येत्यर्थः । 'आपो' इत्यादीनि लुप्तविभक्तिकानि पृथक्पदानि अनुकरणानि ।

**अम्बिकेपूर्वे इति** । अस्मादेव निपातनात् पञ्चमीसमासः । 'आपो' इति जसन्तम् । 'जुषाणो' इति स्वन्तम् । 'वृष्णो' इति शसन्तम् । 'वर्षिष्ठे' इति ङ्यन्तम् । इतरे सम्बुद्ध्यन्ते । **अम्बे अम्बाले अम्बिके इति**—यजुष्येव[2] पठ्यते । **अस्मादेवेति** । 'अम्बे' इत्येतद्विषयमेतत् । **अङ्ग-शब्दे य इति** । 'विद्यमान' इति शेषः । **तदादौ चेति** । षष्ठीतत्पुरुषः । सूत्रे 'इति'शब्दः तच्छब्दसमानाऽर्थ इति भावः ।

**कुधपरे इति**—बहुव्रीहिः । धकारे अकार उच्चारणाऽर्थः । **आद्युदात्त इति** । 'ऋज्रेन्द्राग्ने'त्यत्र निपातनादिति भावः ।

**आङोऽनु** । 'विभक्त्यर्थवृत्तेः अनर्थकाऽऽङोऽत्र ग्रहणम् । तेन क्रिया-विशेषकस्याऽर्थवत 'आतरदि'[3]त्यत्र ने'ति **हरदत्तः** । 'वाक्यस्मरणयोरङि-

---

१ इतोऽग्रे 'प्रातिशाख्ये त्विति' इति ख. ङ. पाठः ।

२ 'यजुष्येवमेव पठ्यते' इति ख. ङ. पाठः ।

३ 'आतररित्यत्र' इति ख. ङ. पाठः ।

दि'ति अङिह्लक्षणे एव तात्पर्यात्सप्तम्यर्थवृत्तिरपि ङित् । **प्रकृतिभाव इति** । तन्मात्रमित्यर्थः, न तु ह्रस्वोऽपि ।

**स्य इति** । त्यच्छब्दस्य प्रथमाऽन्तस्याऽनुकरणम् । 'एष स भानुरि'ति उदाहरणाऽर्थः । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयानि'त्याशयेनाऽऽह—**चन्द्रशब्दस्येति** । कथं तर्हि 'महि क्षेत्रं पुरुश्चन्द्रमि'ति । न हि अत्रोत्तरपदमस्ति । उदात्तद्वयदर्शनात् । पदकारैर्विभज्य पाठाच्च । सत्यम् । बाहुलकात्समाधेयम् । **द्वन्द्वे इति** । पूर्वपदे अरङादेशो निपात्यः । उत्तरपदे तु 'सुपां सुलुगि'ति विभक्तेराकारादेशः । 'ऋतो ङी'ति गुणः । न चैवं 'छन्दो'ग्रहणं व्यर्थम्, आकाराऽऽदेशस्य छन्दस्येव सत्त्वादिति वाच्यम् । योगविभागेनाऽसमासेऽपि निपातनाऽर्थत्वात् । अत एव भाष्योदाहृतस्य कस्याञ्चिच्छाखायां भिन्नपदत्वेन पाठेऽपि न दोष इत्याहुः । अधिकं भाष्यप्रदीपोद्द्योते द्रष्टव्यम । **विष्वग्देवयोरिति** । इदं सर्वनाम्नोऽपि उपलक्षणम् । तदाह—**विष्वाचीति** । 'विश्वमञ्चती'ति विग्रहः । 'बहुल'-ग्रहणादन्यत्राऽपि क्वचित् । तेन[1] कद्रीची सिद्धा ।

**सधमाद** । 'सधे'त्यविभक्तिको निर्देशः । सह माद्यन्ति देवा अस्मिन्निति 'सधमादः' यज्ञः । 'मदोऽनुपसर्गे' इति अपि प्राप्ते, 'अजब्भ्यां स्त्रीखलना' इति तद्बाधके ल्युटि, 'हलश्चे'ति घञ् । सूत्रे 'मादे'त्यकार उच्चारणाऽर्थः । तेन माद्यतेः क्विपि 'मादि'त्युत्तरपदेऽपि भवति-'अर्वागिन्द्र सधमादो वहन्तु' इति । 'सह तिष्ठती'ति **सधस्थः** ।

**पथि च छं** । 'विभाषा पुरुषे' इत्यतो 'विभाषे'ति वर्त्तते । चात् 'का' । **तृनि तृतीयमिति** । 'भूरि चक्रे'तिमन्त्रे 'साढे'त्यर्थकं 'साह्ळे'त्याद्युदात्तं पठ्यते । तद्भाष्ये च 'शत्रूणामभिभवित'ेति व्याख्यातम् । तृचि त्वन्तोदात्तं स्यात् । क्तप्रत्ययान्तात् आपि तु स्वरदोषः,अर्थाऽसङ्गतिश्च स्यात् । तस्मात् तृन्नन्ततैव युक्तेति भावः । सूत्रे 'इति'शब्दः प्रकाराऽर्थे । तेन निष्ठायामपि

१ 'तेन कद्रीची सिद्धा' इति लघुशेखरात्पूरितम् ।

निपातनम् । 'आषाळ्हमुग्रं सहमानमि'त्यादि । 'वृत्तौ तृचि रूपं 'साढे'ति यदुक्तं, तत्प्रमाद' इति **हरदत्तः** ।

**द्वयोरिति** । 'अस्य = आचार्यस्य स ह्ळकारतामेती'त्यन्वयः । 'ऊष्मणा संप्रयुक्तः स्थानिवत् आदेशोऽपि सोष्मे'त्यर्थः ।

**छन्दसि च** । 'अष्टन' इति, 'दीर्घ' इति च वर्त्तते । फलितमाह—**आत्वं स्यादिति** । नलोपे कृते टकाराऽकारस्य दीर्घः ।

**मन्त्रे** । 'सोममन्त्रविषये' इत्यर्थः ।

**ओषधेश्च** । न च 'कृदिकारादि'ति ङीषा गताऽर्थता । अन्तोदात्तताऽऽपत्तेः । इष्यते त्वाद्युदात्तः, 'लघावन्ते द्वयोश्चे'ति फिट्सूत्रात् ।

**ऋचि तु** । 'ऋग्वेदे' इत्यर्थः । अष्टानां दीर्घः । 'घ' इति स्वरूपग्रहणं, न तरप्तमपोः । छन्दसि 'घ'शब्दस्यैव दीर्घदर्शनात् । **उत वेति** । भार्याभ्राता श्यालः । ततः पञ्चमी । **थादेशस्येति** । 'तस्थस्थमिपामि'त्यनेन ।

**शृणोतेति** । 'तप्तनप्तनथनाश्चे'ति तबादेशः । पित्त्वान्न ङित्त्वम् । **उरुष्येति** । कण्ड्वादियगन्तो रक्षणाऽर्थः । सेर्हिः । 'अतो हेरि'ति लुक् ।

**इकः सुञि** । 'सुञी'ति निपातस्य ग्रहणम्[1] । तस्य च ञकारोऽत्रैव विशेषणाऽर्थः । 'निपातस्ये'त्यनेन तु न गताऽर्थता । तत्र 'अत' इत्यनुवृत्तेः । 'अनिपाताऽर्थमावश्यकत्वाच्चेत्ये'के[2] । 'माऽस्त्वनुवृत्तिः । अनकारान्ते तु बाहुलकान्न, 'अथ ते विश्वमि'तिवत् । निपाताऽतिरिक्तेगन्तविषयं तु लक्ष्यं न वेदे, इतीदं सूत्रं व्यर्थमि'ति **केचित्** । **वृत्तावत्र** 'मन्त्रे' इत्यस्याऽनुवृत्तिः, उत्तरसूत्रयोः 'ऋची'त्यस्याऽनुवृत्तिर्दृश्यते । 'अन्येषामपी'ति सूत्रे 'मन्त्रे इति निवृत्तमि'ति **हरदत्तदर्शनात्**, तस्यैव सर्वत्र अनुवृत्तिर्युक्ता ।

**द्व्यचोऽतः** । 'द्व्यचस्तिङन्तस्याऽतो दीर्घः' । **मन्त्रे इति** । 'ऋग्रूपे' इत्यर्थः । द्व्यच इति किम्? । 'अश्वा भवत वाजिनः' । **चक्रेति** । मध्यमपुरुष-

---

१ 'सुञ् इति' इति क्वचित्पाठः ।

२ 'इत्येके' इति ख. ङ. नास्ति ।

बहुवचनम्। **धाता धातॄणामिति** । **वृत्तिकृतां** तिसृचतस्रोरत्राऽनुवृत्तिस्त्वयुक्तेति भावः । **षपूर्वस्याऽच इति** । दीर्घश्रुत्या उपस्थितस्य 'अच' इत्यस्य 'षपूर्वस्ये'ति विशेषणम्। 'उपधाया' इत्यपि तस्यैव विशेषणम्। अत एव पुँल्लिङ्गाऽविरोधः। **जनितेति** । 'जनयिते'त्यर्थः । तृचि रूपम्।

**शमिता यज्ञे** । 'यज्ञकर्मणि मन्त्रविषये इडादौ णिलोपो निपात्यते' । 'मन्त्रे' इत्यनुवृत्तेर्वृत्तौ दर्शनात् । तदननुवृत्तौ तु यज्ञे 'शमयिते'त्यस्याऽसाधुताऽऽपत्तिरिति बोध्यम्। सूत्रे प्रथमैकवचनमविवक्षितम्। 'शमितारो यदत्र सुकृतम्,' 'शमितृभ्यश्चैवैनं शामित्रमि'त्यादिदर्शनात्। **वियूयेति** । 'यु मिश्रणे' । वियुत्य = विप्लुत्येत्यर्थः । **आनट् इति** । नशे रूपम् । **आव रिति** । वृञो लुङि 'मन्त्रे घसे'ति च्लेर्लुकि रूपम्। **अमाङ्योगेऽपीति** । अपिशब्दान्माङ्योगेऽपि। **जनिष्ठा इति**। अत्र अमाङ्योगेऽपि अडभावः।

**अवाप्सुरिति**। माङ्योगेऽप्यट् । कर्मणि लुङ्। व्यत्ययेन परस्मैपदम्। 'झेर्जुस्'। 'च्लेः सिच्'[1]। 'वदव्रजे'ति वृद्धिः। 'वः = युष्माकं, क्षेत्रे = भार्यायां, परेषां बीजानि = वीर्याणि, मा वाप्सुः = उप्तानि मा भूवन्नि'त्यर्थः। एतच्च **वृत्त्यनुरोधेन** । अध्ययनं तु[2] 'वाप्सुरि'त्येव दृश्यते । माङि अटस्तु उदाहरणाऽन्तरमन्वेषणीयम्। ननु परत्वाद्रेभावे कृते अनजादित्वाद्दालोपो न प्राप्नोतीत्यत आह– **रेभावस्येति** । नन्वेवं 'रे'भावे कृते तस्यैव इट् प्राप्नोति। न च 'रे'भावो व्यर्थः। क्रादिष्वनिट्सु चरितार्थत्वात्। अत आह—**अत्रेति** । ननु लाक्षणिकत्वात्, 'लक्ष्ये लक्षणस्ये'ति न्यायाच्च कथं 'रे'भावः पुनः, अत आह-**तदर्थं चेति** । द्विवचननिर्देशसामर्थ्यात् परिभाषाद्वयस्याऽप्यप्रवृत्तिरिति भावः। **क्ङितीति** । अजादावित्यर्थः ।

**वितत्निरे इति** । 'वितेनिरे' इत्यर्थः। लोपविधानसामर्थ्यात् तस्य असिद्धत्वेऽपि, एत्वाऽभ्यासलोपौ न। **पत्निमेति**। लिट्। मस्। इट्। 'पेतिमे'त्यर्थः।

१ 'च्लिः, सिच्' इति ख. ग. ङ. पाठः। २ तुः क्वचिन्न।

**घसिभ**। सूत्रे 'च'पाठोऽनार्षः। 'हल्ग्रहणमनर्थकमन्यत्राऽपि दर्शनादि'ति वार्त्तिकात्। **सग्धिरिति**। अदेः क्तिन्। 'बहुलं छन्दसी'ति 'घस्लृ' आदेशः। उपधालोपे कृते 'झलो झली'ति सलोपः। धत्वम्। जश्त्वम्। समानस्य सः। 'स्वतन्त्रघसेः क्तिनि, पृषोदरादित्वादुपधालोपे, सहस्य सादेशे, लोकेऽपि सग्धिः साधुरि'ति **केचित्**। **बब्धामिति**। भसेर्लोट्। ताम्। श्लुः। परं, नित्यमपि उपधालोपं बाधित्वा, बाहुलकात्प्रथमं द्वित्वम्। उपधालोप-सलोप-धत्वादीनि। अजादावपि दृश्यते–'अग्निर्वनानि बप्सति'।

**श्रुशृणु**। 'एभ्यो धिः स्याच्छन्दसि'। **श्रुधी हवमिति**। 'अन्येषामपी'ति दीर्घः। 'पृ' पालनादौ। **उरुणसिति**। 'नश्च धातुस्थोरुषुभ्य' इति णत्वम्। **शृणुधीति**। अत्र 'धि'भावविधानसामर्थ्यात् 'उतश्चे'ति लुक् न। इतोऽन्यत्र व्यत्ययेन शप्। तस्य 'बहुलं छन्दसी'ति लुक्। 'अङित' इति हेर्विशेषणम्। छन्दसि पक्षे पित्त्वादङित्त्वम्। अत एव 'रारन्धी'त्यत्र 'अनुदात्तोपदेशे'ति मलोपो न[1]। **अभ्यासदीर्घ इति**। तुजादित्वादिति भावः। **शपो लुगिति**। 'बहुलं छन्दसी'ति। 'आङि'ति टासंज्ञा प्राचाम्। 'त्मन्या समञ्जदि'ति आङोऽन्यत्राऽपि लोपदर्शनात् 'आङी'ति व्यर्थम्। 'आत' इत्यनुवृत्तेः, 'आदेरि'त्यपि व्यर्थम्।

**ऋत्व्यवास्त्व्य**। 'ऋतु'वास्तु'शब्दयोर्यति यणादेशो निपात्यते। भवाऽर्थे यत्। वास्तोरणि च। **मशब्दस्य लोप इति**। तस्याऽसिद्धत्वात्, 'यस्ये'ति लोपो न। 'अङ्गवृत्त'परिभाषया 'अकृत्सार्व'ेति दीर्घो न। यद्वा मकारमात्रलोपे कृते, 'यस्ये'ति लोपे, प्रत्ययाऽकारस्य श्रवणम्।

इति षष्ठोऽध्यायः ॥

१ 'रारन्धी'त्यत्र नलोपो न' इति ख. ङ. पाठः।

अथ सप्तमोऽध्यायः ।

**पक्षे इति** । सर्वविधीनां छन्दसि वैकल्पिकत्वात् । **दुह्रे इति** । झस्य अत् । तलोपे, रुटि 'अतो गुणे' । **अदृश्रमिति** । इरित्त्वादङ् । 'बाहुलकात् 'ऋदृशोऽङी'ति गुणो ने'त्येके । भाष्ये तु गुणं वारयितुं 'दृशेरक्'इत्युक्तम् । व्यत्ययेन प्रथमपुरुषबहुवचनस्थाने उत्तमपुरुषैकवचनम् । बाह्वृच्ये शाखाऽन्तरे तु 'अदृश्रन्नि'त्येव पठ्यते' इति **माधवः** । **देवेभिरिति** । —अतोऽपि न भवति । क्वचित् अनतोऽपि भवति—'नद्यैरि'ति ।

**क्त्वाऽपि च्छन्द** । 'अपि'शब्दात् ल्यबपि । 'उद्धृत्य तान् जुहोति' । 'वा च्छन्दसी'त्येव सिद्धे, 'क्त्वाऽपि'ग्रहणात् असमासेऽप्यनेन ल्यप् क्वचिदि'ति **हरदत्तः** । तेन 'आज्येनाऽक्षिणी अज्ये'ति **कल्पसूत्र**प्रयोगः, एवं 'विनायकं पूज्ये'ति **याज्ञवल्क्य**प्रयोगश्च सिद्धः ।

**सुपां सु** । 'सुपां स्थाने एते आदेशा' इत्यर्थः । **पन्था इति** । जसः स्थाने सुः । छान्दसत्वात्सर्वाऽऽदेशः । 'व्यत्ययो बहुलमि'त्यस्याऽयं प्रपञ्चः । 'सुपां सुपो भवन्ती'ति, 'तिङां तिङो भवन्ती'त्यप्येवम् ।

**पूर्वसवर्ण इति** । आन्तर्यात् ईकारः । ततः सवर्णदीर्घः । नन्वेवं पूर्वसवर्णेनैव 'परमे व्योमन्नि'ति सिद्धम् । इकारस्य पूर्वसवर्णे नकारे,तत्र पदसंज्ञायां, पूर्वनकारस्य लोपात् । न च आन्तर्यात्पूर्वसवर्णो दकारो भविष्यति, तत्र च[1] नलोपे रूपाऽसिद्धिः । 'न ङिसम्बुद्ध्योरि'ति निषेधान्नलोपाऽभावे, संयोगान्तलोपेन इष्टसिद्धेरिति चेन्न । संयोगान्तलोपस्याऽसिद्धत्वेन लुक एव प्रवृत्तिरित्याशयात् । 'यत्सुन्वन्ती'त्यादौ 'यत् इ' इति स्थिते पूर्वसवर्णे[2] दकारे स्मिन् स्यादि[3]ति लुगावश्यकः । अनेकाल्सु अमादिषु अन्त्यस्य पूर्वसवर्णे, पूर्वभागस्य श्रवणाऽऽपत्त्या लुगावश्यक इति दिक् ।

---

१ चकारः ख. ङ. नास्ति ।

२ 'यदि पूर्वसवर्णे दकारः स्यात्तदा स्मिन् स्यात्' इति ग. पाठः ।

३ 'स्मिनापत्तिरिति' लघुशब्देन्दुशेखरे पाठः ।

**यमिति प्राप्ते इति**। अम आत्। 'न विभक्तौ' इति इत्त्वनिषेधः।

**युष्मासु अस्मभ्यमिति प्राप्ते इति**। यत्तु वृत्तौ 'यूयं वयमिति प्राप्ते' इत्युक्तम्। तत्प्रामादिकम्। 'न युष्मे वाजबन्धवो निनित्सुश्चन मर्त्यः। अवद्यमधि दीधरदि'ति मन्त्रे 'ऋक्षाऽश्वमेध'नाम्नो राज्ञो दानं प्रस्तूयते। 'सुरथाँ आतिथिग्वे स्वभीशूँ रार्क्षे आश्वमेधे सुपेशसः' इत्युपक्रमात्। 'वाजमि'ति अन्ननाम। अन्नदानेन ये सर्वेषां बन्धवस्तेषां सम्बोधनं हे वाजबन्धवः! युष्मे=युष्मासु। 'अधी'त्यस्याऽनेन सम्बन्धः। स च सप्तम्यर्थाऽनुवादी। यद्यपि विभक्त्यर्थेऽव्ययीभावो नित्यः, तथापि बाहुलकादिह न। निनित्सुश्चन=निन्दनेच्छाशीलोऽपि। निन्दतेर्नलोपः, सन इडभावश्च बाहुलकात्। मर्त्यः अवद्यं (पापं) न दीधरत्=न धारयति। भवदनुसन्धानेनैव निष्पापत्वादिति भावः। 'निनित्सुरपी'त्युक्त्या 'किमुत निन्दन्' इति गम्यते। स हि पुण्यश्लोकानां नाम गृह्णन् सुतरां शुद्ध इति भावः। द्वितीयमन्त्रेऽपि देवता प्रार्थ्यते—'हे इन्द्राबृहस्पती! अस्मभ्यं रयिं धत्तमि'ति। दधातिर्दानाऽर्थः। न चाऽत्र मन्त्रे 'यूयं' 'वयमि'त्यस्योक्तिसम्भवोऽस्ति। किञ्च जसंशे आदेशे 'यूयवयौ जसी'ति बाहुलकाद्वारणीयं स्यादिति दिक्।

**ता अनुष्ठ्येति**। ताः=वङ्क्रीः। 'षड्विंशतिरस्य वङ्क्रय' इति प्रक्रम्य इदम् अध्रिगुप्रैषे[1] पठितम्। नन्वनुपूर्वात्तिष्ठतेः 'आतश्चोपसर्गे' इत्यङं बाधित्वा 'स्थागापापचो भावे' इति क्तिना भवितव्यमिति चेत्। सत्यम्। 'पूर्वपरे'ति सूत्रे 'व्यवस्थायामि'ति निर्देशात्सामान्याऽपेक्षज्ञापकाऽऽश्रयणेन अङ् भविष्यति। तदाह—**व्यवस्थावदिति**। आङः=तृतीयैकवचनस्य। **मृग्यमिति**। शाखाऽन्तरे आद्युदात्तपाठात् इदमेवेति भाष्यस्वरसः।

**बाहुनेति प्राप्ते इति**। यत्तु वृत्तौ 'प्रबाहुने'ति प्राप्ते' इति। तच्चिन्त्यम्। पृथक् स्वरदर्शनेन, पदकारैर्विच्छिद्य पाठेन च, तस्य पृथक्पदत्वात्।

---

१ 'ध्रिगुप्रेषे' इति ख. ङ. पाठः।

अत एव आख्याताऽन्वयी स इति बोध्यम् । **स्वप्नयेति** । अयाचोऽकारः 'सुपि चे'ति दीर्घनिवृत्त्यर्थः । **मिबादेशस्येति** । न तु द्वितीयैकवचनस्य, छन्दसि दृष्टाऽनुविधानादिति भावः । **शित्त्वादिति** । मकारस्याऽपि मकारवचनम् अनुस्वारनिवृत्त्यर्थं स्यादिति भावः । **वधीमिति** । हन्तेर्लुङ् । 'लुङि चे'ति वधादेशः । च्लेः सिच्[1] । इट् । मिपोऽम् । तस्य '**मश्**[2]' । तस्य 'अस्तिसिच' इतीट् । सिचो लोपः । सवर्णदीर्घत्वम् ।

**लोपस्त** । 'आत्मनेपदेषु विद्यमानतकारस्य लोपः स्यात्' । **अदुह्रेति**। दुहेर्लङो झस्याऽतो 'बहुलं छन्दसी'ति रुट् । तकारस्य लोपे द्वयोरकारयोः 'अतो गुणे' इति पररूपम् । छान्दसत्वादेव क्वचिन्न–'तत एवात्मानमाद्दतं कुरुते' । **प्रामादिकीति** । लक्ष्ये वकारस्यैव पाठात् , **वेदभाष्ये** प्रकृत-सूत्रस्य मलोपमात्रपरतोक्तेश्चेति भावः । छन्दसि दृष्टाऽनुविधानादाह— **मध्यमपुरुषेति** । **कृणुतादिति** । कृवेः 'धिन्विकृण्व्योर च्चे'ति 'उ'प्रत्ययः । वस्य अकारः । अतो लोपः । **शृणोतेति** । पित्त्वेन अङित्त्वाद्गुणः । अत एव 'दधातने'त्यत्र 'श्नाभ्यस्तयोरि'त्यालोपो न । थस्य 'तस्थस्थमिपामि'ति तादेशः, तस्य एते आदेशाः । 'यती'त्यस्य व्याख्या—**यत्सङ्ख्याका इति** ।

**जुषध्वमिति** । यत्तु **काशिकायां**, **प्राचो** ग्रन्थे च 'जुषते'ति प्राप्ते' इत्युक्तं, तत् प्रामादिकमिति भावः । **एमसीति** । इण आङ्पूर्वस्य रूपम् ।। यगागमे अकारो विवक्षितः ।

**आज्ज**। 'जसेरि'ति इकारोच्चारणं पूर्वाचार्याऽनुरोधात् । असुकि कृते जसेः सकारस्य श्रवणम् । असुकः सस्य विसर्गः । 'उभयासो जातवेदः स्याम' इत्यत्र परत्वात् असुकि, 'सकृद्गतावि'तिन्यायेन पुनः शी न ।

**श्रीग्रामण्योरिति** । पञ्चम्यर्थे षष्ठी । **श्रीणामिति** । 'वाऽऽमी'ति नदी-त्वविकल्पेऽपि च्छन्दसि दृष्टाऽनुविधानेनाऽभावस्य आपदयितुमशक्य-

१ 'च्लेः सिच इट्' इति ग. पाठः ।

२ 'मशूम्' इति ख. ग. ङ. पाठः । 'मश्' इति तु लघुशेखरे पाठः ।

त्वाद्यर्थमिदम् । 'सूताश्च ग्रामण्यश्चे'ति इतरेतरद्वन्द्वः । समाहारद्वन्द्वं कृत्वा एकशेषे तु ह्रस्वाऽन्तत्वादेव नुट्सिद्धौ, 'ग्रामणी'ग्रहणमपि व्यर्थम् । 'छन्दसी'ति तु 'गोः पादान्ते' इतिसूत्रे ऋक्पादस्यैव ग्रहणाऽर्थमावश्यकम् ।

**गोः पा** । 'ऋक्पादाऽन्ते वर्त्तमानगोशब्दात्परस्य आमो नुट्' ।

**छन्दस्यपि दृ** । 'यत्र विहितस्ततोऽन्यत्रापि दृश्यते' इत्यर्थः ।

**अस्थभिरिति**—अनजादितृतीयादौ । अतृतीयादावपि—'अस्थान्युत्कृत्य पचति' । अविभक्तावपि—'अक्षण्वता' 'अस्थन्वते'त्यादि । अनङि, 'अनो नुडि'ति मतुपो नुट् । अनङो नस्य लोपः ।

**ई च द्वि** । 'अस्थ्यादीनाम् ईकार उदात्तो, द्विवचने, च्छन्दसि' । **कीदृङ्ङिति** । 'त्यदादिषु दृश' इति किन् । नुमि कृते 'किन्प्रत्ययस्ये'ति नस्य ङः ।

**स्ववानिति** । अवेरसुन् । 'सुष्ठु अवो यस्ये'ति विग्रहः । तुः सौत्रो वृद्ध्यर्थः । ततोऽसुन् । स्वं तवः = वृद्धिर्यस्येति विग्रहः । **ततुरिरिति** । तरतेः किन् । उत्त्वम् । 'द्विर्वचनेऽची'ति 'तु' इत्यस्य द्वित्वम् । उरदत्त्वम् ।

'ह्वरेरि'ति आगन्तुना इकारेण कृतगुणस्य निर्देशः । 'अत एव निर्देशात् धातुनिर्देशे अकिदिकारोऽपी'त्यन्ये । 'ह्वु' इत्युकारविशिष्टोऽत्र पाठः केषां चित् । 'ह्वृ'इति ऋकारपाठोऽन्येषाम् । तत्त्वं तु देवा जानन्ति ।[1]

**अपह्वृता इति** । बहुवचननिर्देशः छन्दसि तस्यैव प्रयोगदर्शनात् । **इट्-गुणाविति** । आदेशाऽभावोऽपि बोध्यः । **अष्टादशेति** । क्षमितः पाठ त्वेकोनविंशतिः । **उत्तभिते** 'उदः स्थे'ति पूर्वसवर्णः सस्य थः । **मा भूदिति** । 'इडि'ति शेषः । **चत्तो इति** । 'चत्त'शब्दाट्टापि उञा सह 'आद्गुणः' । निपातेन सह एकीकृत्य च्छेदस्तु पदकारसंप्रदायसिद्धः । **अश्वस्याविश-**

---

१ 'ह्वु' इत्यारभ्य 'जानन्ति' इत्यन्तोऽयं ख. ङ. पाठः । ग. नास्ति ।

**स्तेति** । 'अन्येषामपी'ति दीर्घः । सूत्रे इतिः प्रकारे । तेन क्वचित् ईकारोऽपि, 'वित्तमभ्यमीति वरुण' इति **वृत्तिः** ।

**बभूथा** । वृञः क्रादिसूत्रेण इडभावे सिद्धे, 'निगमे एवे'ति नियमाऽर्थमिदम् । तदाह—**भाषायां त्विति** । **ववर्थेतीति** च ।

**ससनिस** । 'सनिमि'त्यस्य च्छान्दसत्वात्, आनुपूर्व्याश्च विवक्षितत्वात्, छन्दस्येव एतन्निपातनम् । **पावका इति** । पुनन्ति, पावयन्ति वा **पावकाः** ।

**घोर्लोपो** । 'घुसञ्ज्ञकानां लेटि परतो लोपो वा' । दधातेर्ददातेश्च लेट् । तिप् । 'इतश्च लोपः परस्मैपदेषु' इति ईकारलोपः । न च लोपेऽपि आडागमेन 'ददात्' इत्यस्य सिद्धौ 'वा'ग्रहणं व्यर्थम् । आगमशास्त्राऽनित्यत्वज्ञापनाऽर्थत्वात् । **सर्वमा इति** । अस्तेर्लङ् । तिप् । '[1]आडजादीनामि'त्याट् । ईडभावे अपृक्तत्वात् हल्ङ्यादिलोपः । शपो लुक् । रुत्वविसर्गौ । संहितायां 'भोभगो' इति यत्वम् । 'लोपः शाकल्यस्ये'ति यलोपः ।

**जसादिष्विति** । 'आदि'शब्दः प्रकारे । तेन 'दर्वे' 'दर्वि' 'अम्बे' 'अम्ब' इत्यादि सिद्धम् । **नाभ्यस्तस्येत्यादि** । 'जुजोषदि'त्युदाहरणम् ।

**न च्छन्दसि** । इह यदि आनन्तर्यात् ईत्त्वमात्रं प्रतिषिध्येत, तर्हि 'अकृत्सार्व'ति दीर्घः स्यात्, अपवादाऽभावे पुनरुत्सर्गप्रवृत्तेः । अत आह–**ईत्त्वदीर्घौ नेति** । 'क्यचि यदुक्तं तन्ने'ति व्याख्यानादिति भावः । अत्र ज्ञापकमनुपदमेव वक्ष्यति । **अपुत्रादीनामिति** । अत्र 'आदि'ग्रहणस्य प्रयोजनाऽन्तरं मृग्यमि'ति **हरदत्तः** । **[2]जनमिति** । **अपरे** 'जनीं=वधूमिच्छन्त' इत्याहुः । **दुष्टीयतीति** । प्रकृतिमात्रे तात्पर्यम् । 'उ'प्रत्ययसमानाऽर्थेन तृना 'दुष्टीयिते'त्यादि बोध्यम् । **यजुर्वेदस्थे**=यजुर्वेदीयकठशाखास्थे । ननु 'देवान् जिगाती'ति प्रत्युदाहरणमयुक्तम्, 'यजुषि'

---

१ आडजादीनामि'ति आट्' इति पाठः ख. ग. नास्ति ।

२ 'जनमिति' इत्यादिः 'इत्याहुः' इत्यन्तः ख. ङ. पाठः । ग. नास्ति ।

'काठके'इत्यंशद्वयस्याऽपि तत्राऽभावादत आह—**बह्वृचानामपीति**। तत्रेदं दृष्टमिति भावः। काठके इति किम्? । यजुर्वेदेऽपि शाखाऽन्तरे मा भूत्-'अत्र सुम्नयुरिदमसि' ।

**कव्यध्व**। 'कवि', 'अध्वर', 'पृतना'-एषामन्त्यस्य लोपः स्यात्क्यचि, ऋचि विषये'। मृगय्वादिगणेऽपि 'अध्वर्यु'शब्दः पठ्यते, तद्व्युत्पत्त्यन्तरम्। 'कव्ये'त्युदाहरणम्।

**विभाषा**। 'जहातेर्हिर्वा स्यात्, क्त्वि'। 'हात्वे'ति पाठे छान्दसत्वात् ईत्त्वाऽभावः। **वसुधितमिति**। 'वसूनां धातारं = प्रदातारमित्यर्थ' इति **वेदभाष्यम्**। 'कर्मधारय' इति हरदत्त। 'नेम' इत्यर्द्धे। कर्मधारयो—**नेमधिते**। **माद्भिरिति**। 'पद्दन्' इति 'मास'शब्दस्य मासादेशः।

**समुषद्भिरिति**। 'वसन्तीति उषसः = सहवासिनः। तैः सम्भूये'त्यर्थः। **वेदभाष्ये** तु 'उषद्भिः = ज्वलद्भी रश्मिभिः'। 'उष दाहे', लटः शतरि, शपि प्राप्ते, व्यत्येन श' इत्युक्तम्। तदुपायाऽन्तरं बोध्यम्।

**कृषेश्छं**। लोके तु 'चरीकृष्यते कृषीवलः'। **आद्यास्त्रय इति**। धृङः शपः श्लुः, अभ्यासस्य दीर्घः, परस्मैपदं च निपात्यते। धारयतौ तु श्लु-णिलुक्-अभ्यासदीर्घत्वानि। अन्त्ययोः श्लु-णिलुक्-रुगागमा। धृङस्तु श्लु-रुक्-परस्मैपदानि। यद्वा धृङो यङ्लुकि रुगभावमात्रमाद्ये। 'दर्धर्त्ती'-त्यत्र तेनैव निपातनेन प्राप्तस्य रुगभावस्य बाधाय रुक् निपातितः। 'दर्धर्षी'त्यत्र तु यङ्लुक्पक्षे न किञ्चिन्निपात्यम्, किन्तु श्लावेवेति दिक्। **यङ्लुगन्तस्येति**। 'लोटी'ति शेषः। **तेन भाषायामिति**। लोडतिरिक्ते च-'बोभवीति', 'बोभोती'ति। 'यङो वे'ति पक्षे ईट्। **संपूर्वस्येति**। 'संपूर्वता अतन्त्रम्, 'आसनिष्यददि'ति दर्शनादि'ति **वृत्तिः**। **करोतेर्यङ्लुगन्तस्येति**। 'शतरी'ति शेषः। रिक्[2] तु 'रुग्रिकौ च लुकी'ति सिद्धः।

---

१ अपिः काचित्कः, ख. ङ. पाठः।

२ 'रिक् तु' इत्यादिः 'सिद्धः' इत्यन्तः ख. ङ. पाठः। ग. नास्ति।

**निगागमश्चेति**। 'अडभावश्चे'ति वृत्तिः। **बिभर्त्तेरिति**। 'यङ्लुगन्तस्य शतरी'ति शेषः। **द्युतेरिति**। 'यङ्लुगन्ताच्छतरी'ति शेषः। **तरित्रत इति**– जसन्तम्[1]। 'नाऽभ्यस्ताच्छतुरि'ति नुम्प्रतिषेधः। **मर्मृज्येति**। अत्र मृजेर्वृद्ध्य भावोऽपि,छान्दसत्वात्। 'इति'शब्द एवंप्रकाराणामन्येषामप्युपसङ्ग्रहाऽर्थः। **ससूवेत्यपि** दाधर्त्यादिष्वेव पठितुं युक्तम्। **इकारः स्यादिति**। 'श्लौ' इति शेषः। न च भवति—'ददातीत्येवं ब्रूयादि'ति।

## इति सप्तमोऽध्यायः ॥

### अथाऽष्टमोऽध्यायः।

**प्रसमुपोदः**। प्रादीनां समाहारद्वन्द्वः। टच् तु न। समासाऽन्तविधेः अनित्यत्वात्। पादपूरणे किम ?। 'प्र देवं देव्या धिया'। छान्दसमेतत्। भाषायाम् अनर्थकस्य प्रयोगाऽभावात्।

**छन्दसीरः**। छान्दसत्वादेव कचिन्न-'यो अँब्दिमाँ उदनिमाँ इयर्त्ति'[2]। छन्दसि सर्वविधीनां वैकल्पिकत्वात्। **अक्षण्वन्त इति**। 'अक्षि'शब्दात् मतुप्। 'छन्दस्यपि दृश्यते' इत्यनङ्। नुटोऽसिद्धत्वात्पूर्वं नलोपः। भूतपूर्वगत्या नुट्। तस्य तु न वत्वम्। वत्वं प्रति तस्याऽसिद्धत्वात्। णत्वम्। अत एव पूर्वाऽन्तो नुक् न कृतः। णत्वाऽभावाऽऽपत्तेः। न चैवम् अवग्रहे दोषः, णान्तमवगृह्णन्ति, 'अक्षे'त्यकारान्तं तु अवग्रहीतुमुचितमिति वाच्यम्। 'न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्त्यम्, तस्माद्यथालक्षणं पदं कर्त्तव्यमि'ति भाष्ये स्थितम्। किञ्च 'दुवयन्तः' 'ईयिवांसमि'[3]त्यादौ पदत्वं विनाऽपि बहुलमवग्रहः क्रियते। 'पूर्वभिरग्निने'त्यादौ सत्यपि पदत्वे न क्रियते इति प्रागेवोक्तम्। **घस्येति**। तरप्तमपोरित्यर्थः। **भूरिदावत्तर इति**। 'आतो मनिनि'ति वनिप्। अत्राऽवग्रहः प्राग्वत्। **रथीतर इति**। 'रथ'शब्दान्मत्वर्थे इनिः। तदन्तात्तरप्। नलोपे

---

१ 'जसन्तः' इति ख. ङ. पाठः।

२ 'योऽब्दिमां' इति ग. पाठः।

३ 'यीयिवांसम्' इति ख. ङ. पाठः।

कृते, इकारस्य ईकारः। [1]यदि तु नलोपाऽपवादो नकारस्य स्थाने ईद्विधीयते, तदा तस्याऽसिद्धत्वात्सवर्णदीर्घो न स्यात्। **रथीतममिति**। इह पदकारा ह्रस्वाऽन्तमवगृह्णन्ति। 'अन्येषामपी'ति संहितायां दीर्घ इति तदाशयः।

**नसत्तनिषत्त**। 'नसत्ते'त्यादीनां शब्दपराणां द्वन्द्वः। **निषत्ते**—'सदिरप्रतेरि'ति षत्वम्। **उन्देर्नञ्पूर्वस्येति**। यद्यपि 'नुदविदोन्दे'ति-सूत्रेण एतत्सिद्धम्। वैकल्पिकत्वेऽपि च्छन्दस्यापाद्यरूपाऽभावान्न दोषः। यदि नत्वसहितोऽपि प्रयोगः क्वचित्तर्हि स बाहुलकादिना त्वयाऽपि साध्य एव, तथापि भाषायां [2]नत्वनित्यत्वं निपातनस्य फलमित्याहुः। 'अनुत्तमि'-ति यत्, तत् छन्दस्येवे'ति व्याख्यानादिति भावः। **त्वरतेरिति**। 'ज्वरत्वरे'त्यूठ्। **तुर्वीत्यस्येति**। 'राल्लोपः'। **रु इतीति**। उत्त्वं च निपातनात्। रपरत्वं तु 'उरण् रपर' इत्येव सिद्धम्। कार्यकालपक्षाऽऽश्रयणेन परिभाषाणामसिद्धप्रकरणेऽपि प्रवृत्तेः। 'उभयथे'ति व्याचष्टे—**रुर्वेति**। नित्ये रुत्वे प्राप्ते, पक्षे रेफाऽर्थमिदम्।

**अम्न**। 'अम्नस्'शब्द ईषदर्थे। 'अम्नरस्तमित' इति यथा। **अवः**—रक्षणम्।

**भुवश्च म**। रुर्वा, रेफो वा। महाव्याहृतेरिति किम्?। 'भुवो विश्वेषु सवनेषु'। भवतेः 'छन्दसि लुङ्लङ्लिट' इति वर्त्तमाने लङ्। सिप्। शप्। गुणाऽभावश्छान्दसः। 'बहुलं छन्दस्यमाङ्योगेऽपी'त्यडभावः। लाक्षणिकत्वादेवाऽस्याऽग्रहणे सिद्धे, 'महाव्याहृति'ग्रहणं तस्याऽनित्यत्वज्ञापनार्थम्। तेन 'क्रापयती'ति पुक् सिध्यति।

**ओम**। **अभ्यादानम्**—आरम्भः। तत्र वर्त्तमानस्ये'त्यर्थः। प्लुतश्रुत्या 'अच' इत्युपस्थितेः अचः प्लुतः। मकारस्तु अर्द्धमात्र इति [3]अर्द्धचतुर्थमात्रोऽयम्।

१ 'यदि तु' इति ख. ङ. नास्ति।

२ 'भाषायां नित्यत्वम्' इति ख. ङ. पाठः।

३ 'अध्यर्द्धचतुर्थमात्रः' इत्यपि क्वचित् पाठः।

**ये यज्ञकर्मणि** । **यज्ञेति** किम् ? । स्वाध्यायकाले मा भूत् । 'ये यजामहे' इत्यत्रैवाऽयं प्लुत इष्यते । तेनेह न–'ये देवासो दिव्येकादशस्थे'ति । 'पित्र्यायां ये ३ स्वधे'त्यत्राऽपि भवति । एतत्स्थानाऽऽपन्नत्वात्तस्य ।

**प्रणवष्टेः** । 'टिस्थानिकः त्रिमात्र ओकारः, ओङ्कारो वा प्रणव' इति भाष्यादौ स्पष्टम् । इदं च आथर्वणप्रातिशाख्येऽपि स्पष्टम् । 'टेरि'ति तु प्रातिशाख्योक्तटिस्थानिकत्वाऽनुवादः । **हलन्ते इति** । तदभावे'टेरि'त्यननुवृत्त्या तद[1]न्तस्यैव स्यात् । व्यभिचाराऽभावाद्धि प्रणवः प्लुत्वेन न विशेष्यते, येनाऽच्परिभाषाप्रवृत्त्या अदोषः स्यादिति भावः । **याज्या मन्त्रा इति** । 'याज्याऽनुवाक्याकाण्डमि'तिसमाख्यातप्रकरणस्था इत्यर्थः ।

**अन्तः किमिति** । यद्यन्तग्रहणं 'टेरि'त्यस्य निवृत्त्यर्थं, तदा प्लुतश्रुत्या उपस्थितेन अचा अन्ते विशेषिते, अजन्ताया एव याज्यायाः स्यात् । 'टि'विशेषणत्वे तु[2] अनर्थकं, टेरन्तत्वाऽव्यभिचारादिति प्रश्नः ।

**ब्रूहिप्रे** । 'ब्रूहि'स्थानाऽऽपन्ने 'पित्र्यायामनुस्वधा[3]' इति प्रैषेऽपि प्लुतो भवति । एवं श्रौषट्स्थानाऽऽपन्ने 'अस्तु स्वधे'ति प्रत्याश्रवणे[4]ऽपि भवति । एवं वौषट्शब्दो 'वषट्' 'वौषट्' 'वाषट्' 'वाक्षट्' 'वक्षाट्' 'वाक्षाडि'त्येवंविधसर्ववषट्काराणामुपलक्षणमि'ति **हरदत्तः** । 'आवह देवान् यजमाने'त्यादौ न प्लुतः । छन्दसि सर्वविधीनां वैकल्पिकत्वात् ।

**तस्मादिति** । आदिभूतादित्यर्थः । 'ओ३श्रा३वय' 'आ३श्रा३वये'त्यनयोरेवाऽयम् । नेह–'अग्नीदग्नीन्विहरे'ति । प्लुतमात्रस्य वैकल्पिकत्वात्सिद्धमिदम् । 'ओ३स्व[5]३धे'ति प्रत्याश्रावणे[6] तत्स्थानाऽऽपन्नत्वाद्भवत्येव ।

---

१ 'तदन्त्यस्यैव' इति ख. ङ. पाठः । लघुशेखरेऽपि च तथैव ।

२ तुः ग. नास्ति । ३ अयं पाठः क्वचिन्न ।

४ 'प्रत्याश्रावणे' इति ख. ङ. पाठः ।

५ 'आ३स्व३धा' इति, 'ओ३स्व३धा' इति च पाठान्तरम् ।

६ 'प्रत्याश्रवणे' इति ग. पाठः ।

**पृष्टप्रतिवचनं**–प्रश्नोत्तरम् । **निगृह्येति** ल्यबन्तम् । 'वादिनं स्वमतात् प्रच्याव्ये'त्यर्थः । **अनुयोगः** – यस्मादसौ प्रच्यावितस्तस्य पक्षस्य शब्देन प्रकाशनम्—'एवं त्वं निरुपपत्तिकमात्थे'ति ।

**आम्रेडितंभ** । प्लवते । उदाहरणे 'वाक्यादेरामन्त्रितस्ये'ति द्वित्वम् । 'वाक्यस्य टेरि'त्यधिकारेऽपि अत्राऽनन्त्यस्य भवति । वाक्यादेरेव पदस्य भर्त्सने द्वित्वविधानात् । **उपलक्षणमिति** । तत्र 'एकैकस्ये'त्यनुवृत्त्या पर्यायलाभः ।

**अङ्गयुक्तम्** । आकाङ्क्षतीति–'आकाङ्क्षम्' । पचाद्यच् । **इदानीमिति** । कूजनफलमिदानीमेव ज्ञास्यसीत्यर्थः । अङ्गशब्दोऽमर्षे । प्रत्युदाहरणे तु अनुनये । 'अङ्ग देवदत्ते' त्येकं वाक्यम् । एतच्च 'मिथ्यावदसी'त्येतदपेक्षते ।

**विचार्य** । कोटिद्वयस्पृक् ज्ञानं '**विचारः**' । तादृशज्ञानविषयीभूतो 'विचार्यमाणः' । इह तु विचार्यमाणाऽर्थविषयत्वाद्वाक्यानि 'विचार्यमाणानि' । **गृहा३ इ इति** । 'गृहे'शब्दस्य प्लुतविकारः ।

**पूर्वं तु** । 'पूर्वमेवे'त्यर्थः । उदाहरणे 'नु'शब्दो वितर्के । **प्रतिश्रवणम्**– अभ्युपगमः, प्रतिज्ञानम्, श्रवणाऽऽभिमुख्यं च । **हन्त ते इति** । प्रार्थिताऽङ्गीकारो गम्यते । आद्ययोरर्थयोः 'प्रतिश्रवण'शब्दे गतिसमासः । तृतीये 'लक्षणेनाऽभिप्रती' इत्यव्ययीभावः । क्रमेणोदाहरणानि ।

**अनुदात्तं प्र** । प्रश्नवाक्ये यच्चरमं प्रयुज्यते स 'प्रश्नाऽन्तः' । **दूराद्धूतादिष्विति** । 'प्रश्नान्ताऽभिपूजितयोर्यः प्लुतः सोऽनुदात्तो भवती'त्यर्थादिति भावः । तत्राऽभिपूजिते 'दूराद्धूते चे'ति, इतरत्र 'अनन्त्यस्याऽपि प्रश्नाऽऽख्यानयो'रि'ति । आद्योदाहरणे 'अगमः ३ पूर्वा३न् ग्रामा३न्' इत्यादिः । **टेरनुदात्त इति** । 'अगमः३' इत्यादौ 'अनन्त्यस्यापी'ति प्लुतः स्वरितः । **प्लुत इति** । स च पूर्वभागस्य । उत्तरस्य तूदात्ताविदुतौ भवतः ।

'अग्निचिदि'ति व्याचष्टे—**अग्निरिवेति** । **कथञ्चिदिति** । कृच्छ्रेऽत्र 'चित्'शब्दः । **अग्निर्माणवक इति** । 'अग्निरिव माणवको दीप्येते'त्यर्थः ।

यद्यपि अन्येषामपि उपमानाऽर्थानामिवादीनामस्ति प्रतीतिस्तथापि चिच्छब्दस्याऽप्यस्तीति स्यादेव प्लुतः। प्रयोगाऽभावात्तु नेति भावः। चः प्लुतसमुच्चयाऽर्थः। एतदेव ज्ञापयति 'पूर्वसूत्रे गुणमात्रं विधीयते' इति बोध्यम्।

**उपरिस्वि**। 'अनेन 'विचार्यमाणानामि'ति विहितप्लुतस्याऽनुदात्तत्वमात्रं विधीयते' इति **हरदत्तः**। 'उपरिस्वी'त्यादेः कृत्यं दर्शयति—**अधः स्विदिति**।

**स्वरितमा**। उदाहरणेषु 'वाक्यादेरामन्त्रितस्ये'ति द्वित्वम्। अयमपि प्लुतो वैकल्पिकः।

**क्षियाशीः**। क्षिया—आचारोल्लङ्घनम्। इष्टप्रार्थनम्—**आशीः**। **प्रैषः**—प्रेरणम्। उदाहरणेषु पूर्वं तिङन्तम् उत्तरमाकाङ्क्षति।

**अनन्त्यस्याऽपि**। अत्राऽपिशब्दसमुच्चिता'ऽन्त्यस्ये'त्यनेनैव 'टेरि'ति सम्बध्यते, न तु 'अनन्त्यस्ये'त्यनेनेति 'स्थाघ्वो'रि'तिसूत्रे भाष्ये ध्वनितम्। 'उभयत्राऽपि सम्बध्यते' इत्यपि तत्रैव भाष्ये इति, भाष्यप्रदीपोद्द्योते निरूपितम्। आद्योदाहरणे 'भो अग्निभूता३इ' इति शेषः। 'तत्राऽन्त्यस्य तु 'अनुदात्तं प्रश्नान्ताऽभिपूजितयोरि'त्यनुदात्तोऽपि पक्षे' इति **वृत्तिः**। यद्यपि तत्र विकल्पो न श्रुतस्तथाऽपि 'अपि'शब्देनाऽन्त्यस्याऽप्यनेन स्वरितप्लुतविधानात्पाक्षिकत्वं फलति। द्वन्द्वेन सह निर्देशात् 'अपि'शब्दस्य प्रश्नेऽपि तात्पर्यम्। **आख्यानम्**—प्रश्नस्योत्तरम्।

**तदवयवाविति**। वचनसामर्थ्याद्वर्णैकदेशयोरिह ग्रहणम्। उदाहरणे दूराद्धूते 'गुरोरनृत' इति प्लुतः।

**चतुर्मात्राविति**। ऐचोः मात्रा अवर्णस्य, मात्रा इवर्णोवर्णयोरिति,। उत्तरखण्डस्य त्रिमात्रत्वे चतुर्मात्रतेति भावः। स्पष्टं चेदं भाष्ये। अत्र चतुर्मात्रस्याऽच्त्वमपि। तेन 'प्रत्यङ्ङैतिकायने'त्यादौ ङमुडादि सिध्यतीति बोध्यम्। **याज्यान्तेष्वेवेति**। अनेनाऽस्य परिगणनत्वं दर्शयति। **'पूर्वार्द्धस्य आदि'ति च्छेदः**। अत्र आकारः प्लुतः, स प्रश्नान्तेऽनुदात्तः,

स्वरितो वा । शेषेपूदात्त इति बोध्यम् । इदुतौ–'टेरुदात्त' इत्यधिकारात् उदात्तावेव । व्याख्यानात्[1] 'उदात्त'ग्रहणं प्लुतेन, इदुद्भ्यां च सम्बध्यते । प्लुतपदं च तत एव आद्ग्रहणेनैव सम्बध्यते, न इदुद्भ्यामिति बोध्यम् ।

**अदूराद्धूते इति न वक्तव्यमिति** । परिगणनसत्त्वे तेनैव सिद्धत्वादिति भावः । इदं च **वृत्त्यनुरोधेन** । **केचित्तु**[2] 'परिगणनेऽपीदं कार्यमेव । अत्र 'दूराद्धूत'पदं न सम्बोधनमात्रोपलक्षणं, किन्तु यथाश्रुतमेवेति[3], दूरादाह्वानसम्बोधनविशिष्टाऽभिपूजिताऽर्थे 'स्वागच्छ भो माणवकाऽग्निभूते' इत्यादौ नाऽस्य प्रवृत्तिरिति, न परिगणनेन प्रत्याख्यानं युक्तम् । 'अदूराद्धूते इति न वक्तव्यमि'त्यनुक्त्या भाष्यात् तथैव लाभादि'त्याहुः ।

**गौ३रिति** । 'सावपि पदमि'ति पक्षे वाक्याऽन्तत्वाऽभावान्न दोषः । 'पद'शब्देन वाक्यमप्युच्यते इति बोध्यम् । **आमन्त्रिते छन्दसीति** । अप्राप्ते प्लुतविकारे इदम् । दूरादाह्वानसत्त्वात्, परिगणनाच्चाऽप्राप्तिः । प्लुतस्तु 'गुरोरनृत' इति प्राप्नोत्येव । तेन 'वाक्याऽन्तपदाऽनन्त्यस्यैव प्लुत' इत्यत्र तु न मानम् ।

**तयोर्य्वा** । 'तयोः = पूर्वसूत्राभ्यां विहितयोरिदुतोरि'त्यर्थः । ननु 'इको यणची'त्येव सिद्धे, इदं व्यर्थमत आह–**इदुतोरसिद्धत्वादिति** ।

ननु 'प्लुतप्रगृह्या' इति प्लुतस्य प्रकृतिभावविधानात्सामान्याऽपेक्षज्ञापकात्प्लुतप्रकरणीयकार्यस्य स्वरसन्धिषु सिद्धत्वज्ञापनेन सिद्धो यण्, अत आह—**सवर्णदीर्घत्वस्येति** । अग्ना ३ इ इन्द्रमि'त्यादौ । **शाकल्यस्य वेति** । 'अग्ना३याशे'त्यादौ । **शाकल्यम्** = 'इकोऽसवर्णे' इति प्रकृतिभावः । न चाऽनयोरसिद्धत्वात्ते दुर्वारे । सामर्थ्येनाऽसिद्धत्वबाधात् । तदाह—**यवयोरपवादत्वादिति** ।

---

१ 'व्याख्यानात्' इत्यारभ्य 'बोध्यम्' इत्यन्तः पाठः ख. नास्ति ।

२ 'वस्तुतः' इति ख. ङ. पाठः ।

३ 'यथाश्रुतमेवेति निरूपितमच्सन्धौ । गौ३रिति' इति ख. ङ. पाठः ।

ननु ( 'भो३इ॑इन्द्रं', भो३यिन्द्रं गायती'त्यादौ— ) 'भो ३ इ इन्द्रे'ति स्थिते, भोःशब्दस्य च्छान्दसे प्लुते, ततः परस्य इकारस्य निपातत्वात् प्रकृतिभावे प्राप्ते, यणादेशाऽर्थम् 'इकः प्लुतपूर्वस्य यणादेशो वक्तव्यः, सवर्णदीर्घनिवृत्त्यर्थं[1], शाकलनिवृत्त्यर्थं[2] चे'ति वचनमावश्यकम्। न च तत्राऽनेन सिद्धिः। इकः प्लुतविकारत्वाऽभावात्। एवञ्च तेनैव यण् सिद्धोऽत आह–**यवयोरसिद्धत्वादुदात्तेत्यादि**। तेन हि यणि, तस्य सिद्धत्वात् अयं स्वरो दुर्वार इति भावः। यद्यपीह प्लुतप्रकरणे बहूनि सूत्राणि लोक-वेदसाधारणानि, तथापि तस्य वैकल्पिकत्वेन, लोके तु[4] तदादराऽभावात्, वेदे च तदादरात्, वैदिक्यामेव लिखितानीति ध्येयम्।

**मतुवसो**। 'पदस्ये'ति वर्त्तते। अनुबन्धपरित्यागेन सान्तस्य 'वस' इत्यस्य मतुना सह द्वन्द्वः। अल्पाच्तरस्याऽपि सौत्रः परनिपातः। **मरुत्व इति**। 'झय' इति वत्त्वम्। 'तसौ मत्वर्थे' इति भत्वम्। **हरिवो इति**। 'संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्य' इति वचनात् 'हशि चे'त्युत्वम्।

प्रसङ्गादाह–**दाश्वानिति**। दाशेः क्वसौ, अद्वित्वम्, अनिट्त्वं च निपात्यते। 'षह मर्षणे'इत्यस्य परस्मैपदम्, क्वसुः, अद्वित्वम्, अनिट्त्वम्, उपधादीर्घत्वं च निपात्यते। 'मिह सेचने' इत्यस्मात्क्वसौ अद्वित्वम्, उपधादीर्घत्वं, ढत्वं च निपात्यते। सूत्रे एकवचनमतन्त्रम्। 'दाश्वांसो, दाशुषः सुतमि'ति प्रयोगदर्शनात्[1] यद्यपीदं लोक-वेदसाधारणं, तथापि लोके प्रयोगप्राचुर्याऽभावादत्रैवोदाहृतम्। 'मीढ्व' इत्यत्र 'मतुवसोरि'ति रुत्वम्। 'अत्राऽनुनासिक' इत्यादि वसोरुत्वे फलम्। **अनुबन्धस्येहेति**। अत एव 'वनो र चे'ति सूत्रे सामान्यग्रहणमुक्तम्। एवञ्च 'हश्च व्रीही'त्यादौ

१ अयं सुबोधिनीटीकास्थः पाठः, उचितत्वादिह दर्शितः।

२ 'निवृत्त्यर्थः' इति पाठान्तरम्।

३ 'निवृत्त्यर्थश्चे'ति क्वचित् पाठः।

४ 'तुः' ग. नास्ति।

सामान्यग्रहणस्य निर्बाधत्वे, 'जहातेः ककारः सामान्यग्रहणनिर्वाहाऽर्थ' इति **प्राचां** ग्रन्थाश्चिन्त्याः। धातौ ककारफलन्तु 'वनो र च'त्यत्र व्युत्पादितम्। यङ्लुकि 'दीर्घोऽकित' इत्यस्याऽप्रवृत्त्यर्थं तु न कित्त्वम्। 'दीर्घोऽकित' इति सूत्रस्थभाष्यविरोधादित्यपि तत्रैव निरूपितम्।

**इणः क्वनिबिति**। 'प्रातरेती'त्यर्थे 'अन्येभ्योऽपि दृश्यन्ते' इत्यनेन ह्रस्वस्य तुक्। **नस्येति**। 'नान्तपदस्ये'त्यर्थः। **नाऽटौ**–नकाराऽट्-प्रत्याहारौ। **एकपादेति**। 'ऋक्षु' इति प्रकृतत्वात् ऋक्पाद एवेह गृह्यते। 'समान'शब्द एकपर्यायः। **देवाँ अच्छेति**। वक्ष्यमाणेन 'आतोऽटी'-त्यनेनाऽनुनासिकः। **उभयथेति**। एवञ्च 'अटि समानपादे' इति व्यर्थम्। छन्दस्यापाद्यरूपाऽभावात्। एतेन 'महान् हि स' इति बह्वृचानां पाठो व्याख्यातः। **आकरे** तु 'महाँ ही'त्युदाहृतं, तच्छाखान्तरेऽन्वेष्टव्यम्। भिन्नपादेऽपि क्वचित् दृश्यते, तत् सूत्ररीत्या च्छान्दसत्वाद्बोध्यम्।

**आतः**। आकारस्य। **महाँ इन्द्र इति**। 'दीर्घादटी'ति रुत्वम्। **एवञ्चेति**। सर्वविकल्पानां छन्दसि व्यवस्थिततया, प्रकृतसूत्रत्यागे महल्लाघवम्। सूत्राऽऽरम्भे तु व्यत्ययः शरणीकरणीय इति महान् क्लेश इति भावः। 'तु'धातोः असुन्। स्वं तवो यस्याऽसौ **'स्वतवान्'**। 'दृकस्ववः-स्वतवसां छन्दसी'ति नुम्। छान्दसत्वाद्विसर्गस्य सः।

**छन्दसि वा**। व्यवस्थितविकल्पेनैव सिद्धे 'अप्रे'त्यादि स्पष्टाऽर्थम्। एवमुत्तरसूत्राण्यपि। **करिति**। कृञो लुङ्। 'मन्त्रे घसे'ति च्लेर्लुक्। तिपि गुणः। तिपो हल्ङ्यादिलोपः। 'बहुलं छन्दसी'त्यडभावः। **करदिति**। कृञ एव लुङ्। 'कृमृदृ' इति च्लेरङ्। **करतीति**। लट्। व्यत्ययेन शप्।

**कृधीति**। कृञो लोट्। सेर्हिः। 'बहुलं छन्दसी'ति शपो लुक्। छान्दसत्वाद्विकरणाऽभावो वा। 'श्रु-शृणु-पृ-कृ-वृभ्य' इति हेर्धिः।

**कृतमिति**। कृञः क्तः। **सः स्यादिति**। षत्वस्याऽप्युपलक्षणम्। अत एव 'अदिति'प्रतिषेधः। यत्र तु 'शं नः करदि'त्यादौ सत्वं न दृश्यते, तत्र च्छान्दसत्वात् सत्वाऽभावो बोध्यः।

**पञ्चम्याः प**। 'अध्यर्थे' इति परेर्विशेषणम्। **दिवस्परीति**। 'दिव उपरी'त्यर्थः। व्यत्ययेन षष्ठीस्थाने पञ्चमी। **पर्योज इति**। अत्र परिः सर्वतो भावे।

**पातौ च**। न च भवति—'परिषदः पातु'। 'पातौ' इति लोडन्त-'पातु' इत्यस्याऽनुकरणम्।

**षष्ठ्याः प**। 'पष्ठीविसर्गस्य सादेशः,पत्यादिषु परेषु'। वाचस्पत्यादौ 'तत्पुरुषे कृती'त्यलुक्। षष्ठ्या इति किम्?। 'मनुः पुत्रेभ्यो दायमि'ति।

**इडाया इति**। षष्ठ्यन्ताऽनुकरणम्। 'पती'त्याद्यनुवर्त्तते।

**निसस्तपता**। अस्य लोक-वेदसाधारणत्वात् अत्रोपन्यासश्चिन्त्यः। उदाहरणे सकृत्तप्तमित्यर्थः।

**युष्मत्त**। 'ह्रस्वात्तादौ' इत्यतः 'तादौ' इति वर्त्तते। तच्च युष्मदो विशेषणम्, नेतरयोः, अव्यभिचारात्। **'ततक्षुस्'**[1] इति सान्ताऽनुकरणात् परस्य सुप्सकारस्य 'नुम्विसर्जनीये'ति षत्वम्। पूर्वस्य ष्टुत्वं सूत्रे। तादाविति विशेषणाद्युष्मदादेशानां ग्रहणम्। तदाह—**त्वमित्यादि**।

**यजुष्ये**। यजुर्विषये इत्यर्थः।

**स्तुतस्तो**। 'एकेषामि'ति वर्त्तते। **प्रपञ्चार्थमिति**। 'पूर्वं पदं पूर्वपदमि'ति सामान्येन तत्राऽऽश्रीयते, न तु समासाऽवयव एवेति, वाक्येऽपि तेनैव सिद्धं षत्वमिति भावः।

**पूर्वपदात्**। 'छन्दसी'ति वर्त्तते। 'एकेषामि'ति च। 'पूर्वपदमात्रस्य ग्रहणमि'त्याशयेन षत्वाऽभावे उदाहरति—**युवं हि स्थेति**।

**सुञः**। 'सुञ्'[2] इति निपातग्रहणम्। 'छन्दसी'ति वर्त्तते। **अभीषुण इति**। 'इकः सुञी'ति दीर्घत्वम्। 'नश्च धातुस्थोरुषुभ्य' इति णत्वम्।

**सनोतेरनः**। 'अनकारान्तसनोतेरिण्कुभ्यां परस्य सस्य षः छन्दसि'।

---

१ 'ततक्षुष्ष्विति' इति लघुशेखरपाठः।

२ 'सुञ इति', 'सुञेति' इति च ख. ङ. पाठान्तरम्।

**गोषा इति** । 'जनसने'ति विट् । 'विड्वनोरि'त्यात्त्वम् । **गोसनिमिति** । 'छन्दसि वनसने'ति इन् प्रत्ययः । 'पूर्वपदादि'त्येव सिद्धे नियमाऽर्थमिति भावः । **केचित्** गोसनेः सवनादिपाठात्सिद्धिमङ्गीकृत्य 'सिसानयिषती'ति नियमफलं वदन्ति । यद्यप्यण्यन्तः सूत्रे उपात्तस्तथापि अण्यन्तस्य प्रतिषेधवचने[1] फलाऽभावात् , ण्यन्ताऽर्थत्वं विज्ञायते । 'स्तौतिण्योरेवे'ति नियमात् 'सिसनिषती'त्यादौ षत्वाऽप्राप्तेरिति तदाशयः । 'सिसनिषतेः अप्रत्यये 'सिसनीरि'ति नियमफलमि'त्यन्ये । अत्र सन् षत्वभूतो नेति 'स्तौतिण्योरि'ति नियमाऽविषयोऽयम् । एवं च सामर्थ्याऽभावात् , ण्यन्तस्य नियमाऽभावात् ,'सिषाणयिषती'त्यादौ षत्वं भवत्येव। सामर्थ्यात्पूर्वपदाऽभावेऽपि नियमप्रवृत्तिरिति तद्भावः । सर्वं चेदं भाष्ये स्पष्टम् ।

**सहेः पृ** । 'छन्दसी'ति वर्त्तते । चकारोऽनुक्तसमुच्चयाऽर्थ इत्याशयेनाऽऽह—**चादिति** । 'ऋति'शब्दस्य संहितायां 'नहिवृती'ति दीर्घः, षत्वं च। उभयत्र संहिताऽधिकारात् अवग्रहे 'ऋतिसाहमि'त्येव । 'छन्दसि सह' इति ण्विः ।

**निव्यभि** । 'एभ्यः परस्य सुनोत्यादेः सस्य अड्व्यवाये षत्वं वा' । प्रकरणप्राप्तस्य षत्वमात्रस्य विकल्पः । **अभ्यष्टौदिति** । 'उतो वृद्धिर्लुकी'तिवृद्धिः ।

**छन्दस्यृ** । 'पूर्वपदादि'ति वर्त्तते । 'अवग्रहविषये ऋकारान्तपूर्वपदादुत्तरस्य नस्य णः' । अवग्रहविषयत्वं च अवग्रहयोग्यत्वम् । संहिताकाले णत्वम् । पदकाले चाऽवग्रहात् । अत एव पदपाठे णत्वं न प्रयुञ्जते ।

**नश्च धातु** । 'धातुस्थान्निमित्तात् ,'उरु'शब्दात् ,'षु'शब्दाच्च परस्य 'नस्'-शब्दस्य नस्य णो भवति' । धातौ तिष्ठतीति **धातुस्थम्** । 'षु' इति कृतषत्वस्य सुञोऽनुकरणम् । तेन 'गृहेषु नः' इत्यत्र न ।

'नस्' इति नासिकाऽऽदेशस्य, अस्मदादेशस्य च सामान्येन

1 'प्रतिषेधप्रतिषेधवचने' इति ख. पाठः ।

ग्रहणम् । तत्र प्रकृतसूत्रे अस्मदादेश एव कार्यी । तस्यैव धातुस्थात्परत्वसम्भवात् । 'उपसर्गादनोत्पर' इत्युत्तरसूत्रे तूभयोः कार्यित्वमि'ति **हरदत्तः** ।

'उत्तरसूत्रे नस्ग्रहणाऽनुवृत्तेर्न फलम् । भाष्ये 'अनोत्पर' इत्यस्य स्थाने 'बहुल'ग्रहणस्य कृतत्वेन, तेनैव सर्वाऽनिष्टवारणादि'**त्यन्ये** ।

**रक्षाण इति** । 'रक्ष'ेति लोट्मध्यमपुरुषैकवचनम् । '**द्व्यचोऽतस्तिङ**' इति दीर्घः । एवं दानकर्मणः शिक्षतेः—**शिक्षाण इति** । **उरु** = अधिकम् । **अभी षु ण इति** । 'इकः सुञी'ति दीर्घः । इति शिवम् ।

**इत्यष्टमोध्यायः** ॥

इति श्री'**शिवभट्ट**'सुत'**सती**'गर्भजनागोजीभट्टविरचिते

सिद्धान्तकौमुदीव्याख्याने **शब्देन्दुशेखरे**

**वैदिकप्रक्रिया**

समाप्ता



# अथ स्वरप्रक्रिया ।

( तत्र साधारणस्वराः । )

साधारण-प्रकृति-प्रत्यय-समास-तिङन्त-विषयकतया पञ्चभिः प्रकरणैः उदात्तादिस्वरान् व्युत्पिपादयिषुः साधारणस्वरांस्तावदाह—**अनुदात्त-मिति** ।

**एकवर्जमिति**। 'द्वितीयायां चे'ति णमुल्। न च तत्र त्वरायामित्यर्थकः 'परीप्सायामि'त्यनुवर्त्तते इति चेत्। इहाऽप्यस्ति 'परीप्सा'। तथाहि—'यत्राऽन्तोदात्तादि विधीयते, तत्र तत्समकालमेव शिष्टमनुदात्तं कर्त्तव्यं, न तु विलम्बितव्यमि'त्यर्थात्। एतच्च णमुल्विधायके **पदमञ्जर्यां** स्पष्टम्। यद्वा 'परीप्सायामि'ति प्रायिकम्। एतच्चाऽत्रैव **पदमञ्जर्यां** स्पष्टम्।

**परिभाषेयमिति**। नाऽधिकारः। अस्वरितत्वात्। 'एकवर्जमि'त्यस्य वैयर्थ्याऽऽपत्तेश्च। तत्तत्सूत्रविधेयानां वचनसामर्थ्यादेव निघाता-ऽप्रवृत्तेः। किञ्च 'आद्युदात्तश्च' 'समानोदरे शयित ओ चोदात्त' इत्या-द्यसङ्गहाऽऽपत्तेः। नाऽपि विधिः। तथा सति 'क एको वर्जनीय' इति न ज्ञायेत। एवञ्च विनिगमनाविरहाच्छास्त्रविहितोदात्तस्वरितकानां सर्वे-षामेव वर्जनाऽऽपत्तौ, 'आमलकीज' इत्यादावुदात्तचतुष्टयं श्रूयेत। तत्र हि ङीष् प्रत्ययस्वरेण उदात्तः। 'गतिकारके'ति कृत्स्वरः। 'दीर्घकाशतुष-भ्राष्ट्रवटं जे' इति पूर्वपदाद्युदात्तत्वम्। 'अन्त्यात्पूर्वं बह्वच' इति लकारा-ऽकारस्योदात्तत्वमिति, विरोधाऽभावात् युगपदुदात्तचतुष्टयं स्यात्। अस्य तु मकाराऽकारोऽवकाशः स्यादिति भावः।

परिभाषायां लिङ्गमाह—**स्वरविधीति**। सूत्रे 'अनुदात्त'शब्दः-अर्शआद्यजन्तः। पदसामानाधिकरण्यात्। अनुदात्तस्य विधीयमानत्वात्, तद्भिन्न उदात्तः, स्वरितो वा वर्ज्यते इति, तद्विधावेवाऽस्योपस्थान-मित्याह—**यस्मिन्पदे इति**। अत्र पदत्वे भाविन्यपि अन्तरङ्गत्वात्पूर्वमेव स्वरप्रवृत्तिः। 'पद'ग्रहणन्तु परिमाणाऽर्थम्। अत एव 'धातोरि'त्यादौ न दोषः। तद्व्यावर्त्यन्तु पदसमुदायः। 'यस्य पदत्वं भावि, तस्यैव

एकवर्जम् अनुदात्तमि'त्यर्थात्। स्पष्टं चेदं विकाराऽधिकारे 'अनुदात्ता-देश्चे'ति सूत्रे **भाष्यकैयटयोः**।

**तमेकमिति**। 'एक'ग्रहणं विधीयमानोपलक्षणम्। एवं च 'तवै चान्त' इत्यादौ द्व्यादीनां वर्जनसिद्धिः। 'इन्द्राबृहस्पती' इत्यत्र 'देवताद्वन्द्वे चे'ति पदद्वयस्याऽपि प्रकृतिस्वरे विधेये, त्रयाणां वर्जनम्। 'बृहस्पति'शब्दो हि 'वनस्पत्यादित्वात् द्व्युदात्त इति बोध्यम्। न चैवं 'समाने ख्यः, स चोदात्त' इत्यनेन प्रत्ययोदात्तत्वस्य, सादेशोदात्तत्वस्य च एकेनैव सूत्रेण विधानात् उभयोर्वर्जनाऽऽपत्तिरित्युदात्तद्वयश्रवणं स्यादिति वाच्यम्। 'तवै चान्तश्चे'-त्यादौ 'युगपत्'ग्रहणेन उभयोरेकत्राऽसमावेशज्ञापनादिति भावः।

अत्र यस्मिन्पदे, यस्यामवस्थायां, यस्याऽच उदात्तादिर्विधीयते, तत्र पदे, तस्यामवस्थायां संनिहितम् अजन्तरं निहन्यत इति बोध्यम्। स्पष्टं चेदम् 'आद्युदात्तश्चे'ति सूत्रे **पदमञ्जर्याम्**। न चैवं 'चिनुत' इत्यत्र श्नोर्निघातो न सिध्यति, तस्य उदात्तत्वप्रवृत्तिकाले असंनिहितत्वादिति वाच्यम्। युगपद्ग्रहणेन अनुदात्ताऽतिरिक्तस्वरयोः असमावेशज्ञापनात् तत्सिद्धेः।

वस्तुतस्तु 'आद्युदात्तश्च' 'द्वित्रिभ्यां पाद्दन्' 'पुंसोऽसुङि'तिसूत्रस्थभाष्य-प्रामाण्येन 'यावत् पदत्वं भावि, तावत्संनिहिताऽजन्तस्य निघातप्रवृत्ति-रि'त्यर्थाऽङ्गीकारेणाऽदोषात्। 'चिनुत' इति तु 'अन्तरङ्गानपी'ति न्यायेन साध्यम्। एवञ्च 'आगमा अनुदात्ता' इति नाऽपूर्वमिति दिक्।

इयं च कार्यकालैव। अत एव 'आमलकीज' इत्यादौ 'दीर्घकाशे'-

१ 'समाने ख्यः स चोदात्तः' इति ( ५७६ ) उणादिसूत्रम्। 'समान'शब्दे उपपदे ख्याधातोरिण् प्रत्ययः स्यात्। स च डित्। यलोपश्च। समानस्य स्थाने उदात्तः 'स' इत्यादेशश्च स्यादि'ति तदर्थः। 'सखा' इति च तदुदाहरणम्।

२ 'तमः' इति ख. पाठः।

३ 'चिनु' इति क्वचित्पाठः।

त्यपेक्षया 'अन्त्यात्पूर्वं बह्वच' इति विप्रतिषेध उपपद्यते । अन्यथा उभयोः सम्भवेन,असम्भवाऽभावात्, विप्रतिषेधो न स्यात्। कार्यकालपक्षे तु उभाभ्यामप्यस्य एकवाक्यतया, 'तेन वा वर्ज्यमानता, अनेन वे'ति, परेण उपपद्यते,[1] । तयोर्विरोधात् । तत्र कार्यकालत्वेऽपि अस्याः स्वरितत्व-प्रतिज्ञानात् अधिककार्याऽर्थात् त्रिपाद्याम् अप्रवृत्तिः । अत एव 'अस्या-ऽधिकारत्वे येऽन्ये सप्ताध्याय्यां स्वरास्ते असङ्गृहीता स्युरि'त्येव[2] दूषणं दत्तम्। 'स्वरितो वाऽनुदात्ते पदादौ' इतिसूत्रे भाष्ये स्पष्टमेव असिद्धविषये अस्या अप्रवृत्तिरुक्ता, त्रैपादिकाऽसिद्धविषये, बहिरङ्गाऽसिद्धविषये च ।

**गोपायतमिति** । गुपेः 'धातोरि'त्यन्तोदात्तः । ततः प्रत्ययस्वरेण आद्युदात्ते आये, 'गोपाये'त्यायाऽन्तस्य धातुत्वाद्धातुस्वरे यकाराऽकारः उदात्तः । 'तम्'शब्दो लसार्वधातुकस्वरेण निहतः । शबकारेण पित्त्वा-दनुदात्तेन एकादेश उदात्तः । ततः 'तमि'त्यस्य 'उदात्तादनुदात्तस्ये'ति स्वरितः । न चोक्तोऽतिरिक्त[3]स्वरयोरसमावेशस्य ज्ञापनात्कथमत्रोदात्त-स्वरितयोः समावेशः । न च सन्निपातपरिभाषया निर्वाहः । तस्या अनित्यत्वेन स्वरविधावप्रवृत्तेः । अन्यथा 'अन्तोदात्तादुत्तरपदादन्य-तरस्याम्' 'ह्रस्वनुड्भ्यां मतुबि'त्यादिभिरपि स्वरे कृते, शेषनिघातो न स्यादिति वाच्यम् । अस्य स्वरितस्याऽसिद्धत्वेनाऽदोषादिति दिक् ।

ननु 'गोपायतमि'त्यादौ गुपेरपि धातुत्वात्, तन्निमित्तकोकारोदा-त्तत्वस्याऽपि[4] श्रवणाऽऽपत्तिरत आह—**सति शिष्टेति** । 'तस्मिन् सति

१ 'अनेन वे'ति उपपद्यते विरोधः' इति लघुशब्देन्दुशेखरे पाठः ।

२ 'अत एवाऽनुदात्तं पदमित्यस्याऽधिकारत्वे षाष्ठ एकः सङ्गृहीतः । येऽन्ये सप्ताऽध्याय्यां स्वरास्ते न संगृहीताः स्युः' इति लघुशेखरे पाठः ।

३ 'अनुदात्ताऽतिरिक्तः' इति क्वचित् पाठः ।

४ 'उकारोदात्तत्वस्य, प्रत्ययस्वरनिमित्तक-पाऽऽकारोदात्तत्वस्य च श्रवणा-ऽऽपत्तिः' इति तु लघुशेखरे पाठः ।

विहिते'त्यर्थः। 'सती'त्यस्य 'उत्पन्ने' इत्यर्थः। 'अस् भुवी'ति स्मरणात्। 'यागात्स्वर्गो भवती'त्यादौ भवतेरुत्पत्त्यर्थकत्वात्। एतच्च न्यायसिद्धम्। यदा यदा यो य उदात्त-स्वरितविधिः प्रवर्त्तते, तदा तदा, तेन तेन सह, 'अनुदात्तं पदमि'ति एकवाक्यतया प्रवर्त्तते। यथोद्देशपक्षेऽपि विधीनाम् अत्र सान्निध्येन, तैरेकवाक्यतायाः स्वीकारात्। ततश्च उत्सर्गस्य, अपवादस्य वा यस्यैव चरमा प्राप्तिस्तदेकवाक्यताऽऽपन्नया अनया लक्ष्यं व्यवस्थाप्यते। अत एव 'औपगवत्वमि'त्यत्र अण्प्रत्यये, 'त्व'प्रत्यये, आवृत्त्या 'आद्युदात्तश्चे'ति प्रवर्त्तमानं, स्वस्यैव प्रथमप्रवृत्तिबाधेन, द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयति। 'आद्युदात्तश्च' 'धातोरि'त्यादीनां व्यक्तिपक्षे[1] निमित्तभेदेन भिन्नत्वात्। एवं च यदा प्रत्ययाऽऽद्युदात्तत्वं, तदा गुपो निहतत्वं, ततो धातुत्वे, पुनर्धातुस्वरप्रवृत्तौ, 'पा'शब्दोऽप्यनुदात्त[2] इत्यादि बोध्यम्।

अन्यत्रेति। अत्र च ज्ञापकं तासेः परस्य लसार्वधातुकस्य निघातविधानम्। अन्यथा विकरणानां लकारविशेषाऽपेक्षतया, तिबादीनां 'ल'-मात्राऽपेक्षत्वादन्तरङ्गत्वेन, तिबादीनामपि कर्त्राद्यर्थाऽपेक्षत्वेन बहिरङ्गत्वे तु, परत्वेन तिबादिषु कृतेषु[3], क्रियमाणस्य तासिस्वरस्य सतिशिष्टत्वात् शेषनिघातेन सिद्धे, तद्वैयर्थ्यं स्पष्टमेव। यदाऽपि[4] 'लस्य' 'तिप्तसझी'-त्यस्य 'अनुदात्तङित' इति प्रकरणेन एकवाक्यता, तदाऽस्य बह्वपेक्षत्वेन बहिरङ्गत्वात्, अन्तरङ्गत्वात्तासौ कृते, तिबादयः। यदि वा[5] 'स्यतासी'-

१ 'व्यक्तिपक्षे' इति लघुशेखरे नास्ति।

२ 'पाशब्दोऽपीति। पाशब्दाऽऽकारोऽनुदात्त इत्यर्थः।

३ 'कृतेषु' इति ख. ङ. नास्ति।

४ 'यदापि' इत्यारभ्य 'तिबादयः' इत्यन्तः पाठो लघुशेखरे नास्ति।

५ 'यदि तु' इति लघुशेखरे पाठः।

इत्यत्र 'आर्द्धधातुके' इत्यनुवर्त्त्य लावस्थायामेव स्यादयः, तदा इदं वाचनिकमिति बोध्यम् ।

अस्य च विशेषाऽपेक्षत्वात् सार्वधातुकस्वराऽपेक्षयैव विकरणस्वरस्य दुर्बलत्वम् । धात्वादिस्वराऽपेक्षया तु प्राबल्यमेव । अत एव 'गृणाती'-त्यादौ श्न उदात्तत्वसिद्धिः । इदमपि सार्वधातुकस्य श्रूयमाणत्वे एव । तेन 'चिनु' इत्यादौ न दोषः ।

**गृणीत इति** । अन्तोदात्तं पदम् । अत्र लसार्वधातुकनिघातो नाऽस्ति, 'अदुपदेशे'ति तपरकरणात् । 'श्ना' इत्यस्य अदन्तत्वाऽभावात् । 'तिङ्ङ-तिङ' इति तु न । 'स होता यस्य रोदसी चिदुर्वी' इति पूर्वचरणे यद्वृत्तस्य सत्त्वेन, 'यद्वृत्तान्नित्यमि'ति निषेधात् । तस्य च व्यवहितेऽपि प्रवर्त्तनादिति बोध्यम् ।

**अनुदात्तस्य च यत्र** । अत्र 'कर्षाऽऽत्वत' इत्यत 'अन्त' इति नाऽनु-वर्त्तते । अयोग्यत्वात् । तथा हि 'यत्रे'त्यनेन अत्राऽनुदात्तवर्णपरामर्शः । उदात्तत्वाऽनुदात्तत्वयोर्वर्णधर्मत्वात् । ( अनुवृत्तौ वा व्यपदेशिवद्भावेनैव तत्त्वं बोध्यम् ) । एवं च सप्तमीनिर्देशेनाऽनुदात्तवर्णस्य बुद्ध्या लोपा-त्परस्यैव ग्रहणात्, 'युष्मभ्यमि'त्यादावादेरुदात्तत्वसिद्धिः । न चैवमपि 'युष्मभ्यमि'त्यत्र सुप उदात्तलोपनिमित्तत्वेऽपि, नाऽवयवस्य तत्त्वमिति, कथं 'यत्र'ग्रहणेन वर्णग्रहणमिति वाच्यम् । उदात्तयोः, उदात्तस्वरित-योर्वा एकत्र पदेऽभावेन, तयोः परयोरुदात्तलोपाऽभावेन, व्यर्थम् 'अनुदात्तस्ये'ति, अनुदात्तमात्रग्रहणाऽर्थम् । अतो निमित्तभूत-समुदाय-प्रविष्टस्याऽपि ग्रहणमिति न दोषः । तद्भावभावितामात्रेणाऽपि निमित्तत्व-व्यवहारात् ।

ननु 'मा हि धुक्षातामि'त्यादौ एतत्प्रवृत्तिरि'ति भाष्यादौ स्पष्टं,

---

१ 'चिदुर्वी' इति लघुशेखरपाठः । २ 'अनुवर्त्त्यते' इति ख. ङ. पाठः ।

३ अयं लघुशेखरपाठः । योग्यत्वादत्र स्थापितः ।

तदसङ्गतम् । अत्र हि आताम् प्रत्ययस्वरेणोदात्तः । [1]क्सो विकरणत्वात् अनुदात्तः । ततः 'अदुपदेशादि'ति स्वरं बाधित्वा परत्वात् 'क्सस्याऽची'ति लोपे, अनुदात्ते परे उदात्तलोपाऽभाव इति चेन्न[2] । अत्राऽपवादस्य लसार्वधातुकाऽनुदात्तविषयस्य अग्रे भावित्वेन, आतामः पूर्वम् आद्युदात्ताऽप्राप्तौ, 'अन्यत्र विकरणस्वरेभ्य' इत्यस्याऽप्राप्त्या, क्सस्य प्रत्ययस्वरेणोदात्ततया, उदात्तलोपसत्त्वात् । न चैवमपि अनुदात्ते परे लोपाऽभावः । 'अनुदात्त'पदेन अविद्यमानोदात्तस्यैव ग्रहणात् । स्पष्टं चेदं 'डारौरस' इत्यत्र भाष्ये ।

**देवीमिति** । पचादौ 'देवट्' इति पाठेन टित्त्वान्ङीप् ।

**चौ । उदात्तनिवृत्तीति** । 'देवद्रीचीमि'त्यादौ कृदुत्तरपदप्रकृतिस्वरेणोदात्तस्य अञ्चत्यकारस्य 'अच' इति लोपे, ङीपः 'अनुदात्तस्य चे'तिसूत्रेण प्राप्तस्ये'त्यर्थः । न च 'पराच' इत्यादौ कृत्स्वरं बाधित्वा 'अनिगन्तो[3]ऽञ्चतौ' इति पूर्वपदप्रकृतिस्वरत्वेन आद्युदात्तत्वे, 'अच' इत्यकारलोपे, इदं चरितार्थम्, न हि अत्रोदात्तलोपोऽस्तीति वाच्यम् । 'अनिगन्तोऽञ्चतौ' इति विषये 'चु'स्वराऽप्रवृत्तेर्वक्ष्यमाणत्वादित्याहुः ।

ननु 'दाधीच' इत्यादावुदात्ते अणि,'अच' इति लोपे, इदं चरिताऽर्थमिति, कथं तदपवादत्वम्, अत आह–**अतद्धिते इति** । [4]वस्तुतो 'न गोश्वन्नि'ति सूत्रं यत्किञ्चिल्लक्षणप्राप्तविभक्तिस्वरस्य निषेधकमिति,अत्र सूत्रे, असिद्ध-

---

१ 'क्सोऽपि' इति लघुशेखरपाठः ।

२ 'इति चेन्न । अन्तरङ्गत्वाल्लावस्थायामेवोदात्ते क्से, जातस्याऽऽतामोऽन्तरङ्गत्वाल्लसार्वधातुकाऽनुदात्तत्वे, ततो लोपेनाऽदोषात् । पक्षान्तरेऽपि एतद्भाष्यप्रामाण्येन ज्ञापकसिद्धस्याऽसार्वत्रिकतया क्वचित् 'अन्यत्र विकरणेभ्य' इत्यंशाऽप्रवृत्तेरदोषात्' इति तु लघुशेखरपाठः ।

३ 'अनिगन्तेऽञ्चतौ' इति ख. ङ. पाठः ।

४ 'वस्तुत' इति ख. ङ. नास्ति । लघुशेखरे तु वर्त्तते ।

वत्सूत्रे, विप्रतिषेधसूत्रे च भाष्ये उक्तत्वेन 'दधीच' इत्यादावुदात्तनिवृत्तिस्वराऽप्राप्तिविषयेऽस्य[1] चारितार्थ्यान्नाऽस्य तदपवादत्वम्। परत्वेन तु उक्तोदाहरणे तद्बाधकत्वम्[2] । 'दाधीच' इत्यादौ तु सतिशिष्टत्वेन एतत्प्राप्तौ[3], 'अतद्धिते' इत्यावश्यकमि'ति भाष्याऽऽरूढः पन्थाः।

**आमन्त्रितस्याऽऽदिरिति** । 'आमन्त्रितविभक्त्यन्तस्ये'ति पाठस्तु लेखकप्रमादात्। एकपदस्वरे लुकि प्रतिषिद्धमपि प्रत्ययलक्षणं 'सर्वाऽऽमन्त्रितसिज्लुक्स्वरवर्जमि'ति वचनात् इह इष्यते एव—'प्रियवारि'।

**इमं मे इति** । अत्र 'गङ्गे'प्रभृतीनाम् अविद्यमानवत्त्वेऽपि, 'मे'शब्दमेव आश्रित्य सर्वेषामचां निघातः। 'शुतुद्री'त्यस्य तु पादाऽऽदिस्थत्वान्न निघातः। स च पदपाठे स्पष्ट एव। संहितायां तस्य[4] 'स्वरितात्संहितायामि'ति एकश्रुतिः प्रचयाऽपरपर्याया प्रवर्त्तते।

'आमन्त्रितं पूर्वमि'त्यादित्रिसूत्री युष्मदस्मत्प्रकरणे व्याख्याता। **अग्ने त्रातरिति** । अग्निरिह विशेष्यं, त्राणकर्त्तेरिति विशेषणम्। 'अग्ने भ्रातः सहस्कृते'ति मन्त्रे 'शुचिव्रते'ति विशेष्यत्वेन विवक्षितम्। अतः 'अग्ने' इत्यस्य अविद्यमानवद्भावात् 'भ्रातरि'त्यस्य अनिघातः। एवं तत उत्तरेषामिति बोध्यम्। **देवीः षडिति** । अत्र 'देवीरि'त्यामन्त्रितं पक्षे[5] नाऽविद्यमानवत्। तेन 'षडि'त्यस्य निघातो वैकल्पिकः।

**षष्ठ्यन्तमिति** । अत्र 'षष्ठी'शब्देन तदर्था विभक्तिरुच्यते। तेन 'गोषु स्वामिन्नि'त्यत्राऽपि पराऽङ्गवत्त्वं सिद्धमित्याहुः।

---

१ 'स्वरस्याऽप्राप्तिविषये अस्येह चारितार्थ्यात्' इति ख. ङ. पाठः।

२ 'तद्बाधकम्' इति लघुशेखरे पाठः।

३ 'तत्प्राप्तौ' इति ख. ङ. पाठः।

४ 'संहितायान्त्वस्य' इति ख. ङ. पाठः।

५ 'आमन्त्रितं वाऽविद्यमानवत्' इति लघुशेखरे पाठः।

**आमन्त्रितं प्रतीति**। 'आमन्त्रिताऽर्थैकदेशक्रियां प्रती'त्यर्थः। '**मद्राणां राजन्**' '**सूच्या सीव्यन्**' इत्युदाहरणे। अत्र विशिष्टस्य आमन्त्रिताद्युदात्तत्वम्। अत्रेदं बोध्यम् –'षष्ठ्यन्तस्य, कारकस्य च समानाधिकरणं यद्विशेषणं, तस्याऽपि पराऽङ्गवत्त्वमिष्यते। तेन 'ऋद्धस्य राज्ञः पुरुषः' 'तीक्ष्णया सूच्या सीव्यन्' इत्यादौ पदत्रयस्य एकमाद्युदात्तत्वं भवति।

**समर्थाऽनुवृत्त्या वेति**। सामर्थ्यं चाऽत्र व्यपेक्षैव। शब्दाऽधिकारात्। सा च '**वस्त्रं राज्ञः**', 'पुरुष आगच्छे'त्यादौ पराऽङ्गवत्त्ववारणाय तवाऽप्यावश्यकीति भावः। वस्तुतः तन्निमित्तग्रहणं कार्यम्। 'आमन्त्रिताऽर्थं प्रति यन्निमित्तं, तत्प्रतिपादकं यत्, तदेव पराऽङ्गवदि'त्यर्थः। अत एव 'गोषु स्वामिन्' इत्यादेः पराऽङ्गवत्त्वसिद्धिः। समर्थग्रहणाऽनुवृत्तिस्तु भाष्याऽसंमतेति निरूपितं **मञ्जूषायां समासवादे**। 'सुबि'ति तु 'पीड्ये पीड्यमान' इत्येतद्व्यावृत्त्यर्थम्। 'त्वदीयया पीडयाऽहं पीड्ये' इत्यस्ति सामर्थ्यम्। तन्निमित्तग्रहणे तु उत्तराऽर्थमेव तत्। 'स्वरे' इत्युक्तेः 'कूपे सिञ्चन्' इत्यादौ षत्वादिकं न। न च पूर्वस्य पराऽङ्गवत्त्वेन पूर्वस्मिन् पर²प्रयुक्तकार्यप्रवृत्तिः, स्वनिष्ठस्वाऽऽश्रयनिवृत्तिश्चाऽस्तु, परस्मिंस्तु पूर्वनिष्ठकार्यप्रवृत्तौ, तन्निष्ठस्वाऽऽश्रयनिवृत्तौ च मानाऽभावात्, पदादित्वेन न षत्वप्राप्तिः। तथा 'चर्म-नमन्' इत्यादौ अखण्डपदत्वाऽभावेन णत्वप्राप्तिश्च नेति, 'स्वर'ग्रहणं व्यर्थमिति वाच्यम्। भाष्ये प्रत्याख्यातत्वेन इष्टाऽऽपत्तेः।

'पर'ग्रहणं स्पष्टाऽर्थम्। 'अङ्ग'ग्रहणम् उभयोराद्युदात्तत्वाऽभावाय। वत्करणात्स्वाऽऽश्रयमपि। तेन 'आम्! कुण्डेनाऽटन्' इत्यादौ 'आम एकाऽन्तरमि'ति 'अटन्' इत्यस्य निघाताऽभावे, 'कुण्डेने'त्यस्याऽपि न भवति। **पूर्वाङ्गवदिति**। 'सुबन्तमामन्त्रिते पूर्वस्मिन् पूर्वाऽङ्गवदि'³त्यर्थः।

१ 'आमन्त्रिताऽन्तं प्रति' इति तु मुद्रितमूलकौमुदीपाठः।

२ 'परपदप्रयुक्तकार्यप्रवृत्तिः' इति ख. ङ. पाठः।

३ 'पूर्वाङ्गमित्यर्थः' इति ख. पाठः।

छन्दोविषयमेतत्। उ[1]दात्तस्थाने इति। अनुवादेऽपि यथा 'षष्ठी 'स्थाने' इत्यस्य प्रवृत्तिस्तथा 'अल्लोपोऽन' इत्यत्र निरूपितम्।

**अभ्यभीति** । अभिः 'उपसर्गाश्चाऽभिवर्जमि'त्यन्तोदात्तः। 'नित्य-वीप्सयोरि'ति द्वित्वम्। 'अनुदात्तं चे'ति परोऽनुदात्तः। पूर्वस्य यणि उदात्तयणः परत्वात्स्वरितः। 'खलपू'शब्दः कृदुत्तरपदप्रकृतिस्वरेणाऽन्तोदात्तः। ततः सप्तम्येकवचनस्य 'उदात्तयणो हल्पूर्वादि'ति प्राप्तोदात्तस्य, 'नोङ्-धात्वोरि'ति निषेधेन, स्वरितः। तस्य यणि, ततः पराऽऽशाशब्दाऽऽद्या-कारस्याऽनेन स्वरितः। 'आशा'शब्द 'आशाया अदिगाख्या चेदि'ति-फिट्सूत्रेणाऽन्तोदात्तः।

**अस्येति** । 'आशा'शब्दप्रथमाऽऽकारे जातस्ये'त्यर्थः । **शेषेति**। 'शा'शब्दाऽऽकारस्य निघातो ने'त्यर्थः। ननु इकारस्थानिकयणं प्रति स्वरितस्याऽसिद्धत्वात्, स्थानिन्येव यण् प्रवृत्त इति, नाऽस्य स्वरित-यणः परत्वम्। न च प्रगृह्यसंज्ञासूत्रस्थभाष्यकैयटरीत्या 'औजढदि'-त्यादौ अन्तरङ्गत्वात् ढत्वादिषु कृतेषु, 'हूत'शब्दबुद्ध्या 'ढ'शब्दे द्वित्वं प्रवर्त्तते इति प्रतीयते, तथाऽत्र स्वरितबुद्ध्यभावेऽपि, वस्तुतः स्वरितस्थानिकयणः सत्त्वाददोष इति वाच्यम्। वाक्यसंस्कारपक्षे स्वरित-यणोः एककालप्रवृत्तिकत्वेन, तथा वक्तुमशक्यत्वात्।

न च 'स्वरितयण' इत्याश्रयात्सिद्धत्वम। अतिप्रसङ्गात्। 'उदात्तादनु-दात्तस्ये'ति विहितस्याऽपि सिद्धत्वाऽऽपत्तेः। तथा च 'प्रत्यग्निरि'त्यादाव-प्येतत्प्रवृत्त्यापत्तिः। न च 'नोदात्तस्वरितोदयमि'ति निषेधः। 'अनन्तरस्ये'-ति न्यायेन 'उदात्तादनुदात्तस्ये'ति स्वरितस्यैव तेन निषेधात्। अत एव 'तित्स्वरितम्', 'स्वरितो वाऽनुदात्ते' इत्यादीनां न निषेध इति चेन्न। योगविभागेन भाष्ये एव समाधानात्—'**उदात्तयणः**'। उक्तोऽर्थः। ततः '**स्वरितयणः**'। इह पूर्वसूत्रमनुवर्त्तते। 'उदात्तयण' इत्येवं निर्वृत्तस्वरित-

---

१ 'उदात्तस्थाने इति। इदमत्रैवाकरे स्पष्टम्' इति लघुशेखरपाठः।

स्थानिकयणः परस्ये'त्यर्थः। एवं चाऽस्यैवाऽऽश्रयात्सिद्धत्वं, नाऽन्यस्येति न दोषः। यद्वा इह 'स्वरित'ग्रहणं न करिष्यते। 'खलप्वाशा' इत्यादावपि उदात्तयणः परत्वादेव सिद्धम्। न च स्वरितयणा व्यवधानम्। स्वरितविधौ व्यञ्जनस्याऽविद्यमानवत्त्वात्। नचैवं 'सन्त्यग्ने' इत्यादौ वेदे त्यकाराऽकारे पठ्यमानस्वरिताऽसङ्गतिः। तत्र हि 'सन्ती'तीकारस्य 'उदात्तादनुदात्तस्ये'ति स्वरितत्वम्। तत्र 'सन्ती'ति प्रत्ययस्वरेणाऽऽद्युदात्तम्। तेः शेषनिघातः। 'अग्ने' इत्यामन्त्रिताऽनुदात्तमिति वाच्यम्। 'स'शब्दाऽकारमाश्रित्य 'उदात्तादनुदात्तस्ये'त्येव 'अग्नि'शब्दाऽकारस्य स्वरितसिद्धेः। न च स्थानिवद्भावादचा व्यवधानम्। अपूर्वविधित्वात्।

एतेन 'द्वितीयपक्षोऽयुक्तः, स्थानिवद्भावेन अचा व्यवधानात्। व्यञ्जनस्य हि अविद्यमानवत्त्वं, न तु अच' इति वृत्त्युक्तमपास्तमित्यन्यत्र विस्तरः।

**एकादेश उ।** उदात्तयोरेव स्थानित्वे, आन्तरतम्यादेव सिद्धम्। अन्यतरस्याऽनुदात्तत्वे, स्वरितत्वे वा, 'सिद्धं तूभयाऽऽन्तर्यादि'तिन्यायेन आन्तरतम्यात्स्वरिते प्राप्ते, विधिरयम्। तद्ध्वनयन्नुदाहरणद्वयमाह— **वोऽश्वा[1] इति।** 'व' इत्यनुदात्तम्। 'अश्व'शब्दः क्वन्नन्तत्वादाद्युदात्तः। वसः सस्य रुः। तस्य उः। सः अस्वरकः। स्रंसनधर्महल्स्थानिकत्वादनुदात्तो वा। उभयथाऽपि तदेकादेशोऽनुदात्तः[2]। 'क्वे'ति स्वरितम्। 'अवर'शब्दः 'स्वाङ्गशिटामि'त्याद्युदात्तः। एवं च यत् वृत्तौ पूर्वसूत्रात् 'अनुदात्तस्ये'ति अत्राऽनुवर्त्य, 'उदात्ताऽनुदात्तयोरेकादेश' इति व्याख्यातम्, तच्चिन्त्यम्। 'क्वाऽवरमि'त्यसिद्ध्यापत्तेः। तत्र हि बह्वृचानामुदात्तपाठो निर्विवाद इत्याहुः।

१ 'क्व १ वोश्वाः' इति ख. ङ. पाठः। कौमुद्यां तु 'क्व' इति नास्ति।

२ 'अनुदात्तः प्राप्तः' इति क्वचित्पाठः।

वस्तुतः[1] 'तस्यादित' इति सूत्रस्थभाष्यादितोऽप्यनुवृत्तिरेव लभ्यते इति, सैव युक्ता। 'कावरमि'ति तु च्छान्दसत्वाद्बोध्यम् । लोके तु 'कावरमि'त्यादौ न भवत्येवोदात्त इति युक्तमाभाति । 'अयमेकादेशस्वरोऽन्तरङ्गस्त्रैपादिकोऽपि सिद्धो वाच्य' इति 'स्वरितो वे'तिसूत्रे भाष्ये स्पष्टम् । अत एव 'शतुरनुम' इत्यत्र 'अनुम' इति प्रतिषेधश्चरितार्थः ।

'अन्तरङ्ग' इत्युक्तेः 'प्रपचती'त्यादौ एकादेशस्य पूर्वाऽन्तत्वात् 'तिङि चोदात्तवती'ति न प्रवर्त्तते । 'सोमसुत् पचती'त्यादौ 'तिङ्ङतिङ' इति निघातो न। सिद्धत्वफलन्तु 'वृक्षयिदम्', 'वृक्षावत्रे'ति । अत्र अयावौ उदात्तौ भवतः। एतद्विषये शेषनिघातश्च। फलाऽन्तराण्यपि भाष्ये स्पष्टानि ।

**वीदमिति** । 'विः' निपातत्वात् आद्युदात्तः । 'इदम्'शब्दः फिट्स्वरेण अन्तोदात्तः । **दिवीयते इति**। 'दिवी'ति विभक्तिः'ऊडिदम्पदादी'त्युदात्ता । ईङो दिवादेः 'ईयते' इति 'तिङ्ङतिङ' इति निहतम् ।

**इकारयोरिति** । 'ह्रस्वेकारयोरि'त्यर्थः । **किञ्चेति** । इदं वेदे एव । अत एव 'गाङ्गेऽनूपे' इत्यत्राऽयमेकादेशः स्वरितो वेति भाष्ये उक्तम् । **ते इति**। तच्छब्दस्य बहुवचनम् ।

**इकारयोश्च प्रश्लेषे** इति । ह्रस्वयोरिकारयोः प्रश्लेषे, क्षैप्रसन्धिषु च, अभिनिहतसन्धिषु च अविशेषेण[2] उदात्तपूर्वरूपेषु, अनुदात्तोत्तररूपेषु —एषु[3] त्रिषु स्वरितः कार्यः । 'उदात्तपूर्वरूपेषु शाकल्यस्यैवमाचरेदि'तितद्वाक्यशेषात् । **एवमिति**— स्वरितनिर्देशः[4] । 'स्रुचीव घृतम्', 'यो जान्विन्द्र ते हरी', 'तेऽवर्द्धन्त' इति,'स्वतवस' इति क्रमेणोदाहरणानी'ति तद्भाष्यकृतः । वस्तुतस्तु वेदे आपाद्यरूपाऽभावात् व्यवस्थितविभाषाऽऽश्रयणे फलं चिन्त्यम् ।

---

१ 'वस्तुतस्तु' इति लघुशेखरपाठः । २ 'अविशेषेण' इति लघुशेखरपाठः ।

३ 'एषु त्रिषु' इति तु लघुशेखरे नास्ति ।

४ 'स्वरितमिति निर्देशः' इति ख. पाठः ।

**उदात्तादनुदा**. । अत्र 'तयोर्य्वावची'त्यतः 'संहितायामि'त्यनुवर्त्तते । तेन पदकाले न ।

**नोदात्तस्वरितोदय** । 'उदय'शब्दः परवाची शास्त्राऽन्ते मङ्गलाऽर्थं प्रयुक्तः । यद्यपि नञ्द्वयं त्यक्त्वा 'गार्ग्यादीनामेवे'ति नियमो व्याख्यातुं शक्यते, तथापि 'गार्ग्यादीनामुदात्तादिपरमेवे'ति विपरीतनियमशङ्कां वारयितुं नञ्द्वयोपादानम् । **प्र य आरुरिति** । 'ये' इत्युदात्तम् । 'आरुरि'ति 'ऋ'धातोर्लिटि, उसि रूपम्, अन्तोदात्तम् ।

**वोऽश्वाः क्वाभीषव इति** । 'अश्व'शब्द आद्युदात्तः । 'क्वे'ति स्वरितम् ।

**एकश्रुति** । सम्बुद्धिग्रहणं सम्बोधनोपलक्षणम् । अन्यथा 'आगच्छत भो माणवका' इत्यादौ न स्यात् । तदाह- **दूरात्सम्बोधने इति** । स्वराणाम् अविभागेनाऽवस्थानम्—'**एकश्रुतिः**' । यद्वा उदात्तादिभ्यो भिन्नः स्वर '**एकश्रुतिः**' । आद्ये उच्चनीचसमुदितं[1] स्थानम् । परन्तु भेदेनाऽनुपलब्धिरिति स्वरिताद्भेदः । अन्त्ये तु तयोर्मध्यम् एकश्रुतेः स्थानम् ।

**आगच्छेति** । आङ् उपसर्गत्वात् आद्युदात्तः । 'गच्छे'ति निहतम् । 'भोः'शब्दो निपात आद्युदात्तः । 'माणवके'त्यस्य आमन्त्रितनिघातः । अत्राऽन्त्यस्य पक्षे प्लुतोदात्तत्वमपि भवति । वचनसामर्थ्यात् । तदा च उभयोः समुच्चितयोः दूरात्सम्बोधनं द्योत्यम् ।

**यज्ञकर्मण्य** । **जपो नाम उपांशुप्रयोगः**, यथा जले निमग्नस्य । रूढश्च 'जप'शब्दः[2] करणमन्त्रेषु, यत्र 'जपती'ति कल्पसूत्रकृतां व्यवहारः । **न्यूङ्खा** नाम षोडश ओङ्काराः । **साम** प्रसिद्धम् ।

**गीतिषु सामाख्येति** । यज्ञकर्म च यजतिनोदनानोदितं कर्म । जपादिपर्युदासान्मन्त्रेष्वेवैषा एकश्रुतिः, न ऊहितादिषु । तेषाम् अमन्त्रत्वात्[3] । तदाह— **मन्त्रे इति** ।

---

१ 'उच्चनीचं समुदितं स्थानम्' इति ख. ङ. पाठः ।

२ 'शब्दोऽकरणमन्त्रेषु' इति ख. ङ. पाठः ।

३ इतोऽग्रे–'तत्र संपूर्णो य ऊहितस्तस्यैवाऽतत्त्वम् । किञ्चिदूहितपदघटिते तु मन्त्रत्वमेव । तन्मध्यपतितन्यायात्' इति लघुशेखरे पाठः ।

**ममाग्ने इति**। यद्यप्ययं मन्त्रो हविरभिमर्शने विनियुक्तः, तत्र च ऐकश्रुत्येनैव पठ्यते, तथाऽपि 'अधिश्रिते, उन्नीयमाने वा 'ममाऽग्ने वर्चो विहवेष्वस्तु' इति चतस्रो जपित्वा' इत्यग्निहोत्रप्रकरणे **आपस्तम्बसूत्रे** उक्तत्वेन न दोषः। एषु यथाविहितं त्रैस्वर्यं भवति। न चैतेषु नित्यैकश्रुतेः निषेधेऽपि 'विभाषा छन्दसी'ति विकल्पाऽऽपत्तिरिति वाच्यम्। 'यज्ञकर्मणि', 'जपन्यूङ्खसामसु वा', 'उच्चैस्तरां वा वषट्कारः','विभाषा छन्दसी'त्येव सिद्धे, नञुच्चारणवैयर्थ्याऽऽपत्तेः।

यत्तु **हरदत्तः**–'अजपे'त्यादिप्रसज्यप्रतिषेधः। न च ऊहितानाम् अच्छन्दस्त्वात्, तत्र सावकाशस्य पूर्वसूत्रस्य, मन्त्रेषु परत्वात् 'विभाषा छन्दसी'त्यनेन बाधः स्यादिति वाच्यम्। 'यज्ञकर्मणी'ति 'कर्म'ग्रहणसामर्थ्यात् ऊहिताऽनूहितेषु सर्वेषु पूर्वस्यैव प्रवृत्तिरि'ति। तन्न। पर्युदासस्य लघुत्वात्। अत एव 'इन्द्रशत्रुर्वर्द्धस्वे'त्यत्र समासाऽन्तोदात्तत्वे कर्त्तव्ये, पूर्वपदप्रकृतिस्वरत्वं प्रयुक्तमि'ति **शतपथब्राह्मण-तद्भाष्याद्युक्तं** सङ्गच्छते। अत एव **महाभाष्ये** 'मन्त्रो हीन' इति पठितोऽपि श्लोको, 'दुष्टः शब्दः' इति पठितः। एवं च 'इषे त्वे'त्यादियजुर्मन्त्रेषु शाखाच्छेदनादिकरणेषु एकश्रुतिरेव भवति।

एतेन 'पर्युदासेऽपि यज्ञाऽङ्गशब्दत्वेन सादृश्यम्। एवं च ऊहविषये चरितार्थस्याऽस्य, मन्त्रेषु परत्वात् 'विभाषा च्छन्दसी'त्यनेन बाधः। सा च व्यवस्थितविभाषा। अतो नाऽतिप्रसङ्गः। अत एव **आश्वलायनानां** संहितायां त्रैस्वर्यम्, ब्राह्मणे ऐकश्रुत्यम्, **तैत्तिरीयाणाम्** उभयत्राऽपि त्रैस्वर्यव्यवस्था सङ्गच्छते। एवं च हौत्रमन्त्रेषु एकश्रुतिरेव। 'इषे त्वे'त्यादौ यजुषि त्रैस्वर्यमेव। अत एव सकलदेशीयशिष्टाचारविरोधोऽपि ने'ति परास्तम्। ऊहेषु चरितार्थस्य मन्त्रेषु बाधः, उत मन्त्रेषु चरितार्थस्य अच्छन्दसि 'विभाषे'त्यनेन ऊहेषु बाध इत्यत्र विनिगमनाविरहेण, अस्य 'विभाषा छन्दसी'त्येतदपवादकताया एव युक्तत्वाच्च।

१ 'विवहवेष्वस्तु' इति ख. पाठः।

अत एव **कात्यायनेन** 'मन्त्रे स्वरक्रिया यथाऽऽम्नातम्, अविशेषात्' इति पूर्वपक्षे, 'तानो वा, नित्यत्वात्', स्मर्यते चैवम्—'एकश्रुति दूरात् सम्बुद्धौ "यज्ञकर्मणि सुब्रह्मण्या-साम-जप-न्यूङ्ख-याजमानवर्जम्' इत्युक्तम्। अत्र 'वा'शब्दः पक्षव्यावृत्तौ। 'तान एवे'त्यर्थः। 'तानः = एकश्रुति-रि'ति **तद्भाष्यकृतः**। ये तु सूत्रस्थ'वा'शब्दं विकल्पाऽर्थकमाहुः, तेषां 'नित्यत्वादि'ति वाक्यशेषविरोधः। तस्मात् यजुष्यपि एकश्रुतिरेव।

अत्र सूत्रे जपादिग्रहणं याजमानमन्त्राणामप्युपलक्षणम्, **कात्यायन-सूत्र**स्वरसात्।

वस्तुतः **कात्यायनप्रातिशाख्ये** '[1]एके तानलक्षणमेकं स्वरमाहु-र्यज्ञकर्मणि, साम-जप-न्यूङ्खवर्जम्, प्रावचनो वा यजुषो'त्युक्तेर्यजुषि त्रैस्वर्य-मपि। तत्र 'प्रवचन'शब्देन पाठ उच्यते, तत्र भवो वा स्वरो यजुषि यज्ञकर्मणि त्रैस्वर्यलक्षण' इति **तद्भाष्यकृतः**। यद्यपि तत् समाख्या-बलात् तच्छाखीयानामेव, तथाऽपि अविरुद्धत्वात्, 'सर्वशाखाप्रत्ययमेकं कर्मे'ति न्यायाच्चाऽन्येषामपि त्रैस्वर्यम्। परन्तु प्रागुक्त**कल्पसूत्र-पाणिनि-सूत्र-तद्भाष्या**[2]दिपर्यालोचनया एकश्रुतौ धर्माऽधिक्यं बोध्यम्। 'वैकल्पि-केष्वादितोऽवधारणमि'ति न्यायात् सङ्कल्पकाले एतदन्यतरोल्लेखश्च आवश्यकः। 'यज्ञ'शब्देन यजतिचोदनाचोदितानामेव ग्रहणमि'ति स्मार्त्तेषु स्थालीपाकोपाकर्मादिप्रयोगेषु नैकश्रुत्यमित्यन्यत्र विस्तरः।

**उच्चैस्तरां वा**। अधिकरणशक्तिप्रधानोच्चैःशब्दात्, तद्विशिष्टभवन-क्रियायां[3] वर्त्तमानात्, क्रियाप्रकर्षे प्रत्ययः। तेन 'उदात्ततर' इत्यर्थः। 'वषट्'शब्देन 'वौषट्'शब्दो लक्ष्यते। व्याख्यानात्। तत्र औकारस्य ब्रूहिप्रेष्ये'त्यनेन प्लुतोदात्तत्वविधानात् पकाराऽकारस्याऽनेन तदपेक्षया

---

१ 'एके' इति लघुशेखरे नास्ति। 'एकम्' इति तु ख. पाठः।

२ 'भाष्यपर्यालोचनया' इति ख. ङ. पाठः।

३ 'भवनक्रियाकर्त्तरि' इति लघुशेखरपाठः।

उदात्ततरो विधीयते इति बोध्यमि'त्येके । अन्ये तु 'द्वयोरप्युदात्ततरत्वम् । 'याज्या'वाक्यीयैकश्रुत्यपेक्षया प्रकर्ष' इत्याहुः । 'इदमेव युक्तं, भाष्य-संमतं चे'ति बहवः । अस्योदात्तस्य इत उत्कृष्य शास्त्राऽन्ते कर्त्तव्यत्वेन उक्तत्वात् , असिद्धत्वात् , प्लुतोदात्तत्वस्याऽप्यसिद्धत्वाच्च, शेषनिघातो नेति बोध्यम् । पक्षे एकश्रुतिः ।

**विभाषा छन्दसि** । ननु विभाषाग्रहणं व्यर्थम्, 'वा'ग्रहणाऽनुवृत्त्यैव सिद्धेः । न च 'यज्ञकर्मणी'त्यस्य निवृत्त्यर्थम् । इष्टाऽनुरोधेनैव[1] तन्निवृत्तेः सम्भवात् । नित्य-विकल्पविध्योर्विषयभेदस्याऽऽवश्यकत्वेन 'छन्दसी'-त्युक्त्यैव तन्निवृत्तिसिद्धेश्च । न च 'मन्त्रे नित्यं, ब्राह्मणे वे'त्यादिविषय-विभागसम्भवेन, तन्निवृत्तौ मानाऽभाव इति वाच्यम् । 'यज्ञकर्मणी'ति-सूत्रे एव 'वा'ग्रहणेन, व्यवस्थितविभाषाऽऽश्रयणेन च सिद्धे, 'छन्दसी'-त्येतत्सामर्थ्येन तन्निवृत्तिसिद्धेः । किञ्च 'वा'ग्रहणमपि नाऽनुवर्त्त्यम् । एवं च तत्सन्नियोगशिष्ट'यज्ञे'त्यादेरपि निवृत्तिः सिद्धा । विकल्पस्तु 'छन्दसी'ति ऐकश्रुत्यं विधाय, 'न सुब्रह्मण्ये'ति सूत्रे 'ने'ति योगविभागेन निषेधात् ( षोडशी[2]—) ग्रहणाऽग्रहणन्यायेन सिद्ध इति चेत् ।

उच्यते । तन्त्राऽऽवृत्त्यादिना 'विभाषाऽ-छन्दसी'ति पदच्छेदाऽर्थम् । तेन भाषायामपि पाक्षिकैकश्रुतिः । अत एव 'श्वेतो धावति अलम्बुसानां याते'ति द्व्यर्थं वाक्यमि'ति पस्पशाऽन्ते भाष्यं सङ्गच्छते । तत्र 'श्वः' इति नामस्वरेणाऽन्तोदात्तम् । 'इत' इति 'ऊडिदमि'त्यनेन । 'श्वेत' इति घृतादित्वादन्तोदात्तम् । 'अलमि'ति निपातत्वादाद्युदात्तम् । 'बुस'शब्दः अन्तोदात्तः । एवम्[3] 'अलम्बुस'शब्दोऽपि । एकश्रुत्यभावे हि स्वरभेदे कथमेकं वाक्यं द्व्यर्थं स्यादिति बोध्यम् ।

अत एव 'दाण्डिनायने'ति सूत्रे भाष्ये उक्तम्–'एकश्रुतिः स्वरसर्वनामे'-ति । अत एवाऽभियुक्तानां विरुद्धस्वरक-तत्पुरुष-बहुव्रीह्याश्रयणेन

---

१ 'इष्टानुरोधेन, व्याख्यानत एव' इति तु लघुशेखरपाठः ।

२ अयं पाठः क्वचिन्न । ३ 'अत एवम्' इति ख. पाठः ।

श्लिष्टकाव्यादिनिर्माणं सङ्गच्छते। अत एव **काव्यप्रकाशकृता** 'वेद इव लोके स्वरो न विशेषाऽवसायहेतुरि'त्युक्तम्। एकश्रुत्या व्यवहारादिति तदाशयः। किमर्थं तर्हि 'झल्युपोत्तममि'ति प्रक्रम्य 'विभाषा भाषायामि'ति सूत्रितमिति चेत्। त्रैस्वर्येण प्रक्रमे, पाक्षिकाऽनुदात्तलाभायेति गृहाण। एतेन 'भाषायां स्वरो नाऽस्त्येवे'ति भ्राम्यन्तः परास्ताः। स्वरविधौ छन्दोऽधिकाराऽभावाच्चेति दिक्।

**न सुब्रह्म**। ननु 'विभाषे'त्यस्य व्यवस्थितविभाषात्वात्, 'स्वरितस्य तूदात्त' इति ज्ञापकाच्च सुब्रह्मण्यायां तदभावसिद्धौ, 'ने'ति व्यर्थमिति चेन्न। व्यवहित'यज्ञकर्मणी'त्यस्याऽपि निषेधाऽर्थं तत्सत्त्वात्। स्पष्टं चेदं **कात्यायनसूत्रे**। तदाह—**यज्ञेत्यादि**। एवं चेदं सूत्रं यज्ञकर्मणि, स्वाध्यायकाले च प्रवर्त्तते इत्याहुः।

**केचित्तु** 'यज्ञकर्मण्येवाऽस्य प्रवृत्तिः। ने'ति तु[1] स्पष्टाऽर्थमेव। तेन स्वाध्यायकाले स्वरित एव। ( 'विभाषा[2] च्छन्दसी'ति तु व्यवस्थितविभाषात्वान्न )। ततः परेषामनुदात्तानामेकश्रुतिश्चे'ति वदन्ति।

**सुब्रह्मण्योमिति**। 'सुब्रह्मणि साधुरि'ति यत्। 'तित्स्वरितम्'। टापा सह एकादेशोऽन्तरतमत्वात्स्वरितः। 'ओमि'ति निपातत्वादाद्युदात्तम्। तेन एकादेशोऽपि आन्तरतम्यात् स्वरितः। 'एकादेश उदात्तेने'ति तु न प्रवर्त्तते। 'अनुदात्तस्ये'त्यस्याऽनुवृत्तेः। तस्याऽनेनोदात्तः। स्पष्टं चेदं भाष्ये। ये तु तत्र 'अनुदात्तस्ये'ति नाऽनुवर्त्तयन्ति, तेषां यद्यपि अत्र 'एकादेश उदात्तेने'त्येव सिद्धं, तथाऽपि, 'इन्द्राऽऽगच्छे'त्याद्युदाहरणं बोध्यम्। तत्र हि 'इन्द्रे'त्यामन्त्रिताद्युदात्तम्। द्वितीयवर्णः अनुदात्तः। स च 'उदात्तादनुदात्तस्ये'ति स्वरितः। तस्याऽनेनोदात्तः। न चाऽत्र कर्त्तव्ये स्वरितोऽसिद्धः। 'एतत्काण्डमुत्कृष्यते' इत्युक्तेः। अत एवाऽस्मिन्

१ 'नेति तु स्पष्टार्थमेव' इति पाठः ख. ङ. नास्ति।

२ अयं लघुशेखरपाठः। ख. ङ. तु नास्ति।

अनुदात्ते शेषनिघातो न । एवमग्रेऽप्यूह्यम् । स्पष्टं च **कौस्तुभादौ** ।

**असावितीति** । 'असौ' इति प्रथमाऽन्तोपलक्षणम् । एवम् 'अमुष्ये'त्यपि षष्ठ्यन्तस्य । एतानि वार्त्तिकानि । **गार्ग्य इति** । नन्वनेन अन्तस्योदात्तत्वेऽपि, अस्याऽसिद्धत्वाच्छेषनिघाताऽभावे, गाकाराऽकारोऽनुदात्तो न स्यादिति चेन्न[1] । इष्टाऽऽपत्तेः । स्वरितोदात्तयोः समावेशवत्तयोरपि समावेशात् । **स्यान्तस्येति** । अत्र 'स्ये'ति विवक्षितम् । पूर्ववार्त्तिकाऽऽरम्भात् ।

**देवब्रह्मणोः** । 'सुब्रह्मण्यानिगदाऽन्तर्गतयोरित्यर्थ' इत्येके । **देवा ब्रह्माण इति** । अत्र देवब्रह्मणोर्वैयधिकरण्ये द्वयोरप्यामन्त्रिताऽऽद्युदात्तत्वम् । ततः परस्य अनुदात्तस्य स्वरितः । तस्याऽनेनाऽनुदात्तः । आष्टमिकनिघातस्तु न । पूर्वाऽऽमन्त्रितस्याऽविद्यमानवत्त्वात् । यदा तु सामानाधिकरण्यं, तदा 'विभाषितं विशेषवचने' इति पक्षे पूर्वस्य विद्यमानत्वेन 'ब्रह्माण' इत्यस्य निघातोऽपि । ध्वनितं चेदं भाष्ये । 'इदमपि सूत्रं यज्ञकर्मण्येवे'त्येके ।

**स्वरितात्संहितायाम्** । अत्र 'अनुदात्तानामि'ति बहुत्वम् अविवक्षितम् । तेन 'अग्निमीळे' इत्यादिसिद्धिः । बहुवचनोच्चारणं त्वनेकत्वे सर्वेषां यथा स्यात् । अन्यथा 'तस्मादि'ति परिभाषया आद्यस्यैव स्यात् । यदि तु 'स्वरविधौ सङ्घातः कार्यी'त्युच्यते, तदा स्पष्टाऽर्थम् । 'संहितायामि'त्येतत् ज्ञापयति -- 'अन्यत्र पञ्चमीनिर्देशे कालो न व्यवधायक' इति । तेन 'तिङ्ङतिङ' इति निघातः पदपाठेऽपि सिद्ध्यति ।

**इमं मे इति** । 'मे'शब्दोऽनुदात्तः । तस्य उदात्तात्परत्वेन स्वरितः । न चाऽस्य स्वरितस्य प्रकृतसूत्रदृष्ट्याऽसिद्धत्वम् । न च 'स्वरितादि'त्याश्रयात्सिद्धत्वम् । 'क त्रः सुम्ने'त्यादौ चारितार्थ्यादिति वाच्यम् । 'तस्यादित' इत्यादि नवसूत्र्याः स्वस्थानादुत्कृष्य शास्त्राऽन्ते भगवता निर्देशितत्वात् ।

---

1 'गाकारोऽनुदात्तो न स्यादिति चेन्न । 'न मु ने' इत्यत्र 'ने'ति योगविभागेन वार्त्तिकानामसिद्धत्वाऽभावात्' इति ख. ग. ङ. पाठः ।

अत 'एव देवब्रह्मणोरि'ति सूत्रं सार्थकमित्याहुः ।

**उदात्तस्वरितप** । **सन्नः**-अनुदात्तः । **तस्यानुदात्तस्येति** । यत्तु 'इदम् एकश्रुति दूरादि'ति सूत्रस्थभाष्यविरुद्धम् । तथा हि-तत्र उदात्ताऽनुदात्ताऽनुरागवशादेकश्रुतिरुदात्ता, अनुदात्ता वे'ति सन्दिह्य, 'न उदात्ता', 'उच्चैस्तरां वा वषट्कार' इति ज्ञापकात् । अन्यथा 'एकश्रुति'पदाऽनुवृत्त्यैव सिद्धे, 'उच्चै'ग्रहणसामर्थ्यादेव अतिशये लब्धे, 'तर'निर्देशवैयर्थ्याऽऽपत्तिः । नाऽनुदात्ता । 'उदात्तस्वरितपरस्ये'त्यत्र 'सन्नतर' इति 'तर'निर्देशादि'त्युक्तम् ।त्वद्रीत्या त्वेकश्रुतेः अननुदात्तत्वे कथं ज्ञापकं स्यात् । तस्मादेकश्रुतेः स्थाने सन्नतरविधानमि'ति । तन्न । 'उच्चैस्तरामि'तिवदस्याऽपि ज्ञापकस्य मन्मते एवोपपत्तेः । तथा हि 'एकश्रुति'पदाऽनुवृत्त्यैव सिद्धे 'सन्न'ग्रहणादेव सन्नतरलाभे,'तर'निर्देशो व्यर्थ' इति । तव तु एकश्रुतेः स्वराऽन्तरत्वे, ज्ञापितेऽपि एकश्रुतिनिषेधेनैव सिद्धे , 'सन्न'ग्रहणसामर्थ्यात्सन्नतरलाभे, तत्सार्थक्यं दुरुपपादमेव । नच तवाऽप्यनुदात्तस्याऽनुदात्तविधानसामर्थ्यादेव 'तर'लाभे, तन्निर्देशो व्यर्थः । एकश्रुतिबाधेन चारितार्थ्यात् । नच ममाऽप्यनुदात्तस्थानिकैकश्रुतेः स्थानेऽनुदात्तविधानेन 'सन्न'ग्रहणं चरितार्थम् । तादृशलक्ष्ये सन्नतराऽदर्शनात् । 'अनन्तरस्ये'ति न्यायेन, 'संहितायामि'त्यनुवृत्तेश्च पूर्वसूत्रविहितैकश्रुतिस्थाने एवाऽस्य त्वत्पक्षे प्रवृत्तेः न्यायसिद्धत्वाच्च । किञ्च 'एकश्रुति'पदस्य षष्ठ्यन्तत्वकल्पने न मानम् । अपि चैकश्रुतिशब्दस्य स्त्रीलिङ्गत्वेन 'स्वरितपरस्ये'ति लिङ्गविरोधः । अत एव 'अग्निम्' 'कन्ये'त्यादावपि सन्नतरसिद्धिः । 'अनुदात्तानामि'त्युपक्रमात्सर्वेषां मा भूत् , अन्त्यस्यैव यथा स्यादि'त्यर्थं 'पर'ग्रहणम् ।

नन्वेवं सति नवसूत्र्याः शास्त्राऽन्ते उत्कर्षेणाऽस्यासिद्धाऽत्वात् 'गङ्गे'इत्यादिवत्सरस्वतीकारस्याऽपि पूर्वेण एकश्रुतिः प्राप्नोति । मम तु न दोषः । तस्या एव स्थाने सन्नतरविधानादिति चेन्न । अत्र पाठेन परस्परं[2] प्रति

१ 'एकश्रुतेरेव अनुदात्तत्वे' इति क्वचित्पाठः ।

२ 'न सु ने' इति योगविभागेन परस्परं प्रति' इति ख. ङ. पाठः ।

नवसूत्र्या असिद्धत्वाऽभावबोधनात् । अत एवाऽत्र पाठश्चरिताऽर्थः ।

अन्यं प्रति तु असिद्धत्वमस्त्येव । एतेन 'अयं सन्नतर एकश्रुतेरिव 'उदात्तादनुदात्तस्ये'ति स्वरितस्याऽपि परत्वाद्बाधकः स्यादि'ति 'नोदात्तस्वरितोदयमि'ति सूत्रं व्यर्थं स्यादि'ति परास्तमि'त्याहुः ।

शुतुद्रीति । आमन्त्रितत्वेऽपि पादाऽऽदित्वान्न निहतः ।

इति साधारणस्वराः ।

---

## अथ धातुस्वराः ।

प्रकृतिर्द्विधा—धातुः, प्रातिपदिकश्चेति । तत्राऽऽदौ सर्वमूलत्वात्, धातुस्वरानाह—**धातोः** । 'कर्षाऽऽत्वतो घञोऽन्त' इत्यतः 'अन्त[1] उदात्त' इति वर्त्तते । **गोपायतमिति** । गुपेः अन्तोदात्तात् आयः[2] । तदन्तमपि अन्तोदात्तम् । एकाच्सु अपि व्यपदेशिवद्भावात् अस्य प्रवृत्तेः । येऽपि उपदेशे अनुदात्ताः पचादयः, तेष्वपि अयं विधिः । अनुदात्तोपदेशस्य इट्निषेधविधौ चारितार्थ्यात् । पिबाद्यादेशानाम् आद्युदात्तत्वनिपातनसामर्थ्यात् तेषु नाऽयं विधिः ।

**स्वपादि** । अदादिषु आ गणान्तात् स्वपादयः । 'अनिडजादिलसार्वधातुकाऽन्ते पदे' इत्यर्थः । 'लसार्वधातुकमि'त्यस्य सप्तम्या विपरिणामः । 'अच्यनिटी'ति सप्तमीदर्शनात् । अनिटीति किम् ? ।'स्वपितः' । अचीति किम् ? । 'स्वप्यात्' । लेति किम् ? । चानशि 'स्वपानः' । सार्वधातुके किम् ? । 'सुषुपतुः' । **ङित्येवेति** । नैतद्भाष्ये दृष्टम् । केचित्तु[3] 'स्वपानी'त्यत्र एतदभावे धातुस्वरेण आद्युदात्तत्वमेवेति, विशेषाऽभावात्

---

१ 'अन्त इति वर्त्तते' इति ख. ङ. पाठः ।

२ 'अयः' इति ख. पाठः ।

३ सिद्धान्तकौमुद्याष्टीकायां सुबोधिन्यामिदं मतं दृश्यते ।

नेदं प्रवर्त्तते। तत्साहचर्यात् 'हिनसानी'त्यत्राऽपि ने'त्याहुः । ह्रुङस्तु अयं विकल्पो भवत्येव। यद्यपि जक्षित्यादिसूत्रभाष्ये 'अभ्यस्तानामादिरि'त्युत्तरसूत्रे 'अह्विङोरि'त्यनुवर्त्तितं, तथापि मध्ये न सम्बन्धः। मण्डूकाऽनुवृत्त्याश्रयणात्। अन्यथा 'मा हि ह्नोष्ट, यन्मा हि अध्येष्ठे'त्यादौ 'आदिः सिचोऽन्यतरस्यामि'ति न स्यादि'त्याहुः।

**अभ्यस्तानामादिः**। 'आदिरि'त्यनुवर्त्तमाने पुनरादिग्रहणं नित्याऽर्थम्। अचीति किम्?। 'दद्यात्'। अनिटीति किम्?। 'जक्षिथ'। इदं सूत्रं 'जक्षति' इत्यत्र 'झि'निमित्तनिघाते प्राप्ते आद्युदात्ताऽर्थम्।

**अनुदात्ते च**। 'अच्यनिटी'ति निवृत्तम्। 'अनुदात्ते' इति बहुव्रीहिरित्याह—**अविद्यमानेति**। अत एव 'दधात्यत्र','मा हि स्म दधात्' इत्यादौ नित्यत्वात् यणि, इकारलोपे च कृतेऽपि, अयं स्वरः प्रवर्त्तत एव। अभ्यस्तानामिति किम्?। 'ऊर्णोति'।

यत्तु 'ददती'त्यत्र अन्तरङ्गत्वात्पूर्वं धातुस्वरे अन्तोदात्ते, ततो द्वित्वे, आगन्तूनामन्ते निवेशेन, द्वित्वनिष्पन्नस्य परत्वेन, तन्निमित्तके आद्यस्य निघाते प्राप्ते इदमि'ति। तन्न। 'तत्स्वरप्रवृत्तिकाले असंनिहितानामपि विशिष्य विहितस्वराणां शेषनिघात' इत्यर्थस्य 'अनुदात्तं पदमि'तिसूत्रे उक्तत्वात्, द्वित्वनिष्पन्नस्यैव शेषनिघातप्राप्तेः। अत एव 'धातोरि'त्यस्य आद्युदात्तविधायकत्वे 'अनुदात्ते चेति न कर्त्तव्यमि'ति 'धातोरि'तिसूत्रस्थभाष्यं सङ्गच्छते। त्वद्रीत्या तस्य आद्युदात्तविधायकत्वेऽपि, अस्य आवश्यकत्वात्। तस्मादेतत्प्रामाण्येन 'द्विर्वचनं, तन्निमित्तं च

---

१ 'आदिः सिचोऽन्यतरस्यामि'त्यत 'आदिरि'त्यनुवर्त्तमाने पुनरादिग्रहणं 'नित्यमादिरुदात्तो यथा स्यात्, विकल्पो मा भूदि'त्यर्थम्। अन्यथा आदिसम्बद्धम् 'अन्यतरस्यां'ग्रहणमनुवर्त्तेतेत्याशयः।

२ 'मा स्म दधाती'त्यादौ' इति ख. ङ. पाठः।

३ अत्र 'हि'शब्दः 'हि च'ेति निघातनिषेधाऽर्थः।

कार्यं स्वरात् बहिरङ्गमपि पूर्वमि'ति कल्पनात् द्वित्वे कृते, धातुस्वरेण अन्तोदात्तत्वे प्राप्ते, इदमिति । तत्फलं 'पिपृतमि'त्यादौ मध्योदात्तत्वसिद्धिः ।

भीह्री । 'लसार्वधातुकमि'ति मण्डूकप्लुत्याऽत्र सम्बध्यते । ममत्त्विति । 'मदी हर्षे' इत्यस्य श्यन्विकरणत्वेऽपि, छान्दसः शपः श्लुः । भ्यादीनां किम् ? । 'ददाति' । 'अनुदात्ते चे'ति तु 'मिमीते' इत्यादौ सावकाशम्[1] । तत्र हि माङो ङित्त्वात् लसार्वधातुकाऽनुदात्तत्वम् ।

अभ्यस्तानां किम् ? । 'माद्यति' । सार्वधातुके किम् ? । 'बेभीयात्' । यङ्लुगन्तादाशीर्लिङि रूपमिदम् । पिति किम् ? । 'जागृतः'[2] ।

ननु 'प्रत्ययादि'ति किमर्थम् , भ्यादिभ्यः परस्य पितः प्रत्ययस्यैव सम्भवादिति चेन्न । 'प्रत्ययात्पूर्व एव उदात्तो यथा स्यात्, सङ्घात उदात्तो मा भूदि'ति । न च उदात्तत्वादीनाम् अज्धर्मत्वेन 'पिती'ति सप्तम्या 'निर्दिष्ट'परिभाषाप्रवृत्त्या, 'अलोऽन्त्य'परिभाषया च अन्त्यस्यैव भविष्यतीति वाच्यम् । 'स्वरविधौ सङ्घातः कार्यी'त्यर्थस्याऽपि ज्ञापनात् । एवञ्च 'अलोऽन्त्यस्ये'त्यादीनाम् अप्रवृत्तिः । अत एव 'कर्षाऽऽत्वत' इति सूत्रे 'अन्त'ग्रहणं चारिताऽर्थम् । यद्यपि अनेकोदात्तानां न यौगपद्यम् , 'युगपद्'ग्रहणात् , तथापि पर्यायेण सर्वेषां स्यात् , तदभावाऽर्थं 'प्रत्ययादि'ति चरितार्थम् । तेन 'आसीन'[3] इत्यादौ चित्स्वरात् तास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेन सिद्धम् । अन्यथा चित्त्वेन अन्तोदात्तत्वम् , अनुदात्तत्वं च आदेरिति, एकस्य द्विकार्ययोगाऽभावात् , असम्भवाऽभावाच्च विप्रतिषेधोऽसङ्गतः स्यादिति दिक् ।

नन्वेवमपि 'प्रत्यये पिती'त्येवोच्यताम् , किं पूर्वग्रहणेन ? । न च अभ्यस्तानां 'लसार्वधातुके' इत्यनुवृत्त्या पितोऽप्रत्ययस्य असम्भवेन,

---

१ 'सावकाशे' इति ख. पाठः । २ 'जागृतम्' इति क्वचित्पाठः ।

३ 'आसीनः' 'शयानः' इत्यादौ हि शानचश्चित्त्वमित्यवधेयम् ।

'प्रत्यये' इति व्यर्थमिति वाच्यम्। पूर्वोक्ताऽर्थज्ञापनाऽर्थमावश्यकत्वात्। 'प्रत्यये' इत्युक्तौ तु सामर्थ्यात् निर्दिष्टपरिभाषायाः पुनः प्रवृत्त्या, अव्यवहितस्यैव[1] ग्रहणमिति, न दोष इति चेन्न।

'सौवर्यः सप्तम्यस्तदन्तसप्तम्य' इति ज्ञापनाऽर्थत्वात्। न च तदन्तसप्तमीपक्षेऽपि, सप्तम्यन्तपाठे[2] प्रत्ययग्रहणसामर्थ्यात्, न तदन्तविधिरत्र, उक्तरीत्या तु अत्र पक्षे प्रत्ययग्रहणसार्थक्यं वक्तुमशक्यमिति, ज्ञापितेऽपि पूर्वग्रहणसार्थक्यं दुरुपपादमिति वाच्यम्। सप्तम्यन्तपाठे प्रत्ययग्रहणसामर्थ्येन 'अलोऽन्त्य'परिभाषाप्रवृत्तिः स्यादिति तत्सार्थक्यात्। कृते तु पूर्वग्रहणेऽपि 'प्रत्ययान्तानां ञ्यादीनां प्रत्ययात्पूर्वमुदात्तमि'त्यर्थेनाऽदोषात्। एवञ्च 'प्रत्ययादि'ति पञ्चम्येवोचिता। तत्र सामर्थ्यात् उत्तराऽङ्गविकलपरिभाषाप्रवृत्त्या अव्यवहितपूर्वस्य कार्यिण एव पूर्वशब्देन ग्रहणान्न दोषः।

ज्ञापकस्य विशेषाऽपेक्षत्वात् निर्दिष्टपरिभाषाविषये एव प्रवर्त्तते। अत एव 'रिक्ते विभाषे'त्यादौ न दोषः। तत्र हि पूर्वोत्तरसाहचर्यान्न परिभाषाविषयः। वस्तुतः 'षष्ठ्यर्थे सप्तमी'त्येव ज्ञाप्यते। तदन्तविधिस्तु 'येन विधिरि'ति परिभाषया न्यायसिद्धः। 'चतुरः शसि' 'आदिर्णमुली'त्यत्र च यथा न अस्याः प्रवृत्तिः, तथा वक्ष्यते।

अत्र केचित्—'इदं सामान्याऽपेक्षम्। तेन 'ञ्नित्यादिरि'त्यादौ अपि प्रवृत्तिः। न चैवं 'गर्गाः' इत्यादौ 'यञञोश्चे'ति लुकि आद्युदात्तत्वप्रसङ्गः। 'इत्पदघटिते अनुबन्धनिमित्ते स्वरे कर्त्तव्ये, आङ्गत्वाऽभावेऽपि, प्रत्यये परतः पूर्वकार्यत्वाऽभावेऽपि, लुमता लुप्ते प्रत्ययलक्षणं नाऽस्ती'त्यर्थस्य 'संज्ञायामुपमानमि'त्यनेन ज्ञापनान्न दोषः। तद्धि 'चञ्चा' इत्यादौ आद्युदात्तत्वाय। अन्यथा कनो लुपि, प्रत्ययलक्षणेन 'ञ्नित्यादिरि'त्येव सिद्धे, तद्वैयर्थ्यं स्पष्टमेव। अत एव 'अत्रय' इत्यत्र ढको लुकि न दोषः।

वस्तुतः 'अत्रय' इत्यादौ न दोषः। कार्यिणोऽभावेन प्रत्ययलक्षणा-

१ 'व्यवहितस्यैव' इति ख. पाठः। २ 'पाठेऽपि' इति ग. पाठः।

ऽप्रवृत्तेः । प्रत्ययलक्षणेन हि तन्निमित्तम् अन्यस्य कार्यम् अतिदिश्यते, न तु तस्यैव स्थानित्वं[1] प्रतिपाद्यते । असतः प्रसङ्गाऽभावेन स्थानित्व-बाधात् । अत एव 'नखभिन्न' इत्यादौ ऐसादिकं न । न च तदन्तग्रहणा-द्दोषः । विशेष्याऽसनिधानात् । 'तद्धितस्ये'त्यनुवृत्त्या प्रत्ययेन स्वघटित-समुदायस्य आक्षिप्तस्याऽपि विशेषणत्वमेव । विशेषण-विशेष्यभावे कामचारात् । विशेष्यत्वमङ्गीकृत्य तु भाष्ये प्रयोजनत्वेनोपन्यासः ।

'मा हि दाताभि'त्यादौ 'आदिः सिच' इत्यस्य प्रवृत्तये—'इत्पद-घटिते'ति । 'पथिप्रियः' 'मथिप्रियः' इत्यत्र च 'पथिमथोः सर्वनामस्थाने' इत्येतत्स्वरनिवृत्त्यर्थं 'न लुमताऽङ्गस्ये'ति सूत्रभाष्यपठितम् 'अत्र लुमता लुप्ते प्रत्ययलक्षणं नेष्यते' इति वचनमेव शरणम् ।

यदि प्रागुक्तज्ञापकं 'क्वचित्स्वरे कर्त्तव्ये प्रत्ययलक्षणं ने'त्येव, 'क्वचित्' इत्युक्त्या च 'आमन्त्रितस्य च' 'सर्वस्य सुपी'त्यादौ न दोष इत्युच्यते, तदा न काचिद्दोषशङ्के'ति वदन्ति ।

[2]अपरे तु 'विशेषाऽपेक्षमेव । यत्र तदन्तग्रहणसत्त्वाऽसत्त्वाभ्यां स्वराऽऽश्रयकार्यिभेदः, तत्रैव तत्प्रवृत्तिरि'ति प्राहुः । 'भीह्री' इत्यत्र हि पूर्वग्रहणाऽभावे, तदन्तस्य कार्यित्वे, प्रत्ययान्तानां भ्यादीनामलोऽन्त्यस्य भवन् उदात्तः प्रत्ययाऽन्त्यस्य स्यात् । सप्तम्यर्थपुरस्कारे तु पितम् अपहाय भ्यादीनामेव उदात्तः स्यादिति स्पष्टस्तद्भेदः । 'उपोत्तमं रिति' 'चङ्यन्यतरस्यामि'त्यत्राऽपि दरिद्राधातुविषये फलभेदः । 'ञ्नित्यादिरि'-त्यादौ तु न तद्भेदः । उभयथाऽपि प्रकृतेरादेरेव उदात्तत्वात् । अतस्तत्र परसप्तम्येव । एवञ्च 'गर्गाः' इत्यादौ 'न लुमते'ति निषेधादेव न दोष इति, पथिमथ्यर्थमपि वचनं नाऽऽवश्यकम् । ननु सूत्रद्वये 'रितः' 'चङः' इति षष्ठीनिर्देश एवाऽस्तु, किं परिभाषयेति चेन्न । लाघवाऽर्थत्वात् ।

१ 'स्थानिवत्त्व' इति क्वचित्पाठः ।

२ 'अपरे तु' इत्यारभ्य 'तत्प्रवृत्तिरिति प्राहुः' इत्यन्तः पाठः ख. नास्ति ।

'सप्तमीनिर्देशेन, परिभाषाबोधकपूर्वग्रहणेन च तन्त्राद्याश्रयणेन रिति परतः, चङि परत उपोत्तमोदात्तत्वविधानस्याऽपि कल्पना न दोष' इत्यन्ये।

ननु 'चतुरः शसी'त्यत्र फलभेदस्य स्पष्टत्वेन, पक्षद्वयेऽपि एतत्परिभाषाप्रवृत्तिर्दुर्वारा, तथा च शस एव उदात्तत्वं स्यादिति चेन्न। 'शस्'-ग्रहणसामर्थ्येन अस्या बाधात्। अन्यथा 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्य' इत्यत्र 'चतुर' इत्येव ब्रूयात्। 'असर्वनामस्थान'ग्रहणाऽनुवृत्त्या, 'षट्त्रिचतुर्भ्यो' इति हलादेः उदात्तत्वविधानेन च, शस एव प्रवृत्तिः भविष्यति। न चैवं 'प्रियचतुरा ब्राह्मणेने'त्यादौ दोष इति वाच्यम्। 'भीह्री'तिसूत्रस्थैतज्ज्ञापकपरभाष्यप्रामाण्येन 'चतुरः शसी'त्यत्राऽपि विहितविशेषणाऽऽश्रयणेन, 'अभिव्यक्ते'तिन्यायेन आचारक्विबन्तादौ च, तदन्ते गौणे, अप्रधाने च अप्रवृत्तेः कल्पनेनाऽदोषात्।

इदं चिन्त्यम्। 'उपमानं संज्ञायामि'ति सूत्रस्थभाष्यविरोधात्। किञ्च 'सर्वस्य सुपी'त्यत्राऽपि एवं सति तदन्तसप्तमी न स्यात्। तथा च 'न लुमते'ति निषेधाऽऽपत्तौ सर्वस्तोमाऽसिद्धिरिति दिक्।

'न लुमते'तिसूत्रस्थभाष्यन्तु 'लुमति प्रतिषेधे एकपदस्वरस्योपसङ्ख्यानं, सर्वाऽऽमन्त्रितसिज्लुक्स्वरवर्जम्'। 'प्रयोजनं ञ्निन्नित्किल्लुक्स्वराः,' 'पथिमथोः सर्वनामस्थाने लुकी'ति वार्त्तिकव्याख्यानपरम्। 'उपमानमि'ति-सूत्रस्थं तु तत्प्रत्याख्यानपरमिति, न तयोर्विरोधः। इमानि च वार्त्तिकानि 'न लुमताऽङ्गस्ये'त्यत्र 'अङ्गाधिकारः प्रतिनिर्दिश्यते' इतिपक्षे इव,'प्रत्यये परतः पूर्व(स्य)कार्यमात्रे प्रतिषेध' इतिपक्षेऽपि आवश्यकानि। सौवरीणां सप्तमीनां तदन्तसप्तमीत्वात्, 'उत्तरपदत्वे चाऽपदादिविधौ' इतिवत्। 'ञित्–नित्–कित्स्वरस्य अनाङ्गत्वात् प्रतिषेधाऽप्राप्तिरि'ति **कैयटस्तु** उपलक्षणम्। 'इह किञ्चिदङ्गाऽधिकारे लुमता लुप्ते प्रत्ययलक्षणेन भवति, किञ्चिच्च अन्यत्र न भवती'ति सूत्रशेषस्थभाष्ये 'किञ्चिच्चे'ति-

शब्देन 'अहर्ददाती'त्यत्र 'असुपी'ति प्रतिषेधो ग्राह्य इति, न कश्चिद्भाष्यविरोधः । 'किञ्चिच्चे'ति प्रतीके 'ञित्–नित्–कित्स्वरा' इति **कैयट** उपलक्षणतया व्याख्येय इति सुधियो विभावयन्तु ।

**लिति** । अत्र 'अभ्यस्तानामि'ति न सम्बध्यते । प्लुलो लित्करणात् । **चिकीर्षक इति** । अत्र परत्वात् अल्लोपः । न च स्वरो नित्यः । शब्दाऽन्तरस्य प्राप्त्या तस्य अनित्यत्वात् । लोपोऽपि अनित्यः । स्वरभिन्नस्य प्राप्तेः । स्वरदीर्घयलोपेषु लोपाऽजादेशस्य स्थानिवत्त्वनिषेधात् ईकार उदात्तः ।

**आदिर्णं** । **अभ्यस्तानामिति** । 'णमुली'त्यस्य 'सौवर्य' इति न्यायेन तदन्तसप्तमीत्वे एतत् पञ्चम्या विपरिणम्यते । 'अभ्यस्तात्परो यो णमुल्, तदन्ते आदिरुदात्त' इत्यर्थः । तेन'जागरं-जागरं' 'लोलूयं-लोलूयमि'त्यादेः सिद्धिः । 'लोलूयिषं-लोलूयिषमि'त्यादौ च नाऽतिप्रसङ्गः ।

'लोलूयं–लोलूयमि'त्यादौ अल्लोपस्य स्थानिवत्त्वं तु न । स्वरे तन्निषेधात् । एवञ्च विशेषाऽभावम् अभिप्रेत्य परसप्तम्येव मूले उक्ता । 'अभ्यस्तानामि'त्यनुवृत्तिरनावश्यकीति तदाशयः । तदा अस्तु कथञ्चित् ।

**लोलूयंलोलूयमिति** । आभीक्ष्ण्ये द्वित्वम् । परो 'लोलूय'शब्दः सर्वोऽनुदात्तः । पूर्वस्तु अनेन अनुदात्तः । ततो 'लू' इति स्वरितः । ततः चत्वारः प्रचयाः । पक्षे लित्स्वरेण 'लू' इति उदात्तः । न च तत्र कर्त्तव्ये अल्लोपस्य स्थानिवत्त्वम् । स्वरविधौ तन्निषेधात् । शेषनिघातः ।

**अचः कर्त्तृयकि** । अत्राऽपि तदन्तसप्तमीत्वे न फले विशेषः । 'उपदेशे अजन्तप्रकृतिक-कर्त्तृयगन्तस्य आदिरुदात्त' इत्यर्थात् । **लूयते केदार इति** । पक्षे यक्स्वरेण मध्योदात्तम् । उपदेशे किम् ? । 'कीर्यते' इत्यादौ इत्त्वे, रपरत्वे च, अयं स्वरो यथा स्यादिति । इदं च 'तास्यनुदात्तेदि'तिसूत्रात् समासैकदेशस्याऽपि उपदेशपदस्य अनुवृत्त्या लब्धम् । न चैवं

१ एकं 'लोलूयं' ख. नास्ति ।

जनेरन्तर्भावितण्यर्थात् कर्मकर्त्तरि 'जायते स्वयमेवे'त्यत्र न स्यात्, उपदेशे अजन्तत्वाऽभावादिति वाच्यम। 'ये' इति विषयसप्तमीमाश्रित्य प्रत्ययोत्पत्तेः प्रागेव आत्त्वप्रवृत्तेरिति दिक्।

**चङ्यन्य**। 'उपोत्तमं रिती'त्यत 'उपोत्तम'ग्रहणमनुवर्त्तते। **चङ्दात्त इति**। प्रत्ययस्तु अदुपदेशात्परत्वेन 'तास्यनुदात्तेत्' इति अनुदात्तः। उपोत्तमं किम्?। 'मा हि दधत्'। अत्र चङ एव स्वरः।

इति धातुस्वराः॥

---

## अथ प्रातिपदिकस्वराः।

अथ प्रातिपदिकस्वराः। ते च प्रायेण कृत्तद्धितप्रत्ययबलेनैव ज्ञेयाः। उणादिषु[2] तु उणादिप्रत्ययैः। अव्युत्पत्तिपक्षेऽपि फिट्सूत्रैः। क्वचित् विशिष्य विधानादि'त्याद्यूह्यम्। अत एव पुत्रीयतेः क्विपि 'पुत्रीरि'त्यादौ सर्वाऽनुदात्तत्वमेव। **केचित्तु** क्वचित् व्युत्पत्तिपक्षेऽपि फिट्स्वरप्रवृत्ति-मिच्छन्ति। अत एव 'कर्मण्यणि'ति सूत्रे 'मांस'शब्दस्य 'नब्विषयस्ये'ति-फिट्स्वरमाशङ्क्य 'मनेर्दीर्घश्चे'ति-औणादिक'स'प्रत्ययाऽन्तत्वात् अन्तो-दात्तता कैयटेनोक्ता। 'मांसमेकः पिंशती'त्यादि लक्ष्यमपि तथैव।

'आज्य'शब्दे तु 'आङ्पूर्वादञ्जेः क्यबि'ति पक्षे आद्युदात्तत्वं स्पष्टमेव। ण्यत्पक्षे तु 'नब्विषयस्ये'त्याद्युदात्तत्वं बोध्यम्।

**कर्षाऽऽत्वतः**। 'कर्षतेः, आकारवतश्च परो यो घञ्, तदन्तस्ये'त्यर्थः। 'ञ्नित्यादिरि'त्यस्याऽपवादोऽयम्। वत्किम्?। 'आदन्तादि'त्यर्थे युक्त आदन्तभक्तत्वात् 'दाय' इत्यत्रैव स्यात्, न तु 'पाक' इत्यादौ। घञा-क्षिप्तधातुविशेषणत्वात् तदन्तविधिः। 'स्वरविधौ व्यञ्जनमविद्यमानवदि'-

---

१ 'तिङ् तु' इति लघुशेखरे पाठः। स च शोभनः।

२ 'उणादिषु' इति ख. ङ. नास्ति। अत्र 'तुः' मनोरमातः पूरितः।

ति तु नाऽस्ति। स्वरोद्देश्यकविधेरभावात्। युक्तो 'निर्दिश्यमान'परिभाषया आकाराऽवयवत्वेऽपि, 'आकारान्ताद्धातोर्विहित' इत्यर्थः स्यादिति बोध्यम्। यद्यपि 'निर्दिश्यमान'परिभाषया घञ एवोदात्तत्वं सिद्धं, तथाऽपि 'अन्त'ग्रहणं 'स्वरविधौ सङ्घातः कार्यी'ति ज्ञापितत्वात्, 'आदेः, अन्तस्य च पर्यायेण मा भूदि'त्येतदर्थमित्याहुः।

**उञ्छादीनां च**। उञ्छ-म्लेच्छ-जञ्ज-जल्पा घञन्ताः। जप-व्यधौ अदन्तौ। 'वध' इति पाठस्तु चिन्त्यः। उदात्तनिवृत्तिस्वरेण सिद्धेः। गरः विषे अबन्तः, अन्तोदात्तः। अन्यत्र आद्युदात्तः। वेग-वेद-वेष्ट-बन्धाः करणे घञन्ताः। भावे आद्युदात्ता एव। 'स्तु-यु-द्रुवश्छन्दसि'[1]। समासाऽर्थमिदम्। परिष्टुत्। सुयुत्। परिद्रुत्[2]। 'वर्त्तनिः स्तोत्रे'। स्तोत्रे = सामनि वर्त्तमानो 'वर्त्तनि'शब्द उञ्छादिः। अन्यत्र मध्योदात्तः। 'श्वभ्रे दरः'। अन्यत्र अबन्तत्वादाद्युदात्तः। 'साम्बतापौ भावगर्हायाम्'। अन्यत्र आद्युदात्तौ। मन्थ-भोग-देहा घजन्ताः। 'उञ्छादिराकृतिगण' इति बहवः।

**घञन्त इति**। णिजभावे। णिचि तु एरचैव सिद्धेः। 'एरजण्यन्तानामि'ति तु नाऽस्ति।

**चतुरः शसि**। 'अत्र 'सौवर्यः सप्तम्य' इति न प्रवर्त्तते'[3] इत्युक्तम्। **नेहेति**। तकाराऽकारस्य नेत्यर्थः। 'स्वरे ने'ति निषेधस्तु लोपरूपाऽजादेशस्यैव। स्वविधौ[4] स्थानिवत्त्वाऽभावात्, तस्याऽपि न। तस्मात् आद्युदात्ततैवेति भावः।

केचित्तु 'आद्युदात्तनिपातनसामर्थ्यादत्र 'चतुरः शसी'ति न प्रवर्त्तते।

---

१ 'स्तुयुद्युव' इति क्वचित्पाठः।

२ 'परिद्युत्' इति क्वचित्पाठः।

३ इतोऽग्रे—'अन्यथा 'चतुरः शस' इत्येव वदेत्' इति लघुशेखरे पाठः।

४ 'स्वरविधौ' इति ख. ङ. पाठः।

न च 'चतसृणामि'त्यत्र 'षट्त्री'तिविभक्तिस्वरस्याऽपि बाधाऽऽपत्तिः। *हलादिग्रहणसामर्थ्येन तस्य* एतत्स्वराऽबाधकत्वात्[1]। तथाहि-षट्-त्रि-चतुरां बहुवचनविषयत्वात्, द्विवचनैकवचने न स्तः। उपसमस्ते सम्भवेऽपि, विहितविशेषणान्न दोषः। तत्र **षड्भ्यः**—जश्शसोर्लुगेव। अन्या हलादयः। **'त्रि'शब्दे**—जसि नेदम्। 'असर्वनामस्थाने' इत्यधिकारात्। शसि 'एकादेश उदात्तेन' इत्यनेन सिद्धम्। अन्या हलादयः। **तिसर्यपि**-'तिसृभ्यो जस' इत्यनेन भाव्यम्। 'तिस्रः पश्ये'त्यत्र 'उदात्तयण' इत्यनेन भाव्यम्। **चतुःशब्दे**—जसि 'असर्वनामस्थाने' इत्यनुवृत्त्या न दोषः। तस्मात् 'चतस्रः पश्ये'त्येव व्यावर्त्यम्। यदि निपातनस्वरोऽस्य विभक्तिस्वरस्य बाधकः स्यात्, हलादिग्रहणमनर्थकं स्यात्।

न च 'चतुरः पश्ये'ति तद्व्यावर्त्यम्। 'चतुरः शसी'त्यारम्भसामर्थ्येन तस्य बाधात्। न च गौणे चरिताऽर्थम्। भाष्यादिप्रामाण्येन[2] तत्राऽप्रवृत्तेरि'त्याहुः[3]।

**झल्युपोत्तमम्**। **तदन्ते पदे** इति। षडादिभ्यो विहितझलादौ विभक्तौ परतः षडादीनां त्रिप्रभृत्यक्षराऽभावात् उपस्थितप्रकृतिप्रत्ययसम्बन्धि-उपोत्तमस्य ग्रहणात्, सौवरीणां सप्तमीनां तदन्तसप्तमीत्वाच्च, एवं व्याख्यातम्। 'परमषडि'त्यादावपि न समुदायस्य षट्त्वम्। लुगादिकार्याणां तदन्तविधिना सिद्धेः। प्रकृते तु न तदन्तविधिः। विशेष्याऽसंनिधानात्। 'षट्त्री'त्यस्य अयमपवादः।

**आ षड्भिरिति**। 'आ' इति भिन्नं पदम्।

**विभाषा भाषायाम्**। पक्षे 'षट्त्री'त्यन्तोदात्तत्वम्।

---

१ 'तस्य एतत्स्वराऽबाधात्' इति ख. ङ. पाठः। 'तदबाधात्'इति तु लघुशेखरे पाठः।

२ 'वार्त्तिकप्रामाण्येन' इति तु लघुशब्देन्दुशेखरे पाठः।

३ एतन्मतखण्डनप्रकारश्च लघुशेखरे नागेशभट्टेन दृब्धः। तत्रैव द्रष्टव्यः।

**सर्वस्य सुपि** । 'सर्व'शब्दश्च गणे[1] अन्तोदात्तो निपातितः, उञ्छादिपाठाद्वा अन्तोदात्तः, 'सर्वस्य विकारः सार्व' इत्यत्र अनुदात्तादिप्रकृतिकसुबन्तलक्षणोऽञ् यथा स्यादिति । श्रवणन्तु प्राय आद्युदात्तस्यैव । प्रत्ययलक्षणेनाऽपि सर्वस्वरस्य इष्यमाणत्वात् । सप्तमीनिर्देशस्तु लाघवाऽर्थः । सौवरीणां सप्तमीनां तदन्तसप्तमीत्वात् । 'सुपी'ति तु अत्यन्तस्वार्थिके तरपि, तस्य प्रातिपदिकादेव उत्पत्तेः ङ्याप्सूत्रभाष्यादौ उक्तत्वेन तत्राऽन्तोदात्ताऽर्थमित्यादि ङ्याप्सूत्रे निरूपितम् ।

एतेन 'सर्वत्र आद्युदात्तश्रवणमेव । प्रत्ययलक्षणेन सर्वत्र सर्वस्वरस्य इष्टत्वात् । 'सुपी'ति तु आचारक्विबन्तव्यावृत्त्या चरितार्थम् । तत्सामर्थ्यादेव सतिशिष्टस्वरादपि अस्य बलीयस्त्वं बोध्यते । तेन 'सर्वेषांपुत्र' इत्यादौ 'षष्ठ्या आक्रोशे' इत्यलुकि सर्वस्वरो भवत्येवे'त्यपास्तम् । '**सर्वस्वरोऽनकच्कस्येति वक्तव्यम्**' । 'सर्वके' । अत्र अन्तोदात्त एव ।

**ञ्नित्यादि** । 'सौवर्य' इत्यस्य सामान्यतः प्रवृत्तिमभिप्रेत्याऽऽह—**ञिदन्तस्येति** । ननु 'जुगुप्से'त्यादौ धातुसंज्ञातः परत्वात् नित्स्वरे कृते, सन्नन्तस्य धातुत्वे, सतिशिष्टत्वात् धातुस्वरः प्राप्नोतीति चेन्न ।

सनो[2] नित्त्वसामर्थ्येन (सतिशिष्टस्याऽपि बाधेन) आद्युदात्तत्वसिद्धेः । न च 'सन्यङोरि'त्यादौ विशेषणाऽर्थः सः[3], अन्यथा 'वत्स' इत्यत्राऽपि स्यादिति वाच्यम् । 'धातोरि'त्यनुवर्त्त्य 'स'शब्दाऽन्तस्य धातोः द्वित्वविधानेनाऽदोषात् । न चैवमपि परत्वात् स्वरे कृते, पश्चात् द्वित्वे, एकपदे उभयोदात्तयोरभावात्, कदा चिदभ्यासः, कदा चित् द्वितीयः उदात्तः स्यात्, अभ्यासस्यैव तु इष्यते इति वाच्यम् । द्वित्वनिष्पन्नस्य एकपदे उदात्तद्वयाऽसम्भवेन, शेषनिघातशास्त्रबलात् अनुदात्तस्यैव उच्चारणेन, तस्य च 'आगन्तुकानामन्ते निवेश'इतिन्यायेन परत्वसत्त्वेनाऽक्षते ।

---

१ गणे = सर्वादिगणे इत्यर्थः ।

२ लघुशेखरस्थोऽयं पाठः । ख. ङ. नास्ति ।

३ 'सः' इति लघुशेखरात्पूरितमस्माभिः ।

**पथिमथोः सर्वे**। पथि-मथिशब्दौ अन्तोदात्तौ। अत्र 'सौवरीणां सप्तमीनां तदन्तपरत्वेऽपि, लुमता लुप्ते प्रत्ययलक्षणं नेष्यते' इति **भाष्यम्**। तेन 'पथिप्रिय' इत्यत्र पूर्वपदप्रकृतिस्वरेण अन्तोदात्त एव। 'सुपन्था' इत्यादावपि प्रत्ययलक्षणं नाऽस्त्येव। समासात् या विभक्तिः, सा तु न पथिमथोर्विहितेति, न तत्राऽपि अस्य प्रवृत्तिः। परत्वात् अव्यय-पूर्वपदप्रकृतिस्वरेण अस्य बाधाच्च।

**क्षयो निवासे**। 'क्षियन्ति = निवसन्ति अस्मिन्नि'ति अधिकरणे 'पुंसि सञ्ज्ञायामि'ति घः। निवासे किम्?। 'क्षयः चोराणामि'त्यादौ एरजन्तत्वात् अन्तोदात्तत्वमेव।

**जयोऽश्व इति**। तेनैव करणे घः। अन्यत्र एरचि अन्तोदात्तत्वम्।

**वृषादीनां च**। 'वृषु सेचने'। इगुपधलक्षणः कः। **आकृतिगण इति**। फिट्सूत्रेषु 'ग्रामादीनां चे'ति सूत्रितम्, सोऽपि आकृतिगणः। एवञ्च अविहितलक्षणाऽऽद्युदात्तस्य वृषादित्वं, ग्रामादित्वं वा बोध्यम्। अन्तोदात्तस्य तु उञ्छादित्वं, घृतादित्वं वा बोध्यम्।

एवञ्च द्वाभ्यामेव सूत्राभ्यां सर्वेष्टसिद्धौ इतरसूत्रप्रणयनं कर्तृभेदात् न दोषायेति दिक्। **एतदेवेति**। एतच्च उपपादितम्।

**निष्ठा च व्यजनात्**। 'आकारभिन्न आदिरि'त्यर्थः। 'निष्ठे'त्यादि षष्ठ्यर्थे प्रथमा। 'अद्याऽक्त' इत्यादौ एकादेशस्य बहिरङ्गस्याऽसिद्धत्वात्, 'अनादि'ति प्रतिषेधो न।

**आशितः क**। 'सकर्मकादपि अशेः कर्त्तरि क्तः, उपधादीर्घश्च अत्रैव निपात्यते। आङ्पूर्वत्वे क्तमात्रमि'ति **भाष्यम्**। 'आङ्पूर्वात्अविवक्षित-कर्मकत्वेन अकर्मकत्वात्कर्त्तरि क्त' इति **वृत्तिः**। विवक्षाऽविवक्षयोश्च प्रयोगाऽऽधीनत्वात्, नाऽनिष्टाऽऽपादनम्। 'थाथघञि'त्यस्याऽपवादो-

१ 'आङ्पूर्वत्वे 'थाथघञि'त्यस्यापि अपवादोऽयम्। अन्येतु 'ण्यन्तात्कर्मण्येवा-ऽयं क्त इति, कर्त्तेत्यनेन च अणौ कर्त्ताणौ कर्मीभूत एव विवक्षित इत्याहुः। तदुभयमपि भाष्याऽसंमतम्' इति लघुशेखरे नागेशभट्टाः।

ऽयमि'ति तदाशयः । 'अत्र अश्नोतेः, अश्नातेश्च ग्रहणमि'ति **केचित्** ।

**रिक्ते विभाषा** । पूर्वोत्तरसाहचर्यात्, 'रिक्तशब्दे विद्यमान आदि-रि'त्यर्थः । न तु तत्र परे इत्यर्थः । **रिक्त इति** । पक्षे प्रत्ययस्वरेण अन्तोदात्तः ।

**जुष्टार्पिते । वा स्त इति** । पक्षे, भाषायां च प्रत्ययस्वरेण अन्तोदात्तौ । 'जुषी प्रीती'त्यतः 'श्वीदितो निष्ठायामि'ति इट्प्रतिषेधः । अर्त्तेः णिच् । 'अर्त्तिह्री'ति पुक् ।

**नित्यं मन्त्रे** । न केवलं गताऽर्थतामात्रं, किन्तु आरभ्यमाणे सूत्रे दोषोऽप्यस्तीत्याह—**अर्पिताः षष्टिरित्यादिना** । 'सूत्रविरोधात् स पाठः प्रामादिकः । इदमेव ध्वनयितुं सूत्रमि'त्यन्ये ।

**युष्मदस्मदो** । अत्र लुग्विषये त्वमाऽऽदेशयोः कृतयोः स्वरे विशेषाऽभावात्, तदन्तसप्तमी-परसप्तम्योः अत्र न फलभेदः । **'ङयि च'**—इति योगविभागो यथासङ्ख्यनिवृत्त्यर्थः । 'एकादेश उदात्तेने'ति विभक्तेरुदात्तत्वे प्राप्ते, वचनम् ।

**यतोऽना** । 'निष्ठा च द्व्यजनादि'त्यतो 'द्व्यज्'ग्रहणमनुवर्त्तते । 'नौ-भिन्नाद्विहितो यो यत्, तदन्तस्ये'त्यर्थः । 'अनाव' इति प्रतिषेधो ज्ञापयति-'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदि'ति । हलादौ आदेरचोऽसम्भवात्, तद्विषयकशास्त्रसामर्थ्येन हलोऽपि स्थाने उदात्तादिगुणकः कश्चित् स्यादित्यर्थोऽभिप्रायेण हलः स्वरप्राप्तिः ।

**केचित्तु** 'स्वरविधौ व्यञ्जनमविद्यमानवदि'त्येव ज्ञाप्यते । 'स्वरे विधातव्ये, स्वरेण वा कार्ये कर्त्तव्ये' इति तदर्थः । अत एव 'नोत्तरपदे-ऽनुदात्तादौ' इत्यादौ पृथिव्यादिपर्युदासः सार्थकः । 'कापोतमि'त्यादौ अनुदात्ताद्यन्तश्च सिद्धिः । एवञ्च एकैव परिभाषे'त्याहुः ।

अत्रेदं बोध्यम्—'स्वरे विधातव्ये, स्वरस्थानित्वेन प्रसक्तस्यैव व्यञ्जनस्य अविद्यमानवत्त्वं, नाऽन्यस्ये'त्युपेयम् । अयमेवाऽर्थो 'हल्स्वर-प्राप्तौ' इति परिभाषया भाष्ये दर्शित' इति । तित्स्वरिताऽपवादोऽयम् ।

**ईडवन्द**। ण्यतो ह्यनुबन्धकत्वात्पूर्वेणाऽसिद्धिरिति भावः। अयमपि तित्स्वराऽपवादः। 'अत्र वृङ एव ग्रहणमि'ति 'एतिस्तुशासि'ति सूत्रे निरूपितम्।

**विभाषा**। 'वेणु'शब्दो नित्त्वादाद्युदात्तः प्राप्तः। 'स्थो णुरि'त्यनुवर्त्तमाने 'अजिवृरीभ्यो निच्चे'ति व्युत्पादितत्वात्। इन्धाने यदि चानश्, तदा अन्तोदात्तत्वं प्राप्तम्। यदि शानच्, तदाऽपि अन्तोदात्तत्वमेव प्राप्तम्। यत्तु 'श्नमोऽकारस्य उदात्तस्य लोपात् लसार्वधातुकाऽनुदात्तत्वे, उदात्तनिवृत्तिस्वरेण शानच्पक्षे मध्योदात्त' इति। तन्न। विदीन्धिखिदिभ्यो लसार्वधातुकाऽनुदात्तत्वप्रतिषेधात्। वस्तुतोऽस्य वचनस्य तिङन्ते एव प्रवृत्तिः। भाष्ये प्रथमतः 'अलिङी'त्युक्त्वा अग्रे 'अविशेषेणे'त्युक्तेः लिङ्भिन्ने लिङ्सदृशे अकृदादेशिन्येव प्रवृत्तिप्रतीतेरित्याहुः।

यदा 'वेणुरिव वेणुरि'ति कनो 'लुम्मनुष्ये'इति लुप्, तदा 'सञ्ज्ञायामुपमानमि'ति नित्यमाद्युदात्तत्वमिष्यते इत्याहुः।

**त्यागराग**। **आद्यास्त्रय इति**। तत्र 'कर्षाऽऽत्वत' इति पक्षे अन्तोदात्तत्वं बोध्यम्। अन्त्येषु त्रिषु प्रत्ययस्वरेण अन्तोदात्तत्वम्। तत्र कुह-श्वठौ चुरादावदन्तौ।

**मतोः पूर्व**। 'पूर्वमि'ति शब्दस्वरूपाऽपेक्षया नपुंसकस्य 'आत्' इत्यस्य विशेषणम्। केचित्तु सूत्रे पूर्वशब्दं पुँल्लिङ्गं पठन्ति। **स्त्रीनाम्नीति**। 'मत्वन्तं चेत् स्त्रीनाम भवती'त्यर्थः। आत् किम्?। 'इक्षुमती'। अत्र 'ह्रस्वनुड्भ्यां मतुबि'त्येव। संज्ञायां किम्। 'खट्वावती'। स्त्रियां किम्?। 'उदुम्बरावान्'। 'मतौ बह्वचोऽनजिरादीनाम्' 'शरादीनां चे'ति दीर्घ उदाहरणे। चातुरर्थिको 'नद्यां मतुप्'। मतोः किम्?। 'गवादनी'। तदभावे पूर्वग्रहणस्याऽप्यभावात् संज्ञाशब्दसम्बन्धिन आकारमात्रस्य स्यादिति।

---

१ शानजन्तो मध्योदात्तः' इति लघुशेखरे पाठः।

२ 'केचित्तु अस्य वचनस्य' इति लघुशेखरपाठः।

पूर्वग्रहणं 'मतोरव्यवहितपूर्वस्य यथा स्यादि'त्यर्थम्। नेह—'सानुमती'। अन्यथा 'स्त्रीनाम्नो मत्वन्तस्ये'त्यर्थः स्यात्।

**अन्तोऽवत्याः**। 'वत्या अन्त' इति तु नोक्तम्। 'राजवती'त्यत्र मा भूदिति। स्वरविधौ नलोपस्य असिद्धत्वात् न 'अवती'शब्दः, किन्तु 'अन्वती' शब्दः। वत्वन्तु आश्रयात् सिद्धम्। **अहीवतीति**। 'संज्ञायामि'ति वत्वम्। 'शरादीनां चे'ति दीर्घः। योगविभागः चिन्त्यप्रयोजनः।

## अथ फिट्सूत्राणि।

### तत्र प्रथमः पादः।

**अथ फिट्सूत्राणि**। अपाणिनीयान्यपि एतानि 'आद्युदात्तश्च' 'उपसर्गाद्दति' 'अवङ् स्फोटायनस्ये'त्यादिसूत्रेषु भाष्यादौ व्यवहृतत्वात्, अविरुद्धत्वाच्च, साधुत्वव्यवस्थापकानि भवन्ति। यत्तु 'पाणिनीयान्येव एतानी'ति। तन्न। 'वृषादीनां च' 'उञ्छादीनां चे'त्याभ्याम् आकृतिगणाभ्यां क्रमेण आद्युदात्तत्वा-ऽन्तोदात्तत्वयोः सिद्धयोः, 'ग्रामादीनां च' 'घृतादीनां चे'त्यनयोर्वैयर्थ्याऽऽपत्तेः। मम तु भिन्नकर्तृकत्वान्न दोषः।

**फिषोऽन्तः**। 'फिडि'ति प्रातिपदिकस्य पूर्वाचार्यसंज्ञा। **उच्चैः वृक्ष इति**[1]। नन्वत्र 'उदि चेर्डैसिः' 'व्रश्चेः सः किदि'ति व्युत्पादनात् प्रत्ययस्वरेण[2] अन्तोदात्तत्वम्, एवम् अपवादविषयाऽभावे सर्वशब्दानां 'सर्वं नाम धातुजमि'ति निरुक्तात् व्युत्पन्नत्वेन, तेनैव सिद्धिरिति चेन्न। अव्युत्पत्तिपक्षे आवश्यकत्वात्। 'पुत्रीयतेः पुत्रीरि'त्यादावन्तोदात्तत्वाऽर्थं सूत्रमावश्यकमि'ति केचित्।

**पाटलापालङ्काम्बा**। पाटला-पालङ्कौ औषधि[3]विशेषस्य वाचकौ। **लघावन्त इति प्राप्ते इति**। पूर्वपराऽन्वयीदम्। इदमुपलक्षणम्, क्वचित् 'ह्रस्वाऽन्तस्य' (फिट् सू० ३४) इत्यादीनामपि दुर्वारत्वादित्याहुः।

---

१ इतिः ख. ङ. नास्ति। २ 'प्रत्ययस्वरेणैव' इति लघुशेखरे पाठः।

३ 'ओषधि' इत्यपि पाठान्तरम्।

**सागर इत्यादि** । अत्राऽपि 'लघावन्ते' (फिट् सू० ४२) इति प्राप्तम् । **आद्युदात्तोऽयमिति** । ननु अनेन अन्तोदात्तत्वाऽभावेऽपि नियमत आद्युदात्तत्वं केन स्यात् । विधायकाऽभावात् । अतो 'नियम' इति वक्तुं युक्तमित्यत आह–**इहैवेति** । एषां सूत्राणाम् आद्यसूत्रबाधकबाधनाऽर्थत्वात्, 'अस्त्रियामि'त्येतदभावे स्त्रियामपि अनेन बाधकं बाध्येत । बाधकं चाऽनेनैव अनुमीयते । तच्च मध्योदात्तत्वस्य अत्राऽसम्भवात्, सर्वाऽनुदात्तविधायकस्य च फिट्सूत्रेषु अदर्शनात्, आद्युदात्तविधायकमेवेति भावः । '**स्त्रीविषये**'त्याद्युदात्तत्वमि'**त्यन्ये** ।

**गुदमिति** । 'नप्विषयस्ये'ति,'स्वाङ्गशिटामि'ति वा प्राप्ते[1] । ननु 'गुदा'-शब्दस्य अदन्तत्वाऽभावात् कथं 'स्वाङ्गे'त्यस्य प्राप्तिरत आह—**अन्तरङ्गमिति** । **स्त्रीविषयवर्णेति** । 'स्त्रीविषयवर्णाऽक्षुपूर्वाणामि'त्यनेने'त्यर्थः । 'स्त्रीविषयवर्णनाम्नामि'ति केषांचित्पाठः । 'लघावन्ते' इत्यस्य तु न प्राप्तिः । 'अन्तर्द्धा'शब्दे त्रयाणामपि गुरुत्वात् । टापः पूर्वमपि न । 'अकृतव्यूहा' इति न्यायात् । 'स्वाङ्गशिटामि'ति तु प्रवर्त्तते एव, 'अन्त'ग्रहणसामर्थ्यादिति च वक्ष्यते । **इभ्ये** –दण्डादित्वात् यत् ।

**यान्तस्यान्त्यादिति** । इदमुपलक्षणं 'क्षत्राद्घ' इति प्रत्ययस्वरेणाऽपि । ननु अव्युत्पन्नेष्वेव फिट्सूत्रप्रवृत्तेः 'इभ्या' इति प्रत्युदाहरणमयुक्तमिति चेन्न । अस्मादेव 'स्त्रीविषय'ग्रहणात् ज्ञापकात् व्युत्पत्तिमार्गप्राप्तस्वरस्याऽपि फिट्स्वरो बाधक इति वदन्ति । ध्वनितं चेदम् 'एतिस्तुशास्वृ' इति सूत्रे **कैयटे** ।

**खान्तस्याश्मादेरिति** । 'शकार-मकारादिभिन्नस्य, 'ख'शब्दाऽन्तस्य अन्त उदात्त'[2] इत्यर्थः । **शीङः खो निदिति** । इदं दशपाद्यामुक्तम् । पञ्चपाद्यान्तु 'शीङः खो ह्रस्वश्चे'ति पठितम् । तत्राऽपि 'डित्खनेर्मुट् चोदात्त'

---

१ 'प्राप्तेः' इति ख. पाठः ।

२ 'अन्तोदात्त इत्यर्थः' इति ख. ङ. पाठः ।

इत्यत उदात्तग्रहणाऽनुवृत्तेरयमेवाऽर्थः । अननुवृत्तिपक्षेऽप्याह—अन्तरङ्गत्वादिति । 'स्वाङ्गशिटामि'तिसूत्रे 'अन्त'ग्रहणाच्च सर्वनामप्रातिपदिकसंज्ञाकालिकाऽदन्तत्वमादाय तत्प्रवृत्तेः, टापः पूर्वं तत्प्रवृत्तिः ।

अन्ये तु 'एवं सति 'ग्रीवायामि'त्यत्राऽपि आद्युदात्तत्वं स्यात् । तस्मात् शिटोऽल्पाच्तरस्य परनिपातकरणेन, अत्रत्य-शादिपर्युदासेन च अदन्तत्वाऽभावेऽपि क्वचित्तत्प्रवृत्तिबोधनात्, 'शिखा'शब्दे आद्युदात्तत्वम् । एवञ्च 'ग्रीवायामि'त्यत्र न दोष' इत्याहुः । 'शकारपर्युदासः अस्थिवाचक-'शङ्ख'शब्दे 'स्वाङ्गशिटामि'त्याद्युदात्तत्वप्राप्त्या चरिताऽर्थः । तस्मात् 'ग्रीवायां बद्धो अपि कक्षे आसनी'त्यादि च्छान्दसत्वान्निर्वाह्यमि'त्यन्ये ।

**हिष्ठवत्सर । इत्याहुरिति** । अत्राऽरुचिबीजन्तु 'संपूर्वाच्चिदि'ति-'सर'प्रत्ययस्य चित्त्वात्सिद्धम् । परिवत्सरस्तु उदाहार्य' इति । अनेनैव सिद्धे, तत्र चिद्ग्रहणं व्यर्थमित्याशय इति तत्त्वम् । अत्र सूत्रे 'शत्'साहचर्यात् 'ति'शब्दः पङ्क्त्यादिसूत्रविहित एव गृह्यते ।

**दक्षिणस्य साधाविति** । प्रवीणे इत्यर्थः । 'वीणायां, सामसु वा दक्षिण' इत्युदाहरणम् । प्रवीण इत्यर्थः ।

**स्वाङ्गाख्यायामादि** । स्वाङ्गेति किम् ? । 'दक्षिणो देशः' । अत्र सर्वनामत्वादाद्युदात्तत्वम् । न च परत्वादेव तेन आद्युदात्तत्वमत्र भविष्यतीति वाच्यम् । अस्य प्रकरणस्य बाधकबाधनाऽर्थत्वात् ।

**कृष्णस्यामृ** । अत्र 'च्छन्दसी'ति वर्त्तते इत्याहुः । अन्तोदात्त इत्येव । आख्येति किम् ? । 'कृष्णो मृगः' ।

**वा नाम** । अन्तोदात्तत्वं वा । पक्षे सामर्थ्यात् आद्युदात्तत्वम् ।

**शुक्लगौरयोः** । 'नामधेयस्ये'ति वर्त्तते । तेन अनामधेययोः अन्तोदात्तत्वमेव । 'ऋज्रेन्द्रे'त्युणादिसूत्रनिपातिताऽन्तोदात्तत्वकस्य 'शुक्र'शब्दस्य लत्वे 'शुक्ल'शब्दव्युत्पत्तेरिति बोध्यम् ।

---

१ 'अदन्तत्वमादाय तत्प्रवृत्तिरिति बोध्यम्' इति तु लघुशेखरे पाठः ।

**अङ्गुष्ठोदक** । 'अङ्गुष्ठो-दक-बक-वशानां छन्दसी'त्येव सूत्रम् । 'अन्त' इति तु अनुवृत्तिप्रदर्शनम्, आदिग्रहणाऽनुवृत्तिशङ्कानिवारणाऽर्थम । 'सूत्रशेष एवे'त्यन्ये । उदकस्य,–कर्दमादित्वात् आद्यद्वितीययोः पर्यायेण प्राप्ते । बकस्य,—'प्राणिनां कुपूर्वाणामि'ति आद्युदात्तत्वे प्राप्ते ।

**तेन लोके इति** । नियमकरणसामर्थ्यादिति भावः । 'वशा'शब्दश्च वशेः पचाद्यचि टापीति तात्पर्यम् ।

**पृष्ठस्य च** । 'मृष्टस्य चे'ति पाठाऽन्तरम् । **वा भाषायामिति** । पक्षे 'स्वाङ्गशिटामि'ति आद्युदात्तत्वम् । **मृष्टं**—'निष्ठा च द्व्यजनादि'ति तत् ।

**अर्यस्य स्वाम्या** । वैश्ये तु आद्युदात्त एव । **अत एव ज्ञापकादिति** । '**स्त्री**विषयवर्णे'ति द्वितीयपादस्थसूत्रेणे'त्यन्ये ।

**नक्षत्राणामाब्विषयाणाम्** । 'नित्याऽऽबन्तानामि'त्यर्थः । नक्षत्राणां किम् ? । 'तारिका' । आबित्यादि किम् ? । 'अश्विनी' । **श्रविष्ठेत्यादि** । 'श्रववती''धनवती'शब्दाभ्यामिष्ठनि 'विन्मतोरि'ति लुक् । 'विषय'-ग्रहणं चिन्त्यम् । आबन्ताऽनाबन्तस्य नक्षत्रवाचकस्य असत्त्वात् ।

**न कुपू** । 'कवर्गपूर्वस्य, आप्विषयस्य नक्षत्रस्य अन्त उदात्तो ने'त्यर्थः । कुपूर्वस्येति किम् ? । 'बहुलाः' । कृत्तिकेत्यादि किम् ? । 'मघा' । आख्येति किम् ? । कृत्तिकासु जाता माणविका 'कृत्तिका' । **इत्यत्रा-पीति** । अपिना 'कृत्तिका' । **आर्यिका**-बहुलिके कृत्तिकापर्यायौ ।

**आकृतीति** । 'वराह इन्द्र एमुषमि'त्यादौ अन्तोदात्तदर्शनात् 'वराह'-शब्दोऽप्यत्र बोध्यः ।

**ज्येष्ठकनिष्ठयोः** । वृद्ध-युवशब्दयोः ज्य-कनादेशौ । प्रशस्याऽल्पशब्दयोः तौ आदेशौ यदा, तदा प्रत्युदाहरणम् ।

**पक्षे उदात्त इति** । 'उदात्त'ग्रहणाऽनुवृत्तेरिति भावः ।

**इति फिट्सूत्रेषु प्रथमः पादः ॥**

---

१ 'कुपूर्वम्' इति ख. ङ. पाठः । २ 'खट्वा' इति लघुशेखरे पाठः ।

अथ फिट्सूत्रेषु द्वितीयः पादः ।

**ह्रस्वान्तस्य स्त्रीविषयस्य** । 'नित्यस्त्रीलिङ्गस्ये'त्यर्थः । **वलिरिति** । न चाऽस्य 'लिङ्गाऽन्तराऽनभिधायकत्व'रूपनित्यस्त्रीत्वाऽभाव इति वाच्यम् । प्रत्यासत्त्या अर्थैक्ये एव लिङ्गाऽन्तराऽनभिधानस्य तत्र ग्रहणात् । अत एव वयोवाचक'कुमारी'शब्दे नदीत्वम् । अन्यथा क्यजाद्यन्त'कुमारी'शब्देन लिङ्गाऽन्तराऽभिधानाद्दोषः स्पष्ट एव । अर्थभेदेन शब्दभेदाच्च । तत्र 'तनुः' शरीरे नित्यस्त्रीलिङ्गः । एवं 'बलि'शब्दो जरया श्लथचर्मणि तथेति, न दोष इत्याहुः । ह्रस्वेति किम्? । 'नदी' । स्त्रीति किम् ? । 'मरुः', 'वायुः' । विषयेति किम्? । 'लघुः', 'बहुः' । **नब्विषयस्य** । विषयपदाऽनुवृत्त्यैव सिद्धे, पुनर्विषयपदम् उभयलिङ्गस्य लिङ्गव्यत्ययेन, प्रत्ययलोपेन वा, लिङ्गाऽन्तरोपसङ्क्रान्तस्य वा विषयतामात्रेण एतत्प्रवृत्त्यर्थम् । यथा 'मधोस्तृप्ता इवासते' इत्यादौ । यथा वा 'मधु अस्मिन्नस्ति मधुर्मासः' । 'मधोर्ञ्च' इति यतो लुग्वार्त्तिकेन । ध्वनितश्चेदम् 'ई च द्विवचने' इति सूत्रे भाष्ये । नबिति किम् ? । 'मूर्त्तः' । विषयस्य किम् ? । 'लघुः' । **सर्पिरिति** । इसिन्नन्तज्योतिःशब्दादौ तु नित्त्वादाद्युदात्तत्वमेव ।

**तिला इति** । यत्तु 'तिलोमाशब्दौ घृतादिपाठादन्तोदात्तावि'ति 'संप्रोदश्चे'ति सूत्रे **कैयटः** । तच्चिन्त्यम् । 'तिलाश्च मे' इत्यादावाद्युदात्तस्यैव पठ्यमानत्वात् । 'उमा'शब्देऽपि 'मकरवरूढे'त्यनेन विशिष्य पर्यायेण अन्तोदात्तविधानात् । **शालिव्रीही**–घृतादित्वादन्तोदात्तौ । 'तृणे'त्यादि किम् ? । 'आम्रः' । **गोधूमा इति** । अत्र परत्वादेव 'लघावन्ते' इति मध्योदात्तत्वसिद्धेः, इदं चिन्त्यम् । वस्तुतो बाध्यसामान्यचिन्तापक्षे तस्याऽपि बाधकं स्यादित्याशयः । ( 'चणका' इत्युचितम् ) ।

**ञ्रः सं** । 'पञ्चे'त्यादौ नलोपे कृते, अस्य शास्त्राऽन्तरत्वेन तत्र नलोपस्याऽसिद्धत्वाऽभावेन अकृतव्यूहपरिभाषया नाऽस्य प्रवृत्तिः स्यादिति न

१ 'लिङ्गव्यत्यय-प्रत्ययलोपान्यतरेण, लिङ्गान्तरोपसंक्रान्तस्यवा' इति-लघुशेखरे ।

२ अयं लघुशेखरपाठः ।

शङ्क्यम् । अनित्यत्वेनेहाऽस्या अप्रवृत्तेः । पाणिनीये 'अनुदात्तादेरञ्' इत्यादौ एषामिव, एतेषु पाणिनीयशास्त्रप्रवृत्तौ बाधकाऽभावाच्च । सप्ताऽष्ट-शब्दौ घृतादित्वात् अन्तोदात्तौ । रस्योदाहरणं-'चतुष्कपालः'। 'इगन्तकाल-कपाले'ति पूर्वपदप्रकृतिस्वरेण आद्युदात्तत्वम् । 'चत्वार'इत्यत्र आमुस्वरेण, शसि 'चतुरः शसी'ति, भिसादौ 'झल्युपोत्तमम्', 'षट्त्री'त्यनेन भाव्यमिति, समास उदाहृतः । त्रः किम् ? । 'गणः'। सङ्ख्यायाः किम् ? । 'अन्तः' ।

**स्वाङ्ग** । इदञ्च सर्वनामसञ्ज्ञाप्रवृत्तिकाले यत् अदन्तं, तत्रैव प्रवर्त्तते । तेन 'इमं स्तोममर्हत' इत्यादौ न दोषः । 'सर्वोभाऽन्यशब्दा गणेऽन्तोदात्ता निपात्यन्ते' इति **केचित्** । 'तयोरन्यः पिप्पलमि'त्यादौ तथा दर्शनात् । 'परो मात्रये'त्यादौ व्यत्ययेनाऽन्तोदात्तत्वम्, 'परं मृत्योरि'त्यादावाद्युदात्त-स्याऽपि दर्शनात् । स्वाङ्गेत्यादि किम् ? । 'घटः' । अदन्तानां किम् ?। 'बाहू राजन्यः' । तपरत्वं स्पष्टार्थम् । **प्राणिनाङ्कुपूर्वमिति** । 'तस्य समूहः' इति-सूत्रे न्यास-हरदत्तयोः 'कुपूर्वाणामि'ति पाठो दृश्यते । 'कवर्गाच्चे पूर्वे, तन्मध्ये आदिरि'त्यर्थः । सर्वनामकार्यन्तु सौत्रत्वान्न । 'कुपूर्वमि'ति-पाठेऽपि 'आदिरि'त्येतत्सामानाधिकरण्याय तदावश्यकत्वादिति तदाशयः । अत्र पाठे चटकाऽऽदावपि आद्युदात्तत्वं प्राप्नोति । वस्तुतः 'कावि'त्येव सिद्धे पूर्वग्रहणं व्यवहितस्याऽपि ग्रहणाऽर्थम् । तेन 'कुपूर्वमि'ति-पाठेऽपि आद्युदात्तत्वं भवत्येवेति न दोषः । **उदकमिति** । कर्दमादिरयम् । क्वित्यादि[3] 'किम् ? । 'वराहः' । 'वराह इन्द्र एमुषमि'त्यादावन्तोदात्त-दर्शनेन घृतादित्वादन्तोदात्तोऽयमिति प्रत्युदाहरणाऽन्तरं बोध्यम् । **अन्येतु** उत्तरसूत्रवदत्राऽपि 'आदिरि'ति न सम्बध्यते, नपुंसकस्वरसात् । तेन चटकादावनेन मध्योदात्तत्वम् । हरदत्तोक्तपाठस्तु चिन्त्य एवे'त्याहुः ।

**खय्युव** । कृत्रिमेत्यादि किम् ? । 'बन्धूकः'। **उनर्वन्नन्तानाम्** । 'पिता

---

१ 'आद्युदात्तः' इति ख. ङ. पाठः ।

२ इतोऽग्रे—प्राणिनां किम् ? । 'उदकम्' । कर्दमादिरयम्' इति ख. पाठः ।

३ 'कु' इत्यादि किम् । 'हरिणम्' इति तु लघुशेखरे पाठः । स एव शोभनः ।

माता भ्रातर एनमाहुः'[1] इत्यादौ पितृशब्दे छान्दसत्वादन्तोदात्तत्वम्। मातुस्तु अम्बाऽर्थत्वात्सिद्धमित्याहुः।

**वर्णानान्तणतिनितन्तानाम्।** 'तान्तानामि'तिपाठे तु अकारो व्यर्थ इति चिन्त्यम्। **एत इति।** 'श्वेत'शब्दो घृतादित्वादन्तोदात्तो बोद्धयः।

**ह्रस्वान्तस्य ह्रस्व।** ह्रस्वाऽन्तस्य किम्?। 'इषुगामी'। ह्रस्वं किम्?। 'प्राज्ञम्'। अनृत्किम्?। 'तृणकम्'[3]। ताच्छील्ये किम्?। 'जडः'। 'बधिरः'[2]।'कुशलशब्दोऽनेनाऽऽद्युदात्त'इत्येके।'अन्तोदात्त'इत्युज्ज्वलदत्तः।

**पीतद्रुः[4] सरल इति।** 'ह्रस्वाऽन्तस्य ह्रस्वमि'त्यपेक्षया परत्वादिदमेवोचितमिति भावः। 'वृक्षविशेषसञ्ज्ञात्वेन ताच्छील्याऽनवगमान्नेह[5] 'ह्रस्वान्तस्ये'त्यस्य प्राप्तिरि'त्यन्ये। **ग्रामादी।** ग्रामादिराकृतिगणः।

**लुबन्तस्योपमेय।** 'संज्ञायामुपमानमि'त्यनेन समानाऽर्थमेतत्। लुबिति किम्?। 'अग्निर्माणवकः'। उपमेयेति किम्?। 'वरणाः'। 'अदूरभवश्चे'त्यणो 'वरणादिभ्यश्चे'ति लुप्। नामेत्यादि किम्?। 'कुक्कुट इवाऽयं मयूरः'[6]। देवपथादेराकृतिगणत्वात्कनो लुपि, कुक्कुट उपमेय वर्त्तते[7], न तु तस्येयं सञ्ज्ञा। 'शकुनीनामि'ति मध्योदात्तताऽस्य।

**न वृक्षपर्वत।** यद्यपि फिट्सूत्रवृत्तौ 'न व्याघ्र-महिष-सिंह-वृक्ष-पर्वतानामि'ति पठ्यते, तथापि वृक्षपर्वतांऽशे विशेषाणामेव ग्रहणमिष्टमिति, तद्घटितमेव सूत्रं पठितम्। सर्वत्र 'विशेष'पदाऽन्वयाऽभावबोधनाय

---

१ 'एतमाहुः' इति ख. ङ. पाठः।

२ 'वधूः' इति तु लघुशेखरे पाठः। स एवोचितः।

३ 'अनृत् किम्?। 'नृशंसः' इति ख. ङ. पाठः।

४ 'पीतद्रुः' इति लघुशेखरे नास्ति। व्यर्थञ्च।

५ 'नेह तत्प्राप्तिः' इति ख. पाठः।

६ 'शुनक इवाऽयं वृकः' इति लघुशेखरे पाठः। स एव उचितः।

७ 'शुनक उपमेये वर्त्तते' इति लघुशेखरे पाठः।

व्युत्क्रमः कृतः । **राजविशेषस्य** । अत्राऽपि 'लुबन्तस्योपमेये'ति सूत्रमनुवर्त्तते । एवञ्च तेनैव सिद्धे, 'वृद्धस्यैवे'ति नियमाऽर्थमिदम् । तदाह— **अङ्गाः प्रत्युदाहरणमिति** । **वृत्तौ** तु 'वृद्धस्य चेद्राजविशेषस्यैवे'ति नियम उक्तः। तच्चिन्त्यम् । पूर्वसूत्रे व्याघ्रग्रहणवैयर्थ्याऽऽपत्तेः । 'यमन्वा'-शब्दः कृताऽऽदिवृद्धौ रूढः, न च व्याघ्रशब्दस्तथेति न वैयर्थ्यमि'त्यन्ये ।

अत्र 'आङ्ग'इत्युदाहरणं चिन्त्यम् । तस्य 'जनपदशब्दादि'त्यञन्तत्वेन आद्युदात्तत्वसिद्धेः । 'कालिङ्ग' इत्युदाहार्यम् । तत्र हि 'द्व्यञ्मगधे'त्यण् ।

**लघावन्ते** । अत्र 'आदि'शब्दो न सम्बध्यते, तेनाऽनादेरपि गुरोः उदात्तः । 'अत एव वृषाकपिशब्दोऽनेन मध्योदात्त' इति 'वृषाकपी'ति सूत्रे वृत्तावुक्तम । 'खण्डिकादिषु उलूकशब्दोऽनेन मध्योदात्त' इति **कैयटेन** चोक्तम् । 'वराहशब्दस्तु घृतादिरि'त्युक्तमेव । न च 'गुरूणां मध्ये य आदिरि'त्यर्थोऽस्त्विति वाच्यम् । वृषाकप्यादावप्रवृत्त्यापत्त्या उक्तवृत्त्यादि-विरोधात् । 'अन्यतो ङीषि'ति सूत्रे 'सारङ्गकल्माषौ लघावन्ते इत्यनेन मध्योदात्तौ' इति **हरदत्त**विरोधाच्च । लघावित्यादि किम् ? । 'वातप्रमीः', 'सभासञ्जननम्', 'कपाली' । नान्तत्वान्न लघुरन्तोऽत्र । बह्वचः किम् ? । 'देवः'। गुरुः किम् ? । 'किसलयम्' । **कल्याण इति** । पर्यायेण आदि-मध्यावुदात्तौ ।

**स्त्रीविषयवर्णाक्षुपू** । क्वचित्फिड्वृत्तौ 'स्त्रीविषयवर्णनाम्नामक्षु' इत्यादिपाठः, सोऽपि मूले 'ध्यपूर्वस्ये'ति सूत्रे दर्शितः । **मल्लिकेति** । अस्य प्राप्तिमात्रेणेदमुदाहरणम् । प्राप्तस्याऽस्य परत्वात् 'मादीनाञ्चे'त्यनेन बाधात् । 'ललना' इत्युदाहार्यम् । न चाऽनेनैव सिद्धे 'ह्रस्वान्तस्य स्त्रीविषयस्ये'ति, 'वर्णानां तणे'ति च सूत्रं व्यर्थमिति वाच्यम् । अत्र 'बह्वच' इत्यनुवृत्तेर्न दोषः । अत एव 'श्येनी'त्युदाहरणं दत्त्वा, 'हरिणी'त्युदाहरणाऽन्तरं दत्तम् । धवलादीन्यप्युदाहरणानि । नीलादयस्त्वन्तोदात्ता एवेति

---

१ 'इतोऽग्रे—'अन्ये तु 'लुबन्तस्ये'त्याद्यनुवर्त्त्य अस्य विधित्वमेवेच्छन्ति' इति लघुशेखरे पाठः ।

बोध्यम् । **'पिशङ्ग-सारङ्ग-कल्माषा**—'लघावन्ते' इति मध्योदात्ता' इति-कैयटादिदर्शनादिदं बाधित्वा पूर्वविप्रतिषेधेन पूर्वमेव प्रवर्त्तते' **इत्याहुः** ।

**अक्षुशब्दात्पूर्व इति** । 'अक्ष्वादेरि'ति वक्तव्ये 'अक्षुपूर्वाणामि'त्युक्तेः समानाधिकरणो बहुव्रीहिर्नेति भावः । 'अक्षुपूर्वे'त्यत्र पञ्चमीतत्पुरुष-समासस्तु न, 'अक्षावि'त्येव सिद्धे पूर्वग्रहणवैयर्थ्याऽऽपत्तेः । अनुवर्त्तमान-'फिष' इत्यनेन अन्वयाऽनापत्तेश्च ।

**शकुनीनाञ्च** । **पूर्वमिति** । 'अन्त्यात्पूर्वमि'त्यर्थः । लघु पूर्वमित्यसमस्तं पदद्वयम् । अत्राऽपि 'आदिरि'ति न सम्बध्यते,'पूर्व'ग्रहणात् । तेन **कुक्कुट-तित्तिरी**—मध्योदात्तौ । कुक्कुटस्य वेदेऽन्तोदात्तपाठस्तु छान्दसः । तित्तिरिः यजुःशाखायां मध्योदात्तः पठ्यते । एतेन 'तित्तिरिशब्दोऽन्तोदात्त' इति प्राणिरजतादिसूत्रस्थ**हरदत्तः** परास्तः । 'लघुपूर्वमि'ति बहुव्रीहिस्तु न, 'लघोरि'ति पञ्चमीनिर्देशेनैव सिद्धे, पूर्वग्रहणवैयर्थ्याऽऽपत्तेः । 'लघोः पूर्वमि'ति तत्पुरुषोऽपि न, सप्तमीनिर्देशेनैव सिद्धेः ।

**नर्त्तुप्रा** । 'ऋतुवाचिनां, प्राणिवाचिनाञ्चे'त्यर्थः । **वसन्त इत्यादि** । अनयोः 'लघावन्ते' इति निषिद्धे, अन्तोदात्तत्वम् । एवञ्च 'कपोतमयूर-शब्दौ लघावन्ते इति मध्योदात्तौ' इति प्राणिरजतादिसूत्रस्थ**हरदत्तः** चिन्त्यः, खण्डिकादिसूत्रे 'उलूको मध्योदात्त' इति **कैयटश्च** ।

**धान्यानाम्** । 'वृद्धसञ्ज्ञकधान्यवाचि-ककार-षकारान्तानामि'त्यर्थः । अनेनैव सिद्धे 'उशीर-दासेर-कपाल-पलाल-श्यामाके'ति सूत्रे 'श्यामाक'-ग्रहणम् अस्याऽनित्यत्वज्ञापनाऽर्थम् । तद्ध्वनयन्नुदाहरति—**श्यामाक इति** ।

**केचित्तु** 'अधान्यवाचकश्यामाकग्रहणाऽर्थं तत् । अत एव 'श्यामां कायती'त्यर्थेऽपि श्यामाकशब्द आद्युदात्त' इत्याहुः । तत्र 'आदिर्वे'त्यनु-वर्त्तते । अत एवाऽत्रैव प्रकरणे तन्न पठितम् । एवञ्च 'श्यामाक'शब्दो मध्योदात्तोऽपीष्यते' **इत्यन्ये** । **माषा इति** । 'बालाक्षा' इत्यत्र चरितार्थेन

अनेन परत्वात् 'तिला' इत्यादौ चरितार्थस्य 'तृणधान्यानां चे'त्यस्य बाध उचित इत्याशयः। फलाऽविशेषं ध्वनयितुं तत्राऽप्युदाहृतं क्वचित् पुस्तके। हलन्तानाम् असम्भवेनाऽकारविशिष्टस्य ग्रहणम् । धान्येति किम् ?। 'आलोकः'। वृद्धेति किम् ?। 'चणकाः'। क्षेति किम् ?। 'गोधूमाः'।

**जनपद**। 'अष्' इत्यचः सञ्ज्ञा। **केकय इति**। यत्तु 'यान्तस्याऽन्त्यात्पूर्वमि'त्यनेन परत्वादत्र भाव्यमि'ति। **तन्न**। बाध्यसामान्यचिन्ताम् आश्रित्य तस्याऽप्यनेन बाधादित्याहुः। 'अङ्गाः','वङ्गा' इत्यप्युदाहरणम्। जेत्यादि किम् ?। 'आम्रः'। 'अङ्गो राजा'। अजन्तानां किम् ?। 'दरत्'।

**ह्यादीनाम्**। अत्र केचित् 'जनपदशब्दानामि'त्यनुवर्त्तयन्ति। 'कुरुगार्ह'ति सूत्रस्थहरदत्तस्वरसोऽप्येवमेव। तन्मते 'पञ्चालाः' 'कोसला' इत्युदाहार्यम्। 'वाशब्देन 'आदेरि'त्यस्याऽप्यनुवर्त्तनादादेरपि उदात्तत्वं भवती'त्येके।

**इगन्तानाञ्च द्व्य**। अत्र 'वे'त्यनुवर्त्तते। अत एव 'अक्षैर्मा दीव्य. कृषिमित् कृषस्वे'ति पठ्यमानमन्तोदात्तत्वं सङ्गच्छते। छान्दसत्वाद्वा।

ये तु 'जनपदशब्दानामि'त्यनुवर्त्तयन्ति, तेषां न कश्चिद्दोषः। 'कुरवः,' 'चेदय' इति चोदाहार्यम् । द्व्यचां किम् ?। 'वसातयः'। इगिति किम् ?। 'अङ्गाः'।

**इति द्वितीयः पादः ॥**

अथ फिट्सूत्रेषु तृतीयः पादः।

**ललाटमिति**। 'लघावन्ते' इत्येतद्बाधित्वा परत्वात् इदमेवोचितमिति भावः[1]। **कपोल इति**। यद्यप्यत्र 'लघावन्ते' इति मध्योदात्तत्वमेवेष्टं, तथाऽप्युदाहरणदिक् बोध्या।

---

१ 'मित्यभिमानः' इति तु लघुशेखरे पाठः।

**मादीनाम्** । **मलयः, मकर इति** । **मलये**–'यान्तस्याऽन्त्यात्पूर्वमि'-त्यस्य, अस्य वा प्रवृत्तौ फले न विशेष इत्युदाहृतम् । **मकरः**–सञ्ज्ञाभूत[1] इहोदाहरणम् । 'मकरवरूढे'त्यत्र तु 'अभिव्यक्तपदार्था ये' इति-न्यायेन सञ्ज्ञाभूतस्य न ग्रहणम् । क्वचित्तु '**माकर**' इति पाठः । तत्र स्वार्थेऽण् ।

**शादीनाञ्च शाकानाम्** । 'संप्रोदश्चे'ति सूत्रे कैयटे तु दन्त्यादिपाठः । इदञ्च आद्युदात्तत्वविधायकम् । अनेन 'सर्षप'शब्दे आद्युदात्तत्वे प्राप्ते, 'पान्तानाञ्च गुर्वादीनामि'ति मध्योदात्तत्वमि'त्युक्तम् । तेन द्वितीय-पादाऽन्ते इदं सूत्रमिति ध्वनितम् । फिड्वृत्तौ तु तालव्यादिसूत्रमत्र पादे पठितम् । **शतपुष्पे**ति क्वाचित्कोऽपपाठः, त्र्यच्त्वाऽभावात् । **कैयटरी**त्या आद्युदात्तविधायकत्वे तु तत्रापि प्रवृत्तिरिति ध्वनयितुमत्र्यजपि उदाहृत-मित्याहुः । **केचित्तु** त्र्यच्पदस्यैकाऽच्-द्व्यच्कमेव व्यावर्त्त्यं वदन्ति ।

**पान्तानां गु** । पान्तानां किम् ? । 'गर्दभः' । 'लघावन्ते'[2] इति प्रायिकम् । प्रयुज्यते च 'न गर्दभं पुर' इत्यन्तोदात्तम् । गुर्वादीनां किम् ? । 'कुणपः' । 'क्वणेः संप्रसारणञ्चे'ति कपन् । **अयुतमिति** । अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते इदम् । **द्वितीयो वेति** । 'द्वितीयमि'त्यधिकारादिति भावः । 'काशीनानामि'ति वक्तव्ये नुडभाव आर्षः । **वरूढ इतीति** । पारेवतः, वितस्ता, इक्षुः, आर्जिः, द्राक्षाकला, उमा, काष्ठा, पेष्ठा[3], काशीनम् ।

केचित्तु 'मकर-वकुट-पारेवते'ति, 'काष्ठापैश्रा' इति पठन्ति । कर्दमादि-राकृतिगणः । एतदुत्तरं 'सुगन्धितेजनस्य चे'ति सूत्रं पठन्ति, 'आदि-र्द्वितीयो वे'ति अनुवर्त्तयन्ति । 'सुगन्धितेजनमि'त्युदाहरन्ति । **केचित्तु**

---

१ 'संज्ञाभूत उदाहरणम्' इति ख. ङ. पाठः ।

२ 'लघावन्ते' इति मध्योदात्तोऽयम् । 'न गर्दभं पुर' इत्यन्तोदात्तं तु छान्दसम्' इति तु लघुशेखरे पाठः । ३ 'पेष्ट्रा' इति ख. ङ. पाठः ।

४ इतोऽग्रे—'अयं क्लीबोऽपि' इति लघुशेखरे पाठः ।

'सुगन्धितेजनस्य ते वा' इति पठित्वा 'ते'शब्दोऽपि पक्षे उदात्त' इत्याहुः।

**नपः फलान्तानाम्**। 'नपुंसकस्य फलशब्दाऽन्तस्य आदिर्द्वितीयो वे'त्यर्थः। केचित्तु 'ले फो नपः' इति–अस्य स्थाने पठन्ति। 'नप्' इति नपुंसकम्। 'लशब्दे परे क्लीबस्य फशब्द उदात्तः'। 'फलम्' 'सफलमि'त्युदाहरन्ति। अन्ये तु 'फाशब्दस्ये'ति व्याख्याय 'सफालमि'त्युदाहरन्ति।

**यान्तस्यान्त्या**। **केचित्त्वत्र** वेत्यनुवर्त्त्य उभयशब्दे पक्षेऽन्तोदात्तत्वमाहुः। **कुलाय इति**। 'लघावन्ते' इत्यस्य प्रवृत्तावपि न कश्चिद्विशेषः। गवय-मलयावुदाहार्यौ। कुवलयाऽर्थम् 'अन्त्यात्पूर्व'ग्रहणम्।

**आन्तस्य ना**। 'आकाराऽन्तस्ये'त्यर्थः। 'नाना' 'नासा' 'दिवा' 'सुधा' इत्युदाहरणम्। क्वचित्तु 'थान्तस्ये'त्यपि पाठः। थाशब्दाऽन्तस्ये'-त्यर्थः। **केचित्तु** 'तन्त्रेण थशब्दोऽपि गृह्यते, तेन 'सनाथो देवदत्त' इति सिद्धमि'त्याहुः।

**शिशुमारोदुम्बर**। 'शिंशुमारे'ति पाठान्तरम्। **उष्ट्रार**। 'उष्टारे'ति-रेफवर्जितमपि पाठान्तरम्। चकारेण 'अन्त्यात्पूर्वमि'ति, 'द्वितीयमि'ति च संबध्यते। **सांकाश्यकाम्पिल्य**। अत्र सूत्रे मण्डूकप्लुत्या 'आदिर्वे'ति वर्त्तते, तदाह—**द्वितीयमुदात्तं वेति**। अत एव 'पद्दन्नि'तिसूत्रे 'राजन्य-साङ्काश्य-काम्पिल्य-नासिक्य-दार्वाघाटानामादिर्वा, अन्तो वा' इति **कैयटेनोक्तम्**। अत्र 'अन्त'शब्देनादरपेक्षया अन्तः = द्वितीय एव। अतो न विरोधः। एवं 'सप्तमी सिद्धे'ति सूत्रे 'एषामन्तः, पूर्वं वा' इति काशिकायामपि पूर्व-शब्देन आदिः, तदपेक्षयाऽन्तश्चाऽन्तशब्देन गृह्यते इति बोध्यम्। 'अन्त्या-त्पूर्वमि'ति तु नाऽनुवर्त्तते। साङ्काश्यादीनां त्रयाणाङ्ग्रहणस्य वैयर्थ्याऽऽपत्तेः। 'यान्तस्याऽन्त्यादि'त्येव सिद्धेः। उत्तरसूत्रे 'आदिर्वे'ति तु स्पष्टाऽर्थम्।

**ईषान्तस्य**। 'हय्' इति हलां सञ्ज्ञा। पक्षे 'लघावन्त' इतिमध्योदात्तः। ईषाऽन्तस्य किम्?। 'मञ्जूषा'। हलादेः किम्?। 'अम्बरीषम्'।

---

१ 'पक्षे अधिकारात् द्वितीयम्' इति तु लघुशेखरे पाठः।

**उशीरदाशेर**। अत्र हृदयग्रहणं 'स्वाङ्गानामकुर्वादीनामि'ति द्वितीयोदात्तत्वं बाधितुम् । 'देवर'ग्रहणं 'लघावन्ते' इत्यस्याऽनित्यत्वज्ञापनार्थम् । केचित्तु घृतादिषु देवरशब्दः पठ्यते । एवञ्च पक्षे आद्युदात्ताऽर्थङ्ग्रहणमि'त्याहुः । 'अत्र वेति नाऽनुवर्त्तते' इति **केचित्** ।

**महिष्यषा**। 'मे'त्यादि किम् ? । 'सिंही असि'। जेति किम् ? । 'महिषी' । 'अषाढा' नक्षत्रम् ।

## इति तृतीयः पादः ॥

अथ फिट्सूत्रेषु चतुर्थः पादः ।

**शकटिश**। अत्र 'उभे वनस्पत्यादिषु युगपदि'त्यादिसूत्रस्थयुगपद्ग्रहणबोधिताऽनेकोदात्तानां युगपन्न समावेश इत्यर्थाऽनुवादकं–**पर्यायेणेति**। तत्फलन्तु 'अनुदात्तं पदमेकवर्जमि'त्यादेः एतद्विषयेऽपि प्रवृत्तिः । एवं लिङ्गविशिष्टपरिभाषालब्धाऽर्थाऽनुवादकं—**शकटीति**।

**गोष्ठजस्य ब्रा**। 'ब्राह्मणवाचकस्य गोष्ठजशब्दस्ये'त्यर्थः। **पारावत इति**। अत्र 'व'शब्दो नोदात्तः ।

**कपिकेशह**। भाषायां बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरः। तत्र 'हरि'-शब्द इन्नन्तत्वादाद्युदात्तः । कपिः अन्तोदात्तः। **केचित्तु** निरुदकादेः आकृतिगणत्वादन्तोदात्तत्वमाहुः।

**न्यङ्स्व**। 'न्यधी चे'ति पूर्वपदप्रकृतिस्वरे कृते, यणि, 'उदात्तस्वरितयो'रिति सिद्धे, न्यङ्ग्रहणं स्वतन्त्राऽर्थमि'**त्येके**। 'तदनुवादकमि'**त्यन्ये**।

**तिल्यशिक्य**। **केचिदत्र** मर्त्यशब्दं पठन्ति । तदयुक्तम्। 'तं त्वा हवन्त मर्त्याः' इत्यादावाद्युदात्तदर्शनात्। 'तद्युक्तात्कर्मणः' इति सूत्रस्थवार्त्तिकेन यति 'यतोऽनावः' इत्याद्युदात्तत्वम्। यत्तु धान्यस्थाने धन्यं पठन्ति । तन्न। 'पत्यावैश्वर्ये' इतिसूत्रे 'धान्यमन्तस्वरितमि'ति वृत्तिमुपादाय अस्यैव सूत्रस्य **हरदत्तेनो**पन्यासात्। प्रयुज्यते च–'धान्यमसि धिनुहि' इति।

१ 'प्रवृत्तिर्बोध्येत्याहुः' इति ख. ङ. पाठः ।

२ 'अनयोरन्तोदात्तत्वमाहुः' इति लघुशेखरे पाठः ।

**बिल्वभक्ष्य** । भाषायां तु भक्ष्यवीर्यौ आद्युदात्तौ । वीरेषु साधुरिति यत् । भक्षयतेर्ण्यन्तादचो यत् । बिल्वः स्वरितान्तः,अन्तोदात्तो वा । **केचित्तु** 'बिल्ववस्ते'ति पठन्ति । **अनुच्चानीति** । सर्वोऽनुदात्तानीत्यर्थः । अत्र सूत्रे 'छन्दसी'ति नाऽनुवर्त्तते, 'आद्युदात्तश्चे'तिसूत्रस्थभाष्यप्रामाण्यात् ।

**निपाता आ** । 'शुक्ली करोती'त्यादौ च्व्यन्तानां निपातत्वेऽपि च्वेश्चित्त्वादन्तोदात्तत्वम् । **उपसर्गाश्चाभिवर्जमिति** । आद्युदात्ता इत्यर्थः । अभिवर्जं[1] किम् ? । 'अभ्यभिहि', 'अभिराममस्थात्' । इदं सूत्रं व्यर्थम्, उपसर्गाणां निपातत्वेनैव सिद्धेः । न च कर्मप्रवचनीयानां तदभावज्ञापनायेदम् । तेषामप्याद्युदात्तत्वस्येष्टत्वात् । अभिश्च एवमादिषु पाठ्य इति बहवः । अत एव 'मा नो मर्त्ता अभिद्रुहन्नि'तिमन्त्रे 'एवमादीनामन्त' इति **वेदभाष्यकृद्भिरुक्तम्** । स्पष्टञ्चेदमुपसर्गसंज्ञासूत्रे भाष्ये । **केचित्तु** 'उपसर्गस्यैव अभेराद्युदात्तत्वनिषेधो यथा स्यात्, कर्मप्रवचनीयस्य तु निपातत्वात् भवत्येवेत्येतदर्थमिदं सूत्रमि'त्याहुः ।

**एवादीनामन्तः** । अह-शश्वच्छब्दौ गणे आद्युदात्तौ निपात्यौ[2] । 'आदह स्वधामनु' । 'क्वाह मित्रावरुणा शश्वदिन्द्रः योऽप्रथद्भिरि'ति प्रयोगदर्शनात् । **तच्चिन्त्यमिति** । चिन्ताबीजन्तु चिन्त्यम् । 'सहशब्दस्याऽपि[3] निपातत्वात् आद्युदात्तत्वमि'ति 'सहस्य सः' इति सूत्रे भाष्यम् । प्रयुज्यते च 'सह वै देवानामि'ति । 'ते पुत्र सूरिभिः सहे'त्यत्र तु छान्दसम् अन्तोदात्तत्वमि'ति **केचित्** । **'वावादीनामुभौ'** इति सूत्रे[4] **उदात्ताविति** अनुवृत्तिप्रदर्शनम् । इह त्रिसूत्र्यामादिशब्दः प्रकारे इत्याहुः ।

---

१ 'अत्राऽभिवर्जं किम्' इति ख. ङ. पाठः ।

२ 'आद्युदात्तौ । निपातौ वा' इति लघुशेखरे पाठः ।

३ 'सहशब्दस्याऽपि अनेन आद्युदात्तत्वमिति' इति ख. ङ. पाठः ।

४ 'इति सूत्रे आकरात्' इति लघुशेखरे पाठः । स एवोचितः । भाष्ये एतदभावात् ।

**चादयोऽनु**। 'निपाता' इति वर्त्तते। नेह—'पशुर्ने'ति। आद्युदात्तत्वाऽपवादोऽयम्। **यथेति पा**। 'अनुदात्त' इति वर्त्तते। 'शाकिनं वचो यथा' इत्यादौ तु छान्दसत्वान्नाऽनुदात्तः। **प्रकारादिद्वि**। 'प्रकारे गुणवचनस्ये'त्यादिद्वित्वे' इत्यर्थः। इदं कर्मधारयवद्भावसिद्धाऽन्तोदात्तत्वाऽनुवादकम्।

**शेषमिति**। 'प्रकारादिद्विरुक्तादन्यद् द्विरुक्तमि'त्यर्थ' इत्येके। 'अनुदात्तं चे'त्यस्याऽनुवादकमेतत्। 'अनुदात्तं पदमेकवर्जमि'त्यस्याऽनुवादकमि'त्यन्ये। इति **शान्तनवेति**। इदं 'मात्रोपज्ञ' इति सूत्रे **हरदत्तग्रन्थे** स्पष्टम्। 'शान्तनुराचार्यः प्रणेते'ति 'द्वारादीनाञ्चे'ति सूत्रे **हरदत्तः**।

( इति फिट्सूत्रेषु चतुर्थः पादः )

**इति फिट्सूत्राणि** ॥[1]

( इति प्रातिपदिकस्वराः )

---

## अथ प्रत्ययस्वराः ।

**कर्त्तव्यमिति**। तव्योऽयम्। तव्यत्तु तित्त्वात्स्वरितः। यद्यपि तव्यस्याऽपि आद्युदात्ते, शेषनिघाते कृते, 'उदात्तादनुदात्तस्ये'ति स्वरितो भवत्येव, तथापि तस्याऽसिद्धत्वात्तन्निमित्तकशेषनिघाताऽप्रवृत्त्या, तित्त्वनिमित्तके च तत्प्रवृत्त्या, महान् फले विशेषः। **युच्छतीति**। 'युछ प्रमादे'। **प्रचयः**—एकश्रुतिः।

**चितः**। **चितः सप्रकृतेरिति**। अत्राऽर्थे अकचश्चित्त्वं ज्ञापकम्। अन्यथा तस्यैकाऽच्त्वात् प्रत्ययाऽऽद्युदात्तत्वेनैव सिद्धौ, तद्व्यर्थं स्यात्। 'हस्तः प्रमाणमस्य हस्तः'। 'प्रमाणे ल' इति लुक्। अत्र चित्स्वरो न, 'अन्तरङ्गानपी'ति न्यायात्। प्रत्ययलक्षणन्तु न, प्रत्ययस्याऽसाधारणरूपाऽऽश्रयणाऽभावात्। कुण्डिनचोऽप्रत्ययस्यापि चितः सत्त्वात्। अनुबन्धलक्षणे स्वरे प्रत्ययलक्षणाऽभावस्य पूर्वमुक्तेश्च। 'हस्त'शब्दश्च 'स्वाङ्गशिटा-

---

1 'इति फिटसूत्राणि समाप्तानि' इति ख. ङ. पाठः ।

मि'त्याद्युदात्तः। 'चतुःकरोती'त्यादौ 'रात्सस्ये'त्यस्याऽसिद्धत्वात्सुजस्त्येव।

**अन्यके इति**। अकच्। ततः परः टिरुदात्तः। एवं **यके, तक**दित्यत्राऽपि बोद्ध्यम्। **'तद्धितस्य कित'** इत्येकं सूत्रम्, 'गोत्रे कुञ्जादिभ्यः' इति सूत्रे भाष्ये 'योगविभागः कर्त्तव्यः' इत्युक्तेः। तदनुसारेण व्याचष्टे–**ञ्नितस्त्रितस्येति**। **ञित्स्वरबाधनेति**। च्फञश्चित्त्वं तु 'व्रातच्फञो-रि'त्यादौ विशेषणाऽर्थं सावकाशम्। अन्यथा आश्वायनादपि ञ्यः स्यादिति भावः। ञित्त्वमपि वृद्ध्यर्थं सावकाशम्। ततश्चित्स्वरं बाधित्वा परत्वात् ञित्स्वरः प्राप्तोऽनेन बाध्यत इति तात्पर्यम्। **कौञ्जायना इति**। कुञ्जात् च्फञि, तदन्तात् 'व्रातच्फञोरि'ति ञ्ये, ञ्यादीनां तद्राजत्वाद्बहुषु लुक्।

**कितः**। तद्धितस्येति किम्?। 'चक्रतुः'। कित्त्वाऽतिदेशादन्तोदात्तत्वं मा भूत्। यत्तु प्रत्युदाहरन्ति—'इत्यः'। क्यप्। पित्त्वस्य तुकि, कित्त्वस्य गुणनिषेधे सावकाशत्वात्, पित्स्वरं बाधित्वा परत्वादयं स्यादि'ति। तन्न। 'क्यप् चेदन्तोदात्तस्तदा व्रजयजोर्भावे क्यप् एवे'ति नियमेन वारयितुं शक्यत्वादित्याहुः। कितः किम्?। 'अविदूसम्'।

**तिसृभ्यो जसः**। 'बहुवचनं प्रयोगभेदेन शब्दबाहुल्यात्, 'ऋन्नेभ्यः' इतिवदि'त्येके। 'औङः श्यामि'त्यादौ स्त्रीत्वाऽऽरोपवदर्थगतं बहुत्वं शब्दे आरोप्य बहुवचनमि'**त्यन्ये**। यत्तु 'षड्भ्य' इतिवदर्थप्राधान्यसूचनाय, तेन गौणे ने'ति। **तन्न**। 'कितः' 'चतुरः शसि' 'तिसृभ्यो विभक्तिः' 'सावेकाचस्तृतीयादिरि'त्येव सिद्धे जसूग्रहणवैयर्थ्याऽऽपत्तेः। पूर्वोत्तरसाहचर्याच्च विभक्तिरत्र सुबेव ग्रहीष्यते। तत्र बहुवचनविषयत्वेन द्विवचनैकवचनयोरभावात्, शसि 'उदात्तयण' इत्येव सिद्धेः, अन्यासु हलादिषु 'षट्त्री'त्येव सिद्धेः। गौणे प्रवृत्तौ तु 'अतितिस्रौ' इत्यादिव्यावृत्तिरेव फलम्। 'अतितिस्र' इति जसि तु भवत्येव।

**तिस्र इति**। अन्तोदात्तत्रिशब्दस्य आदेशस्तिसाऽपि तथा। तस्य 'अचि रः' इति कृते, 'उदात्तस्वरितयोर्यण' इति जसः स्वरितत्वं प्राप्तम्,

१ 'यत्तु–इत्यः' इति ख. पाठः। २ 'इत्येके' इति लघुशेखरे नास्ति।

अनेन बाध्यते । जसः किम् ? । 'अतितिस्रौ' इति । 'अतेरकृत्पदे' इत्यत्र 'अतेर्धातुलोपे वाच्यमि'त्यन्तोदात्तः । तस्य यणि, 'उदात्तस्वरितयोरि'ति औकारः स्वरितः ।

**सावेकाचः** । 'सौ परे यदेकाऽज्रूपं, ततः परे'त्यर्थः । 'सौ य[1] एकाच् तस्मात्परे'त्यर्थे निष्पन्नेऽर्थवत्परिभाषया, प्रकृतेऽर्थवत एव सम्भवाच्च, 'सौ यदर्थविशिष्टमेकाऽज्रूपं, तदर्थविशिष्टात् तदेकाऽज्रूपात्परा विभक्तिरि'ति फलितम् । **राज्ञेति** । 'राजन्'शब्दः कनिन्नन्तत्वादाद्युदात्तः । न च 'एकाचो विहिता या विभक्तिरि'त्यर्थान्न दोषः । विहितविशेषणे प्रमाणाऽभावात् । एकाऽज्ग्रहणव्यावर्त्यमप्येतदेव । तदभावे हि 'सौ वर्त्तमानात् शब्दात्परे'त्यर्थः स्यात् । सावित्यस्य 'द्वाभ्यामि'त्यादि व्यावर्त्यं स्यात् ।

सप्तमीबहुवचनमिति किम् । 'याता' 'याद्भ्याम्[2]' । प्रथमैकवचनग्रहणे तु तत्र 'यानि'ति रूपं, संयोगाऽन्तलोपस्याऽसिद्धत्वेन 'यान्त्' इति वा । न हि तस्मात् पराऽत्र शस्[3]विभक्तिः । विकृतिग्रहणेन प्रकृतेरग्रहणात् । आगमसहितग्रहणेन केवलस्याऽग्रहणाच्च । 'तन्मध्यपतित'न्यायोऽपि केवलेन विशिष्टग्रहणं बोधयति, न त्वेतावता प्रकृते इष्टसिद्धिः । न च रूपविवक्षामकृत्वा 'सौ य एकाच्, ततः परे'त्यर्थ एवाऽस्त्विति वाच्यम् । दोःशब्दः सौ एकाच्, तस्य[4] दोषन्नादेशे, ततः[5] परा विभक्तिरुदात्ता स्यात् । इष्यते तु मध्योदात्तं—'दोषभ्यामि'ति । अयमेव[6] सप्तमीबहुवचनपक्षेऽपि रूपविवक्षाऽभावे दोषः[7] । 'दोःषु' इत्यत्र य एकाच्, तस्मात् दोषन्-

१ 'सौ यत् एकाच्' इति ख. ङ. पाठः ।

२ 'याद्भ्यामित्यादि'इति लघुशेखरे पाठः । स एव च योग्यः ।

३ 'शस्' इति पदं ख. नास्ति ।

४ 'तस्य दोषान्नादेशे' इति लघुशेखरात्पूरितम् ।

५ तस्मात् 'दोषन्'शब्दात्परा' इति ख.ङ.पाठः । ६ एवकारो लघुशेखरे नास्ति ।

७ 'अस्ति च 'दोःषु' इत्यत्र य एकाच्, तस्मात्परा विभक्तिरिति' इति लघुशेखरपाठः ।

शब्दात् परा विभक्तिरि'ति। नन्वेवमपि सप्तमीबहुवचने दृष्ट–दोः–शब्दाऽऽदेशत्वेन स्थानिवद्भावात्प्रवृत्तिर्दुर्वारा। न चेष्टाऽऽपत्तिः। तैत्तिरीयैः[1] 'दोषभ्यां स्वाहा' इति मध्योदात्तस्यैव पाठात्। अत एव 'न गोश्वन'-इति सूत्रे 'शुनः' 'शुना' इत्युदाहरणं सङ्गच्छते। अन्यथा सप्तमीबहुवचने नलोपस्याऽसिद्धत्वेऽपि, 'श्वन्'शब्दात् तृतीयादिविभक्तेरभावात् असङ्गतिः स्पष्टैव। मम त्वेकदेशविकृतन्यायेन न दोष इति चेन्न[2]। 'अच' इत्येकत्वविवक्षया, तद्वतो ग्रहणेन सिद्धे, एकग्रहणेन 'सौ यदेकाऽज्रूपं, तत एकाऽच एव परे'त्यर्थेन वारणात्। 'त्वये'त्यादौ तु प्रथमैकवचनग्रहणेऽपि न दोषः। प्रथमैकवचनप्रकृतेः स्थाने तृतीयादिप्रकृतेरविधानात्। स्पष्टञ्चेदं 'न गोश्वन्नि'ति सूत्रे,प्रकृते च भाष्ये। रूपविवक्षा तु 'आभ्याम्' 'अस्मै', 'अस्ये'त्यादावन्वादेशे विभक्त्युदात्तत्ववारणाय। 'ऊडिदमि'त्यत्र 'अन्तोदात्तादि'त्यधिकारात्तेनाऽपि न। तत्र हि अश् अनुदात्तः। 'काभ्यां कुलाभ्या'मित्यादावेतदप्रवृत्तिश्च रूपविवक्षाफलम्। रूपग्रहणे प्रमाणन्तु 'सप्तमीबहुवचनग्रहणे 'न गोश्वन्नि'ति निषेधो ज्ञापक' इति भाष्यमेव।

स्यादेतत्–स्त्रियाम् 'आभ्यामि'त्यादौ[3], 'एभिः' 'एषामि'त्यादौ चाऽन्वादेशे सर्वाऽनुदात्तत्वं न लभ्येत। 'सावेकाचः' इत्यस्य प्राप्तेः। 'आसु' 'एषु' इति हि सौ रूपम्। न च विभक्तेरुदात्तत्वे, शेषनिघातेन प्रकृतेरनुदात्तत्वे सिद्धे, अशादेशस्याऽनुदात्तत्वविधानसामर्थ्यादन्वादेशे विभक्तिस्वरो नेति वाच्यम्। 'आभ्यामि'त्यादौ चारितार्थ्यात्। न हि अत्र 'सावेकाचः' इति प्राप्नोति। तत्र हि सप्तमीबहुवचने 'एषु' इति रूपं, तत्र 'ए' इति 'रूपम्'[4]। न च

१ 'तैत्तिरीये दोषभ्यां स्वाहा' इति लघुशेखरे पाठः।

२ 'इति चेन्न। लक्ष्याऽनुरोधेन आवृत्त्या 'यत् एकाज्रूपं, तत एकाच एव परे-' त्यर्थेन वारणात्' इति तु लघुशेखरे पाठः।

३ 'अस्त्रियाम्–आभ्यामित्यादौ' इति लघुशेखरे पाठः।

४ 'रूपम्' इति क्वाचित्कः पाठः।

तादृगिहास्ति । नाऽपि तस्य विकारः । न च स्त्रियाम् 'आसु' इति रूपस्य सत्त्वेन पुंसि प्रवृत्तिर्दुर्वारा । आबन्तस्याऽप्रकृतित्वात् । लिङ्गविशिष्टेन प्रातिपदिकाऽग्रहणाच्च । अर्थभेदाच्च । न च 'न गोश्वन्' इति निषेधात् 'एभिः' इत्यादौ न दोष इति वाच्यम् । प्रथमैकवचने अवर्णाऽन्तत्वाऽभावात् ।

न च 'ऊडिदमि'त्यस्य दुर्वारत्वेन सर्वाऽनुदात्तत्वं नेष्टमेवेति वाच्यम् । तत्र 'अन्तोदात्तादि'त्यनुवृत्त्या तदप्राप्तेः । एतेन 'तदनुवृत्तिसामर्थ्यात् 'सावेकाच' इत्यपि न प्रवर्त्तते । न च 'अक्षद्युवा' 'अक्षद्यूभ्यामि'त्यादिव्यावृत्तिः फलम् । तत्र हि अन्तोदात्तदिविधातोः क्विपि, ऊठि, स्रंसनधर्मणो हलः स्थाने जायमानत्वेन अनुदात्तत्वे, 'उदात्तस्वरितयोरि'ति स्वरिते, समासे, कृदुत्तरपदप्रकृतिस्वरेण स्वरिताऽन्तत्वात् , स्वरिताऽसिद्धत्वेऽप्यनुदात्ताऽन्तत्वादिति वाच्यम् । 'ऊठ्युपधाग्रहणं कर्त्तव्यमि'ति वार्त्तिकेनैव निर्वाहात् । ऊठः पूर्वम् 'अकृतव्यूह'परिभाषया स्वराऽप्रवृत्तेश्च । ऊठि उदात्तत्वनिपातनाच्च । अत एव प्रयोगे उदात्तश्रवणम् । अन्यथा स्वरितः स्यात् ।

एतेन 'अन्तोदात्ताऽधिकारस्य 'जूरः' 'तूर' इति व्यावृत्तिः फलम् । न च धातुस्वरेणाऽन्तोदात्तत्वं शङ्क्यम् । 'ऊ'द्वयोरेकादेशेन तदपहारात् । 'एकादेश उदात्तेने'ति त्वसिद्धमि'ति परास्तम् । 'एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्य' इति सिद्धकाण्डे पाठेनाऽसिद्धत्वाऽभावाच्चे'त्यपास्तम् । 'आभ्यामि'त्यादौ तदप्रवृत्त्यर्थं चारितार्थ्यात् ।न च अशोऽनुदात्तविधानसामर्थ्यादत्र तदप्रवृत्तिः। तर्हि स्त्रीक्लीबयोः'आभ्याम्''एषु' इत्यादौ'सावेकाच' इत्यस्य दुर्वारताऽऽपत्तेः । अशोऽनुदात्तविधानं हि 'येन नाप्राप्ति'न्यायेन 'ऊडिदमि'त्यस्यैव बाधकं स्यात् । किञ्च शसो व्यावृत्त्या 'ऊडिदमि'तिसूत्रस्थाऽनुवृत्तेरावश्यकत्वम् । न हि शसि 'सावेकाच' इति प्राप्नोति । इष्यते च तत्राऽनुदात्त एव । अत एव'अन्यैरेनान् कन्यानामभिरि'त्यादौ सर्वाऽनुदात्त एव पठ्यते । न च 'प्राग्दिश' इति सूत्रस्थभाष्यात् 'ऊडिदमि'त्यत्राऽपि

१ 'प्रवृत्तिर्दुर्वारा । 'अर्थभेदात्' इति तु लघुशेखरे पाठः ।

तृतीयादिग्रहणमनुवर्त्तते' इत्यर्थस्य प्रतीयमानत्वात् तत्सामर्थ्यस्योपक्षय इति वाच्यम्। विच्छेदेन, 'इतः पिशङ्ग यच्छसे, अपो याचामि पुंसः पुत्रानुत रायो देवी ददातु न' इत्यादौ शसि उदात्तत्वदर्शनेन च तद्भाष्यस्य प्रौढिवादपरत्वात्। यदि तु 'ऊडिदमि'त्यत्र 'एकाच'इति वर्त्तते। अत एव पदादयो निश्पर्यन्ता एव गृह्यन्ते' इति सिद्धान्तः। न तु ततः परेऽपि। तेषाम् अनेकाच्त्वात्। तेन 'आसनि' 'उदनी'ति मध्योदात्ते। अन्यथाऽन्तोदात्तं स्यात्। न चाऽन्तोदात्तात्परत्वमेव इह विभक्तेर्दुर्लभम्। स्थानाऽऽन्तरतम्येन आदेशानामपि अन्तोदात्तत्वात्। आस्यशब्दस्य ण्यदन्ततया स्वरिताऽन्तत्वेऽपि, 'पद्दन्न' इति सूत्रे पदाद्यादेशानामन्तोदात्ततानिपातनाऽऽश्रयणात्। एवं स्थिते शसि एनादेशस्याऽप्येकाज्ग्रहणेनैव वारणं, तदा आद्य एव दोषः। न च 'सावेकाच' इति सूत्रकैयटोक्तरीत्या 'एषु' इत्यादावन्तोदात्तत्वमेवेष्टमिति वाच्यम्। 'एभिरग्ने पिबसि त्वमेषां प्रेणा तदेषामि'त्यादिवैदिकप्रयोगविरोधात्। 'अन्येतु' इत्युक्त्या तेनाऽपि तत्राऽरुचिबोधनाच्चेति चेन्न। 'सावेकाच' इत्यत्राऽपि अन्तोदात्तादित्यपकृष्यते, तेनाऽदोषात्। यद्वा अशनुदात्तविधानं बाध्यसामान्यचिन्तया विभक्तिस्वरमात्रस्य बाधकम्, अतो न दोषः। एवञ्च 'ऊडिदमि'तिसूत्रेऽपि 'अन्तोदात्तादि'त्यनुवृत्तिर्व्यर्थैव। रूपविवक्षाफलन्तु 'काभ्यां कुलाभ्यामि'त्यादीति सर्वमनवद्यम्। अत्र 'एकाचः परे'त्यस्य 'एकाच एव परे'-त्यर्थः कार्यः। तेन 'चित्सु' 'अग्निचिता' इत्यत्र न।

**अन्तोदात्तादु**। 'नित्य'शब्दस्य स्वरितत्वेन अधिकाऽर्थत्वात्, लक्षणप्रतिपदोक्तपरिभाषया च नित्याऽधिकारविहितसमास एव गृह्यते, इत्यत आह—**नित्येत्यादि**। इदञ्च वृत्तिपदमञ्जर्योः स्पष्टम्।

**परमवाचेति**। पक्षे 'वा'शब्द उदात्तः। अन्तोदात्तात्किम्?। 'अवाचा'। नञ्तत्पुरुषः। अव्ययपूर्वपदप्रकृतिस्वरोऽत्र। उत्तरपदग्रहणम् एकाच्त्वेन, अन्तोदात्तत्वेन चोत्तरपदं विशेषयितुम्। अन्यथा समासो विशेष्येत। तथा सति 'शुन ऊर्क्-श्वोर्जा' इत्यादावेव स्यात्। एकाच् किम्?।

'राजदृषदा'[1]। षष्ठीसमासः। अनित्येत्यादि किम् ?। 'अग्निचेता'। उपपद-समासः। कृदुत्तरपदप्रकृतिस्वरेण चिच्छब्द उदात्तः। यत्रतु[2] समासघटकपद-मात्रघटितविग्रहाऽभावेनैव नित्यसमासस्तत्र भवत्येवाऽयं विकल्पः। यथा 'अवाचा ब्राह्मणेन'। 'अविद्यमाना वाक् यस्ये'ति विग्रहः। बहुव्रीहौ 'नञ्सुभ्यामि'त्यन्तोदात्तत्वम्। इदञ्च वृत्त्याद्यनुरोधेन व्याख्यातम्। 'उपपदमतिङ्ङि'ति सूत्रे भाष्ये तु 'विग्रहाऽभावेन यो नित्यसमासस्ततो-ऽन्यत्राऽयं विकल्पः, अन्यथा 'उपस्वेन' इत्यादावव्ययीभावेऽप्ययं विकल्पः स्यादि'त्युक्तम्। एवञ्च बहुव्रीहौ 'अवाचा ब्राह्मणेन' इत्यत्राऽपि विकल्पो न भवत्येवेति प्रतीयते इति दिक्।

**अञ्चेश्छन्दस्य**। 'शसादिरि'ति नोक्तम्। नपुंसके शसि मा भूत्, सुटि च यथा स्यादि'ति। 'अञ्चेरि'त्यत्र इकः किक्त्वेऽपि नलोपाऽकरणं, सात्रत्वात्। यत्तु 'स नकारो विवक्षितः, छन्दसि विधिः,भाषायां 'न गोश्वन्' इति निषेधः। 'अङि'ति निर्देशेन तस्याऽपि नलोपाऽभावे एव प्रवृत्तेरिति व्यवस्थे'ति। तन्न। 'प्रतीचो बाहूनि'त्यादिलक्ष्यविरोधात्। 'अनिगन्तो-ऽञ्चतौ'[3] इति सूत्रस्थाऽऽकारविरोधाच्च। अत्र 'उत्तरपदादि'ति वर्त्तते। तेन 'उत्तरपदभूताऽञ्चत्यन्तात्परा विभक्तिरि'त्यर्थः। तेन केवलाऽञ्चतेः किपि 'अग्भ्यामि'त्यादौ नाऽस्य प्रवृत्तिरित्याहुः।

**दधीच इति**। दध्यञ्चति दध्यङ्। तस्य। 'ऋत्विगि'त्यादिना किन्। **चावितीति**। तथा च तदपवादोऽयमिति भावः। 'लुप्ताऽकारनकारेऽञ्च-तावि'त्यर्थेन तस्याऽपि विभक्त्युत्पत्त्युत्तरकालमेव प्रवृत्तेरित्याशयः। न च पूजायां 'दध्यञ्चा' इत्यादाविदं सावकाशम्। तत्र 'न गोश्वन्नि'तिनिषेधेन अस्याऽप्रवृत्तेः। न चैवमपि 'दध्यग्भ्यामि'त्यादौ अस्य सावकाशत्वेन,

---

१ 'राजदृषता' इति ख. ङ. पाठः।

२ 'यस्तु' इति ख. ङ. पाठः। 'यत्र तु' इति लघुशेखरे पाठः।

३ 'अनिगन्तेऽञ्चतौ' इति ख. ङ. पाठः।

'दधीच' इत्यादौ परत्वाच्चुस्वरो दुर्वार इति वाच्यम् । शस्परिग्रहार्थोऽसर्वनामस्थानग्रहणसामर्थ्यात्तत्राऽपि प्रवृत्तेः । न च 'पराच' इत्यादौ सावकाशमिदम् । अनिगन्तपूर्वपदे 'चौ' इत्यस्याऽप्रवृत्तेर्वक्ष्यमाणत्वात्, तत्र 'अनिगन्तोऽञ्चतौ'[1] इत्यस्यैवेष्टत्वादिति वाच्यम् । 'अनिगन्तोऽञ्चतौ'[2] इतिपूर्वपदप्रकृतिस्वरस्य सतिशिष्टचुस्वरबाधकत्ववत्, एतस्याऽपि बाधकत्वेन, तत्रैतदप्रवृत्तेरित्याहुः । केचित्तु 'अत्राऽन्तोदात्तादित्यपि वर्त्तते, अग्रेऽनुवृत्तिदर्शनेनाऽत्रापि तत्सम्बन्धात् । एवञ्च 'अन्तोदात्तोत्तरपदभूताऽञ्चेः परे'त्यर्थः । अत एव 'पराचा' इत्यादावप्रवृत्तिः । 'अनिगन्तोऽञ्चतौ'[3] इतिपूर्वपदप्रकृतिस्वरेण आद्युदात्तत्वात् । अञ्चेरन्तोदात्तत्वं सामर्थ्यात् विभक्त्युत्पत्तिकालाऽवच्छिन्नं ग्राह्यमि'त्याहुः ।

**ऊडिदम्** । अत्र 'एकाच' इति, 'अन्तोदात्तादि'ति च वर्त्तते । तत्रैकाज्ग्रहणमूठो न विशेषणम्, अव्यभिचारात् । तद्घटितसमुदायस्य विशेषणत्वेऽपि न क्षतिः । अस्ति हि 'प्रष्ठौह्'शब्दे तद्घटितोऽर्थवान् समुदाय 'ऊहि'ति । एवं पदाद्यंशेऽपि उपात्तानामेव विशेषणम्, न विभक्त्याक्षिप्तप्रकृतेः । अत एव 'ब्राह्मणपदा' इत्यादावन्तोदात्तत्वसिद्धिः । इदमेव ध्वनयितुं वृत्त्यादिषु 'जूरा' इत्यनुदाहृत्य 'प्रष्ठौहः' इत्युदाहृतम् । न च 'सावेकाचः' इत्यनेन सिद्धत्वात् तन्नोदाहृतम् । शसि तदप्राप्तेरिति दिक् । **असर्वनामस्थानेति** । 'प्राग्दिश' इति सूत्रस्थभाष्यन्तु प्रौढिवाद इत्युक्तम् ।

**प्रष्ठौह् इति** । 'प्रष्ठवाट्'शब्द उपपदसमासेनाऽन्तोदात्तः । **ऊठ्युपधेति** । 'उपधाभूतस्यैव ऊठो ग्रहणमि'त्यर्थः । पञ्चमीनिर्देशादन्त्यस्यैव ग्रहणे प्राप्ते वचनम् । 'स्वरविधौ व्यञ्जनमविद्यमानवदि'ति परिभाषा तु अन्तोदात्ता-

१ 'अनिगन्तेऽञ्चतौ' इति ख. ङ. पाठः ।

२ 'अनिगन्तेऽञ्चतौ' इति ख. ङ. पाठः ।

३ 'अनिगन्तेऽञ्चतौ' इति ख. ङ. पाठः ।

-ऽनुदात्तादिव्यवहारे एव प्रवर्त्तते । अत एव 'कर्षाऽऽत्वतः' इति मतुप्निर्देशश्चरितार्थ इति प्रागेव निरूपितम् ।

**अक्षद्युवेति** । अत्र क्विपि विवक्षिते ऊठ् उदात्तो निपात्यते । ततो यणि, उपपदसमासे, कृत्स्वरेणाऽन्तोदात्तोऽयम् । क्विपि परत ऊठि तु अनुनासिकादौ प्रत्यये ऊठ्स्वरः सतिशिष्टः स्यात् । तथा च 'स्योन'शब्दोऽन्तोदात्तो न स्यात् । उदात्तनिपातने चेदमेव भाष्यं प्रमाणम् । अत एव प्रयोगे ऊठ उदात्तत्वश्रुतिः । अन्यथा स्वरितः स्यादित्याहुः ।

**षट्पदादय इति** । सूत्रोपात्ताः षडित्यर्थः । तेन वार्त्तिकस्थानां ग्रहणेऽपि न दोषः । पदाद्यादेशा अन्तोदात्ता निपात्यन्ते । इदं सूत्रं 'लिति' इत्यस्य पूर्वविप्रतिषेधेन, अनुवृत्त्या वा बाधकम् । तेन 'इत' इत्यत्र विभक्त्युदात्तत्वमेवेति 'प्राग्दिशः' इति सूत्रे **भाष्यकैयटयोः** स्थितम् । इदमो र्हिलि लित्त्वसामर्थ्याल्लित्स्वर एवेत्याहुः ।

**अष्टनो** । 'अष्टनशब्दो घृतादित्वादन्तोदात्त' इति षट्संज्ञासूत्रे भाष्ये ध्वनितम् । तेन उत्तरार्थतया अनुवर्त्तमानस्याऽपि 'अन्तोदात्तादि'त्यस्य न बाधः । मण्डूकप्लुतिर्वाऽस्तु । 'झल्युपोत्तममि'त्यस्याऽपवादोऽयमि'ति स्पष्टं **भाष्ये** । अत एव इदं समासादौ न प्रवर्त्तते । दीर्घात्किम् ? । 'अष्टभिः' । 'झल्युपोत्तभमि'ति स्वरः । अत्र यद्वक्तव्यं तदष्टनशब्दे सुबन्ते निरूपितम् ।

**शतुरनुमो** । 'अनुम' इति बहुव्रीहिः । **शतुर्लसार्वधातुकेति** । न च अन्तरङ्गत्वादेकादेशे कृतेऽव्यपवर्गः । अन्तरङ्गपरिभाषाया अनित्यत्वात् । न चैकादेशस्वरोऽस्मिन्स्वरेऽसिद्धः । 'अनुम' इति प्रतिषेधेनाऽसिद्धत्वाऽभावज्ञापनात् । न हि एकादेशस्वरेण विना सनुम्कमन्तोदात्तं भवति ।

इदं च सामान्याऽपेक्षम् । तेन 'अन्तरङ्ग एकादेशस्वरः सिद्धो वाच्य' इति सिद्धम् । 'अनुम' इति च श्रुतत्वाच्छतुरेव विशेषणम् । तेन 'मुञ्चता' इत्यादौ स्वरप्रवृत्तिः। 'अन्तोदात्तादि'ति तु तदन्तस्यैव विशेषणम् । अन्यथा 'तुदती'त्यत्र न स्यात् । लसार्वधातुकाऽनुदात्तप्रवृत्तेः । नुम्प्रतिषेधश्च

अनर्थकः स्यात्। अत्र वार्त्तिकं–'बृहन्महतोरुपसङ्ख्यानमि'ति। 'बृहती', 'महती'। यद्यपि शतृवद्भावेनेदं सिद्धं,तथापि 'बृहन्महतोरेवे'ति नियमार्थमिदम्। तेन 'पृषता' 'पृषती' इत्यादीनां न। ननु 'प्रियमहती'त्यादौ सूत्रेणाऽसिद्धेर्विधानाऽर्थमेव स्यादिति चेत्। न। वार्त्तिकेऽप्यन्तोदात्तादित्यस्य सम्बन्धेनाऽत्र तस्याऽपि अप्रवृत्तेः। 'अतिमहती'त्यत्र'अतेरकृत्पदे' इत्यन्तोदात्तत्वाद्भाव्यमेव। 'विदुषी' 'विदुष' इत्यादौ वसोः स्थानिवत्त्वेन शतृत्वात्, ततः परयोर्नदीविभक्त्योरुदात्तः प्राप्तः, स्वरे वस्वादेशे स्थानिवत्त्वप्रतिषेधान्न भवति।

**उदात्तयणो**। 'उदात्तस्वरितयोरि'त्यस्याऽपवादः। हल्पूर्वात्किम्?। 'बहुतितवा ब्राह्मण्या'। 'बहोर्नञ्वदि'ति बहुव्रीहिरन्तोदात्तः। अत्र 'उदात्तस्वरितयोरि'ति विभक्तिः स्वरिता। अत्र 'उदात्तस्थानिकनकाराच्चे'ति वक्तव्यम्'। 'वाक्पत्नी'। तत्पुरुषः। 'पत्यावैश्वर्य' इति प्राप्तस्य पूर्वपदप्रकृतिस्वरस्य 'न भूवाक्चिद्दिधिषु' इति निषेधे,'समासस्ये'त्यन्तोदात्तः।

**नोङ्धा**। **शसादय इति**—असर्वनामस्थानोपलक्षणम्। नदीग्रहणम् असम्भवान्नाऽनुवर्त्तितम्। **सुभ्वे इति**। कृदुत्तरपदप्रकृतिस्वरेण सुभूः उदात्तः।

**ह्रस्वनुड्भ्याम्**। अत्र मतुप्ग्रहणेन ड्मतुपो ग्रहणं नेति 'चौ' इति सूत्रे भाष्ये स्पष्टम्। **अब्दिमाँ इति**। 'आपो दीयन्तेऽस्मिन्नि'त्यधिकरणे किः। उदनिः अव्युत्पन्नो घृतादित्वादन्तोदात्तः। मतुप उदात्तत्वे पूर्वस्य शेषनिघातः। न च सन्निपातपरिभाषया दोषः। स्वरे तदप्रवृत्तेः कृन्मेजन्तसूत्रे भाष्ये उक्तत्वात्। **अक्षण्वन्त इति**। 'छन्दस्यपि दृश्यते' इत्यनङ् उदात्तः। मतुपो 'अनो नुट्'। पूर्वं नस्य लोपः। नुटोऽसिद्धत्वात् 'मादुपधायाः' इति वत्वम्। **इषुमानिति**। इषुराद्युदात्तः। ह्रस्वेति किम्?। 'प्रजावान्'। ह्रस्वाऽन्तादिति किम्?। 'मरुत्वानि'ति। 'मृग्रोरुतिः'। 'मरुत्'। न च स्वरविधौ व्यञ्जनस्याऽविद्यमानवत्त्वेन ह्रस्वाऽन्तत्वम्। स्वरोद्देश्यकविधावेव

तत्प्रवृत्तेः, अन्तोदात्तत्वोदात्तात्परत्वादिव्यवहारस्यैव तेन लाभात्। अत एव 'कर्षाऽऽत्वतः' इति सूत्रे मतुप् चरितार्थः। अन्यथा 'दायः' 'पाकः' इत्यादावपि व्यञ्जनस्याऽविद्यमानवत्त्वेन आकारान्तात्परत्वेनैव सिद्धे, तद्वैयर्थ्यं स्पष्टमेव। अत एवाऽत्र नुट्ग्रहणं चरितार्थम्। अत एव स्वरे नलोपाऽसिद्धत्ववचनं सार्थकम्। अन्यथाऽसिद्धत्वेऽपि, एतत्परिभाषया नस्याऽविद्यमानवत्त्वे, तद्वैयर्थ्यं स्पष्टमेव। अत एव 'हल्स्वरप्राप्तौ' इति-परिभाषाऽन्तरं स्वरविधायकाऽर्थं भाष्ये पठितम्। तस्यास्तु प्रकृते विषय एव नास्ति। अत्र नुडपि अन्तोदात्तात्पर एव। तेनेह न 'रोमण्वन्तौ'। मनिन्नन्तत्वादाद्युदात्तो 'रोमन्'शब्दः। शिरसः शीर्षन्नादेशोऽन्तोदात्तो निपात्यते। अत एव 'शीर्षण्वानि'त्यादौ भवत्येव एतत्।

**रैशब्दाच्चेति**। वार्त्तिकमेतत्। **रेवानिति**। 'रयिरस्याऽस्ती'ति मतुप्। 'रयेर्मतौ बहुलमि'ति संप्रसारणम्, पूर्वत्वम्, आद्गुणः। **'रैशब्दान्मतुपो वत्वमिष्यते'**। ह्रस्वाऽभावाद्वचनम्। 'त्रेश्च **प्रतिषेधो वक्तव्य**'। 'त्रिवती'।

**नामन्य**। 'ह्रस्वे'ति, 'मतुवि'ति च वर्त्तते। तत्र व्याख्यानात् मतुपा ह्रस्वो विशेष्यते। प्रथमाऽन्तमपि मतुप्पदं सप्तम्या च विपरिणम्यते[1]। तदाह—**मतुपीति**। अत एव 'अग्नीनामि'त्यादावेतत्प्रवृत्तिः। अन्यथा परत्वान्नित्यत्वाच्च दीर्घे, ह्रस्वाऽभावान्न स्यात्। वचनं तु 'तिसृणामि'त्यादौ चरितार्थम्। 'चतसृणामि'ति तु नाऽवकाशः, तस्य आद्युदात्तत्वात्।

**सुमतीनामिति**। 'सुमति'शब्दो बहुव्रीहिः, 'नञ्सुभ्यामि'त्यन्तोदात्तः। पक्षे स्वरिताऽन्तः। सनुट्कग्रहणं किम्? । 'धेन्वाम्' । अन्तोदात्ता-त्किम्? । 'चतसृणाम्'।

**ङ्याश्छन्दसि**। 'अन्यतरस्यामि'त्यनुवर्त्तमाने बहुलोक्तिः 'अन्तो-दात्तादि'त्यस्य निवृत्त्यर्था। **जयन्तीनामिति**। आद्युदात्तमेतत्।

**षट्त्रि**। **एभ्यो हलादिरिति**। 'एभ्यो विहितस्ये'त्यर्थः। ध्वनितं चेदं

---

१ 'सप्तम्या च प्रथमान्तमपि मतुप्पदं विपरिणम्यते' इति ख. पाठः।

'चतुरः शसी'ति सूत्रे भाष्ये। तद्भाष्यप्रामाण्यादेव गौणेऽपीदं न प्रवर्त्तते ।

हलादिः किम् ? । 'चतस्रः पश्य' । 'प्रियत्रीन्पश्ये'त्यादि[1] । **षड्भ्यो**– जश्शसी लुप्येते । अन्या हलादयः । 'त्रय' इत्यत्र 'असर्वनामस्थान'-पदाऽनुवृत्त्या न दोषः । एवं जसि 'चतस्र' इत्यत्राऽपि । 'त्रीन्' इत्यत्र एकादेशस्वरेणैव सिद्धम् । 'तिस्र' इत्यत्र 'तिसृभ्यो जस' इति भवति । शसि 'उदात्तयण' इति सिद्धम् । 'चत्वार' इत्यत्र 'आम्'स्वरेण भाव्यम् । शसि 'चतुरः शसी'ति भाव्यम् । उपसमस्ते विहितविशेषणान्न । न च 'चतस्र' इत्यत्राऽऽद्युदात्तनिपातनेन नैतत्प्रवृत्तिः । हलादिग्रहणसामर्थ्येन निपातनस्वरस्य विभक्तिस्वराऽबाधकत्वकल्पनात् । तेन 'चतसृणामि'त्यत्र विभक्तिस्वरसिद्धिरिति वार्त्तिकमतम् । भाष्यमतं तु 'तिसृभ्यो जस' इति जस्ग्रहणवत् इदमपि उपसमस्ताऽर्थमेवेति[2] दिक् ।

**न गोश्वन्** । सौत्रत्वात् द्वन्द्वः, सप्तम्यलुक् च । **एभ्य इति** । विभक्तेः, मतुपश्चेत्यर्थः । 'मतुप्' इत्यस्य, 'विभक्तिरि'त्यस्य चाऽनुवृत्तेः । एतच्च 'चौ' इति सूत्रे भाष्यकैयटयोः स्पष्टम । **प्रागुक्तमिति** । षाष्ठिकस्वर इत्यर्थः । तेन 'अनुदात्तौ सुप्पितौ' इत्यस्य न बाधः । एतच्चाऽनन्तरस्येति न्याय-लब्धम् । न च तन्न्यायाऽनुसारणे 'षट्त्री'त्यस्यैव बाधः स्यादिति वाच्यम् । गैवादिषु[3] असम्भवात् । 'सर्वस्यैव षाष्ठिकस्वरस्याऽयं प्रतिषेध' इति मनोरमाया अपि 'विभक्तिमतुब्विषये प्राप्तस्य सर्वस्य षाष्ठिकस्ये'त्यर्थः । एवं च 'वीरवत्तममि'त्यत्र 'ह्रस्वनुड्भ्या'मिति न भवति । 'देवी' 'कुमारी'-त्यादावन्तोदात्तत्वं च सिध्यति । उदात्तनिवृत्तिस्वरेण हि तत्राऽन्तो-दात्तत्वम । यत्तु 'तृतीयादिविभक्तेरुदात्तत्वं ने'त्येतत्सूत्रं विवृण्वते[4] । तन्न ।

१ 'प्रियत्रीन् पश्येत्यादि' इति लघुशेखरे पाठः ।

२ उपसमस्ताऽर्थं = समासे 'प्रियत्रीन् पश्ये'त्याद्यर्थमित्यर्थः ।

३ 'गवादिषु' इति लघुशेखरे पाठः ।

४ 'विवृण्वन्ति' इति ख. ङ. पाठः ।

लक्ष्यविरोधात्, एतेन 'कित्-चित्स्वराणामपि बाधः स्यात्। तथा च 'कितः' इति सूत्रे 'आक्षिक' इत्युदाहरणपरवृत्तिविरोध' इत्यपास्तम्। 'अनुदात्तं पदमि'त्यस्य तु परिभाषात्वात्, विभक्त्यादिस्वरत्वाऽभावाच्च न बाधः 'ऊडिदमि'त्यस्यापि न निषेधः। पदादेः, रैशब्दस्य च ग्रहणवैयर्थ्याऽऽपत्तेः

**गवां शतेति**। 'सावेकाचः' इति प्राप्तिः। नन्वत्र सप्तमीबहुवचने सौ एकाज्रूपं 'गो' इति. न ततः परेयं विभक्तिः। न च स्थानिवद्भावः 'गोः पूर्वणित्त्वाऽऽत्वस्वरेषु' इति वार्त्तिकेन स्वरे कर्तव्ये, निषेद्धव्ये वा, गोशब्दाऽऽदेशस्य स्थानिवत्त्वनिषेधेन, विधिनिषेधयोरुभयोरप्यप्राप्तेः अत एव 'सुगुपाल' इत्यत्र 'गोतन्तियवं पाले' इति स्वरो न। एतेन 'सुगुना' 'बहुगुने'ति वृत्तिकारोक्तमपि परास्तम्। एवञ्च 'सुगुने'त्यादौ निषेधाऽभावे 'अन्तोदात्तादुत्तरपदादि'ति भवत्येवेत्यरुचेरुदाहरणाऽन्तरमाह—**गोभ्य इति**।

**शुनश्चिच्छेपमिति**। अत्र 'चिदि'ति संहितापाठे बाहुलकात्, 'शुनःशेप'शब्दस्य मध्ये प्रक्षिप्यते। पदकाले तु 'शुनः शेपं चिदि'ति पठ्यते 'शेप-पुच्छ-लाङ्गूलेषु' इत्यलुक्। वनस्पत्यादित्वादुभयपदप्रकृतिस्वरः सौ नलोपस्याऽसिद्धत्वात् 'श्वनि'ति रूपम्। 'एकदेशविकृत'न्यायेन ततः परा विभक्तिरिति, 'सावेकाचः' इति प्राप्तिः।

**प्रथमैकवचने इति**। न तु 'सावेकाच' इतिवत्सुपो ग्रहणम्। यत्-तदोः स्त्रियामवर्णाऽन्तत्वेऽपि लिङ्गाऽन्तरे दकारान्तत्वात्, व्याख्यानाच्चेति भावः तत्र 'सौ' इत्यवर्णाऽन्तविशेषणं, 'सौ यदवर्णान्तं दृष्टं, तस्मादि'त्यर्थात् 'सावेकाचः' इतिवद्रूपविवक्षा तु अत्र न। 'वर्ण'ग्रहणसामर्थ्यात्। शब्देन विशिष्टस्याऽनुपस्थितेश्च। तत्र तु 'एकाच' इति बहुव्रीहिणा विशिष्ट-

१ अपिः लघुशेखरे नाऽस्ति।

२ नकारः ख. ङ. नास्ति।

३ 'रूपविवक्षा तु अत्र न। व्याख्यानात्' इति लघुशेखरे पाठः।

रूपोपस्थितिरस्त्येव। एतेन 'तेभ्य'इत्यत्र सौ यदवर्णाऽन्तं रूपं, ततः परत्वाऽभावात्कथमत्र निषेधप्राप्तिरि'ति परास्तम्। सौ यत् अवर्णाऽन्तं दृष्टं, ततोऽनवर्णान्तादपि सिद्धेः।

नन्वेवमपि 'श्वन्'ग्रहणं व्यर्थम्, 'श्वा' इति प्रथमैकवचने अवर्णान्तत्वादिति चेन्न। नलोपस्याऽसिद्धत्वेनाऽदोषात्। अत एव ज्ञापकात्स्वरनिषेधेऽपि नलोपाऽसिद्धत्वप्रवृत्तिः। अत एव 'पितृमानि'त्यादौ मतुप उदात्तत्वं भवत्येव।

अत्र 'वर्ण'शब्देनाऽवर्णस्थान्यपि गृह्यते। अत एव[1] नपुंसकप्रथमैकवचने 'तदि'त्यादौ त्यदाद्यत्वाऽभावेन 'तेभ्यः कुलेभ्यः' इत्यादौ निषेधो न स्यात्। न चेष्टाऽऽपत्तिः। 'यत्तदोश्च ग्रहणं कर्त्तव्यमि'ति भाष्यमते तत्प्राप्तेरि[2]ति परास्तम्। किञ्च[3] 'सौ यस्य शब्दस्य क्वाऽपि अवर्णाऽन्तत्वं दृष्टं, ततः परविभक्तेः सर्वत्र निषेध' इत्यर्थान्न[4] दोष इति दिक्।

वस्तुतस्तु अत्राऽपि रूपविवक्षाऽस्त्येव। परन्तु तादृशरूपात्परत्वं विभक्त्यादीनां तदुत्पत्तिकालाऽवच्छिन्नं ग्राह्यम्। अत एव 'चौ' इतिसूत्रस्थभाष्यविरोधो न। तत्र हि 'वेतस्वानि'त्यत्राऽस्य प्राप्तिः शङ्किता। अत[5] एव 'कुमारी'त्यादावुदात्तनिवृत्तिस्वरनिषेधशङ्कापरविप्रतिषेधसूत्राऽसिद्धवत्सूत्रस्थभाष्यविरोधोऽपि न। यत्तदर्थं भाष्यकृता वचनमेव आरब्धम्। अत एव 'केभ्यः','काभ्यः' इत्यादौ न निषेध, इति भाष्योक्तमेव रमणीयम्। राट्–'राजा', 'परमराजा'। अङ्कित-अञ्चतिः क्विन्नन्तोऽलुप्तनकारो गृह्यते,यत्र नलोपो नास्ति तत्रैव प्रतिषेधो यथा स्यादित्यर्थम्।'प्राङ्वा' 'प्रत्यङ्वा'। आद्ये 'सावेकाचः' इति, 'अञ्चेश्छन्दसी'ति वा प्राप्तिः। अञ्च-

१ 'नचैवं नपुंसकप्रथमैकवचने'इति लघुशेखरे पाठः।

२ 'तत्प्राप्तेरिति वाच्यम्' इति तु लघुशेखरे पाठः।

३ 'किञ्च' इति लघुशेखरे नास्ति।

४ 'इत्यर्थात्' इत्येव लघुशेखरे पाठः।

५ 'अत एव' इति ख. ङ. नास्ति।

शब्दश्च 'अनिगन्तोऽञ्चतौ' इति पूर्वपदप्रकृतिस्वरेण आद्युदात्तः । तदेकादेशोऽप्युदात्त एव । अन्त्यस्तु इगन्तपूर्वपदत्वात् कृत्स्वरेणाऽन्तोदात्तः । तस्य 'अन्तोदात्तादुत्तरपदस्ये'ति, 'अञ्चेश्छन्दसी'ति वा प्राप्तिः । यदि तु 'अनिगन्तोऽञ्चतौ' इति सतिशिष्टविभक्तिस्वरस्याऽपि बाधकं, तदा अन्त्यमेवोदाहरणम् । गतौ तु लुप्तनकारत्वाद्विभक्त्युदात्तः स्यादेव ।

यत्तु 'चावि'तिसूत्रस्थभाष्यादत्र लुप्तनकारोऽप्यञ्चतिर्गृह्यते' इति प्रतीयते, तत्प्रौढिवादः । 'प्रतीचो बाहूनि'त्यादिलक्ष्यविरोधात्, 'अनिगन्तोऽञ्चतौ' इतिसूत्रस्थाऽऽकरविरोधाच्चेत्याहुः ।

अन्ये तु 'भाष्यप्रामाण्यादत्र लुप्तनकारस्याऽपि ग्रहणम् । 'प्रतीचो बाहूनि'त्यादि तु च्छान्दसम्, 'अञ्चेश्छन्दसी'त्यनेन सिद्धं च । 'अञ्चेश्छन्दसी'ति तु अस्य बाधकमिति भाष्याऽऽशय' इत्याहुः ।

**क्रुङ्**–क्विन्नन्त एव । **कृदिति**–करोतिः, कृन्ततिर्वा क्विबन्तः ।

**दिवो झल्** । **द्युभिरिति** । 'ऊडिदमि'ति प्राप्तस्य निषेधः । ननु दिव्शब्दः फिट्स्वरेणाऽन्तोदात्तः, वकारस्थानिक उकारो हल्स्थानिकत्वात् अनुदात्तः, अस्वरको वा, सर्वथाऽप्यन्तोदात्तत्वाऽभावात्कथमत्र प्राप्तिरिति चेन्न । 'अकृतव्यूह'परिभाषया उत्त्वात्पूर्वमन्तोदात्तत्वाऽप्राप्त्या, कृते एव तत्प्राप्त्या, अदोषात् । व्युत्पत्तिपक्षेऽपि 'दिव उद्'त्यनेनोदात्तः उकारो निपात्यते इत्यदोषः । न च उदात्तनिपातनसामर्थ्याद्विभक्तिस्वराऽप्रवृत्तौ 'दिवो झलि'ति व्यर्थमिति वाच्यम् । 'अहर्विमलद्यु' इत्यादौ अन्तरङ्गप्रकृतिस्वरस्य सतिशिष्टतया बाधेन चारितार्थ्यात् । **दिवे दिव इति** । अत्र 'ऊडिदमि'त्येव भवति ।

**नृ चान्य** । अत्र 'झली'त्यनुवर्त्तितम् । तत्फलन्तु 'नरि' । अत्र सुपि

१ 'अञ्चूशब्दश्च' इति लघुशेखरे पाठः ।
२ 'अनिगन्तेऽञ्चतौ' इति ख. ङ. पाठः ।
३ 'अनिगन्तेऽञ्चतौ' इति ख. ङ. पाठः ।
४ 'तत्फलन्तु 'त्रा' 'त्रे' 'नरि' इति लघुशेखरे पाठः ।

यद्रूपं 'नृ' इति, स्थानिवद्भावेन ततः परत्वात् 'सावेकाच' इत्यस्य प्राप्तिः। 'त्रा' 'त्रे' इति तु 'उदात्तयणः' इत्यनेनाऽस्य बाधादपि सिद्धम्। इदञ्च 'नामन्यतरस्यामि'ति सूत्रे भाष्ये स्पष्टम्। वेदे क्वचित् 'नरि' इत्याद्युदात्तं पठ्यमानन्तु छान्दसत्वाद्बोध्यम्।

एतेन 'झली'ति नाऽनुवर्त्तते, 'य एक इन्नर्यपां स्त्री'त्यत्र 'नरी'त्याद्युदात्तस्य दर्शनादि'त्यपास्तम्। लोके 'नरी'त्यन्तोदात्तस्यैव इष्टत्वात्। न च योगविभागसामर्थ्येन विकल्पे लब्धे, अन्यतरस्याङ्ग्रहणेन व्यवस्थितविभाषात्वबोधनादिष्टसिद्धिरिति वाच्यम्। 'झली'त्यस्याऽसम्बन्धे योगविभागस्य शसि नित्योदात्तत्वविधायकत्वशङ्कावारणाऽर्थत्वेनाऽन्यतरस्याङ्ग्रहणस्य चरितार्थत्वात्। केचित्तु 'दिवो' झलि'ति सूत्रं न कार्यम्। 'अष्टनो दीर्घात्', 'दिवोऽजादिः', 'शतुरनुमो नदी चे'ति न्यासेन सिद्धेः। किञ्चैवम् 'ऊडिदमि'तिसूत्रे दिवोग्रहणमपि माऽस्त्विति अपरं लाघवम्। 'नृ चे'ति सूत्रं 'नुर्झलन्यतरस्यामि'ति कार्यमि'त्याहुः।

**तित्स्वरितम्**। 'कर्षाऽऽत्वतः' इत्यतः 'अन्त' इति वर्त्तते। 'तित्प्रत्ययस्याऽन्तः स्वरितः स्यादि'त्यर्थः। 'क्व नूनम्'। ('कर्त्तव्यम्')। तित्किम्?। 'कर्त्तव्यम्'। अन्तः किम्?। तव्यतः पर्यायेण आद्यन्तौ स्वरितौ मा भूताम्। 'ऋत उत्', 'उदोष्ठ्यपूर्वस्य' 'दिव उत्' इत्यादौ तकारस्योच्चारणाऽर्थत्वान्नेदं प्रवर्त्तते' इत्येके। 'अङ्गस्ये'ति सूत्रभाष्यपठित'प्रत्ययाऽप्रत्यययोरि'तिपरिभाषया न दोष' इत्यन्ये। अधिकम् 'ओदि'ति सूत्रे निरूपितम्।

**तास्यनुदात्तेत्**। तास्यादीनां समाहारद्वन्द्वः। अत्र 'उपदेश'ग्रहणं सम्भव-व्यभिचाराभ्यां ङिदद्भ्यामेव सम्बध्यते, न तु तास्यनुदात्तेद्भ्याम्। 'उपदिश्यते इति उपदेशः'। 'ङिदि'ति कर्मधारयः। इत्सञ्ज्ञकङकारेण, अकारेण चोपदिश्यमानस्य विशेषणात्तदन्तविधिः। तेन 'ङिदन्ताऽकारान्तोपदिश्यमानादि'त्यर्थः। 'अदुपदेशादि'त्यस्य यथाश्रुतत्वे हि 'हतः' 'हथः'

१ 'दिव उत्' 'इदुद्भ्याम्' 'औत्' इत्यादौ तिति प्रत्ययग्रहणेन न दोषः' इति तु लघुशेखरे पाठः। २ 'ङिदन्ताऽकारान्तोपदेशादित्यर्थः' इति ख, ङ. पाठः।

इत्यत्राऽपि स्यात्। कर्त्तेति। लुट्। आत्मनेपदप्रथमस्य डारौरसः। तासिः। एकवचने उदात्तनिवृत्तिस्वरेऽपि, इतरयोः फले विशेषः। '[1]ङित्' इत्यस्याऽपि उपदेशविशेषणत्वान्नेह--'श्रृणुतं जरितुर्हवम्'। अत्र श्नुः अतिदेशेन ङित्। नन्वनुबन्धानामनेकान्तत्वात्कथं चक्षिङोऽपि [2]ङिदन्तत्वमिति चेन्न। विशेषणसामर्थ्याद्भविष्यति।

चनस्यतमिति। चनः-अन्नम्, तदात्मन इच्छतीत्यर्थे[3] क्यच्। लोट्। थसस्तम्। शप्। स[4] च पित्त्वशित्त्ववैशिष्ट्येनाऽकारोपदेशे एव तात्पर्यात् अकारान्तोपदिश्यमानो भवत्येव। चित्स्वरोऽपीति। परत्वादिति भावः। 'मा हि धुक्षातामि'त्यादावातामो लसार्वधातुकानुदात्तत्वं बाधित्वा परत्वात् 'क्सस्याऽची'ति लोपेऽपि उपदेशग्रहणाल्लसार्वधातुकाऽनुदात्तत्वेऽपि उदात्तनिवृत्तिस्वरेण सिद्धमित्युक्तं प्राक्।

वर्द्धमानमिति। मुक् तु अकारभक्तत्वात् 'यदागमाः' इति न्यायेन न तस्य व्यवधायक इति न दोषः। न च वर्णग्रहणे तदप्रवृत्तिः। 'अकारान्तोपदिश्यमानादि'[5]त्यर्थेनेह वर्णग्रहणाऽभावात्। 'यक्ष्यमाणः'[6] इत्यादावपि अवयवाऽवयवस्य समुदायाऽवयवत्वान्न मुक् तस्य[7] व्यवधायक इति बोध्यम्। 'क्वचिद्वर्णग्रहणेऽपि तदप्रवृत्तेर्न दोष' इत्यपरे।

ननु 'पच् झि' इति स्थिते आयन्नादिषूपदेशिवद्भावात् अन्तौ, शपि, लसार्वधातुकाऽनुदात्तत्वं बाधित्वा, नित्यत्वादन्तरङ्गत्वाद्वा 'अतो गुणे'

---

१ 'ङित इत्यस्याऽपि' इति लघुशेखरे पाठः।

२ 'ङान्तत्वम्' इति ख.ङ. पाठः।

३ 'इच्छतम् इत्यर्थे' इति लघुशेखरपाठस्तु शोभनः।

४ 'स च अनुबन्धस्य अनेकान्तत्वात् अकारान्तोपदेशो भवत्येव' इति ख. ङ. पाठः।

५ 'अकारान्तोपदेशादित्यर्थेन' इति ख. ङ. पाठः।

६ 'वक्ष्यमाणः' इति लघुशेखरे पाठः।

७ 'न मुक् स्यस्य' इति लघुशेखरपाठः। स च शोभनः।

इति कृते, व्यपवर्गाऽभावात्, एतत्स्वराऽप्राप्तिः। अन्तवद्भावस्तु उभयत आश्रयणे निषिद्धः। 'पचत' इत्यादौ सावकाशत्वात् भूतपूर्वगतिर्न युज्यते इति चेत्। अत्राहुः–कृति तुग्ग्रहणेनाऽसिद्धपरिभाषाया अनित्यत्वात्, एकादेशात्परत्वात्स्वरप्रवृत्त्याऽदोषात्। न चैवमप्येकादेशो नित्यः। 'स्वरभिन्नस्य प्राप्नुवन् विधिरनित्य' इति तस्याऽप्यनित्यत्वात्। ध्वनितं चेदं 'यद्धितुपरमि'ति सूत्रे भाष्ये। अत एव 'पचन्ति ते वृषभानि'त्यादौ आद्युदात्तपाठः सङ्गच्छते। अन्ये तु 'तत्र च्छान्दसत्वात्तथा। लोके तु अनित्यत्वस्वीकारे मानाऽभाव' इत्याहुः। 'पचाव' इत्यादौ दीर्घे कृतेऽपि उपदेशग्रहणादिदं प्रवर्त्तते। 'पचेदि'त्यादावपि शपः परस्य यासुट्सहितस्य सार्वधातुकस्याऽनुदात्तत्वं भवत्येव। यासुट उदात्तत्वन्तु आशीर्लिङि, 'चिनुयादि'त्यादौ च सावकाशम्। 'अदुपदेशादि'ति तपरकरणात् 'क्रीणाती'त्यादौ लसार्वधातुकाऽनुदात्तत्वं न। 'प्रत्ययाऽप्रत्यययो'रिति परिभाषया नेह– 'जहि शत्रुमन्तिके'। एतत्परिभाषाप्रवृत्तये एव 'अकारान्तोपदिश्यमानादि'ति[1] व्याख्यातम्। अन्यथा वर्णग्रहणे सा न प्रवर्त्तेत। केचित्तु 'यस्माददुपदेशात्सर्वं लसार्वधातुकं संभवति तस्य ग्रहणम्। न हि जशब्दात् हेः अन्यत्सार्वधातुकं सम्भवती'त्याहुः।

ननु 'आस्ते' इत्यादौ लुप्तं शपं गृहीत्वा 'अदुपदेशादि'ति लसार्वधातुकाऽनुदात्तत्वं सिद्धमिति व्यर्थमनुदात्तेन्ङिद्ग्रहणमिति चेन्न। लुप्तं विकरणमादायाऽस्याऽप्रवृत्तिज्ञापनाऽर्थं तत्सत्त्वात्। तेन 'अत्तः' इत्यादि अन्तोदात्तं सिद्धम्।

प्रसङ्गात्किञ्चिदुच्यते–'रुणद्धी'[2]त्यादौ श्नमि कृते श्नमः प्रत्ययाऽऽद्युदात्त-

---

१ 'अकारान्तोपदेशादिति' इति ख. ङ. पाठः।

२ 'रुणद्धि'इत्यादौ श्नमि कृते तन्मध्यपतितन्यायेन विशिष्टस्य धातुत्वाद्धातुस्वरेणाऽन्तोदात्तत्वमिति 'येन विधिरि'ति सूत्रे भाष्ये स्पष्टम्। श्नमो मित्त्वेन 'परश्चे'ति परत्वस्य तत्राऽप्रवृत्तौ, तत्सन्नियोगशिष्टाद्युदात्तत्वस्यापि

त्वम् । ननु 'आगमा अनुदात्ता' इत्यस्य बाध्य-सामान्यचिन्ताऽऽश्रयणेन सर्वस्वराऽपवादकताया आकरे उक्तत्वात्कथमत्र प्रत्ययाऽऽद्युदात्तत्वमिति चेन्न। तस्योत्पत्तिसंनियोगेन जातत्वात्। न च पश्चात् तेन अनुदात्तत्वमस्तु । 'आगम'पदेन प्रत्ययत्वाऽनाक्रान्ताऽऽगमस्यैव ग्रहणात्। अत एव श्नम्विधौ उपस्थितम् 'आद्युदात्तश्चे'ति सार्थकम् ।

वस्तुत 'आगमा अनुदात्ता' इति नाऽस्त्येव। किन्तु शेषनिघातः फलिताऽर्थकथनमेवे'त्युक्तं प्राक्। तस्य च नाऽत्र प्राप्तिः। प्रत्ययस्वरेण आद्युदात्ततायाः प्राप्तेः। एतेन 'येन विधिरि'ति सूत्रे यत्कैयटे 'अत्राऽऽगमाऽनुदात्तत्वेन प्रत्ययस्वरस्य बाधात्सतिशिष्टधातुस्वरेणेष्टसिद्धिरि'त्युक्तं, तत्परास्तम्। परत्वात्पूर्वं प्रवृत्तधातुस्वरस्य पुनरप्रवृत्तेश्चेति दिक्।

न चैवं 'रुन्द्धः' इत्यत्र पूर्वोक्तरीत्या श्नम उदात्तत्वे, वर्ज्यमानस्वरेण तसोऽनुदात्तत्वं स्यादिति वाच्यम्। 'सतिशिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधते' इत्युक्तेरदोषात्। 'स्वरविधावि'त्यस्य प्रवृत्त्या उदात्तानिवृत्तिस्वरेण अप्राप्तेश्च।

हत इति। 'अनुदात्तोपदेशे'ति नलोपे कृते हन्तिरदन्तो, न तूपदेशे। **निघ्नाना इति**। 'निघ्न'शब्दान्नामधातोश्चानश्। मुगभावः छान्दसत्वात्, आगमशास्त्राऽनित्यत्वाद्वेत्याहुः। 'दीव्यमान' इत्यपि प्रत्युदाहरणम्।

न च सतिशिष्टश्यनस्वरेण चानश्स्वरस्य बाधाऽऽपत्तिः, विकरणस्वरो लसार्वधातुकस्वरमेव न बाधते, इतरसार्वधातुकस्वरन्तु बाधतेवेति वाच्यम्। 'आत्ममाने खश्चे'ति सूत्रे सार्वधातुकस्वरमात्राऽबाधकत्वस्यैव भाष्ये व्यवस्थापितत्वादिति दिक्।

**विदीन्धि**। एभ्यो लिङ्स्तङोऽनुदात्तत्वे प्रतिषिद्धे, 'इन्धीते'त्यादौ प्रत्ययाऽऽद्युदात्तत्वे, तेन श्नमः स्वरे बाधिते, सीयुट आगमत्वादनुदात्तस्य

---

तत्राऽप्रवृत्तिरिति, शेषनिघातेन तस्याऽनुदात्तत्वे प्राप्ते, सतिशिष्टो धातुस्वरस्तत्रेष्टव्य इति तदाशय' इति तु लघुशेखरे पाठः।

१ 'प्राप्तेश्च' इति ख. पाठः।

उदात्तत्वाऽभावे, प्रत्ययाद्युदात्तत्वेन व्यवस्था। ननु 'तास्यनुदात्तेदि'तिसूत्र-भाष्ये 'एभ्यः[1] परस्याऽनुदात्तत्वं भवती'त्यर्थो लभ्यते, तत्कथं निषेध आरभ्यते, इत्यत आह—**एतच्चेति**। एवञ्च तद्भाष्यविरोधात्[2] प्रकृतसूत्रस्थं भाष्यं प्रौढिवाद इति भावः।

**आदिः सिचो**। प्रत्ययस्वराऽपवादोऽप्ययम्, परत्वात् 'चितः' इत्येतं बाधते। **यासिष्टमिति**। पक्षे 'चितः' इति मध्योदात्तम्। एवं 'मा हि कार्ष्टामि'त्यादौ एतदभावे प्रत्ययस्वरेणाऽन्तोदात्तत्वम्, सिचश्चित्त्वेन (अङ्गभूत-)[3]'अनुदात्तं पद'मिति परिभाषालब्धाऽऽगमाऽनुदात्तत्वबाधेऽपि, सार्वधातुकस्वरस्य प्रत्ययाऽऽद्युदात्तत्वस्य बाधे मानाऽभावात्। विकरण-स्वरस्य सार्वधातुकस्वराऽबाधकत्वाच्चेत्याहुः।

'अनिटः सिचः परस्य पित उपसङ्ख्यानम्'। 'मा हि कार्षम्'। पक्षे आद्यु-दात्तम्। पक्षेऽन्तोदात्तम्। न च 'मा हि कार्षीदि'त्यत्राऽपि ईटः पिद्भक्तस्याऽयं स्वरः प्राप्नोति। आगमाऽनुदात्तत्वस्य सर्वबाधकत्वमि'ति 'च्लेसिजि'ति-सूत्रे **कैयटोक्तेः**। किञ्च ईटः पूर्वमन्तरङ्गत्वात्स्वरे कृते, तत ईटि, 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरप्रवृत्तिः। अत एवाऽत्र भाष्ये 'मा हि कार्षमि'-त्येवोदाहृतमिति दिक्।

**थलि च सेटीड**। अत्र 'अच इति वर्त्तते' इति भाष्ये स्पष्टम्। 'अज-न्तेभ्यो विहितो यस्थल् सेट्, तदन्ते पदे इट्, अन्तः, आदिश्च उदात्ता वा स्युरि'त्यर्थः। पक्षे लित्स्वरः। 'आदिर्णमुली'त्यतोऽन्यतरस्यामित्यनुवर्त्तमाने वाग्रहणं कार्यिविकल्पाऽर्थं सत् आदेरपि कार्यं प्रापयतीत्याह—**आदिर्वेति**। 'अन्यतरस्यामि'त्यनुवृत्तेः फलमाह—**यदेति**। **पर्यायेणेति**। न तु युगपत्। 'अन्तश्च तवै' इत्यादौ युगपद्ग्रहणाल्लिङ्गात्। थलि किम्?। 'लुलविव'। सेटीति किम्?। 'पपाथ'। इट्ग्रहणन्तु यदा इडागमस्तदा तस्योदात्ताऽर्थं

१　'एभ्यः' इत्यस्य स्थाने 'विदीन्धिखिदिभ्यः'इति लघुशेखरे पाठः।

२　'तद्भाष्यविरोधात् इदं भाष्यम्'इतिख. ङ. पाठः। ३ लघुशेखरेऽयं नास्ति।

स्यात् । ततश्च यथा 'लुलविथे'त्यादौ चतुर्णाम्, 'पपिथ' इत्यादौ त्रयाणाम्, एवमिडभावेऽपि स्यात् । सेट्ग्रहणात्तु सेट्येव भवति । एवञ्च 'पपाथे'-त्यत्र लित्स्वर एव । अजन्तेभ्यः किम् ? । 'बिभेदिथ' । 'पपिथे'त्यादौ परत्वात् आतो लोपे, अजन्तात्परो नास्तीति 'विहित' इत्युक्तम् ।

**उपोत्तमं रिति** । प्रत्ययस्वराऽपवादोऽयम् । **आहवनीये** बाहुलकात् अधिकरणेऽनीयः । प्रीणनार्थात् कर्मणि वा । ततो गतिसमासे कृदुत्तरपद-प्रकृतिस्वरः ।

इति प्रत्ययस्वराः ॥

## अथ समासस्वराः ।

**समासस्य** । **यज्ञश्रियमिति** । षष्ठीतत्पुरुषः । श्रीशब्देकारस्योदात्तत्वे, आन्तरतम्यादियङपि उदात्तः । हल्स्वरप्राप्तौ व्यञ्जनस्याऽविद्यमानवद्भावात् 'राजदृषदि'त्यादौ षकाराऽकार उदात्तः । पर्यायेण नानापदानां स्वरे प्राप्ते, अयमारम्भः । **उदात्तस्वरितयोगीति** । 'उदात्तस्वरित'ग्रहणमनुवर्त्त-मानं तद्वति वर्त्तते । पूर्वपदसामानाधिकरण्यात् । एवञ्च पूर्वपदस्य प्रकृति-भावः तत्स्थयोः उदात्तस्वरितयोः प्रकृतिभावद्वारेणेति भावः । यद्वा पूर्वपदस्थेऽचि 'पूर्वपद'शब्दो वर्त्तते । इदं 'कुगती'त्यत्र कैयटे स्पष्टम् ।

**चित्रश्रव इति** । 'चित्रं—श्रूयते इति श्रवः कीर्त्तिर्यस्येति चित्रश्रवाः' । ततस्तमप् । बहुव्रीहाविति किम् ? । 'राजपुरुषः' । पूर्वसूत्रन्तु 'समपादः' इत्यत्र उदात्तस्वरिताऽयुक्तपूर्वपदके सावकाशम् । **समपाद इति** । सम-शब्दः 'त्वत्त्वसमसिमेत्यनुच्चानी'त्यनुदात्तः । **हरदत्तस्तु** 'सूञो डमप्' इत्याह । पादशब्दो वृषादित्वादाद्युदात्तः । नन्वत्राऽस्मिन्स्वरे सत्यपि

१ अपिः ख. ङ. नास्ति ।

२ 'श्रूयते इति श्रवः—कीर्त्तिः । 'चित्रं श्रवो यस्ये'ति चित्रश्रवाः' इति तु लघुशेखरे पाठः ।

समासाऽन्तोदात्तत्वं भविष्यति। 'प्रियविश्व' इत्यादौ तु न, एकपदे द्वयोरुदात्तयोः असमावेशस्योक्तत्वेनाऽसम्भवादिति चेन्न। 'सत्यपि सम्भवे बाधनं भवती'त्यङ्गीकारात् अदोषः। अन्यथा उदात्तस्वरितयोः समावेशाऽभावे ज्ञापकाऽभावात् 'मनुष्यनाथ' इत्यत्रोभयोः समावेशः स्यादित्याहुः।

**तत्पुरुषे**। तुल्यश्वेत[2] इति। तुल्यशब्दो यदन्त आद्युदात्तः। **मन्दयत्सखमिति**। मन्देर्ण्यन्ताल्लटः शत्रादेशः। तस्य छान्दसत्वादार्द्धधातुकत्वेन शबभावात् 'अदुपदेशादि'ति निघाताऽभावे, प्रत्ययाऽऽद्युदात्तत्वमेव। णिलोपस्तु न, तं प्रति सार्वधातुकत्वाऽऽश्रयणात्। छन्दसि दृष्टाऽनुविधानान्न वैपरीत्यं शङ्क्यम्। इत्थं मन्दयच्छब्दोऽन्तोदात्त.। ([3]ततस्तत्पुरुषे टच्यपि ) छान्दसत्वादेवाऽत्र चित्स्वराऽभावः।

ननु 'परमं कारकं पश्य' 'परमेण कारकेण' 'परमे कारके' इत्यर्थे समासे अतिप्रसङ्गः, द्वितीयातृतीयासप्तम्यन्तपूर्वपदत्वात्। न हि विशेषणसमासः प्रथमाऽन्तानामेवेति नियमोऽस्तीति चेन्न। लक्षणप्रतिपदोक्तपरिभाषया द्वितीयादिशब्दोच्चारणेन विहितसमासस्यैव ग्रहणात्।

**शास्त्रीति**। गौरादिङीषन्तः।

**अव्यये नञ्कु**। 'निपातत्वादेव सिद्धे नञ्ग्रहणम् 'अकरणिरि'त्यादौ परस्याऽपि कृत्स्वरस्य बाधनाऽर्थमि'त्याहुः। 'अव्यथी'त्यत्र सतिशिष्टप्रत्ययस्वरबाधनाऽर्थम् , 'अतिस्त्र' इत्यत्र सतिशिष्टविभक्तिस्वरस्य, 'अचत्वार' इत्यत्र सतिशिष्टाऽऽम्स्वरस्य च बाधनाऽर्थमित्यन्ये[4]। ( भाष्ये[5] त्वेतदर्थं वचनान्येवाऽऽरब्धानि 'अनुदात्तं पदमि'ति सूत्रे। )

कुग्रहणं चादिषु पाठाऽभावात्। केचित्तु 'चादिष्वेव कुः पाठ्यः, इह तु न पाठ्यः, एवञ्च अव्ययत्वमपि तस्य सिद्ध्यती'त्याहुः।

---

१ 'चित्रं–श्रूयते इति श्रवःकीर्त्तिर्यस्येति चित्रश्रवाः' इति ख. ङ. पाठः।

२ 'तुल्यमहानिति' इति ख. ङ. पाठः। 'तुल्यश्वेत इति' इति लघुशेखरे।

३ अयं लघुशेखरे पाठः। ख. ङ. नास्ति।

४ 'इत्येके' इति लघुशेखरे पाठः।

५ अयं पाठः ख. ङ. नास्ति।

**स्नात्वेति**। अत्र समासाऽन्तोदात्तत्वमेव। 'न च मयूरव्यंसकादिषु एव अस्याऽन्तोदात्तत्वं निपात्यतां, किमनेनेति वाच्यम्। 'सामिकृतम्' 'स्वयन्धौतमि'त्यादिवारणाय परिगणनस्य आवश्यकत्वादि'ति **कैयटादयः**।

**भाष्यकृता** तु अन्तोदात्तत्वनिपातनमाश्रित्य परिगणनं प्रत्याख्यातम्। तस्याऽयं भावः—'सामिकृतम्','स्वयन्धौतमि'त्यादौ परिगणनवादिनाऽपि दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वमिष्यते एवे'ति। **मुहूर्त्तसुखमिति**। 'कालाध्वनोरि'ति द्वितीया। 'कष्टश्रिते'त्यादौ 'अहीने द्वितीये'ति भाव्यम्, '**वनाऽतीत**' इत्यादौ थाथादिस्वरः,'**ग्रामगमी**'त्यादौ णिनिस्वरः, **खट्वारूढे**-त्यत्र 'प्रवृद्धादीनाञ्चे'ति। तस्मान्मुहूर्तसुखादीन्येवोदाहरणानीति भावः।

**भोज्योष्णमिति**। 'कृत्यतुल्ये'ति समासः। कृत्यांऽशे तु लक्षणप्रतिपदोक्तपरिभाषा न[1] प्रवर्त्तते इति तु निरूपितमस्माभिः 'कृत्यतुल्ये'तिसमास-विधायके समासप्रकरणे। **कृष्णसारङ्ग इति**। कृष्ण–लोहितौ 'वर्णानां तणे'त्याद्युदात्तौ। वेदे तु 'कृष्णस्याऽमृगाख्या चेदि'ति कृष्णोऽन्तोदात्तः।

अत्र सूत्रे एकं 'वर्ण'ग्रहणं व्यर्थम्, 'वर्णो वर्णेने'ति प्रतिपदोक्त-समासग्रहणादित्याहुः। **अरित्रगाधमिति**। अरित्रं–नौकाष्ठं, तस्य गाधम्। तेन स्पृश्यमानतलमित्यर्थः। षष्ठीसमासा एते।

**दायाद्यम्**। दीयते स दायः=अंशः। तमादत्ते 'दायादः'। तस्य भावो दायाद्यं=दायाऽऽदानं, तत्संबन्धो वा। प्रकृते तु लक्षणया 'दायाद्य'शब्दः आदीयमाने दाये एव वर्त्तते। यद्वा 'दायादमर्हती'त्यर्थे दण्डादित्वाद्यत्। स चोपस्थितत्वात्पूर्वपदार्थभूतो दाय एवेति बोद्धव्यम्। 'धनस्य दायादः' इति 'स्वामीश्वरे'ति संबन्धसामान्यषष्ठ्यन्तेन समासः। **परमदायाद इति**। अत्र समासाऽन्तोदात्तत्वमेव। **गमनचिरमिति**। विशेषणसमासः, ल्युडन्तस्य भाववाचित्वात्। चिर-कृच्छ्रयोः काल–कष्टवाचित्वेऽपि, प्रकृते चिरकालभाविनि, चिरकृच्छ्रयोगिनि चाऽर्थे चिर-कृच्छ्रयोर्वर्त्तनात्

1 'न प्रवर्त्तते इति कश्चित्' इति लघुशेखरे पाठः।

सामानाधिकरण्यम् । एवञ्च चिरकृच्छ्रयोः पूर्वनिपातः प्राप्नोतीत्यतो मयूरव्यंसकादिसमासोऽत्रेत्याहुः । 'षष्ठीसमास' इत्यन्ये । **प्रतिबन्धि जायत इति** । 'कार्यसिद्धेः प्रतिबन्धकं जायते' इत्यर्थः । '**प्रतिबन्धि**'-शब्दे—आवश्यके णिनिः । **मूत्रकृच्छ्रमिति** । षष्ठीसमासोऽयम् ।

**मूत्रपदेनेति** । 'मूत्रमिषेणे'त्यर्थः । उच्चारः–पुरीषक्रिया । **मूत्रशब्दो घञन्त इति** । 'सिविमव्योष्ट्रेरू चे'ति ष्ट्रन्प्रत्ययाऽन्तोऽयमि'**त्यन्ये** । **वातत्राणे इति** । 'वातत्राणाऽर्थे तत्पुरुषे' इत्यर्थः । **निवाते इति** । 'वाताऽभावो निवातम्, निरुद्धो वातो यस्मिन्नि'ति वा । **कुटीनिवाता इति** । आद्ये कुट्यादिहेतुकेऽर्थे वर्त्तमानाः कुट्यादयो निवातशब्देन समानाधिकरणाः।अन्त्ये तु स्पष्टमेव तत् । **राजनिवाते इति** । 'राजपार्श्वे' इत्यर्थः । षष्ठीसमासोऽयम् । **रज्जुशारदमिति** । शारदशब्दो नूतनाऽर्थे रूढः । अस्वपदविग्रहः कर्मधारयः । रज्जुशब्दो रज्जुबद्धपात्रोद्धृते वर्त्तते । इदानीमेव कूपादुद्धृतम्, नवं जलमित्यर्थः । **आद्युदात्त इति** । 'सृजेरसुम् सलोपश्चे'त्यत्र[1] 'उः' 'निदि'त्यधिकारात् । **उत्तमशारदमिति** । 'शरदि भवमि'त्यर्थः । **कठाध्वर्युरिति** । कर्मधारयोऽयं चरणविशेषे रूढः । **दौवारिककषायमिति** । रूढिशब्दोऽयम् । कषायोऽर्द्धर्चादिः । **सादृश्ये इति** । 'सादृश्यवाचिनि तत्पुरुषे' इत्यर्थः । 'पितृ'शब्दोऽन्तोदात्तः, तृजन्तत्वात् । तृतीयासमासेन[2] 'तत्पुरुषे तुल्याऽर्थे'त्यनेनैव सिद्धे, इदं 'दास्याःसदृशः' इत्यलुक्समासाऽर्थम् । 'पितृसदृश' इत्यादौ षष्ठीसमासस्तु अनभिधानान्नेत्यपि वक्तुं शक्यम् । एवञ्च 'दासी'शब्दस्याऽन्तोदात्ततया 'उदात्तयणः'इति विभक्तिरुदात्तेत्यादि 'पूर्वसदृशे'त्यत्र निरूपितम् ।

**न[3] सादृश्यमिति** । 'यत्र हि प्रतियोगिविशेषसमर्पणाऽर्थं पूर्वं पदं, तत्रैवेदमि'ति सादृश्यग्रहणसामर्थ्यादाश्रीयते इति भावः । **परमसप्त-**

१ 'इत्यत्र निदित्यधिकारात्' इति ख. ङ. पाठः ।

२ 'तृतीयासमासे' इति लघुशेखरे पाठः ।

३ 'न सादृश्यमिति' इति ख. ङ. नास्ति ।

**सममिति** । समाहारे द्विगुः, उपसर्जनत्वात् ह्रस्वः । पात्रादित्वात् स्त्रीत्वाऽभावः । 'परमसप्तसम'[1] इति तु अपपाठः । **वाणिज इति** । वणिगेव वाणिजः । प्रज्ञादित्वादण् । **सप्तमीसमास इति** । इदं च 'मद्रवाणिजः' इत्यत्र । 'मद्रेषु गत्वा व्यवहरती'त्यर्थः । न चैवं सप्तमीपूर्वपदप्रकृतिस्वरेणैव सिद्धे, 'गन्तव्य'ग्रहणमत्र व्यर्थमिति वाच्यम् । योगविभागलब्धस्य,[2] 'सुप्सुपे'ति लब्धस्य वा समासस्य प्रतिपदोक्तत्वाऽभावादिति भावात् । 'षष्ठीसमासाऽर्थमावश्यकस्य परत्वात्तत्राऽपि प्रवृत्तिरित्याशय' इत्यन्ये ।

**मात्रोपज्ञो । नपुंसके इति** । 'नपुंसकवाचिनि तत्पुरुषे' इत्यर्थः । **तुल्यप्रमाणमिति** । 'मात्र'शब्दो वृत्तिविषये तुल्यप्रमाणे वर्त्तते इति भावः । अस्वपदविग्रहः षष्ठीतत्पुरुषः ।

**सुखप्रिययोर्हिते** । यदायत्यां प्रीतिकरं तत् हितम् । **गमनसुखमित्यादि** कर्मधारयः । गमनस्य विशेषणत्वात् पूर्वनिपातः, मयूरव्यंसकादित्वाद्वा ।

**प्रीतौ च** । सुख-प्रिययोः प्रीत्यव्यभिचारादिह यत्प्रीतिग्रहणं, तत् प्रीत्यतिशयप्रतिपत्त्यर्थम् । योगविभागो यथासङ्ख्यनिवृत्त्यर्थः ।

**पत्यावैश्वर्ये** । 'ऐश्वर्यवाचिपतिशब्दे उत्तरपदे पूर्वपदं तथे'त्यर्थः । **गृहपतिरिति** । 'गेहे कः' इति कप्रत्ययाऽन्तो 'गृह'शब्दोऽन्तोदात्तः । **दमे इति** । गृहे इत्यर्थः । ऐश्वर्ये किम् ? । 'वृषलीपतिः विप्रः' । तद्भर्त्तेत्यर्थः ।

**न भूवा** । सूत्रे समाहारद्वन्द्वः । **भूपतिरित्यादयः** षष्ठीतत्पुरुषाः, अन्तोदात्ताः । त्रयः क्विबन्ताः । अन्त्य 'ऊ'प्रत्ययाऽन्तः ।

**वा भुवनम्** । 'पत्यावैश्वर्ये' इति प्राप्ते विकल्पोऽयम् । **अस्तित्वाध्यवसाय इति** । 'तद्विषयकोत्कटकोटिकज्ञानमि'[3]त्यर्थः । **गमनमाशङ्क्यत इति** । 'सम्भाव्यते' इत्यनेनाऽन्वेति । विशेषणसमासाः सर्वे । लित्स्वरः ।

---

१ 'परमसप्तम' इति ख. पाठः ।

२ 'योगविभागलब्धस्य' इति, 'वा' इति च । ख. ङ. पाठः ।

३ 'तद्विषयोत्कटकोटिक' इति ख. ङ. पाठः ।

**पूर्वे भूतपूर्वे** । 'भूतपूर्वोऽर्थे पूर्वशब्दे उत्तरपदे' इत्यर्थः । **आढ्यपूर्वे इति** । आङ्पूर्वात् ध्यायतेः कः । पृषोदरादित्वात् ढः । 'आढ्य'शब्दः थाथादिस्वरेणाऽन्तोदात्तः । विशेषणसमासः ।

**सविधसनी** । 'सामीप्याऽर्थेषु एतेषूत्तरपदेष्वि'त्यर्थः । सविधादयः-समीपे रूढाः । **मद्रो** रगन्तः, अन्तोदात्तः । **गान्धारिः**–'कर्दमादीनाञ्चे'-'त्याद्युदात्तः, मध्योदात्तो वा । **कश्मीरो**–'लघावन्ते' इति आद्यदात्तः, मध्योदात्तो वा । सविधादिषु किम् ? । 'मद्रसमीपम्' ।

**विस्पष्टादीनि** । 'गुणवचनेषु परेषु विस्पष्टादीनि प्रकृत्ये'त्यर्थः । अत्र विस्पष्टादीनि प्रवृत्तिनिमित्तस्य विशेषणानि, न द्रव्यस्य । 'कटुकादिशब्दैः गुणवद्द्रव्यमभिधीयते' इति सामानाधिकरण्याऽभावात् कर्मधारयाऽभावेऽपि मयूरव्यंसकादित्वात्समासः । तत्र **विस्पष्टे**—गतिस्वरः, **विचित्रे**-अव्ययस्वरः, **विचित्ते** बहुव्रीहिस्वरः । **व्यक्तो** गतिस्वरेण आद्युदात्तः, **सम्पन्नः** अन्तोदात्तः, **पटुर्**नित्त्वादाद्युदात्तः, **पण्डितकुशलौ** अन्तोदात्तौ, **चपलनिपुणौ** अप्येवम् ।

**श्रज्याऽवम** । अत्र श्र-ज्य-कनामुत्तरपदत्वाऽसम्भवेन, सामर्थ्यात्तद्वतो ग्रहणम् । 'वदि'ति तु पापेनैव सम्बध्यते । एवञ्च 'श्रज्यकनित्यादेशवति, अवमशब्दे, पापशब्दवति चोत्तरपदे' इति पाठः । पाठाऽन्तरन्तु प्रामादिकम् । **गमनश्रेष्ठमि**त्यादौ मयूरव्यंसकादित्वात् विशेषणस्य परनिपातो, राजदन्तादित्वाद्वा । **गमनपापिष्ठमिति** । पापवच्छब्दादिष्ठन् । 'विन्मतोर्लुक्' । अन्यथा 'पाप'शब्दस्य गुणोपसर्जनद्रव्यवाचित्वाऽभावात् , ततः स न स्यादिति बोध्यम् ।

**कुमारश्च** । 'कुमारशब्दः पूर्वपदं तथा, कर्मधारये' इत्यर्थः । 'अत्र 'कुमारः श्रमणादिभिरि'ति समासस्यैव ग्रहणं, प्रतिपदोक्तत्वादि'ति **केचित्** । **अन्ये** तु 'सर्वकर्मधारयग्रहणम् । एवञ्च 'कुमारब्राह्मणः' इत्यादौ अपि प्रवर्त्तते' इत्याहुः । तत्त्वम् ईश्वरो वेद ।

1 'इति मध्योदात्तः' इति तु ख. पाठः ।

**आदिः प्रत्ये**। 'आदिरि'ति षष्ठ्यर्थे प्रथमा। 'कुमारशब्दः प्रकृतिस्वरेण यत्स्वरकः प्राप्तः, स स्वर आदेरि'ति सूत्रार्थः। फलितमाह—**कुमारस्यादिरिति**। एतेनोदात्ताधिकाराऽभावादिदमसङ्गतमित्यपास्तम्।

**पूगेष्व**। 'पूगो—गणः, तद्वाचिन्युत्तरपदे कर्मधारये कुमारस्य आदिरुदात्तो वे'त्यर्थः। **कुमारश्चेत्येवेति**। प्रतिपदोक्तग्रहणपक्षे समासाऽन्तोदात्तत्वं बोद्ध्यम्। **पञ्चारत्निरिति**। तद्धिताऽर्थे द्विगुः। 'प्रमाणे लो द्विगोर्नित्यमि'ति मात्रचो लोपः। 'पञ्चाऽरत्नयः' इत्यादौ अन्तरङ्गत्वात्पूर्वं स्वरः, पश्चाद्विभक्तिनिमित्तकार्यम्। नचाऽकृतव्यूहपरिभाषा[1]। स्थानिवत्त्वेन निमित्तविनाशाऽभावात्। न च 'स्वरे ने'ति निषेधः। लोपाऽजादेशस्यैव तेन निषेधात्।

'काल'ग्रहणेन कालवाचकानां ग्रहणं, तदाह—**दशमास्य[2] इत्यादि**।

**पञ्चकपाल इत्यादि**। 'पञ्चसु कपालेषु, भगालेषु संस्कृत' इत्यर्थे अणः[3] 'द्विगोर्लुगनपत्ये' इति लुक्। (**पञ्चश[4]राव इति**)। 'पञ्चसु शरावेषु उद्धृत' इति 'तत्रोद्धृतमि'त्यणो लुक्। (**पञ्चा[4]श्व इति**)। 'पञ्चभिरश्वैः क्रीत' इति 'अध्यर्द्धे'ति ठको लुक्।

**बह्वन्य**। 'इगन्ते'ति प्राप्ते विभाषेयम्। **स्वरितयोरिति भवतीति**। पक्षेऽन्तोदात्तत्वं बोद्ध्यम्। **पञ्चवितस्तिरिति**। मात्रचो लुक्, द्वयसचो वा।

**अकालादिति**। पञ्चमी प्रथमाऽर्थे। **ण्यान्त इति**। तेनाऽन्तोदात्त इत्यर्थः। **कृत्स्वरेणेति**। 'कृन्निमित्तकेने'त्यर्थः। तथा च थाथादिसूत्रेण बाधित इति फलितम्। त्रयाणां क्तान्तत्वात्, बन्धस्य घञन्तत्वादित्याहुः।

---

१ 'अकृतव्यूहपरिभाषा तु नाऽस्ति, अनित्या वे'त्यसकृदावेदितम्। किञ्च स्थानिवत्त्वेन निमित्तविनाशाऽभावात्, तत्सत्त्वेऽपि न दोषः' इति तु लघुशेखरे पाठः।

२ 'पञ्चमास्य इति' इति ख. ङ. पाठः।

३ 'अणः' इति सुबोधिनीतो गृहीतम्। ४. अयं पाठः ख. ङ. नास्ति।

**परिप्रत्युपा** । इत आरभ्य पञ्चसूत्राणि द्वन्द्वाऽव्ययीभावविषयाणि । **परित्रिगर्त्तमिति** । अत्र पर्यपयोः 'अपपरी वर्जने' इति कर्मप्रवचनीयत्वात्तद्योगे पञ्चमी । 'अपपरिबहिरि'त्यव्ययीभावः । **प्रतिपूर्वाह्णमिति** । 'लक्षणेनाऽभिप्रती' इति समासः । **उपपूर्वेति** । 'अव्ययं विभक्ती'ति समासः । **वर्ज्यमाना एव तयोरिति** । अतो न पृथक् उदाह्रियन्ते इति भावः । **अग्निं प्रतीति** । 'इति विग्रहे 'प्रत्यग्नि शलभाः पतन्ती'त्यादौ मा भूदि'त्यर्थः । क्वचित्तु तथैव पाठः । **लक्षणया**=शिनित्वाऽऽरोपेण । **राजन्यग्रहणमिति** । अन्धकवृष्णीनां राजन्यत्वाऽव्यभिचारादित्यर्थः ।

**सङ्ख्या** । अत्र पूर्वसूत्रात् 'द्वन्द्वे' इति वर्त्तते । **त्रयसादेश आद्युदात्त इति** । 'त्रयोदश च मे' इत्यादौ आद्युदात्तपाठादिति भावः । क्वचित् वृत्तिपुस्तके, मूलपुस्तके च **'अन्तोदात्त'** इति पाठो दृश्यते । तदा 'त्रयोदश च मे' इत्यादौ छान्दसत्वं बोध्यम् ।

**आचार्योप**[1] । 'अन्तेवासी'ति सूत्रे षष्ठीबहुवचनस्थाने प्रथमैकवचनम् । **पाणिनीयरौढीया इति** । 'पाणिनेः, रौढेश्च छात्रा' इत्यर्थः । 'तत्प्रोक्तम् अधीयते' इत्यर्थो वा । पाणिनेः गोत्रेञन्तत्वाऽभावात्, राढौ 'न द्व्यचः' इति निषेधाच्च, 'इञश्चे'त्यण् न । तेन 'वृद्धाच्छः' । **आचार्योपसर्जनग्रहणम्**—आचार्योपसर्जनाऽन्तेवासिग्रहणम् । **द्वन्द्वविशेषणमिति** । न तु पूर्वपदविशेषणम्, व्याख्यानादिति भावः । तत्फलमाह—**सकल इति** ।

**छान्दसेति** । 'छन्दोऽधीयते' इत्याद्यर्थः । द्वन्द्वे किम् ? । 'आपिशलप्रियः पाणिनीयः—आपिशलपाणिनीयः' ।

**कार्त्तकौ** । अत्र गणे विभक्त्यन्तपाठो वचनविवक्षाऽर्थः । कुः=भूमिः, तत्र जाताः 'कुजाः' । तान् पाति 'कुजपः' । 'कृतस्य, कुजपस्य च अपत्यम्' इत्यर्थे ऋष्यणन्तावेतौ–'कार्त्त-कौजपौ' । 'सावर्णि-माण्डूकेयौ' । 'अवन्त्यश्मकाः' । 'पैल-श्यामकर्णेयाः' । 'अत्र बहुवचनम् अविवक्षितमि'ति

१ 'आचार्योप । सूत्रे षष्ठीबहुवचनस्थाने प्रथमैकवचने'इति लघुशेखरे पाठः ।

वृत्तिकृत् । 'कपि-श्यामकर्णेयाः' । केचित्तु 'पैले-श्यापर्णेयाः' 'कपि-श्यापर्णेया' इति पठन्ति । 'शैतिकाऽक्ष-पाञ्चालेयाः' । अत्राऽपि बहुत्वम् अविवक्षितम् । 'कटुक-वार्चलेयाः' । 'वार्धलेया' इत्यन्ये पठन्ति । शाकल-शुनकाः, शाकल-शणकाः, शणक-बाभ्रवाः, आर्चा-ऽभिमौद्गलाः, कुन्ति-सुराष्ट्राः, वीति-सुराष्ट्राः, तण्डि-वतण्डाः, अविमत्त-कामविद्धाः, बाभ्रव-शालङ्कायनाः, बाभ्रव-दानच्युताः, कठ-कालापाः, कठ-कौथुमाः, कौथुम-लौगाक्षाः, स्त्री-कुमारम् , मौद-पैप्पलादाः, ( मौद-पैप्पलादाः ) । अस्य द्विःपाठः पक्षे समासाऽन्तोदात्तत्वाय । वत्स-जरन्तः, । सौश्रुत-पार्थिवाः । जरा-मृत्यू । याज्या-ऽनुवाक्ये । वृत् ।

क्षुल्लक । वृत्तावेषु 'तत्पुरुष' इति नाऽनुवर्त्तितम् । एवञ्चाऽव्ययी-भावाद्यसम्भवेऽपि, द्वन्द्वतत्पुरुषसाधारणानीमानि । युक्तं चैतत् । अन्यथा तत्पुरुषप्रकरणमध्ये 'परिप्रत्युपाऽपे'ति पञ्चसूत्री न कृता स्यात् । परन्तु बहुधा तत्पुरुषा एव एषूदाहरणमिति बोद्धव्यम् । क्षुल्लकेत्यादौ कर्मधारयौ । उष्ट्रसादीत्यादिः कर्मधारयः, षष्ठीसमासो वा ।

गोसाद इति । सदेर्घञन्तेन, ण्यन्तात् अणन्तेन वा समासः । तस्मादेव णिनौ–गोसादी । 'गोषु सीदति', 'गाः सादयती'ति वा विग्रहः । 'इणजादिभ्य' इति इणन्तः सादिरत्र गृह्यते' इत्यन्ये ।

कुरुगार्ह । एषां समानामिति । 'षण्णामि'ति क्वचित्कोऽपपाठः,

---

१ 'पैल-स्यापर्णेयाः' इति ख. ङ. पाठः ।

२ 'कपि-स्यापर्णेयाः' इति ख. ङ. पाठः ।

३ 'शाकल-शाणकाः' 'शाणक-बाभ्रवाः' इति तु लघुशेखरे पाठः ।

४ 'चिन्ति-सुराष्ट्राः' इति ख. ङ. पाठः । ५ 'कामबद्धाः' इति ख. ङ. पाठः ।

६ 'बाभ्रव-दानवच्युताः' इति ख. ङ. पाठः । ७ 'लौकाक्षाः' इति ख. ङ. पाठः ।

८ 'युक्तं चैतत्' इति लघुशेखरपाठः । औचित्यादत्राऽपि स्थापितः ।

९ 'इत्यादिः' इति लघुशेखरे नास्ति ।

**मनोरमाविरोधात्** । सप्ताऽपि भिन्नानि पदानि । आद्ययोः षष्ठ्याः सौत्रो लुक् । इतरेषां पञ्चानां षष्ठ्याः स्थाने प्रथमैकवचनम् । '**दासीभाराणा-मि**'ति–बहुवचननिर्देशात् आद्यर्थाऽवगतिरिति भावः । **उप्रत्ययान्त इति**। तथा चाऽन्तोदात्त इति भावः । केचित्तु तत्र 'निदि'त्यनुवर्त्तयन्ति । तन्न । 'इगन्तानाञ्च व्यषामि'त्यनेन कुरौ पर्यायेण उभयोरप्युदात्तत्वस्वीकारेण, फलाऽभावादित्याहुः । **वृजिः**–अपि एवम् । मूले तु प्रत्ययस्वरमात्रमुक्तम् । **रिक्तगुर्वादयः**—कर्मधारयाः । **असूतो** नञ्समासः, आद्युदात्तः ।

**अश्लीलेत्यादि** । श्रीर्यस्याऽस्ति तत् श्लीलम् । सिध्मादेराकृतिगणत्वाल्लच् । 'कृपो रो ल' इत्यत्र कपिलकादीनामुपसङ्ख्यानाल्लत्वम् । 'न श्लीलमि'ति-नञ्समासे, आद्युदात्तः 'अश्लील'शब्दः । अश्लीला चाऽसौ दृढरूपा च । लावण्यरहिताऽपि दृढरूपा । 'कुब्जत्वादिरहितत्वात् संस्थानमात्रेण शोभने'-त्यर्थः । **निपातनादिति** । 'पारेवडवेव' इत्यर्थः । 'पारेमध्ये' इत्यव्ययीभावस्तु न, सूत्रे दीर्घनिर्देशात्, वडवायाः पाराऽसम्भवाच्च । **तितिलिन इति** । 'तिलाः सन्त्यस्य तितिली' । पृषोदरादित्वात्तिशब्दस्य द्वित्वम् । अपत्ये 'नस्तद्धिते' इति टिलोपः । छात्त्राऽर्थे 'सब्रह्मचारी'त्यादिवचनेन टिलोपः । '**पण्यकम्बलः** कर्मधारयः । बहुलग्रहणात्समास' इत्युक्तं समासप्रकरणे ।

**केचित्तु**—'ननु द्वितीया कृत्या' इत्येव सिद्धमिति चेन्न । प्रतिपदोक्ते 'कृत्यतुल्याख्ये'ति समासे एव तत्प्रवृत्तेः । इह तु विशेषणसमासः । ननु 'अजात्ये'ति प्रतिषेधसामर्थ्याद्दुर्लभोऽसाविति चेन्न । 'अजात्ये'ति न जातिप्रतिषेधाऽर्थं, किन्तु न्यायसिद्धार्थाऽनुवादकमात्रम् । तत्फलन्तु गुण-क्रियावाचिनाम् अनियमेन पूर्वनिपाते प्राप्ते, कृत्याऽन्तस्य पूर्वनिपाताऽर्थं सूत्रमिति व्युत्पादनमि'त्याहुः । तत्र किं न्यायसिद्धत्वमिति चिन्त्यम् ।

---

१ 'कुप्रत्ययान्त इति' इति तु लघुशेखरे पाठः ।

२ 'न श्लीलेति' इति ख. ङ. पाठः ।

३ 'तिलाः सन्त्यस्य तिली' इति लघुशेखरे पाठः ।

४ 'पूर्वनिपाते प्राप्ते, तन्नियमार्थं सूत्रमिति व्युत्पादनम् । स्पष्टं चेदं वृत्त्यादा-

स्पष्टञ्चेदं वृत्त्यादावित्याहुः। **सञ्ज्ञायामिति**। नियमाऽर्थमिदम्। तदाह–**अन्यत्रेति**। 'प्रतिपदोक्त' इत्यादि तु वृत्त्यनुरोधेन। तेन सोऽपि न भवतीति तद्भावः।

[1]वस्त्वर्थस्तु समासप्रकरणे 'कृत्यतुल्ये'ति सूत्रे निरूपितः। दास्या भारो दासीभारः। **यस्य तत्पुरुषस्येति**। **केचित्तु** 'यस्य समासस्ये'त्येव वदन्ति। **यूपदार्विति**। यूप आद्युदात्तः, 'कुयुभ्याञ्चे'त्यत्र 'निदि'त्यनुवृत्तेः। प्रकृतिविकृतिभाव एवाऽयं स्वर इष्यते, 'अर्थे' 'क्ते च' इत्यनयोः आरम्भात्। तेन 'कुबेरबलिरि'त्यत्र न। तदर्थे किम्?। 'गोसुखम्'[2]। **देवार्थमिति**। 'देवाय इदमि'ति विग्रहः। तादर्थ्ये चतुर्थी।

**क्ते च**। प्रतिपदोक्तत्वात् हितरक्षिताभ्यां समासस्यैवाऽत्र ग्रहणम्। '**गोहितमि**'त्यत्र 'हितयोगे चे'ति चतुर्थी। एवं '**गोरक्षितमि**'त्यत्र तादर्थ्ये चतुर्थी।

**कर्मधारयेऽनिष्ठा**। अत्र प्रतिपदोक्त-श्रेण्यादि-(कृतोपकृतादि)[3]-समासस्यैव ग्रहणम्। तेन 'वैदिकपण्डित' इत्यत्र न। इदञ्च 'महान्व्रीही'ति सूत्रे भाष्ये स्पष्टम्। **कृताऽऽकृतमिति**। 'आकृतमि'ति च्छेदः। 'कृताऽपकृतादीनाञ्चोपसङ्ख्यानमि'ति प्रतिपदोक्तः[4] समासः। 'अकृतमि'ति च्छेदस्तु न युक्तः। तस्य क्तान्तोत्तरपदत्वाऽभावेनैवाऽप्राप्तेः। **अहीनवाचिनीति**। 'अविभागवाचिनी'त्यर्थः। थाथादिस्वराऽपवादोऽयम्। **अनुपसर्ग इतीति**। अनेनैव अतीतादिव्यावृत्तिसिद्धौ 'अहीने' इति व्यर्थमित्याहुः।

---

वित्याहुः। तन्न। स्वरविधायके 'कृत्यतुल्याख्ये'त्येव वक्तव्ये, कृत्यतुल्याऽर्थयोः वियोगपाठेन, अर्थपदघटितपाठेन च तदंशे परिभाषाया अप्रवृत्तेः। अत एव प्रकृतसूत्रे कृत्यप्रत्ययाऽन्तत्वात् पूर्वपदप्रकृतिस्वरे सिद्धे, 'पण्यकम्बलः संज्ञायामेव', ( 'संज्ञायां ) पण्यकम्बल एवे'ति वा नियमार्थमिदं विशेषणसमासे' इति भाष्यकैयटयोरुक्तम्' इति लघुशेखरे पाठः।

१ 'वस्त्वर्थस्तु' इत्यारभ्य 'निरूपितः' इत्यन्तः ख. ङ. पाठो लघुशेखरे नास्ति।

२ 'गोमुखम्' इति ख. पाठः। ३ अयं पाठो लघुशेखरे नास्ति।

४ 'प्रतिपदोक्तः' इति ख. ङ. नास्ति।

**तृतीया क**।-अयमपि थाथादिस्वराऽपवादः। नन्वेवम् इन्द्रपीताऽधिकरणे 'स्वरान्निर्णय' इत्यसङ्गतं स्यात्। तथाहि—'इन्द्रपीतस्योपहूतस्योपहूतो भक्षयामी'ति मन्त्रे 'इन्द्रपीत'शब्दः 'इन्द्रेण पीत' इति तृतीयातत्पुरुषेण सोमविशेषणम्,उत 'इन्द्रेण पीतो यस्मिन्सवने'इति बहुव्रीहिणा प्रातःसवनस्ये'ति सन्देहे, लघुत्वात्तत्पुरुष एव। एवञ्च इन्द्रदेवत्यसोमभक्षणे एवाऽयं मन्त्रः। अनेन इन्द्रदेवत्यस्य तु अमन्त्रकमेव भक्षणमिति **पूर्वपक्षः**। **सिद्धान्तस्तु** 'तत्पुरुषे सोमविशेषणे हुतशिष्टस्य भक्षणाऽर्थमुद्धृतस्य इन्द्रपीतत्वाऽभावेन, तदवयवे लक्षणा स्यात्। तस्माद्बहुव्रीहिः। एवञ्च तत्सवनसम्बन्धिसोमभक्षणमात्रेऽयं मन्त्रः। स्वराच्च बहुव्रीहिनिर्णय' इति। तदसङ्गतम्। तृतीयातत्पुरुषेऽपि 'तृतीया कर्मणी'त्यनेन पूर्वपदप्रकृतिस्वरस्यैव सत्त्वादिति चेन्न। देवताऽधिकरणन्यायेनाऽत्र पानाऽसम्भवात्पिबतिर्दानलक्षकः। एवञ्च 'इन्द्राय पीत' इति चतुर्थीतत्पुरुषः स्यात्। तत्र च नाऽस्य प्राप्तिरित्याशयात्। **त्वोतास इति**। त्वया **ऊताः**=रक्षिताः–त्वोतासः। 'प्रत्ययोत्तरपदयोश्चे'ति मपर्यन्तस्य त्वाऽऽदेशे,दकारलोपश्छान्दसः। अवतेः क्तः। 'ज्वरत्वरे'त्यूठ्।'एत्येधती'तिवृद्धेः, इडागमस्य चाऽभावः छान्दसः। पूर्वपदप्रकृतिस्वरे कृते 'एकादेश उदात्तेनोदात्तः'। ततः स्वरितः। **रथयात इति**। गत्यर्थत्वात्कर्त्तरि क्तः।

**गतिरनन्तरः**।'गतिः क्तिजन्तः, पुँल्लिङ्गाऽनन्तरपदसामानाधिकरण्यात्। निपातनात् अनुनासिकलोपः' इति **हरदत्तः**। 'गतिशब्दस्य तत्सञ्ज्ञकशब्दपरत्वान्न सामानाधिकरण्याऽनुपपत्तिरि'ति **कश्चित्**। **पुरोहितमिति**। 'पुरः'शब्दः 'असि'प्रत्ययस्वरेण अन्तोदात्तः। थाथादिस्वराऽपवादोऽयम्।

**अभ्युद्धृत इति**। इह 'हृत'शब्दस्य 'उत्'शब्देन समासे, 'पुरोहितमि'त्यत्रेव, गतिस्वरेण आद्युदात्तः 'उद्धृत'शब्दः। तस्य पुनः 'अभि'शब्देन समासः। अयमेव समासक्रमो भाष्यादिसंमत इति प्रागेव निरूपितम्।

तत्र 'कृद्ग्रहण'परिभाषया उद्धृतस्य क्ताऽन्तोत्तरपदत्वात्, अपवादक्रमेण समासाऽन्तोदात्तत्वे, तद्बाधकाऽव्ययपूर्वपदप्रकृतिस्वरत्वे, तद्बाधककृत्स्वरे,

तद्बाधकथाथादिस्वरे प्राप्ते,तमपोद्याऽयं प्राप्तः। ननु'अनन्तर'ग्रहणेऽपि असौ दुर्वारः, कृद्ग्रहणपरिभाषया उद्धृतस्य क्ताऽन्तत्वे, अभेस्तदानन्तर्यस्य सत्त्वादिति चेन्न। 'अनन्तर'ग्रहणसामर्थ्याद्धि धातोरनन्तरो गतिराश्रीयते, अभिश्च न तथेति[1] न दोषः। ननु अभिस्वराऽभावेऽपि 'अभ्युद्धृत'शब्दस्य थाथादिस्वरेणाऽन्तोदात्तत्वाऽऽपत्तिः। इष्यते तु उच्छब्दस्य स्वरः। 'संसृष्टं धनमुभयं समाकृतमि'त्यादिमन्त्रे 'समाकृत'शब्दे आङः स्वरदर्शनात्। न चाऽसौ प्रकृतसूत्रेण सिद्ध्यति, प्रथमसमासे तत्प्राप्तावपि, द्वितीयसमासे थाथादिस्वरप्रवृत्तेरुक्तत्वात्। न च तं बाधित्वा गतिस्वरः प्रवर्त्तते, 'अभ्युद्धृत'शब्दे उदः पूर्वपदत्वाऽभावात्। इति चेन्न। 'धातोरनन्तर' इति व्याख्यानादेव[2], पूर्वपदत्वं विनाऽप्यस्य प्रवृत्तिस्वीकारात्। अन्यथा धातुं प्रति गतित्वेन, तं प्रति पूर्वपदत्वाऽसम्भवेन, सूत्रार्थाऽसङ्गतेः। एवञ्च 'अभ्युद्धृ[3]तमि'त्यत्र पादादौ 'गतिर्गताविति' निघाताऽभावे, अपादादौ निघाते च, उद एव स्वरः। इदमेव 'अनन्तर'ग्रहणं कृद्ग्रहणपरिभाषाया ज्ञापकम्[4]।

नन्वेवमपि व्यवहितवारणेन 'धातोरनन्तर' इति व्याख्यानचारितार्थ्येन, कथं सतिशिष्टथाथादिस्वरबाधकत्वमिति चेन्न। 'अहीने द्वितीये'ति सूत्रात्'अनुपसर्ग'ग्रहणमत्राऽनुवर्त्त्य[5], तेनैव 'अभ्युद्धृतमि'त्यादौ अभ्यादेर्व्यावृत्तिसिद्धौ,'अनन्तर'ग्रहणात् कक्षान्तर-प्राप्तथाथादिस्वरबाधः। एवञ्चाऽत्र तत्सामर्थ्यात् 'पूर्वपदमि'त्यपि न सम्बध्यते इत्याहुः।

**कारकपूर्वस्य त्विति**। अयं भावः–'कारकाद्दत्ते'तिसूत्रे 'कारकादि'ति

---

१ 'अभिश्च तथेति दोषः' इति ख. ङ. पाठः।

२ इतोऽग्रे—'योगविभागेन 'अनन्तरो गतिः अपूर्वपदमपि प्रकृत्ये'ति व्याख्यानादेव वा' इति लघुशेखरे पाठः।

३ 'अभ्युद्धृतमित्यत्र उद एव स्वरः' इति तु लघुशेखरे पाठः।

४ 'ज्ञापकमित्यन्यत्र प्रपञ्चितम्' इति लघुशेखरे पाठः।

५ 'अनुवर्त्तते, तेनैव' इति लघुशेखरे पाठः।

योगो विभज्यते । 'क्त'ग्रहणं, 'गति'ग्रहणञ्चाऽनुवर्त्तते । 'कारकात्परं क्ताऽन्तं सगतिकम् उत्तरपदमन्तोदात्तं स्यादि'त्यर्थः । एवञ्च 'दूराद्गतमि'-त्यादौ थाथादिस्वरेण, कृत्स्वरेण वा सिद्धेः, इदं 'दूरादागत' इत्यादौ 'अभ्युद्धृत'न्यायेन प्राप्त-'गतिरनन्तरः'-इत्यस्य बाधनाऽर्थम् । एतेन 'उक्तरीत्या 'दूरादागते' इत्यादौ कारकपूर्वेऽपि गतिस्वरः स्यात्, इष्यते तु थाथादिस्वर' इत्यपास्तमिति दिक् ।

**तादौ च निति** । कृत्स्वराऽपवादोऽयम् । तकारादेर्नित्प्रत्ययस्य अकृतोऽभावात्, गतिग्रहणेन धातोराक्षेपेण तत्प्रकृतिकप्रत्ययस्यैव ग्रहणाच्च कृल्लाभे, कृद्ग्रहणं कृत्सञ्ज्ञाप्रवृत्तिकाले यः तकारादिः, तद्ग्रहणाऽर्थम् । तेन 'प्रलपिते'त्यादि सिध्यति । स्वरप्रवृत्तिवेलायां तादित्वाऽभावेऽपि, पूर्वं तत्सत्त्वात् । 'यस्मिन्विधिरि'त्येव सिद्धे 'आदि'ग्रहणं चिन्त्यप्रयोजनम् । **अनन्तर इति** । अत्राऽपि पूर्वसूत्रवदेव व्यवस्था बोध्या ।

**आगन्तुरिति** । ननु 'अतौ' इति पर्युदासः क्तिन एवोचितः, 'वृष्णे चोदस्व सुष्टुतिमि'त्यादौ गतिस्वराऽदर्शनादिति चेन्न । तत्रोपायान्तरस्यैवाऽनुसर्त्तव्यत्वात् । न हि 'अतौ' इति पर्युदासेन तन्निर्वाहः । कृदुत्तरप्रकृतिस्वरेण धातोरुदात्तताऽऽपत्तेः । अन्तोदात्ततायाश्च तत्रेष्टत्वात् । किञ्च 'अतौ' इति क्तिनः पर्युदासे 'प्रभूतौ सङ्गतिमि'त्यादौ गतिस्वरो न सिद्ध्येत् । तस्मात् तुन एवाऽयं पर्युदासः । यत्तु 'मन्क्तिन्व्याख्याने'त्यादिना सुष्टुत्यादौ अन्तोदात्तत्वमि'ति । तन्न । 'प्रभूतौ' इत्यादिसिद्धये तत्र कारकाऽनुवृत्तेर्न्याय्यत्वात् । वृत्तिकृता दर्शितत्वाच्च । 'वृष्णे चोदस्व सुष्टुतिमि'-त्यादौ तु स्तोत्रकरणीभूताया ऋचः 'साध्वसिरि'त्यादिवत्कर्तृत्वविवक्षायां क्तिजन्तत्वान्न दोषः ।

१ 'दूराद्भूत इत्यादौ' इत्यपि क्वचित्पाठः ।

२ 'दूराद्गतमित्यादौ' इति लघुशेखरे पाठः ।

३ 'मनिन्क्तिन्व्याख्याने'त्यादिना' इति ख. क. पाठः ।

**तवै चान्तः** । कृत्स्वराऽपवादः । **अन्त उदात्त इति** । [1]यद्यपि उदात्तग्रहणं दुर्लभं, तथाऽपि 'गतिः प्रकृत्या भवती'त्युक्ते, उदात्तो बुद्धिमारोहतीति, स एवाऽन्तस्य भवतीति भावः । **अनन्तर इति** । अत्रापि पूर्ववदेव व्यवस्था । **अन्वेतवा इति** । अनुः उपसर्गत्वात् आद्युदात्तः ।

**प्रत्यञ्च इति** । ननु 'अनिगन्तः' इत्युक्तावपि 'प्रत्यञ्च'[1] इत्यादौ यणि, अनिगन्तत्वात् एतत्प्रवृत्तिर्दुर्वारा । न च स्थानिवत्त्वम् । पूर्वपदस्य कार्यित्वेन अपूर्वविधित्वात् । 'अनिगन्त' इति तु 'प्रतीच' इत्येतद्व्यावृत्त्या चरिताऽर्थमिति चेन्न । 'इगन्तस्य यणादेशे कृतेऽपि प्रतिषेधः' इति वचनेनैव निर्वाहात् । एवञ्च 'प्रत्यञ्चः' इत्यादौ कृदुत्तरपदप्रकृतिस्वर एव ।

[2]अन्ये तु 'अनिगन्त' इति प्रसज्यप्रतिषेधः । एवञ्च स्वरसन्धेः पूर्वं पूर्वोत्तरपदनिमित्तकार्यप्रवृत्तेः, पूर्वप्राप्तस्य स्वरस्याऽनेन निषेधे, भ्रष्टाऽवसरत्वात्पुनः अप्रवृत्तिरिति न दोषः । अत एव 'न्यधी चे'ति चरिताऽर्थम् । अन्यथा यणि कृते स्वरभाजोऽभावात्, तद्वैयर्थ्यं स्पष्टमेवेत्याहुः ।

**परत्वादिति** । चुस्वराऽवकाशः–'सा कद्रीची' । अस्याऽवकाशः–'ये पराञ्चः' । उभयप्रसङ्गे परत्वात् अयमित्यर्थः । वस्तुतस्तु 'इष्टत्वादि'त्यर्थः । एतेनाऽस्मिन् समासस्वरे कृते, विभक्तौ,'अचः'इति लोपे कृते, सतिशिष्टत्वाच्चुस्वर एव प्राप्नोतीत्यपास्तम् । भाष्यकारेष्टथैव परिहारात् । 'अत्र 'चुस्वरादि'ति सतिशिष्टस्वरमात्रोपलक्षणमि'ति केचित् । **उदात्तस्वरितयोरिति** । [3]स्वरसन्धेः पूर्वं स्वरप्रवृत्तेरुक्तत्वात्, पूर्वम् एतस्मिन्स्वरे, पश्चाद्यणि, अस्य प्रवृत्तिः । **अध्यङ्ङिति** । अत्र 'उदात्तादनुदात्तस्ये'ति स्वरितः । एवम् 'अधीचा' इत्यत्राऽप्ययमेव स्वरः चुस्वरात् । कृत्स्वराऽपवादाविमौ योगौ ।

---

१ 'प्रत्यञ्चमित्यादौ' इति लघुशेखरे पाठः ।

२ 'अन्ये तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. ङ. पाठः । लघुशेखरे नास्ति ।

३ 'स्वरसन्धेः पूर्वं पूर्वोत्तरपदनिमित्तकार्यप्रवृत्तेः, पूर्वम् एतत्स्वरे, पश्चात् यणि' इति लघुशेखरे पाठः ।

**ईषद** । 'ईषदि'ति पूर्वपदं वा प्रकृत्ये'त्यर्थः। पक्षे समासाऽन्तोदात्तः। **कृत्स्वर एवेति** । 'ईषद्गुणवचनेने'ति प्रतिपदोक्तसमासस्यैव ग्रहणादिति भावः। अत एव बहुव्रीहावपीदं न। साहचर्याच्च। केचित्तु 'परत्वात्कृत्स्वर एवेत्यर्थ' इत्याहुः। **बहुव्रीहावपीति**। तत्पुरुषाऽधिकाराऽभावादिति भावः।

**प्रथमोऽचिरोप** । अचिरोपसंपत्तिः–अभिनवत्वम् । **प्रथमवैयाकरण इति**। 'वैयाकरणानाम् आद्यो मुख्य' इत्यर्थकसमासे, अयम् अन्तोदात्त एव।

**कतरकतमौ**–डतरडतमयोश्चित्त्वादन्तोदात्तौ । **प्रतिपदोक्तत्वादिति** । 'कतरकतमौ जाती'ति प्रतिपदोक्तस्यैव ग्रहणादित्यर्थः । **कर्मधारय इत्येवेति** । तेन 'आर्यस्य ब्राह्मण' इत्यर्थे न दोषः । **राजब्राह्मण इति** । आद्युदात्तो 'राजन्'शब्दः । पक्षे अन्तोदात्तत्वम् । 'राज'शब्दो ब्राह्मणे ताद्धर्म्याद्वर्त्तते इति सामानाधिकरण्यम् । षष्ठीसमासे अन्तोदात्तत्वमेव[1] । योगविभागो यथासङ्ख्यनिवृत्त्यर्थः, उत्तराऽर्थश्च ।

अत्र 'लिङ्गविशिष्ट'परिभाषा ने'ति 'ङ्याप्'सूत्रे भाष्ये स्पष्टम् । एवं समासरूपसमुदायग्रहणेऽपि सा न । तेन 'बहोर्नञ्वदि'ति सूत्रं 'बहुगोमती'त्यत्र न । **अन्यत्र नेति** । कर्मधारये इत्यर्थः ।

**क्ते नित्या**। **नित्यम्**–आभीक्ष्ण्यम् । **काला इति** । 'अत्यन्तसंयोगे चे'त्यस्याऽपि उपलक्षणमेतत् । **द्वितीयासमास इति** । द्वितीया अत्यन्त-संयोगे । 'कालभावाऽध्वगन्तव्याः' इति कर्मणि वा द्वितीया । पूर्वपद-प्रकृतिस्वराऽपवाद-थाथादिस्वरस्य पाक्षिकोऽपवादोऽयम् ।

**ग्रामः शिल्पिनि** । 'शिल्पिवाचिनि उत्तरपदे' इत्यर्थः । **ग्रामनापित इति** । षष्ठीसमासः । **राजनापित इति** । कर्मधारये राजगुणाऽध्यारोपेण उत्तरपदाऽर्थप्रशंसा । षष्ठीसमासे राजयोग्यतया । **अधिकारोऽयमिति** । 'अन्तः' इत्यतः प्राक् 'आदिरि'ति, 'प्रकृत्या भगालमि'त्यतः प्राक् 'उदात्त' इति च अधिक्रियते' इत्यर्थः । **धर्म्यमिति**। धर्मो नाम ग्रामजनपदकुलेषु

---

१ 'अन्तोदात्तत्वमेवेति' इति ख. ङ. पाठः ।

परम्पराऽऽयातः सदाचारः[1] । तस्मादनपेतं, तेन प्राप्यं वा—**धर्म्यम्** । 'आचारवशादवश्यं कार्यमि'त्यर्थः । **देयमिति**—प्रकृते व्याख्यानलभ्यम् ।

हारिण्युदाहरति—**याज्ञिकाश्व इति** । षष्ठीसमासाविमौ । 'हारी'त्यावश्यके णिनिः । हृञोऽत्र ग्रहणमर्थः । **वाडवहरणमिति** । हरणशब्दः कर्मसाधनः ।

**कृत्स्वरो हारिस्वरेणेति** । कृत्स्वराऽपवाद–'अनो भावकर्मवचनः' इति-स्वरबाधे कृत्स्वरबाधस्याऽपि फलितत्वादिति भावः । चित्स्वरात् हारिस्वरः परत्वात्–'मातुलगवः' । टचश्चित्त्वन्तु 'अतिगवे'[2] इत्यादौ चरितार्थम् ।

**युक्ते च** । युक्तः–समाहितः । 'युज समाधौ' इत्यस्य रूपम् । **गोवल्लव इति** । तत्परतया गवां पालक इत्यर्थः । कृत्स्वरात् , थाथादिस्वराच्च पूर्वविप्रतिषेधेन 'युक्ते चे'ति स्वर एवेष्यते–'गोद्विट्' । 'गोसङ्ख्यः' । 'समि ख्यः' इति कः ।

**विभाषाऽध्यक्षे** । 'अध्यक्ष'शब्दो युक्तवाच्येवेति प्राप्तविभाषेयम् ।

**पापञ्च शिल्पिनि** । 'शिल्पिवाचके परे' इत्यर्थः ।

**गोत्रान्ते** । आद्ययोरर्थग्रहणम् , अन्त्ययोः शब्दग्रहणम् । अपत्याऽधि-कारादन्यत्र लौकिकगोत्रग्रहणादाह—**सुश्रुतोऽपत्यस्येति** । माणवब्राह्मण-योर्गोत्रत्वेन प्रसिद्ध्यभावात् ग्रहणम् । **ओदनपाणिनीया इति** । ओदन-कामत्वेन तेषां क्षेपः ।

**अङ्गानि मैरेये** । 'सुराव्यतिरिक्तं मद्यं मैरेयम् , तद्वाचके उत्तरपदे तदर्थाऽऽरम्भकवाचीनि पूर्वपदानि आद्युदात्तानी'त्यर्थः । **आसवो**[3]–मद्यम् ।

**भक्ताख्यास्त** । 'भक्त'शब्दोऽत्र अदनीयवस्तुमात्रपरः[4] । **भिक्षाकंसा-दयः**—षष्ठीसमासाः । बहुवचनात् स्वरूपविधिनिरासे सिद्धे, आख्योक्तिः

---

१ 'सदाचारो धर्मः' इति ख. ङ. पाठः ।

२ 'अतिगवः' इत्यादौ' इति ख. पाठः ।

३ 'आसवो न मद्यम्' इत्यपि क्वचित्पाठः ।

४ 'अदनीयाऽन्नमात्रपरः' इति ख. ङ. पाठः ।

अ[1]न्नविशेषस्य भिक्षादेर्ग्रहणाऽर्थेत्याहुः। **क्रियामात्रमिति**। द्रव्यमित्यर्थः। **बहुव्रीहिरिति**। षष्ठीसमासे तु अन्तोदात्तत्वम्।

**गोबिडाल**। 'उपमानाऽर्थेषु एषु उत्तरपदेषु पूर्वपदमाद्युदात्तमि'त्यर्थः। **गवाकृत्येति**। एवं यत्र यथा उपमानभावः सम्भवति, तत्र तथा योज्यमिति बोध्यम्।

**अके जीवि**। 'जीविकाऽर्थे समासे अकप्रत्ययाऽन्ते उत्तरपदे पूर्वपद-माद्युदात्तमि'त्यर्थः। कृत्स्वराऽपवादः। दन्त[2]लेखनादिजीविकायाः समासे प्रवृत्तिनिमित्तत्वात्समासस्य जीविकाऽर्थत्वमित्याह—**य[3]स्येति**। अत्र यत् वक्तव्यं, तत् 'नित्यं क्रीडे'ति सूत्रे निरूपितम्।

'**प्राचामि**'ति प्राग्देशवर्त्तिषु लाक्षणिकमित्याह—**प्राग्देशवर्त्तिनाऽिति**। अजीविकाऽर्थमिदम्। '**उद्दालके**'त्यादौ 'नित्यं क्रीडे'ति समासः। **तव पु[4]ष्पेति**। षष्ठीसमासः।

**नियुक्त इति**। 'अधिकृत' इत्यर्थः। स च कस्मिंश्चित्कर्त्तव्ये तत्परो न भवतीति, 'युक्ते' इत्यनेन न सिध्यति।

**शिल्पिनि चा**। 'युक्ते चे'त्येव सिद्धे, कृञः प्रतिषेधाऽर्थं वचनम्।

**सञ्ज्ञायां च**। अत्र 'अणी'ति, 'शिल्पिनि चाऽकृञः' इति च[5] वर्त्तते। अयुक्ताऽर्थम्, अनियुक्ताऽर्थं, कृञः प्रतिषेधाऽर्थञ्च वचनम्।

**गोतन्ति**। 'पालशब्दे परे एते आद्युदात्ताः' इत्यर्थः। वत्सानां बन्धनरज्जुः—तन्तिः।

**णिनि**। 'णिन्यन्ते उत्तरपदे पूर्वमाद्युदात्तमि'त्यर्थः। अत्र सञ्ज्ञा-

---

१ 'आद्यविशेषस्य' इति लघुशेखरे पाठः। 'अत्र विशेषस्य' इति क्वचित्पाठः।

२ 'दन्तलेखनादि' इति लघुशेखरात्पूरितम्।

३ 'यस्येति। प्रतिपदोक्तत्वात् 'नित्यं क्रीडे'तिविहितसमासे एवेदम्। 'अक'ग्रहणं तु स्पष्टाऽर्थम्' इति तु लघुशेखरे पाठः।

४ 'तव पुष्पेत्यादौ' इति क्वचित्पाठः। ५ चकारः ख. क. नास्ति।

ग्रहणमनुवर्त्तते' इति 'व्रते' इति सूत्रे भाष्यादौ । तेन 'अश्राद्धभोजी'त्यादौ न । अत्र कृत्स्वर एव । उत्तरसूत्रस्थभाष्यात्तु 'नाऽनुवर्त्तते' इति प्रतीयते । तत्त्वं तु अत्र[1] ऋषयो विदुः । वस्तुत उत्तरसूत्रेऽपि 'संज्ञायामि'त्यस्य सम्बन्धे न कश्चिद्दोषः ।

**उपमानम्** । 'शब्दाऽर्थकधातुप्रकृतिके एव णिन्यन्ते परे' इत्यर्थः । **उष्ट्रक्रोशीति** । 'उष्ट्र इव क्रोशती'त्याद्यर्थे 'कर्त्तर्युपमाने' इति णिनिः ।

एवेति किम् ? । 'उपमानमेवे'त्येवं नियमो मा भूत् । तथा च 'साध्वध्यायी'त्यादौ पूर्वेण आद्युदात्तता न स्यात्, 'वृकवञ्ची'त्यत्र च स्यादिति बोध्यम् ।

**युक्तारोह्या** । एते समासा एव गणे पठ्यन्ते । **युक्तारोहीति** । 'एषु 'णिनी'त्येव सिद्धे 'युक्तादीन्येव पूर्वपदानि, आरोह्यादीन्येवोत्तरपदानी'त्येव पूर्वपदोत्तरपदनियमाऽर्थमिदमि'ति केचित् । 'असञ्ज्ञार्थमि'त्यन्ये । **क्षीरहोतेति** । अत्र समासस्वराऽपवादे[2] कृत्स्वरे प्राप्ते, तदपवादे 'मन्क्तिन्नि'[3]ति प्राप्ते, तदपवादोऽयम् । 'एकशितिपात्'शब्दोऽत्र पठ्यते । तत्र 'एकः शितिः पादोऽस्ये'ति त्रिपदे बहुव्रीहौ, अवाऽन्तरतत्पुरुषः । ननु अवान्तरतत्पुरुषे समासाऽन्तोदात्तत्वं बाधित्वा, 'इगन्ते'ति पूर्वपदप्रकृतिस्वरेण आद्युदात्तत्वं सिद्धम्, एकशब्दस्य कन्नन्तत्वादिति चेन्न । उत्तरपदे शित्यन्तस्य द्विगुस्वराऽभावज्ञापनाऽर्थत्वात् । तेन 'द्विशितिपादि'त्यत्र 'ति'शब्द एवोदात्तः ।

नन्वेवमपि समासाऽन्तोदात्तत्वं बाधित्वा बहुव्रीहिनिमित्तपूर्वपदप्रकृतिस्वरत्वं भविष्यतीति, व्यर्थ एव पाठ इति चेन्न । निमित्तिस्वरबलीयस्त्वस्याऽपि ज्ञापनात् । फलं तूक्तमेवे'ति केचित्[4] ।

---

१ 'अत्र' इति ख. ङ. नास्ति ।

२ 'समासस्वराऽपवादकृत्स्वरे' इति ख. ङ. पाठः ।

३ 'मनिन्क्तिन्' इति ख. ङ. पाठः ।

४ 'इति केचित्' इति ख. ङ. नास्ति ।

**परे तु** 'समर्थसूत्रे 'एतच्छब्दपाठेन नेहाऽर्थः । इगन्ते 'द्विगौ' इत्यस्य बाधकत्वान्न स्वरे दोष' इत्युक्तम् । तेन 'द्विशितिपादि'त्यत्राऽपि द्विशब्द-स्वर एवेति लभ्यते इति बहुदर्शिनो विचारयन्तु । अत एव 'निमित्तिस्वर-बलीयस्त्वं वाचनिकमि'ति कैयटेनोक्तम् । सतिशिष्टन्यायसिद्धमिति त्वन्यदि'त्याहुः । पात्रेसमितादयोऽपि अत्र बोध्याः । **'अधिकशतवर्ष-शब्दोऽपि अत्र पठनीय'** इति समर्थसूत्रे भाष्यम् । अयम् आकृतिगणः ।

**दीर्घकाश** । 'दीर्घाऽन्तं, काशादीनि च जे परे आद्युदात्तानी'त्यर्थः । दीर्घादिति किम् ?। 'बुद्धिजः' । जे किम् ? । 'शमीवृक्षः' । कृत्स्वरापवादोऽयम् ।

**अन्त्यात्पूर्वम्** । 'आमलकीजः' इत्यत्र 'दीर्घकाशे'ति बाधित्वा परत्वा-दयमेव स्वरः[1] । **तच्चेदिति** । 'पूर्वपदञ्चेदि'त्यर्थः । **निवसत्**–निवासकर्त्तृ । सूत्रे व्यत्ययेन बहुवचनम् । **केचित्तु** 'अधिकरणे औणादिकझचन्तं समासविशेषणमि'त्याहुः । **मल्लग्रामादौ**–षष्ठीसमासः । **दाक्षिग्रामः** । दाक्षयो निवसन्त्यस्मिन् स एवमुच्यते ।

**घोषादि** । 'एषु पूर्वपदमाद्युदात्तमि'त्यर्थः । घोष, कट, पल्वल, ह्रद, बदरी, पिङ्गल, पिशङ्ग, माला, ( शाला ), रक्षा, शाल्मलि, अश्वत्थ, तृण, शिल्पी, मुनि, (प्रेक्षा), कूट, दाक्षि । अत्र 'अनिवसन्त' इत्यनुवर्त्तते' इत्येके । 'नाऽनुवर्त्तते' इत्यन्ये ।

**छात्र्यादयः** । छात्रि, ऐलि, भाण्डि, व्याडि[2], आपिशलि, आखण्डि, गौपि[3] । **अयमेव स्वर इति** । स्पष्टं चेदं वृत्तौ । भाष्ये तु नैतद्दृश्यते ।

**प्रस्थे** । 'मालादीनाञ्चे'ति सूत्राऽऽरम्भात्, कर्क्यादिपर्युदासाच्चाऽऽह–अवृद्धमिति । प्रत्युदाहरणे अन्तोदात्तत्वम् । कर्की, मघ्नी[4], मकरी, कर्कन्धू ,

---

१ 'स्वरः' इति ख. नास्ति ।

२ 'व्याडि' इति ख. नास्ति ।

३ 'गौमि' इति क्वचित्पाठः ।

४ 'मघ्नी' इति ख. ङ. पाठः । 'मद्री' इति लघुशेखरे पाठः ।

शमी, करीर, कन्दुक[1], कवल, बदर । **शौणेति** । 'शोणे'ति पाठे 'एङ् प्राचां देशे' इति वृद्धत्वम् । माला, शाला, शोणा, शौणेति वा, द्राक्षा, ध्राक्षा, श्राक्षा, काञ्ची, एक, काम, क्षाम । **नवार्ममिति** । 'नव'शब्दः प्रत्यग्रवाची अकाराऽन्तः । **महार्ममिति** । अत्र आत्त्वे कृते प्राप्तिः ।

**न भू** । **मद्राश्मस्य** 'अनोऽश्मायः' इति टजन्तत्वात् अवर्णाऽन्तत्वम् । **सङ्घातेति** । स्वरविधौ नलोपस्याऽसिद्धत्वेन अश्मनोऽवर्णान्तत्वाऽभावात् अप्राप्तेः, भाष्ये अनुक्तत्वाच्च वृत्त्युक्तमिदं चिन्त्यम् । 'वृत्तिप्रामाण्यादयमश्मशब्दोऽकारान्तोऽप्यस्ती'**त्यन्ये** । **दिवोदासायेति** । 'दिवसश्च दासे' इति षष्ठ्या अलुक् । **सर्वश्वेत इति** । श्वेतादिगुणेन सर्वाऽवयवानां व्याप्तिरिति गुणकार्त्स्न्यवृत्तिरत्र 'सर्व'शब्दः । यत्र हि गुणाऽन्तराऽभावः, तत्र गुणकार्त्स्न्यं भवति । **सर्वमहानिति** । अत्र सर्वशब्दस्य पूज्यमानार्थत्वाऽभावात् 'पूर्वकालैके'त्येव समासः । **आश्रयव्याप्त्येति** । न तूज्ज्वलत्वेनेत्यर्थः ।

**सर्वसौवर्ण इति** । विकारकार्त्स्न्यमत्र । **सर्वेषामिति** । गुणिकार्त्स्न्यवृत्तिः सर्वशब्दोऽत्र । 'गुणात्तरेणे'ति समासः । 'सर्वेषां पटानां मध्ये श्वेतगुणवद्द्रव्याऽन्तराऽपेक्षया सातिशयश्वेतगुणवानयमि'त्यर्थः । 'द्रव्याऽन्तराधेयश्वेताऽपेक्षया सर्वेषां पटानामयं श्वेतो गुणः साऽतिशय इत्यर्थ' **इत्यन्ये** ।

**अञ्जनागिरिरिति** । 'वनगिर्योरि'ति दीर्घः । गिरीत्यादि किम् ? । 'शरवणम्' । 'दूर्वावणम्' ।

**कुमार्यां वयसि** । 'वयसि वर्त्तमानं पूर्वपदमि'त्यर्थः । **वृद्धकुमारीति** । विशेषणसमासः । 'पुंवत्कर्मधारये'ति पुंवत् । 'कुमारी'शब्दस्य द्वयं प्रवृत्तिनिमित्तं, वयः, पुंसा सह असंप्रयोगश्च । तत्राद्ये वयोग्रहणवैयर्थ्यम् । अतो द्वितीये वर्त्तते इत्याह—**पुंसेति** । स एवाऽत्र गृह्यते, 'वयसी'त्येतत्सामर्थ्यादिति भावः । नचैवं 'वयसि प्रथमे' इति ङीप् दुर्लभः । यतः पूर्वं वयः प्रवृत्तिनिमित्तं गृहीत्वा जातोऽन्तरङ्गो ङीप् वृद्धादिपदसामानाधिकरण्ये-

---

1 'कन्दुक' इति ख. ङ. पाठः । 'कटुक' इति क्वचित्पाठः ।

ऽपि न निवर्त्तते इत्याहुः। **तच्च वय इति**। वृद्धत्वमित्यर्थः। **न कुमारत्वमेवेति**। 'यत्कुमारीशब्दस्य प्रवृत्तिनिमित्तं, न तदेव वयो गृह्यते' इत्यर्थः। [1]**स्वरे कृते इति**। 'स्पष्टं चेदं 'यद्वितुपरमि'ति सूत्रे भाष्यकैयटयोः।

**गर्गत्रिरात्रमिति**। 'सङ्ख्यापूर्वं रात्रं क्लीबमि'ति क्लीबता। पुँल्लिङ्गपाठस्तु क्वाचित्कः प्रामादिकः। एवं–**बिल्वसप्तरात्रमि**त्येव पाठः। **प्रतिपदोक्तेति**। 'सभा राजे'ति विहिते'त्यर्थः। प्रत्युदाहरणे बहुव्रीहिः, ब्राह्मणकुलं[2] विशेष्यम्।

**पुरे प्राचाम्**। स्वतन्त्राऽकारान्त'पुर'शब्दस्य, 'ऋक्पूरि'ति 'अ'प्रत्ययान्तस्य च ग्रहणम्, अविशेषात्। 'अ'प्रत्ययाऽन्तस्याऽपि परत्वसम्भवात्। न हि अत्र उत्तरपदाऽधिकारोऽस्तीत्याहुः। **इहापीति**। 'अरिष्टगौडे'त्येव सिद्धे पूर्वग्रहणं तदादिसमासग्रहणाऽर्थमिति भावः। अप्रागर्थञ्चेदं सूत्रम्।

**हास्तिनपुरमिति**। एषु समासाऽन्तोदात्तत्वमेव। **ढगिति**। 'ढे लोपः' इति 'उ'लोपः।

**कुसूलकूप**। प्रत्युदाहरणेषु समासाऽन्तोदात्तत्वम्।

**दिक्शब्दा ग्राम**। **चानराटे** स्वरूपग्रहणम्, अन्यत्र अर्थग्रहणम्। **पूर्वेष्विति**। एकादेशः स्वरितः, उदात्तो वा। **पूर्वपञ्चाला इति**। पञ्चालैकदेशे 'पञ्चाल'शब्दस्य वृत्त्या पूर्वपराभ्यां सामानाधिकरण्यम्। 'पूर्वापरे'ति विशेषणसमासः। **यायातमिति**। 'ययातिम् अधिकृत्य कृतमाख्यानमि'त्यर्थः। 'पूर्वयायातमि'त्यादौ पूर्वशब्दस्य दिक्शब्दत्वाऽभावात्कथं प्राप्तिरित्यत आह—**शब्दग्रहणमिति**। 'यदा कदा चित् दिशि दृष्ट' इत्यर्थलाभादिति भावः।

**आचार्योपसर्जन**। सप्तम्यर्थे प्रथमा। अन्तेवासिविशेषणं चैतत्। **उत्तरपदस्येत्यधीति**। स्पष्टं चेदं 'वृद्धिरादैच्'सूत्रे भाष्ये। वृद्धिमात्रस्य

---

१ 'स्वरे कृते इति। 'नेन्द्रस्ये'ति निषेधेन पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमेकादेशाऽभावज्ञापनादिति भावः' इति लघुशेखरे पाठः।

२ 'ब्राह्मण' इति ख. ङ. नास्ति।

उत्तरपदस्याऽभावेन सामर्थ्यात् वृद्धिमदुत्तरपदे लब्धे, उत्तरपदग्रहणात्, तस्य स्वरितत्वाद्वा तदधिकारलाभ इत्याहुः। अस्य वृद्धिशब्देन विहितवृद्धि-ग्रहणेनाऽपि वारयितुं शक्यत्वादाह–**सर्वकारक** इति।

**बहुव्रीहौ विश्वं**। 'सञ्ज्ञायामि'ति बहुव्रीहेर्विशेषणम्। बह्विति किम्?[1]। कर्मधारये[2] **विश्वेदेवा** इत्यन्तोदात्तम्। **विश्वदेव** इति। असंज्ञायां पूर्वपदप्रकृतिस्वरः। विश्वमित्रविश्वाऽजिनयोः 'सञ्ज्ञायां मित्राऽजिनयो-रि'त्येतत् विप्रतिषेधेन। **ऋषौ** विश्वामित्रे अयमेव स्वरो भवति। 'ऋषि-प्रतिषेधो मित्रे' इति वचनात्। **हर्यश्व इति**। 'नेन्द्रस्य परस्ये'ति-ज्ञापकात् पूर्वं पूर्वोत्तरपदनिमित्तकार्यमिति, स्वरोत्तरं यणादि। तेन 'उदात्त-स्वरितयोरि'त्यादिप्रवृत्तिः। अत्राऽपि 'सञ्ज्ञायामि'त्यनुवर्त्तते इत्याहुः।

**क्षेपे**। अक्षेपे सञ्ज्ञात्वाऽभावे पूर्वपदप्रकृतिस्वर एव। **घटोदर इति**। 'घट'शब्दो वृषादित्वादाद्युदात्त इत्याहुः[3]। 'कटुक'शब्दस्तु कन्नन्तत्वात्तथा। चलाचलस्याऽजन्तत्वात् 'चलाचलेषुरि'त्युदाहरणं चिन्त्यम्। एवं 'महेषु-रि'त्यपि। **अनुदर इत्यत्रेति**। क्षेपे, सञ्ज्ञायां चेदम्। अक्षेपेऽपि पूर्वपद-प्रकृतिस्वराऽपवादत्वात् तदेव। 'सूदर'इत्यत्र ततोऽपि परत्वात् 'उपसर्गा-त्स्वाङ्गमि'ति बोध्यम्। **ब्रह्मशब्द इति**। 'नब्विषयस्ये'त्यनेन आद्युदात्तत्वं, मनिन्नन्तत्वाद्वा। 'ब्रह्मा देवानामि'त्यादावन्तोदात्तत्वं तु छान्दसत्वात्।

**गार्गीप्रिय इति**। **'गौरीप्रिय'** इति तु क्वाचित्कोऽपपाठः, गौरीशब्दस्य ङीषन्ततया अन्तोदात्तत्वेन, विशेषाऽभावात्। **'प्रधौत'**शब्दो गतिस्वरेण आद्युदात्तः। 'प्रसेवक'शब्दः कृदुत्तरपदप्रकृतिस्वरेण लित्त्वान्मध्योदात्तः। 'शुष्क'शब्दः–'शुष्कधृष्टौ' इत्याद्युदात्तः।

**उत्तरपदाऽऽदिः**। 'उत्तरपदे'ति लुप्तषष्ठीकं पृथक्पदम्।

**कर्णो वर्ण**। 'कर्ण'इति षष्ठ्यर्थे प्रथमा।'उत्तरपदस्य कर्णस्य आदिरुदात्त'

---

१ 'बह्विति किम्' इति लघुशेखरे नास्ति।

२ 'कर्मधारये पदमन्तोदात्तम्' इति ख. ङ. पाठः।

३ 'इत्याहुः' इति ख. ङ. पाठः।

इति वाच्योऽर्थः । फलितमाह–**परः कर्णेति** । **एवमग्रेऽपि बोद्ध्यम्** । अत्र 'लक्षण'शब्देन पशूनां विभागज्ञानार्थं दात्र-शङ्कुप्रतिरूपकं यत्कर्णादिषु चिह्नं क्रियते, तदुच्यते । पृथग्वर्णग्रहणात् । तेन 'स्थूलकर्णः' इत्यत्र न[1] । स्थूलशब्दोऽन्तोदात्तः । **शङ्कुकर्ण इति** । 'कर्णे लक्षणस्ये'ति दीर्घत्वम् । **श्वेतः**–पचाद्यजन्तः । **शोभनो** युजन्तः । प्रत्युदाहरणे पूर्वपदप्रकृतिस्वरः । तत्पुरुषे तु अन्तोदात्तत्वम् ।

**कण्ठपृष्ठ** । 'उत्तरपदानि एतान्याद्युदात्तानी'त्यर्थः । **सुग्रीव इति** । यद्यपि परत्वात् 'नञ्सुभ्याम्', 'उपसर्गात्स्वाङ्गमि'त्युचितं, तथाऽपि **'नीलग्रीवः'** इत्युदाहरणं बोद्धयम् । 'चेन पुनर्विधानात् अयं परस्याऽपि बाधक' इति **हरदत्तः** । **विशेषोऽवस्थेति** । 'गम्यते' इति शेषः । औपम्ये–'गोशृङ्ग' इत्युदाहरणम् ।

**नञो जर** । 'नञ्सुभ्यामि'त्यस्याऽपवादः । जरणं जरः । 'ऋदोरप्' । मरणं मरः । अत एव निपातनात् अप् । मिदेस्त्रः । मित्रम् । **मृते** 'नपुंसके' इति भावे क्तः । सूत्रे तु शब्दपरत्वात्पुंस्त्वम् । **अमित्रेति** । अयं च बहुव्रीहौ अनेन मध्योदात्तः । नञ्तत्पुरुषे अव्ययपूर्वपदप्रकृतिस्वरेण आद्युदात्तः । अमेः इत्रचि अन्तोदात्तोऽपि । त्रयोऽपि पुंलिङ्गाः, शत्रुवाचकाश्च । 'भृत्राऽमित्रवृत्रमेढ्राः पुंसी'त्युक्तेः । 'नच[2] लिङ्गाऽनुशासनस्योणादौ चरितार्थ्यात्, परवल्लिङ्गतायाश्च अर्द्धपिप्पल्यादौ सावकाशत्वात्, अमित्रेऽनियतलिङ्गताऽऽपत्तिरिति वाच्यम् । लिङ्गाऽनुशासनसूत्रे एकशेषेण अस्याऽपि निर्देशान्न दोष इत्याहुः । **हरदत्तस्तु**–'तत्पुरुषो नपुंसकमेव, आद्युदात्तश्चे'त्याह । एवञ्च 'अश्नोतेराशुकर्मणी'त्युणादिसूत्रोक्तमनोरमादिरीत्या ईश्वरीशब्दवत् 'अमित्र'शब्दोऽपि त्रिप्रकारः ।

---

१ 'न' इति ख. ङ. नास्ति ।

२ 'न च तत्पुरुषे परवल्लिङ्गताऽऽपत्तिरिति वाच्यम् । लिङ्गाऽनुशासनसूत्रे' इति लघुशेखरपाठः । स एवोचितः ।

**सोमेनसी** । **अपवाद इति** । एवम् उत्तरसूत्रत्रयमपि तदपवाद एव । 'मन् च अम् च–मनसी' । **सुकर्माण इति** । यद्यपि 'आद्युदात्तं द्व्यच्छन्दसी'त्येनेनैव सिद्धमिदं, तथापि 'अनिनस्मन्ग्रहणानी'ति न्यायेन 'सुप्रथिमे'त्यादिबह्वजर्थम्, अच्छन्दोऽर्थश्चेदम् । 'सुस्रदि'त्यत्राऽपि स्वरे कर्त्तव्ये बहिरङ्गत्वात्, पूर्वत्राऽसिद्धत्वाद्वा दत्वस्य असिद्धत्वेन, असन्तत्वादयं स्वरो भवत्येव । यत्तु 'वस्वादिषु दत्वं सिद्धमि'ति, तत्त 'सौ दीर्घत्वे' इति वाक्यशेषात् दीर्घविधावेव । तस्योऽपि प्रत्याख्यातत्वा-च्चेति **कश्चित्** । '**सुलोमे**'त्यादौ 'नञ्सुभ्यामि'ति भवति ।

**क्रत्वादयश्च** । क्रतु, दृशीक, प्रतीक, प्रतूर्त्ति, हव्य, भव्य, भग । इति क्रत्वादयः ।

**आद्युदात्तं द्व्यच्** । **बहुव्रीहावाद्युदात्तमिति** । 'आद्युदात्तमेवे'त्यर्थः । सोः किम् ? । 'अरथः' । **सुबाहुरिति** । 'कु'प्रत्ययाऽन्तो 'बाहु'शब्दो-ऽन्तोदात्तः । **हिरण्यशब्द इति** । कन्यन्नन्तोऽयम् ।

**वीरवीर्यौ** । वीरो रक्प्रत्ययाऽन्तः । **आद्युदात्तत्वं नेति** । 'छन्दसि ने'ति ज्ञाप्यते' इत्यर्थः । तेन भाषायां भवत्येव । तथा च छन्दसि वीर्यशब्दः तित्स्वरेणाऽन्तस्वरित इति भावः । 'बिल्व-भक्ष्य-वीर्याणि छन्दसी'ति फिट्सूत्रन्तु अस्यैव अनुवादकमिति बोद्धव्यम् ।

**कूलतीर** । 'कूलाऽदीन्युत्तरपदानि आद्युदात्तानि स्युः' । **सुषममिति** । 'अधिसममि'त्यत्र तु न, प्रतिपदोक्ततिष्ठद्गुसमासघटकस्यैव ग्रहणादि'ति **कश्चित्** । उत्तरपदानीति किम् ? । 'भूमेः समत्वं समभूमिः' । तिष्ठद्ग्वादिः । समासस्वरेणाऽन्तोदात्तः । अत्र 'अक्ष'शब्दोऽकारान्त एव । 'प्रत्यक्षमि'त्यादौ टचश्चित्त्वादन्तोदात्तत्वमेवे'ति **कश्चित्** ।

**कंसमन्थ** । 'एतानि उत्तरपदानि द्विगौ आद्युदात्तानी'त्यर्थः । **द्विकंसादौ** क्रमेण टिठन्–ठक्–अञ्–ठञाम् 'अध्यर्द्धे'ति लुक् ।

---

१ 'तस्याऽपि प्रत्याख्यातत्वाच्चेति कश्चित्' इति ख.ङ. पाठः । लघुशेखरे नास्ति ।

**पार्य्यं**–परिमाणविशेषः। **द्विकाण्डमिति**। अत्र 'प्रमाणे लो द्विगोरि'ति मात्रचो लुक्। कंसादीनि किम् ?। 'पञ्चपूली'[1]।

**तत्पुरुषे शाला**। 'छात्त्रिशालमि'त्यादौ 'छात्र्यादयः शालायामि'त्यतः[2] परत्वात् अयमेव स्वरो भवति। **दृढशालमिति**। 'विभाषा सेने'ति-प्रतिपदोक्तनपुंसकत्वग्रहणादेवाऽस्य व्यावृत्तौ,तत्पुरुषग्रहणमुत्तराऽर्थमि'ति हरदत्तः। **सौशमिकन्थमिति**। 'सञ्ज्ञायां कन्थे'ति क्लीबत्वम्। **चिह्णकन्थमिति**। 'चिह्णस्य कन्थे'ति तत्पुरुषः। चिह्ण, मडर, मडुर, वैतुल, पटल, बैडालिकर्ण, बैडालिकर्णि, कुक्कुट, चिक्कण, चित्कण। **पुत्रचेलमिति**। 'चेलवत्तुच्छ' इत्यर्थः। **खेटं**–तृणम्। **कटुकम्**—अस्वादु। **काण्डं**–शरः।

**पललसूप**। 'मिश्रे समासाऽर्थे' इत्यर्थः। **दाण्डायनस्थलमिति**। लिङ्गविशिष्टपरिभाषया 'दाण्डायनस्थली'त्यत्राऽपि। 'राज्य'शब्दो यगन्तः अन्तोदात्तः। **अव्ययस्वर इति**। अव्ययपूर्वपदप्रकृतिस्वर इत्यर्थः। **वर्ग्यादिरिति**। ते एव यत्प्रत्ययाऽन्ता इह वर्ग्यादयः। वर्ग्यादिपाठाऽभावात्।

**पुत्रः पुम्भ्यः**। निषेधकोत्तरसूत्रादेव पुँल्लिङ्गशब्दलाभे सिद्धे, बहुवचनं स्पष्टाऽर्थम्। **तद्विशेषाणाञ्चेति**। चात् स्वरूपस्याऽपि। **सम्बन्धिन इति**। 'स्त्रीसम्बन्धिनः श्यालादय'[3] इत्यर्थः। **भ्रातुःपुत्र इति**। 'ऋतो विद्यायोनी'ति षष्ठ्या अलुक्। '**भ्रातृपुत्र**' इति तु काचित्कोऽपपाठः। एवं होतुःपुत्रेऽपि। एषु पुत्रस्वरप्रतिषेधे समासाऽन्तोदात्तत्वम्।

**चूर्णादीन्य**। चूर्ण, करिव, करिप, (करियं), शाकिन, शाकट, द्राक्षा, तूस्त, कुन्दुम, दलप[4], चमसी[5], चक्कण चक्कन, चौल, ( चोलं )। इति चूर्णादिः।

---

१ 'पञ्चमूली' इति लघुशेखरे पाठः। २ 'शालादयः' इति ख. ङ. पाठः।

३ अयं क्काचित्कः पाठः।

४ दलपः = 'दलिया' इति प्रसिद्धो गोधूमकणादिकृतः संयावः।

५ चमसी = 'पकौडी' 'चमचम' इत्यादिनाम्ना प्रसिद्धो भक्ष्यविशेषः।

**षट् च कां**। काण्डस्याऽगर्हार्थम्, चीरस्याऽनुपमानाऽर्थं, पललसूपशाकानाममिश्राऽर्थम्, कूलस्याऽसञ्ज्ञार्थम्। 'चेलखेटे'तिसूत्रस्थकाण्डशब्दमादाय 'कूलसूदे'तिसूत्रस्थकूलपर्यन्ताः षट् काण्डादयः ।

**कुण्डशब्दोऽत्रेति**। 'सादृश्येन वने वर्त्तते' इत्यर्थः । भाजनविशेषवाचिनः 'कुण्ड'शब्दस्य विना सादृश्येन वने वृत्त्यसम्भवादित्याशयः । 'वन'शब्दश्च समूहवाची। प्रसिद्धत्वात्। नोदकवाची। **अन्ये तु** 'समूहरूपवनेऽपि मुख्य एव 'कुण्ड'शब्दः । पूर्वमते सादृश्यस्य दुरुपपादत्वात् । वनविशेषणेन च भाजनवाचिनो, 'दुर्गाकुण्डमि'त्यादौ विशिष्टाऽऽधारजलवाचिनश्च प्रसिद्धस्य निवृत्तिरि'त्याहुः । उक्तञ्च 'कुण्डाऽऽद्युदात्तत्वे तत्समुदायग्रहणमि'ति । अत्र भाष्ये तच्छब्देन पूर्वपदाऽर्थः । अपरे तु **'तत्समुदाये'**त्यस्य वनसमुदायेत्यर्थः । तेन दर्भवनसमुदायो 'दर्भकुण्ड'-शब्देनोच्यते' इत्याहुः ।

**मृत्कुण्डमिति** । मृद्भाजनविशेष इत्यर्थः । **भगालवाचीति** । अत्र च व्याख्यानमेव शरणम्। **मध्योदात्ता इति**। 'लघावन्ते' इत्यनेनेति भावः ।

**शितेर्नित्या** । 'शितेः परं भसच्छब्दभिन्नं यन्नित्यम् अबह्वच् उत्तरपदं, तद् बहुव्रीहौ प्रकृतिस्वरमि'त्यर्थः । **दर्शनीयपाद इति**। 'दर्शनीय'शब्दो 'रिती'ति उपोत्तमोदात्तः[1]। नित्याऽबह्वच्किम्? । 'शितिललाटः'। नित्येति किम ? । 'शितिककुत्'। 'ककुदस्याऽवस्थायां लोपः'। अन्यत्र 'शितिककुद' इत्येवेति, नाऽयं नित्याऽबह्वच्कः ।

**गतिकारकोप** । इह 'शितेर्नित्याऽबह्वज्बहुव्रीहावभसदि'तिपूर्वसूत्रस्थं 'बहुव्रीहि'ग्रहणं नाऽनुवर्त्तते । अस्वरितत्वात् । किं तु व्यवहितमपि 'तत्पुरुषे शालायां नपुंसके' इति सूत्रस्थं 'तत्पुरुष'ग्रहणमनुवर्त्तते । तदाह–**तत्पुरुषे इति**। **प्रकारक इति** । 'कुगती'ति समासः । लिस्वरेण उत्तरपदम् आद्युदात्तम्। **नृवाहसेति** । 'नॄन् वहते' इति विग्रहः । 'वहिधा' इत्यादिना असुन्। 'वसेर्णिदि'ति सूत्रात् 'णिदि'त्यनुवृत्तेः असुनो णित्त्वादुपधावृद्धिः ।

---

१ 'उपोत्तमं रिति' इत्यनेनेत्यर्थः ।

नित्स्वरेण उत्तरपदमाद्युदात्तम्। **इध्मप्रव्रश्चन इति**। करणे ल्युट्। कर्म-षष्ठ्या समासः। प्रवश्चने गतिप्रयुक्ते कृत्स्वरे कृते, 'इध्म'शब्देन समासे, कारकप्रयुक्तः कृत्स्वरः। व्रश्चनो लित्स्वरेण आद्युदात्तः।

**उच्चैःकारमिति**। णमुल्विधौ 'उच्चैरि'त्युपपदम्। **ईषत्कर इति**। 'ईषद्दुःसुषु' इति खल्। **शेषे षष्ठीति**। 'तदन्तेन समासः कार्य' इत्यर्थः।

इदं गत्यंशे अव्ययपूर्वपदप्रकृतिस्वरस्य बाधकम्। कृद्ग्रहण-प्रत्याख्याने 'अन्वविन्दते'त्यादौ परत्वात्'तिङि चे'ति निघाते कृते यद्यपीदं सावकाशं, तथाऽपि परत्वात् बाधकं बोध्यम्। कारकोपपदांऽशे तु समासाऽन्तोदात्तत्वाऽपवादः।

**कृद्ग्रहणं स्पष्टार्थमिति**। क्रियायोगे गतिसञ्ज्ञाविधानात्, क्रिया-निरूपितस्यैव कारकत्वाच्च, धात्वधिकारे सप्तमीनिर्दिष्टस्यैव उपपदत्वाच्च, केवलधातोः प्रयोगाऽभावाच्च कृदन्तक्रियापदाऽऽक्षेपे सिद्धे इत्यर्थः। तथा च वार्त्तिकं-'गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणाऽऽनर्थक्यम्, अन्यस्योत्तरपद-स्याऽभावादि'ति। न च 'यत्क्रियायुक्ताः प्रादयः' इत्यत्र 'यस्य क्रिये'ति षष्ठी-समासे, 'यस्य धातोर्वाच्या क्रिये'त्यर्थात् 'तं प्रती'तिवाक्यशेषेऽपि तच्छ-ब्देन धातोरेव ग्रहणे, प्रत्यासत्त्या तस्यैव उत्तरपदत्वे 'प्रणीरि'त्यादावेव स्वरःस्यात्, न तु 'प्रणायक'इत्यादाविति, कृन्मात्रसङ्ग्रहाय तदिति वाच्यम्। 'यत्क्रिये'त्यत्र कर्मधारयस्यैव स्वीकारेण, 'तं प्रती'त्यत्र वाक्यशेषे निरूपित-रीत्या तस्या एव परामर्शेन, क्रियारूपमर्थं प्रत्येव गतित्वात्। '[3]तत्र 'केवल-क्रियाया वाचकमुत्तरपदं न सम्भवती'ति, सामर्थ्यात्साधनादिविशिष्ट-क्रियावाचकम् उत्तरपदं गृह्यते इति सर्वत्रेष्टसिद्धिः। न च 'प्रभवनमि'त्यादौ

---

१ 'इध्मेन समासे' इति ख. ङ. पाठः।

२ 'परत्वात्सावकाशं बोध्यम्' इति ख. पाठः।

३ 'तत्र गतिकारकोपपदेषु सर्वत्र विशेष्यभूतक्रियाया वाचकम् उत्तरपदं न सम्भवति, इति सामर्थ्यात् साधनादिविशेषण क्रियावाचकमुत्तरपदं गृह्यते इति सर्वेष्टसिद्धिः' इति तु लघुशेखरे पाठः।

केवल[1]क्रियावाच्युत्तरपदे चारितार्थ्येन सामर्थ्यं दुरुपपादम्। लिङ्गाद्यनन्वयिसाध्यरूपाऽर्थस्यैव क्रियाशब्देन अत्र[2] ग्रहणात्। न चैवमपि क्त्वाऽन्ते चारितार्थ्येन सामर्थ्यं दुरुपपादम्। अस्ति हि क्त्वाऽन्तस्याऽसत्त्वभूतक्रियामात्रवाचकत्वमिति वाच्यम्। क्त्वोऽप्युत्तरकालिकत्व-समानकर्तृकत्वादिद्योतकत्वेन क्रियामात्रवाचकत्वाऽभावात्।

पदम् अत्र शक्तमेव, न परिभाषितम्। तेन कृता सुबुत्पत्तेः प्राक् समासेऽपि न क्षतिः। एवञ्च 'प्र'शब्दस्य 'पचतितरामि'त्याद्यामन्तेन समासे अयं स्वरो भवत्येवेति भाष्ये स्पष्टं सूक्ष्मधियाम्।

**एके** इति। अत्राऽरुचिबीजन्तु तथा सति 'प्रपचतितर'शब्दस्य घान्तत्वाऽभावात् तत आमभावे, एकदेशात् आमि, तदन्तत्वेन 'पचतितरामि'त्यस्यैव प्रातिपदिकत्वे, तत एव सुपि, तदन्तस्यैकपदत्वाऽभावात्, प्रशब्दस्वरः पृथक् श्रूयेत। किंच 'आम् प्रपचतितरां देवदत्ते'त्यत्र 'आम एकाऽन्तरमामन्त्रितमि'ति निषेधो न स्यात्। तस्मात् आमन्तेनैव समासः। तत्र भाष्यप्रामाण्यादयं स्वरो भवत्येव। एवं प्रपचतिदेश्यादावपि[3]। 'तिङि चोदात्तवती'तिसूत्रस्थभाष्यविरोधो यथा न भवति, तथा निरूपितम् 'उपपदमति'ङि'ति सूत्रे।

**अन्य इति**। अत्राऽपि भाष्यविरोध एवाऽरुचिबीजम्। तिङन्तसमासेष्वपि अयं स्वरो भवत्येव। यथा—'यो जातः पर्यभूषदि'त्यादौ। 'नित्यं क्रीडे'त्यत्र'नित्यमि'ति योगं विभज्य लक्ष्याऽनुरोधेन क्वचित्तत्पुरुषत्वाऽङ्गी-

१ 'केवलक्रियावाच्युत्तरपदसत्त्वेन सामर्थ्यं दुरुपपादम्' इति लघुशेखरे पाठः।

२ 'अत्र' इति ख. ङ. पाठः। लघुशेखरे तु नास्ति।

३ इतोऽग्रे 'अत्र च नोपपदसमासः। 'अतिङि'त्युक्तेः, किं तु 'उदात्तवते'ति वार्त्तिकेन। तत्र 'तिङे'त्यस्य 'तिङ्घटितेने'त्यर्थः। तदुदाहरणानाञ्च भाष्ये 'सहे'ति योगविभागेनाऽपि साधनात् तत्पुरुषत्व-तदभावौ। वैकल्पिकत्वञ्च लक्ष्याऽनुसारेणेति न 'तिङि चोदात्तवती'ति सूत्रस्थभाष्यविरोधः' इति लघुशेखरे पाठः।

कारात्। अत एव ‘उदात्तवते’त्यस्य भाष्ये द्विःपाठः। अत्र यच्छब्दयोगात् तिङन्तस्याऽनिघातः। ‘उदात्तवता, गतिमता चे’ति तिङन्तस्य गतिसमासः। अव्ययपूर्वपदप्रकृतिस्वरं बाधित्वा उत्तरपदप्रकृतिस्वरेण अट्स्वरः शिष्यते। यत्र तु तिङन्तोत्तरपदके अन्तोदात्तत्वमिष्यते, यथा ‘यत्रा नरो देवयन्तो युगानि वितन्वते’ इत्यादौ, तत्र त्रिचक्रादित्वात् तत्कल्प्यम्। ‘अत्यायाही’-त्यादौ तु यच्छब्दयोगाऽभावात् ‘तिङ्ङतिङ’ इति निघाते, आङा ‘सहे’ति योगविभागात्समासः। उत्तरपदस्योदात्तशून्यत्वात्, गतिशून्य-त्वाच्च गतिप्रयुक्तसमासाऽभावात्तत्पुरुषत्वाऽभावेन नाऽयं स्वरः। उदात्त-स्वरितयोगिन एव प्रकृतिभावविधानात्, अस्य तच्छून्यतयाऽपि नाऽयं स्वर इति दिक्।

**वनस्पतिमिति**। ‘वन’शब्दो नब्विषयत्वादाद्युदात्तः। ‘पति’शब्दश्च प्रत्ययस्वरेण तथा। **निपात्यत इति**। अन्यथा ‘अति’प्रत्ययाऽन्तत्वात्

१ ‘सुप्’ इति योगविभागात् समासः’ इति ख. ङ. पाठः।

२ ‘उदात्तशून्यत्वाच्च’ इति ख. पाठः।

३ इतोऽग्रे—‘एवञ्च अव्ययपूर्वपदप्रकृतिस्वरेण आङ् उदात्तः। ततः ‘अति’-शब्देन गतिसमासे, अनेन उत्तरपदप्रकृतिस्वरे, आङ्स्वर एव शिष्यते’ इति दिक्।

परे तु ‘कृत्’ग्रहणाऽभावे ‘प्रभवनमि’त्यादौ क्रियाया विशेष्यत्वात्, तत्रैव स्यात्, न तु ‘प्रणीरि’त्यादाविति कृत्ग्रहणं कर्त्तव्यम्। तदुक्तं भाष्ये– ‘अधिकाऽर्थं कृद्ग्रहणं कर्त्तव्यमि’ति। ‘प्रपचतितरामि’त्यादौ तु अव्ययपूर्वपद-स्वरात् परत्वेन ‘तिङि चोदात्तवती’त्यस्य प्रवृत्तौ, एतत्प्रवृत्तौ न फलम्। एतत्प्रवृत्तावपि तत्र अन्तोदात्तमेव लभ्यते। ‘तिङि चोदात्तवती’ति सूत्रे एतदर्थमेव भाष्ये तिङ्ग्रहणं प्रत्याख्यातत्। अतिप्रसङ्गस्तु प्राग्वदेव परिहार्यः। अत एवाऽत्र सूत्रे ( भाष्ये ) ‘तस्मात् कृत्ग्रहणं न कर्त्तव्यमि’ति नोक्तमि’त्याहुः’ इति लघुशब्देन्दुशेखरे पाठः।

अन्तोदात्तः स्यादिति भावः । एवम् 'ऊ'प्रत्ययाऽन्त'तनू'शब्दोऽप्याद्युदात्तो निपात्यते इत्याहुः । 'नपात्'शब्दोऽपि 'नभ्राडि'तिसूत्रे आद्यदात्तो निपात्यते ।

**वनस्पत्यादयः** षष्ठीतत्पुरुषाः । **तनूनपादिति** । अत्र 'तन्वाः न पादि'ति विग्रहः । **नराशंसमिति** । 'नर''शंस'शब्दौ अप्-घञन्तत्वादाद्युदात्तौ । 'नरा एनं शंसन्ति स नराशंसः' । **निपातनादिति** । 'अन्येषामपी'ति दीर्घ' इत्यन्ये । **शुनः शेप इति** । 'श्वन्'-'शेप'शब्दौ प्रातिपदिकस्वर-निपातनस्वराऽन्यतर-स्वाङ्गस्वराभ्याम् अन्तोदात्ताऽऽद्युदात्तौ । **शण्डामर्कौ** घञन्तत्वात् आद्युदात्तौ । द्वन्द्वः । 'अन्येषामपि' इति दीर्घः । **तृष्णा-वरूत्री**[1] । 'तृष्णा'[2]शब्दो 'निष्ठा च द्व्यजि'त्याद्युदात्तः । 'ग्रसितस्कभिते'त्यत्र 'वरूत्री'शब्द आद्युदात्तो निपात्यते । **चञ्चा**[3]**-विश्ववयसौ** अन्तोदात्तौ । **मर्मृत्युः**—अन्तोदात्तः । वृत् ।

**इन्द्रावरुणाविति** । इन्द्रो रन्नन्त आद्युदात्तः । वरुणोऽपि[4] उनन्नन्तत्वात् तथैव ।

**नोत्तरपदे** । **इन्द्राग्निभ्यामिति** । 'अग्नि'शब्दोऽन्तोदात्तः । **सोमारुद्रा-विति** । सोम आद्युदात्तः, मन्नन्तत्वात् । रुद्रो रगन्तत्वादन्तोदात्तः । '**रुद्र-सोमौ**' इति क्वचित्कोऽपपाठः । **शुक्रामन्थिनाविति** । शुक्रो रगन्तत्वात्, मन्थिन् मत्वर्थीयेनिना अन्तोदात्तौ[5] ।

**मा भूदिति** । तथा सति 'सूर्याचन्द्रमसौ' इत्यादाविदं न स्यात् । 'सूर्य'शब्दो यदन्तत्वात् आद्युदात्तः । 'चन्द्रमस्'शब्दो दासीभारादित्वात् मध्योदात्तः । **विषयविभागार्थमिति** । न च 'पृथिव्यादयो विधेर्विषयः,

---

१ 'तृष्टावरूत्री' इति ख. पाठः ।

२ 'तृष्टशब्दो' इति ख. पाठः ।

३ 'बम्बा' 'लम्बा' इति पाठाऽन्तरम् । 'चञ्चा' इति तु ख. ङ. पाठः ।

४ 'वरुणशब्दोऽपि' इति पाठान्तरम् ।

५ 'अन्तोदात्तः' इति लघुशेखरे पाठः ।

अन्यत्र प्रतिषेध' इति विषयविभागः सिद्ध इति वाच्यम्। पूर्वसूत्रे पृथिव्यादिग्रहणेन सिद्धे, एतत्सूत्रवैयर्थ्याऽऽपत्तेः। अयमेव पृथिव्यादि-पर्युदासो ज्ञापयति–'स्वरोद्देश्यके विधौ व्यञ्जनमविद्यमानवदि'ति। तेन 'अग्निमीळे' इत्यादौ 'उदात्तादनुदात्तस्ये'ति स्वरितः सिध्यति।

**थाऽथघञ्**। कृत्स्वराऽपवादोऽयम्। **प्रभृथे**–क्थन्। **आवसथ इति**। 'उपसर्गे वसेरि'ति अथः। उपपदोदाहरणमेतत्। **प्रभेदे**–घञ्। **पुरुष्विति**। तृतीयातत्पुरुषे तु 'तृतीया कर्मणी'ति पूर्वपदप्रकृतिस्वर एव। **स्तुतः** 'निष्ठा च व्यजनादि'त्याद्युदात्तः। **क्षयः**–'क्षयो निवासे' इत्याद्युदात्तः। '**निश्चय**' इत्यत्र अयं स्वरो नेष्यते, किन्तु कृत्स्वर एवे'ति 'ग्रहवृद्द' इति सूत्रे भाष्यम्। **सुस्तुतमिति**। अव्ययपूर्वपदप्रकृतिस्वरोऽत्र। '**कृष्टपच्या**' **इत्यत्राऽप्ययं स्वर इष्यते**' इति 'राजसूये'ति सूत्रे भाष्ये स्थितम्।

अत्र'उपपद'ग्रहणाऽनुवृत्तिः समासनिर्देशात् कृता, नाऽत्यन्तं फलवती। गतिकारकाभ्यां सिद्धत्वात्।

**सूपमानात् क्तः**। गतिस्वराऽपवादोऽयम्। अत्राऽपि 'गतिकारकोप-पदादि'त्येव। नेह–'सुस्तुतम्'। **शशप्लुत इति**। शश इव प्लुत इत्यर्थः।

**सञ्ज्ञायामनः**। अयमपि गतिस्वराऽपवादः। '**कुद्दालखातमि**'त्यादौ 'तृतीया कर्मणी'ति प्राप्तम्। आचितम्, पर्याचितम्[1], आस्थापितम्, परिगृहीतम्, निरुक्तम्, प्रतिपन्नम्, उपश्लिष्टम्, प्रश्लिष्टम्[2], उपहितम्, उपस्थितम्। '**संहिता अगवि**[3]'। **वृत्**। 'गोः अन्यस्य सञ्ज्ञायां संहिताशब्दोऽन्तोदात्तः'।

**कारकाद्दत्त**। 'सञ्ज्ञायामनाचितादीनामि'त्यस्य नियमोऽयम्। **देवदत्त इति**। 'देवा एनं देयासुरि'त्यर्थः। 'विष्णुरेनं श्रूयादि'ति

---

१ 'पर्याचितम्' इति ख. नास्ति।

२ 'प्रश्लिष्टम्' इति ख. नास्ति।

३ 'अगवि संहिता' इति ख. ङ. पाठः।

**विष्णुश्रुतः । कारकात्किम्–सम्भूत इति ।**'कारकादि'त्यस्याऽभावे त्रितयाऽधिकाराद्गतेरपि नियमः स्यात्–'सम्भूयादिति **सम्भूत'** इति भावः ।

**मा भूदिति ।** तेन[1] 'संश्रुतः' 'विश्रुत' इत्यत्र भवत्येवाऽन्तोदात्तत्वम् । आशिषि किम् ? । अनाशिषि नियमो मा भूत् । ततश्चेह न स्यात्—'देवैः खाता–देवखाता' । अत्र 'कारकाद्दत्तश्रुतयोराशिष्येवे'त्यपि नियम इष्यते । कश्चिच्छङ्खविशेषो देवदत्तः अनाहतो नदति । अत्र 'तृतीया कर्मणी'त्येव । अत्र 'कारकादि'ति योगं विभज्य 'दूरादागत' इत्यत्राऽन्तोदात्तत्वं विधेयम्, 'गतिरन्तरः' इति बाधनाऽर्थमि'त्युक्तम् । **कृतं भवतीति ।** भावे यदा प्रलपितादयः, तदा थाथादिस्वरेणैव सिद्धम् ।

**अनो भाव ।** कृत्स्वराऽपवादोऽयम् । **पयःपानमिति ।** 'कर्मणि च येने'ति कर्मण्युपपदे भावे ल्युट् । **राजभोजना इति ।** बाहुलकात् कर्मणि ल्युट् । **कृत्स्वरापवाद इति ।** क्रीते तु[2] 'तृतीया कर्मणी'त्यस्येत्याहुः ।

**व्याख्यानादिषु** करणे ल्युट् । **याजकादयो** 'याजकादिभिश्चे'ति सूत्रे गणपठिताः । **अध्ययनपुण्यमिति ।** 'सुप्सुपे'[3]ति समासः । 'पुण्य'शब्दस्य अव्युत्पन्नत्वे आह–**तत्पुरुषे तुल्येति ।** 'नब्विषयस्ये'त्याद्युदात्तः 'पुण्य'-शब्दः । व्युत्पन्नत्वे तु 'यतोऽनावः' इत्याद्युदात्तः । तदा कृत्स्वराऽपवादोऽयम् । **वेदेन पुण्यं वेदपुण्यमिति ।** व्युत्पत्तौ कृत्स्वरः । अव्युत्पत्तौ पूर्वपदप्रकृतिस्वरः । 'वेद'शब्दोऽत्र[4] वृषादित्वात् आद्युदात्तः ।

**ऊनार्थकलहम् ।** 'तृतीयान्तात् पराणि उत्तरपदानि एतानि अन्तोदात्तानी'त्यर्थः । **तदर्थानामिति ।** व्याख्यानादिति भावः ।

**स्पष्टार्थमिति ।** न च 'धान्याय[5] अयं धान्याऽर्थ' इत्येतद्व्यावर्त्त्यम् ।

---

१ 'एतेन' इति पाठान्तरम् ।　　२ 'क्तिनि तु' इति ख. ङ. पाठः ।

३ 'सप्तमीति योगविभागात्समासः' इति ख. ङ. पाठः ।

४ 'अत्र' इति ख. नास्ति ।

५ 'धान्याय अर्थः-धान्याऽर्थः' इति लघुशेखरे पाठः ।

'अर्थे' इति पूर्वपदप्रकृतिस्वरस्य बाधकस्य तत्र[1] सत्त्वात् । इदं तृतीयासमासे सावकाशम् । न च समस्य सर्वाऽनुदात्तत्वात् प्रकृतिस्वराऽभावे 'समाऽर्थमि'[2]त्येतत् व्यावर्त्यम् । तदभावे समासस्वरेणाऽन्तोदात्तस्य इष्यमाणत्वादित्याहुः । ऊनेत्यादि किम् ? । 'मासपूर्वः' ।

**मिश्रञ्चानुप**। 'तृतीयान्तादुत्तरपदम् , अनुपसर्गं मिश्रमन्तोदात्तमि'-त्यर्थः। **पणबन्धेनेति**। 'यदि भवन्त इदं मे कार्यं कुर्युस्तदाऽहमपि भवतामुपकारं करिष्यामी'त्येवंरूपेणेत्यर्थः । **मिश्रग्रहणे इति** । अन्यथा प्रतिपदोक्तपरिभाषया 'मिश्रश्लक्ष्णैरि'ति समासस्यैव ग्रहणे, तद्वैयर्थ्यं स्पष्टमेव।

**ब्राह्मणैः सहेति**। केचित्तु 'ब्राह्मणैः सह देशप्रत्यासत्तौ सत्यामपि राज्ञः स्वरूपभेदो गृह्यते । अयमेव सन्धिः । उदाहरणे तु स्वरूपभेदाऽग्रहात् असन्धिः । एवं च 'तिलमिश्रा माषा' इत्युदाहरणमित्याहुः ।

**अकार्णवेष्टकिकमिति** । क्रमेण–'सम्पादिनी'ति ठञ् , 'छेदादिभ्यो नित्यमि'ति ठक्, 'तस्मै हितमि'ति छः, 'तस्मै प्रभवती'ति ठक् । **विगार्दभेति** । 'तदर्हती'ति ठक् ।

**गार्दभरथिकादन्य इति** । न चाऽस्य गर्दभरथाऽर्हणकर्तृभिन्न इत्यर्थः, तत्राऽर्थतोऽर्हत्वाऽभावस्याऽपि बोधनादस्त्येव गुणप्रतिषेधः,यथा'घटभिन्न' इत्युक्ते 'घटत्वाऽभाववानि'ति प्रतीयते इति वाच्यम्।'न गर्दभरथम् अर्हती'ति गर्दभरथस्य नञर्थाऽर्हाऽर्थाभ्यां[3] युगपदेकार्थीभावविवक्षायां परत्वात्तद्धिते एकदेशद्वारकसामर्थ्यमाश्रित्य तद्धिताऽन्तेन समासे, 'आरोपितगर्दभरथमर्हती'त्यर्थकेऽतिप्रसङ्गवारणाऽर्थत्वात् । न च प्रत्ययार्थोपसर्जनगर्दभरथस्य नञर्थाऽपेक्षत्वेनाऽसामर्थ्यात्ततस्तद्धितो दुर्लभः । अस्मादेव

---

१ 'तत्र' इति क्वाचित्कः पाठः ।

२ 'समर्थम् इत्येतत्' इति लघुशेखरे पाठः ।

३ 'नञर्हाभ्यां युगपत्' इति लघुशेखरे पाठः ।

गुणप्रतिषेधात्[1] ज्ञापकात् नञर्थसापेक्षादपि तद्धितोत्पत्तिस्वीकारात्। स्पष्टञ्चेदं 'न नञ्पूर्वात्तत्पुरुषादि'ति सूत्रे भाष्ये । यत्तु कैयटेन—'एतदन्तोदात्तत्वविधानमेव एतदर्थज्ञापकमि'त्युक्तम्। तन्न। 'वत्सेभ्यो न हित'[2] इत्यर्थे प्रधानस्य नञर्थाऽपेक्षत्वेऽपि उपसर्जनवत्सानां तदर्थाऽनपेक्षत्वेन तद्धितोत्पत्तिसाम्राज्ये सूत्रसार्थक्यात्। किं चेदृशेऽर्थेऽपि हितस्य धर्मिण एव प्रत्ययाऽर्थतया, तत्र नञर्थाऽन्वये अत्यन्ताऽभावाऽर्थकत्वे हिताऽभावः[3] एव प्रतीयते, न तु हितत्वरूपगुणप्रतिषेधः। भेदाऽर्थकत्वे तु अस्मद्रीत्यैव गुणप्रतिषेधाऽर्थत्वमुपपाद्यम्। एवञ्च नञर्थाऽनपेक्षवत्सशब्दात्पूर्वं प्रत्यये, पश्चान्नञ्समासेऽपि तदुदाहरणं सुलभम्। किं च त्वदुक्तरीत्या प्रत्ययाऽर्थस्य साऽपेक्षत्वेऽपि, प्रकृत्यर्थस्य तत्त्वाऽभावात्, 'सापेक्षादपी'ति भाष्योक्तज्ञाप्याऽसिद्धिः। 'वत्से युगपदुभयाऽन्वयविवक्षे'ति तु न वक्तुं युक्तम्, तथा हि सति 'वत्सभिन्नहित' इत्येवं प्रतीत्या गुणप्रतिषेधाऽनवगमादित्याहुः। 'अगर्दभरथ'शब्दात् प्रत्यये तु नञ्पूर्वपदकतद्धितान्तोत्तरपदकसमासाऽभावात्स्वरस्य अप्राप्तिरेवेति, न तद्व्यावृत्तये तत्।

**अवोढेति**। 'अर्हे कृत्यतृच' इति तृच्। अत्र नञ्स्वर एव।

**ययतोश्चा**। ययतोः किम्। ?। 'अपाणिनीयम्'। नञः किम् ?। 'विपाश्या'। **तद्धिते किमिति**। 'अत्र तद्धित इति नाऽनुवर्तते' इति मताऽन्तरम्—'अत्वसन्तस्ये'ति सूत्रे आकरे ध्वनितम्। तत्र हि—'ण्यति तदनुबन्धकपरिभाषया अस्याऽप्रवृत्तिरि'त्युक्तम्।

**दन्त्यादन्यदिति**। उक्तरीत्या 'आरोपितदन्तभवमि'त्यर्थोऽस्य बोद्धव्यः। उदाहरणे तु 'दन्तभवभिन्नमि'ति। 'दन्तभवत्वाऽभाववदि'ति यावत्।

**अच्का**। **नञः परमिति**। 'गुणप्रतिषेधाऽर्थान्नञ' इत्यर्थः। **दीक्षित इति**। अस्य हि शास्त्रनिषिद्धः पाको, न तु तत्राऽशक्तोऽयम्। **अन्योऽयं**

१ 'गुणप्रतिषेधग्रहणात् ज्ञापकात्' इति ख. ङ. पाठः।

२ 'वत्सेभ्यो न हितमित्यर्थे' इति ख. ङ. पाठः।

३ 'हिताऽभावः प्रतीयते' इति तु लघुशेखरे पाठः।

**पचादिति** । अस्य 'आरोपितपाककर्त्ते'त्यर्थः पूर्ववत् । उत्तरकृत्योकादि-साहचर्यादत्र अच्कौ कृतावेव। कृद्ग्रहणादेव गतिकारकपूर्वत्वेऽपि भवति— 'अप्रपच' इति। **नञः पराविति**। 'गुणप्रतिषेधाऽर्थादि'त्येव। **पक्तुं नेति**। केचित्तु 'पक्तुं समर्थोऽपि न पचतीत्येवमाक्रुश्यते' इत्याहुः। अत्र 'अच्कौ' इति वृत्त्यनुरोधादनुवर्त्तितम्। 'नवे'तिसूत्रभाष्ये तु 'अत्राऽच्कावि'ति नाऽनुवर्त्तते। 'विभाषा तृन्नन्ने'त्यपेक्षया आक्रोशे इदमेव पूर्वविप्रतिषेधेन भवती'ति स्थितम्। 'सञ्ज्ञायामि'त्युत्तरसूत्रे 'गुणप्रतिषेध'इति नाऽनुवर्त्तते इति, नाऽत्र पक्षे तद्वैयर्थ्यम्। **अदेवदत्त इति**। देवदत्तः सन् यस्तत्कार्यं न करोति, स एवमाक्रुश्यते।

**कृत्योकेष्णु**। अत्र 'गुणप्रतिषेध'इति सम्बध्यते। **इकारादेरिति**। इदं खिष्णुज्विधावेव[1] निरूपितम्। चारु, साधु, यौधिक, अनङ्गमेजय, वदान्य, अनकस्मात्। **'वर्त्तमान-वर्द्धमान-त्वरमाण-ध्रियमाण-रोचमानाः सञ्ज्ञायाम्'**। 'प्रीयमाण-क्रियमाण-शोभमाना' अपि क्वचित्पठ्यन्ते। **'विकारसदृशे व्यस्तसमस्ते'**। गृहपति, गृहपतिक। **'राजाह्नोश्छन्दसि'**[2]। 'राजाऽह्नोरि'ति गणसूत्रम्। 'छन्दस्येव एतौ चार्वादी' इत्यर्थः।

**विभाषा तृन्न**। 'नञः पराण्येतान्यन्तोदात्तानी'त्यर्थः। 'गुणप्रतिषेध' इत्येव। **पक्षेऽव्ययेति**। एतत्सूत्रं यावत् 'तत्पुरुषे शालायामि'ति सूत्रस्थ-'तत्पुरुष'पदाऽनुवृत्तेरिति भावः। वृत्तौ चेदं स्पष्टम्।

**बहुव्रीहाविदमे**। **अनयोरिति**। 'क्रियागणनवृत्त्योः प्रथमशब्द-पूरण-प्रत्ययाऽन्तयोरुत्तरपदयोरि'त्यर्थः। **इदंप्रथममस्येति**। 'गमनम्, आगमनं वे'ति शेषः। **तृतीयेतीति**। एवञ्च तृतीयापूर्वपदप्रकृतिस्वरोऽत्रेति भावः। **इदं पदमञ्जर्यां** स्पष्टम्। **केचित्तु** 'तृतीये'त्यत्र योगविभागस्य भाष्ये[3] अनुक्तत्वात् 'सुप्सुपे'ति समासेऽन्तोदात्तत्वमेव। 'अयमिव प्रथम इदंप्रथमः

१ 'खिष्णुज्विधावाकरे स्पष्टम्' इति लघुशेखरे पाठः।

२ इदं गणसूत्रं ख. ङ. नास्ति।

३ 'भाष्यादौ' इति ख. ङ. पाठः।

स' इत्युदाहर्तुमुचितम्। प्राथम्यमेव साधारणो धर्म इत्याहुः । **अयं प्रथम इति** । देवदत्तादिः । **अयं प्रथम एषामिति** । 'अयं पाकादिः प्रधानमेषामि'त्यर्थः । **उत्तरपदस्य कार्यित्वादिति** । समासाऽन्तस्तु समासाऽवयव एवेति भावः । **द्विस्तना** । **चतुः स्तनेति** । 'द्विस्तनी'त्यादौ तु ङीषि नतिशिष्टत्वादन्तोदात्तत्वं सिद्धमिति तन्नोदाहृतमित्याहुः ।

**विभाषा छन्दसि** । पूर्वसूत्रोक्तस्य विभाषा। पक्षे पूर्वपदप्रकृतिस्वरः । **सञ्ज्ञायामिति** । 'एतयोरुत्तरपदयोः अन्त उदात्तो, बहुव्रीहौ सञ्ज्ञायाम्' ।

**विश्वामित्र इति** । 'मित्रे चर्षौ' इति दीर्घः । अत्र 'बहुव्रीहौ विश्वं सञ्ज्ञायामि'त्येव भवति । अनृषौ तु विश्वमित्रे इदमेव परत्वादित्युक्तम् ।

**व्यवायिनोऽन्तरम्** । उदाहरण-प्रत्युदाहरणयोः 'अन्तर'शब्दस्य परनिपातोऽस्मादेव ज्ञापकात् । **आत्मान्तर इति** । 'आत्मा = स्वभावोऽन्यो यस्ये'त्यर्थः । 'अन्यस्वभाव इत्यर्थ' इति युक्तः पाठः । अन्तरं किम् ? । 'वस्त्रव्यवधायकः' ।

**मुखं स्वाङ्गम्** । 'बहुव्रीहौ उत्तरपदभूतम् 'अद्रवमि'त्यादिलक्षणलक्षितस्वाङ्गवाचि मुखम् अन्तोदात्तमि'त्यर्थः[1] । **पूर्वपदेति** । 'उच्चैरादीनि पूर्वपदान्यन्तोदात्तान्यत्र' । **उपमानलक्षण इति** । 'निष्ठोपमानादि'त्युत्तरसूत्रविहितः । **बाध्यत इति** । पूर्वप्रतिषेधादिति भावः । **वृत्तौ** स्पष्टमेतत् । 'अत्र अव्ययशब्देन अव्ययीभावस्याऽपि ग्रहणमि'ति 'अव्ययीभावश्चे'तिसूत्रस्थभाष्यस्वरसः । **प्रक्षालितेति** । 'कृद्ग्रहण'परिभाषयाऽस्य निष्ठाऽन्तत्वम् । तस्याऽपि वैकल्पिकत्वात्, तदभावे आह— **पूर्वपदप्रकृतिस्वरत्वेनेति** । **सिंहमुखे**—पक्षे पूर्वपदप्रकृतिस्वरः ।

**जातिकाल** । 'जात्यादिभ्यः परं क्तान्तं बहुव्रीहावन्तोदात्तं, कृतादीन् वर्जयित्वा, न चेत् वस्त्राऽर्थात्परं क्तान्तं भवति' । **मासजात इति** । 'मासो जातो यस्ये'ति विग्रहः । 'कालाः परिमाणिना' इति तत्पुरुषे तु सिद्धमेव

---

१ 'मुखशब्दोऽन्तोदात्त इत्यर्थः' इति ख. ङ. पाठः ।

अन्तोदात्तत्वम् । **पुत्रजात इति** । 'पुत्र'शब्दः अन्तोदात्तः । '**वस्त्र'शब्दः** 'त्रन्'प्रत्ययाऽन्तत्वात् आद्युदात्तः । नब्विषयत्वात् कुण्डमाद्युदात्तम् ।

**वा जाते** । पक्षे पूर्वपदप्रकृतिस्वरः । 'दन्त'शब्दः स्वाङ्गत्वादाद्युदात्तः । मासो ग्रामादित्वात्तथा । 'सुख, दुःख, कृच्छ्र, अस्र, अलीक, प्रतीप, करुण, कृपण, तृप्र, सोढ एते सुखादय' इति हरदत्तः ।

**'सुखदुःखगहनकृच्छ्रास्तृप्राऽलीकप्रतीपकरुणाः ।**

**कृपणसोढौ इमे सुखादयो दश गणे पठिताः'** ॥

— इति **श्लोकगणकारः** । **गणरत्ने** तु 'आस्यशब्दोऽपीह पठ्यते' इत्युक्तम् । पूर्वसूत्रे जाताऽतिरिक्तक्ताऽन्तमुदाहर्त्तुमुचितम् ।

**नञ्सुभ्याम्** । **उत्तरपदमिति** । समासाऽन्तानां समासाऽवयवत्वेऽपि 'कपि पूर्वमि'त्यस्मादेव ज्ञापकादुत्तरपदाऽधिकारेऽप्यत्र सूत्रे समासस्यैव कार्यित्वम्[1] । अन्यत्र उत्तरपदस्यैव कार्यित्वं समासाऽन्तरहितस्य । स्पष्टश्चेदम् 'अन्तः' इति सूत्रे भाष्ये ।

**कपि पूर्वम्** । 'नञ्सुभ्यां परं यदुत्तरपदं, तस्य कपि परे पूर्वमुदात्तमि'त्यर्थः[2] । 'तदन्तस्य समासस्ये'त्यर्थो वा । पूर्वसूत्राऽपवादः ।

**ह्रस्वान्ते** । 'नञ्सुभ्यां','कपि' इति च[3] वर्त्तते । 'कपि पूर्वमि'त्यस्याऽपवादः । 'ह्रस्वाऽन्तोत्तरपदकसमासे नञ्सुभ्यां परस्य कपिपूर्वस्य उत्तरपदस्य अन्त्यात् पूर्वम् उदात्तमि'ति सूत्राऽर्थः[4] ।

**पूर्वग्रहणमिति** । पूर्वग्रहणेऽनुवर्त्तमाने पुनस्तद्ग्रहणमित्यर्थः । एतदर्थमेव पूर्वसूत्रे पूर्वग्रहणम् । अन्यथा 'कपी'त्येव वदेत्[5] । 'अन्त' इत्यनुवृत्त्या इष्टसिद्धेरिति भावः । **अज्ञक इति** । अन्त्यात्पूर्वं उदात्तभावी नाऽस्तीति

१ 'कार्यित्वमिति न दोषः' इति ख. ङ. पाठः ।

२ 'पूर्वं उदात्त इत्यर्थः' इति ख. ङ. पाठः ।

३ चकारः ख. ङ. नास्ति ।

४ 'अन्त्यात् पूर्वं उदात्त इत्यर्थः' इति ख. ङ. पाठः ।

५ 'अन्यथा कपीत्येव वदेदिति भावः'इत्येव लघुशेखरे पाठः ।

एतदभावे 'कपि पूर्वमि'ति प्राप्तम् अनेन नियमेन व्यावर्त्त्यते । तेन 'नञ्सुभ्यामि'ति कप एव उदात्तत्वमिति भावः ।

**बहोर्नञ्वत्** । ननु लाघवात् 'बहुः सुवदि'त्येवाऽस्त्वित्यत आह—**बहुमित्र इति** । 'नञो जरमरमित्रे'त्यस्याऽतिदेशेन प्रवृत्त्यर्थं तथोक्तमिति भावः । **बहुमाने**—पूर्वपदप्रकृतिस्वरः । बहुः फिट्स्वरेणाऽन्तोदात्तः ।

**न गुणादयो** । 'अवयववाचिनो गुणादयो बहोः परा' इत्यर्थः । 'बहोर्नञ्वदि'ति प्राप्तिः । 'गुण आमन्त्रणे' । चुरादिः । पचाद्यच् । **नान्तोदात्ता इति** । नञ्वद्भावप्राप्तस्वरोपलक्षणमेतत् । तेन 'बहुगुणका' इत्यादौ 'कपि पूर्वं' 'ह्रस्वान्तेऽन्त्यात्पूर्वमि'त्यपि नेति बोध्यम् ।

**उपसर्गात्स्वाङ्गन्ध्रु** । 'प्रादेरुत्तरं, स्वाङ्गवाचि, पर्शुशब्दभिन्नोत्तरपदकसमासे ध्रुवाऽर्थबोधके यदुत्तरपदं, तत् अन्तोदात्तं स्याद्बहुव्रीहौ' इत्यर्थः । यद्वा 'ध्रुवाऽर्थबोधकसमासघटकमि'त्यर्थकं स्वाऽङ्गविशेषणमेव ।

**उद्बाहुरिति** । न हि बाहोर्नित्यमूर्ध्वदिगवस्थानमिति भावः । तत्पुरुषे तु अव्ययपूर्वपदप्रकृतिस्वर एव । पर्शुः = पार्श्वम् ।

**प्रवण इति** । बहुव्रीहौ, तत्पुरुषे च पूर्वपदप्रकृतिस्वरः प्राप्तः । 'प्रनिरन्तः' इति णत्वम् । **परिवने** 'परिप्रत्युपाऽपे'ति प्राप्तम् । उपसर्गात्किम् ?। 'शरवणो देशः'। 'बहुव्रीहौ' इत्यस्य निवृत्त्यर्थं 'समास'ग्रहणम् ।

**अन्तः** । 'अन्तर्वणमि'ति अव्ययीभावेऽपि एतदेव ।

**न निविभ्याम्** । 'निविभ्यामुत्तरोऽन्तशब्दो नाऽन्तोदात्त' इत्यर्थः ।

**परेरभितोभावि मं** । 'अभितः=उभयतो भवति अवश्यमि'ति 'सुप्यजातौ' इति णिनिः । नद्यादौ हि कूलादि उभयतो भवति ।

**परिकूलमिति** । बहुव्रीहिः, प्रादिसमासः, अव्ययीभावो वा । अत्र 'परिप्रत्युपे'ति, 'कूलतीरे'ति वा प्राप्ते ।

---

१ 'चुरादेः'इति ख. ङ. पाठः ।

२ 'प्राप्तम्' इति लघुशेखरे पाठः ।

**प्रादस्वाङ्गं सं** । 'प्रात् उत्तरपदम् अस्वाङ्गवाचि सञ्ज्ञायामन्तोदात्तं, समासमात्रे' इत्यर्थः । प्रग्रहादयः, प्रगृहादयो वा प्रादिसमासाः, बहुव्रीहयो वा । निरुदकादिः आकृतिगणः । **अभिमुखा शालेति** । प्रादिसमासो, बहुव्रीहिर्वा ।

**अपाच्च** । 'मुखमि'ति वर्त्तते । '**अपमुखमि'ति** अव्ययीभावेऽपि 'परिप्रत्युपाऽपे'ति प्राप्तम् । **एतदेव चेति** । अन्यथा अचश्चित्त्वादेव सिद्धं स्यादिति भावः । **सीरनामेति** । 'नाम'ग्रहणं सीरेणैव संबध्यते, न स्फिगादिभिः, स्फिगपूतकुक्षीणां पृथग्ग्रहणात् । हरदत्तप्रामाण्यात् एषां पर्यायत्वमवगम्यते[1] । **स्फिगपूतकुक्षिग्रहणमिति** । 'वीणा'ग्रहणसहितः पाठोऽपपाठः । **प्रादिसमासं**[2] **इति** । अव्ययीभावे तु समासाऽन्तोदात्तत्वेनाऽपि सिद्धम् ।

**पुरुषाश्चाऽन्वा** । अन्वादिष्टः—अप्रधानशिष्टः । यथा 'भिक्षामटे'-त्यादौ । यद्वा कस्मिंश्चित्कथिते, योऽन्यः पश्चात्कथ्यते सः—'**अन्वादिष्टः**' ।

**अतेर** । **अकृदन्तं, पदशब्दश्चेति** । अयञ्च अर्थो **वृत्तौ** । भाष्यात्तु 'अतेः उत्तरपदमन्तोदात्तं, कृदन्तं, पदशब्दञ्च वर्जयित्वे'त्यर्थः प्रतीयते ।

**नेरनि** । 'निशब्दात् उत्तरपदम् अन्तोदात्तं स्यादनिधानेऽर्थे' । **निमूलमिति** । 'निर्गतं मूलमस्ये'ति, 'निर्गतं मूलमि'ति वाऽर्थः । अव्ययीभावे तु समासाऽन्तोदात्तत्वेनैव सिद्धम् । **निदण्ड इति** । निशब्दोऽत्र निधानाऽर्थं ब्रवीति । प्रादयो हि वृत्तिविषये सक्रियं साधनमाहुः । **अनित्यत्वादिति** । अंश्वादिषु 'राजन्'शब्दपाठ एवाऽत्र ज्ञापको बोध्यः । अंशु, जन[3], राजन्, उष्ट्र, खेटक, अजिर, आर्द्रा, श्रवण, कृत्तिका, अर्ध, पुर । वृत् ।

**उपाद् द्व्य** । गौर, तैष, तैल, लेट, लोट, जिह्वा, कृष्ण, कन्या, गुध, कल्प, पाद । **वृत्** ।

**उपगौर इति** । अव्ययपूर्वपदस्वरः । बहुव्रीहौ अपि एवम् ।

---

१ इतोऽग्रे–'व्याख्यानादेव अस्य सीरग्रहणेन सम्बन्ध' इति तत्त्वम्' इति लघुशेखरे पाठः । २ इतोऽग्रे 'बहुव्रीहिरपि संभवति' इति ख. ङ. पाठः ।
३ 'जन' इति ख. नास्ति ।

**सोरव** । 'सोः उत्तरपदम् अन्तोदात्तं, निन्दायां, तत्पुरुषे' इत्यर्थः । **पूजायामेवेति** । एवञ्च कर्मप्रवचनीयत्वेन गतित्वाऽभावात् थाथादिस्वरोऽत्र नास्ति । **निन्देति** । अनर्थे उपस्थिते यः सुखायमान आस्ते तं प्रतीदं वाक्यम् असूयया प्रयुज्यते । **कुब्राह्मण इति** । 'नञ्कुनिपातानामि'ति ईषदर्थे चरिताऽर्थम् ।

**विभाषोत्पु** । 'तत्पुरुषरूपेऽपि[1] उत्पुच्छशब्दे यदुत्तरपदं, तदन्तोदात्तं वे'त्यर्थः । **उक्रान्तः पुच्छादिति** । अत्राऽव्ययपूर्वपदप्रकृतिस्वरः प्राप्तः ।

**यदा त्विति** । **केचित्तु** 'अस्य लाक्षणिकत्वादत्र न ग्रहणम् । किंच अयम् उत्पुच्छो न तत्पुरुषः, किं तु तदवयकः । नाऽपि तद्घटकः पुच्छशब्द उत्तरपदमि'त्याहुः ।

**मूर्धन्नित्यकृतेति** । अत एव 'बहुव्रीहि'ग्रहणं चरिताऽर्थम्[2] । अन्यथा 'मूर्द्धसु' इत्येव वदेत् । बहुव्रीहिभिन्नञ्च समासाऽन्तविरहादेव वारयिष्यते । न च 'द्विदन्त' इति बहुव्रीहौ वयोवाचकत्वाऽभावाद्दत्रादेशाऽभावे, शसादौ 'पद्दन्न' इति ददादेशे प्रवृत्त्यर्थं बहुव्रीहिग्रहणस्याऽऽवश्यकत्वेन, समासाऽन्तनिर्देशे गौरवम । किं च समासाऽन्तनिर्देशेऽत्र प्रवृत्तिर्न सुलभा । कृतसमासाऽन्तसाहचर्येण दत्रादेशस्यैव ग्रहणाऽऽपत्तेः । अत एव 'द्वयोर्दन्ता' इति[3] विग्रहे 'द्विदतः पश्ये'त्यादौ षष्ठीतत्पुरुषे न प्रवृत्तिरिति वाच्यम् । यथान्यासेऽपि[4] पूर्वोत्तरसाहचर्येण विभक्त्यनिमित्तददादेशस्यैव ग्रहणात् । शसादिनिमित्तकस्य बहिरङ्गत्वेन असिद्धत्वाच्चेति भावः[5] । एवञ्च 'बहुव्रीहि'ग्रहणमपि समासाऽन्ताऽनित्यत्वे[6]

---

१ अपिः ख. ङ. नास्ति ।

२ 'केचित्तु अत एव बहुव्रीहिग्रहणम्' इति लघुशेखरे पाठः ।

३ 'इति विगृह्य' इति ख. ङ. पाठः ।

४ 'यथान्यासे हि' इति लघुशेखरे पाठः ।

५ 'इति भावः' इति लघुशेखरे नास्ति ।

६ इतोऽग्रे—'भाष्योक्तप्रकृत्यन्तरत्वपक्षे अत्र तदप्राप्तेश्च' इति लघुशेखरे पाठः ।

ज्ञापकं बोध्यम्[१] पक्षे भवत्येवेति। अत्र च सूत्रे समासस्यैव कार्यित्व-मिति सिद्धान्तः।

**सक्थञ्चा**। 'बहुव्रीहौ सक्थि' इति षजन्तः 'सक्थ'शब्दोऽन्तोदात्तो वा स्यात्, 'क्र'शब्दाऽन्तात्परश्चेन्न भवती'त्यर्थः। चित्त्वान्नित्यम् अन्तो-दात्तत्वे प्राप्ते, विकल्पोऽयम्। 'नञ्दुःसुभ्याम्' इत्यजन्तस्तु न गृह्यते, व्याख्यानादित्याहुः। पक्षे पूर्वपदप्रकृतिस्वरः। 'शुक्लगौरयोरादिरि'ति गौरः पर्यायेण[२] आद्यन्तोदात्तः।

**परादिश्छन्दसि**। इदञ्च समासमात्रे। 'परादिश्चे'त्यस्योदाहरणम्– **उरुक्षया इति**। 'उरूणां = बहूनां क्षयौ[३]' इत्यर्थः। क्षयशब्दः 'क्षयो निवासे' इत्याद्युदात्तः। 'समासस्ये'त्यन्तोदात्तत्वं बाधित्वा, कृदुत्तरपदप्रकृति-स्वरेण उत्तरपदाऽऽद्युदात्तत्वं प्राप्तं, तत् थाथादिस्वरेण बाधितम्, अतो बाहुलकेन उत्तरपदाऽऽद्युदात्तत्वमि'ति वेदभाष्ये स्थितम्। इदञ्च 'क्षि निवासगत्योरि'त्यतो बाहुलकात् अधिकरणे एरजन्तः क्षयशब्द'इत्यभि-प्रायेण। यदि तु घान्तः क्षयशब्दः, तदा थाथादिस्वराऽप्राप्त्या कृदुत्तरपद-प्रकृतिस्वरेणैवेदं सिद्धम्। अस्योदाहरणन्तु 'चोदयित्री सूनृतानामि'ति। सुपूर्वात् ऊनयतेः क्विप्। सुतराम् ऊनयति अप्रियमिति 'सून्' = प्रियं, तच्च तत् ऋतञ्चेति 'सूनृतम्'। 'अयस्मयादीनी'ति भत्वान्नलोपो न।

पराऽन्तोदाहरणं– **मुष्टिहत्ययेति**। 'मुष्ट्या हननं मुष्टिहत्या'। 'हनस्त चे'ति क्यप्। कृदुत्तरपदप्रकृतिस्वरोऽत्र प्राप्तः। त्रिचक्रे–बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरे प्राप्ते, पराऽन्त उदात्तः। पूर्वाऽन्तत्वे–**विश्वायुरिति**।

---

१ 'ज्ञापकमित्याहुः। बहुव्रीहिकार्यत्वादिति। 'अस्य स्वरस्ये'ति शेषः। तदेकदेशत्वाच्चेति। 'समासाऽन्तस्ये'ति शेषः। समासान्तोदात्तत्वम् = एतत्सूत्रविहितम्' इति तु लघुशेखरे पाठः।

२ 'पर्यायेण अन्तोदात्तः' इति ख. ङ. पाठः।

३ 'क्षयौ इत्यर्थ' इति ख. ङ. नास्ति। अतो लघुशेखरात्पूरितमिदम्।

'विश्वमायुर्यस्मिन् धने' इति बहुव्रीहिरयम् । 'विश्व'शब्दः कन्नन्तत्वात् आद्युदात्तः । तस्य पूर्वपदप्रकृतिस्वरेण आद्युदात्तत्वं प्राप्तम् । 'व्यत्ययो बहुलमि'त्यनेनैव सिद्धे 'परादिरि'ति सूत्रं, 'त्रिचक्रादीनां छन्दस्यन्तोदात्तत्वमि'ति वार्त्तिकं च न कार्यमि'त्यर्थः । यद्वा वा'ग्रहणेऽनुवर्त्तमाने, बहुलग्रहणम् एतदर्थलाभाऽर्थं[1] कृतमित्यर्थः । यतो व्यत्ययो बहुलपदाऽर्थ इति भावः । 'बहुल'ग्रहणादेव 'पुरः सो अस्तु' इत्यादौ शिट्स्वराऽप्रवृत्तिः । 'अस्थन्वन्तं यदनस्था बिभर्त्ती'त्यत्र 'भीह्री'त्यस्य च स्वरस्य अप्रवृत्तिरित्याद्यूह्यम् ।

इति समासस्वराः ॥

---

## अथ तिङन्तस्वराः ।

**पचति गोत्रमिति** । 'गोत्रं = स्वकुलं, पीडयती'त्यर्थः । एवं हि कुत्सा भवति । **पचतिपचति गोत्रमिति** । अनेकाऽर्थत्वात् करोत्यर्थे पचिः । 'विवाहादौ गोत्रं पुनः पुनः सुखाकरोती'त्यर्थः । **पाठविशेषणमिति** । योगविभागः कार्यः । 'कुत्सनाऽऽभीक्ष्ण्ययोरि'ति । 'गोत्रादिनी'ति वर्त्तते । परिभाषेयम् । 'यानि कुत्सनाऽऽभीक्ष्ण्यविषयाणि तान्येवाऽत्र शास्त्रे गोत्रादीनी'त्यर्थः ।'यत्र गोत्रादिपदघटितवाक्येन कस्यचित् कुत्सा बोध्यते, क्रियागतमाभीक्ष्ण्यं वा, तानी'ति यावत् । **अन्यत्रापीति** । 'चनचिदवे'त्यादौ । गोत्र, ब्रुव, प्रवचन, प्रयजन, प्रहसन, प्रयतन, प्रत्ययन[2], पवन, यजन, प्रकथन, प्रत्यायन, विचक्षण, प्रचक्षण, अवचक्षण[3], स्वाध्याय, भूयिष्ठ । **'वा नाम'** । 'नामेत्येतत् वा निहन्यते' इत्यर्थोऽस्य । वृत् ।

तिङः किम् ? । 'कुत्सितं गोत्रम्' । **खनतीति** । 'गोत्रं समेत्य कूपं खनती'त्यर्थः ।

---

1 'बहुलम्'पदाऽर्थः' इति ख. ङ. पाठः ।

2 'प्रयतन' इति लघुशेखरे पाठः ।

3 'अवरक्षण' इति ख. ङ. पाठः ।

**तिङ्ङतिङः**। 'पदस्य' 'पदात्' 'अनुदात्तं सर्वमपादादौ' इत्यधिकारात् अत्र प्रकरणे **निहन्यते** = सर्वाऽनुदात्तं क्रियते' इत्यर्थः। यथाऽत्र सर्वस्य अनुदात्तता तथा निरूपितं युष्मदस्मत्प्रकरणे। 'उदात्तस्वरितगुणविशिष्टमेव निहन्यते, नाऽन्यदि'ति 'स्वरितो वाऽनुदात्ते' इति सूत्रस्थभाष्यस्वरसः।

अतिङ इति किम्?। 'पचति भवति'। पाको भवतीत्यर्थः। वस्तुतः 'अतिङ्'ग्रहणं व्यर्थम्। समानवाक्याऽधिकारस्य वार्त्तिकोक्तस्य आवश्यकत्वात्। 'एकतिङ् हि तत्र वाक्यमि'ति भाष्ये स्पष्टम्। अपादादौ किम्?। 'तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो'।

**निपातैर्यद्यदि**। यदादि-यत्राऽन्तानां द्वन्द्वे तृतीयायाः सौत्रो लुक्, न तु 'युक्त'शब्देन समासः। 'निपातैरि'ति विशेषणस्य अनन्वयाऽऽपत्तेः। यदादयो निपातत्वात् आद्युदात्ताः। सर्वनाम्नो यच्छब्दस्य तु न ग्रहणम्, यत्र-यद्योः पृथग्ग्रहणात्।

**'यद्यदार्थे च, हेतौ च, विचारे यदि चेच्चणः।**

**हन्त हर्षेऽनुकम्पायां वाक्याऽऽरम्भविषादयोः।**

**कच्चित्प्रश्ने, निषेधे[1] नेत्, प्रशंसायां कुवित् स्मृतः'** ॥ नेन्निषेधे[2]। (नेत्-चेत्-शब्दौ निपातसमुदायौ[3])। 'हन्त करोति'। 'हन्ताऽहं पृथिवीमिमां निदधानि हवेहवा' इत्यादौ 'दधानी'त्यादेर्निघातश्छान्दसः। एतेन 'हन्तो नु किमाससे' इत्यादि व्याख्यातम्। 'हन्तो' इत्यखण्डो वा निपातो बोध्यः। तथैव पदकारैः पाठात्। 'नेदेवमायुनजन्नत्र देवाः'। 'युनजन्' इति युजेर्लेटि रूपम्। 'अन्यश्चेन्नाऽभिगच्छति'। अत्र न-वाभ्यां विच्छिद्य 'इत्'शब्दस्य पदकाले पाठात् निपातसमुदायौविमौ[4]। 'चण्' इति चेदर्थे णित्। अन्यत्र

---

१ 'निषेधे च' इति ख. ङ. पाठः।

२ इतोऽग्रे—'यत्रेति आधारे' इति लघुशेखरे।

३ अयं ख. ङ. पाठो लघुशेखरे नास्ति।

४ 'एतौ' इति लघुशेखरे पाठः।

तु अणित् । 'इन्द्रश्च मृळयाति नः' । 'इन्द्रश्चेदस्मान् सुखयेदि'त्यर्थः । **कच्चित् इति** निपातसमुदायः प्रश्ने । यथा–'चकृमा कच्चिदि'ति । यद्यप्यत्र[1] 'एतैरेव परभूतैर्योगे नियमो, नाऽन्यै'रित्यर्थक–'यद्धितुपरमि'ति नियमात् निषेधो न प्राप्नोति, तथाऽपि छान्दसत्वेनाऽत्र नियमाऽप्रवृत्तिरित्याहुः ।

निपातैः किम् ? । 'यत् कूजति शकटम्' । इणः शतरि, इणो यणि[2] रूपम् । ननु प्रतिपदोक्तत्वात्, यथादिभिर्निपातैः साहचर्याच्च निपात एव ग्रहीष्यते ?। सत्यम् । अत्र प्रकरणे कचित्तन्न्यायाऽप्रवृत्तिज्ञापनाऽर्थत्वात् । तेन 'यावद्यथाभ्यामि'ति सूत्रे वत्वन्तस्य, अव्ययस्य च यावच्छब्दस्य ग्रहणमि'ति स्पष्टमाकरे । युक्तग्रहणं किम् ? । अन्यत्र साक्षादन्वितैरेतैः परम्परासम्बद्धे[3] मा भूदिति । यथा–'यत्र क च ते मनो दक्षं दधस उत्तरम्' । 'यत्रे'त्यस्य 'उत्तरमि'त्यनेन साक्षात् सम्बन्धः । 'दध धारणे' । अनुदात्तेत् ।

**नहप्र** । 'नहे'ति निपातसमुदायो निषेधे वर्त्तते । **प्रतिषेधयुक्त इति** । 'पूर्वं 'भुङ्क्ष्वे'त्युक्ते कर्त्तव्यतयोपन्यस्तस्य[4] भोजनादेरवज्ञाने, अवज्ञातुः उपालिप्सया पुनः क्रोधेन, उपहासेन वा यत्र प्रतिषेधयुक्तं पृच्छ्यते स प्रत्यारम्भ' इत्यर्थः । **भोक्ष्यसे इति** । 'स्य'स्वरेण मध्योदात्तम् । अदुपदेशात्परत्वात् 'से' इत्यस्य निघातः । **सत्यं भोक्ष्यसे इति** । 'सत्य'-शब्दः 'सत्यादशपथे' इत्यन्तोदात्तो निपात्यत इत्याहुः ।

**अङ्गाऽप्रा** । 'अङ्गे'ति लुप्ततृतीयाकम् । **अप्रातिलोम्यम्** = आनुकूल्यम् । 'अङ्गे'ति आमन्त्रितत्वादाद्युदात्तम् । 'अन्तोदात्तमिदमव्ययम्, 'इन्द्रो

१ 'यद्यपि अत्र यद्धितुपरमिति,–एतैरेव परभूतैः' इति ख. ङ. पाठः ।

२ 'इणो यणि' इति ख. ङ. नास्ति ।

३ 'परम्परासम्बन्धे' इति लघुशेखरे पाठः ।

४ 'वक्तव्यतयोपन्यस्तस्य' इति ख. ङ. पाठः ।

अङ्गे'त्यादौ तथा दर्शनदि'त्यन्ये। अङ्ग **कूजतीति**। अत्र 'अङ्ग' इति अमर्षे। 'कूजती'ति आद्युदात्तम्।

**हि च**। 'आनुकूल्ये' इत्येव। नेह 'हि कूज वृषल'। अत्राऽमर्षे 'हि'शब्दः। उदाहरणे-अवधारणे। 'स्म'शब्दो निपातत्वात् आद्युदात्तः। छान्दसे दीर्घत्व-षत्वे।

**छन्दस्यनेकमपि**। अपिना एकमपि। **अनृतंहीति**। हिः-यत इत्यर्थ। 'यतोऽयं मत्तः, अनृतं च वदति, अतः पाप्मा = पापं, चैनं न युनाति = न व्याप्नोतीत्यर्थः। 'अनृतवदनदोषेण न युज्यते' इत्यर्थः। 'युञ् बन्धने' इत्यस्य रूपं-'युनाती'ति। 'अग्निर्हि पूर्वमुदजयत्तमिन्द्रोऽनूदजयत्'। अत्रैकमाद्युदात्तम्। अपरं निहतम्। अत्र हेतुहेतुमद्भावद्योतको हिरिति, अनेकमपि तिङन्तं हियुक्तम्। तत्र पूर्वेण सर्वस्य निघातप्रतिषेधे प्राप्ते, क्वचिदेकस्य, क्वचिदनेकस्येत्येतदर्थमिदम्। छन्दसि दृष्टाऽनुविधानात् यथाप्रयोगं व्यवस्था।

**यावद्यथा**। 'यावदि'ति निपाताऽनिपातयोरुभयोरपि ग्रहणमि'-त्युक्तम्। आद्यः साकल्ये, द्वितीयः परिमाणोपाधिको वतुबन्तः। **'यथा'** योग्यतादिषु। 'भ्यामि'ति तृतीया।

**तुपश्य**। 'पूजायामि'ति वर्त्तमाने पुनः पूजाग्रहणम् 'अनन्तर'ग्रहणस्य अनिघातनिषेधस्य चाऽनुवृत्तिनिवृत्त्यर्थम्। निषेधाऽनुवृत्तौ हि 'निपातै-र्यद्यदी'त्यस्य प्रतिषेधः सम्भाव्येत। पूजायां किम्?। 'पश्य मृगो धावति'। तत्त्वकथनमेतत्। 'अहे'त्यस्योदाहरणमाह-**आदहेति**। त्वादी-नान्तु 'तु माणवको भुङ्क्ते शोभनमि'त्याद्यूह्यम्।

**अहो च**। पृथग्योगकरणम् उत्तराऽर्थम्। 'अहो देवदत्तः करोति शोभनम्'। अत्राऽपि 'पूजायामि'त्येव।

---

१ 'चैनम्' इति ख. नास्ति।

२ 'उभयोः' इति लघुशेखरे नास्ति।

३ 'निघातनिषेधस्य' इति क्वचित्पाठः।

**शेषे विभा**। पूर्वं 'पूजायामि'त्युक्तेः अपूजा शेषः। **अहो कटमिति**। पक्षे 'स्य'प्रत्ययस्वरः। अनाश्चर्यभूतमेव वस्तु असूयता आश्चर्यवत्प्रतिपाद्यते, न पूजा। 'शेष'ग्रहणं स्पष्टाऽर्थम्। पूर्वत्र चाऽनुकृष्टत्वादेव 'पूजायामि'त्यस्य निवृत्तेः। योगविभागसामर्थ्याच्च। तेन पूजायां नित्यं, तदभावे विकल्प इति व्यवस्थोपपत्तेः।

**पुरा च**। **परीप्सा** त्वरा। **निकटेति**। विद्योतनादौ अध्ययनं प्रतिषिद्धम्, अतस्तदुपन्यासेन 'त्वरितमधीष्वे'ति गम्यते। पक्षे 'द्योतते' इत्याद्युदात्तम्। पुराशब्दोऽत्र निपात एव, पूर्वोत्तरसाहचर्यात्। 'परीप्से'त्यस्य प्रत्युदाहरणमाह–**न तेन स्मेति**। 'लट् स्मे' इति भूते लट्। भूतस्य अध्ययनस्य चिरकालप्रवृत्तत्वं गम्यते, न त्वरा।

**नन्वित्यनुज्ञै**। किंचित्कर्त्तुमुद्यतस्य 'एवं क्रियतामि'त्यभ्युपगमः—'**अनुज्ञा**'। तस्याः प्रार्थना–**अनुज्ञैषणा**। '**ननु गच्छामि भोरि**'त्युदाहरणे वर्त्तमानसामीप्ये लट्। 'गमनं प्रति मामाज्ञापये'ति गम्यते। पृष्टप्रतिवचनाऽभावात् 'ननौ पृष्टप्रतिवचने' इत्यस्य न प्राप्तिः। 'ननु' इत्यस्य एकनिपातत्वं ज्ञापयितुम् 'इति'शब्दः सूत्रे।

**किङ्क्रियाप्रश्नेऽनुप**। 'किमि'ति लुप्ततृतीयाऽन्तम्। 'क्रियाप्रश्ने' इति किमो विशेषणम्। 'अनुपसर्गमि'त्यादि तिङो विशेषणम्। '**अप्रतिषिद्धमि**'ति अप्रतिषिद्धाऽर्थमित्यर्थकं[1] तिङन्तविशेषणम्। 'किं देवदत्तः पचति, आहोस्वित्पठती'त्यादौ उभयोः संशयविषयत्वात्, उभयोरपि किमा युक्तत्वेन निघातनिषेध' इति **केचित्**।

**हरदत्तस्तु** 'उभयोः संशयविषयत्वेऽपि, किंशब्देन स्वसन्निहितक्रियाविषय एव प्रश्नो द्योत्यते, क्रियाऽन्तरविषयस्तु आहोस्विदित्यनेन। 'क्रियाप्रश्ने'इति चोच्यते, तस्मात्तस्यैव निघातप्रतिषेध'इत्याह।

क्रियाप्रश्ने किम्?। कारकप्रश्ने मा भूत्–'किं भक्तं पचति, आहोस्वित्

---

१ 'अप्रतिषिद्धाऽर्थकमित्यर्थकम्' इति ख. ङ. पाठः।

अपूपानि'ति । '**प्रश्ने**' **किम्** ? । **किं पठती**'ति पाठः । '**किमधीते**' इति तु अपपाठः । उपसृष्टत्वात् । **किं द्विज इति** । द्विजस्य[1] अपठनं हि प्रतिषिद्धम । इदन्तु युक्तमुदाहरणं-'किं संन्यासी पचति' । **केचित्तु** 'प्रतिषिद्धं प्रतिषेधः, तदप्रतियोग्यर्थकं तिङन्तमि'त्यर्थः, तदा मूलोक्तमेव उदाहरणमि'त्याहुः ।

**लोपे वि** । 'किमर्थयोगेऽपि, किमोऽप्रयोगे' इत्यर्थः । अर्थोऽध्याहारवादे इदम् । पक्षे निघातः, पक्षे आद्युदात्तम्-'पचती'त्यादि । किंशब्दाऽप्रयोगात् अप्राप्तविभाषेयम् । **केचित्त** 'तदर्थयोगस्य सत्त्वात् प्राप्तविभाषेवे'त्याहुः । 'क्रियाप्रश्ने' इत्यादि सर्वमिहाऽपि अनुवर्त्तते ।

**एहि मन्ये प्रहासे** । उदाहरणे 'प्रहासे च मन्योपपदे' इति पुरुषव्यत्ययः । **एहि मन्यसे इति** । सूत्रे 'एहि मन्ये' इति, 'प्रहासे चे'तिसूत्रविहितलडनुवाद एव । धातुमात्रं विवक्षितमिति भावः । **इदञ्च वृत्तौ** स्पष्टम् । भाष्यात्तु—'उत्तमोऽपि विवक्षितः । 'एहि मन्ये रथेन यास्यसी'ति प्रत्युदाहरणम । 'एहि त्वं रथेन यास्यसीत्यहं मन्ये' इत्यर्थ इति प्रतीयते । **गत्यर्थेति** । 'एही'त्यस्य गत्यर्थत्वादिति भावः ।

**जात्वपूर्वम्** । तृतीयास्थाने व्यत्ययेन प्रथमा उभयत्र । '**अविद्यमानपूर्वमि**'ति जातुविशेषणं, न तिङन्तस्य । 'आहोउताहो'सूत्रे 'अनन्तर'ग्रहणादिति वक्ष्यते ।

**किंवृत्तञ्च चि** । '**चिदुत्तरमि**'ति बहुव्रीहिः—'**किंवृत्त**'**विशेषणम्** । प्रथमा पूर्ववत् । पूर्वसूत्रात् 'अपूर्वमि'ति वर्त्तते । तेन[2] 'देवदत्तः किंचित्पचती'त्यादौ न । **विभक्त्यन्तमित्यादि** । न तु 'किमीय' इत्यादि । व्याख्यानमेव[3] चाऽत्र शरणम् । किमा वृत्तं = निष्पन्नमित्यर्थः । चिच्छब्दश्चादिगणेऽनुदात्तो निपात्यते ।

---

१ '**द्विजस्य अपचनं हि' इति लघुशेखरे पाठः** ।

२ '**तेन देवदत्तः किञ्चित्पचतीत्यादौ न' इति ख. ङ. नास्ति** ।

३ '**व्याख्यानमेवाऽत्र' इति लघुशेखरपाठः** ।

**आहोउताहो**। अपूर्वं किम्? । 'अयमाहो भुङ्क्ते'।[1] **वक्ष्यतीति**। साऽन्तरं हि तत्र 'शेषः'। तथा च तत्र शेषप्रक्लृप्त्यर्थम् 'अनन्तर'ग्रहणमिति भावः । ननु 'अपूर्वमि'त्यनुवर्त्तनात्, तस्य च तिङन्तविशेषणत्वात्सपूर्वं तिङन्तं शेषो भविष्यतीति, किम् 'अनन्तर'ग्रहणेनेति चेन्न। इदमेव ज्ञापयति— 'अपूर्वमि'ति न तिङन्तविशेषणमि'ति स्पष्टं भाष्ये।

**शेषे वि**। 'अपूर्वमि'त्येव। तेन 'अयमाहो देवो वर्षती'त्यत्र निहतमेव।

**गत्यर्थलोटा**। अत्र '**सर्वे**'ति लुप्तविभक्तिकं कारकविशेषणम्। कारकपदेन प्रत्यासत्त्या लकारवाच्यं कर्तृकर्मरूपमेव कारकं गृह्यते। स्पष्टञ्चेदं भाष्ये। तदाह—**यत्रैवेति**। अस्य फलमाह—**उह्यन्तां देवदत्तेनेति**। अत्र यद्यपि कर्त्तृभेदोऽस्ति, तथाऽपि लवाच्यकर्मभेदो नाऽस्तीति, भवत्येव प्रतिषेधः। एवम् 'आगच्छ देव ग्रामं, रामं द्रक्ष्यसी'त्यादौ कर्मभेदेऽपि, लवाच्यकर्त्रैक्यात् भवत्येव। **पचौदनमिति**। अत्र लडन्तं निहतमेव।

**पिता ते ओदनमिति**। अत्र आगमने देवः कर्त्ता, ग्रामः कर्म। भोजने तत्पिता कर्त्ता, ओदनः कर्मेति कारकभेदः।

**त्वञ्चाहञ्चेति**। लोड्वाच्यकारकाऽपेक्षया यत्र लड्वाच्यं कारकं किंचित् अधिकं भवति, तत्राऽप्ययं प्रतिषेधो यथा स्यादित्यर्थं 'सर्व'ग्रहणम्। प्रकृते एकस्याऽन्यत्वेऽपि सर्वं नाऽन्यदिति भावः। एवं लोड्वाच्यकारकाऽपेक्षया लड्वाच्यं कारकं यदा न्यूनं भवति, लोड्वाच्यमधिकं भवति— 'आगच्छतं देवदत्तयज्ञदत्तौ ! देवदत्त ओदनं भोक्ष्यते' इति,—अत्राऽपि प्रतिषेधो भवत्येव। 'सर्व'शब्दस्वारस्येन लट् सर्वकारके एव। लोट्सम्बन्धितदपेक्षया अन्यत्वाऽभावस्य निमित्तत्वप्रतीतेरित्याहुः।

**लोट् च**। न **चेत्कारकमिति**। 'गत्यर्थलोट्वाच्यकारकाऽपेक्षया उदाहरणभूतलोट्वाच्यं कारकं सर्वञ्चेदन्यन्न भवती'त्यर्थः।

**विभाषितं सो**। 'अनुत्तममि'त्यस्य—'उत्तमपुरुषभिन्नमि'त्यर्थः।

---

१ 'अत्र' इति क्वचिन्नास्ति। २ 'सर्वे' इति ख. ङ. नास्ति।

'न चेत्कारकं सर्वोऽन्यदि'त्येव। पक्षे निहतम्। पक्षे त्रैस्वर्यम्। प्रत्युदाहरणे पूर्वेण नित्यं निघातप्रतिषेधः।

**हन्त च**। 'विभाषितमि'ति सम्पूर्णं सूत्रं, 'लोडि'ति च वर्त्तते। 'गत्यर्थलोटे'त्यादि निवृत्तम्। अस्याऽपि विकल्पेन निषेधविधायकत्वात्, 'निपातैर्यद्यदी'ति नित्यनिषेधप्राप्तेः, प्राप्तविभाषेयम्। **हन्त प्रविशेति**। पक्षे अन्तोदात्तम्। पक्षे निहतम। **प्रभुनजावहै इति**। 'भुजोऽनवने' इति आत्मनेपदम्। अत्राऽपि 'निपातैर्यद्यदी'ति नित्यं निघातप्रतिषेधः।

**आम एकान्तर**। 'अनन्तिक'शब्देन असन्निहितम, अदूरं–चोच्यते[1]। अत एव उदाहरणे प्लुतैकश्रुती न। आमन्त्रितत्वात् आद्युदात्तत्वम्। 'आम् भो देवदत्ते'त्यत्र 'नामन्त्रिते' इत्यविद्यमानवत्त्वनिषेधादेकान्तरत्वं बोध्यम्।

**आम्प्रपचसीति**। अत्र निघातो भवत्येव। आमः किम्?। 'शाकं पचसि देवदत्त'। **आम्पचसि देवदत्तेति**। अत्र अन्तिकत्वान्न एकश्रुतिः। किन्तु निघात एव। भाष्ये 'अनन्तिकं = दूरमि'ति पक्षाऽन्तरमप्युक्तम्। तत्र सामर्थ्यादेकश्रुतेर्बाधः। अन्यथा निघातस्य एकश्रुत्या बाधितत्वादिदं व्यर्थमेव स्यात्। अत एव एतद्दृष्ट्या[2] एकश्रुतेरसिद्धत्वाऽभावोऽपि बोद्धव्यः। प्रकरणाच्च निघातस्याऽपि बाधः[3]। अन्यथा एकश्रुतिप्रकरणे एव 'नाऽऽम एकाऽन्तरमि'ति ब्रूयात्।

प्लुतोदात्तत्वस्य तु नाऽयं प्रतिषेधः। 'आम एकाऽन्तरे एकश्रुत्य-प्रतिषेधः' इति वार्त्तिकात्[4]। अस्य वार्त्तिकोक्तपक्षस्य 'नैव वा पुनरत्रैकश्रुतिः

---

१ 'वोच्यते' इति लघुशेखरे पाठः।

२ 'अत एव एकश्रुतेः असिद्धत्वाऽभावोऽपि बोध्यः' इति लघुशेखरे पाठः।

३ 'बाधः' इति ख. ङ. नास्ति।

४ इतोऽग्रे—'मूलेऽपि 'अनन्तिकं = दूरं, तत्र विहितम् ऐकश्रुत्यं न, निघात-निषेधप्रकरणे पाठात्। वचनसामर्थ्यात् निघातोऽपि न' इत्येव पाठः। 'प्लुतश्च ने'त्यपपाठः' इति लघुशेखरे पाठः।

प्राप्नोति' इत्यादिना भाष्यकृता प्रत्याख्यानात्, अत्र सूत्रे आद्यः पक्ष एव ज्यायान्। एवञ्च 'एतदुदाहरणविषये प्लुतो नैवे'ति भाष्यप्रदीपोद्द्योते निरूपितम्।

**यद्धितुपरम्**। इदं बहुव्रीहिणा तिङो विशेषणम्। **नान्यैरिति**। 'यदि-हन्तेत्यादिभिरि'त्यर्थः। **निघातो भवतीति**। 'न तु 'लोट् चे'ति-प्राप्तो निषेधो भवती'त्यर्थः। अत्र सूत्रे रुहेर्गत्यर्थत्वस्य भाष्ये उक्तत्वेन, तद्योगात् 'एही'त्यस्य प्राप्तो निघातनिषेधो 'विभाषितं सोपसर्गमि'त्युक्तेर्न भवतीत्याहुः। भाष्ये तु छान्दसत्वेन समाहितम्।

**चनचि**। अत्र 'गति'ग्रहणेन उपसर्गग्रहणम्। तेन 'शुक्ली करोति चने'-त्यत्र 'करोति'शब्दः अनिहत एवेति स्पष्टं भाष्ये। कुत्सनाऽऽभीक्ष्ण्ययोरेव गोत्रादीनि। नेह–'सुखा करोति गोत्रम्'। अत्र निघात एव।

**चादिषु च**। 'न चवाऽहे'तिसूत्रनिर्दिष्टाश्चादय एव गृह्यन्ते, सन्निकृष्ट-त्वात्। तदाह–**चवेत्यादि**। उदाहृणे 'खादती'त्यस्य न निघातप्रसङ्गः, नानावाक्यत्वात्। समुच्चय-विकल्पयोः अनेकधर्मत्वात् परं तदुक्तिः।

**चवायोग इति**। 'चवायोगे प्रथमा' इत्युत्तरसूत्रेणे'त्यर्थः। इदञ्च **वृत्तौ** स्पष्टम्। 'चाऽनुकृष्टत्वात् अत्र 'अगतेरि'ति नाऽनुवर्त्तते' इति तदाशयः। 'चनचिदिवे'त्यत्र **कैयटस्तु** 'चवायोगे' इत्यत्राऽपि 'अगतेरि'ति अनुवर्त्तते' इत्याह।

**चवायोगे**। '**प्रथमे**'त्यस्य 'प्रथमोच्चारिते'त्यर्थः। 'योग'ग्रहणं पूर्वाभ्या-मपि योगे निघातप्रतिषेधाऽर्थम्। तद्ध्वनयन्नुदाहरति-**गाश्च चारयतीति**। नियमोऽयं–'प्रथमैव, नाऽन्ये'ति। **इतो वा सातिमीति**। अस्य 'दिवो वा पार्थिवादधि' 'इन्द्रं महो वा रजसः' इत्युत्तरवाक्ये। 'इन्द्रं प्रति सातिं = धनदानम्, अधि = आधिक्येन, ईमहे = याचामहे'। वैदिकनिघण्टौ याचिकर्मसु 'ईमहे' इति पाठात्। कस्माल्लोकादित्याकाङ्क्षायामाह–'**इतः** = अस्माल्लोकात्पार्थिवाद्वा, दिवो वा, महो = महतः, प्रौढात्, रजसः[1] =

**1 'रजसः = रञ्जकात्' इति तु लघुशेखरे पाठः।**

रक्षकात्, अन्तरिक्षलोकाद्वे'ति मन्त्राऽर्थः । ननु श्रुतस्यैव तिङन्तस्य उत्तरत्राऽनुषङ्गात्कथं प्रथममेतदिति चेत्। अनुषक्तस्याऽपि औपाधिकभेदं पुरस्कृत्य प्राथम्याऽऽश्रयणेन निघातनिषेधस्य छन्दसि बहुशो दृष्टत्वात्। एतच्च वेदभाष्ये स्पष्टम्।

हेति क्षि। 'धर्मोल्लङ्घनं—'क्षिया'[1]। उदाहरणे द्वितीयस्य निघातो भवत्येव, 'ह'योगाऽभावादिति बोद्धव्यम्।

अहेति वि। अनेकस्मिन् प्रयोजने प्रेषणं[2] 'विनियोगः'। अस्योदाहरणे पूर्ववन् निघातप्रतिषेधः, प्लुतश्च बोध्यः।

चाहलोपे। लोपोऽत्र अप्रयोग एव। शास्त्रेण लोपविधानाऽभावात्। अर्थ-प्रकरणादिना गम्यमानत्वाच्च अप्रयोगः। चः समुच्चये[3]। 'अह'शब्दः केवलाऽर्थः। समानकर्तृके 'च'शब्दस्य लोपः। नानाकर्त्तृके तु 'अह'-शब्दस्य। 'एवे'त्यादेः-'अवधारणाऽर्थकैवशब्दप्रयोगे सती'त्यर्थः।

अनवक्लृप्ताविति। 'असम्भावनायामि'त्यर्थः। 'न क्वचिद्भोक्ष्यसे', 'न क्वचिदध्येष्यसे' इत्यर्थः। इन्द्र वाजेष्विति। 'अवे'ति तिङन्तस्येह निघातः। निघाताऽभावस्य तूदाहरणाऽन्तरं बोद्धव्यम्। शुक्ला व्रीहय इति। 'समानकर्त्तृके चलोप' इति नियमः अवधारणाऽर्थैवशब्दप्रयोगे एव, न तु सर्वत्रेति, अस्ति 'च'लोपः। पक्षे निहतम्। पक्षे आद्युदात्तम्।

वैवावेति। वै स्फुटाऽर्थे, अक्षमायाञ्च। 'वावे'ति प्रसिद्धौ, स्फुटाऽर्थे च।

एकान्या। 'समर्थाभ्यां = समानाऽर्थाभ्यामि'त्यर्थः। अजामेकामिति। 'अन्यामि'त्यर्थः। जिविः—प्रीणनाऽर्थः। अत्र प्रकरणे क्वचित्साहचर्या-ऽनाश्रयणज्ञापनाऽर्थं 'समर्थ'ग्रहणम्।

यद्वृत्तात्। यद्वृत्तमिति, न तु डतर-डतमविभक्त्यन्तमेवेत्याग्रहः।

---

१ क्षिया = 'छिः ! छिः !! 'छिया-छिया' इति भाषायां जुगुप्सायाम्।

२ 'प्रेषणे' इति ख. ङ. पाठः।

३ 'चः समुदाये' इति ख. ङ. पाठः।

इदञ्च भाष्ये ध्वनितम् । अत्र व्यवहिते इति । तेन 'यो जात एव पर्यभूष-दि'त्यादौ निघातप्रतिषेधः सिद्ध्यति । अत्र मानन्तु 'पूजनात्पूजितमि'ति-सूत्रे 'पूजित'ग्रहणम् । तद्धि 'काष्ठाऽध्यापकः' इत्यादौ अनुदात्तता-विधानाय । तत्र 'काष्ठादिभ्यः' इति वार्त्तिकम् । तत्र 'पूजनादि'त्येव प्रत्या-सत्त्या, ससम्बन्धिकतया च पूजितपरिग्रहे सिद्धे, 'पूजित'ग्रहणम् अनन्तरप्रतिपत्त्यर्थं सत् 'इह प्रकरणे पञ्चमीनिर्देशेऽपि आनन्तर्यं नाऽऽश्रीयते' इति ज्ञापयतीत्याहुः । **'यथेच्छप्रवृत्तौ वेति वाच्यम्'** । 'यत्र क्व चन यजते' । अत्र पक्षे निहतम् । पक्षे आद्युदात्तम् ।

**पूजनात्पू** । अत्र वृत्तिकृत् 'काष्ठादिभ्य' इति सूत्रे पपाठ, तत् भ्रमात् । काष्ठादिगणपाठेन सूत्रकारेणाऽपि ज्ञापितमेतत् । काष्ठादयोऽद्भुत-पर्यायाः पूजनवचना भवन्ति । उत्तरसूत्रे तिङ्ग्रहणादिदं सुबन्तविषयम् ।

**अत्र वृत्तिन्यासादयः**—'समासविषयमेतत् । काष्ठादारुणादीनां प्रवृत्ति-निमित्तभूता[1]ऽध्ययनाऽऽभिरूप्यादिविशेषणत्वेनाऽसामानाधिकरण्यात् , समासाऽप्राप्तौ, मयूरव्यंसकादित्वात्समासः । तन्निमित्तविभक्तेर्लुकि काष्ठाऽध्यापकादिसिद्धिरि'त्याहुः । भाष्यकारस्तु—'असमासे एव क्रिया-विशेषणीभूतानां[2] 'दारुणमि'त्यादीनां मलोपो निपात्यते' (इति[3]) । युक्तञ्चै-तत् । समासाऽधिकाराऽभावात् । मयूरव्यंसकादित्वे प्रमाणाऽभावाच्च । अत एव 'मलोपो वक्तव्यः' इति वार्त्तिकं वार्त्तिककृता आरब्धम् । एवञ्च 'दारुणमि'त्यादयः प्रयोगा असाधव एव, भाष्यविरुद्धत्वादिति ध्येयम् ।

पूजनात्किम् ? । 'दारुणाऽध्यापकः' । 'दारुणसञ्ज्ञक' इत्यर्थः । काष्ठा-दिभ्यः किम् ? । 'शोभनाऽध्यापकः' ।

**सगतिरपि** । अपिना अगतिः । तदाह—**तिङन्तमिति** । 'न लुट्' इत्यादिनिषेधाऽपवादः । **'सगतिरि'ति** तुल्ययोगे 'सह'शब्दः । तेन गतेरपि

१ **'प्रवृत्तिनिमित्तीभूत' इति क्वचित्पाठः ।**

२ **'क्रियाविशेषणीभूतानाम्' इति लघुशेखरात् गृहीतम् ।**

३ **इतिः क्वचिन्न ।**

निघात इत्याहुः[1]। तिङ्ग्रहणं पूर्वसूत्रस्य अतिङ्विषयत्वलाभाऽर्थम्। अत्राऽपि गतिग्रहणेनोपसर्गस्यैव ग्रहणमिति 'चनचिदि'तिसूत्रे[2] भाष्ये स्पष्टम्। तेन'यत्काष्ठा शुक्ली करोती'त्यादौ'निपातैर्यद्यदी'तिप्रतिषेध एव।

**यत्काष्ठा पचतीति**[3]। 'यत्काष्ठं पचती'त्यपपाठः, भाष्यविरोधात्। 'काष्ठा' इति आकारान्तस्यैव गणे पाठाच्च[4]। काष्ठा, दारुण, अज्ञात, पुत्र, वेश, '**सुभगाऽर्थे**', अनाज्ञात, अमातापुत्र, ( अनुज्ञात, अपुत्र ) अयुत, अद्भुत, अनुक्त, भृश, घोर, कल्याण, सुख, परम, सु, अति। **वृत्**।

**कुत्सने च सु**। 'पदादि'ति निवृत्तम्। 'कुत्सनाऽर्थे सुबन्ते परे' इत्यर्थः। अयं विधिः परत्वात्प्रतिषेधान् बाधते। **यत्पचतः पूतीत्यादि**। 'पूती'ति क्रियाविशेषणत्वान्नपुंसकम्। **पचति क्लिश्नातीति**। 'पाकक्रिया-कर्तृकक्लेश' इत्यर्थः। पूञः, 'पूयी'धातोर्वा बाहुलकात् औणादिके तिपि, तत एव गुणाऽभावे, आद्युदात्तत्वं 'पूति'शब्दस्य प्राप्नोतीत्यत आह—**पूति-श्चानुबन्ध इति**। 'चकाराऽबन्ध' इत्यर्थः। इदञ्च निघातसंनियोग-शिष्टम्। तेन यदा निघातः, तदाऽन्तोदात्तम्। अन्यदा तु आद्युदात्त-मेवेति बोध्यम्। **वा बह्वर्थमिति**। 'बहुवचनाऽन्तं तिङन्तमि'त्यर्थः।

**गतिर्गतौ**। अयम् 'उपसर्गा' इत्याद्युदात्तत्वाऽपवादः। गतौ परे अनु-पसर्गस्य गतेः अनभिधानेन प्रयोगाऽभावात्, 'उपसर्गा' इति वक्तव्ये, 'गति'ग्रहणं लाघवाऽर्थम्, उत्तराऽर्थञ्च। यद्यपि अयम् अभौ सावकाशः, तथाऽपि 'अभिर्गतौ' इति वक्तव्ये 'गति'ग्रहणात्सर्वत्राऽपि प्रवर्त्तते। एतावतैव तदपवादत्वव्यवहार इत्याहुः।

**अभ्युद्धरतीति**। अत्र 'उत्'शब्दे यणि, अभेः निघाते, अनिघाते वा विशेषाऽभावेऽपि[5], प्रवृत्तिमात्रेणोदाहृतम्। 'अभिसंहरति'इति मुख्यं फलम्।

---

१ 'निघातमाहुः' इति लघुशेखरे पाठः।

२ 'इति सूत्रे भाष्यम्' इति ख. ङ. पाठः। ३ 'प्रपचतीति' इति क्वचित्पाठः।

४ इतोऽग्रे 'काष्ठ'इति ह्रस्वं पठतां तु भाष्यविरोध एव' इति लघुशेखरे पाठः।

५ 'अभेः निघाते विशेषाऽभावेऽपि' इति ख. ङ. पाठः।

**गतौ किमिति** । गतेः शुद्धे तिङन्ते प्रयोगः, गतियुक्ते वा, कृदन्ते वा । तत्र कृदन्ते सगतौ, अगतौ च कृत्स्वर-थाथादिस्वर-गतिस्वरेषु कृतेषु, शेषनिघातेन गतेः निघातस्याऽभावात्[1], 'तिङि चोदात्तवती'ति 'तिङि उदात्तवत्येवे'ति नियमात्, अनुदात्तवति तिङन्ते तदप्रसङ्गात्, उदात्तवति तेनैव सिद्धेश्च, पारिशेष्याद्गतावेव भविष्यतीति प्रश्नः । **आ मन्द्रैरिति** । 'ते प्राग्धातोः' इत्यस्य प्रयोगनियमाऽर्थमिदम्[2] । प्रयोगनियमपक्षमभिप्रेत्यैव च 'छन्दसि परेऽपि' 'व्यवहिताश्चे'त्यारब्धम् । यदा तु भाष्यरीत्या सञ्ज्ञानियमाऽर्थत्वमभिप्रेत्य तत्प्रत्याख्यायते,तदा 'गतौ'इति व्यर्थम् । आङो गतित्वाऽभावादेव अप्राप्तेः । 'मन्द्र'शब्दस्तु रूढिशब्दत्वान्न क्रियावाची । 'आ मन्द्रैरि'त्यत्र न दोषः । अगतित्वात् । 'यत्क्रियायुक्तास्तं प्रति गतिसञ्ज्ञा । न च अत्र आङो मन्द्रं प्रति क्रियायोगः । किं तर्हि ? । 'याहि'शब्दं प्रती'ति भाष्यस्याऽप्ययमेवाऽर्थः—'यत्क्रियाऽन्वयः तत्क्रियाऽव्यवहितत्वान्न गतित्वं, मन्द्रस्तु न क्रियावाची'ति ।

यत्तु **कैयटादयः**—'ननु परनिमित्ताऽनुपादाने 'यत्क्रियायुक्ता' इति कथं लभ्यते ? । उच्यते । 'पदस्ये'त्यधिकारात् पदविधित्वात् समर्थपरिभाषोपस्थानात् एतद्विशेषलाभ' इति । तत्तुच्छम् । अस्मदुक्तरीत्या भाष्यस्य सामञ्जस्यात् । एकार्थीभावे एव तत्परिभाषाप्रवृत्तेश्च । युष्मदस्मदादेशनिघातविधौ परिभाषाऽप्रवृत्तेः समर्थसूत्रे भाष्ये उक्तत्वाच्च । न च मन्द्रादिकरणकेन्द्रकर्तृकं यानम् आङा विशेष्यते इति, समुदायं क्रियाविशेषवाचिनं प्रति गतित्वमस्त्येव, अत एव 'अभ्युद्धरती'त्यादौ अभेर्गतित्वमिति वाच्यम् । धातूपसर्गयोः सम्बन्धस्य अन्तरङ्गत्वेन, साधनाऽन्वयात् पूर्वमेव तदन्वयात् । अत एव 'उपास्यते गुरुः' इत्यादेः सकर्मकत्वमिति भाष्ये एव स्पष्टम् ।

---

१　'निघातस्य भावात्' इति ख. पाठः ।

२　'प्रयोगनियमाऽर्थत्वे इदम्' इति ख. ङ. पाठः ।

**तिङि चो**। 'निपाता आद्युदात्ताः' इत्यस्याऽपवादोऽयम्। अनुपसर्गस्याऽपि गतेर्धात्वव्यवहितस्य सत्त्वात्। उदाहरणे 'निपातैर्यद्यदी'ति निघातप्रतिषेधात् उदात्तवत्त्वं तिङन्तस्य। 'यच्छुक्ली करोती'त्यत्र च्वेश्चित्त्वेऽपि चित्स्वरो 'येन नाऽप्राप्ति'न्यायेन निपाताऽऽद्युदात्तत्वमेव बाधते, न तु एतमिति, अत्र 'शुक्ली'शब्दस्य निघातः।

ननु 'आमन्द्रैरि'त्यत्र रक्प्रत्ययाऽन्ते 'मन्द्र'शब्दे परे आङो निघातनिवृत्त्यर्थं तदित्यत आह–**यत्क्रियेति**। एवञ्च तिङ्ग्रहणाऽभावेऽपि गत्याक्षिप्तक्रियावाचकस्य 'उदात्तवती'तिविशेषणादपि तन्निवृत्तिः सिद्धेति भावः। तत्र दोषमाह—**धातावेवेति**। यस्य वाच्यरूपया क्रियया युक्ताः तं धातुं प्रत्येव गतित्वादिति भावः। एवञ्च 'यत् पचती'त्यादावेव स्यात्, न तु 'यत् प्रकरोती'त्यादौ। तिङ्ग्रहणे तु सति 'यं धातुं प्रति गतित्वं, तद्घटिते तिङन्ते परे' इत्यर्थः सम्पद्यते इति न दोषः।

अत्र 'तिङ्'शब्देन क्रियाप्रधानं लक्ष्यते। तेन 'उपपदमतिङि'तिसूत्रस्थाऽस्मदुक्तरीत्या 'प्रपचतितरामि'त्यत्र असमासे उदात्तवति आमन्ते गतेर्निघातः सिद्धः। तिङन्तं तु तत्र नोदात्तम्। आमुस्वरेण शेषनिघातात्। ध्वनितञ्चेदं भाष्ये।

एते निघाताः, तत्प्रतिषेधाश्च पदकाले विच्छिद्य पाठेऽपि भवन्ति, संहिताऽधिकाराऽभावादित्याहुः।

इति तिङन्तस्वराः॥

( अथ स्वरसञ्चारप्रक्रिया )।

**वस्तुतस्त्विति**। 'इगन्तानाञ्च द्व्यषामि'त्यस्य 'फिषः' इत्यपवादस्य सत्त्वादिति भावः। **संहितायान्त्विति**। 'तयोर्य्वावची'ति सूत्रस्थ-

---

१ 'न तु एनम्' इति लघुशेखरे पाठः।

२ 'सिद्धयेदिति भावः' इति ख. पाठः।

३ 'यत्प्रपचति' इति ख. ङ. पाठः।

'संहिता'ग्रहणस्य आ शास्त्रसमाप्तेः अधिकारात्, स्वरितविधेश्च तदन्तभावादिति भावः। अयमेव संहिताऽधिकारो ज्ञापयति—'एतदधिकारबहिर्भूतानां कालव्यवायेऽपि प्रवृत्तिः' (इति)। अन्यथा असंहितायां कालव्यवायादेव न भविष्यति, किं तदधिकारपाठेन ?]

तेन पदकालेऽपि 'ईळे' इत्यादीनां निघातः, 'अग्नाविष्णू इत्यग्नाविष्णू' इत्यादौ अवग्रहे आनङादयः, पदविभागे च वसुनसादयः सिद्ध्यन्ति। अशक्त्यादिना कालव्यवायेऽपि नसादयः। व्यवधानञ्च मात्राकालेन, न तदधिकेनेत्यादि निरूपितम। संहिताऽधिकारस्थन्तु यणादिकं, स्वरितप्रचयादिकञ्च नेति बोध्यम्।

नन्वेवं 'पुरः' 'हितमि'त्यवग्रहे 'हि'शब्दस्य स्वरितत्वं बह्वृचैः पाठ्यमानं न सिद्ध्येत्, संहिताऽधिकारस्थत्वेन कालव्यवाये अप्रवृत्तेरिति चेन्न।

'यथा सन्धीयमानानामनेकीभवतां स्वरः।
उपदिष्टस्तथा विद्यादक्षराणामवग्रहे'[1] ॥

—इति प्रातिशाख्ये विशिष्य विधानात्। नन्वेवम् 'उपगन्तवै' 'अन्वेतवाउ' इत्यादीनाम् अवग्रहे उत्तरखण्डाऽऽद्यवर्णस्य प्रचयः स्यादिति चेन्न। 'पद्यादींस्तु ह्युदात्तानाम् असंहितवदुत्तरान्'[2] इति विशेषवचनात्।

---

१ अस्य व्याख्या—'अनेकीभवतां = प्रश्लेषम् आप्नुवतां, पुनः सन्धीयमानानाम् = एकीक्रियमाणानां, यथा = येन प्रकारेण स्वर उपदिष्टः शास्त्रे, तं स्वरम् अक्षराणाम् अवग्रहेऽपि तथैव कुर्यादित्यर्थः'—इति लघुशेखरे।

२ इतोऽग्रे-'पद्यं = पदाऽर्द्धम्। ह्युदात्तानां पदानामुत्तरान् पदाऽर्द्धादीन्, स्वरविधौ असंहितवज्जानीयादित्यर्थः। एवं 'रत्नधातमम्', 'अललाभवन्तीरि'त्यादीनां क्रमकाले 'इति'शब्दोत्तरभागे प्रचयो न प्रवर्त्तते।

'परिग्रहे त्वनार्षाऽन्तात् तेनैवैकाक्षरीकृतात्।
परेषां न्यासमाचारंव्याडिस्तौ चेत्स्वरौ परौ' ॥ इति वचनात्।

शब्देन्दुशेखरः पुत्रो, मञ्जूषा चैव कन्यका।
स्वमतौ सम्यगुत्पाद्य शिवयोरर्पितौ मया ॥१॥
शब्देन्दुशेखरः सोऽयं फणिभाष्योक्तिभूषितः।
सतां हृत्कमलेष्वास्तां यावच्चन्द्रदिवाकरौ ॥२॥

इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टरचिते, शब्देन्दुशेखराऽऽख्ये सिद्धान्तकौमुदी-व्याख्याने, उत्तरार्द्धे, वैदिकप्रकरणं, स्वरप्रकरणं च समाप्तिमगमत्।

( समाप्तश्चाऽयं शब्देन्दुशेखराऽपरनामा बृहच्छब्देन्दुशेखराऽऽख्यो ग्रन्थः ॥ )

---

परिग्रहो 'वेष्टक' उच्यते। 'अनार्ष'शब्देन तथाभूत 'इति'करणः। स च द्व्यक्षर आद्युदात्तः,पदाभ्यासस्य मध्ये वर्त्तमानः, पूर्वपदान्तमादिना स्पृशति, द्वितीयपदादिमम् अन्तिमेन स्पृशति, तदाऽयं विकारः पदसन्धिरुक्तः। स च व्यञ्जनादिः, स्वरादिर्वा भवति। यदि व्यञ्जनादिस्तदा प्रचये प्राप्तेऽयम् अपवादः। अनार्षात् इतिकरणात्परेषामक्षराणां न्यासम् = उदात्तम् आचारं व्याडिः आचार्यो मन्यते। यदा तु स्वरादिर्भवति, तदा तेन स्वरादिना एकाक्षरीकृतात्परेषां न्यासमाचारमिति तुल्यम्। तौ = उदात्तस्वरितौ चेत् स्वरौ परौ भवत'इत्यर्थः। 'अनार्षान्तात्' इत्यस्योदाहरणं— 'रत्नधातममिति रत्नधातमम्'। 'तेनैवैकाक्षरीकृतादि'त्यस्य उदाहरणम्— 'अललाभवन्तीरित्यललाभवन्तीः'। 'अलला' इति शब्दाऽनुकरणमिति तद्भाष्यकृतः। इति 'सर्वेष्टसिद्धिः' ॥ इति लघुशब्देन्दुशेखरे श्रीनागेशभट्टाः प्राहुः।

इतोऽग्रे—'शुभमस्तु। कल्याणं भवतु। श्रीरामाय नमः। श्रीर्जयति।' इति ख. पुस्तके पाठः। इति शिवम् ॥

॥ श्रीः ॥

# बृहच्छब्देन्दुशेखरे स्मृतानां

## ग्रन्थानां, ग्रन्थकर्तॄणां च नामानि ।

# बृहच्छब्देन्दुशेखरे व्याख्यातानामष्टाध्यायीसूत्राणां सूची ।

# ❀ अष्टाध्यायीसूत्राणां सूची

## आ

पृष्ठाङ्कः सूत्रम्

पृष्ठाङ्कः सूत्रम्

घ



ङ



पृष्ठाङ्कः सूत्रम्

च

*इति बृहच्छब्देन्दुशेखरे व्याख्यातानामष्टाध्यायीसूत्राणां सूची ।*

---

# बृहच्छब्देन्दुशेखरे व्याख्यातानामुणादिसूत्राणां सूची

*इति बृहच्छब्देन्दुशेखरे व्याख्यातानामुणादिसूत्राणां सूची ।*

# अथ बृहच्छब्देन्दुशेखरे व्याख्यातानां फिट्सूत्राणां सूची ।

*इति बृहच्छब्देन्दुशेखरे व्याख्यातानां फिट्सूत्राणां सूची ।*

